॥ श्रीः ॥

श्रीविश्वनाथो विजयते ॥

# ॥ शारदातिलकम् ॥

सर्वतन्त्रस्वतन्त्राचार्यश्रीलक्ष्मणदेशिकेन्द्र-
विरचितं

सर्वशास्त्रपारंगतश्रीमद्राघवभट्टविरचितपदार्था-
दर्शनामकटीकासहितं

क्षीरसागरोपाह्वकृष्णशास्त्रिपरिशोधितं

## काश्यां

राजराजेश्वरीनाम्नि मुद्रायन्त्रालये
संमुद्य प्रकाशितम् ।

सं० १९९३

# अथ शारदातिलकं राघवभट्टी टीका सहितं प्रारभ्यते ।

—◯✱◯—

श्रीगणेशायनमः ॥

नित्यानंदवपुर्निरंतरगलत्पंचाशदर्णैः क्रमाद्व्याप्तंयेनचराचरात्मकमिदं शब्दार्थरूपंजगत् ।
शब्दब्रह्मयदूचिरेसुकृतिनश्चैतन्यमंतर्गतंतद्वोव्यादनिशंशशांकसदनंवाचामधीशंमहः ॥ १ ॥

श्रीगणेशायनमः॥ श्रीकंठंनिजतांडवप्रवणताप्रोद्दाममोदोदयंपश्यंत्याः कुतुकाद्भुतप्रियतया संजातभावंमुहुः । मन्दान्दोलितदुग्धसिंधुलहरीलीलालसंलोचनप्रांतालोकनमातनोतु भवतां भूम्भवान्याः शुभम् ॥१॥ संसेव्यमानमृषिभिः सनकादिमुख्यै र्योगैकगम्यमविनश्वरमादिभूतम् ॥ संसारदुःखनिगमसारविचारसारं शैवंमहोमनसिमे मुदमादधातु ॥ २ ॥ भद्रायभवतांभूयाद्भारतीभक्तिभाविता। स्मृते रुज्जृंभते यस्यावाग्विलासोतिदुर्लभः ॥ ३ ॥ शारदातिलकेतंत्रेगुरूणामुपदेशतः ॥ पदार्थादर्शटीकेयं राघवेणविरच्यते ॥ ४ ॥ संप्रदायागतंकिंचित् गणितागमसंमतम् । यदुक्तमत्रतत्संतो विचारयितुमर्हथ ॥ ५ ॥ पिशुनोदूषयत्यस्य त्वयात्र तददोषायदूषणम्॥ दोषावहाद्धिविकृतिर्नस्वभावोहिदुस्त्यजः ॥६॥ परमेश्वरः सर्वाण्यपिश्रुतीर्भवपाशबद्धानांजंतूनांस्वर्गायमुक्तयेच समुपदिशतिस्म ॥ अन्येषांतुस्मृतिशास्त्रादीनांतन्मूलकत्वेनतदर्थप्रतिपादकत्वेनच प्रामाण्यमितिसुप्रसिद्धतरम् ॥ अस्यास्त्वागमस्मृतेः कथंतन्मूलकत्वम् ॥ अन्यस्वतैरेवविशेषेणपर्यालोचितैः स्वर्गोवा मुक्तिरपिभविष्यतीतिकिमनयेतिप्राप्ते, ब्रूमः । सऐक्षतबहुस्यांप्रजायेयेति । तथाच यतोवाइमानिभूतानिजायंते येनजातानिजीवंतियत्प्र यंत्यभिसंविशंतितद्विजिज्ञासस्वेत्युपक्रम्यआनन्दाद्ध्येवखल्विमानिभूतानिजायन्तेआनंदेनजातानिजीवन्ति आनंदम्प्रयंत्यभिसंविशंतीत्यादि । इदंसर्वंयदयमात्मेत्यंतेनोपसंहृतं, अत उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती चलिंगन्तात्पर्यनिर्णयइत्युक्तत्वात् उपक्रमोपसंहाराभ्यां स्वलीलारूपा मायनिर्वाच्याविद्यासहायसंपन्नं परमानन्दस्वरूपंनित्यशुद्धबुद्धस्वभावं परब्रह्मैवस्वात्मविवर्त्तरूपंसकलं जगत्समर्जेतिश्रुतिवाक्यप्रतिपादितोर्थः । नन्वस्तुजगत्सृष्टिकर्तृत्वंब्रह्मणः अनाद्यविद्याङ्गीकरणं किमर्थमितिचेन्न। तयाविनाऽसंगस्यतत्कारणतैवानुपपन्ना, तथैममर्थंश्रुत्यागमावपिवदतः इन्द्रोमायाभिः पुरुरूपईयते इति। शिवोहिशक्तिरहितः शक्तःकर्तुंनकिंचनेति ।एवंजातेजगतिनिजकपाशबद्धाम्जंतवोनात्मज्ञाउत्पत्तिमरणप्रवाहपतितानाशक्नुवन्संसारसिंधुंतरीतुम् ।एवंभूतान्तानवलोक्य परमकरुणतयाकिञ्चिदुपाधिविशिष्टःसर्वाः श्रुतीःसमुपदिशतिस्मतत्रसर्वासुश्रुतिषुकाण्डत्रयंकर्मोपासनाब्रह्मभेदेन ।तत्रकर्मकांडंजैमिनिप्रभृतिभिः सम्यक्तयाविवृतम् ।इदमुपासनाकांडंनारदादिभिर्ब्रह्मकांडंभगवद्व्यासादिभिरितिश्रुतिमूलकताअस्य प्रत्यक्षोपलब्धा,श्रुतिमूलकताच रामपूर्वोत्तरतापिनीनृसिंहपूर्वोत्तरतापिनीयसौराष्टाक्षरशैवपंचाक्षरात्मिका तु साक्षाच्छ्रुतिरुपलभ्यत एव। तत्र कर्मकांडेसर्वोप्यधिकारीमुमुक्षोरपितत्वज्ञानपर्यंतंस्वचित्तशुध्यर्थं प्रत्यवायपरिहारार्थंचकर्मकरणेऽधिकारसंभवात् । तद्वदुपासनाकांडेपि । यतःसाकारोपासनातः स्वर्गादिबहुफलंभवतिक्रमतोमुक्तिश्च। कर्मका-

ष्टानुस्वर्णादिफलंबहुतरव्ययायासेनभवति। ब्रह्मकांडाम्मुक्तिरपिआदरनैरंतर्यदीर्घकालाभ्याससाध्या-
नेकेषुजन्मसुतादृशीष्वेवगतिषुभवति। अनेकजन्मसंसिद्धस्ततोयातिपरांगतिमितिवचनादतएतदुपास-
नाकांडमेवागमशास्त्रात्मकं गरीय इति सिद्धम्। तत्रोत्पलाचार्यपूज्यपादशिष्यश्रीलक्ष्मणाचार्यः पूर्वतं-
त्राणामनेकेषामेकैकमंत्रविधानकथनप्रवृत्तानामतिविततानां गंभीराणामिदानींतनानामल्पमती-
नामल्पायुषामेकस्मिन्सर्वमन्त्रविधानमभीप्सूनां पुंसामशक्त्यादुरवगाहत्वमत्रावलोक्याऽतिकृपालुः
शारदातिलकतंत्रं चिकीर्षुश्चिकीर्षितस्याविघ्नेन समाप्त्यर्थं प्रचयगमनार्थं च सकलशिष्टैकवा-
क्यतया ऽभिमतकर्मारंभसमये तत्समाप्तिकामैर्मंगलमाचरणीयमिति सदाचारानुमितश्रुति-
बोधितं परदेवतानुस्मरणलक्षणमङ्गलं शिष्यशिक्षार्थमुपनिबध्नन्नाह। नित्येति। तन्महोऽनिशंवो-
व्यादित्यन्वयः। तन्मह एतावतैव परदेवतानुस्मरणस्यसिद्धौ सत्यामप्यस्यपदस्य यत्किंचित् क्रियापे-
क्षायांविघ्नोपशमनद्वाराऽभिलषितफलवितरणप्रवणत्वरूपावनक्रियायानंदघनदेवतासांमुख्यंदर्शितम्।
तत्रसामान्यकर्मसंबंधेप्राप्तेक्रियमाणग्रन्थस्यनिर्विघ्नपाठमभिप्रेप्सोः शिष्योपरिकृपांसूचयतोवक्ष्यतिकर्म
निर्देशः वा युष्मान् शिष्यान्पात्वित्यर्थः। एषामेवात्र संबोधनयोग्यत्वात् संबोधनप्रधानत्वाच्च युष्म-
दर्थस्ययतः शिष्यकृपयैव विदितवेद्यआचार्योग्रन्थकरणेप्रवृत्तः तथाचतेषांकं चित्कालमवनेसिद्धेनि-
र्विघ्नपाठसमाप्तावपितच्छिष्यद्वाराप्रचारमिच्छोः अनिशमित्युक्तिः, एतेन सर्वदावने सिद्धे स्वशिष्याणां
तच्छिष्याणामपि चनिर्विघ्नं पाठसिद्धौग्रंथप्रचारो भविष्यतीत्याशयः। किंतन्मह इत्यपेक्षायामाह,
नित्यानंदवपुरिति। नित्योयोयमानंदः सवपुर्यस्य एतेनशक्त्यासंभिन्नंपरशिवस्वरूपमुक्तम्। ननुशक्त्या
विनाशिवे सूक्ष्मे नाम धामनविद्यतइत्युक्तेर्निर्गुणस्यासंगस्य निराकारस्यतस्य कथमवनक्रियाकर्तृ-
त्वमित्याह वाचामधीशमिति। अनेनशक्त्युपहितं सदाशिवात्मकं रूपंवागुपदेष्टृत्वेनोक्तम्। ननुवा
गुपदेष्टृत्वं चतुर्मुखापाध्युपहितस्यापित्वत्तं तन्निवृत्त्यर्थमाहशशांकसदनमिति। शशांकस्यचंद्रस्यसदनं
स्थानंचंद्रकलावतंसमित्यर्थः, शब्दसृष्टेरत्रमुख्यत्वात् मंत्रमयं तत्स्वरूपंसूचयति, यदाभ्यामः विष्णुस्ते-
नसंकर्षणस्तेनसौ एतेन सहितानिशाहकारो यत्रेत्युत्तरपदलोपी, बहुव्रीहिस्तेनह्वाविति सिद्धम्।
शशांके यादिशाबिंदुः उक्तः, वागैश्वर्यमुपबृंहयन् वक्ष्यमाणां शब्दार्थसृष्टिंसूचयन् व्यापकतामाह येन
चराचरात्मकमिदं स्थावरजंगमात्मकं शब्दार्थरूपंजगत् क्रमाद्व्याप्तंकैः निरंतरमनवरतं गलंती व्यक्ती
भवन्तः पंचाशद्वर्णावर्णास्तैः अत्र समासेवर्णशब्दस्यवावलोपो वक्तव्यइति स्वर्णशब्दइव वलोपे अर्णश-
ब्दोवर्णवाची, केचननित्येत्याद्यर्णैरित्यंतमेकमेवपदमित्याहुः। अत्रवर्णानामेकपंचाशत्त्वेपिसामीप्यस-
म्बंधेनलक्षणया पंचाशत्त्वमुक्तम्। अन्वयानुपपत्तिवत्तात्पर्यानुपपत्तेरपि लक्षणाबीजस्याभ्युपगतत्वात्,
अथवामकारः पुरुषोयतः इत्युक्तेः तस्यस्वस्वरूपत्वात् पंचाशदित्युक्तिः, यद्वाक्षकारस्यकषसंयोगात्मक-
त्वात् तयोरुपदेशेनैवास्योपदेश इत्यपुनरुक्तंपंचाशद्ग्रहणं, यद्वा विसर्गस्यकेवलं शक्तित्वात् पंचभूता-
त्मकत्वाभावात् सर्ववर्णोत्पत्तिहेतुत्वाच्चतं त्यक्त्वातथोक्तिः। तदुक्तं। अमायोनन्त्यएवेति, क्वचिद्बाह्येपि
मातृकामंत्रोपयोगाद्वा तथोक्तिः, यद्वा मूलाधारादिआज्ञांतं षड्चक्रेषुपंचाशद्वर्णानामेव स्थितत्वात्
पंचाशदित्युक्तिः, अनयोर्व्याख्यानयोर्बहिरांतरभेदेन व्यवस्थाज्ञेया आंतरस्यचमुख्यत्वात् शास्त्रे सर्वत्र
मुख्येनव्यवहार इति ज्ञेयम्। अनेनांतर्मातृकान्यासोपि सूचितः सचांत्यपटले कुंडलिनीस्तुतौ स्फु-
टीभविष्यति। अतएव द्वितीयादिचतुर्विंशतिपटलांतं यत्प्रपंचितंतत्सर्वं मातृकाविकार इत्यपिसूचि-

तम्।ननुसर्वव्यापी सदाशिवः इतिवक्ष्यमाणत्वात् तस्यस्वतएव सर्वव्यापित्वेकुतः कैरितिकारणापेक्षे-
तिचेत् सत्यम्, तस्यस्वतएव सर्वव्यापित्वंकिंतुअत्रशास्त्रे शब्दसृष्टेर्मुख्यत्वद्योतनाय निरंतरगलत्पञ्चा-
शदर्णैरिति कारणतोक्तिः। किंचपूर्वमपि यत्किंचिच्छक्त्युपाधिविशिष्टत्वे वक्तव्येवाचामधीशमि-
त्युक्तिः, सापिअत्रवर्णानामर्थरूपव्यापकतोक्तिरपि, प्रागन्वयः शब्दस्वरूपमभिव्याप्यैवार्थरूपं व्याप्नो-
तीति क्रमादित्युक्तिः, तेषांशब्दरूपव्यापकतासंभवत्येव अर्थरूपव्यापकता तु सर्वस्याप्यर्थस्य
शब्दप्रकाश्यत्वनियमात् ज्ञेया । तदुक्तंभगवताभर्तृहरिणा । नसोस्तिप्रत्ययोलोकेयः शब्दानुगमा-
दृते । अनुविद्धमिदं ज्ञानंसर्वंशब्देनगम्यते इति । अथवायेषांमते शब्दार्थयोरभेदस्तन्मतमाश्रि-
त्योक्तं, तदुक्तंतेनैव। एकस्यैवात्मनोभेदः शब्दार्थावपृथक्स्थिताविति। अतएव मंत्रदेवतयोरैक्यं मंत्र-
शास्त्रे । अतएवपूर्वं सदाशिवमन्त्रोद्धारः, यद्वा शक्तिसंभिन्नत्वात् तस्य शक्त्यंशत्वेन शब्दरूपव्यापकत्वं
शिवांशत्वेनार्थरूपव्यापकत्वंज्ञेयम्। तदुक्तं वायवीयसंहितायां शब्दजातमशेषं तु धत्ते शंकरवल्लभा ।
अर्थस्वरूपमखिलंधत्ते मुग्धेंदुशेखरः इति। एतत्पक्षेद्वितीया उपलक्षणत्वेन योज्या उपलक्षणत्वं च
तदुत्पन्नत्वात् तेषांशब्दसृष्टिप्राधान्यमेवोपलक्षयन्नाह। सुकृतिनोयदंतर्गतं चैतन्यंशब्दब्रह्मेत्यूचिरे ।
सुकृतिनस्तत्वज्ञाःतादृशाः इत्यर्थः। चैतन्यंसर्वभूतानां शब्दब्रह्मेतिमेमतिः इतिवक्ष्यमाणत्वात्। तस्य
सर्वव्यापित्वात् तदंशस्यैव सर्वजन्तुचैतन्यरूपत्वात् शब्दब्रह्मता संभवत्येव, किंच यस्मात्बिंदोः शब्दब्र-
ह्मण उत्पत्तिस्तस्मादेवबिंदोः सदाशिवस्याप्युत्पत्तिरित्यपि तत्रशब्दसृष्टौशाब्दब्रह्मेत्युक्तिः अर्थसृष्टौ
सदाशिवइतिपरंविशेषः,भिद्यमानात्परादबिन्दोरव्यक्तात्मारवोभवत्। शब्दब्रह्मेतितंप्राहुः सर्वागमवि-
शारदाः इति। अथविश्वात्मनः शंभोः कालबंधोः कलात्मनः अजायतजगत्साक्षीसर्वव्यापी सदाशिव
इतिवक्ष्यमाणत्वात्, अथवाहेतुहेतुमद्भावेन योजनाकार्या यतः सुकृतिनः यत् अंतर्गतंचैतन्यं शब्दब्रह्मे
त्यूचिरे अतोयेन निरंतरगलत्पंचाशदर्णैर्जगत्व्याप्तमिति। तत्प्राप्यकुंडलीरूपं प्राणिनांदेहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः इतिवक्ष्यमाणत्वात्। अन्येत्वन्यथायोजयंति। यत्परमशिवस्व-
रूपंसुकृतिनोवेदांतिनः तत्शब्देनब्रह्मेत्यूचिरे अयमर्थः अस्माभिः परमशिवइत्युच्यते तैस्तु ब्रह्मेत्यु-
च्यते इतिशब्दमात्रेणपरंभेदः वस्तुतस्तु नित्यानंदादिस्वरूपत्वं तैरप्यस्माभिरप्यंगीक्रियतएव, तस्मी
दृक्शं वाचामधीशं यस्य निश्वसितंवेदा इत्यादिश्रुतेर्वाचामधीशत्वं प्रसिद्धमेव। यतो वाचामधीशमत एव
निरंतरगलत्पंचाशदर्णैर्येनजगद्व्याप्तमिति यथासंभवंतत्रापि योजनीयं यतोवेदस्य वर्णमयत्वाद्वा।
यद्वाशास्त्रेशब्दसृष्टेरर्थसृष्टेरपि कुंडलिन्याएवोत्पत्तेस्तस्या एवकुंडलीपरदेवतेति परदेवतात्वोक्ते-
स्तदनुस्मरणमेवोचितमितिमहःशब्देनतेजोरूपा कुंडलिनीत्युच्यते। आदित्येंद्वादितेजोमत् यच्छब्द-
मयीविभुरित्युक्तेः, साकीदृक् नित्यानंदवपुः असावेवांत्यपटले कुंडलीस्वरूपं वक्ष्यति नित्यानंदमयी
गलत्परसुधावर्षैरित्यादिना। ययाकुंडल्याशब्दार्थरूपं परापश्यंतीमध्यमावैखरीरूपत्वेन शब्दजनक-
त्वात् कार्यकारणोपचारात् शब्दरूपं विषयत्वात् अर्थरूपस्वभावेन चरंपृथिव्यंशाधिक्यात् कार्यका
रणोपचारात् अचरंएवंभूतंगच्छतीति जगद्विनश्वरं शरीरंव्याप्तं यत्ययाशब्दार्थरूपचराचरात्मकं
जगद्विश्वंव्याप्तं सर्वगाविश्वरूपिणी दिक्कालाद्यनवच्छिन्नेत्यशतउक्तः कैः निरंतरगलत्पञ्चाशदर्णैः पं-
चाशद्दारगुणिता पंचाशद्वर्णमालिकां सूतइतिवक्ष्यमाणत्वात् सुकृतिनः पुण्यात्मानस्तत्वज्ञाः इत्यर्थः
यांशब्दमयीमाहुः साप्रसूते कुंडलीतिशब्दब्रह्ममयी विभुरितिवक्ष्यमाणत्वात् चैतन्यंचिच्छक्तिस्वरूपा

ग्रंथमेवग्रवक्ष्यति ततश्चैतन्यरूपा सेति,अंतर्गतं सुषुम्णांतर्गतेत्यर्थः यामुंडाधारदंडांतरविवरगतेत्युक्तेः शशांकसदनं सहस्रारेंदुमंडलंगतत्वाद्वाचामधीशं सर्वशब्दोत्पादकत्वात् सर्वमंत्रोत्पादकत्वाच्च,तथा ग्रंथमेववक्ष्यति विश्वात्मनाप्रबुद्धा सासूतेमंत्रमयं जगत्इति,वाचामधीशं वाग्भवरूपेत्यर्थः शक्तिः कुंडलिनीति यानिगदिता आद्यमसंज्ञेत्युक्तेः,यद्वाग्रंथारंभे सरस्वतीदेवतातस्याएवस्मरणात्ग्रंथरूपा स्फूर्तिर्भवित्री,किंचाग्रंथेप्रथमतः सरस्वतीमंत्राणामेव वक्ष्यमाणत्वात् तेनसरस्वतीदेवतानुस्मरणमेवोचितमिति तद्वाचामधीशंमहः सारस्वतंतेजः वोध्यात्, अथवाचामधीशमित्यनेन केवलंवाग्भवस्य सरस्वतीमंत्रत्वमुक्तं एतज्जपन्नरवरोभुविवाग्भवाख्यं वाचांसुधारसमुचांलभते ससिद्धिमित्युक्तेः, तत्कीदृक् शशांकसदनंअनेनचंद्रकलावतंसत्वेन ध्यानमुक्तम् यदाहुः धृतशशधरखंडोल्लासिकोटीरचूडा भवतुसपदिवाचामीश्वरी भूतयेवइति,पुनःकीदृक्नित्यं सर्वदाआनंदयतीत्यानंदम् आनंदजनकंवपुर्यस्यतत् साधकानां सुधारससहोदरसरससूक्तिसंस्फुरणादाह्लादजनकमित्यर्थः, तथाचसरस्वतीस्तवेआचार्य्याः क्षौमांबरपरीधाने मुक्तामणिभूषणमुदावासेति, पुनः कीदृक् चैतन्यमंतर्गतं, अनेनसूक्ष्मापरपर्यायापराख्याउक्ता, यदाहुः स्वरूपज्योतिरेवाहुः सूक्ष्मावागनपायिनीति, अन्यत्रापि सूक्ष्माकुण्डलिनीमध्ये ज्योतिर्मात्रा परामतेति येनमहसानिरंतरगलत्पंचाशद्वर्णैः चराचरात्मकं शब्दार्थरूपं जगद्व्याप्तं अत्रपंचाशद्वर्णैरित्यनेन वर्णरूपापश्यंतीत्युक्ता शब्दार्थरूपमित्यनेन पदरूपामध्यमाउक्ता यस्मात्सारस्वतंमहः शब्दब्रह्मेत्यूचिरे अत्रशब्दब्रह्मशब्देनवेदा उच्यंते तेनवेदात्मकमित्यर्थः तदुक्तं वार्त्तिककारपादैर्ब्रह्माधिकरणे शब्दब्रह्मेतियद्वेदशास्त्रं वेदाक्षरमुच्यतइति, अनेनवाक्यरूपा वैखरीउक्ता, यदाहुः ध्वनिर्वर्णाः पदंवाक्यमित्यास्पदचतुष्टयं यस्याःसूक्ष्मादिभेदेनवागधीशामुपास्महे इति। अन्यत्रापि आदिक्षांतविलासलालसतयातासांतुरीया तु या क्रोडीकृत्यजगत्त्रयंविजयते वेदादिविद्यामयीति। अपरेत्वत्रग्रंथकर्त्रा भैरवीमंत्रोद्धारः कृतइतिवदंति। तद्यथा तत्त्रैपुरंमहोव्यात् कीदृक् अगलत् अविनश्वरंपुनः कीदृक् नित्यानंदवपुः नित्यःपुरुषः तेनहकारः आनंदयतीति आनंदोत्पादकत्वाद्वा आनंदः शक्तिः तेनसःएतौवपुः शरीरंयस्यएते नैतयोर्बीजत्रयेपि सत्वमुक्तंभवति, अंतः मध्यंमध्यबीजमित्यर्थः, तत्कीदृक्क्रमात् कखगघमसकरमाः तानभिलक्षणया गृह्णातीतिक्रमात्तेनककारः तदधोलकारः अत्ररेफेणलकारस्यग्रहणं व्याकरणपरिभाषया, उक्तंच रेफलोपिचदृश्यतेग्रहणंतेनेति संहितायामपि अतएवमहेशानिरलयोः समताभवेदिति तदधोमकारः पुरुषः तेनहः पुनः कीदृक्अंतर्गतंअंतरः रेफः गतः संगतोयत्रतत् पुनः कीदृक्व्याप्तंविः चतुःसंख्या तेनचतुर्थस्वरः तेनआप्तं गृहीतं अत्रग्रंथकृतोवररुचिसंकेतोऽभिप्रेतः सद्वितीयपटले स्फुटीभविष्यति, भिन्नभेमिवशून्येज्ञेयमिति वावररुचः संकेतः तेनशून्यंतस्य,बिंदुरूपत्वाद्बिंदुरुद्धृतः, एतेनषट्कूटंमध्यबीजमुद्धृतम्। अतएववक्ष्यतेषट्कूटंत्रिपुरामंत्रमिति। एवंमध्यमबीजमुक्त्वा प्रथमबीजेहकारसकारयोः पूर्वमेवोक्तत्वात् एवंऐकारोपियोजनीयः। कीदृक्प्रथमंशशांकसदनम् ।एतेनबिंदुस्थंप्रथमबीजमुद्धृतं अयंकीदृक्शब्दार्थरूपंअत्रशशांकशब्देनशब्दादयोगृह्यंतेअर्थशब्दोविषयवाची तेनशब्दादयोविषयास्तेचदशेतिदशसंख्या तयाऔकारः तद्रूपंयत्रतत्तथा, अन्यच्चअंकानांवामतोगतिरित्युक्तेर्वावररुचेः संकेतेनतकारस्य षट्संख्यापिंडाक्षैरक्षरैरंका इत्युक्तेन्यइतियकारस्यैकांकः एवंषोडश तेनविसर्गः एवंक्लृप्तोयंबीजमुद्धृतम। तदुक्तंसिद्धेश्वरीमते। हंसाद्वयोर्दंत्यसकारयुक्तावस्वाब्धिपंक्तिस्वरसंविभिन्ना:

अस्यायमर्थः। हंसाः हकारास्त्रयः कीदृशाः संयुक्ताः तथाक्रमात्वस्वब्धिपंक्तिस्वरैः क्लीबान्विनाष्टम ऐ चतुर्थ ई दशमभौतैर्युक्ताः, विशेषमाह, तृतीयोविसर्गयुक्तः इतरौप्रथमद्वितीयौ सानुस्वारौमध्यः पुनः विरिंच्यादियुतः विरंचिःकःइंद्रोलः हरोहःअग्नीरेफःएतैर्युतः इदंषट्कूटंमध्यबीजं इयं त्रिबीजाभैरवी। अंत्योविसर्गी इतरौसबिंदू मध्योविरिंचींद्रहराग्नियुक्तइति। अथचऐवेतिस्वतंत्रतया निर्द्देशात् व्याप्त मित्यात्तशब्दग्रहणात्शब्दार्थरूपमितिरूपशब्दोपादानात्केवलास्त्रयः स्वराःएवास्यमंत्रस्यचेतनोमंत्रइतिसूचितम्। यदाहुः, शिवाष्टमंकेवलमादिबीजं भगस्यपूर्वाष्टमबीजमन्यत्, परंशिरोंतंगदिता त्रिवर्णासंकेतविद्यागुरुवक्त्रगम्येति, उक्तबीजानांक्रमेणवाग्भवकामराजशाक्तत्वमाह। वाचामधीशमनेना स्यस्यवाग्भवत्वमुक्तं चराचरात्मकंजगद्येनेति मैथुनसृष्टेरुत्पन्नत्वात् जगतोमध्यमबीजस्य कामराजतोक्ता। सुकृतिनः यत्अंत्यबीजंशब्दब्रह्म त्यूचिरे इत्यनेनांत्यस्यशाक्तत्वमुक्तम्। त्रिधामजननीदेवीशब्दब्रह्मस्वरूपिणी इतिवक्ष्यमाणत्वात्, यदुक्तंसिद्धेश्वरीमते, वाग्भवंप्रथमंबीजंकामराजं द्वितीयकंशक्तिबीजंतृतीयंतुचतुर्वर्गफलप्रदमिति। अथचओंतत्सदिति निर्देशोब्रह्मणस्त्रिविधः स्मृतइत्युक्तेः शब्दात्मकंब्रह्मशब्दब्रह्मेति प्रणवंचराचरात्मकं जगद्येनेतिमैथुनसृष्टेः कामादुत्पत्तेः कामबीजंवाचानकारः सहतत्वन्यासेनकारेणसहशब्दतत्वन्यासात् मस्वधीःशक्तिरूपः ईशःप्रभुःअनेनविसर्गः, मायाशक्त्यभिधःसर्गःसर्वभूतात्मकः प्रभुरित्युक्तेःएवंनमःशब्दःएवमस्यमंत्रस्याह्लादिनीमंत्रउक्तः,यदाहुः,कमलं परिलुप्तमध्यमांत्यस्वरमीशादियुतं सबिंदुनादं, निगमादिनमोंतरे विराजद्भुविदेवीहृदयं प्रदिष्टमेतदिति, त्रयाणांबीजानांसामान्येन विशेषणमाह, अनिशमिति, नविद्यते निशाहकारो यत्र आदावितिशेषः केशवादिन्यासेनिशाहकारः शक्तिस्तेनादौहकाराभावे सकारस्यादित्वमुक्तं तेनादौसकारः पश्चाद्धकारः यद्वानिरित्यनेनैवआद्यबीजस्यापि बिंदोरुद्धृतत्वात् अनिशंहकाररहितं शशांकसदनंशशांकःसःसदनेस्थाने यस्यअनेनहकारस्थानेसकारः तदधोह्रस्वर्थायातः। उक्तंच, भैरवीयमुदिताकुलपूर्वादेशिकैर्यदिभवेत् कुलपूर्वा। सैवशीघ्रफलदा भुविविद्येत्युच्यते पशुजनेषुतिगोप्येति। अनेनास्यमंत्रत्वंविद्यात्वमुक्तंयत्पिंगलामते 'शक्त्याद्यातुभवेद्विद्या शिवाद्योमंत्रउच्यते दीक्षाभिषेकपूजातुप्राणिनां भुक्तिमुक्तिदा' इति अन्यदपिबीजत्रयसामान्य विशेषणमाह। पंचाशद्वर्णैःउपलक्षितमित्यर्थः अनेनसर्वमंत्रस्यमातृकांतरितत्वेन जपउक्तःयदाहुः। मंत्रराजममुंसमस्तजगद्विमोहनकारणं मातृकांतरितंजपेत्अनुलोमतोपिविलोमतइति,अथवाअनेनविशेषणेन चहहसैंसहसैंइत्यादि,डहसकलहरईंडहसकलहरईंइत्यादिअहसौः आहसौः इत्याद्यंतर्मातृकान्यासोपि सूचितः, यदाहुः,क्रमेणषट्चक्रवर्णान् सहलेषुप्रविन्यसेत्। चक्रद्वयक्रमेणैवदेवीरुद्धांस्वमंत्रविदिति, अन्यत्रापि मूलाधारकथनप्रस्तावे चतुर्ष्वब्जपत्रेषुदेवीनिरुद्धान् जलेंद्राग्निवायून्न्यसेत् केवलान्वासबिंदूनमंदप्रभावान्प्रसिद्धानिति। अथवापंचाशच्छब्देनसामीप्यसम्बन्धेन लक्षणयाएकपंचाशद्ग्रहणे तैरुपलक्षितमित्यनेन बीजत्रयस्यापिदीपिन्युद्धारःसूचितः तत्रप्रथमबीजदीपिनीतु व्यंजनस्वरैःपृथक्कृतैः सप्तदशवर्णात्मिकाद्वितीयबीजदीपिनी तुपूर्ववदेवपंचविंशत्यक्षरा तृतीयबीजदीपिनी पूर्ववन्नवाक्षरा एवमेकपंचाशद्वर्णात्मिका तत्रद्वितीय तृतीययोः चकारस्यसत्वात् तस्यचएकमेवव्यंजनं गृह्णीतंमातृकायां पृथगुपदेशात् यद्ययंव्यंजनद्वयात्मैवस्यात्तदाक्षवदस्यापि पृथगुपदेशोनस्यात् तयोरेवबिंदुद्वयमस्ति तदपिनपृथग्गणितं तादृशस्यैवपंचदशस्वरत्वात् प्रणवेपिबिंदुः प्रणवांतर्गतएवेति नपृथग्गणितइति सर्वमनवद्यम्। अयंचदीपि-

अंतः स्मितोल्लसितमिंदुकलावतंसमिन्दीवरोदरसहोदरनेत्रशोभि।
हेतुस्त्रिलोकविभवस्यनवेंदुमौलेरंतः पुरंदिशतुमंगलमादराद्वः॥ २॥

न्याद्युद्धारो ग्रंथकृताचसूचितः मयातुभैरवीपटलेस्फुटीकरिष्यते। अथवाबालामंत्रोद्धारो ग्रंथकृतोभिप्रेतइतियतोभैरव्यादीनामपि सएवमूलभूतः। यदाहुः बालामुक्त्वा 'विद्यामूलोत्पत्तिरेषा यस्योक्ताज्ञातव्येयं देशिकैः सिद्धिकारी'रिति तद्यथा वाचामधीशमिति वाग्भवं अंतः मध्यंमध्यस्थक्रमात् कश्चरमा लक्ष्मीस्तेन ईकारः रेणपूर्ववद्लस्य ग्रहणं निरिति बिंदुः एवं मध्यमं बीजंशशांकः सकारः सत् ओंकारः अकारोनकारश्च शून्यद्वयंतेनविसर्गः नेत्रोचशून्यं ज्ञेयं तथा स्वरेकेवलेकथितइत्युक्तेःमतशब्देनकथमोंकारग्रहणमिति चेदुच्यतेओंकारस्तावदोंतत्सदिति निर्देशोब्रह्मणस्त्रिविधः स्मृतइत्युभयोर्ब्रह्मवाचकत्वात् सदोंकारोनिगद्यतइत्युक्तेश्चसच्छब्दवाच्यतासोत्राकृतपररूपएवकेवलंविवक्षितः सचसामीप्यसंबंधेनाग्रिमस्यलक्षकः यद्वातस्यैवौकारयोगेन स्यादौकाराद्वयस्वरइति आचार्योक्तेरोंकारएवंविधःस्वजन्यस्यौकारस्यलक्षकः यद्वाशशोरूपमस्यासिन्नितिमत्वर्थीयोऽच्तेनशशधरः तेनसःशशनृगमनशीलः शशोहंसस्तेनवासःअंकशब्देनपिंडन्यायादकारः यथासवामहक्पवनगुणान्वितः करइत्यत्रकरशब्देनककारः यथाहरिद्वयषष्ठवत् वनमित्यत्रवनशब्देनवकारः सच्छब्देनोंकारएवतस्यपूर्वेणसहसंधावौकारोऽनाभग्नांविसर्गः। ननुप्रणवस्य सबिंदुकत्वात् वालांत्यबीजेग्रंथकारोविसर्गमात्रंवक्ष्यति अत्रचबिंदुविसर्गावुद्धृताविति विरोधइतिचेत् न, बालाया मंत्रभेदेषुक्वचिद्बिंदुः क्वचिद्विसर्गःक्वचिद्बिंदुविसर्गावप्युद्धृतौतदपिसूचयितुमत्रेदृशमुद्धारः कृतः,यदाहुः सनत्कुमारे, अष्टमस्यतृतीयंतुचतुर्दशसमन्वितंदंडकुंडलमेतद्धिसारस्वतमुदाहृतमितिअन्यत्र तु 'दंतांतेनयुतंतुर्दंडिसकलंसम्मोहनाख्यंकुल'मितिअन्यत्पूर्ववदितिसंक्षेपः। एतच्चव्याख्यानद्वयंगुरुवचननियंत्रितेनमया कृतमितिक्षंतव्यंदेशिकेंद्रैः॥१॥ यदुपहितस्यशिवस्यसृष्टिकर्तृत्वंतामुपस्तौति। अंतरिति॥ नवेंदुमौलेरंतः पुरंवोमंगलमादराद्दिशत्वितियोजना, अत्रापिवोमंगलंदिशतुइत्यनेनशिष्यकृपा सूचिता॥ यद्यपितत्वतः शैवदर्शने 'नशिवेनविनाशक्तिर्नशक्तिरहितः शिवःनतत्वत स्तयोर्भेदश्चंद्रचंद्रिकयोरिवे' तिशक्तिशिवयोरैक्यमेवतथापिद्वितीयेन विनासृष्ट्यनुपपत्तेः लीलागृहीतंदेहंस्त्रीस्वरूपं वर्ण्यते। एतेनमैथुनसृष्टिःसूचिता,तस्याःजगत्कारणतामाह। त्रिलोकविभवस्यहेतुरिति। चराचरात्मकत्वेनविस्तारोविभवः कीदृशमंतःस्मितोल्लसितंकल्पितमिदंजगद्विलसतीति हास्यकारणं ईश्वरेसाभिलाषतयावाहासः एतेनास्याईश्वरवल्लभकतासूचिता। किंच। यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तत्रवर्द्धते इतिस्मृतेः दंपत्यानुकूल्यतोविचित्रजगन्निर्माणं सूचितं। पुनःकीदृक् इंदुकलावतंसम्। अत्रावतंसशब्देनमुकुटाभरणमुच्यते तथानामलिंगानुशासनेपुंस्युत्तंसावतंसौद्वौकर्णपूरेपिशेखरे इति। पुनः कीदृक्इंदीवरोदरसहोदरेति। एतेनसर्वातिशायिसौंदर्यंवर्णितंयद्वानवेंदुमौलेरित्यनेन भुवनेशीमंत्रउक्तः। विशेषणैस्तदुद्धारः, त्रिलोकविभवस्यहेतुः शिवः तेनहकारःअंतःस्मितंप्रकाशोयस्यासावंतःस्मितोऽग्निः रेफः तेनउल्लसितंयुतंइन्दुकलावतंसमिति बिंदुः इंदीवरोदरसहोदरेनेत्रेयस्याः सालक्ष्मीः तेनईकारः। यद्वा। इंदीवरोदरस्यसहोदरंसुहृत् नेत्रंचंद्ररूपंतच्चवाममितिदीर्घईकारः तेनशोभियुक्तं एवं मिलित्वाभुवनेशीबीजं॥२॥यस्यदेवेपराभक्तिर्यथादेवेतथागुरौतस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मनः'

संसारसिंधोस्तरणैकहेतून्दधेगुरून्मूर्द्ध्निशिवस्वरूपान्।
रजांसियेषांपदपंकजानांतीर्थाभिषेकश्रियमावहंति ॥ २ ॥

इत्यागमात्परदेवताभक्तिवद्गुरुभक्तेरपि विद्याप्राप्तावंतरंगसाधनत्वावगमात्परदेवतायाः स्मरणानं तरंगुरुनमस्कारमाह। संसारेति। शिवस्वभावान्गुरून्मूर्ध्नि दधइत्यन्वयः शिवस्वभावान्शिवरूपा नित्यर्थः एतेनगुरुध्यानंतत्तद्देवतारूपतया कर्त्तव्यमित्युक्तंभवति। तदुक्तम्। गुरुं नमर्त्यं बुध्येतयदि बुध्येततस्यतु कदापिचभवेत्सिद्धिर्नमंत्रैर्देवपूजनैरिति। अन्यत्रापि। तस्मादेवंविदित्वातुगुरुर्देवंच नान्यथा त्रिकालप्रणिपातेनध्यानयोगेनसंयजेत्इति। अन्यत्रापि। ललाटेनयनंचांद्रींकलामपिचदोर्द्वयं धंतनिधायवक्ष्यामिगुरुर्मर्त्यैर्महीयते इतिमूर्द्ध्निंदधेइत्यनेन गुरुध्यानंमूर्ध्निकर्त्तव्यमित्युक्तं भवति। तदुक्तं, प्रातःशिरसिशुक्लेब्जेद्विनेत्रंद्विभुजंगुरुं प्रसन्नवदनंशांतंस्मरेत्तन्नामपूर्वकम्।अन्यत्रापि'श्रीमद्गुरुपदांभोजं मूर्द्धन्येवसदास्थितं यः स्मरेत्तात्विकैर्भावैः सोचिरात्खेचरोभवेत्' इतिगुरूनितिबहुवचनंपूजार्थंगुरुपर मगुरुपरमेष्ठिगुर्वपेक्षयावा' तथाचग्रंथकृद्गुरुपंक्तिः 'श्रीकंठं वसुमंतं श्रीसोमानंदमुत्पलाचार्यांश्च'ति 'लक्ष्मणमभिनवगुप्तं वंदेश्रीक्षेमराजंचे'तितच्छिष्याः। कीदृशान्। संसारसिंधोरिति। अनेनविनागुरू- पदेशंसंसारतरणमशक्यमित्युक्तम्। तथाच श्रुति'राचार्यवान्पुरुषोवेद सगुरुमेवाधिगच्छे'दिति। आ- गमश्च। 'अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया। चक्षुरुन्मीलितंयेन तस्मै श्रीगुरवेनमः' इतिगुरुम- णाममाहात्म्यमाह। रजांसीति। एतेनपादोपसंग्रहण पूर्वकंगुरुनमस्कारः कर्त्तव्यइत्युक्तंभवति ॥२॥ सिद्धार्थंसिद्धसंबंधं श्रोतुंश्रोताप्रवर्त्तते शास्त्रादौतेनवक्तव्यः संबंधः सप्रयोजनः इत्युक्तेःशिष्यबुध्यनुकूल- नार्थंग्रंथमाहात्म्यंप्रकाशयन् श्रोतृप्रवृत्तिनिमित्तभूतान् विषयप्रयोजनसंबंधाधिकारिणो दर्शयति, सारमित्यादिश्लोकद्वयेन। तंत्राणांसारंश्रेष्ठं संग्रहरूपंचेत्यनेनास्योपादेयतातिसंक्षिप्तता चोक्ता तत्रतंत्राणामितिवैष्णवशैवशाक्तगाणपत्यसौराणांयतःसारमतएवशुभं शब्दसंक्षेपेप्याकांक्षितसकलार्थ- प्रतिपादकत्वमेव शुभत्वंधर्मार्थकामेत्यादि वक्ष्यतितदुपयिको नामनिर्देशः। शारदातिलकम्। शी- र्यतइति शारंस्थूलंकर्मफलंतद्ददातीति शारदातत्कारणत्वेन ब्रह्मविद्याधिरूढा सतीद्यतिखंडयती तिवाशारदाचिच्छक्तिः यद्वाशरः स्वतंत्रंतस्यभावः शारंस्वातंत्र्यं तद्ददातीति अनाद्यविद्यां परिच्छेद्य- जीवभावनिरासेन परमैश्वर्यप्रदायिका। तदुक्तंगौतमेनतंत्रव्याकरणे। शरःस्वतंत्रंहृदयंस्फुरत्तापरमे शितोशारस्वेत्युदिताः शब्दाः पर्यायाः शब्दवाचकाइति तस्याःतिलकोभूषणं अनेनोत्कृष्टतादर्शिता तत्रापिभूषणांतरंनभवति किंतुतिलकरूपः तेनयथामुखेवर्त्तमानःतिलकः सर्वतःप्रथमंदृश्योभवतित- द्वदयमपीत्यभिप्रायः, प्रथमप्रकारणंयथाचास्यमुखत्वं तथाग्रंथसंगतिकथनप्रस्तावे अस्माभिः पूर्वमेव प्रपंचितंशब्दार्थसृष्ट्यादिविषयः चतुर्वर्गः फलंग्रनयोः प्रतिपाद्यप्रतिपादकभावः संबंधः तदर्थीचाधि कारोअस्यशास्त्रस्यचव्युत्पाद्यव्युत्पादकभावः संबंधःशास्त्रविषयस्यफलस्यचसाध्यसाधनभावः संबंधः इ- त्याद्यन्योपियथायथमूहनीयः। सद्भिरितित्रिभिः संबध्यतेमुनिभिःतपोयोगबलेन मंत्रप्रथमज्ञातृभिः प्रथमा राधकैः। तदुक्तं गौतमेन। महेश्वरमुखात् ज्ञात्वागुरुर्यःतपसामनुं संसाधयतिशुद्धात्मा पूर्वसऋषि- रीरितःइति। तथाऽन्यत्र। येनयदृषिणादृष्टं सिद्धिः प्राप्ताचयेनवै। मंत्रेणतस्य तत्प्रोक्तमृषेर्भावःतदार्षक मिति,छंदःशब्दव्युत्पत्तिरुक्ता,ऽन्यत्र'छादनात्छंदउद्दिष्टंवाससाइवचाकृतेः,आत्मनाच्छादितोदेवैःसम्यो-

सारंवक्ष्यामितंत्राणांशारदातिलकंशुभम् । धर्मार्थकाममोक्षाणांप्राप्तेः प्रथमकारणम् ॥ ४ ॥
शब्दार्थसृष्टिर्मुनिभिश्छंदोभि र्देवतैः सह । विधिश्चयंत्रमंत्राणांतंत्रेस्मिन्नभिधीयते ॥ ५ ॥
निर्गुणः सगुणश्चेतिशिवोज्ञेयः सनातनः। निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥६॥

र्भोतिस्तुवैपुरा आदित्यैर्वसुभीरुद्रैस्तेन छंदांसितानिवै इति। तथान्यत्रापि। मृत्युभीतैःपुरादेवैरात्मनश्छादनायच छंदांसिसंस्मृतानीह छादितास्तैस्ततोसुराः छादनाच्छन्दउदिष्टं सर्वंछंदोभिरावृतमिति। तत्तुगायत्र्यादिप्रसिद्धं दैवतंतत्तन्मंत्रोद्दिष्टम्। यदाहुः। यस्ययस्यतुमंत्रस्यउद्दिष्टादेवतातुया। तदा कारंभवेत्तस्यदेवत्वंदेवतोच्यत इति। दैवतैरितिविनियोगस्याप्युपलक्षणं। तत् स्वरूपमुक्तमन्यत्र 'पुराकल्पेसमुत्पन्नामंत्राः कर्मार्थमेवच अनेनचेदं कर्त्तव्यंविनियोगः सउच्यते' इति। तथान्यत्रापि 'धर्मार्थकाममोक्षेषुशास्त्रमार्गेणयोजनं सिद्धमंत्रस्यसंप्रोक्तोविनियोगोविचक्षणै' रितितत्ज्ञानाभावेदोषउक्तः। अन्यत्र। दौर्बल्यंयातितन्मंत्रो विनियोगमजानतः इति। छंदऋषिदेवताज्ञानंमंत्रसाफल्यार्थमवश्यमपेक्षितम्। तदुक्तंछंदोगानामार्षेयब्राह्मणे। योहवैअविदितार्षेयछंदोदैवतेनब्राह्मणेन मंत्रेणयाजयतिवाध्यापयति वास्थाणुंचर्छतिगर्त्तंवापयति प्रवासीयतेपापीयान्भवतियातयामान्यस्यछंदांसिभवन्ति अथयोमंत्रेमंत्रेवेदसर्वमायुरेवैति श्रेयान्भवति अयातयामान्यस्यछंदांसिभवंति तस्मादेतानि मंत्रेमंत्रेविद्यादृषीणां संस्थानोभवति संस्थानोभवति ब्रह्मणःस्वर्गेलोकेमहीयते स्मरन्वाजायतेपुनरिति। कात्यायनोपि। एतान्यविदित्वायोधीतेनुब्रूते जपतिजुहोतियजतेयाजयतिवातस्यब्रह्मवीर्यंयातयामंभवति अनुविज्ञायैतानियोधीतेवीर्यवत्तरं योयथार्थवित् तस्यवीर्यवत्तमंभवतिजपित्वा हुत्वेष्ट्वाफलंप्राप्नोतीति। यश्चजानाति तत्वेनआर्षंछंदश्च दैवतमित्यादिना आगमेपि। याज्ञवल्क्योपि'आर्षंछंदश्चदैवत्यं विनियोगंतथैवच वेदितव्यंप्रयत्नेनब्राह्मणेनविशेषतः अविदित्वातुयः कुर्याद्यजनाध्ययनं जपं, होममन्यच्च यत्किंचित्तस्यचाल्पंफलंभवेदिति। विधिरिति। न्यासजपपूजाहोमतर्पणाभिषेकसंपातपातादिः चकारःशब्दसृष्ट्यादेः प्रधानाप्रधानस्यसमुच्चयेमंत्रयंत्राणामित्येकपदोपादानेपि मुन्यादीनांयथायोगंसंबन्धः तत्रमुनिश्छंदसीहोमतर्पणेचमंत्रएव देवतादीनिश्चयात्नुभयत्रापि, संपातपातस्तुयंत्रेतदुपलक्षितेषुप्रतिकृतिकुंभशिलाप्रतिमागुलिकातैलघृतादिषु संबध्यतेएतानिदेवतोपासकस्यस्थूलरूपतयोक्तानि येषांसूक्ष्मंरूपंयथा। यदाहुः। स्वात्मैवदेवताप्रोक्तामनोज्ञाविश्वविग्रहा न्यासस्तुदेवतात्मत्वात्स्वात्मनोदेहकल्पना। जपस्तन्मयतारूपभावनं समग्गोरितम्। पूजातुचंचलत्वेपितन्मयत्वाप्रमत्तता होमो विश्वविकल्पानामात्मन्यस्तमयोमतः एषामन्योन्यसंमेलभावनंतर्पणंस्मृतं अभिषेकस्तु विद्यास्यादात्मैवस्ताश्रयोमहान् प्रयोगास्तुरुपाधीनांहेतोःस्वात्मविमर्शनं संध्यासुभजनंतासामादिमध्यान्तवर्ज्जनं मोहाज्ञानादिदुःखानामात्मन्यस्तमबोद्दढमिति ॥ ५ ॥ सृष्टिंवक्तुमुपोद्घातमाह। निर्गुणइति। सनातनोनित्यः शिवोनिर्गुणःसगुणश्चज्ञेयः। आद्यस्यस्वरूपमाहनिरिति। प्रकृतेरन्यःतत्संबंधशून्यः षष्ठ्याएवात्रप्राधान्येनोद्देश्यत्वात्तेन सूक्ष्मइत्यर्थः अतएवान्यशब्दार्थाभावात्नपंचमीयं। तथासत्यनुवादे पर्यवसानंस्यात्। तदुक्तंप्रयोगसारे। नित्यःसर्वगतःसूक्ष्मः सदानंदोनिरामयः विकाररहितःसाक्षीशिवोज्ञेयःसनातनः इति। नारायणीयेपि। निष्क्रियंनिर्गुणं शांतमानंदमजमव्ययं अजरामरमव्यक्तमज्ञेयमचलंध्रुवं ज्ञानात्मकंपरंब्रह्मस्वसंवेद्यंहृदिस्थितं सत्यंबुद्धेः परंनित्यंनिर्मलंनिष्कलंस्मृतमिति। द्वितीयस्यस्वरूपमाह,सइति।

**सच्चिदानंदविभवात्सकलात्परमेश्वरात् । आसीच्छक्तिस्ततोनादोनादाद्बिंदुसमुद्भवः ॥ ७ ॥**
**परशक्तिमयः साक्षात्त्रिधासौभिद्यतेपुनः । बिंदुर्नादोबीजमितितस्यभेदाः समीरिताः ॥ ८ ॥**
**बिंदुः शिवात्मकोबीजंशक्तिर्नादस्तयोर्मिथः । समवायः समाख्यातः सर्वागमविशारदैः॥९॥**

सगुणः सकलः कलाप्रकृतिः तत्सहितः सांख्यमते सत्वरजस्तमसां साम्यावस्था प्रधानापरपर्याया प्रकृतिः अतएव सगुण इत्यर्थः वेदांतनयेतु अविद्या शिवतंत्रे शक्तिः । उक्तंच नारायणीयप्रयोगसारयोः । तच्छक्तिभूतः सर्वेशो भिन्नो ब्रह्मादिमूर्तिभिः । कर्त्ता भोक्ता च संहर्त्ता सकलः स जगन्मय इति ॥ ६ ॥ सृष्टिमाह। सदिति। अविद्याशबलितत्वेन जडत्वेपि कथं तस्य सृष्टिकर्तृत्वमित्याशंकां वारयति। सच्चिदानंदविभवादिति। अनेनाविद्योपहितत्वेपि तस्य न स्वरूपहानिरित्यर्थः। सकलात् शक्तिरासीत् इति योजना। शक्ति सहितादेव पुनः शक्तिः कथमासीत् इति चेत्सत्यम्। या अनादिरूपा चैतन्याध्यासेन महाप्रलये सूक्ष्मा स्थिता तस्याः गुणवैषम्यानुगुणतयासात्विकराजसतामसस्रष्टव्यप्रपंचकार्यसाधने उच्छूनावस्थात्वमेव उपचारादुत्पत्तिद्वयं च सदुत्पत्तिवादिसांख्यमतमाश्रित्य ग्रंथकारस्योक्तिरिति ज्ञेयम्। तदुक्तं प्रयोगसारे। तस्माद्विनिर्गता नित्या सर्वगा विश्वसंभवा इति। वायवीयसंहितायामपि। शिवेच्छया परा शक्तिः शिवतत्वैकतां गता। ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिवत्। इति पंचरात्रेपि। एवमालोक्य सर्गादौ सच्चिदानंदरूपिणीम् समस्ततत्वसंघातस्फूर्त्यधिष्ठानरूपिणीम् व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान् इति। तस्या एव नादबिंदू सृष्ट्युपयोगावस्थारूपौ। तदुक्तं प्रयोगसारे, नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी। शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता। सैव सर्गक्षमा तेनेति। आचार्यास्तु। सा तत्वसंज्ञा चिन्मात्रज्योतिषः संनिधेस्तदा। विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिंदुतामिति। अन्यत्रापि, अभिव्यक्ता परा शक्तिरविनाभावलक्षणा। अखंडपरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः। समस्ततत्वभावेन विवर्त्तेच्छासमन्विता। प्रयाति बिंदुभावं च क्रियाप्राधान्यलक्षणमिति। अतएव वक्ष्यमाणशैवतत्वेषु शुद्धानां पंचानामेव ग्रहणं अत्र यद्यप्यन्यैर्ग्रंथकृद्भिर्नादावस्था नोक्ता तथापि ग्रंथकृता तारस्य सप्तात्मकत्वं सूचयितुमेतदुक्तिः कृता कालं प्रस्तुवद्भिराचार्यैः सूचितैव नादावस्था। यदाहुः रवात्मन्यथो कालतत्वे इति, भुवनेशीस्तुतावप्याचार्यैः नमस्ते रवत्वेन तत्वाभिधाने इति ॥७॥ इच्छासत्वादिरूपतया बिंदोस्त्रैविध्यमाह। परेति। साक्षात् परशक्तिमयः अतः पश्चात्तदवस्थात्मकत्वमेवोक्तं, अथवा परः शिवः तन्मयः शक्तिमयः एवमुभयात्मकः बिंदुः शिवात्मक इति वक्ष्यमाणत्वात् असौ त्रिधा भिद्यते एतौ नादबिंदू प्रथमोक्तनादबिंदुभ्यामन्यौ तत्कार्यरूपौ ज्ञेयौ। तदुक्तं। सबिंदुर्भवति त्रिधेति ॥८॥ बिंद्वादेर्भेदत्रयस्य परंपरास्वरूपमाह। बिंदुरिति। धर्मिणावुक्त्वा तत्संबंधो वाच्यः इत्यभिप्रायेण व्युत्क्रमः शक्त्युत्पत्त्यनुरोधात् पूर्वत्र तथाक्रमः समवायः संबंधः क्षोभ्यक्षोभकरूपः सृष्टिहेतुः। उक्तेर्थे प्रमाणमाह। सर्वागमविशारदैः इति, । रौद्रीति। ततः तस्माद् बिन्दोरौद्री यतस्तस्य शिवमयत्वे अतोन्वर्थतापि नादात् ज्येष्ठेति मध्योच्चारितत्वे तत्वेनान्वर्थत्वं ज्ञेयं, बीजाद्वामा अजायतेति संबन्धः तस्य शक्तिमयत्वात् अन्वर्थत्वं, तदुक्तं प्रयोगसारे, बिंदुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः। रौद्री बिंदोः समुद्भूता ज्येष्ठा नादादजायत। वामा बीजादभूच्-

रौद्रीबिंदोस्ततोनादात् ज्येष्ठाबीजादजायत। वामाताभ्यः समुत्पन्नारुद्रब्रह्मरमाधिपाः॥१०॥
संज्ञानेच्छाक्रियात्मानोवन्हींद्वर्कस्वरूपिणः। भिद्यमानात्पराद्बिंदोरव्यक्तात्मारवोभवत्॥११॥
शब्दब्रह्मेतितंप्राहुः सर्वागमविशारदाः। शब्दब्रह्मेतिशब्दार्थंशब्दमित्यपरेजगुः ॥ १२ ॥
नहि तेषां तयोः सिद्धि र्जडत्वादुभयोरपि। चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः॥ १३ ॥

क्तिस्ताभ्यो देवात्रयो भवन्तिति। संज्ञाने इति। संज्ञाने इच्छाक्रिये तदात्मनस्तेन रुद्रब्रह्मरमाधिपाः क्रमेणेच्छाशक्तिक्रियाज्ञानशक्तिस्वरूपाः क्व चित्ते ज्ञानेच्छेतिपाठः सः असांप्रदायिक एव अत एव वन्हींद्वर्कस्वरूपिणो रुद्रब्रह्मरमाधिपाः शब्दसृष्ट्यंतर्गताः निरोधिकाऽर्धेंदुबिन्दुरूपाः शक्तेरेवावस्थाविशेषा ज्ञेयाः एषामिच्छाक्रियाज्ञानात्मत्वं शक्तित उत्पन्नत्वात्। वक्ष्यति च। इच्छाज्ञानक्रियात्मासाविति। ईश्वरप्रत्यभिज्ञायामपि, यत इच्छंति तत् ज्ञातुं कर्त्तुं वा स्वेच्छयाक्रियाः अनंतरं हि तत् कार्यंज्ञानदर्शनशक्तिता। ज्ञानशक्तिस्तदर्थं हि योसौ स्थूलः समुद्यमः। सा क्रिया शक्तिरुदिता ततः सर्वंजगत् परमिति। यतः पुनस्तेषां वक्ष्यमाणत्वात् ततो रुद्रसमुद्भवस्ततो विष्णुस्ततोब्रह्मा इति। अन्यथापूर्वापरविरोधोपि स्यात् यतो ग्रन्थकृत्तस्यां सूर्येंदुपावकान् प्रणवस्य त्रिभिर्वर्णैरिति वक्ष्यति तत्र प्रणवांशा अकारोकारमकारा ब्रह्मविष्णुरुद्रात्मकाः अकराद्ब्रह्मत्पन्न इत्यादेर्वक्ष्यमाणत्वादागमांतरे च ब्रह्मविष्णवीश्वरास्तत्तन्मंडलेषु व्यवस्थिता इति। तेन तत्र सूर्यरूपः अकारो, ब्रह्मा अत्र च सूर्यरूपोविष्णुरिति अतो वक्ष्यमाणक्रमोर्थसृष्ट्यनुसारेणानुसंधेयः, ग्रन्थकृच्च वक्ष्यति शब्दार्थभावि भुवनं सृजतींदुरूपा या तद् बिभर्ति पुनरर्कतनुः स्वशक्त्या। ब्रह्मात्मिका हरति तत् सकलं युगांते तां शारदां मनसि जातु न विस्मरामोति। गोरक्षसंहितायामपि इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत् परंज्योतिरोमिति। आचार्या अपि। आद्यैस्त्रिभेदैस्तपनांतिकैर्यदिति॥१०॥ शब्दब्रह्मणः उत्पत्तिमाह। भिद्यमानादिति। परात् बिंदोरित्यनेन शक्त्यवस्थारूपो यः प्रथमो बिंदुः तस्मादव्यक्तात्मा वर्णादिविशेषरहितो ऽखंडो नादमात्र उत्पन्नः। तत्स्वरूपमेवाह शब्देति। सर्वागमविशारदाः सर्वश्रुत्यर्थविदः। तदुक्तमाचार्यैः। स श्रुतिसंपन्नैः शब्दब्रह्मेति कथ्यते इति सृष्ट्युन्मुखपरमशिवप्रथमोल्लासमात्रं अखंडो ऽव्यक्तो नादबिंदुमय एव व्यापको ब्रह्मात्मकः शब्दः शब्दब्रह्मेत्यर्थः। उक्तंच, क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणं, प्रकृतेर्बिंदुरूपिण्याः शब्दब्रह्माभवत् परं, अर्थांतरस्फोटवादिमतं जातिव्यक्तिस्फोटात्मकं वा स्फोटमतं च दूषयितुमुपक्रमते॥११॥ शब्देति। एकआचार्याः शब्दार्थं आंतरस्फोटं शब्दब्रह्मेत्याहुः यथाहि, निरंशएवाभिन्नोनित्यो बोधस्वभावः शब्दार्थमय आंतरस्फोटः इति। अपरे वैय्याकरणाः पूर्वपूर्ववर्णोच्चारणाभिव्यक्तं त तत्पदसंस्कारसहायचरमपदग्रहोद्बुद्धं वाक्य स्फोटलक्षणं शब्दमखंडैकार्थप्रकाशकं शब्दब्रह्मेति वदन्ति। यदाह, एकएव नित्योवाक्याभिव्यंग्योखंडो व्यक्तिस्फोटो जातिस्फोटो वा बहीरूप इति। तदुभयमतं दूषयन् स्वमतमाह॥१२॥ नहीति। तेषां वादिनां मते तयोः शब्दशब्दार्थयोः सिद्धिःशब्दब्रह्मत्वसिद्धिर्न उभयोस्तयोर्ज्जडत्वात् यदिशब्दार्थः शब्दो वा शब्दब्रह्मेत्युच्यते तदाब्रह्मपदवाच्यत्वं नोपपद्यते यतः सच्चिदानंदरूपो ब्रह्मपदार्थः तौ च जडौ तदुक्तं अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरं, विवर्ततेर्थभावेन प्रक्रिया जगतो यत इति। अन्यत्रापि। शब्दब्रह्मेति शब्दावगम्यमर्थं

तत्प्राप्यकुंडलीरूपंप्राणिनांदेहमध्यगम् । वर्णात्मनाविर्भवतिगद्यपद्यादिभेदतः ॥ १४ ॥
अथविंद्वात्मनःशंभोःकालबंधोःकलात्मनः । अजायतजगत्साक्षीसर्वव्यापीसदाशिवः ॥ १५॥
सदाशिवात् भवेदीशस्ततो रुद्रसमुद्भवः । ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भवः ॥ १६ ॥

विदुर्बुधाः। स्वतोर्थानवबोधत्वात् प्रोक्तो नैताद्दृशोरवः। स तु सर्वत्र संभूतो जाते भूताकरे पुनः। आविर्भवति देहेषु प्राणिनामर्थविस्तृत इति। तेन सर्वागमविशारदा इत्यनेन सहैकवाक्यतैवास्य तद्बिंदुरूपरवस्यैव सर्वशरीरेष्वाविर्भूतत्वेन वक्ष्यमाणत्वात्। यदुक्तं प्रयोगसारे। सोंतरात्मा तदा देवी मादात्मा नदते स्वयम् यथा संस्थानभेदेन संभूयो वर्णतां गतः। वायुना प्रेर्यप्राणोसौ पिंडाद्व्यक्तिं प्रयास्यतीति। केचित्तु शब्दब्रह्मेति शब्दस्य अर्थशब्दमेवाहुरिति योजनां कृत्वा सर्वागमविशारदाः इत्येकः पक्षः अपरे बिंदुरिति द्वितीयस्तयोर्दूषणमित्याहुः तन्न। जडत्वादितिहेतुः प्रथमपक्षे न संभवति आचार्यमतविरोधश्चापद्येत तेन सर्वागमविशारदा इत्ययमेवपक्षो ग्रन्थकृदभिमत इति। एवं परां तां सब्दसृष्टिमुक्त्वा सामान्यतः समापयति ॥ १३ ॥ तत्प्राप्येति। प्राणिनां देहमध्यगं कुंडलिनीरूपं कुडलिनीस्वरूपं, तच्चैतन्यं गद्यपद्यादिभेदतो वर्णात्मनाविर्भवति इति संबंधः, किंकृत्वा प्राप्य कंठादिकरणानीति शेषः अतएव वक्ष्यमाणा सृष्टिः कुण्डलिनीत इति ज्ञेयं, एवं प्राधान्यद्योतनाय प्रथमोद्दिष्टां परां तां शब्दसृष्टिमुक्त्वा पश्यंतीत्यादीनां शरीरसृष्टिव्यतिरेकेण वक्तुमशक्यत्वात् तां वक्तुं अर्थसृष्टिमारभते ॥ १४ ॥ अथेति। कला माया तदात्मनस्तत उत्पन्नत्वात् बिंदुरपि तस्यैवावस्थांतरं तदात्मन इत्युभयत्र कार्ये कारणोपचारात्। तदुक्तं। सर्वज्ञादिगुणोपेतामभिन्नामात्मनः सदेति। यद्वा कला निवृत्याद्याः अधिष्ठातृसदाशिवादीनां प्रातिलोम्येनोत्पादकादात्मनःकालबंधोरित्यनाद्यनंते काले सृष्टिरूपकालसहायान्नादात्मन इत्यर्थः शंभोः परमशिवात् सृष्टिस्थितिध्वंसनिग्रहानुग्रहकार्यपंचककर्त्ता अतएव जगन्निर्माणबीजरूपी जगत्साक्षी सदाशिवो जातः। अथच कालबंधोः अतएव कालात्मन इति हेतुहेतुमद्भावेन योजना सातु कालात्मना सम्यक्क्रमयैव ज्ञायते ॥ १५ ॥ सदेति। आचार्यैक्तेः। अनेन विशेषणद्वयेन प्रकृतेः कालस्यच महाप्रलयेप्यवस्थानमुक्तं, अत एवानयोरापेक्षकनित्यता। स्वतः नित्यत्वं पुरुषस्यैव सर्वविनाशस्य पुरुषावधित्वादन्यथानवस्थानादित्यादियुक्तिर्द्रष्टव्या। अथ च कालबंधोरिति बन्धुशब्देन कालस्य निमित्तत्वं सूचितं, यदाहुः लवादिप्रलयांतोयं तमःशक्तिविजृंभितः। निमित्तभूतः कालोयं भावनां जन्मनाशयोरिति। अन्यत्रापि। अनादिर्भगवान्कालो नांतोस्य द्विज विद्यते। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा इति। कालबन्धोरित्यनेन अपरः लवादिप्रलयांतः कालोपि सूचितः तेनैव परकालस्योक्तत्वात् स च नलिनीपत्रसंहत्यांसूक्ष्मसूच्यभिवेधने। दले दले तु यः कालः स कालो लवसंज्ञकः। लवैस्त्रुटिःस्यात् त्रिंशद्भिरित्यादिना, स वायुर्मम निश्वासः कालेनैवं प्रचोद्यते इत्यत्तेन ग्रन्थसन्दर्भेणाचार्यैर्विवेचितः अस्माभिस्तुग्रन्थगौरवभयात् नोक्तः। अन्येत्वेवं व्याचक्षते :कस्य लस्य आत्मा दीर्घैकारः चतुर्णामात्मनांचतुर्थउक्तेः कालशब्देनार्कस्तेन मः यद्वा कालशब्देन महाकालो मकारस्य रुद्रमूर्त्तित्वं होता भीमो भीमसेन इतिवत् तेन मकारः एवं मिलित्वा कामबीजमुद्धृतं तस्मात् इत्युक्तं भवति तस्य जगन्मूलत्वात् शंभोः। भ्रमन्तं योन्यस्तः स्फुरदरुणबन्धू-

मूलभूतात्ततोऽव्यक्ताद्विकृतात्परवस्तुनः। आसीत्किल महत्तत्वं गुणांतःकरुणात्मकम् ॥ १७ ॥
अभूत्तस्मादहंकारास्त्रिविधः सृष्टिभेदतः। वैकारिकादहंकाराद्देवा वैकारिकादश ॥ १८ ॥

ककुसुमप्रभं कामं ध्यायेज्जठरशशभृत्कोटिशिखरमित्यादिना, शरीरे मूलाधारे तेजस्त्रयरूपस्य तस्यैवोक्तत्वात् शक्तिरूपत्वाच्च बिंद्वात्मन इति। तदुक्तम्। विश्वभूतेंद्रियांतःकरणमयमिनेंदग्निरूपंसमस्तं वर्णात्मैतत्प्रधाने कलनयनमये बीजरूपक्रमेण। नीत्वा तं पुंसि बिंद्वात्मनि तमपि स्वात्मन्यथो कालतत्वे तं वै शक्तौ चिदात्मन्यपि नयतु च तां केवले धाम्नि शांते इति। अन्येतु शम्भोः हकारात् कलार्धेन्दुरात्मा ईकारः बिन्दुः बिंदुरेव कालोग्निः प्रलये सर्वविनाशकत्वात् एवंमायाबीजमुध्दृतम्। तस्मादित्युक्तं अस्य जगन्मूलबीजभूतत्वप्रसिद्धमेव इदं च व्याख्यानमाचार्यचरणसम्मतमिति। तदुक्तमाचार्यैः। स्वामिन् प्रसीद विश्वेश के वयंके नभाविताः। किंमूलाः किंक्रियाः सर्वमस्मभ्यं वक्तुमर्हथेति पृष्टः परज्योतिरुवाच। प्रमिताक्षरमित्यस्य पद्यस्य व्याख्याने पद्मपादाचार्यैः व्याख्यात सर्वेश्वर उपादानादिकं संग्रहेणोक्तवानित्याह। इति पृष्ट इति। प्रकर्षेण मीयते ज्ञायते इति प्रमिता प्रकृतिः प्रमिनोति जानातीति प्रमितः पुरुषः प्रमीनोति परिच्छिनत्ति इति प्रमितः कालः तेषां प्रमितानां वाचकमक्षरं प्रमिताक्षरं परावाक् स तत्वं हकारइत्यर्थः तस्य बीजबिंदुनादरूपेण प्रकृत्यादिवाचकत्वं द्रष्टव्यं एतेन हेत्युत्तरमुवात्यर्थः संग्रहेणोक्तस्याप्रतिपत्तिमालक्ष्य तदेव विवृणोति यूयमक्षरसंभूताः सृष्टिस्थित्यन्तहेतव इति। न क्षरत्यश्नुतेचेति व्युत्पत्या अक्षरात् सम्भवति इह विश्वमित्यादिना। तेषामिति। शब्दसृष्टौ तेषामुद्भव उक्त एव तेषा मेव समुद्भवः अर्थसृष्टावित्यर्थः एवं प्रक्रतायामर्थसृष्टौ तत्वसृष्टिं वक्तुमारभते। मूलेति। मूलभूतात् सर्वसृष्टिमूलरूपादतएव परवस्तुनः अव्यक्तात् बिन्दुरूपात्। यद्वा शब्दब्रह्मणः विकृतात् सृष्ट्युन्मुखात् महत्तत्वमहन्नामपदार्थः आसीदुत्पन्नः यस्य शैवमते बुद्धितत्वइतिसंज्ञा किं रूपं सत्वरजस्तमोगुणात्मकम्। मनोबुध्यहङ्कारचित्तस्वरूपमन्तःकरणचतुष्टयात्मकता तु तत्कारणत्वेन कार्ये कारणोपचारात् एवं शैवसिद्धांतविदः। तदुक्तमीशानशिवेन बोद्धव्यलक्षणा सैव प्रकृतिः शक्तिजृम्भिता।बुद्धितत्वम्भवेद् व्यक्तं सात्विकङ्गुणमाश्रिता। सैवबुद्धिर्महन्नाम तत्वं सांख्यैर्निगद्यते इति। वामकेश्वरतंत्रे। अव्यक्तविग्रहात् शब्दब्रह्मणः सर्वकारणं व्यक्तसत्वगुणं व्यक्तं बुद्धितत्वं प्रजायतेइति सांख्यमतेतु सत्वरजस्तमसां साम्यावस्थारूपं प्रकृतिः प्रधानापरपर्यायमव्यक्तशब्देनोच्यते तत्परवस्तु सर्वमूलभूतं गुणन्यूनातिरेकेण विकृतात्तस्मात्महानुत्पन्नः स कीदृशः गुणान्तः करणात्मा गुणाः शब्दस्पर्शरूपरसगन्धतन्मात्राणि येषामन्तःकरणचतुष्टयस्यापि कारणरूपः उपचारादुभयात्मकः तथा तत्सृष्टिक्रमोपिप्रकृतेर्महान् महतोऽहंकार इति ॥ १७ ॥ अभूदिति। तस्मान्महतस्त्रिविधोऽहंकारः सृष्टिभेदतो जातः वैकारिकस्तैजसो भूतादिश्चेति। तदुक्तं। अव्यक्तमेवतव्यक्तम तन्महन्नामलक्षणं ततोहंकारतत्वं स्यात् सत्वादिगुणभेदकम्। सोहंकारस्त्रिभेदः स्यात् पृथक्सत्वादिभेदतः। वैकारः सात्विको नाम तैजसो राजसः स्मृतः। भूतादिस्तामसस्तेपि पृथक्तत्वान्यवासृजन्निति। तत्तत्कार्यं वदन्नेवं च विधयमुन्मीलयति वैकारिकादित्यादिना शक्तिसामरस्य विकृतपरमेश्वरादुत्पन्नत्वात् वैकारिकत्वमस्यतदुत्पन्नत्वात्देवानामपि तथात्वम् सांख्यमतेपि गुणोद्रेकविकृतप्रधानोत्पत्तेस्तादृक्त्वम् ॥१८॥ तानेवाह दिगिति। अश्वीत्यश्विनीकुमारौ यद्यप्येतौ द्वौ तथापि सहचारित्वात् सहजात-

दिक्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्रकाः। तैजसादिंद्रियाण्यासंस्तन्मात्राक्रमयोगतः ॥ १९ ॥
भूतादिकादहंकारात्पंचभूतानि जज्ञिरे। शब्दात्पूर्वं वियत्स्पर्शाद्वायुरूपाद्धुताशनः ॥ २० ॥
रसादंभः क्षमा गंधादिति तेषां समुद्भवः। स्वच्छंवियन्मरुत्कृष्णोरक्तोग्निर्विशदं पयः ॥२१॥
पीता भूमिः पंचभूतान्येकैकाधारतोविदुः। शब्दस्पर्शरूपरसगंधा भूतगुणाः स्मृताः ॥ २२ ॥

त्वात् एकत्वेनोक्तिः उपेन्द्रो विष्णोरेकामूर्त्तिः मित्रस्तृतीयः सूर्यः। तदुक्तम्। मित्रो भानुस्तृतीयकइति को ब्रह्मण एकामूर्त्तिश्चन्द्रोपि ज्ञेयः एते इन्द्रियाधिष्ठातृदेवताः इति ज्ञेयम्। यदाहुः। वैकारिका दिगाद्या ये चन्द्रे णैकादश स्मृताः इन्द्रियाणामधिष्ठातृदेवास्ते परिकीर्त्तिता इति। तैजसादिति। तैजसादहंकारादिन्द्रियाणि कर्मेंद्रियाणि ज्ञानेंद्रियाणि मनश्च। तदुक्तम्, यच्चापरमं मनस्तत्वम् ससंकल्पविकल्पकम्। तैजसादेव सञ्जातमिति। अन्यत्रापि। तैजसतस्तत्र मनो वैकारितो भवन्ति चात्राणि भूतादेस्तन्मात्राणेषां सर्गोयमेतस्मादिति। अत्राणि अत्राधिष्ठातृदेवताः सांख्यमते वैकारिकादहंकारात् तैजसाहंकारमिलितात् इन्द्रियाण्यासन् इति एवं तैजसाहंकारसहितात् भूतादेरपि तन्मात्रोत्पत्तिः। तदुक्तम्। सात्विक एकादशकः प्रवर्त्तते वैकृतादहंकारात् भूतादेस्तन्मात्रः स तामसस्तैजसादुभयमिति। भूतादिकादहंकारात्तन्मात्राक्रमयोगतः पञ्चभूतानि जज्ञिरे इति संबन्धः कः स्वार्थिकः तत्रादौ आकाशादीनां कारणभूताः पञ्च तन्मात्रा जाताः शब्दतन्मात्रास्पर्शतन्मात्रारूपतन्मात्रारसतन्मात्रागन्धतन्मात्रा एताभ्यः आकाशवायुतेजोजलपृथिवीरूपाणि पञ्चभूतान्युत्पन्नानि। उक्तम् च। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः तन्मात्रादेव विषया भूतादेरभवत् क्रमात्। ततः समभवद्व्योम शब्दतन्मात्ररूपकम् स्पर्शात्मकस्ततो वायुस्तेजोरूपात्मकम् ततः॥ आपो रसात्मिकास्तस्मात्ताभ्यो गन्धात्मिका मही। ततः स्थूलानि भूतानि पञ्च तेभ्यो विराडपीति॥ तत्र भूतोत्पत्तिप्रकारमाह। शब्दादिति। शब्दतन्मात्रादाकाशः स्पर्शतन्मात्रातो वायुः रूपतन्मात्रातो ऽग्निः रसतन्मात्रातो जलम् गन्धतन्मात्रातः पृथिवी। केचित् पूर्वपूर्वानुविद्धानां एषां कारणत्वमाहुः पूर्वशब्दसामर्थ्यात्, तदुक्तम्, शब्दाद्व्योम स्पर्शतस्तेन वायुः ताभ्यां रूपादग्निरेतैरसाच्च अम्भांस्येभिर्गंधतो भूरिति॥ २०॥ पञ्चभूतवर्णानुपदिशति। स्वच्छमिति। स्वच्छम् श्वेतम् अत्र केषांचित् अरूपिद्रव्याणां वर्णकथनमुपासनार्थं स्वशास्त्रानुरोधेन तेषांस्वरूपमन्यत्रोक्तम्। खमपि सुषिरचिन्हमीरणः स्यात् चलनपरः परिपाकवान् कृशानुः जलमपि रसवत् घनाधरेति। एतैस्तानि ज्ञायन्त इत्यर्थः॥ २१॥ एकैकाधारत इति। स्वस्वकारणाधाराणीत्यर्थः, तदुक्तम्, परस्परानुप्रविष्टैर्महाभूतैश्चतुर्विधैः। व्याप्ताकाशैर्जगत्सर्वं दृश्यं निष्पाद्यते खिलमिति। अन्यत्रापि। व्योम्नि मरुदत्र दहनस्तत्रापस्तासुसंस्थितापृथ्वीति। भूतगुणास्तत्तद्विशेषगुणाः इति नैय्यायिकाः। यद्वा शब्दो गुणो वियतः शब्दस्पर्शौ वायोः तौ रूपञ्चाग्नेः रसेन संहतानि जलस्य गन्धेन सह पञ्च पृथिव्या इति सांख्याः, इदमेव स्फोटयितुम् एकैकाधारत इत्युक्तिः। उक्तञ्चेशानशिवेन। शब्दैकगुण माकाशः शब्दस्पर्शगुणो मरुत्, शब्दस्पर्शरूपगुणैस्त्रिगुणम् तेज इष्यते, शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः, शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा महीति॥२२॥
भूतमण्डलान्याह। वृत्तमिति। दिवः आकाशस्य वृत्तं तद्वृत्तमेव समभागेन वृत्तपरिधिरेखामध्ये

वृतंदिवस्तत्षड्विंदुलांछितंमातरिश्वनः । त्रिकोणंस्वस्तिकोपेतंवह्नेरर्द्धेंदुसंयुतं ॥ २३ ॥
अंभोजमंभसोभूमे श्चतुरस्रंसवज्रकं । तत्तद्भूतसमाभानिमंडलानिविदुर्बुधाः ॥ २४ ॥
वर्णैःस्वैरंचितान्याहुःस्वस्वनामावृतान्यपि । धरादिपंचभूतानांनिवृत्याद्याःकलास्मृताः ॥२५॥

षट्बिन्दुलांछितम् मातरिश्वनः वायोः त्रिकोणमूर्ध्वाग्रम् ऊर्ध्वं वह्निरधः शक्तिरित्युक्तत्वात् ! अन्यत्रापि । इन्द्ररात्त्सवायव्यकोणैस्तद्वह्निमण्डलमिति स्वस्तिकोपेतं त्रिकोणसंपातरेखाः संवर्ध्य तत्र स्वस्तिकाकारं कुर्यादित्यर्थः । तदुक्तम्। हृदि त्रिकोणं निर्गच्छत् स्वस्तिके रक्ततेजसीति स्वस्तिकं नाम परस्परसबद्धंविदिग्गतचतुर्वक्त्रं रेखाद्वयं वह्नेरिति पूर्वेणान्वेति अर्द्धेंदुसंयुतं अभोजमंभस इति सम्बन्धः अर्धेंदौ संयुतं अर्धेंदुसंयुतमिति । सप्तमीति योगविभागात् समासः यद्वा अर्धेंदु अंभोजं संयुतं उभयं मिलितं अम्भसो मण्डलं तेनार्धेंदु कृत्वा तदुभयभागे सरोजद्वयं कुर्यादिति । तदुक्तमाचार्यैः। अब्जोपेताद्र्धेंदुमत् बिंबमाप्यमिति, अन्यत्रापि अर्द्धचन्द्रं द्रवं सौम्यं शुभ्रमंभोजसंयुतमिति । प्रयोगसारेपि । अब्जांकोद्र्धेंदुरंभस इति । तथान्यत्रापि, तेषां क्रमेण शशिबिंबसमन्तदेव षड्विन्दुमद्दहनशस्त्रयुतं त्रिकोणं, अम्भोजयुग्मशशिखंडसमानरूपं वेदास्रकंसदशनंक्षिति मण्डलानीति । मंत्रप्रकाशेपि, चन्द्रार्द्धमण्डलं वापि श्वेतं पङ्कजयुग्मयुक् इति। स्वायंभुवे नारसिंहेपि, आप्यमर्द्धेंदुपद्मांकितमिति। यस्तु अष्टदलपद्मं कृत्वा तद्दलाग्रेषु अर्द्धचन्द्राकारान् कुर्यादिति वदतिस्म स भ्रांत एव। अन्ये तु अर्द्धचन्द्रं कृत्वा तन्मध्ये पद्मं लिखेत् इति वदन्ति । तदपि भूतलिपिपटले वक्ष्यमाणत्वात् अन्यत्र न वाच्यं सवज्रकं चतुरस्रं भूमेरिति संबन्धः चतुरस्रसंपातरेखाः संवर्ध्याष्टवज्राणि कुर्यादिति । केचित् सम्प्रदायविदस्तु चतुरस्ररेखास्वेवाष्टवज्राणि कार्याणीति वदन्ति । तदुक्तम् शौनककल्पे । भूगृहं चतुरस्रं स्यात् अष्टवज्रविभूषितमिति । हिरण्यगर्भसंहितायामपि, बाह्ये वज्राष्टकविभूषितं चतुष्कोणं शुभमथो इति । आचार्यैश्च वसुकुलिशगमिति, ग्रन्थकारोपि वज्रेष्वष्टस्विति अन्योन्याभिमुखतया त्रिवक्रं रेखाद्वयं परस्परसंबद्धं वज्रं परस्परसंबद्धमध्यं रेखाद्वयमिति केचन । मण्डलध्यानमाह । तत्तदिति । अनेन भूम्यादौ मण्डललिखने तत्तद्वर्णरजोभिः पूरणमप्युक्तं भवति ॥ २३ ॥ २४ ॥ वर्णैर्द्वितीये वक्ष्यमाणभूतवर्णैः। स्वस्वनामावृतान्यपीत्यस्यायमर्थः वक्ष्यमाणभूतलिपियन्त्रेषु यः कर्णिकालिखितो मन्त्रस्तेनावृतानीति सांप्रदायिकास्त्वेवं मन्यन्ते कलात्मन इति।पूर्वमुक्ताः भूतकारणभूताः बिंदुतत्वनिर्गताः शक्तीः।संहारक्रमेण प्रयोगाद्यर्थमाह। धरेति धरादिपंचभूतानामुत्पादिकाः इति शेषः तदुक्तं वायवीयसंहितायां शक्तिः, प्रथमसंभूताशांत्यतीतपदोत्तरा शांत्यतीतपदाच्छक्तेस्ततः शांतिपदंक्रमात् ततो विद्यापदं तस्मात्प्रतिष्टापदसंग्रहः निवृत्तिपदमुत्पन्नं प्रतिष्ठा पदतः परम् एवमुक्ता समासेन सृष्टिरीश्वरचोदिता आनुलोम्यादथैतेषां प्रातिलोम्येन संहृतिः अस्मात् पंचपदोद्दिष्टान्न सृष्ट्यंतरमाप्यते कलाभिः पंचभिर्व्याप्तं यस्मिद्विश्वमिदं जगदिति ॥ २५ ॥ नादेति नादाद्देहो यस्य स नाददेहः बिंदुःतत्समुद्भवाः इत्यर्थः यद्वा तासां स्थूलवाचकांशमाह । नाददेहसमुद्भवा इति । नादो हकारः नादस्य ध्वनेर्देहउत्पत्तिर्यस्मात् स वायुस्तेन यः सधर्मधर्मिणोरभेदात् देहशब्देनोत्पत्तिरुक्ता मारुतस्तुरसिचरन्मन्द्रं जनयति स्वरं इत्युक्तेर्नादोत्पत्तिहेतुत्वं तस्य समुदीप्यमाना भा दीप्तिर्य-

निवृत्तिः सप्रतिष्ठास्याद्विद्याशांतिरनंतरं। शांत्यतीतेतिविज्ञेयानाददेहसमुद्भवाः ॥ २६ ॥
पंचभूतात्मकं सर्वं चराचरमिदं जगत्। अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः ॥ २७ ॥

क्षेतिअग्निस्ते न रः वाद्यरूपं तत्र यरलवानां क्रमेण ग्रहणे कर्त्तव्ये यत्त्रयाणामेव ग्रहणं कृतवान् तेन लकारोप्यस्तीति ज्ञेयं प्रथमतो नादग्रहणाद्विंदुयोगोप्येषां ज्ञेयः। एतानि विलोमेन तन्मात्राबीजानि। अथवा नादो हकारः तस्य देहः स्वरूपं तत्र समुद्भवः स्थितिर्येषां एवंभूताः आआवर्णादयः आईऊऐओकाराः एषां सविंदुकत्वं ज्ञेयम्। तदुक्तम् त्रिकोणोत्तरे, नादाख्यं यत् परं बीजं सर्वभूतेष्ववस्थितं मूर्त्तिदं परमं दिव्यं सर्वसिद्धिप्रदायकं शांतं सर्वगतं शून्यं मात्रापञ्चकसंस्थितमिति। केचन क्रमेण एषां लवरयहयोगमाहुः। तद्यथा ल्हीं व्हीं रूंह्यैं ह्रौं एतानि अपञ्चीकृतभूतबीजानि। अथवा नादो हकारः शरीरस्य पृथिव्यंशाधिक्याद्देहशब्देन लकारः तस्य समुद्भवः स्थितिर्यत्र स देहसमुद्भवः येषु आकारादिषु ते नाददेहसमुद्भवाः अत्र क्रमेण लवरयहयोगमाहुः। तद्यथा, ल्हां व्हीं रूं ह्यैं ह्रौं एतानि पञ्चीकृतभूतबीजानि भूतबीजानामेव तदभिमानिनिवृत्त्याद्याद्यादिबीजत्वं ज्ञेयम्। तदुक्तमाचार्यैः। नादकलादिभूता इति ॥ २६ ॥ एवं भूतान्युक्त्वा जगतस्तदात्मकत्वमाह। पञ्चेति। एतेन त्रिवृत्करणपक्षः पञ्चीकरणपक्षोपि सूचितः तत्रये तैजसा देवाः तेषामपि शरीरार्द्धो भागस्तैजसश्चतुर्थांशः पृथिव्याः चतुर्थांशो जलस्येति त्रिवृत्करणपक्षः। पञ्चीकरणपक्षेतु। पृथिव्याश्चत्वारोंशाः अन्येषामष्टमः अष्टमोंशः एवमन्यत्रापि। तदुक्तम्। द्विधा विधाय चैकैकञ्चतुर्धा प्रथमं पुनः स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपं च ते इति। अथवा षडंशास्तैजसः पृथिवीजलवाय्वाकाशादीनां दशमो दशमोंशः एवं पार्थिवे अस्मदादिशरीरेपि भागाः षड् पृथिव्याः अन्येषां दशमो दशमोंशः एवं वरुणलोकनिवासिनामाप्यादिशरीराणामप्यवगन्तव्यम्। यदुक्तम्, पृथिव्यादीनि भूतानि प्रत्येकं विभजेद् द्विधा एकैकभागमादाय पञ्चधा विभजेत् पुनः। एकैकभागमेकैकं भूतैः संवेशयेत् क्रमात् ततश्चाकाशभूतस्य स्वभागाः षट् भवन्ति हि वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् पञ्चीकरणमेतत्स्यादित्याहुस्तत्ववेदिन इति। अन्यत्र विशेषः। अस्थि मांसं त्वचं स्नायुरोम एव तु पञ्चमम् इति पञ्चविधा प्रोक्ता पृथिवी कठिनात्मिका, लाला मूत्रं तथा शुक्रं शोणितं मज्जपञ्चमम् ॥ अपां पञ्च गुणा एते द्रवरूपाः प्रकीर्त्तिताः क्षुधा तृष्णा भयं निद्रा आलस्यं क्रांतिरेवच तृष्णात्मका गुणा एते तेजसः परिकीर्त्तिताः ॥ धावनं वल्गनं भुक्तिराकुञ्चनं प्रसारणम् एते पञ्च गुणा वायोः क्रियारूपा व्यवस्थिताः रागद्वेषौ तथा लज्जा भयं मोहस्तथैवच। व्योम्नः पञ्च गुणा एते शून्याख्ये सुषिरात्मनि इति। चरं जङ्गमम् अचरं स्थावरं चरेषु बहुव्यक्तत्वात् प्रथमोद्दिष्टं तं विहायाचरानाह। अचरा इति। अत्र ते स्वेदांडजजरायुजा इति वक्ष्यति तेन स्पष्टत्वादेषामौद्भिदत्वमुक्तं, यदाहुः, देहस्तु विधो ज्ञेयो जन्तोरुत्पत्तिभेदतः उद्भिजः स्वेदजोंडोत्थश्चतुर्थस्तु जरायुजः उद्भिद्य भूमिं निर्गच्छेदौद्भिदः स्थावर स्तु स इति। एषामुत्पत्तिप्रकारोन्यत्रोक्तः उद्भिदः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः तत्र सिक्ता जलैर्भूमिरन्तरूष्मविपाचिता वायुना व्यूह्यमानातु बीजत्वं प्रतिपद्यते तथा चोप्तानि बीजानि संसिक्तान्यम्भसा पुनः उच्छूनतां मृदुत्वं च मूलभावं प्रयांति च तन्मूलादंकुरोत्पत्तिरंकुरात्पर्णसंभवः पर्णात्मकं ततः कांडं कांडाच्च प्रसव पुनरिति ॥ २७ ॥

चरास्तु त्रिविधाः प्रोक्तास्वेदांडजजरायुजाः।स्वेदजाः क्रिमिकीटाद्याः अंडजा पन्नगादयः २८
जरायुजामनुष्याद्यास्तेषु नॄणां निगद्यते। उद्भवः पुंस्त्रियोयोगात्शुक्रशोणितसंयुतात् ॥ २९ ॥
बिंदुरेको विशेद्गर्भमुभयात्माक्रमादसौ । रजोधिके भवेन्नारी भवेद्रेतोधिकः पुमान् ॥ ३० ॥
उभयोः समतायां तु नपुंसकमितिस्थितिः । पूर्वकर्मानुरूपेण मोहपाशेन यंत्रिताः
काश्चिदात्मा तदा तस्मिन् जीवभावं प्रपद्यते ॥ ३१ ॥

विभागपूर्वं चरानुद्दिशति । चरास्त्विति । जनेः प्रत्येकं संबंधं दर्शयन् तद्विशेषानाह । स्वेदजाइ त्यादिना, क्रमिकीटाद्याः अनस्थित्वे उभयोरपि दंशकादंशकत्वाभ्यां भेदः आदिशब्देन पतंगादीनां ग्रहणम् । यदाहुः । क्रमिकीटपतंगाद्या स्वेदजानाम देहिनः।इति। तदुत्पत्तिप्रकारोन्यत्रोक्तः स्वेदजा- स्त्रियमानेभ्यो भूवनूष्मदुभ्यः प्रजायतेइति अनेनैषामयोनिजत्वमुक्तम् । यत्प्रयोगसारे। किं तत्र स्वेदजा येतु ज्ञेयास्ते चाप्ययोनिजाः स्थिरा विवायवो भिन्नाश्चत्वारिंशत्सहस्रधेति । पन्नगादय इत्यादिशब्देन पक्षिकच्छपादिग्रहणम् । यदाहुः । अंडजाः पक्षिणः सर्पा नक्रमत्स्याश्च कच्छपाइति । तदुत्पत्तिप्र- कारोपि । अंडजो वर्तुलीभूताच्छुक्रशोणितसंयुतात् कालेनभिन्नात् पूर्णात्मा निर्गच्छन् प्रक्रमि- ष्यतीति ॥ २८ ॥ जरायुर्गर्भाशयो जालिकारूपः मनुष्याद्या इत्यादिशब्देन पश्वादयः एषां संख्योक्ता प्रयोगसारे। योनिजाः प्राणिनो भिन्नाश्चतुःषष्टिसहस्रधेति तेषुनॄणां निगद्यते उद्भव इति संबंधः यतः स- र्वशास्त्रस्य मनुष्याधिकारित्वात् शोणितसंयुतादित्यनेन तस्याप्रधानतोक्ता अतः पुत्रः पितृजात्यादियुक्तः। ताथ च महाभारते माता भस्त्रा पितुः पुत्रो येन जातः स एव स इति भस्त्रावायवाधारं चर्ममयं, उभ- यात्मा शुक्रशोणितात्मा अतएव अग्नीषोमात्मा एको बिंदुर्गर्भे विशेत् क्रमादसावित्युत्तरेणान्वयः असौ बिंदुः रजोधिकः क्रमान्नारी भवेत् रेतोधिकः क्रमात् पुमान् भवेदिति योजना।अत्राधिक्यमुक्तप्रमाण तोज्ञेयमुक्तप्रमाणसाम्ये नपुंसकोत्पत्तिरित्यपि।यदाहुः।द्वाविंशतिरजोभागाः शुक्रमात्राश्चतुर्दश गर्भसंजन नेकालेपुंस्त्रियोः संभवंतिच,नारी रजोधिकेंशे स्यात् नरः शुक्राधिकेंशके उभयोरुक्तसंख्यायां स्यान्नपुंसकसं भव इति क्रमादित्यनेनैतदुक्तं भवति सएव बिंदुर्वायुना पृथक् भिन्नः सन् बह्वपत्यतां जनयति। यदाहु- र्वाग्भटे शारीरस्थाने । शुक्रार्त्तवे पुनः, वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता वियोनिविकृताकारा- जायन्ते विकृतैर्मलैः पूर्णषोडषवर्षा स्त्री पूर्णविंशेन संगता शुद्धे गर्भाशये मार्गे रक्ते शुक्रेनिले हृदि वीर्यवंतं सुतं सूते ततो न्यूनाब्दयोः पुनः रोग्यल्पायुरधन्यो वा गर्भो भवति नैव चेति ॥ ३० ॥ तस्मिन् बिंदौ जीवसंचारमाह पूर्वेति ।पूर्वजन्मशतसंचितकर्मणां मध्ये फलप्रदानोन्मुखं प्रबलमेकं पुण्यपा- पात्मकं सुखदुःखोभयात्मकफलकंमनुष्यशरीरोपभोगयोग्यं यत्कर्म तदनुरूपेण मोहपाशेन अविद्यारूपे- ण यंत्रितो बद्धः उत्पद्यते।एतेन नित्यस्यात्मनोनुत्पत्तिरुक्ता गृहमिव देहमात्माप्रविष्ट इत्यर्थः।कश्चिदिति। नानात्मानो व्यवस्थात इति कणादसूत्रानुसारात् पुरुषबहुत्वं सिद्धमिति सांख्योक्तेश्च । वेदांतमयेतु । अविद्याकल्पितो भेदोंगीकर्त्तव्यः अन्यथा यद्यात्मज्ञानेनाविद्या नष्टा तदा ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेर्जुनेति वचनात् पूर्वसंचितकर्मणां फलदानासामर्थ्यादग्रिमकर्मनिर्लेप एव नास्ति न लि- प्यते कर्मभिः स पद्मपत्रमिवांभसेति वचनात् तस्यैकत्वात् मुक्तत्वात् च अवतार एव न स्यात् इत्य- वतारकारणं मोहपाशेनेत्युक्तम् । तदुक्तमध्यात्मविवेके । अस्ति ब्रह्मचिदानंदं स्वयं ज्योतिर्निरंजनं स- र्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञकाः अनाद्यविद्योपहिता यथाग्नेर्विस्फुलिङ्गकाः, दीर्घाद्युपाधि-

संभिन्नास्तं कर्मभिरनादिभिः सुखदुःखप्रदैः पुण्यपापरूपैर्नियंत्रिता, तत्तज्जातियुतं देहमायुर्भोगं च कर्मजं। प्रतिजन्म प्रपद्यन्तइति ३१ अथेति। तत्र प्रकारो योगार्णवे। आविश्यभुक्तमाहारं स वायुः कुरुते द्विधा। संप्रविश्यान्नमध्यस्थं पृथक्किट्टं पृथग्जलम्। अग्नेरूर्ध्वं जलम् स्थाप्य तदन्नंच जलापरिजलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः वायुना व्यूह्यमानोग्निरत्युष्णं कुरुते जलम् अन्नं तदुष्णतोयेन समंतात् पच्यते पुनः द्विधा भवति तत्पक्वं पृथक् किट्टं पृथक् रसम्। रसेन तेन ता नाडीः प्राणः पूरयते पुनः प्रतर्पयंति संपूर्णाः ताश्च देहं समंततः। मातुरसवहा नाडी मनुवहा पराभिधा नाभिस्थनाडीगर्भस्य मात्राहृतरसावहेति। दिनादिरिति। तदुक्तम्॥ रथरेणुद्वयं जंतुः क्षणमात्रेण वर्द्धते। नाडिकामात्रतोयूकायुगलं च मुहूर्त्ततः यूकानां वेदसंख्यं च दिनमात्राद्यवद्वयमिति। योगार्णवे च॥ कललं चैकरात्रेण पंचरात्रेण बुद्बुदम्। शोणितं दशरात्रेण मांसपेशी चतुर्दशे घनमांसं च विंशाहे पिंडीभावोपलक्षितम्। पंचविंशतिपूर्णाहे पलं सर्वांकुरायते॥ एकमासे तु संपूर्णे पंचभूतानि धारयेत्। मासद्वये तु संप्राप्ते शिरो मेदः प्रजायते। मज्जास्थि च त्रिभिर्मासैः केशांगुल्यश्चतुर्थके। कर्णाक्षिनासिकानारचन्धूं मासि तु पंचमे। आस्यरंध्रोदरं षष्ठे पायुरंध्रं च सप्तमे। सर्वांगसंधिसंपूर्णं मासैरष्टभिरिष्यते इति। अध्यात्मविवेकेतु विशेषः॥ द्रवत्वं प्रथमे मासि कललाख्यं प्रजायते। द्वितीये तु घनः पिंडः पेशी षड्घनमर्वुदम्। पुंस्त्रीनपुंसकानां तु प्रागवस्थाक्रमादिमाः। तृतीये त्वंकुराः पंच करांघ्रिशिरसो मताः। अंगप्रत्यंगभागाश्च सूक्ष्मास्युर्युगपत्तदा। विहाय श्मश्रुदंतादीन् जन्मानंतरसंभवान्। एषाप्रकृतिरन्या तु विकृतिः समता सताम्। चतुर्थे व्यक्तता तेषां भावानामपि जायते। मातृजं चास्य हृदयं विषयानभिकांक्षति। अतो मातृमनोभीष्टं कुर्याद्गर्भसमृद्धये। तां च द्विहृदयां नारीमाहुर्दौहृदिनीं बुधाः। अदानाद्दोहृदानांस्युर्गर्भस्य व्यंगतादयः मातुर्यद्विषयालाभस्तदार्त्तो जायते सुतः। गर्भस्यादर्थवान्भोगी दोहृदात् राजदर्शने। अलंकारे सुललितोधर्मिष्ठःस्तापसाश्रमे। देवतादर्शने भक्तो हिंस्रो भुजगदर्शने। गोधाशशे तु निद्रालुर्बलो,गोमांसभक्षणे। माहिषेण तु रक्ताक्षं लोमशं सूयते शिशुं। प्रवृद्धं पंचमेपित्तं मांसशोणितपुष्टता। षष्ठे स्थिस्नायुनखरकेशरोमविविक्तता। बलवर्णौचोपचितौ सप्तमेत्वंगपूर्णता। अष्टमे त्वक्श्रुतोस्यातां ओजश्वेतश्चहृद्भवम्। शुद्धमापीतरक्तं च निमित्तं जीविते मतम्। पुनर्वांपुनर्गर्भंचंचलं तत्प्रधावति। अतो जातोष्टमे मासि न जीवत्योजसोज्झित इति। याज्ञवल्क्योपि। पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति। अष्टमेमास्यतो गर्भो जातः प्राणैर्वियुज्यतइति। एवमोजोवालेभवेत्तदा माता न जीवतीति ज्ञेयम्। यदा तूभयोर्हृदि तदोजो न स्यात् तदोभयोरपि जीवनं नेति ज्ञेयं तत्र देहवान् चतुर्विंशतितत्वात्मकशरीरः तत्वान्यनंतरं वक्ष्यति ३२ दोषैरिति। सुखं यथा स्यात्तथा दोषैर्द्वेष्यः प्राप्तः निर्जेंद्रियैर्व्यक्तिं याति। अनेनाष्टममासपर्यंतं हृदिस्थित्वा ३३ दोषादीनेवाह वातेति। तानिति धातून्। एषां पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणता ज्ञेया तदुक्तं सुश्रुते। वसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवःभवंत्यन्योन्यतः सर्वे प्रचिताःपित्ततेजसेति। ननु कथं त्वचोसृजं प्रति कारणतेतिचेत्सत्यं त्वगसृजो तु रसत उत्पन्ने, तदुक्तम्। रसः स नाडीमध्यस्थः शरीरेणोष्मणा भृशम्। पच्यते पच्यमानाच्च भवेत्पाकद्वयं पुनःचर्मावेष्ट्य समंताच्च रुधिरं च प्रजायत इति। अन्यत्रापि त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवःसप्तस्युस्तत्र चोक्ता त्वक्त्वक्चजाठरवन्हिना। पक्वाद्रवे-

दशरसादेवं रक्तादिभिस्तथा। रसरक्तौशाग्निना पक्त्वैर्जन्यंते धातवः क्रमात् इति । नारायणीयेतु। त्वगित्यादिपठित्वारसास्नेति पठंत्येके इत्युक्तं व्यक्तिं याति निजेंद्रियैरित्युक्तम् । तानि इंद्रियाणि तत्प्रसंगात्तेषां च विषयानप्याह २४ ज्ञानेति । अर्थशब्दो विषयवाची उभयत्रापि ॥ शब्दाद्याः शब्दस्पर्शरूपरसगन्धाःपूर्वं भूतगुणेषु उक्तारसादिनोक्तिरित्यवधेयम् अंधुलिंगमात्मनो ग्राह्यकमिति शेषः। तेन मनसो विषय आत्मेत्युक्तं भवति। अंतरकरणस्यैव चातुर्विध्यमाह मन इत्यादिना। तत्र संकल्पविकल्पात्मकं मनः सर्वभावनिश्चयकारिणी बुद्धिः ज्ञात्रभिमानयुक्तो ऽहंकारः निर्विकल्पकं चित्तमित्येषां भेदः। यदाहुः। एषा शक्तिः परा जीवरूपिणी प्रोक्तलक्षणा। संकल्पं चविकल्पं च कुर्वाणं तु मनो भवेत्। बुद्धिरूपा तथा सर्वभावनिश्चयकारिणी। ज्ञात्रस्मीत्यभिमानाद्या सैवाहंकारसंज्ञिता। निर्विकल्पात्मिका सैव खलु चित्तस्वरूपिणी। एवमेकैव बहुधा नर्त्तकीव प्रतीयत इति। एवंपूर्वंभूतानि इंद्रियाण्यप्युक्त्वा तेषां मिलितानां संज्ञांतराण्यप्याह । दशेति श्लोकद्वयेन। अथवा तत्वदेहवान् इति उक्तं तानि तत्वान्याह । दशेति । विकारादिसंज्ञास्तत्प्रसंगसंगत्या उक्ता इति ज्ञेयम्। यद्वा सूचीकटाहन्यायेनदोषान् दूष्यानुक्त्वा तत्वदेहस्थानिति उद्दिष्टानितत्वानि तानि का नीत्यपेक्षायामाह। - ज्ञानेत्यादि । कर्मेन्द्रियार्थाः संप्रोक्ताः पृथिव्यादय इत्यर्थः। पंचभूतानि दशेनियाणिदशेंद्रियार्थाः एवं पंचविंशतितत्वानि। यदाहुः। भूतैर्येन्द्रियैद्रियार्थैरुद्दिष्टस्तत्वपंचविंशतिक इति। अथ विसर्गानंदसंयुता इति भिन्नपदकरणेन पायूपस्थयोविसर्गस्यैव कार्यत्वात्। आनंदरहितत्वेन चतुर्विंशतेरेव तत्तत्वमुक्तं भवति। यदाहुः। व्यानंदकैश्च तैरपि तत्वचतुर्विंशतिस्तथा प्रोक्तेति । मनोबुद्धिरहंकारश्चित्तं चेत्यनेन वचनादिव्यावर्त्तनेन एतच्चतुष्टययुक्तत्वेन चतुर्विंशतिर्वा तत्वानीत्युक्तं भवति। यदाहुः। करणोपेतैरेतैस्तत्वान्युक्तानि । रहितवचनाद्यैरिति । सांख्यमतोक्तचतुर्विंशतितत्वानि वदन् तेषां कियतामपि तत्प्रसिद्धाः संज्ञा अप्याह । दशेति। अनेन दशेन्द्रियाणि पञ्चभूतानि पञ्चतन्मात्राः मनः अहङ्कारः प्रधानं प्रकृतिरिति चतुर्विंशतितत्वानि इत्युक्तं ग्रन्थकृदेव वक्ष्यति। पञ्चभूतानि तन्मात्रा इन्द्रियाणि मनस्तथा । गर्वोबुद्धिः प्रधानं च मैत्राणीति विदुर्बुधाः इति। विकारास्युरित्येषां नित्यकार्यरूपत्वेन विकारता । अष्टौ प्रकृतय इति सम्बन्धः । उत्तरोत्तरं प्रति कारणत्वादेषां प्रकृतित्वम्। अत्र भूतानीतिभूतशब्देन तन्मात्रा उच्यन्ते। कारणे कार्योपचारात्। भूतानां केवलकार्यत्वेन विकारेष्युक्तत्वात् । अग्रे तन्मात्रा इति परामर्शाच्च। यदाहुः। अप्राकृतिकानि सप्तविकृतिसंज्ञकानि स्युरिति। अव्यक्तं प्रधानापरपर्याया प्रकृतिरित्यर्थः। अव्यक्तं महदिति व्यत्ययो गोपनार्थः। साव्यक्तं महदिति वा पाठः। यतोत्र संहारक्रमो विवक्षितः। यदाहुः। चतुर्विंशतितत्वानि प्रकृत्यन्तानि संजगुरिति। अन्यत्र सृष्टिक्रमापेक्षयोक्तम्। अव्यक्तम्। महदहंकृतिभूतानीति तन्मात्राश्चेति। साहङ्कारइति। तन्मात्रविशेषणम् । तेनव्यत्ययः चकारेण प्रकृतय इत्यस्य समुच्चयः। तेनैते सप्तप्रकृतिविकृतिवाच्या इत्यर्थः। उत्तरोत्तरं प्रति पूर्वपूर्वस्य प्रकृतिभूतत्वात्। पूर्वपूर्वं प्रति उत्तरोत्तरस्य विकृतिभूतत्वादेषां प्रकृतिविकृतित्वं। तदाहुः। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयःसप्त षोडशकस्तु विकारो न प्रकृतिर्नविकृतिः पुरुष" इति । उपसंहरति। तत्वविदो विदुरिति। अयमर्थः। ज्ञानेन्द्रियाणीत्यादि एतदंतं यत्तत्वनिरूपणं मया कृतं तत्तत्वविदां सम्मतमिति। अथ वा तत्वविदो विदुरित्यनेन पूर्वप्रकारद्वयोक्ततत्वानि नास्मत्सम्मतानि अपि

त्वेतानि प्रकृत्यन्तान्येव चतुर्विंशतितत्वानि। पुरुषांतानि पञ्चविंशतिः परान्तानि षड्विंशतिः अस्म-न्मतानीत्युक्तं भवति । इयं योजना साम्प्रदायिकी। तदुक्तं वायवीयसंहितायां। चयोविंशतितत्वेभ्यः परा प्रकृतिरुच्यते। प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम् । तस्य प्रकृतिलीनस्याथ परः स महे-श्वरः। तदधीन प्रवृत्तित्वात् प्रकृतेः पुरुषस्य चेति। के चनान्यथा योजयन्ति । भूतादिकाहङ्कार-सृष्टिमुक्त्वा तैजसादिन्द्रियाण्यासन् इत्युद्दिष्टानि इन्द्रियाणि तत्प्रसङ्गात्तेषां विषयानप्याह । घ्राणे-त्यादिपरिकीर्त्तितइत्यन्तेन। उत्तरव्यवहारशेषतया केषां चिन्मन्त्राणां वर्णतत्वन्यासयोगादिशेष-तया च विकारादिदर्शयति। दशेत्यादि। तत्वविदः इदं विदुः एषां तत्रान्तर्भावात् तत्वविद्भिरेताः संज्ञाः कृता इत्यर्थः । एवं प्रासङ्गिकमुक्त्वा प्रकृतमाह । अग्नीति । देहः अग्नीषोमात्मकः कुत इत्यपेक्षायां हेतुमाह। यद्यस्मात्कारणात्। उभयात्मको बिन्दुः शुक्लमग्निरूपं रक्तं सोमरूपंतदा-त्मकः।यदाहुश्च। कलाषोडशकश्चंद्रः स्याद्द्वादशकलो रविः कलादशयुतो वन्हिः कलाष्टत्रिंशदंशभुक्। सप्तत्रिंशद्भवन्तीह गर्भाधानस्य हेतवे ।अग्नीषोमात्मकं तेन गीयते सचराचरं। कलांशकेन योगेन भूयाद्गर्भस्य सम्भव इति। एवमप्यग्नीषोमात्मकमित्यर्थः। अग्नीषोमात्मका देह इत्युक्तं तयोः प्रयोगा-दिविशेषतया देशविशेषे व्यवहाराय स्थितिमाह । दक्षिणांश इति अत्र शास्त्रे दक्षिणभागः क्व चिदग्निशब्देन क्व चित्सूर्यशब्देनापि व्यवह्रियते। अग्नेर्यो दक्षिणो भाग इत्युक्तेः । वायवीयसं-हितायामपि। द्विधा वैतेजसी वृत्तिः सूर्यात्मा चानलात्मिकेति। पूर्वोक्तसूर्यनिशाकरयोः स्थितिमु-पपादयितुं शरीरे नाडीरप्याह । नाद्य इति।तासु अन तासुदशनाडीर्मुख्याविदुरित्यन्वयः।नाद्यो-नन्ताइतिवक्ष्यमाणत्वात्तासुदशस्वपितिस्रोमुख्याः प्रकीर्तिताः। तासुमुख्याइतिपदस्यचाहत्या योज-नाप्रकीर्तिताः इत्यस्योपादानमन्यथाविदुरित्यनेनैव गतार्थत्वात्। उक्तं च तत्राद्यास्तिस्रो । अत्रावृत्ति-कारणं मुख्यतमाः स्मृताः इति। तासामेवस्थितिमाह।इडेति। तनोरिति। त्रिषु स्थानेषु सम्बध्यते वामे-इडा वाममुष्कोत्थाधनुर्वक्रा सतीवामनासापर्यंतं गता इत्यर्थः। तयोर्मध्ये पृष्टवंशान्तर्गता सुषुम्ना-या सुण्डाधारदण्डान्तरविवरगतेत्युक्तेः परे दक्षिणे दक्षिणमुष्कोत्था धनुर्वक्रादक्षिणनासापर्यंतं गते-त्यर्थः। यदाहुः । या वाममुष्कसम्बन्धात् सा श्लिषन्ती सुषुम्नया दक्षिणं हृक्कमाश्रित्य धनुर्वक्रा हृदि श्रिता। वामांसजत्रन्तरगा दक्षिणां नासिकामियात् । यथा दक्षिणमुष्कोत्था नासाया वा-मरंध्रगा इति। तन्त्रान्तरेपि। सुषुम्नकल्पिता याता मुष्कं दक्षिणमाश्रिता । हृद्गता वामभागस्य जत्रुमध्यं समाश्रिता। दक्षिणं नासिकाद्वारं प्राप्नोति गिरिजात्मजे । वाममुष्कसमुद्भूता तथा ऽन्या-सव्यनासिकामिति। अनयोः स्वरूपमुक्तं योगार्णवे । इडा च शङ्खकुंदाभा तस्याः सव्येव्यवस्थिता पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रितेति । अनेन पिङ्गलेडयोः क्रमेण सूर्याचन्द्रमसोः स्थिति-रुक्ता भवति । इडायां संचरेच्चन्द्रः पिङ्गलायां दिवाकरः इत्युक्तेः सुषुम्नाया मुख्यत्वं वदन् स्वरूप माह। मध्येति। तास्वपीति । अपिशब्दात् मुख्येत्यनुषज्यते।. तासु तिसृषु मध्या सुषुम्णा मुख्या-सुषुम्णैव तासु नाडीत्युक्तेः सा कोदृशी अग्नीषोमस्वरूपिणी मुख्यत्वे हेतुत्वेन योज्यम्। यतः पूर्वो-क्तसोमाग्निरूपयो रिडापिङ्गलयोरत्रैव लयात्। तदुक्तं । राहोरास्यगत इति। अनेनास्या ब्रह्मरंध्रप-र्यन्तं स्थितिरित्यप्युक्तम्। यदाहुः तयोः पृष्टवंशमाश्रित्य मध्ये सुषुम्णा स्थिता ब्रह्मरंध्रं तु यावदिति शिष्टानां सप्तानां नामान्याह। गान्धारीति। आसां स्थितिस्वरूपं चोक्तम्। योगार्णवे । इडा पृष्टे तु

गान्धारीमयूरगलसंन्निभा । सव्यपादादिनेत्रान्तागान्धारी परिकीर्तिता । हस्तिजिह्वोत्पलप्रख्या नाडी तस्याः पुरस्थिता सव्यभागस्य मूर्द्धादिपादांगुष्टान्तमाश्रिता पूषा तु पिङ्गला पृष्टे नीलजीमूतसन्निभा । वाम्यभागस्य नेत्रान्ताद्यावत्पादतलं गता । अलंवुषा पीतवर्णा कण्ठमध्ये व्यवस्थिता यशस्विनी शंखवर्णा पिङ्गला पूर्वदेशगा । गान्धार्याश्च सरस्वया मध्यस्था शंखिनी मता । सुवर्णवर्णा पादादिकर्णान्ता सव्यभागके । पादांगुष्टादिमूर्द्धान्तं याम्यभागे कूहुर्मतेति । अन्यैस्तु वारणा सरस्वती विश्वोदरा यशस्विनी एता अपि मुख्यत्वेनोक्ताः । यदाहुः । ताश्च भूरितरास्तासु मुख्याः प्रोक्ताश्चतुर्दश । सुषुम्नेडापिङ्गले च कुहूरपि सरस्वी । गान्धारी हस्तिजिह्वा च वारणा च यशस्विनी विश्वोदरा शंखिनी च ततः पूषा पयस्विनी अलंवुषेति । अन्यत्रापि । चतुर्दशात्र यद्दृष्टे प्रधाना नाडयः स्मृता। इति। आसां ध्यानं संस्थानं च ग्रन्थगौरवभयात् नोक्तम्।मुख्या इत्यनेनैव सूचिताः॥४२॥ सामान्या आह । नाद्य इति । सुषुम्ना पञ्चपर्वसु अनन्ता नाद्यः समुत्पन्नाः पञ्चपर्वाणि । स्वाधिष्टानमणिपूरकानाहतविशुद्धाज्ञान्तानि । तत्राधोधो ग्रन्थिमारभ्योर्ध्वोर्ध्वग्रन्थिपर्यतं पर्वसमाप्तिः यद्यपि ग्रन्थिर्ना पर्वपरुषी इति कोशः इक्षुपर्वावधिः स्मृत इति व्यवहारश्च तथाप्यत्र षसां ग्रन्थीनां सत्वादेवं व्याख्यातं आश्वलायनश्रौतसूत्रभाष्यकारेण पर्वणं जपेत् । इत्यत्र पर्वशब्दस्यैवं व्याकृतत्वात्।एतदभिप्रायेणैव वक्ष्यति मध्यमांगुलिपर्वणि इति सुषुम्नायामेतेषु पर्वसु इडा पिङ्गलायोगो भवति इति ज्ञेयम् अनन्ता इति गणयितुम् अशक्यत्वादानन्त्यम्। यदाहुः।पूर्वोक्तायाः सुषुम्नाया मध्यस्थायाः सुलोचने । नाभिहृत्कंठतालुभ्रूमध्यपर्वसमुद्भवः अधोमुख्यः शिराः काश्चित् काश्चिदूर्ध्वमुखास्तथा परा तिर्य्यग्गतास्ताश्च तत्र लक्षत्रयाधिकाः। नाड्योर्ऽलक्षसंख्याताः प्रधानाः समुदीरिताः तासु सर्वासु बलवान् प्राणो वायुः समन्ततः संस्थितः सर्वदाव्याप्त इति । अध्यात्मविवेके तु विशेषः अस्थ्नां शरीरे संख्या स्यात् षष्टियुक्तं शतत्रयम्। त्रीण्येवास्थिशतान्यत्र धन्वन्तरिरभाषत। द्विशतेत्वस्थिसन्धीनां स्यातामत्र दशोत्तरे । यशीस्नायशिरासन्धिसहस्रद्वितयं मतम् । नव स्नायशतानि स्युः पञ्चपेशीशतान्यपि । अधिकाविंशतिः स्त्रीणां स्तनयोर्दिग्भगे दश शिराधमनिकानां तु लक्षाणि नवविंशतिः सार्द्धानिस्युर्नवशती षट्पञ्चाशयुता तथा इति । नाडीनां फलमाह । मूलेति। वक्ष्यमाणेभ्यो भिन्नो मुख्यो देहधारकप्राणाभिधो वायुः। यदाहुः । राजसः प्राणसंज्ञः स्यात् मुख्यो देहस्य धारकः। तद्भेदा दश विख्याताः यैर्व्याप्तं स्याच्छरीरकमिति सा चासौ तनुश्च ताम् पूर्वोक्तं शरीरं तद्भेदान् वदन् प्रसङ्गादग्नीनप्याह । वायव इति । तन्नामान्याह । प्राणाद्या इति । आदिशब्देनापानव्यानोदानसमानाः प्रसिद्धत्वेनादिनोक्तिः । तत्र विशेषो योगार्णवे । इन्द्रनीलप्रतीकाशं प्राणरूपं प्रकीर्तितं।आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यगे। प्राणालयमिति प्राहुः पादांगुष्टेपि केचन । अपानयत्यपानीयमाहारं च मलायितम् । शुक्रंमूत्रं तथोत्सर्गमपानस्तेन मारुतः इन्द्रगोपप्रतीकाशः सन्ध्याजलदसन्निभः स च मेढ्रे च पायौ च ऊरुवङ्क्षणजानुषु जङ्घोदरेकंकाद्यां च नाभिमूले च तिष्ठति। व्यानोव्यानशयत्यत्र सर्वव्याधिप्रकोपनः सहारजतसुप्रख्यो हानोपादानकारकः। सचाक्षिकर्णयोर्मध्ये कद्या वै गुल्फयोरपि घ्राणे गले स्फिगुद्देशे तिष्टत्यत्र निरन्तरम्॥स्यन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपनः उद्वेजयति मर्म्माणि उदानो नाम मारुतः विद्युत्पावकवर्णस्या दुत्थानासनकारकः पादयोर्हस्तयोश्चापि सतु सन्धिषु वर्त्तते । पीतं भक्षितमाघ्रातं रक्तपितकफानिलान्। समं नयति

गात्राणि समानो नाम मारुतः गोक्षीरसदृशाकारः सर्वदेहे व्यवस्थितः उद्गारो नाग इत्युक्तो नील-जीमूतसन्निभः उन्मीलने स्थितः कूर्मो भिन्नाञ्जनसमप्रभः क्रकलस्तु क्षुते चैव जपाकुसुमसन्निभः विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः धनंजयस्तथा घोषे महारजतवर्णकः ललाटे चोरसि स्कन्धे हृदि नाभौ त्वगस्थिषु नागाद्या वायवः पञ्च सन्त्येव परिधिष्ठिता इति। आचार्यास्तु। धनंजयाख्यो देहेऽस्मिन् कुर्याद्बहुविधान् रवान्। स तु लौकिकवायुत्वात्मृतं च नच मुञ्चति इति। अन्येस्तु चत्वारो वायव अधिका उक्ताः वैरम्भणः स्थानमुख्यः प्रद्योतः प्रकृतस्तथा। वैरम्भणादयस्तत्र सर्ववायुवशङ्गता इति। अग्नीनां स्थितिमाह। अग्नय इति। तेषां नामान्यन्यत्रोक्तानि। ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा दहनः शोषणश्चैव तपनश्च महाबलः पिठरः पतगः स्वर्णस्त्वगाधो भ्राज एव च। अन्यत्रतु नामान्तराण्युक्तानि। जम्भको दीपकश्चैव विभ्रमभ्रमशोभनाः आवसथ्याहवनीयौच दक्षिणाग्निस्तथैवच। अन्वाहार्यौगार्हपत्य इत्येते दश वह्नयः। इति अन्यैरन्यथोक्तानि। भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा। धारको रन्धकश्चैव द्रावकाख्यश्च सप्तमः॥ व्यापकः पावकश्चैव श्लेषको दशम स्मृत इति। दोषाः वातपित्तकफाः दूष्याः सप्तधातव इति प्रागेवोक्तम्॥४५॥ एवं प्राणमुक्त्वा तस्य विशिष्टे अवस्थे वदन् प्रसङ्गात् मनःशरीरयोरप्याह। बुभुक्षेति। ऊर्मिर्नाम आर्त्युत्पादकः। अवस्थाविशेषः। षडूर्मिप्रसङ्गात् षाट्कौशिकं वदन् शुक्रशोणितकार्यं विविच्याचष्टे॥४७॥ स्नायुविति शुक्रात् पितुःशुक्रात् स्नाय्वादि शोणितान्मातुः शोणितात् त्वगादि। तदुक्तम्। मातृतस्त्रीणि पितृत स्त्रीणि इति। अन्यत्र तु मृदवः शोणितं मेदो मांसं प्लीहा यकृद्गुदः हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मताः श्मश्रुलोमकचाःस्नायुशिराधमनयो नखाः। दशनां शुक्रमित्यादि स्थिराः पितृसमुद्भवाः। इति गर्भाशये तत् स्थितिप्रकारमाह। इत्थंभूत इति। इत्थंभूतः ऊर्वंतरितहस्तबद्धश्रोत्रः मातृपृष्ठमाश्रितो मोक्षोपायमभिध्यायन् इत्यर्थः। यदाहुः। पाण्यन्तरितहस्ताभ्यां श्रोत्ररंध्रे पिधाय सः उद्विग्नो गर्भसंवासादास्ते गर्भे लयान्वितः स्मरन् पूर्वानुभूताश्च नानायोनीश्च यातनाः मोक्षोपायमभिध्यायन् वर्त्ततेभ्यासतत्परइति। अन्यत्र विशेषः। कृताञ्जलिर्ललाटेसौ मातृपृष्ठमभिश्रितः। अध्यास्ते सङ्कुचद्गात्रो गर्भे दक्षिणपार्श्वगः वामपार्श्वश्रिता नारीक्लीब मध्याश्रितं मतमिति॥ ४८॥ कालक्रमेणेति। कालक्रममाह याज्ञवल्क्यः। नवमे दशमे वापीति। अन्यत्रापि समयः प्रसवस्याथ मासेषु नवमादिष्विति। संपिण्डितशरीरः संकुचद्गात्रः अवाङ्मुखः अधोमुखः सन् जायते उत्पाद्यते सूतिमारुतैर्नुन्नः। इति शेषः। यदाहुः। प्रबलैः सूतिमारुतैः निःसार्यते बाणइव यंत्रच्छिद्रेण सत्वर इति। अन्यत्रापि। क्रियतेधःशिराः सूतिमारुतैः प्रबलैस्ततः। निःसार्यते रुजद्गात्रो यंत्रच्छिद्रेण बालकः। इति। क्षणं निश्चेष्टस्तिष्ठति भूमाविति शेषः। एवं शरीरोत्पत्तिपर्यन्तामर्थसृष्टिमुक्त्वा तत्राप्येति सामान्यत उक्तां शब्दसृष्टिं विविच्य वक्तुं भीतया रोदितुमिच्छति इत्युक्तरोदनस्याप्यव्यक्तवर्णात्मकत्वात् वर्णोत्पत्तिप्रकारं वदन् सर्वमन्त्राणां सामान्यतः कुण्डलिनीतउत्पत्तिमाह। तत इत्यादिना। तदुक्तम्। मूलाधारात्प्रथममुदितो यस्तु भावः पराख्यः पश्चात्पश्यंत्यथ हृदयगो बुद्धियुग् मध्यमाख्यः वक्त्रे वैखर्यपिरुरुदिषोरस्य जन्तोः सुषुम्ना बद्धस्तस्माद्भवति पवनः प्रेरितो वर्णसंघः श्रोतो मार्गस्याविभक्तत्वहेतोस्तत्रार्णानां जायते न प्रकाश इति। तत्र ततः शरीरोत्पत्यनन्तरं चैतन्यरूपा अतएव शब्दब्रह्ममयी सा देवी कुण्डली परदेवता सर्वगात्रेण गुणिता अतएव विश्वात्मना

प्रबुद्धा जातप्रबोधा मन्त्रमयं जगत्सूत इति दूरेण सम्बन्धः तत्र मूलाधारे कुण्डलीभूतसर्पवन्नाडी वर्त्तते। तन्मध्ये वायुवशादस्याः सञ्चरणमेव गुणनं । तत्र चैतन्यरूपेति स्वरूपाख्यानं सा प्रसिद्धा। सर्वगेति सामान्यतो व्याप्तिर्द्दर्शिता। विश्वरूपिणीति विषयव्याप्तिः शिवसान्नधिमासाद्य स्थितेति शेषः अनेन शैवसिद्धान्ते शक्तिशब्दशवाच्येयमित्युक्तं सन्निधिशब्दोप्यौपचारिकः तन्मते शिवशक्त्यो-रभेदात्। तदुक्तमभिनवगुप्तपादाचार्यैः। शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकं न वांछति। तादात्म्यमन-योर्नित्यं वन्हिदाहकयोरिग्ति। यद्वा सम्यङ्निधिस्वरूपं शिवस्वरूपं प्राप्येत्यर्थः वक्ष्यति च पिण्डं भवेत् कुण्डलिनी शिवात्मेति। गुणानां सत्वरजस्तमसामुदयो यस्यां सा नित्यानन्दा चासौ गुणोदया च सा नित्यानन्देन कुण्डलिनीस्वरूपमुक्तं गुणोदयेत्यनेन सांख्यमते प्रकृतिवाच्येत्युक्तम्। यदाहुः। प्रधानमिति यामाहुर्याशक्तिरितिकथ्यते इति॥ ५०॥ इदानीमाध्यात्मा धिभूताधिगुणाधिविषयाधिज्योतिषक्र-मेणतस्याव्याप्तिमाह। दिक्कालेति। सर्वदेहानुगेति। देहव्याप्तिः परापरविरागः काचन परशक्तिः तद्विभागेनापि इयं परशक्तिरेव। यदाहुः। भूमिरापोनलो वायुः खं मनो बुद्धिरेवच । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधेति। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्। यद्वा परः स्थूलः अपरः महास्थूलः महदादिः तद्विभागेन परशक्तिः स्थूलाशक्तिः स्थूलात्स्थूलेत्युक्तेः। अनेन महदादिव्याप्तिः । यद्वा सर्वदेहानुगेत्यनेन शब्दतो अर्थतश्चपुंस्त्रीनपुंस-कलिङ्गव्याप्तिर्दर्शिता। शब्दतो यथाशिव इत्युच्यते। कुण्डलिनीत्युच्यते। प्रधानमित्युच्यते । एवं-भूतापि सा स्त्रीत्वेनैव निर्द्दिश्यते इत्याह। परापरेति । परा प्रकृतिः अपरं नपुंसकप्रकृतिस्तद्विभा-गेन तत्यागेन इयं परशक्तिः स्मृता । अयमर्थः यद्यपि लिंगत्रयवाच्या तथापि तूर्णमेवाचल भक्तजनसमस्ताकांचाकल्पवल्ली परशक्तिः शब्दवाच्येति । अतएव शुभा रमणीया यदाहुराचार्याः पुंनपुंसकयोस्तुल्याव्यंगनासु विशिष्यत इति। नित्यक्लिन्नाम्नायेपि। सर्वत्रावस्थिताह्येषा कामिनीषु विशेषतः प्रकाशते ततस्तासामतिहृत्तिन्न कारयेदिति । अंजसा तत्वेन योगिनां हृदयांभोजे नित्यं नृत्यंतीत्यनेनेतैरेव गुरूपदशेन ज्ञायतेइत्यर्थः दृश्या देशिकदेशितैरित्युक्तेः सर्वभूतानां सर्वजन्तूनामा-धारे मूलाधारे चक्रे स्फुरंतीत्यनेन स्थाननिर्देशः विद्युदाकृतिरित्यनेन ध्यानमुक्तम् । यदा-हुः तडित्कोटिप्रख्यां स्वरुचिजितकालानलरुचिमिति। अथवा। अनेन अनेकशब्दोत्पत्तिहेतुत्वेना-नेकविलासवतीत्युक्तम्। शंखमध्येयआवर्त्तः स यथा शंखमध्यमाहत्य तिष्ठति। तद्वदियमपि देवी-त्यर्थः इदमवांतरवाक्यं भिन्नमेव शंखेति कुंडलीत्यनयोर्हेतुमद्भावेन योजना । कुंडलीभूता कुं-डलाकारतां प्राप्ता ये सर्पास्तेषां। केचन कुंडलीति भिन्नं पदं वर्णयंति । भूतानि सर्पाश्च एते य-था कुटिलगतय स्तद्वदियमपीत्यर्थ इति । तन्न कुंडलीपरदेवतेत्यतेन पुनरुक्तेः सर्वदेवमयीति देवव्याप्तिः दीव्यतीति देवी तेजोरूपेत्यर्थः अनेन तेजोव्याप्तिः सर्वमंत्रमयीति मंत्रव्याप्तिः शिवा-शिवरूपेत्यर्थः यद्वाशिवा कल्याणरूपा साक्षात् सर्वतत्वमयीति तत्वव्याप्तिः सूक्ष्मतराविभुरिति वि-रोध परिहारस्तु सूक्ष्मतरा दुर्ज्ञाना । यद्वा सूक्ष्मा त्रसरेणोरपि सूक्ष्मतरा अणुतरा । अनेनाखा-द्विव्याप्तिर्दर्शिता। तदुक्तम्। बालाग्रस्य सहस्रधा विदलितस्यैकेन भागेन या सूक्ष्मत्वात् सदृशी त्रिलोकजननीति। विभुः इयत्तया ज्ञातुमशक्या त्रिधामेति सूर्यसोमाग्निरूपम्। यद्वा। त्रिधामे-ति। स्थानत्रयं पातालभूस्वर्गरूपं अनेन स्थानव्याप्तिर्दर्शिता द्विचत्वारिंशद्वर्णात्मेतिभूतलिपिसं-

त्मयी। पंचाशद्वर्णरूपिणीति मातृकामयी। एवं सामान्यत उत्पत्तिमुक्त्वा एकद्व्यादिविशेषाकारेण शब्दसृष्टिं वदन् प्रसंगादंतरंतज्जगच्छब्दसूचितामर्थसृष्टिमप्यभिधातुमुपक्रमते। एकधेति। सर्वं विश्वं शब्दार्थरूपं तदन्तर्वर्त्तिनी तदुत्यादिका शक्तिरेकधा गुणिता वेदादिबीजमुत्पादयतीति संबंधः। एवमग्रेपि बोद्धव्यम्। वेदादिबीजं प्रणवमंत्ये वक्ष्यति श्रीबीजमष्टमे शक्तिबीजंनवमे। मनोभवं सप्तदशे प्रासादमष्टादशे। तुंबुरुमेकोनविंशे पिंडमुपांत्ये। चिंतारत्नमेकोनविंशे गणेश्वरं त्रयोदशे मार्तंडभैरवं चतुर्दशे दौर्गमेकादशे। नारसिंहं षोडशे वाराहं पंचदशे। वासुदेवं गृह्णीमिदं गोपालबीजत्वेनोद्धृतम्। तद्वासुदेवशब्देनोक्तम्। तत्सप्तदशे। नारदपंचरात्रोक्तं वियन्मात्रं वासुदेवबीजं वा॥ हयग्रीवं पंचदशे श्रीपुरुषोत्तममिति। श्रीयुक्तपुरुषोत्तम इत्युक्तत्वात् शक्तिशक्तिमनोरभेदात् पुरुषोत्तमशक्तिबीजं श्रीपुरुषोत्तमवीशब्दे नोक्तंतत् सप्तदशे। अत्र कामबीजमेव पुरुषोत्तमबीजत्वेनोक्तम् यदाहुः। धरया लिंगितो ब्रह्मा मायाविंदुविभूषितः पुरुषोत्तमसंज्ञोच देवो मन्मथविग्रह। इति अन्यान्यपीति। चद्रबीजविंबबीजादीनि ॥ ६० ॥ हंसवर्णौ चतुर्दशे परात्मनी वर्णौ इति सम्बध्यते। परमात्मवाचकावित्यर्थः। तौ सोहंरूपावंत्ये। प्रकृतिपूरुषाविति। यद्यपि पुरुषोनादिस्तथापि मायाशबलितत्वेनात्र प्रादुर्भावपचारात्। अन्यत् युग्ममस्याः सकाशादजायतेति। सम्बन्धस्तु ज्योतिर्मन्त्रादि। त्रैपुरंमन्त्रद्वयं द्वादशे। शक्तिविनायकं त्रयोदशे। यद्यप्यग्रे नवाक्षरयोगात् द्वादशाक्षरस्तथापि बीजत्रयात्मकत्वं त्रयाणां बीजरूपत्वेन प्राधान्यात्। क्रीं श्रीं क्रीं इति तन्त्रान्तरोक्तो वा पाशाद्यं नवमे त्र्यक्षरमिति। त्रिकंटकीद्वयं दशमे। विशेषणविशेष्यभावे वा। त्रैपुटं दशमे। चण्डनायकं चण्डेश्वरं विंशे सौरं चतुर्दशे मृत्युञ्जयमष्टादशे। शक्तिसम्भवमन्त्रद्वयं नवमे। शाक्तं शाम्भवसिति पाठे। शाम्भवं तन्त्रान्तरोक्तं प्रणवमायाबीजप्रासादात्मकं। विनतासुतं। क्षिपओंइति तंत्रान्तरोक्तम्। वागीशीत्र्यक्षरंसप्तमे वागीशमितिपाठे। त्र्यक्षरमिति नवमस्थं शाक्तमेकम् विषापहं नीलकण्ठमेकोनविंशे ॥ ६४ ॥ यंत्रं नवमे गुणत्रयं धामत्रयं चतुर्थे। यद्यप्यथर्ववेदोस्ति तथापि हौत्राध्वर्यवौद्गात्ररूपपदार्थत्रयेण यज्ञनिष्पादनात् वेदत्रयमित्युक्तम्। श्रुतिरपि। सैषा त्रयीविद्या यज्ञ इति। वर्णत्रयं प्रणवस्य। अकारोकारमकाराः ॥ ६५ ॥ त्रिपुष्करं तीर्थत्रयम्। तस्य ज्येष्ठमध्यमकनीयस्त्वेन त्रित्वम्। स्वरानुदात्तस्वरितात्। देव्यो गायत्रीसरस्वतीसावित्र्यः ब्रह्मादीनां ब्रह्मविष्णुमहेशानां त्रयं नवमे देवीति भिन्ने पदे। कुण्डलोविशेषणम्। वन्हेस्त्रयं। दक्षिणाग्निर्गार्हपत्याहवनीयम् कालत्रयं। अतीतवर्तमानभविष्यद्रूपं। प्रातर्मध्याह्नसायंकालरूपं वा शक्तित्रयं। रौद्रीज्येष्ठावामात्मकं। तदाद्ये। प्रभावीत्साहमन्त्ररूपं वा वृत्तित्रयं यजनाध्यापनप्रतिग्रहरूपम्। त्रीणि कर्माणि जीविकेति स्मरणात्। कृषिपाशुपत्येवाणिज्यं वा वृत्तित्रयम्। महदिति पाठे नाडीत्रयस्य विशेषणत्वेन महदिति योज्यम्॥६६॥ नाडीति। नाडीत्रयम्। इडासुषुम्नापिङ्गलारूपमाद्ये। त्रिवर्गं धर्मार्थकामाः त्रिवर्गो धर्मकामार्थैः इत्युक्तेः अन्यदिति दोषत्रयादि। पद्मिनीवंर्धरिति। तन्त्रान्तरोक्तः प्रणवमायाहंसवर्णात्मकः महादेव्या महालक्ष्म्याः अष्टमे देवी तत्वचतुष्टयं। आत्मविद्याशिवसर्वतत्वम्॥ ६८॥ चतुरःसागरानिति। प्रागादिदिगपेक्षया चतुष्ट्वं वस्तुतस्त्वेकत्वात्। अन्तःकरणानि सूक्ष्मादीनिति चाद्ये सूक्ष्मा परा आदिशब्देन पश्यन्तीमध्यमावैखर्यः। तदुक्तम्। वैखरी मध्यमाचैव पश्यन्ती चापि सूक्ष्मया व्युत्क्रमेण भवन्त्येताः कुण्डलिन्यादितः क्रमात्। इति। भावानवस्थाविशेषान्। जाग्रत्स्व-

प्रसुषुप्तितुरीयान्। विशेषणविशेष्यभावो वा विष्णुमूर्तिरष्टमे। गणेशानामिति। त्रयोदशे। आत्मादीति चतुर्थे पीठमिति। उड्याणजालंधरपूर्णगिरि कामरूपाणि। धर्मादीनामिति चतुर्थे। अधर्मादीनामप्युपलक्षकं धर्मार्थादीनां वा। तदाद्ये गजानित्यष्टमे। अन्यदिति। सिद्धादिमण्डलदीक्षा हेरंबमंत्रदेवीदूतीबीजादि। पञ्चधेति। क्रमात् पंचकूटादिकमेषा सृजतीति क्रमस्तु वक्ष्यमाणः शक्तिध्वन्यादिकः एवमग्रेऽपि। षट्क्रमादिति। पदानि शब्दसृष्टौ संयोज्या ऽयमेवार्थस्तेषां व्याख्येयः। पञ्चकूटमिति। हसकलरएते पञ्चवर्णाः एकीकृताः कूटशब्देनोच्यन्ते तस्याः पंचाक्षरद्वयमिति। एकः पंच कामैः रपरे बाणबीजरेतानि द्वादशे। तदुक्तम्। दक्षिणामूर्तिसंहितायां। त्रिपुरशोमन्त्रमध्ये बाणाः प्रोक्ता मयेश्वरि। तैरेव पञ्चभिर्बाणैर्विद्या पञ्चाक्षरी भवेत्। पूर्वोक्त पञ्चकामैस्तु पञ्चकामेश्वरी भवेत् इति। पञ्चरत्नमिति। ग्लूंस्लूंम्लूंप्लूंन्लूमिति। मन्त्रपञ्चकं तन्त्रान्तरोक्तम्। सिद्धाद्या विजया श्यामा वाराही सुन्दरीत्यपीति। महेशस्येति। अष्टादशे गरुत्मत इति चतुर्विंशे। संमोहनानिति। बहुवचनमाद्यर्थम्। संमोहनादीन् कामान् द्वादशे सुरद्रुमान् मंदारपारिजातसन्तानकल्पद्रुमहरिचन्दनान्। वायनाद्ये वर्णान् शुक्लादीन् तृतीये। महेशितुरित्यग्रिमेण सम्बध्यते। मूर्तीरष्टादशे कलानिवृत्याद्या आद्ये। ब्रह्मरुद्रचईशानाद्या अष्टादशे। अन्यदिति त्रयं। तच्च भूतप्रणवभेदात् इत्यमूर्तिपञ्चगव्यादिधत्तेविधत्ते करोतीत्यर्थः षडक्षररामामन्त्रं पञ्चदशे॥ ७५॥ षट्कूटमिति त्रिपुरार्णवोक्तम्। षट्कूटं मध्यवीजम्। तदुक्तं कांतांतवान्ताकुललान्तवामनेत्रान्वितं दण्डिकुलं सनादम्। षट्कूटमेतत् त्रिपुरार्णवोक्तमत्यन्तगुह्यं स्मर एव साक्षादिति। गाणपत्यं तन्त्रान्तरोक्तं चतुर्थ्यन्तं वक्रतुण्डंवर्मान्तम्। षडक्षरं शैवमष्टादशे षडक्षरं कृष्णमंत्रं सप्तदशे विशेषणाविशेष्यभावो वा। हिमरुचेः षडक्षरं चतुर्दशे नारसिंहं षोडशे षडक्षरं पाशुपतास्त्रं विंशे विशेषणविशेष्यभावो वा॥७६॥ ऋतूनिति। त्रयोविंशे। आमोदादीनितित्रयोदशे। कोशानूर्मीनाद्ये। रसान् मधुरादीन्। शक्तीरामोदादीनांत्रयोदशे शाकिन्याद्याइतिविंशे शक्तीःशाकिन्याद्याइतिविशेषणविशेष्यभावोवा। षडध्वनःपञ्चमे। यत्रनवमे। आधारान्पञ्चमे। जगतियत्सर्वंषड्विधम्। षड्सीतामंत्रषट्कर्मासनादि। सप्तार्णमिति। सप्तवर्णपद्मावतीमंत्रंदशमे। त्रिपुरामन्त्रमिति। मायावीजाद्योनुलोमविलोमभैरवीमन्त्रःसप्तवर्णम् शंखमन्त्रंसप्तदशे। विनायकंसुब्रह्मण्यंत्रयोदशे। यद्वासप्तार्णंत्रिपुरामन्त्रंविनायकंसप्तवर्णमिति। विशेषणविशेष्यभावः॥ ७७॥ व्याहृतीनामिति। एकविंशे सप्तवर्णमिति। अंकुशमन्त्रंसप्तदशे। सुदर्शनंषोडशे। विशेषणविशेष्यभावोवा। लोकान्भूरादिकान् गिरीन्विन्ध्यपारियात्रसह्यऋक्षमलयमहेन्द्रशुक्तिमतः स्वरान्षड्जऋषभगांधारमध्यमपञ्चमधैवतनिषादान्। धातून्त्वगादीनाद्ये मुनीन् व वशिष्टकश्यपात्रिजमदग्निगौतमविश्वामित्रभरद्वाजान् वैवस्वतमन्वन्तरेएतएवऋषयःसप्त। द्वीपान्जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करान्। ग्रहानितिकेषांचिन्मतेराहुकेत्वोर्ग्रहत्वाभावात्सप्तेत्युक्ताः तान्षष्टे। तथाच। वाराहमिहिराचार्यैः। अमृतास्वादविशेषात् छिन्नमपिशिरःकिलासुरस्यदम्। प्राणैरपरित्यक्तंग्रहभावंनैवमाप्नोति। इत्यादिना एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्यैः राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः।योसावसुरोराहुस्तस्यवरो ब्रह्मणापुरादत्तः आप्यायनमुपरागेदत्तहुतांशेनतेभवितेति। इत्यादिनाबहुनाग्रन्थसन्दर्भेण राहुकेत्वोर्ग्रहतानिरस्ता। अपिशब्दादजीजनदिति। क्रियानुषज्यते। समिधइत्युत्तरपदमुत्तरश्लो-

अथ मात्राहृतैरन्नपानाद्यैः पोषितः क्रमात् । दिनात् पक्षात् ततो मासात् वर्द्धते तत्वदेहवान् ॥ ३२ ॥ दोषैर्दूष्यैः सुखं प्राप्तो व्यक्तिं याति निजेंद्रियैः ॥ वातपित्तकफा दोषाः दूष्या स्युः सप्तधातवः ॥ ३३ ॥ त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि तान्विदुः । ज्ञानेंद्रियाणि श्रोत्रं त्वक् दृग्जिह्वानासिका विदुः ॥ ३४ ॥ ज्ञानेन्द्रियार्थाश्शब्दाद्याः स्मृताः कर्मेंद्रियाण्यपि । वाक्पाणिपादपाय्वन्धुसंज्ञान्याहुर्मनीषिणः ॥३५॥ वचनादानगतयोविसर्गानंदसंयुताः । कर्मेन्द्रियार्थाः संप्रोक्ता अंतःकरणमात्मनः ॥ ३६ ॥ मनोबुद्धिरहंकारश्चित्तम् च परिकीर्त्तितम् दशेन्द्रियाणि भूतानि मनसा सह षोडश ॥३७॥ विकाराः स्युः प्रकृतयः पंचभूतान्यहंकृतिः । अव्यक्तं महदित्यष्टौ तन्मात्राश्च महानपि ॥३८॥ साहंकारा विकृतयः सप्त तत्वविदो विदुः । अग्नीषोमात्मको देहो बिन्दुर्यदुभयात्मकः ॥३९॥ दक्षिणांशः स्मृतः सूर्यो वामभागो निशाकरः । नाड्यो दश विदुस्तासु मुख्यास्तिस्रः प्रकीर्त्तिताः ॥४०॥ इडा वामे तनोर्मध्ये सुषुम्णापिङ्गलापरे । मध्यातास्वपि नाडी स्यादग्नीषोमस्वरूपिणी ॥ ४१ ॥ गान्धारी हस्तिजिह्वा च सुपूषालंबुषामता। यशस्विनी शंखिनी च कुहूः स्युः सप्तनाडयः ॥४२॥ नाड्योनन्ताः समुत्पन्नाः सुषुम्णा पञ्चपर्वसु ॥ मूलाधारो द्रुतप्राणस्ताभिर्व्याप्नोति तत्तनुम् ॥ ॥ ४३ ॥ वायवोत्र दश प्रोक्ता वह्नयश्च दश स्मृताः । प्राणाद्या मरुतः पञ्च नागः कूर्मो धनंजयः ॥४४॥ कृकलः स्याद्देवदत्त इति नामभिरीरिताः । अग्नयो दोषदूष्येषु संलीना दश देहिनः ॥ ४५ ॥ बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ । शोकमोहौ शरीरस्य जरामृत्यू षडूर्मयः ॥ ४६ ॥ स्नाय्वस्थिमज्जा शुक्रात् त्वङ्मांसास्राणि शोणितात् । षाट्कौशिकमिदं प्रोक्तं सर्वदेहेषु देहिनाम् ॥४७॥ इत्थंभूतस्तदा गर्भे पूर्वजन्म शुभाशुभम् स्मरंस्तिष्ठति दुःखात्मा छन्नदेहो जरायुणा ॥४८॥ कालक्रमेण स शिशुर्मातरंक्लेशयन्नपि । सपिण्डितशरीरोथ जायतेयमवाङ्मुखः ॥४९॥ क्षणात्तिष्ठति निश्चेष्टो भीत्यारोदितुमिच्छति । ततश्चैतन्यरूपा सा सर्वगा विश्वरूपिणी शिवसंन्निधिमासाद्य नित्यानंदगुणोदया ॥ ५० ॥ दिक्कालाद्यनवच्छिन्ना सर्वदेहानुगा शुभा ॥ ५१ ॥ परापरविभागेन परशक्तिरियं स्मृता । योगिनां हृदयांभोजे नृत्यन्ती नित्यमंजसा ॥५२॥ आधारे सर्वभूतानां स्फुरन्ती विद्युदाकृतिः । शंखावर्तक्रमादेवी सर्वमावृत्य तिष्ठति ॥५३॥ कुण्डली भूतसर्पाणामंगश्रियमुपेयुषी । सर्वदेवमयी देवी सर्वमंत्रमयी शिवा ॥ ५४ ॥ सर्वतत्वमयी साक्षात् सूक्ष्मात्सूक्ष्मतरा विभुः । त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी ॥ ५५ ॥ द्विचत्वारिंशवर्णात्मा पञ्चाशद्वर्णरूपिणी । गुणिता सर्वगात्रेषु कुण्डली परदेवता ॥ ५६ ॥ विश्वात्मना प्रबुद्धा सा सूते मंत्रमयं जगत् । एकधा गुणिता शक्तिः सर्वविश्वप्रवर्त्तिनी ॥५७॥ वेदादिबीजं श्रीबीजं शक्तिबीजं मनोभवम् । प्रासादं तुम्बुरं पिण्डं चिंतारत्नं गणेश्वरम् ॥५८॥ मार्त्तण्डभैरवं दौर्गं नारसिंहवराहजम् । वासुदेवं हय-

यद्याग्वेति । हविर्भुजः समिधः सप्तश्रुत्युक्ताः । तथाचश्रुतिः । सप्ततेअग्नेसमिधः सप्तजिह्वाः सप्तऋषयः सप्तधामप्रियाणीति । सप्तग्रहाणां वा अर्कः पलाशः खदिरोप्यपामार्गोथपिप्पलम् । औदुंबरः शमीश्च ।

ग्रीवं बीजं श्रीपुरुषोत्तमम् ॥५९॥ अन्यान्यपि च बीजानि तदोत्पादयति ध्रुवम् यदा भवति सा संवित् द्विगुणीकृतविग्रहा ॥ ६० ॥ हंसवर्णौ परात्मानौ शब्दार्थौ वासरक्षये । सृजत्येषा परादेवी तदा प्रकृतिपूरुषौ ॥ ६१ ॥ यद्यदन्यज्जगत्यस्यां युग्मं तत्तदजायत ॥ त्रिगुणीकृतसर्वाङ्गीचिद्रूपा शिवगेहिनी ॥६२॥ प्रसूते त्रैपुरं मन्त्रं मन्त्रंशक्तिविनायकम् ॥ पाशाद्यं त्र्यक्षरं मंत्रं त्रैपुरं चंडनायकम् ॥६३॥ सौरं मृत्युंजयं शक्तिं शाम्भवं विनतासुतम्। वागीशं त्र्यक्षरं मंत्रं नीलकंठं विषापहम् ॥६४॥ यन्त्रं त्रिगुणितं देव्या लोकत्रयगुणत्रयम्॥ धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभम् ॥६५॥ त्रिपुष्करं स्वरान्देवी ब्रह्मादीनां त्रयंत्रयम् वन्हेः कालत्रयं शक्तित्रयं वृत्तित्रयं महत् ॥ ६६ ॥ नाडीत्रयं त्रिवर्गं सा यद्यदन्यत् त्रिधामतम् ॥ चतुःप्रकारगुणिता शम्भवी शर्मदायिनी ॥ ६७ ॥ तदानीं पद्मिनीबंधोः करोति चतुरक्षरम् ॥ चतुरर्णं महादेव्या देवीतत्वचतुष्टयम् ॥६८॥ चतुरः सागरानंतः करणानां चतुष्टयम् ॥ सूक्ष्मादींश्चतुरो भावान् विष्णोर्मूर्तिचतुष्टयं ॥ ६९ ॥ चतुष्टयं गणेशानामात्मादीनां चतुष्टयं ॥ ओजापूकादिकं पीठं धर्मादीनां चतुष्टयं ॥ ७० ॥ दमकादीन् गजान् देवी यद्यदन्यच्चतुष्टयं ॥ पंचधा गुणिता पत्नी शभोः सर्वार्थदायिनी ॥ ७१ ॥ त्रिपुरा पंचकूटं सा तस्याः पंचाक्षरद्वयं ॥ पंचरत्नं महादेव्या सर्वकामफलप्रदम्। पंचाक्षरं महेशस्य पंचवर्णं गरुत्मतः ॥ ७२ ॥ संमोहनान्पंचकामान् बाणान्पंच सुरद्रुमान् ॥ ७३ ॥ पंचप्राणादिकान् वायून् पंच वर्णान् महेशितुः ॥ मूर्त्तीः पंच कलाः पंच पंच ब्रह्म ऋचः क्रमात् ॥७४॥ सृजत्येषा परा शक्ति र्वेदवेदार्थरूपिणी ॥ षोढा सा गुणिता देवी धत्ते मंत्रं षडक्षरम् ॥७५॥ षट्कूटं त्रिपुरामन्त्रं गाणपत्यं षडक्षरम् षडक्षरमुंहिमरुचेर्नारसिंहं षडक्षरम् ॥ ७६ ॥ ऋतून् वसन्तमुख्यान् षडामोदीन् गणाधिपान्॥ कोशानूर्मीन् रसान् शक्तीः शाकिन्याद्याःषडध्वनः॥ ७७॥यन्त्रंषट्गुणितं शक्तेःषडाधारानजीजनत्॥ षड्विधंयज्जगत्यस्मिन्सर्वंतत्परमेश्वरी॥७८॥ सप्तधा गुणिता नित्याशंकरार्द्धशरीरिणी ॥ सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम्॥७९॥ सप्तकंव्याहृतीनांसा सप्तवर्णसुदर्शनम्॥ लोकान्गिरीन्स्वरान्धातून्मुनीन्द्वीपान्ग्रहानपि ॥ ८०॥समिधःसप्तसंख्यातासप्तजिह्वा हविर्भुजः॥ अन्यत्सप्तविधंयद्यत्तदस्याःसमजायत॥८१॥ अष्टधागुणिताशक्तिःशैवमष्टाक्षरद्वयम् ॥ विष्णोःश्रीकरनामानं मन्त्रमष्टाक्षरंपरम्॥ ८२ ॥ अष्टाक्षरं हरेः शक्तेरष्टाक्षरयुगं परम् ॥ भानोरष्टाक्षरं दौर्गमष्टार्णं परमात्मनः ॥८३॥ अष्टार्णं नीलकंठस्य वासुदेवात्मकं मनुम् ॥ यन्त्रं कामार्गलं दिव्यं देवीयन्त्रं घटार्गलम्॥ ८४ ॥

तदा हविर्भुजइत्यत्रमसम्बध्यते सप्तजिह्वास्त्रिविधाअपिपञ्चमे । अन्यदिति । प्रकृतिविकृतिस्त्रिपुरातत्त्व गरुडमन्त्रयन्त्रपटलमन्त्रद्वयवैवस्वतमन्वादि । ग्रैवं द्वयमप्येकोनविंशे: विष्णोः श्रीकरनामानं परमष्टाक्षरं कश्यास्य द्वावपि सप्तदशे हरेरिति पञ्चदशे। शक्तेरिति नवमे युगलमपि भानोरिति चतुर्दशे दौर्गं द्वयमप्येकादशे परमात्मन इति षष्ठे नीलकण्ठस्येति।नीलकण्ठशब्देन क्षेत्रपालमन्त्रो गृहीतः स विंशेत-न्त्रात्सरोक्तो वा ओं नीलकण्ठाय स्वाहेति वासुदेवाय स्वाहेति वासुदेवात्मकं मनुं मन्त्रम्। आगमशा

गन्धाष्टकं शुभं देवी देवानां हृदयंगमम् ॥ अम्ब्याद्याभैरवान् शर्वमूर्तीराशावसूनपि ॥ ८५ ॥ अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम् ॥ अष्टौ सा प्रकृतिर्विघ्नवक्रतुंडादिकान् क्रमात् ॥ ८६ ॥ अणिमादिगुणान्नागान् वह्नेर्मूर्तीर्यमादिकान् ॥ अष्टात्मकं जगत्यस्मिन् सर्वं वितनुते यदा ॥ ८७ ॥ गुणिता नवधा नित्या सूते मन्त्रं तदात्मकम् ॥ नवकं शक्तितत्त्वानां तत्व-रूपा महेश्वरी ॥ ८८ ॥ नवकं पीठशक्तीनां शृङ्गारादीन् रसानव ॥ माणिक्यादीनि रत्नानि नववर्गयुतानि सा ॥ ८९ ॥ नवकं प्राणदूतीनां मण्डलं नवकं शुभम् ॥ यच्चान्नवात्मकं लोके सर्वमस्या उदञ्चति ॥ ९० ॥ दशधा विकृता शम्भोर्भामिनी भवदुःखहा ॥ दशाक्षरं गण-पतेस्त्वरितायाा दशाक्षरम् ॥ ९१ ॥ दशाक्षरं सरस्वत्या यक्षिण्याः सा दशाक्षरम् ॥ वा-

स्त्रे मन्त्रस्य मनुशब्दः संज्ञा ओं नमो वासुदेवायेति तन्त्रान्तरोक्तम्। कामार्गलं सप्तदशे। तस्य कामा-र्गलत्वेन प्रसिद्ध्यभावात्तन्त्रान्तरोक्तं कामार्गलम् । व्योम ब्रह्मेन्द्रलोकेशवह्निवामाक्षिविन्दुमत् । कर्णि-कायां लिखेत् साध्यं कामिनीं च दलाष्टके । मूलं मासकलापत्रेष्वालिखेत् स्वरभेदितम् । दन्तपत्रेषु तन्निम्नवर्णैः सान्तैश्च कादिभिः। वेष्टयेन्मन्त्रिरेणैतत् बहिःशक्त्याङ्कुशेन च । यन्त्रं घटार्गलेनैतत्तुल्यं कामार्गलं विदुरिति । दिव्यं यमार्गलमित्यर्थः । दिव्यंयमार्गलयन्त्रमित्युक्तः, इदं चतुर्विंशे । देवी भुव-नेशी हृल्लेखा शक्तिदेव्याख्या इत्युक्तः तस्या यन्त्रं घटार्गलं नवमे । गन्धाष्टकमपि त्रिविधं तुर्ये देवो विष्णुः देवः शिवश्च देवौ देवी च देवी च देवाः तेषां क्वचिद्दिव्यमिति पाठः तदा देवानामिति सामान्येन ब्राह्म्याद्याः षष्ठे अष्टौ भैरवान्नवमे । सर्पान् त्रयोविंशे अष्टमूर्त्तीर्विंशे, आशाः पूर्वादीः । वसूनिति । धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च अष्टैते वसवः स्मृता इति । अष्टाष्टकसमन्वितमष्टपीठं चतुःषष्टिविधं यथा । मायामङ्गलमा-गवामनमहालक्ष्मीचरित्राभृगुः छायाछत्रहिरण्यहस्तिनमहेन्द्रोड्डीशचम्पापुरम्। षष्ठं क्षीरकमष्टमे श्वरपुरैलाचन्द्रपूःश्रीगिरिः कोलाकुब्जकपूर्णपर्वतकुरुक्षेत्रैकलिङ्गार्बुदाः १२ काश्मीरैकाम्रकान्तामलय-गिरिवरैकारकन्धूतदेवीकोट्टाम्रातेशजालन्धरसुरभिमनीषाद्रिकाशीप्रयागाः १४ त्रिस्रोतःकामको-ट्टोज्जयिनिसमथुरं कोशलाकान्यकुब्जोड्याणौङ्काराट्टहासाविरजइहततःकुंडिमं राजगेहम्॥ १२॥ नेपाल पुण्ड्रवर्द्धनमालवपरसीरकामरूपकेदाराः।विन्ध्यमहामठगोश्रुतिकाम्पिल्यश्रीपीठमरुदीशाइति प्रक्र-तीराद्ये । विघ्नान् वक्रतुण्डांश्च त्रयोदशे । अणिमादीति। अणिमा महिमा चैव गरिमा लघिमा तथा। ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव चेति । नागान् गजानष्टमे । वह्निरिति पञ्चमे । यमादिका-नन्त्ये । यन्यदिति । श्रीवाणरतिप्रियधूमावतीमन्त्रादि ॥ ८७ ॥ नवधेति । जगति यावान् नवात्मको नवाक्षरो मन्त्रस्तं सूते सशाङ्र्ग नवार्णं गोपालमन्त्रादि। सत्यन्तं पूर्वक्रियया उत्तरपद्यमुत्तरक्रियया सम्बध्यते । शक्तितत्त्वानामिति । प्रकृतिर्नादो बिन्दुर्बिन्दुर्नादे बीजरौद्री ज्येष्ठा वामेति। नव शक्तित-त्त्वानि आद्ये वक्ष्यमाणानि दश सदाशिवव्यतिरिक्तानि नवेत्यन्ये । पीठशक्तीनामिति । तत्तन्मन्त्रे-ष्वपि तत्र तत्र शृङ्गारादीन् शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः । बीभत्सरौद्रशान्ताश्च नव काव्ये रसाः स्मृता इति । रत्नानि नव वर्गाश्च षष्ठे । प्राणदूतीनामिति । त्रयोविंशे मण्डलं नवनाभं त्र-

सुदेवात्मकं मन्त्रमश्वारूढा दशाक्षरम् ॥ ९२ ॥ त्रिपुरादशरूपं सा त्रिपुराया दशाक्षरम् ॥ नाम्ना पद्मावतीमन्त्रं राममन्त्रं दशाक्षरम् ॥ ९३ ॥ दशकं शक्तितत्वानां तत्त्वरूपा महेश्वरी ॥ नाडीनां दशकं विष्णोरवतारान् दश क्रमात् ॥ ९४ ॥ दशकं लोकपालानां यद्यदन्यत् सृजत्यसौ ॥ एकादश क्रमात्संविद्गुणिता सा जगन्मयी ॥ ९५ ॥ रुद्रैकादशनीमार्षे शक्ते रेकादशाक्षरम् ॥ एकादशाक्षरं वाण्या रुद्रानेकादश क्रमात् ॥ ९६ ॥ समुद्रगिरति सर्वात्मा

तीये। यद्यदिति। नवकुण्डं नवग्रहकूर्मचक्रनवकोष्टादि । गणपतेरिति। चिप्रप्रसादस्य चयोदशे। त्वरिताया इति दशमे। मायाहीनम्। तदुक्तम्। वर्म खे च तदन्त्यः शिवयुक् चरमोङ्गनाद्युसाविलम्बम्। अन्त्यः सयोनिरक्षाङ्कितः सतारो मनुर्द्दशार्णयुत इति। वर्मेति। वर्म हुँ। खे खरूपं च खरूपं तदन्त्यः छः शिवयुगीकारयुतः छे चरमः चः अङ्गना स्त्री यु इकारः साविलम्बं उकारानुस्वारयुतं तेन हुँ अन्त्यः चः सयोनिरेयुतः चे अस्त्रं फट् तदन्तः सतारः प्रणवः युगादी इति त्वरिता दशाक्षरोद्धारः। नारायणीयेति। भुवनेशो भूतदण्डी कलान्त्यान्त्यं सयोनिकम्। तत्पश्चमं तदन्तं सरुद्रं सामन्तमालयं रामाख्या दीर्घमाद्यं च कोपतत्त्वं हरांत्ययुक्। एतत्फडन्तं तारादि मंचं विद्याद्दशाक्षरमिति। भुवनेति। भुवनेशो हः भूतं उः दण्डो ऽनुस्वारः तेन हुं कलाः स्वरास्तदन्त्यः कः तदन्त्यः खः सयोनिकं एकारयुतं तेन खे तत्पश्चमं चतदंत्यं छः सरुद्रं एकारयुतं तेन छे सामन्तान्तः विसर्गान्त आलयं चकारः रामाख्या श्रीं आद्यं हुं तद्दीर्घं हूं कोपतत्वं चः हकारेण एकारेण अंत्ये युक् क्षें एतत्फडंतं प्रणवादिकं दशवर्णाम्। सरस्वत्या इति सप्तमे। यक्षिण्या इति तंचान्तरोक्तं श्रीं श्रीं यक्षिणि हंहंहं स्वाहा। इति। वासुदेवात्मकमिति। गोपालं सप्तदशे। अश्वारूढेति। बीजचयमुत्का दशमे। तचान्तरे दशाक्षर्या एव उद्धृतत्वात्। तदुक्तम्। आद्यक्षयोदशो दण्डी ततस्त्वेकादशः परम्। अष्टमस्य तृतीयं स्यादाद्यतार्त्तीयं संयुतम्। षष्ठाद्यं सप्तमस्यापि द्वितीयं षष्ठपञ्चमम्। आद्यैकादशसंयुक्तं पश्चात्सप्तमपञ्चमम्। तत्तुर्येण युतं पश्चात् सप्तमस्य द्वितीयकम्। आद्यतार्त्तीयसंयुक्तं द्विठः प्रोक्ता दशाक्षरोति। दशकूटमिति। मध्यबीजस्य षट्कूटत्वमाद्यन्तबीजयोः क्रमेण कूटद्वयम्। कूटद्वयमिति मिलित्वा दशकूटं चिपुराया इति तंचान्तरोक्तम्। ऐंस्हैंस्हींस्हौं चिपुरायै नमः इति पद्मावतीमंचं तन्त्रान्तरोक्तम्। क्लेंक्लें पद्मे पद्मावति स्वाहेति। रमामन्त्रमष्टमे। राममन्त्रमितिपाठे पंचदशे। शक्तितत्वानामिति। पंचमे। नाडीनामित्याद्ये। अवतारानिति सप्तदशे। लोकपालानामिति तुर्ये। अन्यदिति। अग्निमन्त्रसंस्कारजयदुर्गामन्त्रादि ॥ ८५ ॥ रुद्रैकादशनीमिति। षडंगरुद्रैकावृत्तौ रुद्राध्यायस्य तादृशःएकादश तु रुद्रस्य रुद्रैकादशनीत्विति। षडंगरुद्रस्तु यज्जाग्रतः षट् सहस्रशीर्षा द्वाविंशतिस्ततः आसुःशिशानो विभ्राडित्यनुवाकद्वयं शतम्। सहस्रशीर्षेति षोडशभिर्द्वितीयम्। षड्भिस्तृतीयम्। शतमिति। शतरुद्रीयेणास्त्रं। शतरुद्रस्तु। षट्षष्टिर्नीलसूक्तंच पुनःषोडशर्चकजपः एषतेद्देनमस्तेद्देमतं विद्वयमेवच। मोदुष्टमचतुष्कंच एतत्तुशतरुद्रियमिति। आद्यशक्तेः सरस्वत्याः एकादशाक्षरंसप्तमे। यद्वाआद्यशक्तेर्नित्यक्लिन्नायास्तन्त्रान्तरोक्तः क्लीं नित्यक्लिन्ने मदद्रवे स्वाहेति। आद्येतिपाठेः देवीविशेषणम्। वाण्या अयमपिसप्तमे। रुद्रानिति। हरस्तबहुरूपस्त्र्य

गुणिता द्वादश क्रमात् ॥ नित्या मन्त्रं महेशान्याः वासुदेवात्मकं मनुम् ॥ ९७॥ शशीन्भानून् हरेर्मूर्त्तीर्यन्त्रं सा द्वादशात्मकम् ॥ अन्यदेतादृशं सर्वं यत्तदस्यामजायत ॥ ९८ ॥ चतुर्विंशति तत्त्वा सा यदा भवति शोभना ॥ गायत्रीं सवितुः शंभोः गायत्रीं मदनात्मिकाम् ॥ ९९ ॥ गायत्रीं विष्णुगायत्रीं गायत्रीं त्रिपदात्मनः ॥ गायत्रीं दक्षिणामूर्तेः गायत्रीं शंभुयोषितः ॥ १०० ॥ चतुर्विंशतितत्वानि तस्यामासन् परात्मनि ॥ द्वात्रिंशद्भेदगुणिता सर्वमन्त्रमयीविभुः ॥ १०१ ॥ सूते मृत्युंजयं मन्त्रं नारसिंहं महामनुम् ॥ लवणाख्यं मनुं मन्त्रं वरुणस्य महात्मनः ॥ १०२ ॥ हयग्रीवं मनुं दौर्गं वाराहं वन्हिनायकम् ॥ गणेशितुर्महामन्त्रं मन्त्रं सेनाधिपस्य

स्कन्दस्यापराजितः। वृषाकपिश्च शंभुश्च कपर्द्दी रैवतस्तथा। मृगव्याधश्च शर्वश्च कपालीतिशिवा मताः। अत्राप्यन्यदितिज्ञेयम्। तच्च शक्तिविनायकमन्त्रादि। समुन्निरतीति। क्रिया काकाक्षिगोलकन्यायेन पूर्वोत्तरवाक्ययोः सम्बध्यते। अन्यथा द्योनिर्बन्धनात् सर्वोत्तरवाक्येऽन्यदित्यंतं सम्बध्यते। इतउत्तरं भिन्नमेववाक्यम्। नित्यामन्त्रंमहेशान्याश्च प्रस्तारिण्याश्चदशमे। वासुदेवं पंचदशे। राशीनष्टमे। भानून् हरेर्मूर्त्तीश्च पंचदशे। यन्त्रं नवमे। अन्यदिति। खड्गमन्त्रादि। एतादृशमित्यनेनैतदुक्तं भवति। त्रयोदशधा गुणिता वागीश्वर्यश्वारूढामन्त्रा विश्वेदेवादिकं चतुर्दशधा लक्ष्मीवासुदेवगोपालमन्त्रभुवनादिकम्। पंचदशधा नित्या शूलिनीमन्त्रतिथ्यादिकं षोडशधा चक्रमंत्रं स्वरकलादिकं सप्तदशधा लघुपञ्चमीतारादिविद्यामन्त्रादिकम्। अष्टादशधा कृष्णवामनं मंत्रं अग्निसंस्कारादिकम्। ऊनविंशतिधा कृष्णधरामन्त्रादिकम्। विंशतिधा हलधरउमामहेश्वरमन्त्रादिकम्। एकविंशतिधा बटुकनाममन्त्रतन्त्रादिकम्। द्वाविंशतिधा कृष्णान्नाधिपतिसुमुखीमन्त्रादिकम्। त्रयोविंशतिधा लघुश्यामापुरुषोत्तमच्छंदश्चमन्त्रादिकं सूत इति। एवं परार्द्धपर्य्यन्तं सृष्टेः सत्वाद्वक्तीनां वक्तुमशक्यत्वात् प्रधानभूता आह ॥ ९८ ॥ चतुरिति। चतुर्विंशतिस्तत्त्वस्वरूपं तद्रूप आत्मा यस्याः सा चतुर्विंशतिधागुणितेत्यर्थः। सवितुरित्येकविंशे। शम्भोरिति। तन्त्रान्तरोक्ता। तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नः शिवः प्रचोदयात्। इति। मदनात्मिका सप्तदशेति। विष्णुगायत्र्यपि सप्तदशे। पुरुषोत्तमगायत्री च विष्णुगायत्रीशब्देनोक्ता। तन्त्रान्तरोक्ता वा नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्। इति त्रिपदात्मनः त्रिपुरायाः सा द्वादशे। दक्षिणामूर्त्तये विद्महे ध्यानस्थाय धीमहि तन्नो धीरः प्रचोदयात्। इति। शम्भुयोषित इति। सर्वमोहिन्यै विद्महे विश्वजनन्यै धीमहि तन्नः क्लिन्ने प्रचोदयात्। इति। तत्त्वान्याद्ये। एता गायत्र्यस्तत्त्वान्यप्यस्यामासन्नुत्पन्नानि। अत्राप्यन्यदिति ज्ञेयम्। तच्चाग्निसन्ध्याग्निदक्षिणामूर्त्तिचिटिमन्त्रवक्रतुण्डदुर्गात्वरिताग्निनृसिंहगरुडहयग्रीवगायत्र्यादि। मृत्युञ्जयं वैदिकं त्रयोविंशे। नारसिंहं षोडशे महामनुं मन्त्रराजमिति पूर्वविशेषणम्। लवणाद्यं द्वाविंशे लवणस्येति श्रुत्युक्तम्। महात्मनः इति विशेषणं तेनमहावारुणमित्यर्थः। हयग्रीवंपञ्चदशे। दौर्गं श्रुत्युक्तम् अंबिके अम्बालिके इत्यादिकम्। वाराहं पचदशे वह्निनायकमग्न्युपस्थानमंत्रं पञ्चमे गणेशितुः हरिद्रागणेशस्य। ओं हुं गंग्लौंहरिद्रागणपतये वरवरदसर्वजनहृदयं स्तम्भय स्वाहा। आथर्वणिको वक्रतुण्डस्य वा। रायस्पोषप्रदाता च निधिदो

सा ॥ १०३ ॥ मन्त्रंश्रीदक्षिणामूर्त्तेर्मालामन्त्रं मनोभुवः ॥ त्रिष्टुभं वनवासिन्याः अघोराख्यं महामनुम् ॥१०४॥ भद्रकालीमनुं लक्ष्म्याः मालामंत्रं यमात्मकम् ॥ मन्त्रं सा देवकीसूनोर्मन्त्रं श्रीपुरुषोत्तमं ॥ १०५ ॥ श्रीगोपालमनुं भूमेर्मनुं तारामनुंक्रमात् ॥ महामंत्रं महालक्ष्म्याः मन्त्रं भूतेश्वरस्य सा ॥१०६॥ क्षेत्रपालात्मकं मन्त्रं मन्त्रमापन्निवारणम् ॥ सूते मातंगिनीं विद्यां सिद्धविद्यां शुभोदयाम् ॥ १०७ ॥ अनेन क्रमयोगेन गुणिता शिववल्लभा ॥ षट्त्रिंशतं च तत्त्वानां शैवानां रचयत्यसौ ॥ १०८ ॥ अन्यान्मन्त्रांश्च यन्त्राणि शुभदानि प्रसूयते ॥

रब्दो मतः । रक्षोहणो वलगहनो वक्रतुण्डाय हुं॥महाभन्त्रमित्युक्तेः अत्रैव वक्ष्यमाणो महागणपतिमन्त्रो वा संप्रदायेन तस्य द्वात्रिंशदक्षरत्वात् ॥ अन्नाधिपस्य तन्त्रान्तरोक्तः॥ओं ह्रीं अन्नरूपरसचतुष्टयरूपनमोनमः अन्नाधिपतये ममान्नं प्रयच्छ स्वाहेति ॥ दक्षिणामूर्त्तेरेकोनविंशे ॥ मालामंत्रं द्वात्रिंशदक्षरं मनोभुवः तन्त्रान्तरोक्तम् ॥ त्रिष्टुभमिति॥तदन्तर्गतोक्तोपचारात् ॥ द्वात्रिंशदक्षर उच्यते तदन्तर्भावसप्ततिमंत्राणामुद्धृतत्वात् ॥ तन्मध्ये द्वात्रिंशदक्षराणामपि सत्वात् ॥ अघोराख्यं तन्त्रान्तरोक्तम्॥ ग्रन्थकारोक्तस्यैकपंचाशदक्षरत्वात् ॥ यदाह ॥ नकारस्ततोदन्तसंभिन्नकालं भगस्यांततो वाथ तैतस्य चान्ते ॥ ततो घोररूपा यकारस्य चान्ते ह्नदन्दतोथोदहदन्वतश्च ॥ पश्चाभ्याससुक्ता तथा भ्राम यस्यात् ॥ शिरोन्तं च वर्मादिकं फट्पदं चेति ॥ नकारेति ॥ नमो भगवते अघोररूपाय हन२ दह २ पच २ भ्रामय २ हुंफट् स्वाहा॥ चतुस्त्रिंशदर्णो ऽघोरमंत्रः अघोरानुष्टुप्अघोरासुनाद्याः॥६। २।८।१०।२।२। षडगम् । भद्रकालीमनुं चतुर्विंशे ॥ महालक्ष्म्याः दशमे । सर्वतोभद्ररूपं यमात्मकमिति मन्त्रद्वयं चतुर्विंशे ॥ देवकीसूनोरिरिति तं सुकीर्त्यादिकं सप्तदशे । श्रीपुरुषोत्तममन्त्रं तन्त्रान्तरोक्तं ओंनमो भगवते वासुदेवाय पुरुषोत्तम आयुर्मे देहि विष्णवे प्रभविष्णवे नमः । श्रीगोपाल मनुं यन्त्राङ्गद्वयमपि सप्तदशे॥ भूमेर्मनुं॥उद्धृतासि वराहेण कृष्णेन शतबाहुना॥मृत्तिके हर मेपापं यन्मया दुष्कृतं कृतमिति तन्त्रान्तरोक्तम्॥ तारामनुं तंत्रान्तरोक्तम् । ओंह्रींह्रींहूंनमस्तारायै सकलदुस्तरंतारय २ तर २ स्वाहा इति ॥ महालक्ष्म्याः मनुं श्रीसूक्तलक्षणम् । भूतेश्वरस्य मन्त्रं तन्त्रांतरोक्तं ॥ ओंनमो भगवते रुद्राय सर्वभूताधिपतये भूतप्रेतपिशाचिनीं नाशयनाशय इति ॥ क्षेत्रपालात्मकं तन्त्रान्तरोक्तं ॥ एह्येहि विदुषि विमुखि नर्त्तय २ विघ्नमहाभैरवक्षेत्रपाल इमं बलिं गृह्ण २ स्वाहेति ॥ आपन्निवारणं तंत्रांतरोक्तं अत्र, एकविंशत्यक्षरस्य वक्ष्यमाणत्वात् । मातंगिनीं तंत्रांतरोक्तं ॥ ओंह्रींऐंश्रींनमो भगवति उच्छिष्टचांडालि श्रीमातंगेश्वरि सर्वजनवशंकरि स्वाहेति ॥ सिद्धविद्यां तंत्रांतरोक्तं ॥ पूर्वोक्ताया एव सिद्धेत्यादिविशेषणं वा इत्यपि ज्ञेयम् ॥ तत्र वैष्णवतत्वशैवव्यापकमंत्रादि ॥ १०७ ॥ अनेनेति ॥ अनेन क्रमयोगेन गुणिता षट्त्रिंशद्वारगुणिता इत्यर्थः शैवानामिति पञ्चमे॥१०८॥अन्यान्मंत्रानिति तंत्रान्तरोक्तोच्छिष्टगणपतिपुरुषोत्तमव्यापकमंत्रादीन् पूर्वो यथा ॥ ओंनमो भगवते एकदंष्ट्राय हस्तिमुखाय लंबोदराय उच्छिष्टमहात्मने क्रोंह्रुंह्रींहुंघेघेस्वाहेति । तृतीयंसप्तदशे यंत्राणीति यंत्रपटलप्रोक्तकोष्टात्मकंयंत्राष्टमपटलप्रोक्तं महालक्ष्मीमंत्रादीनि ॥ अनेन क्रमयोगेनेति । सामान्योक्तेर्मंत्रान् यंत्राणीति च तथोक्तैरष्टत्रिंशता गुणिता अष्टत्रिंशत्कलामंत्रास्तद्बीजादि ॥ नवदुर्गापुरुषोत्तमनेत्रांगमंत्रादीन् यंत्राणि इ-

द्विचत्वारिंशता मूले गुणिता विश्वनायका ॥ १०९ ॥ सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः ॥ शक्तिं ततो ध्वनिस्तस्मात् नादस्तस्मान्निरोधिका ॥ ११० ॥ ततोर्द्धेन्दुस्ततो बिन्दुस्तस्मादासीत्परा ततः ॥ पश्यन्ती मध्यमा वाचि वैखरी शब्दजन्मभूः ॥१११॥ इच्छाज्ञानक्रियात्मासौतेजोरूपागुणात्मिका ॥ क्रमेणानेनसृजतिकुण्डली वर्णमालिकाम् ॥११२॥ अकारादिसकारान्तां द्विचत्वारिंशदात्मिकम्। पञ्चाशद्वारगुणितापञ्चाशद्वर्णमालिकाम् ॥ ११३॥ सूतेतद्वर्णतो भिन्ना कला रुद्रादिकान् क्रमात् ॥ निरोधिका भवेद्वह्निरर्द्धेन्दुःस्यान्निशाकरः ॥

पञ्चाशमावराहमूर्त्तिंद्वयंवादीनि सूते इति सूचितम्। द्विचत्वारिंशतेति ॥ मूले मूलाधारे द्विचत्वारिंशता गुणिता विश्वनायिका कुण्डलिनी। अनेन क्रमेण अकारादिशकारांतां द्विचत्वारिंशदात्मिकां वर्णमालां सृजतीति संबंधः तमेव क्रममाह ॥ १०९ ॥ शक्तिमिति ॥ सा कुण्डलिनी शक्तिः प्रसूते ॥ ततः शक्तेर्ध्वनिरासीत् ततस्तस्मात् ध्वनेरित्यादि ज्ञेयम् ॥ अपंचक्रमो शब्यक्तता सर्वशेष उक्तोपि एकाद्यचरोत्पन्नावप्यनुसन्धेयः तत्र सत्वप्रविष्टा चिच्छिन्नावाच्या परमाकाशावस्था सैव सत्वप्रविष्टा रजोनुविद्धा सती ध्वनिशब्दवाच्या अक्षरावस्था सैव तमोनुविद्धा नादशब्दवाच्या अव्यक्तावस्था सैव तमःप्राचुर्य्यान्निरोधिका शब्दवाच्या सैव सत्वप्राचुर्य्यादर्द्धेंदुशब्दवाच्या तदुभयसंयोगबिंदुशब्दवाच्या। यदाहुः इच्छाशक्तिबलोत्कृष्टो ज्ञानशक्तिप्रदीपकः पुंरूपिणो च सा शक्तिः क्रियाख्यां सृजति प्रभुरिति ॥ अस्यामेव बिन्दुः स्थानांतरगतः पराद्याख्यो भवति ॥ तस्मादिति परा मूले। पश्यन्ती स्वाधिष्टाने मध्यमा हृदये वैखरी मुखे ॥ तदुक्तं सूक्ष्मा कुण्डलिनो मध्ये ज्योतिर्मात्रात्मरूपिणी ॥ अश्रोत्रविषया तस्मादुद्गच्छत्यूर्ध्वगामिनी॥ स्वयं प्रकाशा पश्यन्ती सुषुम्णामश्रिता भवेत्॥ सैव हृत्पंकजं प्राप्य मध्यमा नादरूपिणी ॥ ततः संजल्पमात्रा स्यात् अविभक्तोर्ध्वगामिनी ॥ सैवोरः कंठतालुस्थाशिरोघ्राणरदस्थिता ॥ जिह्वामूलोष्ठनिस्यूतसर्ववर्णपरिग्रहा॥ शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरीति ॥ कादिमतेपि,स्वात्मेच्छा शक्तिघातेन प्राणवायुस्वरूपतः। मूलाधारे समुत्पन्नःपराख्यो नादउत्तमः। स एवोर्ध्वं तया नीतः स्वाधिष्टाने विजृंभितः। पश्यंत्याख्यामवाप्नोति तथैवोर्ध्वंशनैःशनैः। अनाहते बुद्धितत्वसमेतो मध्यमाभिधः तथा तयोर्ध्वं नुन्नः सन् विशुद्धौ कण्ठदेशतः। वैखर्याख्यस्ततः शीर्षकण्ठताल्वोष्ठदंतगः। जिह्वामूलाग्रपृष्ठस्थस्तथानासागतः क्रमात् ॥ कण्ठताल्वोष्ठदंतोष्ठकंठोष्ठद्वयतस्तथा ॥ समुत्पन्नान्यचराणि क्रमादादिचकावधि ॥ आदिक्षांतरतेत्येषामक्षरत्वमुदीरितमिति ॥ तथा च श्रुतिः। चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।गुहा त्रीणि निहितानेंगयंति तुरीयं वाचो मनुष्या वदन्तीति ॥ अथ वा चिच्छक्तिरेव पराख्या चैतन्यामासविशिष्टतया प्रकाशिकामायानिष्पंदा परा वागित्यर्थः सस्पन्दावस्थाः पंश्यंत्याद्याः तत्र सामान्यप्रस्पंदप्रकाशरूपिणीं विंदुतत्वात्मिकाम्। मूलाधारादिनाभ्यंतरव्यक्तिस्थानां पश्यंतीमाह ॥ पश्यंतीति ॥ ज्ञानात्मकत्वात् पश्यंतीत्यर्थः बाह्यांतः करणात्मिकां हिरण्यगर्भरूपिणीं नादबिन्दुमयीं नाभ्यादिहृदयान्ताभिव्यक्तिस्थानां विशेषसंकल्पादिसतत्वाम्। मध्यमामाह॥ मध्यमेति॥ मध्यमा बुद्धिर्यस्या इति विग्रहः विराट्रूपिणीं बीजात्मिकां हृदयाद्यास्यान्ताभिर्व्यक्तिस्थानां शब्द

॥११४॥ अर्कः स्यादुभयोर्योगे बिन्द्वात्मा तेजसां निधिः॥ जाता वर्णा यतो बिन्दोः शिव शक्तिमयादतः॥ ११५॥ अग्नीषोमात्मकास्ते स्युः शिवशक्तिमयाद्भवेः॥ येन संभवमापन्ना सोमसूर्याग्निरूपिणः॥ ११६॥ ॥ इति शारदायां प्रथमः पटलः॥ १॥ ॥ ततो

सामान्यात्मिकां वैखरीमाह॥वाचीति॥विशेषेण खरत्वात् वैखरीत्यर्थः॥तद्वर्णत इति॥ते च ते वर्णाश्च ततः अभिन्नायाः कलाः॥ताः सूते रुद्रादिकान् सूते॥आदिशब्देन तच्छक्तयः विष्णवः विष्णुशक्तयः पञ्चाशदौषधयश्च पञ्चाशत्कामाः तच्छक्तयश्च पञ्चाशत् गणेशाः तच्छक्तयः पञ्चाशत्क्षेत्रपालाश्च तत्र पंचाशदौषधयो यथा च॥ रक्तकु॥चंदनागरुकर्पूरोशीररोगजलघुसृणाः कंकोलजातीमांसीसुरचोरग्रन्थिरोचनाः पत्राः॥पिप्पलबिल्वगुहारुणत्वणकलवंगाह्वकुंभिवंदिन्यः॥सौदुम्बरिकाश्मरिकास्थिरावृजन्दरपुष्पिकाममयूरशिखा॥ब्रह्माग्निमंथसिंहीकुशाह्वदर्भाश्च कृष्णदरपुष्पी॥रोहिणटुंटुकवृहतीपाटलिचिंचातुलस्यपामार्गाः। शतमखलताद्विरेफाः विष्णुक्रांतामुसल्यथांजलिनो॥ दूर्वा श्रीदेविसहे तथैव लक्ष्मी सदा भद्रे॥ आदीनामिति कथिता वर्णानां क्रमवशादथौषधयः गुलिकाकषायभसितप्रभेदनिखिलसिद्धिदायिन्य इति॥ आसामौषधीनां प्रयोजनान्तरमप्युक्तं॥ कादिमते॥ यो यो मंत्रस्तस्य तस्य वर्णौषधिविनिर्मिताः,तत्तद्वर्णोत्थसंख्याभिर्गुलिकामंत्रसिद्धिदा॥ तयाभिषेकस्तच्चरणं तत्खादस्तद्विलेपनं॥ तत्पूजा च तथा सिद्धिदायकः स्यान्नचान्यथेति पंचाशत्कामास्तच्छक्तयश्च यथा कामकामदकान्ताश्च कान्तिमान् कामगस्तथा॥कामाचारश्च कामी च कामुकः कामवर्द्धनः॥ रामो रामश्च रमणो रतिनाथो रतिप्रियः॥रात्रिनाथो रमाकान्तो रममाणो निशाचरः॥नन्दको नन्दनश्चैव नन्दी नन्दयिता पुनः॥पञ्चबाणो रतिसखः पुष्पधन्वा महाधनुः॥भ्रामणो भ्रमणश्चैव भ्रममाणो भ्रमोघरः॥ भ्रान्तश्च भ्रामको भृङ्गो भ्रान्तचारो भ्रमावहः॥ मोहनो मोहकोमोहो मोहवर्द्धन एव च॥ मदनो मन्मथश्चैव मातंगो भृङ्गनायकः॥ गायनो गीतिजश्चैव नर्त्तकः खेलकस्तथा॥ उन्मत्तो मत्तकश्चैव विलासो लोभवर्द्धनः॥ दाडिमी कुसुमाभाश्च वामाङ्के शक्तिसंयुताः॥ सौम्यारक्ताम्बराः सर्वे पुष्पबाणेक्षुकार्मुके॥ बिभ्राणाः सर्वभूषाढ्याः कामाः पञ्चाशदीरिताः॥ रतिः प्रीतिः कामिनी च मोहिनी कमलप्रिया॥ विलासिनी कल्पलता कामला च शुचिस्मिता॥ विस्मिताक्षी विशालाक्षी लेलिहाना दिगम्बरा॥ वामा कुब्जा धरा नित्या कल्याणी मोहिनी तथा॥ मदना च सुरश्रेष्ठा लापिनी मर्दिनी तथा॥ कलहप्रिया चैकाक्षी सुमुखी नलिनी तथा॥ जपिनी पालिनी चैव शिवा सुधा रसा भ्रमा॥ चारुलोला चञ्चला च दीर्घजिह्वा रतिप्रिया॥ लोलाक्षी भृङ्गिणी चैव पाटला मादिनी तथा॥ माला च हंसिनी विश्वतोमुखी नन्दिनी तथा॥ रमणी च तथा कान्तिः कालकण्ठी वृकोदरी॥ मेघश्यामा मदोन्मत्ता एकपञ्चाशदीरिताः॥ शक्तयः कुंकुमनिभाः सर्वाभरणभूषिताः॥ नीलोत्पलकरा ध्येया त्रैलोक्याकर्षणक्षमा इति॥ पञ्चाशद्गणेशाः तच्छक्तयश्च॥ यथा विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ॥ विघ्नकृद्विघ्नहर्त्ता च गणैकद्विसुदंतकाः॥ गजवक्त्रनिरंजनौ कपर्दी दीर्घजिह्वकः॥ शङ्कुकर्णश्च वृषभध्वजश्च गणनायकः॥ गजेन्द्रः सूर्यकर्णश्च स्यात्त्रिलोचनसंज्ञकः॥ लंम्बोदरमहानन्दौ चतुर्मूर्त्तिः सदाशिवौ॥ आमोददुर्मुखौ चैव सुमुखश्च प्रमोदकः॥ एकरदो द्विजिह्व-

**व्यक्तिं प्रवक्ष्यामि वर्णानां वदने नृणाम्॥ प्रेरिता मरुता नित्यं सुषुम्णा रन्ध्रनिर्गताः ॥१॥
कण्ठादिकरणैर्वर्णाः क्रमादाविर्भवन्ति ते॥ एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभो**

च मूरवीरसषण्मुखाः ॥ वरदो वामदेवश्च वक्रतुण्डो द्विरंडकः ॥ सेनानीरमणोमत्तो विमत्तो मत्तवाहनः ॥ जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः ॥ भक्षप्रियो गणेशश्च मेघनादकसंज्ञकः ॥ व्यापी गणेश्वरः प्रोक्ता पञ्चाशद्गणपा इमे ॥ तरुणारुणसंकाशा गजवक्त्रास्त्रिलोचनाः ॥ पाशांकुशवराभीतिहस्ताः शक्तिसमन्विताः ॥ ह्रीः श्रीश्च पुष्टिः शांतिश्च स्वस्तिश्चैव सरस्वती ॥ स्वाहा मेधा कान्तिकामिन्योमोहिन्यपि वै नटी ॥ पार्वती ज्वालिनी नन्दा सुपाशाः कामरूपिणी ॥ उमा तेजोवती सत्या विघ्नेशानी स्वरूपिणी ॥ कामदा मदजिह्वा च भूतिः स्याद्भौतिकासिता ॥ रमा च महिषी प्रोक्ता भञ्जिनी च विकर्णपा ॥ भ्रुकुटिः स्यात्तथा लज्जा दीर्घघोणा धनुर्द्धरा ॥ यामिनी रात्रिसंज्ञा च कामान्धा च शशिप्रभा ॥ लोलाक्षी चञ्चला दीप्तिः दुर्भगा सुभगा शिवा ॥ भर्गा च भगिनी चैव भोगिनी सुभगा मता ॥ कालरात्रिः कालिका च पञ्चाशत् शक्तयः स्मृताः। सर्वालङ्करणादीप्ताः प्रियाङ्कस्थाः सुशोभनाः ॥ रक्तोत्पलकरा ध्येया रक्तमाल्याम्बरारुणाः ॥ इति ॥ पंचाशत्क्षेत्रपालाः क्षेत्रपालमन्त्रे वक्ष्यंते ॥ वर्णानामग्नीषोमात्मकत्वं सोमसूर्याग्निरूपत्वं च अग्रे उपयोगीति तद्विविच्याह॥ निरोधिकेति ॥ निरोधिकायाः अग्निरूपत्वात् शिवस्वरूपत्वम् ॥ अर्द्धेन्दोः सोमरूपत्वात् शक्तिस्वरूपत्वम् ॥ येन कारणेन शिवशक्तिमयाद्रवेः संभवमापन्ना रवेः शिवशक्तिमयत्वमर्कः स्यादुभयोर्योग इत्युक्तः ॥ तेन सोमसूर्याग्निरूपिणो भवन्ति ॥ कार्यकारणयोरभेदात् ॥ ॥ इति शारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां प्रथमः पटलः ॥ १ ॥ ॥ अथ द्वितीयपटलमारभ्यते ॥ एवमर्थसृष्टिं शब्दसृष्टिं च मध्यमांतामभिधाय उक्तानुवादपूर्वकं वैखरीसृष्टिं वक्तुं प्रतिजानीते तत इति प्रेरितामरुतेति ॥ मरुता प्रेरिताः पश्यन्तीस्थानं प्रापिताः उत्पत्त्युन्मुखीकृता इति यावत् ॥ अत एव सुषुम्णारन्ध्रनिर्गतावर्णाः कण्ठादिकरणैः क्रमादाविर्भवन्तीति संबंधः ॥ सुषुम्णा रन्ध्राख्यनाहतविशुध्योः एकदोच्चारणाभावात् क्रमादित्युक्तम्॥तदुक्तं भगवता भर्तृहरिणा॥ आत्मा बुध्या समेत्यार्थान्मनो युंक्ते विवक्षया ॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरमिति कण्ठादीत्यादिशब्देन ताल्वादि ॥ तदुक्तम्॥ अष्टौ स्थानानि वर्णानामुरः कण्ठशिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु चेति ॥ यत्सर्ववर्णानां सोमसूर्याग्निरूपत्वमुक्तम् ॥ तस्यैवाग्रे प्रयोगार्थं अष्टत्रिंशत्कलादिव्यवहाराय च व्यवस्थया त्रैविध्यमाह ॥ एष्विति ॥ एषु वर्णेषु स्वराः अकारादिविसर्गान्ताः स्पर्शाः ककारादिमकारान्ताः व्यापका यकारादिक्षकारान्ताः शुभोदयाः सर्वे एवं सोमसूर्याग्निदेवताः तत्र स्वराणामुदयमनन्तरमेव वक्ष्यति। अन्येषामुदयस्तु अन्तिमपटले वक्ष्यमाणभूतोदयेनेति ज्ञेयम् भूतकलाभिस्तदुदयइति आचार्योक्तः तदत्रैव भूतवर्णकथनेन सूचयिष्यति ॥ विना स्वरैरिति ॥ वक्ष्यमाणप्रकारेण स्वरादयः कियन्त इत्यपेक्षायामाह ॥ स्वरा इति । विख्याताः विशेषेण ख्याताः स्वतंत्रा इत्यर्थः । यदाहुः तेषु स्वराः स्वतंत्रा स्युरिति ॥ २ ॥ तत्त्वात्मान इति ॥ प्रकृत्यादिचतुर्विंशतितत्त्वमया इति स्वरूपकथनम् । ननु तेषां पंचविंशतिसंख्यकत्वात्कथं चतुर्विंशतितत्वमयत्वमत आह ॥ मकारः पुरुषो यत इति ॥ यतः

**दयाः ॥२॥ आग्नेया व्यापकाः सर्वे सोमसूर्याग्निदेवताः ॥ स्वराः षोडश विख्याता स्पर्शा-**

कारणान्मकारः पुरुषः परमात्मा च विश्वरूप इत्यर्थः भादयः प्रकृतिबुध्यहंकारमनांसि तन्मात्रा श्रोत्रवागाकाशादय इतरवर्णाः इदं च शक्तितत्वादिन्यासेषूपयोगीत्युक्तं द्विद्विवर्णक्रमोक्तद्वादशसूर्यं कलासु अंत्यत्याग इत्यपि सूचयितुं ॥ एवं ते चतुर्विंशतितत्वमयाः अंत्य आत्मा रविः स्मृत इति आचार्योक्तेः अत एव सर्वबीजेषु बिन्दुरूपमकारयोगात् पुरुषैक्यं तेषामिति मंतव्यम्। मकारस्य बिन्दुरूपत्वात् बिन्दुः पुमान्रविः प्रोक्तः इति वक्ष्यमाणत्वाच्च। स्वावयवेषु ककारादिष्वनुगतत्वात् सूर्यं रूपबिन्द्वात्मनामकारेण स्पृश्यमानत्वात् स्पर्शाः अत एव सौराः यद्वा एवं योजना मकारः पुरुषः अन्ये स्पर्शास्तत्वात्मानः यत इत्यग्रिमेण संबध्यते ॥ यतः यकारा दशव्यापका ऐषांदूष्येषु वर्त्तमानत्वात् व्यापकत्वम्॥तत्राग्नीनामपि सत्वादाग्नेया इत्यपि नृसिंहाख्यकालाग्निरूपक्षकारांतत्वेन वा आग्नेया इत्यपि द्रष्टव्यम्। तेकामधनधर्मप्रदा इति क्रमेण त्रयाणां फलम् अत एवाग्रे कामदायिन्यः स्वरजा इत्यादि वक्ष्यति ॥ स्वराणामेव पृथक् व्याप्तिं दर्शयन् तेषामष्टमूर्त्तितच्छक्तिवाचकत्वाय अग्रे व्यवहाराय च प्रकारद्वयमाह ॥ ह्रस्व इति ॥ एकारौकारयोः दीर्घत्वेप्यत्र पारिभाषिकं ह्रस्वत्वम् इमे ह्रस्वदीर्घाः क्रमात् शिवशक्तिमयाः॥ह्रस्वाः अइउऋऌएओ एते शिवमयाः पुंरूपाश्चेत्यर्थः॥ दीर्घाः आईऊॠॡऐऔ एते शक्तिमयाः स्त्रीरूपाश्चेत्यर्थः बिंदुसर्गावजपायां पुरुषप्रकृतिरूपौ पृथक् भूतावेताविति विवक्षन्नाह॥ ते स्युर्बिंदुसर्गावसानिका इति ॥ ते ह्रस्वाः अन्ते बिंदुयुक्ताः दीर्घाः अंन्ते विसर्गयुक्ताः ह्रस्वेषु बिंदुरष्टमो दीर्घेषु विसर्गोऽष्टम इत्यर्थः ॥ अत एवाह। बिन्दुः पुमानिति निशाकर इत्युक्तेरितरस्वराणां तत्कलारूपतिथ्यात्मकत्वात् ॥ शशिरूपं विसर्जनीयं स्वकीयषोडशसंख्यापूर्त्तिकारणतया स्वरंते कथयन्तीति स्वराः अत एव सौम्याः अयमेव पक्षो ग्रंथकृदभिमतो यतो मातृकाषडंगकथनाद्यवसरे अक्लीबह्रस्वदीर्घांतर्गतैः षड्वर्गकैः क्रमादित्यादिव्यवहारदर्शनात्॥ कश्चित्तु स्वरेषु पूर्वोक्त अइउऋऌएकमात्रो ह्रस्वः परे आईऊॠॡएऐओऔबिंदुसर्गावसानकाः संयोगपरश्च दीर्घ इति मन्यते स केवलं नमस्य एव ॥ नपुंसकमिति ॥ नपुंसकत्वं धर्मः स एषामस्तीति आर्शदित्वादच् ॥ स्वराणामुदयमाह पिंगलायामिति ॥ ह्रस्वाः अइउएओ परे दीर्घाः आईऊऐऔबिन्दुसर्गयोः रविर्निशाकर इत्यनेनैवोदयस्योक्तत्वात् ॥ एतत्प्रयोजनमुक्तं गौतमेन ॥ षट्स्वरोदयजेकर्म्म प्रथितं मारणादिकम्। फलदंक्रूरकर्माशु ह्रस्वैर्दीर्घोदयेन्यथेति ॥७॥ सुषुम्णेति। तत्र प्रकार उत्तरभागाद्दक्षिणभागप्रवेशप्रारम्भसमये कं चित्कालं उभयत्र वहति ॥ देहवायुः सदक्षिणायनप्रारम्भसमयस्तदा ऋऌकारात्मकं ह्रस्वद्वन्द्वमुदेति एवं दक्षिणादुत्तरभागप्रवेशप्रारम्भसमये कं चित्कालं उभयत्र वहति देहवायुः स उत्तरायणसंक्रमकालः तदा ॠॡदीर्घद्वन्द्वमुदेति ॥ यत्प्रयोगसारे॥ स्वरं सप्तममारभ्य चत्वारो ये नपुंसकाः। ते सुषुम्णाश्रिते प्राणे प्रोद्यन्त्ययनसंक्रमइति ॥ अन्ये त्वन्यथामन्यन्ते ह्रस्वाः अइउऋऌपरे दीर्घाः आईऊॠॡ इति ॥ तदुक्तं प्रयोगसारे॥ दक्षिणस्थो यदा प्राणस्तदास्याद्दक्षिणायनम् ॥ पञ्चभूतात्मकास्तत्र ह्रस्वाः पञ्चोदयन्ति ते॥ वामाश्रितो यदा प्राणस्तदास्यादुत्तरायणम्॥ पञ्चभूतास्तदा दीर्घास्तत्रोद्यन्ति पृथक् पृथगिति॥ अन्यत्रापि॥ प्राणे दक्षि-

**स्ते पञ्चविंशतिः ॥ ३ ॥ तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः ॥ व्यापका दश ते कामधनधर्मप्रदायिनः ॥ ४ ॥ ह्रस्वः स्वरेषु पूर्वोक्तः परो दीर्घः क्रमादिमे ॥ शिवशक्तिमयास्ते स्युर्विन्दुसर्गावसानिकाः ॥ ५ ॥ बिन्दुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशाकरः ॥**

णनाडीस्थे परा चैव तु रेचिका। इन्धिकाख्या चविद्याख्या निवृत्तिश्च यथा क्रमात्॥ प्रतिष्ठा शान्तिसंज्ञा च दीपिका मोचिका तथा॥ सूक्ष्मा चेति स्वराः प्राणे प्रोद्यन्तीडाश्रये प्रियेइति॥ येषां मते एकारादीनामुदयोनोक्तः स तु तेषां सन्ध्यक्षरत्वात् तदुदयेनैव ज्ञेयः॥ पद्मपादाचार्यास्तु॥ बाह्यघटिकापञ्चकेन आध्यात्मिकमयनम्॥ उक्तविधिविलम्बस्याप्यनुपपत्तौ श्वासोच्छ्वासानां कालावयवसम्पादनं द्रष्टव्यम्॥ तत्राहोरात्रात्मकौ वा पक्षात्मकौ चेच्छावशेन ज्ञातव्याविति॥ व्यञ्जनशब्दव्युत्पत्तिं दर्शयन्तेषामपि शिवशक्तिमयत्वमाह। विनेति। स्वरैर्विना अन्येषां ककारादीनां व्यक्तिरञ्जसा प्राकट्येन न भवति॥ तस्मात् सर्वे वर्णाः शिवशक्तिमयाः व्यक्तिरञ्जसेति व्युत्पत्तिर्दर्शिता॥ यदाहुस्तैर्व्यञ्ज्याद्व्यञ्जनं भवेदिति॥ एतदुक्तं भवति॥ स्वराणां पूर्वं शिवशक्तिमयत्वमुक्तम्॥ हलाञ्चविनास्वरैरुच्चारणस्याशक्यत्वात् स्वरसहितोच्चारणे शिवशक्तिमयत्वमिति॥ एवं स्वरोदयेनैव तत्प्रधानत्वात् व्यञ्जनानामुदयो ज्ञेयः॥ उक्तं च तत्र मन्त्रमुक्तावल्याम्॥ तत्प्रधानाश्च मन्त्रा इति॥ अन्ये त्वन्यथा योजयंति॥ सोमसूर्याग्निरूपिण इति॥ यदुक्तं तद्विभजते॥ एष्विति॥ अत्र सूर्यरूपबिन्दोः सर्वत्र व्यापकत्वात् शुभोदया इति॥ सौरविशेषणमुक्तम्॥ ननु यद्ययं विभागस्तदा पूर्वोक्तो येनेति हेतुः सर्ववर्णसामान्येनोक्तो न घटते इत्याशङ्क्याहसर्वे सोमसूर्याग्निदेवता इति॥ ननु तथापि विरोधस्तदवस्थ इति चेत् न॥ इदं तु तात्त्विकं विभागस्तु प्रयोगाद्यर्थं इति ज्ञेयम्॥ स्वराः स्पर्शाः व्यापका इति॥ तदुक्तम्॥ ते के कियन्तः इत्यपेक्षायामाह॥ स्वरा इत्यादिविशेषेण ख्याताः अनेन स्वरा विंशतिरेकश्चेति शिक्षादौ संख्यान्तरश्रुतिर्या सा निरस्ता॥ व्यापकेषु क्षवदत्रापि संयुक्तस्य ळस्य ग्रहणं स्यादिति शङ्कां वारयति॥ पञ्चविंशतिरिति॥ तत्त्वदेहवानिति॥ पूर्वपटले प्रकृते पुरुषः तं वदन् तत्त्वाख्याह॥ तत्त्वात्मान इति॥ दशेत्यनेन मूर्द्धन्यस्य ळस्य ग्रहणं सूचयति॥ कामेति॥ क्रमेण त्रयाणां फलं सर्वे सोमसूर्या ग्निदेवता इति तदुक्तं तदेव विवृणोति॥ ह्रस्व इति॥ ह्रस्वानां पुरुषत्वादग्निसूर्यरूपत्वं स्वरत्वात्सौम्यरूपत्वं दीर्घाणां स्वरत्वेन सौम्यत्वं ह्रस्वोत्पन्नत्वात् सूर्याग्निरूपत्वं शास्त्रान्तरानुसारेण दशानामेवैते संज्ञे स्यातामित्यत आह॥ ते स्युरिति॥ तेषां प्रकारान्तरेण तद्रूपत्वमाह॥ स्वराणामिति॥ मध्यगमित्यनेन रेफादुत्पत्तिरेषामुक्ता॥ यदाहुराचार्याः॥ ऋकाराद्यास्तु चत्वारो रेफोत्थाल्पपरास्मृता इति॥ एतेन ह्रस्वषट्कंहकारोत्थंदीर्घषट्कमीकारोत्थं तत्र हकारस्य पुंरूपत्वादर्कत्वम्॥ ईकारस्य शक्तिरूपत्वात्सौम्यत्वम्॥ रेफस्याग्निरूपत्वात् अग्निरूपत्वम्॥ अत्र यद्यपि हकारस्य ह्रस्वषट्कहेतुत्वमिति भागेनास्माभिरुच्यते॥ तथापि केवलस्योत्पत्तिहेतुत्वमशक्यमिति तदुभयानुवृत्तिरवश्यमपेक्षणीया॥ एवमितरयोरप्यनुसन्धेयम्॥ तेन प्रत्येकं सोमसूर्याग्निरूपत्वम्॥ तदुक्तमीश्वरप्रत्यभिज्ञायां॥ यदेकतरनिर्माणे कार्यं जातु न जायते॥ तस्मात्सर्वपदार्थेषु सामरस्यं व्यवस्थितमिति॥ सामरस्यं त्रितयसत्त्वम्॥ प्रकारान्तरेण तदेवाह॥ ६॥ पिङ्गलायामिति॥ सुषुम्णायां नपुंसकोदये इडापिङ्गलयोरपि तत्रान्तर्भावात् तद्वर्णा अपि तत्रा-

**स्वराणां मध्यमं यच्च तच्चतुष्कं नपुंसकम् ॥ ६ ॥ पिङ्गलायां स्थिता ह्रस्वा इडायां संगता परे ॥ सुषुम्णा मध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः ॥ ७ ॥ विना स्वरैस्तु नान्येषां जायते व्यक्तिरंजसा ॥ शिवशक्तिमयान्प्राहुस्तस्माद्वर्णान्मनीषिणः ॥ ८ ॥ कारणात्पञ्चभूतानामुद्भूता मातृका यतः ॥ ततो भूतात्मका वर्णाः पञ्चपञ्चविभागतः ॥ ९ ॥ वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ॥ पञ्च ह्रस्वाः पञ्च दीर्घाः बिन्द्वन्ताः सन्धिसंभवाः॥ १०॥**

न्तर्भवन्ति ताभ्यां विना तदुभयाभावात् ॥ अत एवोक्तं प्रागग्नीषोमस्वरूपिणीति ॥ व्यञ्जनानां प्रत्येकं सोमसूर्याग्निरूपत्वं दर्शयति ॥ ७ ॥ विना स्वरैरिति ॥ शिवशक्ति मयाद्रवेः येन सम्भवमापन्ना इत्युपक्रम्य सर्वं सोमसूर्याग्निदेवता इत्यादिनोक्तमुपसंहरति ॥ शिवेति ॥ तस्मादिति ॥ पूर्वोक्तहेतुत्रयानुवादः शिवः सूर्याग्निरूपः शक्तिः सोमरूपा॥ अथवा यएव शिवः सैव शक्तिः शिवशक्त्योरभेदाद्भुवनेशीबीजात्मिका इत्यप्युक्तम् ॥ यदाहुराचार्याः॥ यथा स्वरेभ्योनान्येस्युर्वर्णाः षड्वर्गभेदिताः॥ तथा सविन्नानुस्यूतमिति । एवं त्रिप्रत्करणप्रक्रियां भुवनेशीबीजादुत्पत्तिं च सूचयता तेजस्त्रयतः सृष्टिरुक्ता ॥ ८ ॥ अथ पञ्चीकरणप्रक्रियां प्रणवादुत्पत्तिं च सूचयन् भूतानां पृथक्प्रयोगार्थं पुनर्वर्णविभागमाह ॥ कारणादिति ॥ अथ वा स्वस्ववर्णयुतानीत्युक्तं ते के वर्णाइत्यपेक्षायामाह ॥ कारणादिति ॥ कारणाच्छिवशक्तिसमवायात् बिन्दोर्मातृकेति ॥ अकारादिक्षकारान्तवर्णसमुदायस्य संज्ञा ॥ यत्प्रयोगसारे ॥ प्रसिद्धा वर्णमाला सा मातृकेत्युच्यते परेति ॥ पञ्चपञ्चविभागतः दशविभागतः अथ च पूर्वं क्रमात् पञ्चतोपि पञ्चेति वीप्सापि ॥ तदेवोद्दिष्टं कथयति ॥ वाय्विति ॥ वाय्वाकाशयोराद्यन्तत्वेन निर्दिष्टत्वाद्व्युत्क्रमोक्तिः पञ्चीकरणप्रक्रियायां मुख्यत्वद्योतनाय तत्र लृप्ताक्षराणां तत्तत्रान्तर्भावाय च पञ्चाशदिति॥ विसर्गानन्तर्भावेन तेन न गौणत्वं ॥ पञ्च ह्रस्वाः पञ्च दीर्घाः इति प्रसिद्धाः सन्धिसम्भवानां पृथगुपादानात्नपारिभाषिकह्रस्वदीर्घग्रहः बिन्द्वन्ता इति सन्धिसम्भवविशेषणत्वे च एऐ ओऔ येषां यथासन्धिसम्भवत्वं तथोक्तमाचार्यैः अकारेकारयोर्योगादेकारो वर्ण इष्यते ॥ तस्यैवैकारयोगेन स्यादैकाराक्षरं तदा ॥ उकारयोगे तस्यैव स्यादोकाराह्वयः स्वरः तस्यैवौकारयोगेन स्यादौकाराह्वयः स्वरः सन्ध्यक्षराः स्युश्चत्वारो मन्त्राः सर्वार्थसाधकाइति ननु कथमत्र विसर्गो न गणितः ॥ उच्यते ॥ मूलाधारात्सञ्जातविवक्षोत्पन्नप्रयत्नप्राणपवनप्रेरितः स्थानान्तरमप्राप्य कण्ठादेव निःसरन् प्रकृत्यात्मकः सर्गोत्र भूतेषु न गणितः ॥ अत एवाचार्यैः कण्ठात्तु निःसरत्सर्ग इत्यादिना नश्वरः सर्ग एव स्यादिति अन्तेनोक्ता सर्गादेवक कारादीनां उत्पत्तिरुक्ता ॥ कादिमतेपि ॥ प्राणाग्नीलांबुखात्मानः पंक्तयः पञ्चकीर्तिताः ॥ मायाशक्त्यभिधः सर्गः सर्वभूतात्मकः प्रभुः ॥ तस्मात्तस्यात्रविन्यासा नैकदेशे शिवात्मनीति ॥ कादयः शान्ता इति शेषः ॥ एतेन अ आ ए क च ट त प य ष वायव्याः इईऐखछठथफरक्ष आग्नेयाः एवं भादीनामपि ज्ञेयम् ॥ तदुक्तमाचार्यैः ॥ उऊअगादिललाः को नेसौचतुर्थार्णकावसौवाराम् ॥ दृष्यैरचावन्हेरहन्दयोनिकादियषामरुतः कपोलबिन्दुकपञ्चमवर्णाः शहौ तथाव्योम्न इति ॥ अत्र मन्त्रशोधनप्रकरणे स्वकुलान्यकुललक्षणः शोधनप्रकारो नोक्तः स भूतवर्णकथनेन सूचितः फलं तु ॥ पिङ्गलामतोक्तम् ॥ यथा चत्वारिंशत्तथा पञ्चवर्णसंख्या प्रकीर्त्तिता ॥ गणस्तु नवभिर्ज्ञेयः पार्थिवादिषु

**पञ्चशः कादयः षक्षलसहांताः समीरिताः॥ सोमसूर्याग्निभेदेन मातृकावर्णसंभवाः ॥११॥**
**अष्टत्रिंशत्कलास्तत्तन्मंडलेषु व्यवस्थिताः॥ अमृतामानदापूषा तुष्टिः पुष्टीरतिर्धृतिः॥ १२ ॥**

पञ्चस ॥ अत्र कस्यैव दीर्घाणां ग्रहानवभिरित्युक्तिः मंत्रसाधकयोराद्यो वर्णः स्यात्पार्थिवो यदि ॥ तत्कुलंतस्य तत्प्रोक्तमेवमन्येषु लक्षयेत्॥ पार्थिवे वारुणं मित्रमाग्नेये मारुतं तथा॥ एन्द्रवारुणयोः शत्रुर्मारुतः परिकीर्त्तितः। आग्नेयेवारुणं शत्रुः वारुणे तैजसं तथा॥ सर्वेषामेव तत्वानां सामान्यं व्योमसंभवम्॥ परस्परविरुद्धानां वर्णानां यत्र सङ्गतिः॥ स मंत्रः साधकं हन्ति किं वा नास्य प्रसीदति॥ तंत्रान्तरेपि॥ वर्णांशकं वदिष्यामि चतुर्मात्रव्यवस्थितम्॥ स्वकुलं मित्रमध्यस्थे अमित्रं च चतुर्थकम्॥ वायव्याग्नेयवारुण्यपार्थिवं च प्रकीर्त्तितम्॥ उत्तरोत्तरसंसिद्धिसमता व्याधिमृत्यवः। प्राप्नुवंति समासाद्य मंत्रिणोत्र निबोधनात्॥ मित्रे सिद्धिः समाख्याता उदासीने न किं च न॥ मृत्युर्व्याधिरमित्रे च स्वकुले सिद्धिरुत्तमा॥ नामादिवर्णाः साध्यस्य साधकस्य यथाक्रमम्॥ ऊर्ध्वाधस्थं समालेख्या अंशकं च निरूपयेत्॥ वायव्ये तैजसं मित्रं उदासीनं तु वारुणम्॥ शत्रुं च पार्थिवं विद्यात् स्वकुलं वायवं पुनः॥ तैजसे वारुणं शत्रु रुदासीनं तु पार्थिवम्॥ वायव्यं मित्रमाख्यातं स्वकुलं तैजसं पुनः॥ वारुणे पार्थिवं मित्र मुदासीनं तु वायवम्॥ तैजसं तु रिपुं विद्यात्स्वकुलं वारुणं पनः॥ पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितम्॥ उदासीनं वायवं तु स्वकुलं पार्थिवंपुनः। एष वर्णांशको नाम सान्वयस्ते निरूपित इति॥ अष्टत्रिंशत्कलाद्यर्थं पूर्वं विभागः कृतः ॥११॥ ताः कला एवाह॥ सोमेति॥ अनेन प्रणवस्य त्रिभ्यो भेदेभ्योकारोकारमकारेभ्य एव अष्टत्रिंशत्कलोत्पत्तिरुक्ता॥ तत्र प्रथमाक्षरस्य विसर्गरूपत्वात् सोमत्वं उकारस्य विसर्गनीयस्य रेफादुत्पत्तेरग्न्यात्मकत्वं मकारस्य सूर्यरूपत्वं संसिद्धमेव॥ ननु प्रथमद्वितीययोः कथं सोमाग्निरूपत्वमिति चेदुच्यते॥ अंत्यपटले अजपातः प्रणवस्योत्पत्तिं वक्ष्यति॥ तत्र विलोमीकृताअजपा सोहं भवति॥ सकारहकारलोपे पूर्वरूपे कृते प्रणवसिद्धिः तत्र प्रथयो वर्णौ विसर्गात्मकः सर्गः शक्तिर्निशाकर इत्युक्तं स्तस्यैव विसर्गस्य सकारादेशे उत्वे च कृते उकारादेशो भवति इति॥ अग्नित्वं॥ यद्वा तस्यां सूर्येंदुपावकात्॥ प्रणवस्य त्रिभिर्वर्णैरिति वक्ष्यमाणत्वात्॥ तेषां तथात्वम्॥ तेनैतदुक्तंभवति॥ प्रणवस्य त्रिभिर्भेदैः अष्टत्रिंशत्कलोत्पत्तिः पंचभेदेभ्यः पंचाशत्कलोत्पतिः वायवीयसंहितायां तु लोकवृत्तिप्रवृत्त्यर्थमाकाशमरुदाश्रयात्॥ संचरंति त्रयो भूता वह्निसूर्येंदुरूपिणः॥ तेजोरुद्रात्मकं यत्तु सवह्निस्त्रिगुणः स्मृतः॥ भिन्नास्तमो रजः सत्वैस्तद्गुणानवधाभवन्॥ वन्हेः कला दश प्रोक्ता बिंदुना सह धर्मदा॥ ब्रह्मात्मको रसो यस्तु स सूर्यः स चतुर्गुणः॥ तद्गुणा गुणभेदेन पुनर्द्वादशतां गताः॥ तेन द्वादश विख्याताः सूर्यस्य धनदाः कलाः॥ न हि नादकलेत्येवममूर्त्तत्वात् प्रदर्श्यते॥ या च विष्णात्मिका पृथ्वी सोमोसौ गुणपंचकः॥ तेपि प्रत्येकभेदेन गुणाः पंचदश भवन्॥ ताः कलाः सह बीजेन षोडशेंदोरनंगदा इति॥ ततन्मण्डलेष्विति॥ सोममण्डलसूर्यमण्डलाग्निमण्डलेषु स्वरजादत्यनेन अमृतादीनां पूजने स्वरमादौ कत्वा पूजेत्युक्तं भवति तत्र प्रयोगः अं अमृतायै नम इत्यादिं॥कभाद्याद्याइति॥ककारादनुलोमेन द्वादशठकारपर्यंतं भकाराद्विलोमेन द्वादशडकारपर्यंतमित्यर्थः तत्र प्रयोगे॥ यथा कं भं तपिन्यै नमः खं बं तापिन्यै नम इत्यादि॥ हव्यकव्यवहेति॥

**शशिनी चन्द्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा॥ पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः॥ १३॥ तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः॥ सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा॥ १४॥ कभाद्यावसुदाः सौम्यंष्ठडांताद्वादशेरिताः॥ धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी॥ १५॥ सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि॥ यादीनां दशवर्णानां कलाधर्मप्रदा इमाः॥१६॥ अभयेष्टकरा ध्येया श्वेतपीतारुणाः क्रमात्॥ तारस्य पञ्चभेदेभ्यः पंचाशद्वर्णगाः कलाः॥१७॥ सृष्टिर्वृद्धिः स्मृतिर्मेधा कांतिर्लक्ष्मी धृतिः स्थिरा॥स्थितिः सिद्धिरिति प्रोक्ता कचवर्गकलाः क्रमात्॥१९॥ अकाराद्ब्रह्मणोत्प-**

हव्यकव्ययोर्द्वन्द्वः ततोवहव्यशब्देनसमासः तेन द्वन्द्वात्परः श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यते इति न्यायात्॥ हव्यवताकव्यवहा इति शक्तिद्वयं यादीनामित्यनेन धूम्रार्चिरादीनां यादित्वमुक्तम्॥ प्रगोगस्तु यंधूम्रार्चिषे नमः इत्यादि॥ अभयेष्टेति॥ इष्टो वरः तत्र दक्षहस्ते अभयं वामहस्ते वर इति संप्रदायविदः॥ उक्तंच॥ ऊर्ध्वीकृतो दक्षहस्तः प्रसृतो भयमुद्रिका॥ अधोमुखो वामहस्तः प्रसृतो वरमुद्रिकेति॥ दशपटल्यामपि भुवनेशीध्याने॥ दक्षेंकुशाभये प्रोक्ते वामे पाशमथेष्टदमिति तंत्रान्तरे सरस्वतीध्याने॥ साक्षस्रक्कलशौर्ध्वबाहुयुगलां चाधः समुद्राभयं हस्तं दक्षिणमन्यतः स वरदो यस्याः करे पुस्तकमिति॥ सौत्रामणीतन्त्रे पञ्चमीध्याने॥ चक्रं खड्गं मुसलमभयं दक्षिणाभिर्भुजाभिः शंखं खेटं हलमपि वरं बिभ्रती वामदोर्भिरिति॥ तन्त्रान्तरे नित्याध्याने॥ कपालमभयं तथा॥ दधानां दक्षिणैर्हस्तैरिति अन्यत्रापि पाशं पताकां चर्मापि शार्ङ्गं चापं नरं करैः॥ दधानां वामपार्श्वस्थैः सर्वाभरणभूषितैः॥ अंकुशं च ततो दंडं खड्गं बाणं तथा भयम्॥दधानां दक्षिणैर्हस्तैरासीनां पद्मविष्टरइति॥ कादिमतेपि॥ ब्रूहि देव महेशान स्थूलसूक्ष्मस्वरूपयोः॥ ध्यानयोः कर्मणां सिद्धिं विविधां फलयोगतः॥ तासां तत्तत्करेषूक्तं त्वायुधान्यथशेषतः॥ शृणु वक्ष्ये महेशानि क्रमेण त्वं हि सांप्रतं॥ वामदक्षिणयोः स्यातां द्विभुजे तु पाराभये॥ वाशांकुशौ चतुर्बाहौ षड्भुजे चापसायकौ॥ चर्मखड्गावष्टभुजे गदाशूले दशोदितइति॥ अतो यत्र यत्र शक्तिध्यानेवराभये तत्र प्रायः अभयं दक्षिणे वामे वरमितिज्ञेयम्। यत्तूत्तरषट्के॥ वामेनाभयसंयुक्ता वरदं दक्षिणेन तु॥ इति॥ अन्यत्रापि॥ पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिके॥ वरदानरतां देवीमिति॥ एतत् स्वस्वगुरुसंप्रदायानुसारेण तत्तद्देवताविशेषेबोद्धव्यमित्यलम्॥ क्रमादिति॥ सौम्यकालादीनां श्वेतादयः अनेन वर्णवस्त्रमाल्यभूषाणां ग्रहणं॥ एवमग्रे पि ज्ञेयं॥ यदर्थं पञ्चभूतेषु विभागउक्तस्ताः कला उद्दिशति॥ यद्वा तद्वर्णतो भिन्नाः कला इति पूर्वपटलान्ते नुद्दिष्टास्त निर्दिशति॥तारस्येति तारस्य प्रणवस्य पञ्चभेदा इति॥ अकारोकारमकारबिन्दुनादाः यद्यपि शक्तिशांताविति प्रणवस्य षष्ठसप्तमभेदौ॥ तथापि तयोरेषु गणना नास्ति परत्वात्॥ तदुक्तं॥ सप्तात्मकस्य तारस्य परौ द्वौ तु परौ यतः ततस्तु शक्तिशान्ताख्यौ न पठ्येतेपरैः सहेति॥ पञ्चाशच्छब्दो ऽत्र लाक्षणिकः कलाक्रमादुत्पन्नाति शेषः काकाक्षिगोलकन्यायेनोभयत्र क्रमादिति सम्बध्यते॥ तमेव क्रममाह॥ सृष्टिरित्यादिना॥ इति पञ्चाशदाख्याता इत्यन्तेन॥ अकारात् प्रणवांशादुत्पन्नाः तद्वाच्येन ब्रह्मणाचोत्पन्ना इति ज्ञेयं॥ वाच्यवाचकयोरभेदात्॥ तदुक्तमाचार्यैः॥ अकारप्रभवाब्रह्मजाताः तदुत्पन्नाः

न्यास्तप्तचामीकरप्रभाः ॥ एताः करधृताक्षस्रक्पङ्कजद्वयकुण्डिकाः ॥ १९ ॥ जरा च पालिनी शांतिरीश्वरीरतिकामुके ॥ वरदाह्लादिनी प्रीतिर्दीर्घास्युष्टतवर्गजाः ॥ २० ॥ उकाराविष्णुनोत्पन्नास्तमालदलसन्निभाः अभीतिवरचक्रेष्टबाहवः परिकीर्त्तिताः ॥ २१ ॥ तीक्ष्णा रौद्री भया निद्रा तंद्री क्षुत् क्रोधिनी क्रिया ॥ उत्कारी मृत्युरेतास्युः कथिता पयवर्गगाः॥२२॥रुद्रेणमार्णादुत्पन्ना शरच्चंद्रनिभप्रभाः॥उद्वहंत्यो भयं शूलं कपालं बाहुभिर्वरम्२३ ईश्वरेणोदिता विन्दोः पीता श्वेतारुणा सिताः ॥ अनन्ता च षवर्णस्था जपाकुसुमसन्निभा ॥२४ ॥ अभयं हरिणं टङ्कं दधाना बाहुभिर्वरम् ॥ निवृत्तिः सप्रतिष्ठा स्यात् द्विद्याशांतिरनंन्तरम् ॥ २५ ॥ इन्धिका दीपिका चैव रेचिका मोचिका परा ॥ सूक्ष्मासूक्ष्मामृता ज्ञानाऽमृता चाप्यायिनी तथा ॥ २६ ॥ व्यापीनी व्योमरूपा स्युरनंताः स्वरसंयुताः ॥ सदाशिवेन सहिता नादा देताः सितात्विषः ॥ २७ ॥ अक्षस्रकपुस्तकगुणा कपालाढ्यकरांबुजाः ॥ न्यासे तु योजयेदादौ षोडशस्वरजाः कलाः ॥ २८ ॥ इति पंचाशदाख्याताः कलाः सर्वसमृद्धिदाः ॥ श्रीकंठानंतसूक्ष्माश्च त्रिमूर्त्तिरमरेश्वरः ॥ २९ ॥ अर्घीशोभारभूतीश स्तिथीशस्छाणुको हरः ॥ झिंडीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ॥ ३० ॥ अक्रूरश्च महासेनः षोडशस्वरमूर्त्तयः ॥ पश्चात् क्रोधीश चंडेश पंचांतक शिवोत्तमाः ॥ ३१ ॥ अप्येकरुद्रकूर्मैकनेत्राह्वचतुराननाः॥अजेश शर्वसोमेशास्तथालांगलिदारुकौ ॥ ३२ ॥ अर्द्धनारीश्वरश्चोमाकान्तश्चाषाढिदण्डिनौ ॥ स्युरद्रिमीनमेषाख्यलोहिताश्च शिखीतथा ॥ ३३ ॥ छगलण्डद्विरण्डेशौमहाकालाख्यवालिनौ ॥ भुजङ्गेशपिनाकीशखड्गीशाख्यवकास्तथा॥३३॥ श्वेतभृग्वीशलकुलिशिवाःसंवर्त्तकस्ततः ॥ एते रुद्राः स्मृता रक्ता धृतशूलकपालकाः ॥३४॥ पूर्णोदरी स्याद्विरजा शाल्मली तदनन्तरम् ॥ लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणाः समीरि-

शरचंद्रस्य निभा कांतिः तद्वत्प्रभा यासां ताः निभशब्दः सदृशवाचीवा ॥ बिंदुकला आह ॥ ईश्वरेणेति ॥ असितेति परिच्छेदः हरिणम् ॥ हरिणमुद्राम् ॥ अन्ये मृगशिशुं मन्यंते॥ टंकः परशुः॥सप्रतिष्ठेति ॥ प्रतिष्ठा कला सहिता॥ परेतिकलानामसूक्ष्मामृतेत्येका ज्ञानामृतेत्येका॥ अनंतेति ॥ षोडशो कला ॥गुणः शूलं ॥ करांबुजमित्युपमासमासः आद्ये ऊर्ध्वयो दक्षवामयोरंत्ये अध इत्यायुधध्यानम् ॥ वैपरीत्यं च केचनेच्छति ॥ शंखपूजायामयं क्रम उक्तः॥शरीरे न्यासक्रममाह ॥ न्यासेत्विति ॥ तुपूर्वस्माद्विशेषे सर्वसमृद्धिदा इति न्यासफलम् ॥ रुद्रादिकानिति ॥ पूर्वप्रकृतान् रुद्रानुद्दिशति ॥ श्रीकण्ठेति ॥ स्थाणुक इति कः स्वार्थे स्थाणुरिति नाम एकरुद्रस्य एकनेत्राह्वस्य चतुराननस्येति द्वंद्वः ॥ आह्वशब्दस्य न संज्ञायामंतर्भावः एवमग्रेपिआख्यादे ॥ आयुधध्यानम् दक्षवामयोः एवमुत्तरत्रापि ॥ इदं सामान्यं ॥ वक्ष्यमाणं बंधूकेत्यादि शक्तिसंभिन्नत्वे ज्ञेयं ॥ एवं विष्णुष्वपि ॥ यत्तु क्वचित् ॥ तप्तहेमावदातमिति ॥ तच्छक्तिशक्तिमतोरभेदे शक्तिप्राधान्यादित्यवधेयम् ॥ आदिपदवाच्या एतच्छक्ती रुद्दिशति ॥३४॥ पूर्णोदरीति ॥ सुदीर्घमुखिगोमुख्यावित्यत्र ङ्यापोः संज्ञाछंदसोर्बहुलमिति बहुलग्रहणात् पूर्वपदस्य ह्रस्वः॥ प्रयोगे तुदीर्घएव सर्वसिद्धिसममन्वितेति गौरीविशेषणम्॥

ताः ॥ ३५ ॥ सुदीर्घमुखीगोमुख्यौ दीर्घजिह्वा तथैव च ॥ कुण्डोदर्य्यूर्ध्वकेशी च तथा विकृतमुख्यपि ॥ ३६ ॥ ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ॥ सुश्रीमुखी च विद्या मुख्यैतास्युः स्वरशक्तयः ॥ ३७ ॥ महाकालीसरस्वत्यौ सर्वसिद्धिसमन्विते ॥ गौरीत्रैलोक्यविद्या स्यान् मंत्रशक्ति स्ततःपरं ॥ ३८ ॥ आत्मशक्तिर्भूतमातातथा लंबोदरीमता ॥ द्राविणी नागरी भूयः खेचरी चापिमंजरी ॥ ३९ ॥ रूपिणी वीरिणी पश्चात् काकोदर्पपिपूतना ॥ स्याद्भद्रकाली योगिन्यौ शङ्खिनी गर्जिनी तथा ॥ ४० ॥ कालरात्रि श्च कुब्जिन्या कपर्दिन्ययि वज्रिणी ॥ जया च सुमुखेश्वर्या रेवती माधवी तथा ॥ ४१ ॥ वारुणी वायवी प्रोक्तापश्चा द्रक्षोविदारिणी ॥ ततश्च सहजा लक्ष्मी व्यापिनी माययान्विता ॥ ४२ ॥ एता रुद्राङ्कपीठस्था सिन्दूरारुणविग्रहाः ॥ रक्तोत्पलकपालाभ्या मलङ्कृतकरांबुजाः ॥ ४३ ॥ केशवनारायणमाधवगोविन्दाविष्णवः ॥ मधुसूदनसंज्ञोन्यः स्यात्रिविंक्रमवामनौ ॥ ४४ ॥ श्रीधरश्च हृषीकेशः पद्मनाभ स्ततः परम् ॥ दामोदरो वासुदेवः संकर्षण इतीरिताः ॥ ४५ ॥ प्रद्युम्नश्चानिरुद्धश्च स्वराणां मूर्त्तयः क्रमात् ॥ पश्चाच्चक्री गदी शार्ङ्गी खड्गी शङ्खी हली पुनः ॥ ४६ ॥ मुसली शूलिसंज्ञोन्यः पाशी स्यादङ्कुशी पुनः मुकुन्दो नन्दजो नन्दी नरो नरकजिद्धरिः ॥ ४७ ॥ कृष्णः सत्यः सात्वतः स्यात् शौ-

तेन सर्वसिद्धि गौरीति शक्तिनाम ॥ अपेक्षितार्थद्योतनिकाकारादिभिस्तथैवोक्तेः अन्यत्रापि ॥ सर्वसिद्धिगौरीयुगिति ॥ रुद्राणां श्रीकंठादीनाम् ॥ अंक उत्संगः आदिशब्दसंगृहीतान्केशवाद्यान् ॥ तच्चक्रोरव्यद्दिशति ॥ केशवेत्यादि ॥ हलामिति व्यंजनानां वैयाकरणपरिभाषया ॥ आयुधध्यानंवामदक्षयोरेवमुत्तरत्रापि ॥ वसुधापरेति ॥ अपरा वसुधेत्यन्वयः ॥ परेति कलानाम तत स्वैतन्येत्यारभ्य पंचाशद्वर्णरूपिणीत्यंतेन मातृकास्वरूपत्वमुक्तं ॥ कुंडल्याः तस्याएवमंत्रा उत्पन्नाइत्यपि ॥ तत्प्रयोगाद्यर्थं मनूनां प्रकारत्रये वक्ष्यमाणे हेतुत्वेनोपन्यस्यति मातृकेति ॥ यत इति शेषः ॥ पूर्वं शिवशक्तिमयादित्यनेनतदुत्पत्तेरुक्तेः तदेव मंत्रेष्वपिदर्शयति ॥ मंत्रेति ॥ मातृकेति तत इति योज्यम् ॥ अनेन सोमसूर्यात्मकत्वं सर्वेषामुक्तं भवति यत्प्रयोगसारे द्विधा प्रोक्ताश्वते मंत्रा सोम्यसौरविभागतः सौराः पुंदेवता मंत्रा स्त्रेच मंत्राःप्रकीर्त्तिताःसौम्याः स्त्रीदेवता स्तद्वद्विविधास्तेपिविश्रुता इति ॥ अनयोरुदयेन सर्वेषामुदयोप्युक्तो भवति ॥ प्रयोगविशेषसिध्यर्थं मंत्राणां त्रैविध्यमाह ॥ पुंस्त्रीति ॥ अत्रापि शिवशक्तिमयत्वात् मध्यसचतुष्कस्य नपुंसकत्वात् स्वराणां त्रैविध्ये तान् विना अन्येषामपि उच्चारणाभावात् तदात्मकत्वेन हेतुत्वं योज्यम् ॥ अत्र सर्वइत्युक्तेर्नपारिभाषिकमंत्रग्रहणम् ॥ एवमुत्तरत्रापि ॥ ननु निष्कलचैतन्याखंडानंदवाच्यस्य मंत्रस्य कथं पुंस्त्वादिकल्पनमितिचेत्सत्यम् । वस्तुतो नास्त्येव उपासकानामर्थकल्पनामात्रम् ॥ यदाहुःचिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ रूपस्थानां देवतानां पुंस्त्रयङ्गास्त्रादिकल्पनेति॥गार्ग्याभिप्रायेणैषांलक्षणमाह ॥ ५७ ॥ पुंमिति ॥ हुंफडंता इति संप्रदायादस्त्रसमस्ततदंताः द्विठांता इति स्वाहांताः ठशब्देह साम्यादर्थाद्वा विंदुरुच्यते ॥ ठः शून्ये च

री शूरो जनार्दनः ॥ भूधरो विश्वमूर्त्तिश्चवैकुंठः पुरुषोत्तमः ॥ ४९ ॥ बली बलानुजो बालो वृषघ्नश्च वृषः पुनः हंसो वराहो विमलो नृसिंहो मूर्तयो हलाम् ॥ ४९ ॥ केशवाद्या इमे श्यामाश्चक्रशंखलसत्कराः ॥ कीर्तिः कान्तिस्तुष्टिपुष्टीधृतिः क्षान्तिः क्रिया दया ॥५०॥ मेधा सहर्षा श्रद्धा च लज्जालक्ष्मीः सरस्वती ॥ प्रीती रतिरिमाः प्रोक्ताः क्रमेण स्वरशक्तयः ॥ ५१ ॥ जया दुर्गा प्रभा सत्या चंडा वाणीविलासिनी ॥ विजया विरजा विश्वा विनदा सुनदा स्मृतिः ॥ ५२ ॥ ऋद्धिः समृद्धिः शुद्धिः स्यात् भक्ति र्बुद्धिः स्मृतिः क्षमा ॥ रमोमाक्लेदिनी क्लिन्ना वसुधावसुदापरा ॥ ५३ ॥ परा परायणी सूक्ष्मा संध्या प्रज्ञा प्रभा निशा ॥ अमोघा विद्युताचेति कीर्त्याद्याः सर्वकामदाः ॥ ५४ ॥ एताः प्रियतमांकेषु निषण्णाः सस्मिताननाः ॥ विद्युद्दामसमानांग्यः पंकजा भयवाहवः ॥ ५५ ॥ मातृकावर्णभेदेभ्यः सर्वे मन्त्राः प्रजज्ञिरे ॥ मन्त्रविद्याविभागेन तद्विधा मन्त्रजातयः ॥ ५६ ॥ मन्त्राः पुंदेवता ज्ञेया विद्या स्त्रीदेवताः स्मृताः ॥ पुंस्त्रीनपुंसकात्मानो मन्त्रा सर्वेसमीरिताः ॥ ५७ ॥ पुंमन्त्रा हुंफडंतास्युर्द्विठांताश्च स्त्रियो मताः नपुंसका नमोन्ता स्युरित्युक्ता मनवस्त्रिधा ॥ ५८ ॥ शस्तास्ते त्रिविधा मन्त्रा वश्यशांत्यभिचारके ॥ अग्नीषोमात्मका मन्त्राः विज्ञेयाः क्रूरसौम्ययोः ॥ ५९ ॥ कर्मणोर्वन्हितारांत्यवियत्प्रायाः समीरिताः आग्नेया मनवः सौम्या भूयिष्ठेद्वमृताक्षराः ॥ ६० ॥ आग्नेयाः संप्रवुध्यंते प्राणे चरति दक्षिणे ॥ भागेन्यस्मिन् स्थिते प्राणे सौम्या वोधं प्रयांति च ॥ ६१ नाडीद्वयं गते प्राणे सर्वे वोधंप्रयां

द्वाहुनाविति कोशात्। शून्यंविन्दुरूपमेव तस्यद्वित्वं तेन विसर्गः स च शक्तिरूप इति द्विठशब्देनाग्निशक्तिः॥ प्रयोगसारे तु॥ वषट्फडंताः पुंल्लिंगाः वौषटस्वाहांतगाः स्त्रियः॥ नपुंसकाः हुंनमोन्ताः इतिमंत्रास्त्रिधामताः तारेणाप्यनुमीयंन्ते मंत्राः स्वाद्यन्तमध्यतः प्रत्यासन्नात्मभावेन यथा पुंस्त्रीनपुंसकाः विंदुसर्गेन्दुखंडांतास्तद्वदेव प्रकीर्तिताः॥ इति॥ त्रिविधानां क्रमेण प्रयोजनमाह॥ ५८॥ शस्ता इति॥ उक्तं तु नारायणीये ॥ शेषा पुंमांसः शक्तास्ते वश्योच्चाटवशेषु च॥ क्षुद्रक्रियामयध्वंसे स्त्रियोन्यत्र नपुंसका इति ॥ पूर्वं मातृकायाः कुंडल्या उत्पत्ते रुक्तत्वात् तस्याः अग्नीषोमात्मकत्वात् मंत्राणामपि तद्दर्शयति अग्नीति॥ कर्मणोरिति पूर्वत्रान्वेति ॥ वन्हीरेफः तारः ॐ अंत्यः चकारः। वियत् हकारः। प्रायः शब्दो वाहुल्यवाची॥ प्रायो भून्म्यन्तगमन इत्यमरः॥५९॥ आग्नेया इति पूर्वेण संवध्यते॥ इंदुः सः तत्वन्यासे इंदुमंडलस्य सकारादित्वेन न्यस्तत्वात्॥ अमृतंवः अत्रैकस्य वाहुल्येतत्स्वन्तदुक्तमीशानशिवेन॥ ताराकाशाद्यंतवाद्यंत्यवर्णाश्चाग्नेया स्युः सौम्यवर्णा स्ततोन्ये । आग्नेयोपि स्यात्तुसौम्यो नमोन्तः सौम्योपि स्यादग्निमंत्रः फडंतः स्यादाग्नेयैः क्रूरकार्यप्रसिद्धिःसौम्यः सौम्यं कर्म कुर्याद्यथावदिति॥ नारायणीयेपि ॥ तारान्त्याग्निवियत् प्रायो मन्त्र आग्नेय इष्यते॥शिष्टाःसौम्याःप्रशस्तौ तौ कर्मणोः क्रूरसौम्ययोः॥ आग्नेयमंत्रः सौम्यः स्यात् प्रायशोन्ते नमोन्वितः सौम्यमंत्र स्तथाग्नेयःफट्कारेणान्वितोन्तत इति॥ पिंगला मतेपि॥ रौद्रोपि शांततामेति शांतजातिमन्वितः मंत्रः शांतोपि रौद्रत्वं हुंफट्पल्लवितो यदि इति॥ तत्र विशेषो नारायणीये॥ मंत्रावाग्नेयसौम्याख्यौ ताराद्यंतौ प्रयोजयेत् इति॥

ति च ॥ प्रयच्छंति फलं सर्वे प्रबुद्धा मंत्रिणां सदा ॥ ६२ ॥ छिन्नादिदुष्टाये मन्त्राः पालयंति न साधकम् ॥ छिन्नो रुद्धः शक्तिहीनः पराङ्मुखउदीरितः ॥६३॥ बधिरो नेत्रहीनश्च कीलित स्तम्भित स्तथा ॥ दग्ध स्त्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः ॥ ६४ ॥ भेदितश्च सुषुप्तश्च मदोन्मत्त श्चमूर्छितः हृतवीर्यश्च हीनश्च प्रध्वस्तो बालकः पुनः ॥ ६५ ॥ कुमारस्तु युवा प्रौढो वृद्धो निस्त्रिंशक स्तथा ॥ निर्बीजः सिद्धिहीनश्च मंदः कूटस्तथा पुनः ॥ ६६ ॥ निरंशः सत्वहीनश्च केकरोवीजहीनकः धूमितालिङ्गितौ स्यातां मोहितश्च क्षुधातुरः ॥ ६७ ॥ अतिदृप्तोऽङ्गहीनश्च अतिक्रुद्धः समीरितः अतिक्रूरश्च सव्रीडः शांतमानस एव च ॥ ६८ ॥ स्थानभ्रष्टश्च विकलः सोतिवृद्धः प्रकीर्त्तितः ॥ निंस्नेहः पीडितश्चापिवक्ष्याम्येषां च लक्षणम् ॥ ६९ ॥ मनो र्यस्यादिमध्यान्ते स्वानिलंवीजमुच्यते ॥

एकं नक्षत्रमंशकचतुष्टयं भवति ॥ तत्राग्नेयानां नक्षत्राणां पूर्वांशद्वयमग्रमितरत्पुच्छम्॥ सौम्यानां उत्तरांशकद्वयमग्रमित्पुच्छम् ॥ पुच्छकाले प्रयोगो न कार्यः इति गार्ग्ये आग्नेयसौम्यनक्षत्राणि अश्विचक्रे वक्ष्यंते ॥ तत्र सूर्य्यनक्षत्राणि अग्निनक्षत्राणि ॥ प्रयच्छंतीति ॥ अन्यथा दोषदर्शनात् ॥ उक्तं नारायणीये ॥ सुप्तः प्रबुद्धमात्रो वा मंत्रः सिद्धिं न यच्छति ॥ स्वापकालो वामवहो जागरो दक्षिणावहः आग्नेयस्य मनोः सौम्यमंत्रस्यैतद्विपर्ययः ॥ प्रवोधकालं जानीयात् उभयोरुभयोर्वहमिति ॥ अन्यत्रापि ॥ स्वापकाले तु मंत्रस्य जपो नर्थफलप्रदः इति ॥ अन्यत्रान्यथा स्वापकाल उक्तः ॥ यदाहुः ॥ प्राणायामसमायोगात् शिवशक्त्योस्तुंमेलनम् ॥ प्रवोधकालो विज्ञेयः स्वापकालस्ततः परमिति ॥ अन्यत्र तु ॥ प्रवोधार्थं प्रकारांतरमुक्तं संपुटी कृत्य यत्नेन लांतानाद्यास्सविन्दुकापुनश्च सविसर्गांतान् चकारंकेवलं पठेत् एवं जप्त्वोपदिष्टस्त्वेत्प्रबुद्धः शीघ्रसिद्धिद इति ॥ पुंस्त्रीत्यादि स्वरूपकथनेनैषां विरोधोपिसूचितः ॥ यदाहुः स्त्रीदैवत्या वैरिणः स्युः पुंदैवत्यस्य भूयसा ॥ स्त्रीदैवत्येषु सौम्यानां क्रूराणां स्यात्परस्परम् ॥ तस्यैव पुंदेवतानामिति॥पूर्ववैपरीत्येनोत्तरस्य सङ्गतिः॥ तस्य शक्तिशिवात्मकमातृकातो मन्त्रोत्पत्तेरुक्तत्वात्॥ तदुत्पत्तिनिमित्ताश्चाणवादि दोषाः तदन्तर्गतच्छिन्नादि दोषसम्बन्धा मन्त्राः विरुद्धफला इत्याह ॥ ६२ ॥ छिन्नेति ॥ छिन्नादिदोषैर्दुष्टाः साधकम् न पालयन्तीति सर्वेषां सामान्यफलम् ॥ वक्ष्यमाणं क्वचित्तत्तद्विशेषफलं ज्ञेयम् ॥ आदिशब्दार्थमाह ॥ छिन्नेति ॥ तथा पुनरित्यनेन कूट एव निरंशसूचक इत्याह ॥सोतिवृद्ध इति॥ निस्नेहविशेषणम् तेन निस्नेहानन्तरमतिवृद्धस्ततः पीडित इति ॥ मनोरिति ॥ आनिलयं आदिमध्यन्तेति समुच्चयः संयुक्तं वाक्षरांतरयुक्तं वियुक्तं वा केवलं वेत्येकैकं द्विर्द्विः संवध्यते। विशिष्टमनिलं वा विशिष्टं बीजं वा यस्य सक्छिन्नसंज्ञक इति। अन्वयः बीजं शक्तिवीजं स्वराक्रान्तं दीर्घस्वराक्रान्तम् ॥ आईऊऐऔ एतत् स्वरयुक्तं इति सम्प्रदायविदः बीजशब्देन मायावीजं कथमिति चेत्तदुक्तंशैवे ॥ मायावीजस्य नामानि मालिनी शिववल्लरी वातावर्तिः कला वाणी बीजं शक्तिश्च कुण्डलीति ॥ तदुक्तं पिङ्गला मते, आदिमध्यावसानेषु यस्य मन्त्रस्य दृश्यते चतुर्द्धा पञ्चधाद्वैधमेकवीरं स्वरान्वितम् ॥ वायुबीजमसौ मन्त्र स्छेदितः परिकीर्त्तितः इति तत्रैव अथ मंत्रांशकवीजविवरणमित्युपक्रम्य व्याख्यातम्॥ वायुवीजं यकारः एकवीरो क्षस्वराक्रान्तो दीर्घस्वरयुक्तः यथाक्रमं क्ष्यांक्ष्यींक्ष्यूंक्ष्यैंक्ष्यौंउदाहरणं च

संयुक्तं वा वियुक्तं वा स्वराक्रान्तं त्रिधा पुनः ॥ ७० ॥ चतुर्द्धा पञ्चधा वा स्युः समन्त्र-श्छिन्नसंज्ञकः ॥ आदिमध्यावसानेषु भूबीजद्वन्द्वलाञ्छितः ॥ ७१ ॥ रुद्धमन्त्रः सविज्ञेयो भुक्तिमुक्तिविवर्जितः माया त्रितत्वश्रीबीजराबहीनः स्तुयो मनुः ॥ ७२ ॥ शक्तिहीनः सकथितो यस्य मध्ये न विद्यते ॥ कामबीजं मुखे माया शिरस्यङ्कुशमेववा ॥ ७३ ॥ असौपराङ्मुखःप्रोक्तोहकारोविन्दुसंयुतः ॥ आद्यन्तमध्येष्विन्दुर्वा न भवेद्वधिरःस्मृतः॥७४॥ पञ्चवर्णोमनुर्यः स्याद्रेफार्केन्दुविवर्जितः ॥ नेत्रहीनः स विज्ञेयोदुःखशोकामयप्रदः ॥ ७५ ॥

तत्रैव प्रदर्शितं अघोरेभ्योथक्लांघोरेभ्यो क्लींघोरघोरतरेभ्यो क्लूं सर्वेभ्यः सर्वशर्वेभ्यो क्लैंनमस्ते अस्तुरुद्र-रूपेभ्यो क्लौं इति मंत्रमुक्तावल्यां च एकवीरं वा स्वराक्रान्तं विशेषत इति ॥ ग्रन्थान्तरे तु अर्द्धग्रहो मनुश्छिन्नःइत्युक्तम् ॥ अर्द्धं ग्रहः क्वचि श्लोके वा मध्ये विच्छिन्नः अन्यत्र तु॥ आदिमध्यान्तबीजानां लोपे श्छिन्नता इति ॥ आदौत्येषां समच्चयः ॥७१॥ भूबीजं लं इन्द्वेति प्रत्येकं भुक्तिरैहिकं फलम् । तदुक्तं पिङ्गलामते । आदौ द्विधा त्रिधा मध्ये पुनश्चान्ते द्विधा भवेत् इन्द्रबीजमसौ मन्त्रो रुद्ध इत्य-भिधीयते इति अन्यत्र च द्विधा पूर्वं त्रिधा मध्ये द्विधान्ते च पुनः प्रिये। वज्रयुक्तस्तु यो मन्त्रःसनिरुद्धः प्रकीर्त्तितः इति वज्रं लकार उभयत्र त्रिधेति विशेषः चकारेणोभयत्रसमुच्चयोपि दर्शितः एतेन केचन भूबीजशब्देन ग्लौमिति वदन्ति। तदपि परास्तम्। ग्रन्थान्तरेत्वन्यः प्रकारः रुद्धो निःसन्धिकः स्मृत इति स्वरसन्धिर्व्यंजनसन्धिर्व्याकरणोक्तो यत्र नास्ति सनिःसन्धिकः। तंत्रान्तरे। रुद्धाः परिवार-समन्विता इति ॥मायेति॥ मायाभुवनेशीबीजं। त्रितत्वम् ह्रङ्कारः प्रणबोवा रावः फ्रेकारः एषां न समुच्चयः ॥ तदुक्तश्च्यम्। मायाबीजं नयत्रास्ति त्रितत्वंरावमेववा श्रीगर्हं वापि मन्त्रोसौ शक्तिहीनः प्रकीर्त्तित इति ॥ पिङ्गला मतेपि। मायाबीजं त्रितत्वंवाश्रीगर्हंयत्रनास्तिचेत्।शक्तिहीनइतिख्यातः सामर्थ्यंहन्तिमन्त्रिणइतिअथ मन्त्रांशकबीजविवरणमित्युपक्रम्य। त्रितत्वम् ह्रँ श्रीगर्हं श्रीमिति तत्रैव व्याख्यातम् ॥ ७३ ॥ यस्येति ॥ मुखे आदौ शिरस्यन्ते अंकुशम् क्रोङ्कारः वाशब्दः समुच्चये। क्व चिदेवचेति पाठः ॥ यदुक्तम् पिङ्गलामते ॥ कामबीजं न यन्मध्ये मायादावन्तिमांकुशे ॥ परा-ङ्मुख इति प्रोक्तः इति ॥ मन्त्रमुक्तावल्यामपि ॥ यस्य कामकलाबीजम् मध्यस्थाने न विद्यते ॥ आदौ मायांकुशश्चान्ते विज्ञेयो सौ पराङ्मुख इति ॥ हकार इति ॥ इन्दुः सःविन्दुसंयुक्त इत्यत्रापि सम्बध्यते ॥ आद्यन्तमध्येष्विति न समुच्चयः ॥ तदुक्तम् ॥ शून्यं विन्दुसमायुक्तमाद्यन्ते वापिमध्यतः न भवेज्जीवबीजं वा यस्यासौ बधिरः स्मृत इति ॥ एतेन केचिदिन्दुशब्देन उकाराख्या माचक्षते तदपि परास्तम् ॥ ७४ ॥ पञ्चेति ॥ अर्कौ हकारः वैष्णवहृत्तत्वन्यासे ऽर्कमण्डलतत्वस्य हकारादि-त्वेन न्यस्तत्वात् हकारस्य पुंरूपत्वाद् वा अर्कोहः इन्दु सः पञ्चेत्यादि उभयम् दोषबीजम् दुःख-शोकामयप्रद इति क्रमेण फलम् यतोग्निसूर्यचन्द्राणां नेत्रयात्मकत्वात् ॥ एकद्विहानतः का-णतापि ज्ञेया ॥ तदुक्तम् पिङ्गलामते ॥ पञ्चाक्षरस्तु यो मन्त्रो वन्हिचन्द्रार्कवर्जितः । नेत्रहीन इति ज्ञेयो दुःखशोकभयावह इति ॥ अथ मन्त्रांशकबीजविवरणमित्युपक्रम्य चन्द्रः सः अर्कोह इति त-त्रैव व्याख्यातम् ॥ ७५ ॥ आदौति ॥ एषां न समुच्चयः हंसआदीनाम् समुच्चयः एवम् वा इत्युक्त-त्वात् ॥ ग्रन्थान्तरेपि ॥ हंसः मायात्मकम् वापि इति ॥ हंसः स्वरूपम् ॥ प्रासादबीजम् ह्रौं वा-

औादमध्यावसानेषु हंसप्रासादवाग्भवाः॥ हकारो विंदुमाञ्जीवो रावं चापि चतुष्फलम्॥ ७६॥ माया नमामि च पदं नास्ति यस्मिन्सकीलितः॥ एकं मध्ये द्वयं मूर्द्धि यस्मिन्नलपुरंदरौ॥ ७७॥ न विद्येते समन्त्रस्यात् स्तंभितः सिद्धिरोधकः॥ वन्हिर्वायुः समायुक्तो यस्यमन्त्रस्यमूर्द्धनि॥ ७८॥ सप्तधा दृश्यते तं तु दग्धं मन्येत मन्त्रवित्॥ अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभि र्दृश्यतेक्षरैः॥ ७९॥ त्रस्तः सोभिहितो यस्य मुखेन प्रणवस्थितः॥

ग्भवंऐं॥ हकारो विन्दुमान्॥ जीवः सः रावः फ्रें॥ चतुष्कलो ह्रं मायाशक्तिवीजम् नमामि इति पदम् च यत्र मास्ति स कीलित॥ इति॥ अत्र हकारो विन्दुमानित्येकं पदम्॥ तत्र जीवः कीदृशः हकारश्च अकारश्च उकारश्च विन्दुश्च तद्वान्॥ तेन स्हौं इति सिद्धम्॥ तत्र अकार उकार विन्दुरित्यनेन औंकारः यथा अउमाः स्युः रित्यत्र॥ तथा च पिङ्गलामते॥ नवमः स्वरसंयुक्तो जीवारूढः स विन्दुकः यस्मात्मादृश्यते नैव किं वा रावं चतुष्कलः प्रासादो वाग्भवो हंसो माया वा यत्र दृश्यते॥ आदिमध्यान्तदेशेषु कीलितम् तं प्रचक्षते॥ इति॥ अथ मन्त्रांशकवीजविवरणमित्युपक्रम्य तत्रैव व्याख्यातम्॥ नवमस्वर औकारः आत्माहः रावः फ्रें चतुष्कलः हुं॥ तन्त्रान्तरे तु॥ हंसमायात्मकं वा पीति पठित्वा क्लींमिति व्याख्यातम्॥ अत्र हंसो मायेति पिङ्गलावाक्येप्ययमेवार्थ इत्याहुः॥ अन्यत्र तु॥ अन्तरन्येन वीजेन व्याप्तः कीलित उच्यते इति॥ ग्रन्थान्तरे॥ कीलितो बीजवर्ज्जित इति॥ ७७॥ एकमिति॥ मूर्द्धि अन्ते अस्त्रं फट्कारः पुरन्दरो लः मध्ये एकः फट्कारः लकारो वा॥ अन्ते फट्कारद्वयम् लकारद्वयम् वा के च न मध्ये फट्कारः अन्ते लद्वयमिति वाचक्षते तदसत्॥ ग्रन्थान्तरविरोधात्॥ तथा च पिङ्गलामते॥ सकृन्मध्ये द्विधाप्रान्ते शक्रवीजम् भवेद्यति॥ स्तम्भितं तं वदन्तीत्यग्मन्त्रन्तन्त्रविदो बुधा॥ इति॥ ग्रन्थान्तरे च॥ द्विधा त्रिधा ऽष्टधा षोढा मन्त्रान्ते यत्र दृश्यते॥ महास्त्रं स्तम्भितो मन्त्रः स ऋशिन, प्रकीर्त्तित इति ग्रन्थद्वयविरोधात् नविद्येते समन्त्र इति प्रामादिकः पाठः विद्येते स तु मन्त्रः स्यात् इति॥ तु साम्प्रदायिकः पाठः अन्यत्र तु स्तम्भिताः क्रियायां नियुक्ता अपि न मुञ्चन्तीति॥ वन्हिरिति॥ वन्हौ रेफः वायुः यकार स्तेन समवेतः अधऊंदूर्ध्वंवा मूर्द्धि आदौ॥ तदुक्तं पिङ्गलामते॥ आदिस्थै सप्तभिर्वीजै र्मारुतैः पावकाक्षरम् दीपितं यत्र तं मन्त्रमार्या दग्धं प्रचक्षते इति॥ ग्रन्थान्तरे प्रकारान्तरेणोक्तः षट्कर्णाकर्णितो दग्ध इति॥ अन्यत्र तु॥ अग्निवीजाधिकादग्धा इति॥ अस्त्रमिति॥ द्वाभ्याम् त्रिभिः षड्भिरष्टभिरक्षरैर्वा यस्य अस्त्रंफट्कारो दृश्यते॥ पिङ्गलामते॥ भीतनाम्ना अयमुक्तः आदिमध्यान्तदेशेषु यदि मन्त्रोऽस्त्रसंयुतः भीत इत्युच्यते॥ तन्त्रे इति॥ अन्ये तु त्रस्तः सोभिहितो मन्त्रः इति पाठमपठन् तन्त्रान्तरे त्रासिताः सिद्धिभीषिता इति॥ यस्येति॥ मुखे आदौ शिवः हृच्छक्तिः स इति साम्प्रदायिकाः केः न शिवशब्देन विसर्गमाहु स्तदयुक्तम्॥ मन्त्रादौ केवलमिन्दोः केवलविसर्गस्य वा असत्वात्॥ अक्षरान्तरयुक्तो ग्राह्य इति चेत्॥ तद्वरं साम्प्रदायिकार्यानुसरणमेव ग्रन्थकृदेव वक्ष्यति॥ हंसौ तौ पुंप्रकृत्याख्यौ हंपुमान् प्रकृतिस्तु स इति॥ अयमेव दोषो नामान्तरेणोक्तः पिङ्गलामते। शिवः शक्तिस्तथोकारो यस्यादौ नास्ति तं मनुम्। वदन्ति मातृकाहीनं हीनसिद्धिप्रदायकमिति॥ अथ मन्त्रांशकवीजविवरणमित्युपक्रम्य तत्रैव व्या-

शिवोवाशक्तिरथवा भीताख्यः स प्रकीर्तितः ॥ ८० ॥ आदिमध्यावसानेषु भवेन्मार्णं चतुष्टयम् ॥ यस्य मंत्रः समलिनो मन्त्रवित्तं विवर्जयेत् ॥ ८१ ॥ यस्य मध्येदकारोथ क्रोधो वा मूर्द्धनि द्विधा ॥ अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदाहृतः ॥ ८२ ॥ भ्योद्वयं हृदये शीर्षे वषट् वौषट् च मध्यतः ॥ यस्यासौ भेदितो मन्त्र स्त्याज्यः सिद्धिषु सूरिभिः ॥८३॥ त्रिवर्णेहंसहीनोयःसुषुप्तःसउदाहृतः ॥ मन्त्रोवाप्यथवाविद्यासप्ताधिकदशाक्षरः ॥ ८४ ॥ फट्कारपञ्चकादिर्योमदोन्मत्तउदीरितः ॥ तद्वदस्त्रंस्थितंमध्येयस्यमन्त्रःसमूर्छितः ॥ ८५ ॥ विरामस्थानगंयस्यहृतवीर्यः सकथ्यते ॥ आदौमध्येतथामूर्द्ध्निचतुरस्त्रयुतोमनुः ॥ ८६ ॥ ज्ञातव्योहीनइत्येषत्याज्योयः स्याद्दशाक्षरः ॥ एकोनविंशत्यर्णोवायोमन्त्रस्तारसंयुतः ॥८७॥

ख्यातं शिवोहं शक्तिः स इति ॥ ८० ॥ आदीति ॥ एषां समुच्चयः मार्णचतुष्टयमित्यपि समुच्चयः तेन स्थानत्रये मिलित्वा मार्णं चतुष्टयमपेक्षितम् ॥ तदुक्तम् पिङ्गलामते आदिमध्यान्तदेशेषु चतुर्वा यत्र दृश्यते ॥ मकारो मलिनं विद्यात् तं मन्त्रं मन्त्रविद्वर्जेत् इति ॥ अन्यत्र तु ॥ आदौ मध्येथ हृदये त्रिधावै यस्य दृश्यते ॥ मन्त्रो मकार ईशेन मलिनः स समीरित इति । मतान्तरत्वात् भेदः हृदयशब्दोऽन्तवाची ॥ अन्यत्र तु मलैस्त्रिभिः सहजागन्तुकमायाख्यै र्मलिनाः इति ॥ ८२ ॥ यस्येति ॥ क्रोधो हूं वीजम् मध्ये दकार क्रोधयोर्विकल्पः मूर्द्धनि अन्ते द्विधास्त्रमिति सम्बन्धः मध्यान्तयोः समुच्चयः तदुक्तम् पिंगलामते दकारः क्रोधवीजं वा यस्य मध्ये व्यवस्थितम् ॥ फट्द्वयम् च स्थितम् प्रान्ते यस्याणोः स तिरस्कृत इति । अन्यत्रापि यस्य मध्ये दकारस्तु क्रोधवीजम् हृदि स्थितम् । द्विधाचान्ते च फट्कारः स्याद्यस्य स तिरस्कृत इति । तन्त्रान्तरे पराभूतास्तिरस्कृता इति वोध्यम् ॥ भ्योद्वयम् प्रमुखे शीर्षे वषडस्त्रं च मध्यत इति ॥ शीर्षे अन्तेवषट् अस्त्रं फः मध्यतः यन्त्रमुक्तावल्याम् अस्त्रवर्णद्वयं मध्ये वषडन्ते तथैव च ॥ यस्य मन्त्रस्य भिन्नौ सौ विज्ञेयः सिद्धिवर्ज्जित इति पिंगलामतेपि अस्त्रवर्णद्वयम् मध्ये वषडन्ते तथादितः अउमाः स्युरसौ मन्त्रो भेदितः परिकीर्त्तित इति ॥ अथ मन्त्राद्यकवीजविवरणमित्युपक्रम्य तत्रैव व्याख्यातम् ॥ अस्त्रम् फः अउमा ओंकारः केचनभ्यो द्वयं हृदये शीर्षे वषडाबूच मध्यत इति पठन्ति ॥ अन्ये च वषट् मध्यत इति पठन्ति ॥ अन्यत्र भिन्नतां नीता भेदिता इति ॥ ८३ ॥ त्रिवर्ण इति त्रिवर्णत्वं हंसहीनत्वमंकस्यैव । तदुक्तम् पिंगलामते वर्णत्रयम् भवेद्यत्र हंसहीनं स शम्भुना । सुषुप्त इति सिद्धान्ते प्रोक्तोभीष्टफलापह इति ॥ मन्त्रमुक्तावल्यामपि ॥ वर्णत्रयात्मकोमन्त्रो यस्तु हंसविवर्जितः प्रसुप्तः स तु विज्ञेयः सर्वसिद्धिफलापह इति ॥ अज्ञातदीपकः सुप्त इत्येके ॥ अन्यत्र तु ॥ माययाहतसामर्थ्याः सुप्ता इति अन्यत्र त सुप्तः स्यादासनं विना । इति ॥ ८४ ॥ मन्त्र इति ॥ सप्ताधिकानि अष्टौ दश च अक्षराणि यत्र सः एवमष्टादशाक्षरः फट्काराणाम् पञ्चकमादौ यस्मिन्निति बहुव्रीहिः तदुक्तम् । विद्या वायदि वा मन्त्रो यद्यष्टादशवर्णकः पञ्चफट्कारपूर्वः स्यान् मदोमत्त स उच्यते इति ॥ पिंगलामतेपि विद्या वा मन्त्र राजो वा यः स्यात्सप्तदशाधिकः फट्काराः पञ्चपूर्वं चेदुन्मत्तः स प्रकीर्त्तित इति अत्रापि विशेषणद्वयविशिष्टेदोषत्वम् ॥ ८६ ॥ तद्वदिति पञ्चवारम् । ग्रन्थान्तरे प्रकारान्तरम् ॥ सम्मूर्छिता पुनः विचेतन्या इति ॥ ८७ ॥ विरामेति ॥ यस्याम

हृल्लेखाङ्कुशवीजाद्यस्तम्प्रध्वस्तम्प्रचक्षते ॥ सप्तवर्णो मनुर्बालः कुमारोष्टाक्षरस्तुयः ॥ ८८॥ षोडशार्णोयुवाप्रौढश्चत्वारिंशाल्लिपिर्मनुः ॥ त्रिंशदर्णश्चतुषष्टिवर्णो मन्त्रः शताक्षरः ॥ ८९ ॥ चतुःशताक्षरश्चापि वृद्ध इत्यभिधीयते ॥ नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंशईरितः ॥ ९० ॥ यस्यावसाने हृदयेशिरोमन्त्रौ च मध्यतः ॥ शिखा वर्म च न स्यातां वौषट्फट्कार एव च ॥ ९१ ॥ शिवशक्त्यर्णहीनो वा स निर्वीज इति स्मृतः ॥ एषु स्थानेषु फट्कारः षोढा

मिति सम्बध्यते ॥ यस्यां ते अस्त्रमित्यर्थः विरामगास्त्रोयोमन्त्र इत्यपि क्वचित् पाठः तदुक्तं पिंगलामते॥अस्त्रमन्त्रो भवेद्यस्य मध्ये प्रान्ते च शम्भुना॥हृतवीर्ज इतिख्यातः समन्त्रो नैवसिध्यति ॥ अन्यत्रापि ॥ विरामस्थानगंयस्य हृतवीर्यः स उच्यते ॥ इति॥ केचन पंचधाइत्यप्यनुवर्त्तयंति ॥ तदेत द्विरुद्धं । अन्येतु ॥ सामर्थ्यवर्जिता हीनवीर्या इत्याहुः अन्यत्र तु निर्वीर्यस्त्राधिकाक्षर इति । आदाविति समुच्चयं चतुर्द्वास्त्रमित्यपि । स्थानत्रये मिलित्वास्त्रचतुष्टयम् । तंत्रांतरे तु भीतनाम्ना श्रयमुक्तः आदावंते तथा मध्ये चतुर्द्धास्त्रेण संयुतम्॥अष्टादशाक्षरं मंत्रंभीतं तं भैरवो ब्रवीत् इति ।अष्टादशाक्षरत्वे विशेषः अत्रापि यः स्यादष्टादशाक्षर इति चरणःकाकाक्षिगोलकन्यायेनोभयत्र संबध्यते ॥ इति वाक्वचित् ज्ञातव्यो भीत इत्येष इति पाठः ग्रंथांतरे तु प्रकारांतरं अथ वर्जिताः सुसिद्धसिद्धसाध्याख्ये रंशैर्हीनाइति ॥ अन्यत्रतु हीनो दुष्टादवाप्तो य इति यस्यादिति ॥ तारः प्रणवः केचन तारं प्रे मिति वदंति ॥ तदयुक्तं ग्रंथांतरविरोधात् । यस्मंत्रमुक्तापल्यां ॥ एकोनविंशत्यर्णो यो यो मंत्रः प्रणवान्वितः महामायांकुशैर्युक्तस्तं प्रध्वस्तं प्रचक्षते ॥ इति ॥ पिंगलामते ॥ यदि सोष्टादशाक्षरः विंशत्येकोन वर्णश्च मायोंकारांकुशान्वितः प्रध्वस्तइत्यसौ मंत्रः शंभुदेवेन कीर्त्तितः॥केच मेतत्परिहाराय यो मंत्रः प्रणवान्वितः इति पाठं पठंति ॥ हृल्लेखामाया तदुक्तंभुवनेशी पारिजाते ॥ मायाबीजमिदं प्रोक्तं भुवनत्रयमक्षरम् ॥ हृल्लेखा पंचयोगेशीति ॥ ८८ ॥ सप्तवर्ण इति ॥ चत्वारिंशल्लिपिः चत्वारिंशदक्षरः तदुक्तं ॥ सप्ताक्षरो भवेद्बालः कुमारश्चाष्टवर्णकः चत्वारिंशाक्षरः प्रौढः स्तरुणः षोडशाक्षर । इति अन्यत्र बालो लघ्वक्षरात्मक इति ग्रंथांतरे तु ॥ अष्टढाः बालकाः कार्थ्य इति । अन्यत्र तु गुरोरप्यविधाने न प्राप्तो यौवनगर्वित इति । ग्रंथांतरे तु ॥ तरुणा अतिदर्पिता । इति । अन्यत्र तु प्रौढाः प्रभोत्करा इति । त्रिंशदिति । चतुः शताक्षरश्चतुरधिकशताक्षरः मध्यपदलोपी ॥ केचित्तु चतुः शताक्षर इति चत्वारिशतानि अक्षराणि इति व्याचक्षते ॥ तन्न ग्रंथांतरविरोधात् ॥ त्रिंशदर्णं शतार्णं वा चतुःषष्ट्यक्षरं तथा ॥ चतुरूर्द्ध शतं वापि वृद्धइत्यभिधीयते ॥ इति ॥ पिंगलामतेपि त्रिंशद्यत्रशताद्वं वा चतुः षष्टिशतंचतुः शतानि संति वर्णानां समंत्रोवृद्ध संज्ञक इति । असावेवाग्रे वक्ष्यति ॥ अतिवृद्धलक्षणे चतुःशतान्यथारभ्य यावद्वर्णसहस्रक मिति ॥ तेन च विरोधः स्यात् ॥ ग्रंथांतरे च वृद्धकर्मैव कुर्वंतिवृद्धास्ते इति ॥ ८९ ॥ नचेतिध्रुव ओंकारः नवाक्षरत्वं ध्रुवयुक्तत्वमेकस्यैव निस्त्रिंशोघातुक इत्यर्थः । पिंगलामते । नवाक्षरस्तुनिस्त्रिंशो ध्रुवयुक्तोपमृत्युदइति ॥ ९० ॥ यस्येति ॥ हृदयमंत्रः नमः शिरोमंत्रः स्वाहा शिखावषट् वर्महुं शिवोक्तं शक्त्यर्णः सः इति । विकल्पद्वय मध्य एव अत्रसंस्यातामिति प्रामादिकः पाठः नस्यातामिति सांप्रदायिकः तदुक्तं । हृच्छिरोन्ते शिखा वर्म मध्ये नेत्राखकेथवा ॥ ९१ ॥ शिवशक्त्यात्मको वर्णो न

यस्मिन्मह्श्यते ॥ ९२ ॥ स मन्त्रः सिद्धिहीनः स्यात् मन्दः पङ्क्त्यक्षरो मनुः ॥ कूट एकाक्षरो मन्त्रः स एवोक्तो निरंशकः ॥ ९३ ॥ द्विवर्णः सत्वहीनः स्यात् चतुर्वर्णस्तु केकरः॥ षडक्षरो वीजहीनस्त्वर्द्धसप्ताक्षरो मनुः ॥ ९४ ॥ सार्द्धद्वादशवर्णो वा धूमितः स तु निन्दितः सार्द्धवीजत्रयस्तद्वदेकविंशतिवर्णकः ॥ ९५ ॥ विंशत्यर्णस्त्रिशदर्णो यः स्यादालिंगितस्तु सः ॥ द्वात्रिंशदक्षरो मन्त्रो मोहितः परिकीर्त्तितः ॥ ९६ ॥ चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः ॥ क्षुधार्त्त सः तु विज्ञेय श्चतुर्विंशतिवर्णकः ॥ ९७ ॥ एकादशाक्षरो वापि पञ्चविंशतिवर्णकः ॥ त्रयोविंशतिवर्णो वा मन्त्रो दृप्त उदाहृतः ॥ ९८ ॥ षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णक स्तथा त्रिंशदेकोनवर्णो वा प्यङ्गहीनो भिधीयते॥अष्टाविंशत्यक्षरो वा एकविंशदथापि वा ॥ ९९ ॥ अतिक्रुद्धः स कथितो निन्दितः सर्वकर्मसु ॥ त्रिंशदक्षरको मन्त्रः त्रयःस्त्रिशदथापि वा ॥ १०० ॥ अतिक्रूरः स कथितो निन्दितः सर्वकर्मसु ॥ चत्वारिंशतमारभ्य त्रिषष्टिर्यावदापतेत् ॥ १०१ ॥ तावत्सख्यानिगदितामन्त्राः सव्रीडसंज्ञकाः॥ पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः ॥१०२ ॥ एकोनशतपर्यन्तं पञ्चषष्ट्यक्षरादितः ॥ ये मन्त्रास्ते निगदिताः स्थानभ्रष्टाह्वया बुधैः ॥ १०३ ॥ त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः ॥ विकलास्तेभिधीयन्ते शतं सार्द्धं शतं तु वा ॥

स्तौयस्य स मंत्रराट निर्वीजे इति संप्रोक्ताः सर्वकर्मसु गर्हित इति। तंत्रांतरे तु ॥ निर्वीजस्तु समाख्यात आदावोंकारवर्जित इति। एष्विति। निर्वीजलक्षणे तंत्रांतरोक्तादि ग्रहणसूचनार्थम् ॥ तदाह एष्विति ॥ आदिमध्यावसानेषु एषां समुच्चयः षोढेत्यत्रापि स्थानत्रये मिलित्वा षट्। मंद इति। पंक्त्यक्षरो दशाक्षरः। तदुक्तं। दशाक्षरो भवेन्मंद इति। तंत्रांतरे ॥ प्रभाहीना मंदाइति कूट इति तदुक्तं कूट एकाक्षरोथवा निरंशः सभेन्मंत्र इति ॥ ९३ ॥ द्विवर्ण इति। तदुक्तं द्व्यक्षरः सत्ववर्जित इति ॥ अन्यत्र तु सत्ववर्जितास्तमसोत्कटा इति ॥ चतुर्वर्ण इति चतुर्वीजः। पिंगलामते विशेषः। ध्रुवहीनश्चतुर्वीजैषड्भिर्वाकेकरोमत इति। षडक्षर इति अन्यत्र वीजवर्जिता ॐकाररहिता इति ॥ अर्द्धेति। अत्रार्द्धसप्ताक्षरत्वमर्द्धद्वादशवर्णत्वंच अंतेव्यंजनसत्वात्ज्ञेयं ॥ सार्द्धवीजत्रयस्तद्वदिति ॥ वीजंवर्णः तद्वद्धूमित इत्यर्थः तदुक्तं अर्द्धसप्ताक्षरो मंत्र सार्द्धद्वादशवर्णकः धूमितः स समाख्यातः सार्द्धवर्णत्रयोथवा इति ॥ त्रिंशदर्णस्यदृब्धत्वमालिंगित्वंतथैवच। दृप्त इति ॥ उद्देशावसरेष्वतिदृप्तस्योद्दिष्टत्वाल्लक्षणावसरेदृप्तलक्षणं कथं क्रियत इति न मंतव्यं सत्यप्युपसर्गेर्थाभेदात्। तदुक्तम्। धात्वर्थं वाधते कश्चित् कश्चित्तमनुवर्त्तते ॥ तमेव विशिनष्टयन्योऽ नर्थकोन्यः प्रयुज्यतइति ॥ मंत्रमुक्तावल्यां तथोक्तः चतुर्विंशाक्षरं वाथमंत्रमेकादशाक्षरं शतार्द्धत्रयोविंशमितिदृप्तं तु तं विदुरिति ॥ ९८ ॥ षड्विंशतीति ॥ त्रिंशतः एकऊनो येषुप स्याद्वहुव्रीहिः अंगहीनो मंत्रमुक्तावल्याम् ॥ अष्टत्रिंशदक्षर इति। चतुर्थोप्युक्तः चत्वारिंशदिति ॥ चत्वारिंशदक्षरमारभ्य एकैकाक्षरवृध्या चतुर्विंशति प्रकारः सव्रीडः मंत्रमुक्तावल्यां चतुःषष्ट्यक्षरं यावदिति ॥ १०२ ॥ एकोनेति पंचषष्ट्यक्षर आदिर्यस्येत्यतद्गुणसंविज्ञानो वहुव्रीहिः इतः पंचषष्ट्यक्षरादितिवाक्छेदः तस्य पूर्वं शांतमानसतोक्तः मंत्रमुक्तावल्यामपि ॥ पंचषष्ट्युत्तराये च यावदेकोनकंशतमितितेन स्थानभ्रष्टए-

१०४ ॥ शतद्वयं त्रिनवतिरेकहीनाथवापि सा ॥ शतत्रयं वा यत्संख्या निःस्नेहास्ते समीरिताः ॥ १०५ ॥ चतुःशतान्यथारभ्य यावद्वर्णसहस्रकम् ॥ अतिवृद्धः प्रयोगेषुपरित्याज्यः सदा बुधैः ॥ १०६ ॥ सहस्रार्णाधिका मन्त्राः दण्डकापीडिताह्वयाः द्विसहस्राक्षरा मन्त्रा खण्डशः शतधा कृताः ॥ १०७ ॥ ज्ञातव्यास्तोत्ररूपास्ते मन्त्रा एते यथा स्थिताः ॥ तथा विघाश्चबोद्धव्या मन्त्रिभिः काम्यकर्मसु ॥ १०८ ॥ दोषानिमान विज्ञाय यो मन्त्रं भजते जडः ॥ सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ ११० ॥ इत्यादिदोषदुष्टांस्तान् मन्त्रान्नात्मनियोजयेत् ॥ शोधयेदूर्ध्वपवनो वद्धयायोनिमुद्रया ॥ १११ ॥ मन्त्राणां दकैकाचरद्वध्या चतुस्त्रिंशत्प्रकारः ॥ १०४ ॥ शतमिति ॥ शतद्वयं द्विनवतिरित्येकः सार्द्धशतद्वयं द्विनवतिरेकहीना तेनैकाधिकानवतिः शतद्वयंच एवंपंचप्रकाराः पिंगलामते तु एकद्वित्रिशतै वर्णैर्युक्ता निस्ने ह्वृत्तयः इति त्रि प्रकार एवम् ॥ मंत्रमुक्तावल्यां षष्ठोप्युक्तः त्रिंशतंत्वेकवर्जितमिति ॥ केचन शतद्वयमित्येकः प्रकारः द्विनवतिरित्यन्यः सएकहीना एकाधिकानवतिरित्यपरः प्रकार इत्यूचुः तन्न ॥ षट्षष्टिप्रभृतीनामेकोनशतपर्यंतं स्थानभ्रष्टाह्वयत्वस्योक्तत्वात् त्रिंशद्वर्णवदेकस्यैवदोषद्वयदुष्टत्वं च भविष्यतीति चेत्। तन्न शतादारभ्याधिकस्यैव शतत्रयपर्यंतमुक्तत्वात् यत्संख्येति। सर्वत्र संवध्यते॥येषां मंत्राणां संख्याशताधिका इति ते निस्नेहाइति संवंधः योगेषुप्रयोगेषुये दंडकास्ते स्तोत्ररूपास्ते पीडिताह्वया ज्ञातव्या इति संवन्धः ननु मंत्राणामेवैतेदोषा उक्ता विद्यासु निर्दोषा इत्याशंक्याह ॥ मंत्रा एते इति ॥ यथा मंत्रा एतेस्थिताः सदोषाः तथा मंत्रिभिर्विद्याअपिवोद्धव्याः तदुक्तम्॥यथा मंत्रास्तथा विद्या भेदभिन्नाः परस्परं ज्ञातव्यादेशिकेंद्रेण नानातंत्रेषु भाषिता इति काम्य कर्मस्वित्यनेनमुक्त्यर्थं मंत्रजपे एतद्दोषाभावात् दशसंस्कारा अपिन कर्त्तव्याः एतच्चोपलक्षणं तेन वक्ष्यमाणनत्त्रशोधनादिकमपि मुक्त्यर्थं न कर्त्तव्यमिति॥आदिशब्दात् मीलितविपक्षस्थदारितमूकनग्नभुजंगमशून्यहतादि दोषा ज्ञेयाः तल्लक्षणानि यथा॥मीलिता कर्म्यत्यतिजडाः मंत्रामंत्रिणायोजिता अपीति विपक्षस्थारिपोः पक्षमाश्रिता इति आदिमध्यावसानेषु भ्रुवो यस्य न विद्यते॥सदारित इति ख्यातस्तंत्रेस्मिन् कृतिवाससेति। न्यासं विना भवेन्मूक इति। पल्लवेन विनानग्नः संपरिकीर्त्तित इति॥ऋषिदैवतच्छंदोभिः परित्यक्तो भुजंगम इति। यस्य जापंशृणोत्यन्यः स मंत्रः शून्य उच्यते इति शिरोहीनो हतः प्रोक्त इति ॥ शोधनप्रकारमाह ॥ मंत्रानात्मनीतिकार्य्यकारणादन्यन्यदेवेति या भावना सा आत्मनि योजना॥क्वचिन्मंत्रान्स्वात्मनि योजयेत् इति पाठः प्रकारांतरेण शोधनमाह शोधयेदिति। वक्ष्यमाणलक्षणां योनिमुद्रांबध्वामूलाधारोत्पन्नान्मंत्रवर्णान् ब्रह्मरंध्रपर्यंतं गतागतानिकुर्वतो ध्यात्वा वायुधारणं कृत्वा सहस्रंजप इतिशोधनप्रकारमाहुः।तदुक्तम्। योनिंबध्वा वीजं विंद्वादिपथेन चोन्मनीं प्राप्य तत्र सहस्रं मन्त्रं जपेत् स मन्त्रः प्रवुद्धः स्यादिति योनिमुद्रालक्षणम् यथा पार्ष्णि भागात्सु संपीड्य योनिमार्गं तथा गुदम्॥अपानमूर्द्ध्वमाकर्षेत् मूलबन्धोनिगद्यते॥ गुदमेढ्रांतरं योनिस्ताभाकुञ्च्य प्रबन्धयेत् युवा भवति वृद्धोपि सततं मूलबन्धनात्॥ इति योनिस्थानमुद्रणात् योनिमुद्रात्वमस्याः तदाहुः सेयं मयोक्ता खलु योनिमुद्राबन्धश्च देवैरपि दुर्लभो स्याः यनेन वन्धेन साध्यते यत् नास्त्येव तत्साधकपुङ्गवस्य। छिन्नाद्याः कीलितास्तंभिता ये

न्त्रसंस्काराः कथ्यन्ते सिद्धिदायिनः ॥ जीवनं जननं पश्चात्ताडनं बोधनं तथा ॥ ११२॥ अथाभिषेको विमलीकरणाप्यायने पुनः ॥ तर्पणन्दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥११३॥ मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ ११४ ॥ प्रणवांतरितान्कृत्वा मन्त्रवर्णान्जपेत्सुधीः ॥ एतज्जीवनमित्याहुर्मंत्रतंत्रविशारदाः ॥ ११५ ॥ मन्त्रवर्णान्समालिख्य ताडयेच्चंदनांभसा ॥ प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ॥११६॥ विलिख्य मंत्रं तं मंत्री प्रसूनैः करवीरजैः ॥ तन्मंत्राक्षरसंख्यातैर्हन्याद्वातेन बोधनम्॥ ११७ ॥ स्वतन्त्रोक्तविधानेनमंत्री मंत्रार्णसंख्यया ॥ अश्वत्थपल्लवैर्मंत्रमाभिषिंचेद्विशुद्धये ॥ ११८ ॥ संचिन्त्य म-

सुप्ता मत्ता मूर्च्छिता हीनवीर्याः। दग्धास्त्रस्ताः शत्रुपक्षे स्थितायेबाला वृद्धा गर्विता यौवनेन। ये निर्बीजा ये च सत्वेन हीना खण्डीभूतास्त्वांगमन्त्रैर्विहीनाः। एतेमुद्राबन्धनेनैवयोन्या मन्त्राः सर्वे वीर्यवन्तो भवन्ति इति एवं न येयोगिनो योनिमुद्रानभिज्ञाः पवनधारणाशक्तास्तान्प्रति दशसंस्कारैः शोधनमाह। मन्त्राणामिति। पिंगलामतेपि। इत्यादिदोषसंयुक्ता विघ्ना या मन्त्रिणाणवः। तस्मात्तच्छोधनार्थाय क्रमः कोपि निगद्यते ॥ जननं जीवनं बोधस्ताडनं निर्मलीकृतिः ॥ आप्याय नाभिषेको च क्रियांगैः सप्तभिर्ध्रुवम् ॥ शोधिताः सकलामन्त्राभवन्ति किलकामदा इति। मन्त्रतन्त्रप्रकाशेपि ॥ अथास्मै प्रवदेन्मन्त्रं संस्कृतं सुमुहूर्त्तके ॥ सप्तैते मन्त्रसंस्कारा दुर्लभा भुवि मानवैः जननं जीवनं चेत्यादिना ॥ अत्र तर्पणदीपनगोपनलक्षणा त्रयः संस्काराः सामान्यतः प्रसिद्धा इति तान्विहाय सप्तेत्युक्तिरितिज्ञेयम्॥ मन्त्राणामिति। मातृकामध्यादित्यनेनैतदुक्तं भवति॥ शुभेपीठादौ कुंकुमगोरोचनादिना मातृकाब्जं विलिख्य देयमन्त्रस्यैकैकमक्षरं मातृकाब्जत उद्धरणीयमिति तदुक्तम्। वर्णाब्जं च संलिख्य समुद्धरेन्मन्त्रजन्मैतदिति। प्रणवेति। तत्र प्रणवान्तरितत्वमेवम्॥ ॐ रां ओं रा ओं मा ओं य ओं न ओं मःसुधीरित्यनेन शतावृत्येत्युक्तम् तदुक्तम् प्रणवमध्ये तांस्तुमन्त्रजवर्णान् प्रजपेच्छतावृत्या। एतज्जीवनमुक्तमिति ॥ मन्त्रतन्त्रविशारदाः इत्यनेनान्ये अस्य बीजनमितिनाम आहुरित्युक्तं। यत्पिंगलामते ॥ प्रणवो बीजमित्युक्तं बीजान्ते तं नियोजयेत्॥ अक्षरान्तरितं कृत्वा मन्त्रोसौ बीजितो मत इति ॥ मन्त्रीति॥ मन्त्री त्यनेन भूर्जे कुंकुमगोरोचनादिना मन्त्रवर्णान् विलिख्येत्युक्तम्॥ वायुना यमितिबीजेन प्रत्येकं शतवारं ताडयेत् ॥ तदुक्तम् ॥ भूर्जेमन्त्राक्षराणि संलिख्य शतमप्येकैकं चन्दनांबुना वायुबीजेन एतत्ताडनमुक्तमिति॥विलिख्येति॥मन्त्रीत्यनेन भूर्जेकुंकुमरोचनादिना लेखनमित्युक्तम्॥ करवीरजैरिति रक्तकरवीरजपुष्पैः यान्तेनरमितिबीजेन ॥ तदुक्तम्॥ एतस्मिन् विलिखितमन्त्रवर्णसंख्याकरक्तकरवीरैः तद्बोधनमुक्तं यद्वन्याद्वन्हिबीजेनेति ॥११६ ॥ स्वतन्त्रेति स्वतन्त्रोक्तविधानेन शैवमन्त्रे शिवतन्त्रानुसारात् शक्तिमन्त्रेशक्तितन्त्रानुसारात् विष्णुमन्त्रेवैष्णवतन्त्रानुसारात्॥इतिज्ञेयम् पर्वत्रत् भूर्जेमन्त्रवर्णानालिख्याभिषिंचेदिति ॥ मन्त्रीत्यनेन अमुष्यमन्त्रस्यामुकमन्त्रमभिषिञ्चामि नम इति प्रयोग उक्तः। तदुक्तम्। निजतन्त्रेरितमार्गादभिषिञ्चेत् पिप्पलप्रवालेन भूर्जेविलिखितमन्त्रंशतमष्टौचाभिषेकोयमिति। पिंगलामते विशेषः। मालतीकलिकाभिस्तुभ्यस्यामुकर्णिकोपरि॥ अश्वत्थपल्लवैः शुद्धै स्तन्मन्त्राक्षरसम्मितैः। अभिषेकं प्रकुर्वीत स्वतन्त्रे विहितं य-

नसा मंत्रं ज्योतिर्मंत्रेण निर्दहेत् ॥ मंत्रे मलत्रयं मंत्री विमलीकरणंत्विदम् ॥ ११९ ॥ तारं व्योमाग्निमनुयुक् दंडीज्योतिर्मनुर्मतः ॥ कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः १२० तेन मंत्रेण विधिवदेतदाप्यायनं मतम् ॥ मंत्रेण वारिणा मंत्रे तर्पणं तर्पणं स्मृतम्॥१२१॥ तारमायारमायोगे मनोर्दीपनमुच्यते ॥ जप्यमानस्य मंत्रस्य गोपनं त्वप्रकाशनं ॥ १२२ ॥ संस्कारा दशसंप्रोक्ताः सर्वमंत्रेषु गोपिताः ॥ यान् कृत्वा संप्रदायेन मंत्री वांच्छितमश्नुते ॥ १२३ ॥ स्वताराराशिकोष्ठानामनुकूलंभजेन्मनुं ॥ प्रापलोभात्पटुःप्राज्यं रुद्रस्यात्ररुरुःक

थेति ॥ मालतीकलिकाभिर्मंत्राक्षराणि विलिख्याभिषेकं कुर्यात् ॥ संचिन्त्येति । ज्योतिर्मंत्रेण वक्ष्यमाणेन मन्त्रीत्यनेन मूलाधारात् कुण्डलिनीमुत्थाप्य तद्द्वारा दोषदाहइत्युक्तम् ॥ मलत्रयं सहजमागन्तुकम् मायीयमिति ॥ पिंगलामतेप्युक्तम्। सहजागंतु मायाख्यं ज्योतिरूपेण निर्दहेत् ॥ मन्त्रे मलत्रयं मन्त्री तनोसौ निर्मलोभवेदिति ॥ ११८॥ ज्योतिर्मंत्रमाह ॥ तारमिति ॥ तारः प्रणवः व्योमहः अग्नी रेफः मनुरौएतद्युक्दण्डी अनुस्वारयुक्त इति मन्त्रविशेषणम् ॥ क्वचपाठे व्योमविशेषणम् तदुक्तम् निघण्टु मातृकायाम्, अमक्रूरेशकोदण्डी बिन्दुकः कामगुह्यकः कंचुः प्राचीनयोनिश्वसौख्यदुःखप्रबन्धक इति एवमग्रेपिदण्डशब्दवाच्यत्वंविन्दोर्ज्ञेयम् ॥ कुशेति ॥ जप्तेनाष्टोत्तरशतमिति ॥ लेखनं पूर्ववदेव तेनेत्युभयत्र सम्बध्यते ॥ तदुक्तम् पिंगलामते॥अष्टोत्तरशतालब्धं विशुद्धंकुशवारिणा । आप्यायितो भवेन्मंत्रः प्रत्यर्णं प्रोक्षितो यदीति विधिवदिति प्रत्यर्णं सप्तधा के च न तेन मन्त्रेणेति ज्योति र्मंत्रेणेति व्याचक्षते ॥ तदसत् ॥ ग्रन्थान्तरविरोधात् ॥ तदुक्तम् ॥ आप्यायनं स्वजप्तैः प्रत्यर्णं कुशपयोभिः स्यादिति तेन मूलमन्त्रेणेति । तत्र प्रकारः । देयमन्त्रमुच्चार्य्यामुं मन्त्रं तर्पयामि नम इति जलेन तर्पणम् कुर्यादिति इदमेव मन्त्रतर्पणमित्यर्थः। तदुक्तम् तर्पयामि पदं योज्यम् मन्त्रान्तेत्विष्टनामसु। इती यात्तेषु तु पुनरिति अन्यत्रापि सर्वत्र तर्पणे अयमेव प्रकारो द्रष्टव्यः इदमप्यष्टोत्तरं शतम् ॥ तारेति ॥ तारः ओं माया शक्तिः रमा श्रीं, मंत्रस्यान्ते भवेन्नाम योगः प्रोच्चाटने मतः ॥ इति योगलक्षणस्योक्तत्वात् अत्र मंत्र एव नामस्थानीयः तेन इमानि बीजान्यादौ कृत्वा मंत्रं जपेत् सप्तवारमित्याचार्य्याः ॥ सम्प्रदायेनेति ॥ सम्प्रदायः प्रतिसंस्कारं मयोक्तोनुसन्धेयः । अथनिर्गुणोपासनाङ्गभूत सगुणोपासनायां प्रवृत्तस्य अवान्तरविचारं दर्शयति ॥ १२२ ॥ स्वतारेति ॥ स्वंनाम तस्य तारानक्षत्रम् ॥ एवमग्रेपि ॥ दुष्टर्क्षराशिभूतारिवर्णप्रचुरमंत्रकम् । सम्यक् परीक्ष्य तं यत्नाद्वर्जयेन्मतिमान्नर इत्युक्तेः तत्र तारामैत्रीज्ञाना याक्षरेषु नक्षत्राणि कथयति १२३ ॥ प्रापेति ॥ अथ ग्रंथकारस्य वाररुचः संकेतोभिप्रेतः ॥ स यथा कटपयवर्गभवैरिह पिंडान्त्यैरक्षरैरंकाः नञिच शून्यं ज्ञेयं तथा स्वरे केवले कथितमिति ॥ अत्र कटौ नववर्णौ पाद्यः पंचार्णः योष्टार्णोद्दांतः पिंडसंयुक्ताक्षरं अत्र अंत्येनांकः ॥ प्रा २ प १ लो ३ भां ४ न्य १ टुं १ प्रा २ ज्यं १ रु २ द्र २स्या१ त्र २ रु२ रु २ ष्क १ रम् २। लो ३ क १ लो३प १ प१टु१ प्रा २ प१ ख ३ लो३ यो १ एवमुक्तद्वाराक्षरेषु अश्विन्यादयो ज्ञेयाः भेषु नक्षत्रेषु क्रमात् वर्णाः भेदिताः विभागेन दर्शिता इत्यर्थः ॥ तदेत्युत्तरत्रसंबध्यते ॥ अत्र यकारयकारयोर्नागरलिपौसमानत्वात् भ्रांतिकृतोयकार

रे॥ १२४ ॥ लोकलोपपटुः प्राप खलौघोभेषु भेदिताः॥ वर्णाः क्रमात्स्वरांत्यौ तुरेवत्यंतगतौ सदा ॥ १२५ ॥ जन्मसंपद्विपत्क्षेम प्रत्यरिः साधको वधः ॥ मित्रं परममित्रं च जन्मादीनि पुनः पुनः ॥ १२६ ॥ बालं गौरं खुरं शोणशमी शोभेति राशिषु ॥ क्रमेण भे-

पाठः॥ तेनयइति ॥ एकांकः संगृहीतः स्वरांत्यौ अंअः रेवत्यंगगतौ॥ अतोरेवत्यां अंअःल इत्यक्षरत्रयं रेवत्यंगगताविति पदेनैवोक्तोरंकेषु न संगृहीतं॥ यथा वक्ष्यमाणे राश्यक्षरकथने ॥ १२४ ॥ बालं गौरं खुरमिति। रेफेण कन्यायामक्षरद्वयमेवोक्तम्।अन्येषां कन्यायां शादय इति पदेनैवोक्तेः तद्वदत्रापीत्यवधेयम्॥ उत्तरभाद्रपदनक्षत्रे लकारेणांकत्रयं गृहीतं॥ तेन षसहाक्षराणि तत्र षकारस्य चकारांशत्वात् चकारोपि तेन गृहीतः तेनात्राक्षरचतुष्कं । तदुक्तमाचार्यैः। ततः चकारः संजातो नृसिंहस्तस्य देवता ॥ स पुनः षसहैः सार्द्धं परः प्रोष्ठपदं गत इति। ईशानशिवेनापि। प्रियलवकाटरम्याश्रीप्रियाराश्रिरन्या स्वगकुलकाटकस्तोपात्रवालेति संख्यानिति॥ नारायणीये तु राज्येत्यादिषट्विंशतिभेषु वर्णानुक्त्वाश्रमसावंत्यभे उक्तौ तत्र केचि तु स्वाविति पठित्वा व्याख्यांति लकारेणांकत्रयं वकारेणांकचतुष्टयमिति। तदसत्। संकेतविरोधात्॥ संकेते हि पिंडांत्यैरक्षरैरंका इत्युक्तं। एतदभिप्रायेणैव द्विवचनकल्पनं तदपि भ्रमेणैव यतः संकेताक्षरेषु साधुत्वार्थं प्रथमैकवचनमेव युक्तम्॥न तु संयोगं कृत्वा द्विवचनं तथा कुत्राप्यदर्शनादत एवायं पाठो ऽपेक्षितार्थद्योतनिकादिभिष्टीकाभिरुपेक्षितः अपरेववाविति पठित्वा वदंति॥ पवर्गीयवकारेणांकत्रयमुत्तरेणांतस्थीयवकारेणांकचतुष्टयमिति॥ तदपि प्रपंचसारेशानादिग्रंथविरुद्धं ततो ऽयमेव पाठो नारायणीयेपि परंतु व्याख्यातुस्तत्र भ्रमः॥ प्रथमोंतस्थो वकारस्तेन चतुः संख्या द्वितीयो पवर्गी तेनत्रिसंख्येति सर्वं समंजसम्॥ देवदेवेशीकारस्तु प्रपंचसारादिविरोधपरिहारार्थं फुल्ला इति पठित्वा तत्र प्रथम लकारेणां कत्रयं उत्तर लकारेणां कत्रयं गृहीतमितिव्याख्यातम् तदपिसंकेतविरुद्धं॥ संकेतेपिण्डेनांकद्वयस्यागृहीतत्वात्॥ एतेन अश्वा अश्विनी॥ इभरणी ईउऊ कृतिका इत्यादि ज्ञेयं॥ स्व नामाद्यक्षरादित इति॥ वक्ष्यमाण मधा पियोजनीयं तेनयमन्वयः तदा वर्ण भेदे स्व नामाद्यक्षरादितः जन्मादीनि पुनः पुनः प्रादक्षिण्येनमंत्राद्यक्षरावधि गणये दितिशेषः। तेन यस्मिन्न ऋक्षे साधक नामाद्यक्षरं तदारभ्यमंत्रा द्यक्षर नक्षत्रं यावत्प्रादक्षिण्येन फलं विचारयेत् इत्यर्थः। तदुक्तं प्रादक्षिण्येन गणयेत् साधकाख्याक्षरात्सुधीरिति॥अन्यत्रापि एकादि नवपर्यंतंस्वाख्याद्यर्ण प्रपूर्वकं॥ यावन्मंत्राक्षरं धिष्ण्यंफलं तावद्वि चारयेत् इति। अन्यत्रापि एकादि नवपर्यंतं स्वाख्याद्यर्णप्रपूर्वकं एवं विभक्त वर्णेषु नक्षत्राणि प्रकल्पय च॥ आरभ्य जन्म नक्षत्रं मंत्र तारावसानिकम्॥ इदं तु राशि नाम प्रसिद्ध नाम्नोरैक्ये ज्ञेयम्॥विभज्य नवशो राम विशिखा चलमंत्रकाः। वर्ज्याः शिष्टाः समिष्टार्थ सिद्धिदा स्युर्ज्जपा दिभिरिति॥ आद्य तृतीय पंचम सप्तमा न्वर्जयित्वा शेषं शुभं। तदुक्तं। त्यक्त्वा त्रि पंचादिम सप्त तारा इति॥ अन्यत्रापिर साष्टनव भद्राणि युग युग्म गतान्य पि॥ इतराणि न भद्राणि ज्ञातव्यं तंत्र कोविदै रिति॥कें चन आद्य मपि शुभ मिच्छन्ति तदुक्तं विपद्वधः प्रत्यरि श्च परित्याज्या मनोषिभि रिति इदं त्वाद्य जन्म विषयम् अत्र तारा मैत्री विचारेयोनिमैत्रीगण मैत्री चा वश्यं विचारणीया यत स्तयो रपि नक्षत्रा त्मकत्वात्॥ स्वकुल न्यकुलविचारोपि पिंगला मते।तथै क गण नक्षत्र स्वकुलं ह्यकुलं पर मित्युक्तेः।तथा मंत्र मुक्तां

भिः पुनः ॥ सिद्धादीन् सिद्धिदः सिद्धो जपात्साध्यो हुतादिभिः ॥ १३० ॥ सुसिद्धःप्रा-
सिद्धस्तु तत्साध्यो द्विगुणा जपात्। जपादर्धात्ततसुसिद्धस्तु तदरिर्बान्धवापहः।द्विन्नाज्जपात्साध्यसिद्धः
स्तत्साध्यस्तुनिरर्थकः। ततसुसिध्यः सार्धजपात् तदरिर्गोत्रजापहः। सुसिद्धसिद्धोर्धजपात् तत्साध्यो
द्विगुणाज्जपात्। तत्सुसिद्धोग्रहादेव तदरिर्ज्ञातिजातिहा। अरिसिद्धः सुतंहन्यात् अरिसाध्य-
स्तु कन्यकाम्। ततसुसिद्धस्तु पत्नीघ्नस्तदरिः साधकापहः इति। पिंगलामते प्रत्यक्षरं सिद्धादि-
गणनोक्ता। मातापितृकृतम् नाम यच्चाप्यभिजनैः कृतम्। विश्लिष्य तस्य वैवर्णान्स्वरवर्णविभेदतः।
तथैव मंत्रजोजानि ततः शोधनमारभेत्। बिंदुद्विबिंदुकोपधमानोय जिह्वां म्रिसंभवान्। संहत-
क्षारणप्राप्त मधिकाक्षरमेव च। अपभ्रंशाक्षरम् लक्षौत्यक्त्वा षंढचतुष्टयम्। मंत्राक्षरैः सहैकैकं नाम-
वर्णान् विशोधयेत्। व्यंजनैर्व्यंजनानेव स्वरैः सार्धं स्वरांस्तथा। आद्यमाद्येन संशोध्य द्विती
येन द्वितीयकम्।मन्त्रे वाप्यथ वा नाम्नि वर्णास्युर्विषमा यदा। तदा मन्त्र समारभ्य समं यावत् प्र-
योजयेत्। आद्यन्तयोः सिद्धवर्णौ मन्त्रे यस्मिन् वरानने। अचिरेणैव कालेन स तावत्सर्वसिद्धिदः।
साध्यान्तादियुतो यस्तु सोतिकृच्छ्रेण सिध्यति। आदावन्ते सुसिद्धस्तु सर्वकामविभूतिदः। आदा-
वन्ते रिपुर्यस्य भवेत्याज्यः स मन्त्रकः। आदौ सिद्धोंत्यसाध्यो यो द्विगुणेन स सिध्यति। आदौ सिद्धः
सुसिद्धान्तो यथोक्तात्सिध्यते जपात्। आदौ सिद्धोंत्यशत्रुर्यः स त्याज्यो मन्त्रिसत्तमैः। साध्यादिश्चैव
सिद्धान्तस्त्रिगुणात्सिध्यते जपात्। आदौ साध्यः सुसिद्धान्त प्रोक्तमार्गेण सिध्यति। आदौ साध्य-
स्त्वन्तशत्रुर्यत्नात्तं परिवर्जयेत्। सुसिद्धादिस्तु सिद्धान्तो यथोक्तादेव सिध्यति। सुसिद्धादिस्तु सा-
ध्यान्तश्चतुर्गुणमपेक्षते। सुसिद्धादिश्चान्तशत्रुर्मध्यमः परिकीर्त्तितः। आद्यारिस्त्वन्तसिद्धादिः सोपि
त्याज्योत्र कर्मणि। आदौ मध्ये तथा चान्ते सिद्धः शुभफलप्रदः। सर्वसाध्य उदासीनः प्रोक्तस्तन्त्रे
स्वयंभुवा। स्थानत्रितयसुसिद्धः सर्वानर्थांश्च साधयत्येव। स्थानत्रितयगतारिर्मन्त्रो मृत्युर्न सन्देहः।
सिद्धादिसाध्ययुग्मान्तो व्यर्थ इत्युच्यते बुधैः। सिद्धादिर्द्विसुसिद्धान्तः सर्वकार्यार्थसाधकः। सिद्धादिररि-
युग्मान्तो नाशकः सम्प्रकीर्त्तितः। शत्रुर्भवति यदादौ मध्ये सिद्धस्तदन्तके साध्यः। कष्टेन कार्यसि-
द्धिस्तस्य फलं स्वल्पमेव भवेत्। अन्ते यदि भवति रिपुः प्रथमे मध्ये च भवति साध्ययुगम्। कार्यं
विलम्बितं स्यात् प्रणश्यति क्षिप्रमेवान्ते। आद्यन्तयोर्यदा साध्यो मध्ये सिद्धः प्रजायते। आद्यन्तयो-
र्यदा सिद्धो मध्ये साध्यः प्रजायते। तावुभौसाध्यसिद्धौ हि जपाधिक्येन सिध्यतः। अरिसंपुटितः सिद्धः
सुसिद्धोपि तथा भवेत्। सर्वनाशकरो ज्ञेयः साधकस्य न संशयः। सिद्धान्तरितसाध्यस्तु सुसिद्धान्त-
रितोथ वा। शीघ्रं सिध्यति मन्त्रोयमीशानः स्वयमब्रवीत्। सिद्धान्तरितशत्रुस्तु सुसिद्धेनापि चे-
द्भवेत्। नासौ रिपुर्मवेन्मन्त्रः किं तु कृच्छ्रेण सिध्यति। साध्यान्तरितसिद्धस्तु सुसिद्धोपि तथा यदि।
सिध्यत्यतीव कष्टेन साधकस्य च नान्यथा। रिपुणान्तरितः सिद्धः सुसिद्धोपि तथा तदि। ईदृशं ल-
क्षणं दृष्ट्वा दूरतः परिवर्जयेत्। रिपुणांतरितो मन्त्रो नैव देयः कदा चनेति। नारायणीयेपि। दु-
ष्टार्णप्रचुरो मन्त्रो यःस्यात् स च विनिन्दित इति। अपेक्षितार्थद्योतनिकायां व्याख्यातम्। तत्र पूर्व-
वन्मातृकाक्षराणि संलिख्य तत्समीपे मन्त्रंनाम च लिखित्वा। प्रथमाक्षरेण प्रथमाक्षरं शोध-
यित्वा पुनर्द्वितीयाक्षरेण द्वितीयाक्षरं शोधयित्वा नामपरिसमाप्तौ पुनर्नाम लिखित्वा यावन्मन्त्र-
परिसमाप्तिस्तावच्छोधयित्वा यस्मिन् दुष्टार्णाः साध्यार्णाः वैरिणश्च इतरेभ्यो बहवोभवन्ति तदातन्

त्रिमात्रेण साधकं भक्षयेदरिः ॥ सिद्धार्णा बांधवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः १३१
मन्त्रं वर्जयेदित्यर्थः।अत्र केषां चिद्दर्णानां शोधनं नास्तीत्याहुः।नमःप्रणवसंयोगावपभ्रंशाक्षराणि च॥
वर्जयित्वैव गणनं कर्त्तव्यञ्च सुरेश्वरीति । तत्वसागरवादिनः । तत्रैव प्रकारान्तरेण सिद्धादिकल्प-
नमुक्तम्। द्वादशारेथ वा चक्रे कूटषंढविवर्ज्जितान्। आदिक्षान्तांल्लिखेद्दर्णान् पूर्वतो यावदीश्वरम्।
अङ्गानेकादिभान्वन्तान् लिखेत्पूर्वादितः क्रमात्। सिद्धः साध्यःसुसिद्धोरिश्चतुर्दशांशुः स्फुटीभवेत्।
नवैकपञ्चके सिद्धः साध्यः षट्‌दशयुग्मके । त्रिसप्तैकादशे मित्रं वेदाष्टद्वादशे रिपुः । अथवान्यः
प्रकारेण वच्मि मन्त्रांशकं मनाक् । अकारादिहकारान्तं मातृकाक्षरसञ्चयम्। एकैकार्णं क्रमा-
न्न्यस्य चतुःकोष्ठेषु मन्त्रवित्। सिद्धं साध्यं सुसिद्धं च वैरिणं गणयेत् क्रमात् । यत्र यत्र भवंत्यर्णाः
नाममन्त्रसमुद्भवाः। सिद्धसाध्यादिभेदेन वर्णैस्तैर्मंत्रमादिशेत्। अथ वा मन्त्रनामार्णकृते राशौ
चतुर्हृते। सिद्धः साध्यः सुसिद्धोरिमंत्र एकादितो भवेत्। इति। महाकपिलपंचरात्रे तु । त्रिविधः
कीर्त्तितो मन्त्रः सिद्धः साध्यः सुसिद्धकः अल्पाक्षरो भवेत्सिद्धः साध्यो मालार्द्धमालकौ । अत ऊर्द्ध्वं
सुसिद्धः स कवित्वे त्वतिनिन्दित इति। अन्योपि विशेषः। शुचिराराधयेन्मन्त्रं दृष्टादृष्टफलप्रदं।स-
कलं निष्कलं सूक्ष्मं तथा सकलनिष्कलम्। कलाभिन्नं कलातीतं षोढा मन्त्रं शिवोब्रवीत्।सकलं
ब्रह्मरंध्रस्थं तदधो विद्धि निष्कलम् । मानसं सूक्ष्मनामानं हृत्स्थं सकलनिष्कलम् । बिंदुस्थितं
कलाभिन्नं कलातीतं तदूर्ध्वतः।कला कुण्डलिनी सैव नादशक्तिः शिवोदितेति।एषु षट्सु स्थानेषु
चिन्तितो मन्त्रः स्थानस्थः फलप्रदो नान्यथा। यदुक्तं मालिनीविजये। स्थानस्थावरदा मन्त्रा स्था-
नस्थाश्च फलप्रदाः। ध्यानस्थानविनिर्मुक्ताः सुसिद्धा अपि वैरिण इति । यद्यज्ञानादरिमन्त्रग्रहणं
स्यात्तदातत्परित्याग उच्यते । अथारिमन्त्रसंत्यागविधिः सम्यक् प्रकाश्यते । शुचिः समाहितो
भूत्वा प्रारभेत् प्रवरे दिने। अशेषदुःखनाशाय देशिकः प्रवरं विधिम् । तत्रादौ रम्यभवने कुंभं दी-
क्षाविधिक्रमात्।मण्डले स्थापयेद्विद्वान् पूरयेत्तं जलैः शुभैः।विलोममन्त्रपाठेन तत्रावाह्य तु देवताम्॥
संकलीकृत्य संपूज्यावरणानि प्रपूजयेत्। एवं सावरणामिष्ट्वा मन्त्री मन्त्रस्य देवताम् । हुत्वा वि-
लोम मन्त्रेण सर्पिषा गोरपि द्विजः। अष्टोत्तरसहस्रं वाथ वाष्टोतर शतं सुधीः। ब्रह्मार्पणेन मनुना
तथान्ते तर्पयेत्प्रभुम्। ततो यथावत् दुग्धान्नैर्देवताभ्यो बलिं हरेत् । विदिक्षु दिक्षु च तथा वक्ष्य-
माणैर्मनूत्तमैः। आयाहींद्र सुराधीश शतमन्यो शचीपते। नमस्तुभ्यं गृहाणेमं पुष्पधूपादिकं बलिं।
आयाहि तेजसांनाथ हव्यवाह वरप्रद । गृहाण पुष्पधूपादि बलिमेनं सुपूजितम् ।
प्रेतराज समायाहि भिन्नांजनसमप्रभ। बलिं दत्तं गृहीत्वेमं सुप्रीतो वरदो भव । नमस्ते रक्षसां
नाथ निरृते त्वमिहागतः। गृहाण बलिपूजादि मया भक्त्या निवेदितम्। एहि पश्चिमदिक्पाल
जलनाथ नमोस्तु ते। भक्त्या निवेनितां पूजां गृहीत्वा प्रीतिमावह । प्रभञ्जन प्राणपते त्वमेहि
सपरिच्छदः।मया प्रयुक्तं विधिवत् गृहाण बलिमादरात्।कुबेर तारकाधीशा वागच्छेतां सुरोत्तमौ
पुष्पधूपादिभिः प्रीतौ भवेतां वरदौ मम। ईश त्वमेव भगवन् सर्वविद्याश्रय प्रभो। पूजितः पुष्पधू-
पाद्यैः प्रीतो भव विभूतये। आयाहि सर्वलोकानां नाथ ब्रह्मन्समर्चनम्। गृहाण सर्वान् विघ्नान्मे
निवर्त्तय नमोस्तु ते। आगच्छ वरदाव्यक्त विष्णो विश्वस्य नायक । पूजितः परया भक्त्या भव त्वं

सुसिद्धाः पोषकाज्ञेयाः शत्रवोघातका मताः ॥ दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदम् ॥ १३२ ॥ चतुरस्रां भुवं भित्वा कोष्ठानां नवकं लिखेत् ॥ पूर्वकोष्ठादि विलिखेत्सप्तवर्गो-

सुखदो मम। ततः सप्रिवारां च पूजयेन्मन्त्रदेवताम्। मन्त्रेण विपरीतेन पुष्पदीपोपचारकैः। ततस्तु प्रार्थयेद्विद्वान् पूजितां मन्त्रदेवताम्। आनुकूल्यमनालोच्य मया तरलबुद्धिना। यदुपात्तम् पूजितं च प्रभो मन्त्रस्वरूपकम्। तेनमे मनसः चोभमशेषं विनिवर्त्तय। पापं प्रतिहतं चास्तु भूयाच्छ्रेयः सनातनम्। तनोतु मम कल्याणं भाविनी भक्तिरेव ते। इति संप्रार्थ्य मन्त्रेशीं मन्त्रं पत्रे विलोमतः।लिखित्वामलकर्पूरचन्दनेन समर्चयेत्।कलशोपरि संस्थाप्य भक्त्या परमया युतः। तत्पत्रं मतिमान्पश्चात् बध्वा निजशिरस्यथ। स्नायात् पूजितकुम्भस्थतोयैर्मंत्रमयैः शुभैः।पुनश्चान्येन तोयेन कुम्भमापूर्य संयतः तन्मध्ये मन्त्रपत्रं च निक्षिप्याथ प्रपूजयेत्। तं कुम्भं निम्नगातीरे शुद्धे वान्यत्र-लाशये। निक्षिपेदथ विप्रांश्च यथाशक्त्या प्रभोजयेत्। इत्थं कृतविधानस्य रिपुर्मंत्रोद्भवा रुजः।नश्यंत्येव न सन्देहः क्रमात् चित्तप्रसन्नता। जायतेतीव संपन्नो वर्धते तत्कुलं क्रमात् इति। अथ मन्त्र-मुक्तावल्युक्त ऋणधनशोधनप्रकारो लिख्यते। इन्द्र १४ चं २७ नेत्र २ रवि १२ पञ्च दश १५ र्त्तु ६ वेद ४ वन्ह्या ६ युधा ८ ष्ट ८ नवभि ९ गुणिता साध्यान्। दिक् १० भू १ गिरि ७ श्रुति ४ गजा ८ ग्नि ३ मुनी ७ षु ५ वेद ४ षट् ६ वन्हिभिश्च गुणितानथ साधकार्णान्। नामाक्षलाश्च-कठवाट्गजन्भक्तशेषं ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात्। मन्त्रो ऋणी शुभफलोप्यशुभो धनी चतुल्योयदा समफलः कथितो मुनीन्द्रैरिति। तत्र प्रकारः साध्यस्य मन्त्रस्य साधकस्यःशिष्यस्य नामाक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृत्वा स्थापयेत्। ततो मातृकायाः। अकठवात्मकं एकादशैकादशाक्षरं वर्गचतुष्टयं कृत्वा मंत्राक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि इन्द्रादिभिरंकैर्गुणयेत्। साधकनामाक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि दिग्भिरगादिकैर्गुणयेत्। तत्र गुणनप्रकारः यस्मि-न्स्थाने योवर्णस्तं वर्णं तेनांकेन गुणयेत् तत्स्थानमितां कं गुणयेदित्यर्थः। तद्यथा। प्रथमकोष्ठ-स्थोवर्णः अकारः तं च चतुर्दशभिर्गुणयेत् तत्रैकश्चतुर्दशगुणितश्चतुर्दशैव। तथा द्वितीयकोष्ठस्थो वर्णः इकारस्तं सप्तविंशत्या गुणयेत्तेन द्वाभ्यां सप्तविंशतिर्गुणिता चतुःपञ्चाशदेवं तृतीयस्थानस्थो वर्णः उकारो द्विगुणितः षट् भवति। एवं साधकनामाक्षराण्यपि दिगादिभिर्गुणयेत्। साधकनाममन्त्राक्षरेषु आईऊऋऌएपशामंकाल्लघूक्षराणांमिवांका ज्ञेयाः ततः सर्वोप्यङ्कः एकीकृत्य अष्टभिर्भाज्यः यो राशिरधिकःस ऋणी अधमर्णःऊनो राशिर्धनी उत्तमर्णस्तत्र मन्त्रश्चे दधमर्णस्तदा ग्राह्यः न चेन्नग्राह्यः। अथकादिमते कऋणधनशोधनप्रकारो यथा। नामाद्यक्षरमारभ्य यावन्मन्त्रादिवर्णकम्। त्रिधा कृत्वा स्वरैर्भिंद्यात्तदन्यद्विपरीतकमिति। अस्यार्थः। साधकनाम्नो यदाद्यक्षरं तत आरभ्य मन्त्राद्यक्षरपर्यन्तं मातृकाक्रमेण गणयित्वा तमंकं त्रिगुणितं कृत्वा स्वरैः सप्तभिर्हरेत् इति। अथ साधकराशिः। एवं मन्त्राद्यक्षरमारभ्य साधकनामाद्यक्षरपर्यन्तं मातृकाक्रमेण गणयित्वा तमंकं त्रिगुणितं कृत्वा सप्तभिर्भजेत्। इति मन्त्रराशिः। अन्यत् पूर्ववत्। तन्त्रान्तरोक्तो वा ऋणधनशोधन प्रकारो यथा।साध्यनाम द्विगुणितं साधकेन समन्वितं। अष्टभिश्च हरेच्छेषं तदन्यद्विपरीतकंमिति। अस्यार्थः। मन्त्राक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि द्विगुणयेत्।

**नुक्रमात् ॥ १३३ ॥ लक्ष्मीशेमध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत् ॥ दिक्षु पूर्वादितो यत्र क्षेत्रा**
साधकनामाक्षराण्यपि स्वरव्यञ्जनरूपेण पृथक्कृतानितेषु संयोजयेत्। ततोऽष्टभिर्हरेत्। अयं मन्त्रराशिः। एवं साधकनामाक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि द्विगुणितानि स्वरव्यञ्जनरूपेण पृथक्कृतमन्त्राक्षरैः संयोजितानि अष्टभिर्हरेत्। एवं साधकराशिः अन्यत पूर्ववत्। एवमुक्तेष्वन्यतमेनावश्यं ऋणधनशोधनं मन्त्रेषु कर्त्तव्यम्। तत्र कथं मन्त्राणां ऋणित्वम्। तदुक्तं तन्त्रान्तरे। पूर्वजन्मकृताभ्यासः पापादस्या फलामिक्षत्। पापे नष्टे फलवात्य काले देहक्षयाद्दणी। मन्त्रः संप्राप्तिमात्रेण प्राक्तनः सिद्धये भवेत्। सिद्धमन्त्राद्गुरोर्लब्ध मन्त्रो यः सिद्धिभाङ्नरः। लक्ष्मीमदादनादत्य मन्त्रंभोगमवाप्तवान्। स मन्त्रोस्य ऋणी ज्ञेयो भजेनं तस्य पूर्वगम्। तस्माद्दणविशुद्धिस्तु कार्या सर्वैस्तुः सर्वत इति। ग्रन्थान्तरे मन्त्रशोधने प्रकारान्तरमुक्तम्। षट्दलं च क्रमाद्लिख्य प्रागादिषु दलेषु तु। अकारादिवर्णानेकैकं लिखेन्निष्षंढकूटकान्। स्वनामाद्यक्षरं यत्र तदारभ्यविचारयेत्। उदितेसंपदुद्दिष्टाद्वितीये संपदां क्षयः। तृतीये तु धनं विंद्याच्चतुर्थे बंधुविग्रहः। पञ्चमे संशयात्मा स्यात्षष्टः सर्वविनाशकः। इति। अत्र सर्वत्रापवादो ग्रन्थान्तरोक्तः। पिण्डे तारे स्वप्नलब्धे षडर्णे प्रासादार्कत्रैपुरे नारसिंहे। मालामायामाद्यवाराहकामाख्नेनोदोषःख्यातसवेदेषु रत्ने इति। मालामन्त्रस्वरूपमुक्तं महाकपिलपञ्चरात्रे। बहुवर्णास्तु ये मन्त्रा मालामन्त्रास्तु ते स्मृताः। दशाधिकाक्षरामाला पञ्चाधिकार्द्ध मालिका।न मालापञ्चपर्यन्ता वृद्धस्थावरबालकाः। वार्द्धकेसिद्धिदा माला षद्ममाला तु यावने। बाल्यपञ्चाक्षराधस्तु मंत्रः सिद्धिप्रदायक इति। प्रयोगसारे तु। नवाक्षरान्ता ये मन्त्रा बीजमन्त्राः प्रकीर्त्तिताः। पुनर्विंशतिवर्णान्ता मन्त्रामन्त्रास्तथोदिताः। ततोधिकाक्षरामन्त्रा मालामन्त्रा इति स्मृताः। बाल्यप्रसिद्धिदा बीजमंत्रमन्त्रास्तु यौवने ॥ मालामन्त्राश्च वार्द्धक्ये विशेषेण प्रसिद्धिदा इति। नारायणीयेपि। विंशत्यर्णाधिका मन्त्राःमालामन्त्रा इति स्मृताः। दशाक्षराधिका मन्त्रास्तदर्वागूबीज संज्ञिताः। वार्द्धकेसिद्धिदा माला मन्त्रामन्त्रास्तु यौवने॥ पञ्चाक्षराधिका बाल्ये सिद्धिदाः सर्वदापर इति ॥ अपेक्षितार्थद्योतनिकायामुक्तम् ॥ उक्तावस्था व्यतिरिक्तावस्था सुबीजमन्त्रामालामन्त्रसिध्यर्थं द्विगुणं जपेदिति। तथा। हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य तु ॥ एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत्। तथा। एकत्रिपञ्चसप्तार्णनवरुद्रषडर्णके। द्वात्रिंशदक्षरे मन्त्रे नांशकं परिगण्यते ॥ गारुडादिषु सौरेषु वैष्णवे बौद्धजैनियोः। महाकूटेषु मन्त्रेषु नैव सिद्धादिशोधनम् ॥ चत्वारिंशाक्षरस्योर्द्धमेकैकाक्षरवृद्धितः। त्रिषष्टिबीजयर्थ्यन्तं मन्त्रो नैकफलप्रद इति। तथा च आद्या सिद्धास्तु ये मन्त्रा योगिनीनां प्रसादतः। लब्धाये केपि ते मन्त्राः सर्वकामफलप्रदा इति। एतद्व्यतिरिक्तेष्वावश्यकं शोधनं। यदुक्तं मन्त्रो वा यदि वा विद्यास्तवो वा सूक्तमेव वा ॥ अर्थबन्धुशरीरस्य नाशको भवति क्षणात् ॥ तस्मात्सर्वप्रयत्नेन दुष्टं सर्वत्र वर्जयेत्। न केवलं तु मन्त्राणां विशेषेण तु देहिनाम्। परस्परं समीक्ष्यः स्यात्सम्बन्धो नान्यथा भवेत्। इति। यस्तुसिद्धादिभिर्मन्त्रो न मिलति ॥ तत्र प्रकारान्तरमुक्तं। यदाहुः। एषु दोशेषु सर्वत्र मायां काममथापि वा ॥ क्षिप्त्वा चादौ श्रियं दद्यात्दूषणविमुक्तय इति। तथा। तारसम्पुटितो वापि दुष्टमन्त्रोथ सिध्यति ॥ यस्य यत्र भवेद्भक्तिः सोपि मन्त्रोस्य सिध्यति ॥ तथा भुवनेशीपारिजाते ॥ मायाबीजसमायुक्तः क्षिप्रं सिद्धिप्रदो

भवेत्॥ पिण्डस्तु केवलो मंत्री मायाबीजोज्ज्वलीकृतः। मायाबीजाद्भवेत्प्राणो बीजं चैतन्यवीर्यवदि-ति॥ तथा अनुलोमविलोमस्थक्लृप्तया वर्णमालया॥ प्रत्येकवर्णयुङ्मंत्रा जप्ता स्युः क्षिप्रसिद्धिदाः। वै-रिमंत्रा अपितृणामन्येमंत्राश्वकिंपुनरिति॥ अग्रे व्यवहाराय सिद्धाद्यक्षराणां संज्ञान्तराण्याह॥ सिद्धार्णा इति फलस्य पूर्वमुक्तत्वात्॥ मन्त्रजपस्थानमाह। दीपेति। दीपशब्दार्थोन्यत्रोक्तः दीपोद्य सम्प्रवक्ष्यामि यदुक्तं ब्रह्मयामले। प्रासादग्रामगेहाद्या ज्ञेया येन शुभाशुभाः। ककारादिक्षकारान्ता वर्णास्युर्दीपसंज्ञकाः। स्वराः षोडशपीठाख्या ज्ञातव्या मंत्रिणांवरैरिति॥ तथा॥ पीठसंज्ञा स्वराणां च दीपास्युर्व्यञ्जनानि हि॥ स्थानं दीपाक्षरं यस्मिन्कोष्ठे तिष्ठति तद्भवेत्॥ दीपस्थानं तदेतत् स्या-त् कूर्मचक्रे न संशय इति॥ तस्य दीपस्थानमिति॥ कर्मजपादिकं अत एव वक्ष्यति॥ मन्त्राणां सिद्धिसाधनमिति॥ दीपस्थानार्थं कूर्मचक्रमाह। चतुरितितत्र द्वे रेखे पूर्वापरायत्ते द्वे दक्षिणोत्तरा यते चतुरस्रमध्ये कुर्यात् तदा नव कोष्ठानि संपद्यन्ते। तेषु नवकोष्ठेषु नव क्षेत्रपालाः पूज्याः यदुक्तं। क्षेत्रपाला नवैतेषु दीपेशा नवकोष्टके॥ अमृतो वृषभः शैल राजो वासुकिरर्थकृत्। शक्तिपूः पद्म-योनिश्च महाशंखश्चते नव॥ छायाकचगणोपेतान् मध्यात् पूर्वादितो यजेत् इति॥ पूर्वकोष्ठादि पूर्वदिक्कोष्टमारभ्येत्यर्थः। सप्तवर्गानिति॥ कचटतपयशान् अनुक्रमाद्विलिखेत् इति उत्तरान्तं॥अत्र यथा संभवं मध्यत आरभ्य प्रतिकोष्टं। यदुक्तम्॥ पूर्वकोष्टे कवर्गस्य पंचकं मध्यतः क्रमात्॥ मध्य-तोन्यत्र चाग्ने ये चवर्गं चैव मेव होति॥ मध्यकोष्ठे स्वरान् युग्मक्रमाल्लिखेदिति॥ तत्र लेखनप्र-कार उक्तोन्यत्र। मध्यकोष्ठपुरो भागे अकारद्वयमालिखेत्॥ आग्नेयामिद्वयं विंद्यात् याम्येतूद्वय मालिखेत्॥ नैरृत्ये ऋद्वयं विंद्याद्वारुणे लृद्वयं विद्यात्सौम्यामोद्वयमिष्यते॥ ईशे चांत्ययुगं वि-द्यादेवं न्यस्य विचारयेत्। अयं लेखनक्रमः। क्रमेणानेन विभजेत् इति वक्ष्यमाणेन सूचित ए-व॥ क्षेत्राख्येति॥ अत्र क्षेत्रशब्दो ग्रामादीनामुपलक्षकः। यदुक्तं। पीठं क्षेत्रं पुरंवापि नगरं ग्राममेव चेति॥ तल्लक्षणमन्यत्रोक्तम्॥ कादिनां तं भवेत् क्षेत्रं ग्रामः स्यात् पादिमांतकः। पादिषांतं पुरं स-म्यक् प्रोक्तं देशिकसत्तमैः। हसांतं नगरं प्रोक्तमेतत्क्षेत्रस्य लक्षण मिति॥ पीठलक्षणं प्रागुक्तं। स्व-राः षोडष पीठाख्या इति क्वचित्तुवनाद्रिपत्तनग्रामदेवगेहहृदादिष्वित्यप्युक्तं उभयतः स्थिते को-ष्टे इति प्रत्येकं हस्तकुक्षिपादेष्वन्येति॥ तेनाद्याद्यमभितोग्रिमाग्रिमंशिष्टंपुच्छं॥ अस्य फलमाह। मुखस्थ इति॥ मंत्रीत्याकृष्यते॥ तस्य तंत्रोक्तदीक्षाप्रकारेण स्वीकृतमंत्र इत्यर्थः अग्रेपि मंत्रिणां इति पदद्वये अयमेवार्थोनुसंधेयः जीव्यते अनेनेतिजीवनं भोगः स्वल्पं जीवनं यस्य सस्वल्पजीवनः तदुक्तम्॥ मुखस्थः शुभयुक्ज्ञेयः करस्थः स्वल्पभुक्तिमान् इत्यादिना। तथा मुखे सर्वार्थसिद्धिः स्यात्करयोरल्पसिद्धिकृत इत्यादिना। तथा। तस्मान्मुखं समाश्रित्य सर्वकर्म समारभेत्। तदलाभे-करं वापि कूर्मस्यान्यं न संश्रयेत् इति। अत्र विशेषो ग्रन्थान्तरोक्तः। स्थानसाधकयोर्नाम्नोररित्वं यत्र विद्यते। तत्तच्छास्त्रतो ज्ञात्वा तत्तत्सम्यक् परित्यजेत्॥ रिपुत्वमद्वयस्योक्तं गकारेण परस्परम्। ऋयु-ग्मस्य ठकारेण ठकारस्यापि तेन च॥ लृद्वयस्य पकारेण यकारस्यापिलृद्वयम्॥ ओयुग्मस्य षकारेण षकारस्यौयुगेन च॥ जकारस्य टकारेण मकारस्य वकारतः॥ उकारस्य तकारेण फकारस्य धकार तः॥ भकारस्य तु रेफेण यकारस्य सकारतः। अरित्वमेषां वर्णानामन्येषां मित्रभावना॥ कूर्मचक्रे रिपुस्थानं साधको यत्नतस्त्यजेत् इति॥ उदाहरणं च तत्रैवदर्शितम्॥ यथा गर्गस्यवैर स्यात् अष्ट

स्थाद्यक्षरस्थितम् ॥ १३४ ॥ मुखं तत्तस्य जानीयाद्धस्तावुभयतः स्थितौ ॥ कोष्ठे कुक्षी उभे पादौ द्वे शिष्टं पुच्छमीरितम् ॥ १३५ ॥ क्रमेणानेन विभजेन्मध्यस्थमपि भागतः ॥ मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ॥ १३६ ॥ उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ॥ पुच्छस्थः पीड्यते मंत्री बंधनोच्चाटनादिभिः ॥ १३७ ॥ कूर्मचक्रमिदं प्रोक्तं मंत्राणां सिद्धिसाधनं ॥ पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकं ॥ १३८ ॥ तीर्थप्रदेशाः सिंधूनां संगमाः पावनं वरं ॥ उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ॥ १३९ ॥ देवतायतनं कूलं समुद्रस्य निजं गृहं ॥ साधनेषु प्रशस्यंते स्थानान्येतानि मंत्रिणां ॥ १४० ॥

ह्रासं महत्पुरम् ॥ गयामरेश्वरस्यैवमकाराद्येषु योजयेत् ॥ ऋजुभट्टस्य ठक्काख्यं लुतकस्यारिपञ्चकम् ॥ ओडियाणं षण्मुखस्य औंड्रं षड्गुणकस्य च ॥ जयंती टंकणस्यारि खंधारं झंझभट्टतः ॥ डाकदेवस्यतं वालं धर्माख्यं फंजकस्य च ॥ भट्टस्य रम्मकं वैरि यत्नमित्रस्य वै सरः ॥ एवं क्रमेणसंशोध्य वैरिस्थानं त्यजेद्बुध इति ॥ तथा। तेषामाद्यान्वितं वर्णं पूर्वमार्गेषु यो जयेत् ॥ यदि तद्वंग्रजनापिंडं यदाद्यंपीठवर्जितम् ॥ नामाक्षराणि सर्वाणि पीठयुक्तानि वर्जयेत् ॥ तदादिकानि मार्गेण तत्गृहीत्वा स्वरं त्यजेत् ॥ ग्रामनामाक्षरेष्वादि मध्यांतार्णान्विहाय च ॥ द्वितीयमक्षरं यत्र कोष्ठे तिष्ठति तन्मुखमिति ॥ अन्यत्रापि ॥ तत्तन्नाम द्वितीयार्णो यत्र तिष्ठति तन्मुखमिति ॥ इदं तु स्वरादिनामविषयं ॥ नामादौ संयोगाक्षरेसति विशेषमाह ॥ अक्षरत्रितयं यत्र ग्रामनामादिषु क्वचित् ॥ स्वरोमध्याक्षरारूढो यत्र तिष्ठति तन्मुखम् ॥ भवतो यदि वर्णौ द्वौ ग्रामनामादिषु स्फुटम् ॥ आद्यस्वरो यत्र तिष्टत्यदो वदनमिष्यत इति ॥ तथाच क्षेत्रसाधकमंत्राणामेकमेवाद्यमक्षरम्॥यदि स्यात्सध्रुवं मंत्रः सर्वसिद्धिफलप्रद इति ॥ फलविशेषमाहान्यः ॥ मोक्षार्थं वदने कुर्याद्दक्षिणे त्वाभिचारिकम्। श्रीकामः पश्चिमे भूत्वा उत्तरे शांतिदो भवेत् ॥ ईशाने शत्रुनाशं स्यात् आग्नेयः शत्रुदायकः ॥ नैर्ऋते शत्रुभीतिः स्यात् वायव्ये तु पलायनम् ॥ कूर्मचक्रमविज्ञाय यः कुर्याज्जपयज्ञकं। तज्जपस्य फलंनास्ति मचानर्थाय कल्पत इति ॥ कादिमते विशेषः ॥ संवर्ध्यायामविस्तारं हृत्वाष्टाभिस्तुशेषतः॥विज्ञाय वर्गंतेषेकमाद्यंतानि प्रकल्पयेत् ॥ वास्तुष्वज्ञातरूपेषु प्रसिद्धं नामतोभवेत्। व्यंजनं देशकूर्मेस्यात् गृहकूर्मे स्वरास्तथेति॥पुरश्चरणजपस्य स्थानानि वदन् कूर्मचक्रविषयमाह ॥ ॥ पुण्येति नदीतीरं पुण्यनदीतीरं॥सामान्यनदीतीरस्य निषिद्धत्वात् ॥१३९॥ पावनं वनमिति। विशेषणविशेष्यभावः उद्यानानि विविक्तानि पूतानीत्यपि॥विविक्तौ पूतविजनावितिकोशः॥१४०॥स्थानान्येतानीत्यनेन तंत्रांतरोक्तमपिसूचितम् ॥ यदाहुः ॥ प्रत्यङ्मुखशिवस्थाने वृषभादिविवर्जिते। अश्वत्थ बिल्वतुलसी वने पुष्पांतराहृते॥गवांगोष्टेश्वत्थमूले पुण्यक्षेत्रेषु शस्यत इति 'वायवीयसंहितायामपि सूर्यस्याग्नेर्गुरोरिंदोर्दीपस्य च जलस्य च॥विप्राणां च गवांचैवसंन्निधौशस्यतेजपः ॥ अथ वा निवसेत्तत्र यत्र चित्तं प्रसीदति इति ॥ तत्रैवस्थानविशेषेफलविशेषोप्युक्तः ॥ गृहे जपः समः प्रोक्तो गोष्ठे शतगुणस्तुसः। आरामे च तथारण्ये सहस्रगुणउच्यते॥अयुतं पर्वते पुण्ये नद्यांलक्षगुणस्तु सः। कोटि देवालये प्राहुरनंतं मम संन्निधौ इति॥एवं शक्तिविशेषमंत्रेष्वष्टाष्टकपीठाद्यपि ज्ञेयम् ॥ अन्यच्च म्लेच्छ दुष्ट मृगव्यालशङ्का तंका विवर्जिते। एकान्ते वा वने निन्दा रहिते भक्ति संयुते। सुदेशे धा-

भैक्ष्यं हविष्यं शाकानि विहितानि फलंपयः ॥मूलंसक्तुर्यवोत्पन्नो भक्ष्या ण्येतानि मांत्रिणां ॥१४१॥पुरुषार्थसमावाप्त्यैसच्छिष्या गुरुमाश्रयेत्॥मातृतःपितृतः शुद्धःशुद्धभावी जितेंद्रियः॥ १४२ ॥ सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्वविंत् ॥ परोपकारनिरतो जपपूजादितत्परः ॥

र्मिके राष्ट्रे सुभिक्षे निरूपद्रुते। रम्ये भक्तजनस्थाने निवसेन्नपराश्रये। राजानः सचिवाराजपुरुषाः प्रभवोजनाःचरन्ति येन मार्गेण न वसेत्त तत्तत्ववित्। जीर्णदेवालयोद्यानगृहवृक्षतलेषु च। नदीकूलाद्रिकुञ्जेषु भूच्छिद्रादिषु नोवसेत् इति। पुरश्चरणकर्त्तुर्भक्ष्याण्याह। भैक्ष्यमिति। एतद्ब्रह्मचारि यति परम्। भिक्षास्वरूपमुक्तमन्यत्र। वैदिकाचारयुक्तानां शुचीनां श्रीमतां गृहे। सत्कुलसत्स्थानजातानां भिक्षास्यादग्रजन्मनामिति। हविष्यमिति। व्रतहविष्यं न श्राद्धहविष्यादि। तच्चस्मृत्यन्तरे। हैमन्तिकसितास्विन्नधान्यंमुद्गयवास्तिलाः। कलायकंगुनीवारवास्तुकंहिलमोचिका। षष्टिका कालशाकं च मूलकं केमुकं तरत्। कं ससैंधवसामुद्रे गव्ये च दधिसर्पिषी। पयोनुद्धृतसारं च पनसाम्रोहरीतकी। तिंतिणीजीरकं चैव नागरं गकमेव च। कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यं सम्प्रचक्षते इति। फलं पयो मूलं विहितमित्यनुषज्यते।सच्छिष्यो गुरुमाश्रयेदित्युक्तम् ॥१४२॥ अतो गुरुलक्षणमाह। मातृतइत्यादिना मातृतः पितृतः शुद्धपितृमातृप्रसूत इत्यर्थः स।चशुद्धिर्लोकप्रसिद्धितः शीलान्वेषणतश्चज्ञेया। यदुक्तं। यदकारिकर्मगुप्तं यौवनसमये मन्दाधया मात्रान्तत्प्रकटयन्ति तनयाविगतनयाःस्वधर्ममुत्सृज्येति। शुद्धिभावीशुद्धचित्तवृत्तिरित्यर्थः। अन्यथा खलत्वात् शुश्रूषाह एव न स्यात्। जितेन्द्रियः। अजितेन्द्रियस्य देवतापराङ्मुखत्वात्। सर्वागमानांसारज्ञः। अन्यथा शिवादि तत्तत्सम्प्रदायान भिज्ञता स्यात्। सर्वशास्त्रार्थतत्ववित्। अन्यथा आगमशास्त्रविचारानुपपत्तेः॥१४३॥परोपकारनिरतः अन्यथा शिष्योपरि कृपैव न स्यात्। तत्कृपां विना मन्त्रोपि पराङ्मुखो भवति। जपपूजादि तत्परः आदिशब्देन ध्यान होमौ। अन्यथा लुप्तसमयाचारस्य देवतासांन्निध्याऽभावात्। तदुक्तं पिङ्गलामते। नाध्यातो नार्चितो मन्त्रः सुसिद्धोपि प्रसीदति। नाजप्तःसिद्धिदानैकुर्नाहुतःफलदो भवेत्। पूजां ध्यानं जपं होमं तस्मात्कर्म चतुष्टयम्। प्रत्यहं साधकः कुर्यात्स्वयं चेत्सिद्धिमिच्छति। इति अमोघवचनोनुग्रहक्षमः। शान्तः अन्यथा लोकगर्हितस्यासेव्यत्वाद्वेदवेदार्थपारगः। अनेन स्वाचारनिष्ठतोक्ता। यदुक्तं। वर्णाश्रमाचारवता पुरुषेण परःपुमान्। विष्णुराराध्यते पन्थानान्यस्तत्तो षकारक इति। अन्यत्रापि। विना स्वधर्मं यत्किञ्चित् देवताराधनादिकम्। परिभ्रश्येत तद्यस्मात्क्षणात्सैकतहर्म्यवदिति। योगमार्गानुसन्धायी। अन्यथा दोक्षादि दान एवाशक्तिः स्यात्। देवताहृदयंगमः देवताबद्धहृदयंगमोमनोहरः प्रसन्नाकार इत्यर्थः। यथा देवतादर्शनेन सन्तोषस्तथा तद्दर्शनेनापिमनसि सन्तोषोत्पादनात्। तदुक्तं। कार्यानुगतशीलं शीलानुगतं नृणां भवतिं चित्तम्। चित्तानुगतं रूपं रूपानुगता गुणाः प्राय इति। यत्र च मनः सन्तोषस्तत्र फलावश्यं भावः। तदुक्तम्। यस्मिन्मनश्चक्षुषोरभिरतिस्तस्मिन्न भ्युदय इति। तथाभियुक्तकालिदासस्मरणमपि। मनो हि जन्मान्तरसङ्गतिज्ञम्। आदि शब्दान्महाकपिलपञ्चरात्रोक्तम्। नातिबलो न वृद्धश्च न खञ्जो न कृशस्तथा। नाधिकाङ्गो न हीनांगो न खल्वाटो न दन्तुरः। कृतज्ञं वाग्मिनं शूरं प्रतिष्टागमपारगम्। वास्तुवि-

**१४३ ॥ अमोघवचनः शांतो वेदवेदार्थपारगः ॥ योगमार्गानुसंधायी देवताहृदयंगमः १४४ इत्यादि गुणसंपन्नो गुरुरागमसंमतः ॥ शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः ॥१४५॥**

व्याकृताभ्यासं शल्योद्धारविवेकिनम्। क्रियानुक्रमवेत्तारं मुद्रान्तंत्रविवेकिनमिति। शुचिः सुवेषस्तरुणः सर्वभूतसमानधीः। धीमाननुद्धतमतिः कृतज्ञः शिष्यवत्सलः। श्रद्धावाननसूयश्च गृहस्थो-गुरुरुच्यते। इत्यादि ग्रन्थान्तरोक्तं च द्रष्टव्यम्। आचार्यमातुलो ऋत्विक्पितृभ्यश्च गुरो नृप इति षट्गुरवोप्येते इति। अन्यत्रोक्ते रत्रागमसंमत इति। विशेषण संसारसागरे मग्नान्यस्तारयतिदेहिनः। तत्वप्लवप्रदानेन स एवेह गुरुः स्मृत इत्युक्तेः। प्रतिष्ठासारस्वते तु विशेषः। आर्यावर्त्तोद्भवोन्यो वा ककाराष्टकवर्ज्जितःशैवसिद्धान्तनिपुणःप्रतिष्ठामन्त्रपारग इति। वीरागमे च। कमारीहिमवन्मध्ये स्वतःकृष्णमृगान्विते। देशे जातस्तु यो विद्वान् आचार्यत्वमथार्हति इति। योगशिवपद्धतावपि मध्यदेशकुरुचेत्रनाभोज्जयिनि सम्भवः।अन्तर्वेदिप्रतिष्ठानादावन्त्याश्च गुरूत्तमाः।गौडदेशोद्भवाश्चोला मागधाः केरलास्तथा। कोशलाश्च दशार्णाश्च गुरवःसप्त मध्यमाः। कर्णा टकोंकणाःकीरकच्छतीरो-द्भवास्तथा। कालिङ्गाः कामरूपाश्च कांबोजाश्चाधमाः स्मृता इति। देवीमते च। आचार्यः शैवशास्त्रज्ञः सितदेशमुद्भवः। ब्रह्मचारी गृहस्थो वा शिवभक्तिपरायणः।यजमानानुकूलश्च जन्मादेशिक उच्यत इति। हयशीर्षपञ्चरात्रेपि। गृहस्थं ब्रह्मचर्य्य युक्तं ककाराष्टकवर्जितं। गुरुं कुर्वीत सततमुपवासव्रतैरतमिति। तथा। सर्वत्र व्यतिरिक्तं तु आत्मानं वेत्ति यो द्विजः। सर्वलक्षणहीनोपिस गुरुर्नात्र संशयः। पञ्चरात्रप्रबुद्धस्तु सिद्धान्तार्थस्य तत्ववित्। सर्वलक्षणहीनोपि आचार्यः स निगद्यते। यस्य विष्णौ पराभक्तिर्यथा विष्णौ तथा गुरौ। स एव देशिको ज्ञेयःसत्यमेतद्ब्रवीमिति। शैवदीक्षायां अतीतागमे विशेषः। जटी मुण्डी शिखी वापि शस्त देशयमुद्भवाः शिवशास्त्रार्थतत्वज्ञः श्रुतवृत्तान्वितो द्विजः। शिवमेवाश्रितो नित्यं वाङ्मनः कायकर्मभिः। आचार्यः स सदोद्दिष्टः शिवदीक्षादिकर्मसु इति। शान्तिके च। अनूचानः प्रसन्नात्मा शिवदीक्षाभिषेचितः।शिवागमज्ञो मत्तिमान् शिवपूजापरायणः। रुद्राक्षमालां विभ्राणस्त्रिशूलाङ्कितविग्रहः।विशुद्धदेशकुलजःशीलाचारसमन्वितः। वेदशास्त्रार्थतत्वज्ञो ज्ञानवान् गुरुरुच्यत इति। प्रतिष्ठापद्धतावपि। लिङ्गी विलक्षणज्ञानो निपुणः कर्मसन्ततौ। देवताव्याप्तितत्वज्ञः षड्विधाध्वविशारदः। शुभाशुभनिमित्तज्ञस्त्वथवा विस्तरेण किं। सम्यक्जातिपरिज्ञानवृत्तं त्वाद्यास्त्रयो गुणाः यस्यैते स गुरुः। श्रेष्ठः। सर्वकामफलप्रद इति। यतेरपि गुरुतोक्ता मोहशूरोत्तरे। चीर्णाचारव्रती मन्त्री ज्ञानवान् सुसमाहितः नित्यनिष्ठो यतिः ख्यातो गुरुः स्यात् भौतिकोपिचेति। बाहुलोत्तरेपि। विद्यया भयदातारं लौल्यचापलवर्ज्जितम्। एवं विधं गुरुं प्राप्य को न मुच्येत बन्धनात् इति पौष्करे तु। सर्वलक्षणहीनोपि ज्ञानवान् गुरुरुच्यते। ज्ञानं च तत्वविज्ञानं षडध्वज्ञानसंश्रयमिति ॥ १४५ ॥ ॥ १४५ ॥

शिष्यलक्षणमाह। शिष्य इति। कुलीनः शुद्धमातृपितृतः अन्यथा कुंडगोलकादेरशुचित्वात् सर्वदा स्प्रष्टव्यत्वाभावात् ॥ शुद्धात्माऽक्रूरचित्तः क्रूरस्य विद्यानुपदेशात् ॥ यच्छ्रुतिः।विद्याहवैब्राह्मणमाजगाम। गोपायमासेवधिष्टेहमस्मि। असूयकायानृजवेयतायनमांब्रूयाऽवीर्यवती तदास्यामिति ॥ पुरुषार्थपरायण इत्यनेनान्य व्यसनहीनतोक्ता ॥ अन्यथा उपदेशानर्थक्यात् ॥ अधीतवेदइत्यनेनास्यशुद्ध

तोक्ता। यदुक्तं। यो नधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय इति। कुशलः अमुग्धःमुग्धस्य मंत्राराधनाक्षमत्वात्॥ दूरमुक्तमनोभव इति॥ कामिनःसपापत्वादशुद्धचित्तत्वात्॥ मंत्राराधनानधिकारः हितैषी प्राणिनां नित्यमिति॥ अन्यथोपदिष्ट मंत्रात्॥ अभिचारादि कर्मरतस्य तस्य पापं गुरुमपिस्पृशेत्॥ आस्तिकः अस्तिपरलोकइति बुद्धि र्यस्य॥ अन्यथा नास्तिकतायां मंत्रदेवतानाराधनात्॥ गुरौ देवताकोपो भवेत्॥ त्यक्तनास्तिकः नास्तिक संसर्गत्यागी॥ अन्यथा संसर्गजो दोषः स्यात्॥ स्वधर्मनिरतः अचारवान्॥ अनाचारिणो नधिकारात्॥ भक्त्या पितृमातृहितोद्यतोनतुदम्भादिना॥ असावेवास्य परमो धर्मो उक्तो व्यासादिभि र्वाङ्मन इत्यादिना अवंचकतोक्ता॥ एतादृश इत्यनेन युवाविनयताशेषकारणः करुणालय इत्यादि ग्रंथांतरोक्तं द्रष्टव्यम्॥ यत्प्रयोगसारे तत्रापि भक्तियुक्तायपुत्रायवसुदाय चेति॥ नारायणीयेपि कुर्वन्नाचार्यशुश्रूषां मनोवाक्कायकर्मभिः।शुद्धभावो महोत्साहो बोद्धाशिष्य इति स्मृतः। सतूपदेश्यः पुत्रश्चश्चत्वयो वसुदस्तथेति॥ नापरइत्यनेनान्यस्य निषेध उक्तः तथाचान्यत्र। शिष्यदोषानुक्ता एवमादिगुणै र्युक्तं न शिष्यं तु परिग्रहेत्॥ गृह्णीयात् यदि तद्दोषः प्रायो गुरुमुपस्पृशेत्॥ अमात्यदोषोराजानं पत्नीजायाकृतो यथा॥ तथा शिष्यकृतोदोषो गुरुमाप्नोत्यसंशयम्॥ स्नेहाद्वालोभतो वापि यदि गृह्णीतदीक्षया॥ तस्मिन् गुरौ सशिष्ये तु देवताशाप आपतेत्॥ तस्माच्छिष्यं गुरुर्नित्यं परीक्ष्यतु परिग्रहेदिति॥ भुवनेशीपारिजातेपि॥ अशिष्ये कथयेद्यस्तु समहापातकीभवेत्॥ इति। ग्रन्थारे तु विशेषः।गुरूच्यमाने वचने दद्यादित्थं वचस्तदा। प्रसीद नाथ देवेति तथेति च कृतादरम्। प्रणम्योपविशेत्पार्श्वे तथा गच्छेदनुज्ञया। मुखावलोकीसेवेत कुर्यादादिष्टमादरात्। असत्यं न वदेदग्रे न बहुप्रलपेदपि। कामं क्रोधं तथा लोभं मानं प्रहसनं स्तुतिम्। चापलानि च जिह्मानिकार्याणि परिदेवनम्। ऋणदानं तथा दानं वस्तूनं क्रयविक्रयम्।न कुर्याद्गुरुणा सार्द्धं शिष्यो भूष्णुः कदा च नेति। प्रयोगसारेपि गुरुर्मातापितास्वामी बान्धवाः सुहृदः शिवे। इत्याध्यायमनो नित्यं भजत्सर्वात्मना गुरुम्। असत्यं न गुरौ ब्रूयात् गुरुनिन्दां न कारयेत्। प्रारब्धां वारयेदन्यैरशक्तस्तत्पदं त्यजेत्। गुरौ यथैव शुश्रूषा गुरुभार्यासुतां चरेत्। ज्येष्टांश्च गुरुवत्पश्येत् आत्मवच्चकनीयसः। गुरुणा यद्यदा दिष्टमिष्टं वानिष्टमेव वा। तदा तदाशुसन्तिष्टेदकौटिल्येन चेतसा। मनोवाक्कर्मभिर्नित्यं पूजयेद्भावितंगुरुमिति। देव्यागमेपिशिववाक्यम्। गुरोरग्रे पृथक्पूजामौद्धत्यं च विवर्जयेत् तत्रैव। आसनं शयनं वस्त्रं भूषण पादुकां तथा। छायाङ्घ्रचमन्यञ्च यत्तत् स्पृष्टं तु पूजयेत् इति। अन्यत्रापि। यथा देवे तथा मन्त्रे यथामंत्रेतथा गुरौ। तथा गुरौ तथा स्वात्मन्येवं भक्तिक्रमः स्मृत इति। शिष्यस्य परीक्षावधिकालमाह। एकेति। गुरोर्योग्यो भवेदिति सर्वत्र सम्बन्ध्यते। शूद्रश्चतुर्भिरिति। ननु शूद्रस्य दीक्षादौ कथमधिकार इति चेत्। मंवं वेदाध्ययन तदुक्तकर्मस्वेव स्मृतावनधिकार प्रतिपादनादन्यत्राधिकारात्। अत एव शूद्रप्रकरणे स्मृतिः। नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेदिति। मन्त्रस्त्वीश्वरप्रोक्तास्तत्रभवतैवयथायथमधिकारिता दर्शिता यथा प्रासादमन्त्रप्रकरणे भगवानाह। स्त्रीशूद्राणामयंमन्त्रो न मोन्तस्तु शुभावहः।एतत् ज्ञात्वा महासेन चाण्डालानपि दीक्षयेत्। इति। पिङ्गलामतेपि। चतुर्णां ब्राह्मणादीनां दीक्षां कुर्वीत मन्त्रवित् इति अन्यत्रापि। ब्रह्मक्षत्रविशः दशूद्राआचार्याःशुद्धबुद्धयः।

अधीतवेदः कुशलो दूरमुक्तमनोभवः ॥ हितैषी प्राणिनां नित्यमास्तिकस्त्यक्तनास्तिकः ॥ १४६ ॥ स्वधर्मनिरतोभक्त्या पितृमातृहितोद्यतः॥वाङ्मनःकायवसुभिर्गुरुशुश्रूषणेरतः॥१४७॥ त्यक्ताभिमानो गुरुषु जातिविद्याधनादिभिः॥ गुर्वाज्ञापालनार्थंहि प्राणव्ययरतोद्यतः॥१४८॥ विहाय च स्वकार्याणि गुरुकार्यरतः सदा ॥ दासवन्निवसेद्यस्तु गुरौ भक्त्या सदा शिशुः ॥ १४९ ॥ कुर्वन्नाज्ञां दिवारात्रौ गुरुभक्तिपरायणः ॥ आज्ञाकारी गुरोः शिष्योमनोवाक्कायकर्मभिः ॥ १५० ॥ यो भवेत्सतदा ग्राह्योनेतरः शुभकांक्षया ॥ मन्त्रपूजारहस्यानि यो गोपयति सर्वदा ॥ १५१ ॥ त्रिकालंयो नमस्कुर्यादागमाचारतत्त्ववित् ॥ सएव शिष्यः कर्तव्यो नेतरः स्वल्पजीवनः ॥ १५२ ॥ एतादृशगुणोपेतः शिष्यो भवति नापरः ॥ एकाब्देन भवेद्योग्यो ब्राह्मणो ब्दद्वयान्नृपः ॥ १५३ ॥ वैश्यो वर्षैस्त्रिभिःशूद्रश्चतुर्भिर्वत्सरैर्गुरोः ॥ स शुश्रूषुः परिग्राह्योदीक्षायागव्रतादिषु ॥ १५४ ॥ इति शारदातिलके-द्वितीयः पटलः ॥ततो वक्ष्यामि दीक्षांग वास्तुयागपुरः सुरं ॥ कृतेन येन मंत्रज्ञो दीक्षायाः

गुरुदेवद्विजार्चा सुरतास्युरधिकारिण इति । तेन साक्षाद्वैदिकेषु मन्त्रेषु रामषडक्षरसौराष्टाक्षरमन्त्रराजप्रभृति षु प्रणवादिषु च तस्य नाधिकारः । तथा च पद्मपादाचार्यैः प्रणवव्याख्याने अकारोकारमकारात्मेत्यनेन भेदत्रयेण प्रणवादिमन्त्रेषु त्रैवर्णिकाएवाधिकारिणो न स्त्रीशूद्राइत्यपि सूचितमित्युक्तं तथाच नृसिंहतापिनीये। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति । सावित्रीं लक्ष्मींयजुःप्रणवं यदि जानीयात्। स्त्रीशूद्रः स्मृतोधोगच्छति इति । महाकपिलपञ्चरात्रे । नारायणाष्टाक्षरमधिकृत्योक्तम् । न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमुद्धृतः। तस्माद्वेदः परोमन्त्रो वेदांगश्चागमः स्मृतः।वश्याकर्षादिकं काम्यं दृष्टादृष्टफलप्रदम्। वेदेन साध्यते सर्वं ग्रहयज्ञादिभिः किल । न वेदेनविना यज्ञा न यज्ञा वेदवर्जिताः । तस्माद्वेदो परोमन्त्रो न मन्त्रो वेदमुक्तितः। न मन्त्रे चाधिकारोस्ति शूद्राणां नियमः परः । मन्त्राभावादमन्त्रेण भावितं सर्वकर्मह्वीति । नारदपञ्चरात्रे। नारायणाष्टाक्षरमधिकृत्योक्तम्। ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां न तच्छ्रोत्रपदवीमपिगच्छतीति। यथा श्रवणे त्रपुजतुभ्यां कर्णपूरणं उच्चारणे जिह्वाच्छेदोधारणे शरीरभेद इति वेदविषये। तस्य स्मृतिसु च दण्डोपदेशादित्यलम् । अन्यत्र वत्सरमात्रं सामान्यत उक्तं गुरुताशिष्यतावापि तयोर्वत्सरवासत इति उक्तिः। सारसंग्रहेपि। सगुरुः संश्रितं शिष्यं वर्षमेकं परीक्षयेदिति केच न इदं ब्राह्मणविषयमित्यूचुः दशपटल्यां तु अब्दं परीक्षयेदर्द्धं वा अन्यथा न कदाचनेति। प्रयोगसारे तु। वर्षेषु त्रिषु विप्रस्य षट्सुवर्षेसु भूभृतः। विशोनवसु वर्षेसु परीक्षा तत्र शस्यते। समास्वपिद्वादशसु तेषां ये त्ववलादय इति॥१५६॥इति श्रीशारदातिलकटीकायां पदार्थादर्शाभिख्यायां द्वितीयःपटलः॥ २ ॥ श्रीगणेशाय नमः ॥ॐ॥ एवं पूर्वोक्तरीतिप्रपञ्चितस्वरूपसर्वपुरुषार्थप्रदमन्त्रस्य ग्रहणोपायोदीक्षा। तां च वक्तुं तदङ्गभूतवास्तुयागादिकं प्रपञ्चयितुं प्रतिजानीते । तत इति। अंगापूर्वसहकृतं प्रधानापूर्वं फलं जनयतीति भट्टन्यायमाश्रित्याह। कृतेनेति। तत्र प्रसंगादन्यत्किञ्चिद्दीक्षांगं तन्त्रान्तरोक्तमुच्यते। असिद्धिर्भूमिसम्पत्तिर्मरणं बन्धुनाशनम्। आयुर्वृद्धिः प्रजानाशः सम्पत्तो रत्नसञ्चयः।शुभप्राप्ति सुतानाशो मोक्षार्थं च वशीकृतिः।चैत्रादीनां फलं ज्ञेयं मल-

मासं च वर्ज्जयेत् । अन्यत्र तु । आषाढस्यापि सम्यक् फलतीक्ता । वैशाखपूर्वजे मासे मन्त्रारम्भः सुदुः सहः । वैशाखे धनदायी च ज्येष्टे मृत्युप्रदो भवेत् । आषाढे पुत्रलाभाय श्रावणे शुभदोमतः भाद्रे चैव ज्ञानहानिस्तथा सद्भिः प्रकोर्त्तिता । आश्विने सर्वसिद्धिश्च कार्त्तिको ज्ञानसिद्धिदः।शुभकृन्मार्गशीर्षः स्यात्पौषो दुःखप्रदायकः। माघे मेधाविवृद्धिश्च फाल्गुने सर्ववश्यतेति । सिद्धान्तशेखरे विशेषः । शरत्काले च वैशाखे दीक्षाश्रेष्टफलप्रदा । फाल्गुने मार्गशीषे च ज्येष्टे दीक्षा च मध्यमा । आषाढः श्रावणो माघः कनिष्ठाः सद्भिराहृताः।निन्दित स्तत्र मासस्तु पौषो भाद्रपदस्तथा । निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा इति । तत्राषाढस्य उत्तमानन्तर्गत्वाच्च ग्रहणम् । एवं ज्येष्ठस्यापि;निषेध उत्तमानन्तर्भावादेवेति ज्ञेयम् । तथा च कालोत्तरे । शरद्वसन्तयोर्योगी दीक्षाकर्मविधि स्मृतः।तयोरसम्भवे वर्षाविनान्यत्र प्रशस्यत इति । क्रियाकाण्डशेखरेपि । न विना पर्वदीक्षा स्याद्दर्षासु मधुपौषयोरिति । श्रावणे निषेध उत्तम मध्यमानन्तर्भावात् । कारणे । आषाढपूर्वमासे च आषाढे मार्गशीर्षके ।दीक्षां न कारयेद्धीमानन्यमासे तु कारयेत् इति । निषेध उत्तमानन्तर्भावादेवेति ज्ञेयम्। अगस्तिसंहितयां । शुक्लपक्षेथकृष्णे वा दीक्षा सर्वशुभावहेति। कालोत्तरे तु । भूतिकामैः सिते सदा मुक्तिकामैः कृष्णपक्ष इति विशेषः । संहितायां । पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा । त्रयोदशी च दशमी प्रशस्ताः सर्वकामदा इति । अन्यत्र तु कृष्णाष्टम्यां चतुर्दश्यां पंचपर्वदिनेथवेति । मन्त्रसारसंग्रहे । द्वितीया पञ्चमी वापि षष्टी वापि विशेषतः। द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वेति । मन्त्ररत्नावल्यां तु । चतुर्थी नवमी षष्टी अष्टमी च चतुर्दशी । पौर्णमासी विना शेषाहितामुक्तौ मुमुक्षुष्विति । तत्वसारसंहितायां तु । तां तां तिथिं समालोच्य तद्भक्तां स्तत्र दीक्षयेत् । इद्रः । कस्य का तिथिरुद्दिष्टा विशेषाद्दद नारद । नारदः । ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः। चतुर्द्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी । द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका । चतुर्थी गणनाथस्य भानोः प्रोक्ता तु सप्तमी । नित्या मार्गेषु पार्वत्या अष्टमी च चतुर्दशी । विष्णुदीक्षायां पञ्चरात्रेति विशेषः द्वादश्यां शुक्लपक्षस्य सूर्यसंक्रमणे तथेति । संक्रमा विशुपदोव्यतिरिक्ता । कालोत्तरे च । दिनच्छिद्राणि मुक्त्वा च याश्च स्युस्त्रिदिनस्पृश इति। रत्नावल्यां तु । आदित्यं मंगलं सौरिंत्यक्त्वा वारांस्तुभूतये। संहितायाम्। रवौ सिते सोमे कर्त्तव्यं बुधशुक्रयोरिति सिते पक्ष इत्यर्थःअन्यत्र उत्तरात्रयरोहिण्यो रेवती पुष्यवासवम् ॥ धनिष्टा वायुमित्राश्विपित्र्यंत्वाष्टं च नैर्ऋतम् ॥ ऐशवैष्णव हस्ताश्च दीक्षायां तु शुभावहा इति ॥ वासवं ज्येष्टावायुः स्वाती मित्रं अनुराधा अश्विअश्विनी पित्र्यंमघात्वाष्टंचित्रानैर्ऋतंमूलंईशमार्द्रावैष्णवंश्रवणम् ॥ संहितायामपि। अश्विनी रोहिणीस्वाती विशाखाहस्तभेषु च ॥ ज्येष्टोत्तरात्र येष्वेव कुर्यान्मंत्राभिषेचनमिति ॥ रत्नावल्यां । त्र्यांण्युत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकं । हस्त स्वाति रनूराधा मघा मूलंच रेवती । अभिजित् श्रवणं चेति । कारणे च । पौष्णं रोहिण्यथादित्यं श्रवणं चाश्विनी तथा। सावित्रं त्वाष्ट्र वायव्य मैद्रं नैर्ऋतमेव च । तिष्यं त्रिरुत्तरार्द्रा च सौम्यं शिष्यत्रिजन्मभम्॥ नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रते इति ॥ पौष्णं रेवती आदित्यं पुनर्वसु सावित्रं हस्तः सौम्यं मृगः । नीरतंत्रेपि रोहिणी श्रवणार्द्रा च धनिष्ठा उत्तरात्रयम् ॥ पुष्यः शतभिषक्चैव दीक्षान क्षत्रमुच्यते इति ॥ रत्नावल्यां तु । प्रतिपत्पूर्वाषाढा च पंचमी कृत्तिका तथा । पूर्वा भाद्रपदा षष्ठी दशमी रोहिणी

तथा। द्वादशी सार्पनक्षत्रमर्थम्णा च त्रयोदशी। नक्षत्रलुप्ता इत्यते देवानामपि साधना इति ॥ अन्यद्वारादिसंयोगात्तिथिनक्षत्रदुष्टत्वं ज्योतिः शास्त्रादवसेयं तथा ॥ शुभयोगेषु सर्वेषु दीक्षा सर्वशुभ प्रदेति। रत्नावल्यां। योगाश्च प्रीतिरायुष्मान्सौभाग्यः शोभनः शुभः। सुकर्मा च धृति र्वृद्धि र्ध्रुवःसिद्धिश्च हर्षणः। वरीयांश्च शिवः सिद्धो ब्रह्मा ऐंद्रश्च षोडशेति ॥ तथा। शुभानि करणान्याहुर्दीक्षायां च विशेषतः। शकुन्यादीनि विष्टिश्च विशेषेण विवर्जयेत् इति। संहितायां। पंचांगशुद्धिदिवसे स्वोदये तिथिवारयोः। गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते ॥ प्रवृद्धे बलसंयुक्ते शुक्रे देवगुरौ तथा। शुभे विधुसमायोगे शुभवर्गे शुभोदये ॥ इत्यादौ सर्वमंत्राणां संग्रहः सर्वसौख्यकृत् इति। तथा च ज्योतिः शास्त्रे। नीचस्थे वक्रसंस्थेप्यतिचरणगते बालवृद्धेऽस्तगेवा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधश्च दीक्षा ॥ मौंजीबंधो गनानां परिणयनविधिर्वास्तु देवप्रतिष्टा वर्ज्याः सद्भिः प्रयत्नात् त्रिदश पतिगुरौ सिंहराशिस्थिते चेति। तथा। चरः सर्वं विवर्ज्यः स्यात् स्थिरराशिषु सौख्यदा॥त्रिषडायगताः पापाः शुभाः केंद्र त्रिकोणगाः।दीक्षायां तु शुभाः सर्वे रंध्रस्थाः सर्वनाशका इति ॥ आय एकादशस्थानं केंद्रेत्यनेन प्रथमचतुर्थ सप्तमदशम स्थानानि ॥ त्रिकोणेति पंचमनवमस्थानानि रंध्रमष्टमस्थानं। तथा। शिष्यजन्मदिवसे संक्रांतिविषु वेयने। अन्येषु पुण्ययोगेषु ग्रहणे चंद्रसूर्ययोः। शिष्यानुकूले काले वा देहशुद्धिः शुभावहेति। महाकपिलपंचरात्रेपि। एतन्नक्षत्रतिथ्यादौ करणे योगवासरे ॥ मंत्रोपदेशो गुरुणा साधनं च शुभावहमिति ॥ क्रियाकांडशेखरेपि ॥ तिथ्यादि सर्वमुक्तं इत्यादिनिपुणं वीक्ष्य दीक्षां कुर्वीत देशिकः। मौमुक्षवीं प्रत्ययंनकालादिनियमः स्मृत इति। रत्नावल्यां च। निंद्यानि तानि सर्वाणि प्रशस्तानि विमुक्तय इति ॥ एतच्च वक्ष्यमाणाग्निचक्रमवलोक्य दिनं कर्तव्यमिति ॥ अपवादोपि। शशिदिनकरयोर्ग्रहणे जन्मनि शिष्यस्य मकरसंक्रांतौ। करुणासमये च गुरोर्नक्षत्रादीष्यते न दीक्षायामिति। तथा। शिष्यजन्मदिवसेषु संक्रमे प्रग्रहे शशिदिनेशयोरपि ॥ पुण्ययोग्ययुजिवाशुभे नृणां मंत्रसिद्धिरभिधीयते परेति। विषुवेप्ययनद्वंद्वे आषाढ्यां दमनोत्सवे ॥ दीक्षाकार्या तु काले षुपवित्रारोपकर्मणि इति कालोत्तरे च॥ दीक्षायामभिषेके च तथा मंत्रपरिग्रहे ॥ व्रतग्रहणमोक्षे च द्रव्यारंभणकर्मणि ॥ कार्त्तिक्यां चैव वैशाख्यां स्वर्भानोरपि दर्शने। चंद्रसूर्योपरागे च षडशीति मुखेषु च॥ग्रहनक्षत्रयोगेषु विषु वेषूत्सवेषु च ॥ अयनेषु चसर्वेषु योगः सर्वार्थसिद्धिद इति॥रुद्रयामलेपि॥सत्तीर्थेर्कविधुग्रासे तं तु दामनपर्वणोः। मंत्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् इति ॥ अगस्तिसंहितायां। सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ॥ सूर्यग्रहणकाले न समोन्यो नास्ति कश्च न ॥ तत्र यद्यत्कृतं सर्वमनंतफलदं भवेत् ॥ नमासतिथिवारादिशोधनं सूर्यपर्वणि। ददातीष्ट गृहीतं यत्तस्मिन् काले गुरोर्नृषु। सिद्धिर्भवति मन्त्रस्य विनायासेन वेगतः। कर्त्तव्यं सर्वयत्नेन मन्त्र सिद्धिमभीप्सुभिरिति। तथान्यत्रापि। पुण्य तीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये। प्रयागे श्रीगुरौ काश्यां कालाकालं न शोधयेत् इति। तत्वसागरसंहितायां। तिथिं विनापि दीक्षायां विशिष्टावसरं शृणु। दुर्लभे सद्गुरूणां तु सकृत्सङ्ग उपस्थिते। तदनुज्ञा यदा लब्धा स दीक्षावसरो महान्। ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि। आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेदिति।तथा। यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः। न तिथिर्नव्रतं होमो न स्नानं न जपक्रिया।दीक्षायाः कारणं किं तु स्वेच्छावाप्ते तु सद्गुराविति। वास्तुयागोत्पत्तिमाह। राक्षसमिति।

हत्वेति। यदुक्तम्। कश्यपस्य गृहीणी तु सिंहिका राहुवास्तुतनयावजीजनत्। पूर्वतो हरि निकृत्तकन्धरो दैवतैरवरजो निपातित इति। महाकपिलपञ्चरात्रेपि । पूर्वमासी०न्महानुग्रः सर्वभूतभयङ्करः।स देवैर्निहते भूमौ स वास्तुपुरुषः स्मृतः । यावद्भूमिः स्थिरा लोके तावद्वास्त्वसुरः स्थितः। संहारे तु लयं याति देवैः सर्वग्रहादिभिः । विस्तारोप्यासमन्ता च शतकोटि स्तु योजनः।संस्थितो सौ धरां व्याप्य प्रोत्तानः कृष्णवर्णकः।जानू कूर्परकौ वास्तो र्वन्हि वायुप्रकोष्टगौ।पित्र पाद पुट स्वायमीशमूर्द्धाहृदंजलिः । ऊर्ध्वकेशः सुपीन स्च वर्त्तुलाचोसुराकृतिरिति । अन्यत्राधोमुखतोक्ता। वास्त्वोशनामा ह्यसुरो तिकायो देवैः पुरा दत्त वरो भिपूज्यः । शेते स भूम्यां प्रविसार्य पादौ हस्तौ तथा धोवदनः सदैव । ईशाने स्य शिरो निवेशित मभूर्वास्तोष्यते मारुते वन्हौ चापि करद्वयं पदयुगं नक्तं च राशिस्थितमिति। सोमशंभुनातु व्यवस्थोक्ता। आकुञ्चितकरं वास्तुमुत्तानम सुराकृतिं। स्मरेत्पूजासु कुद्यादि निवेशे त्वधराननम् । जानुनी कूर्परासक्ते दिशि वातहुताशयोः।पैत्रां पादपुटौ रौद्रां शिरोस्य हृदयें जलिरिति । स्थिता इति । पुनरुत्थान शङ्कया। तदुक्तम्। महाकपिल पञ्चरात्रे । सर्वान् देवांस्तु कार्येषु पूजये द्वास्तुसंस्थितान्। तेनासौ वर्त्तते नो चे दुत्तिष्टे न्माधवाज्ञया इति। तेभ्यः पूर्वं बलिंहरेदिति।तदुक्तम् । ततश्च तेषां ये पूजा विमुखास्तैः कृतानि तु । सुकृतानि समादद्यु दुष्कृतानि च कुर्वते । तत स्तेषामर्चनं तु प्रत्यब्दकुर्वतां सतां। शुभान्येवाशुजायन्ते नैवा शुभकथापि चेति । मयेनाप्युक्तम् । गृहादिकरणे यत्र नार्चितो वास्तुदैवतः।तत्र शून्यं भवेत्सर्वं रक्षोविघ्नादिभि र्हतं।तस्माद्वास्त्वर्चनं कार्यं सम्यक्संपद मीप्सुभिरिति। तथा च। शुभकर्मणि दीक्षायां मण्डपकरणे गृहादिविधिषु तथा । विहितो वास्तुर्बलिः स्याद्रक्षो विघ्नोपशान्ति सम्पद्भ्य इति। महाकपिलपञ्चरात्रेपि । भूमेः परिग्रहे पूर्वं शिलायां स्थापने तथा। जलाधारगृहार्थं च यजे द्वास्तुं विशेषतः। अपरेष्वपिकार्येषु याग होमादिकेषु च । वास्तुमण्डलकं कुर्यात्सूत्रयित्वा समं गुरुः। सुसमं सुखदं वास्तु विषमं न सुखावहं। ब्रह्माद्यदितिपर्यन्ताः पञ्चाशत्त्रयसंयुताः। सर्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः। असंगृह्य तु तान्सर्वान् प्रासादादीन्न कारयेत्। अनिष्पत्ति विनाशः स्यात् उभयो र्द्धर्मधर्मिणोरिति। यथावत्साकल्येन मण्डलार्थं चतुःषष्टि कोष्टोत्पादनमाह । पूर्वेतिविन्यसेदिति । अस गतिदीप्त्यादानेष्वित्यसौ भौवादिकस्य प्रयोगः उक्तमानतः। उक्तंवास्तुशास्त्रे। यन्मानं तेन मानेनेत्यर्थः । क्वचि द्धस्तमानत इति पाठः । महाकपिलपंचरात्रे तु विशेषः । गृहप्रसादकूपानां मण्डपस्य जलस्य च । वास्तुमण्डलकं कार्यमष्टहस्तं तु नाऽपरमिति। तन्मध्यमिति । तस्य मध्यं किंचिदालंव्य मध्यात् किंचिदधिकमालंब्येत्यर्थः। कुत इत्यपेक्षायां सूत्राग्रादिति शेषः।एवं परित उभयतः उत्तरदक्षिणयोः प्राची सूत्रस्येति शेषः। मत्स्यौ द्वौ चिन्हयेत्। संपादये त्तत्र प्रकारः। प्राची सूत्र प्रागग्रे सूत्रादि निधाय मध्याधिक चिह्नात् सूत्राग्रं भ्रामयेत् । एव मपराग्रादपि तत एको मत्स्यः एवमपरत्रापीति द्वितीयो मत्स्यः। तदुक्तं सिद्धान्तशेखरे । सोम सूत्रप्रसिध्यर्थं सूत्राग्रभ्रमणं ततः । प्रागंके प्रत्यगंके च हस्तं दत्वा समाचरेत्। उदग्दक्षिणगो मत्स्यो रेखायां जायते क्रमात् । शफरस्य मुखे पूछे मध्यचिन्हे प्रसारितम्। समन्तात्सोमसूत्रं स्यात् इति । द्वाभ्यामिति । तत्र द्वाभ्यां अग्राभ्या मेकैको मत्स्यः तथा। पूर्ववत्। तद्यथा। प्राची सूत्रार्द्ध मितेन प्राचीसूत्राग्रस्थितेन सूत्रेण ईशे आग्नेये चार्द्धचंद्र

फलमश्नुते ॥ १ ॥ राक्षसं वास्तुनामानं हत्वाधिष्ठाय तत्तनुं । स्थितास्त्रिपञ्चाशद्देवास्तेभ्यः पूर्वं बलिं हरेत् ॥ २ ॥ बलिमण्डलमेतेषां यथा तदभिधीयते ॥ पूर्वापरायतं सूत्रं विन्यसेदुक्तमानतः ॥ ३ ॥ तन्मध्यंकिञ्चिदालंब्यमत्स्यौद्वौ परितो लिखेत् ॥ तयोर्मध्ये स्थितं सूत्रे विन्यसेद्दक्षिणोत्तरं ॥ ४ ॥ द्वाभ्यांद्वाभ्यां तथा ग्राभ्यां कोणेषुमकारन्लिखेत् ॥ मत्स्यमध्येस्थिताग्राणि तत्र सूत्राणि पातयेत् ॥ ५॥ चतुरस्रं भवेत्तत्र चतुः कोष्ठसमन्वितं ॥ तत्पुनर्विभजेन्मंत्री चतुः षष्टिपदं यथा ॥ ६ ॥ ईशानाद्रक्षसोयावद्यावदानेः प्रभंजनः ॥ एवं सूत्रद्वयं दद्यात्कर्णसूत्रं समाहितः ॥ ७ ॥ ब्रह्माणं पूजयेदादौ मध्ये कोष्ठचतुष्टये ॥ दिक्चतुष्केषु पूर्वादि यजेदार्यमनंतरं ॥ ८ ॥ विवस्वंतं ततो मित्रं महीधरमतः परं ॥ कोणार्द्ध-

कुर्यात्। तत स्तेनैवै सूत्रेण उत्तरसूत्राग्रस्थितेन ईशे वायव्ये वार्द्धचन्द्रं कुर्यात् । एवमीशे मत्स्य उत्पन्नः। तथा पूर्ववत् ततसूत्रेण पश्चिमार्द्धस्थितेन वाय व्यै नैर्ऋते चार्द्र चंद्रं कुर्यात्। एवं वायव्ये मत्स्य उत्पन्नः ततसूत्रेण दक्षिणाग्रस्थितेन नैर्ऋत्ये आग्नेये अर्द्धचंद्रं कुर्यात्। तत उभयत्रापिमत्स्यद्वयंजायते। तदुक्तं सिद्धांतशेखरे। क्षेत्रार्द्धमानसूत्रेण दिक्षु चिह्नं समालिखेत्। दिक्षु चिह्नं समाश्रित्यकोणेष्वंकान्समालिखेत्। क्षेत्रार्द्धमानसूत्रेण प्रतिलोमानुलोमत इति। एवं मत्स्य चतुष्के जाते तन्मध्यमाग्रं सूत्रचतुष्कं दद्यात् इत्याह। मत्स्येत्यादि। चतुरस्रमिति। वास्तुशरीरस्य चतुरस्रत्वात्। तदुक्तम्। चतुरस्राकृतिः कश्चिदसुरः सर्वनाशक इति। महाकपिल पञ्चरात्रेपि। देवैः स वास्तुपुरुषं स्थापित स्तुरस्रक इति। आचार्या अपि। चतुरस्र संस्थिति रसौ इति । प्रयोगसारेपि । ज्ञेयः स वास्तुपुरुषः चतुरस्रसंस्थित इति। चतुष्कोष्ट समन्वित इति। चतुरस्र मध्ये । अथ च कोणचतुष्के बहिःकोष्टचतुष्क मपरं गुरु गणेश दुर्गा क्षेत्रेश पूजनार्थमुक्तम्। तदिति । यथा चतुःषष्टिपदं भवे त्तथा तद्विभजेदित्यन्वयः प्रभञ्जनो वायु स्तद्दैवत्यकोण स्तच्छब्दवाच्य स्तं यावत् । एवं कर्णसूत्रं कर्णसूत्रसंज्ञकः सूत्रद्वयं दद्यात्। शिल्पशास्त्रे । कोणसूत्रस्य करणीसूत्रमिति संज्ञासमाहितेति काकाक्षि गोलकन्यायेनोभयत्र सम्बध्यते। तत्र समाहितः सावधानो मन्त्री सम्प्रदायेन मन्त्रशास्त्राभिज्ञः पूर्वापरायत्तं सूत्रं विन्यसेदित्यादि समस्तु क्रियासु कर्तृत्वेनान्वेति अन्ते उपाकृतत्वात्। तत्र चतुःषष्टिकोष्टोत्पादनप्रकारो यथा । चतुर्षु कोष्टेषु कोणसूत्रचतुष्टयमन्यद्दद्यात्॥ ६ ॥ तन्मध्योत्पन्नमत्स्येषु पूर्वापरायत्तेद्वे सूत्रे दक्षिणोत्तरायत्ते च द्वे सूत्रे पातयेत् । एवं षोडश कोष्टानि सम्पद्यन्ते। तत स्तुर्षु कोणकोष्टेषु पुनः कर्णसूत्र चतुष्टयं दद्यात्। तदुत्पन्नमत्स्येषु पूर्वापरायत्ते द्वे दक्षिणोत्तरायत्ते द्वे च सूत्रे पातयेत्।एवं च कृते मध्यकोष्टद्वये मत्स्या उत्पन्नाः तेषु मत्स्येषु द्वे सूत्रे प्रागपरायत्तेद्वेचदक्षिणोत्तरायते दद्यात्। एवं चतुः षष्टिकोष्टानि सम्पद्यन्ते। तत्र ग्रन्थान्तरोक्त कर्णसूत्रद्वयातिरिक्त कर्णसूत्राणि मार्जयेत् । तत्रेशानशिवोक्तोविशेषः । पूज्या स्तुःषष्टिपदेषु विप्रै रेकोत्तराशीतिदे नृपाद्यैरिति। हयशीर्षपञ्चरात्रेतु । एकाशीतिषदं वास्तु गृहकर्मणि शस्यते । चतुःषष्टिपदं वास्तु प्रासादेषु प्रशस्यते। इति। सोमशम्भावपि। कुर्यात् कोष्टचतुःषष्टिं प्रासादे वास्तुमण्डलम्। गृहेपि वर्त्तयेद्वास्तुं किंत्वेकाशीतिकोष्टकैरिति। महाकपिलपञ्चरात्रे। प्रासादार्थं च तुःषष्टि रेकाशीतिगृहे तथेति। तथाऽन्यत्रापि । एकाशीतिपदं कृत्वा वास्तुं चैव गृहादिषु।

चतुः षष्टिपदो वास्तु प्रासादे ब्रह्मणास्मृतइति। उक्ता। मण्डपान्प्रवरान्वक्ष्ये प्रासादस्या नुरूपत इति। उक्तं तेनातिदेशिकं मण्डपे इदं वास्तु मण्डलम् ॥ ७ ॥ ब्रह्माणमिति। समाहित आदौ मध्ये कोष्टचतुष्टये ब्रह्माणं पूजये दिति सम्बन्धः कोष्टचतुष्टये एकाकारेणमार्जिते इत्यर्थः। तत्र पद्मं वि-लिखेत्। तदुक्तं महाकपिलपञ्चरात्रे। पञ्चविंशत्पदे मध्ये ब्रह्माणं त्वर्चयेत्कज इति। कादिमतेपि। सर्वमध्ये यजेत्सम्यक् ब्रह्माणं कमलासनम्। हेमाभं च चतुर्वक्त्रं वेदाध्ययनशालिनमिति। आदा-विति। सरस्वती साहित्यमुक्तम्।समाहित इत्यनेनैतदुक्तम्।पूर्वंपीठमभ्यर्च्य। पश्चातत्रब्रह्माणंपूजयेति। तत्र मण्डूकादिपरतत्वान्तं सम्पूज्य अणिमादि सर्वसिध्यन्ता नवपीठशक्तीः सम्पूज्य ॐसर्वज्ञान क्रियाव्यक्त कमलासनाय योगपीठाय नम इति पीठमन्त्रः।ॐनमोब्रह्मणे इति मूल मन्त्रः। प्रजापति ऋषिः। पंक्तिश्छन्दः। ब्रह्मादेवता। अक्षरैरङ्गानि। अक्षस्रक्स्रुक्दण्डकमण्डलुधरोब्रह्माध्येयः। अ-णिमादीनां ध्यानमुक्तम्। कुलप्रकाश तन्त्रे। सिन्धुरस्थाणिमा पूज्या पीतवर्णा चतुर्भुजा। वर-वज्रधरा दक्षे वामे भयनिधानभृत् ॥ १ ॥ महिमां महिषारूढां पूजयेत् कज्जलप्रभाम्। दण्डाभय-धराम् वामे दक्षे शक्त्यक्षमालिनीं ॥ २ ॥ नक्रस्थालघिमाश्यामा पूजनीया चतुर्भुजा। नागपाश-धरा दक्षे तद्वामे भयवारिजे ॥ ३ ॥ कनकाद्रिनिभा पूज्या कूर्मस्थागरिमा तथा। गदावरधरादक्षे वामे भयनिधानभृत् ॥ ४ ॥ पूज्या प्रेतगता नीलविद्युत्पुञ्जनिभेशिता। वरखड्गधरादक्षे वामे सा-भयकर्त्रिका ॥ ५ ॥ पूज्या या वशिता धूम्रा मृगस्था सा चतुर्भुजा। सारविन्दध्वजा दक्षे वामे वर-सरोजिनी ॥ ६ ॥ छागलस्थातिरक्ताङ्गी स्यात्पूजायां प्रकामता। शक्त्यक्षमालिनी दक्षे वामे स-वरकुण्डिका ॥ ७ ॥ पूजनीया वृषारूढा प्राप्तिस्तुहिनसन्निभा। शक्तिशूलवरादक्षे वामे सा भय-वारिजा ॥ ८ ॥ सर्वसिद्धिः पद्मरागप्रभा पूज्या चतुर्भुजा। साक्षमालारविन्दा च बीजपूरसरोजिनी इति। दिगिति। दिक्चतुष्के षु पूर्वादियजेत्। प्रादक्षिण्येनेतिशेषः। कोष्टचतुष्टये इदमत्राप्यन्वेति एकाकारेण मार्जिते इत्यर्थः। तेन आर्यः पूर्वदिशि। विवस्वान् दक्षिणदिशि। मित्रः पश्चिमदिशि। महीधरः उत्तरदिशि पूज्यः। तदुक्तमाचार्यैः।प्राग्याम्यवरुणोदक्दिक्कोष्टचतुःपदेषु समभियजेदिति। कोणेति। कोणब्रह्मपदस्य कोणभागे अधउर्द्धकोष्टे कर्णसूत्रेण भेदितत्वात्। यत्र तदर्द्धकोष्टं। तस्य द्वन्द्वानि तेषु वन्ह्यादि आग्नेयादि उपरिकोष्टे सावित्रं अधः कोष्टे सवितारं यजेत् परित इति चतुर्दिक्षु। तदुक्तं सोमशंभुना। मध्ये नवपदो ब्रह्मा शेषास्तु पदिकाः स्मृताः। षट्पदास्तु मरीचाद्या दिक्षु पूर्वादिषु क्रमात्। अष्टौ कोणाधिपास्तत्र कोणार्द्धेष्वष्टसु स्थिता इति। अत्र यद्यपि उपर्यधो-वेतिपदम् नास्तितथापि। महाकपिलपञ्चरात्रोक्त वास्तुशरीरस्थितिनिरूपणेनोपरिक्रमो लभ्यते तद्यथा। मस्तके संस्थितो रुद्रःकर्णयोस्तस्य संस्थितौ। पर्जन्यश्चादितिश्चैव मुखे चापःसुसंस्थितः। आपवत्सस्थितः कण्ठे जयन्तश्चदितिः पुनः। स्कन्धयोः पञ्च वालाद्याः महेन्द्राद्या भुजद्वये। वक्ष-स्थौ रुद्रसावित्रौ दासस्तु सविता तथा। हस्तौ तु द्वन्द्वतौ तस्य ब्रह्मा नाभौ व्यवस्थितः। पृथ्वीधरो मरीचि श्वस्तनयोःकुक्षिगौ पुनः।विवस्वान् मित्रनामा च पादयोःपितरःस्थिताः।पापाद्याश्चैवपूषाद्या सप्तसप्तोरुजङ्घके। इन्द्रो मेंढ्रे स्थित स्तस्यजयो वृषण संस्थित इति। रुद्र ईशानःदासो रुद्र जयः पृथ्वीधरो महीधरःमरीचि रार्य्यः पितरः निर्ऋतिः पापोरोगः इन्द्रः शक्र इति ज्ञेयम्। यदुक्तं। ईशश्चेशान रुद्रो ...सो तज्जयोरुद्रदासकः। ...मरीचि रार्य्यकः ख्यातः पिता स्याद्वाचासा-

**कोष्ठद्वंद्वेषु वन्ह्यादिपरितः पुनः ॥ ९ ॥ सावित्रं सवितारं च शक्रमिंद्रजयं पुनः ॥ रुद्रं रुद्रजयं विद्वानापंचाप्यायवत्सकं ॥ १० ॥ तत्कर्णसूत्रोभयतः कोष्ठद्वंद्वेषु देशिकः ॥ शर्वं गुहं**

भिधः। पापोरोग इति। अन्यत्रापि। धातृवन्ही समाश्रित्य कृत्वा चाधः पद त्रयं। सावित्रमर्चयेत् तत्र पदे राम सुसंज्ञके। विधिसावित्रयोर्मध्ये सवितारं पदत्रये। आश्रित्य पितृधातारौ कृत्वाचाधः पद त्रयं। यजेदिन्द्रं महाभागं पदे लोकसुसंज्ञके। तथात्वेन्द्रजयः पूज्यो ब्रह्म शक्र सुमध्यगः। आश्रित्य वायुधातारौ कृत्वा चाधः पद त्रयं। तत्र देवं यजेद्रुद्रं पदे भुवनसंज्ञके। तयेशवेधसो र्मध्ये तज्जयं च पदत्रये। ऐशान्यामापकं कामपदत्रयसुसंस्थितम्। प्रदीपवेधसोर्मध्ये यजेद्वत्सप-दत्रय इति। सोमशम्भावपि। सावित्रे रक्तपुष्पाणि वन्ह्यधः कोणकोष्ठके। तदधः कोष्ठके दद्यात् सावित्रे च कुशोदकम्। हरिद्रौदनमिन्द्राय रक्षोधःकोणकोष्ठके। इन्द्रजयाय मिंष्टान्नमिंद्राधस्तान्निवेदयेत्। रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे। तदधो रुद्रजयाय मांसमार्द्रं निवेदयेत्। आपो यशिवं कोणाध स्त्वहत्साय च तत्तल इति ॥ १० ॥ अथ तत्कर्णसूत्रोभयत इति। कर्णसूत्रस्य प्रयोजनत्वात्। अत्र कोर्णार्द्धकोष्टेत्युक्तम्। तदिति। दिशत्युपदिशतिशिष्येभ्यो। मन्त्रानिति देशिको मान्त्रिकः सर्वत्रक्रमादिति। वन्ह्यादिपरित इति। क्रमोनुसन्धेयः सार्द्धौद्यन्तेति। अर्द्धेचते आद्यन्ते च अर्द्धाद्यन्तौ। अर्द्धाद्यन्ताभ्यां सहवर्त्तमानानि यानि पदानि तेषु। इदं च कर्णसूत्रेणार्द्धकृतेकोणकोष्टतो लभ्यते। बलिविधानमाह। उक्तानामिति। पञ्चभिः रजोभिः सवतोभद्रमण्डले वक्ष्यमाणैः तत्र कमलानि वक्ष्यमाणप्रकारेणैव पूरयेत्॥ तत्र मध्यपद्मं श्वेतमन्यानि रक्तानि। तदुक्तं। दिव्यसारस्वते ॥ मध्ये पदानां नवकं मार्जयित्वाप्रपूरयेत्॥ सितेन रजसा भूय स्त्वद्दिक्षु चतुष्टस्वपि॥ षट्कं संमार्ज्य रजसा रक्तेन परिपूरयेत्। शिष्टानि च पदान्यत्र यथास्थानं प्रकल्पयेत्॥ विचित्राणि ततो मध्ये ब्रह्माणं संप्रपूजयेदिति॥ पदसीमारेखाः श्वेताः पदानि च विचित्राणि ॥ वास्तुदेवानां ध्यानं तंत्रांतरोक्तं लिख्यते ॥ उक्तानां सर्वदेवानां स्वरूपं च निगद्यते ॥ अक्षमालां स्रुचं दक्षे वामे दंडकमलुं॥ दधानमष्टनयनं यजेन्मध्येंबुजासनं ॥ सर्वे चतुर्भुजादेवा वास्तु देहे व्यवस्थिताः। कृतांजलिपुटाः सर्वेखड्गखेटकपाणयः। ब्रह्माणं संनिरीक्षंते तद्वक्त्राभिमुखा स्व ते। स्वस्वस्थाने स्थिता स्वैव साधारणमुदाहृतं। मरीचिः श्वेतवर्णः स्यात् विवस्वानुक्तवर्णकः। शातकुंभसमो मित्रः कृष्णवर्णस्तुभूधरः। सविता नीलवर्णाभः सावित्रो धूम विग्रहः। इंद्र स्वा रुणवर्णाभः शुक्ल स्वेंद्रजय स्तथा ॥ रुद्रः प्रवालसदृशः पीतो रुद्रजयस्तथा ॥ आपो गोक्षीरधवल आपवत्सो जपाद्युतिः। ईशानः क्षीरधवलः पर्जन्योंजनसंनिभः। जयंतोंजनसंकाशो माहेंद्रस्वामलद्युतिः। आदित्यो रक्तवर्णः स्यात् सत्यक श्वित्रवर्णकः। भृशो बंधूकपुष्पाभः कुंदाभस्वांतरिक्षकः। उद्यद्दिनकराभोग्निः पूषारक्ताब्जसंनिभः। वितथस्वेंद्रचापाभो विद्युद्वर्णो गृहक्षतः। यमस्वांजनसंकाशोगंधर्वःपद्मरागवत्॥ भृंगेराजस्तुभृंगाभो मृगो जीमूतसंनिभः। निर्ऋतिः पावकाभस्र पीतो दौवारिकः स्मृतः। सुग्रीवो नीलकंठाभस्रंद्राभःपुष्पदंतकः। वरुणः स्फटिकाभांगो भृंगाभ स्वा सुरोमतः। शेषस्वोत्पलसंकाशः पापयक्ष्मेंद्रनीलवत्। वायु कृष्णाभवर्णः स्यात् नागः शंखेंदुसंनिभः। मुख्यो मौक्तिकसंकाशो भल्लाटः श्वेत पद्मवत् ॥ सामस्फटिकसंकाशोऽर्गलो रक्तोत्पलद्युतिः। दितिः कुन्देंदुधवला कपिला चादितिः स्मृता ॥ च-

रक्ती शंखसदृशी विदारीं पावकद्युतिः। पूतना हिमसंकाशा मेघाभा पिलपिञ्छिका॥ खड्गं च पानपात्रं च छुरिका कर्त्तरी तथा।दधाना भीमरूपास्ता राक्षस्यः परिकीर्तिताः। सितो रक्तश्च पीतश्च कृष्णः स्कंदादिकाग्रहाः। वज्रं शक्तिं च खड्गं च पाशं च विकृताननाः।दधाना भीषणाःप्रोक्ता ग्रहाः स्कंदादिका श्चते इति॥ अष्टादशरेखा नाडीत्वेन तत्तद्देवतात्वेन च ध्येयाः। तदुक्तं। लक्ष्मी यशोवती कांता सुप्रिया सुकला शिवा॥ सुभगा सुमुखी नंदा नाड्यः प्राचीमुखोद्गता। धन्या प्राणा विशाला च स्थिराभद्रा जया निशा। विरजा विभवा चैता नाड्यः सौम्यमुखाः स्मृता इति। पायसान्नैरिति॥ बहुवचनमाद्यर्थं तेन वक्ष्य माणानि लाजादिद्रव्याणिसंगृहीतानि॥ तत्रप्रतिदैवतं वलिद्रव्यभेदामंत्राश्चोक्ताः। महाकपिलपंचरात्रे॥ पायसौदन लाजै श्च युक्तं धूपैः प्रसूनकैः। अक्षता तिलसंयुक्तं माषभक्तादिमंडितं॥ गृहाणेमं बलिं ब्रह्मन् वास्तुदोषं प्रणाशय॥ गंधादि शर्करापूपं पायसोपरिसंस्थितं॥ आर्यकाख्य गृहाणेमं सर्वदोषं प्रणाशय॥ चंदनाद्यर्चितं नाथ कर्पूरागरुमंडितं। विवस्वन्वै गृहाणेमं सर्वदोषं प्रणाशय॥ सगुडं पायसं नाथपुष्पादि सुसमन्वितं॥ गृहाणेमं बलिःहृद्यं मित्र शांतिं प्रयच्छमे॥ माषोदनं समांसं च गंधादि क्षीरसंयुतं॥ गृहाणेमं महीभृत्त्वं सर्वदोषं प्रणाशय॥एवमंतर्बलिं दत्वा अन्येषां सर्वेषांयथ्यर्चा आग्नेयादि तथापीशादिबलिं दद्यात्॥ वचनानुरोधात्। वचनं यथा। ईशादि दक्षिणावर्त्तो बलिःसामान्यभाषितः। सर्वेषां खलु वास्तूनां विशेषः पदनिर्णय इति॥ अन्यत्र पूजापि॥ ईशाद्ये चोक्ता॥ ईशकोणादिषु सुरान् पूजयेच्च विधानत इति। अन्यत्रापि। ईशानादि चतुःकोणसंस्थितान्पूजयेद्बुध इति। क्षीरं खंडसमायुक्तं पुष्पादि च सुशोभितं॥ गृहाणेमं बलिं हृद्य माप शांतिं प्रयच्छ मे॥ दधीदं गुडसं मिश्रं गंधादि च सुमंडितं॥ गृहाणेमं बलिं वत्स विघ्नमंत्र प्रणाशय॥ पुष्पादि कुशपानीयं कर्पूरागरुवासितं॥ सावित्रं वै गृहाणेमं शान्ति मत्र प्रयच्छमे। षष्टिकं सगुडं नाथ रक्तगन्धादिशोभितम्। गृहाणेमं बलिं सूर्य विघ्नमत्र प्रणाशय। शीतमन्नं तथा पुष्पं कुंकुमादिसमन्वितम्। गृहाणेमंबलि हृद्यं शक्रदेव नमोस्तुते। ओदनं घृतसंयुक्तं वस्त्रगन्धादिमण्डितं।गृहाणेमं बलिं हृद्य मिन्द्रजयनमोस्तुते। पक्वापक्वमिदं मांसं वस्त्रपुष्पादिसंयुत्तम्। गृहाणेमं बलिं हृद्यं रुद्रदेव नमाम्यहम्। हृन्मांसं सघृतं पक्वं गन्धपुष्पादि संयुतम्। गृहाणेमं बलिं रुद्रजयस्वस्ति प्रयच्छमे। रक्तपुष्पसमांसं वै रक्तवस्त्रादि संयुतं।विदारो वै गृहाणेमं रक्षोविघ्नं विनाशय। पित्तं रक्तास्थि संयुक्तं रक्तगन्धादि मण्डितम्। गृहाणेमं बलिं पापे रक्षोविघ्नं विनाशय। सघृतं मांसभक्तं च वस्त्रगन्धाद्यलंकृतम्। बलिं गृहाण शर्वेमं रक्षोविघ्नं प्रशामय। मांसपुष्पादि संयुक्तं माषभक्तोपरिस्थितम्। गृहाणेमं बलिं स्कन्द रक्षोविघ्नं प्रशामय। श्वमांसं पिष्टकैर्युक्तं पक्वमांसोदकान्वितम्। अर्यमन्वैगृहाणेमं रक्षोविघ्नंप्रशामय। रक्तमांसौदनं मत्स्यं गन्धधूपसमन्वितम्। जृंभकत्वं गृहाणेमं रक्षोविघ्नं प्रशामय। छागकर्णान्वितं मांमं वस्त्रगन्धादिसंयुतम्। पिलिपिञ्छ गृहाणेमं रक्षोविघ्नं प्रणाशय। घृतेनसाधितं मांसं वस्त्रगन्धादिसंयुतम्। चरकिं वैगृहाणेमं रक्षोविघ्नं प्रणाशय। सघृतं चाक्षतान्नं च वस्त्रगन्धाद्यलंकृतम्। गृहाणेमं बलिं त्वीश वास्तुदोषापहारकम्। उत्पलं पायसैर्युक्तं वस्त्रादिकसमन्वितम्। गृहाणेमं बलिं हृद्यं मेघराज नमोस्तुते। पञ्चहस्तं सुपीतं च ध्वजं भक्तादिमण्डितम्।गृहाणेमं बलिं हृद्यं जिष्णुसुत;नमोस्तुते। ओदनं घृतसंपूर्णं पञ्चरत्नादिमण्डितम्। गृहाणेमं बलिं देव देवराज

नमोऽस्तु ते। रक्तपुष्प युतं भक्तं रक्तगन्धादिभिर्युतम् । गृहाणेमं बलिं हृद्यं भास्कर त्वं नमोऽस्तु ते। वितानं धूम्रवर्णाभं गन्धादिकसुशोभितम्। रक्तयुक्तं गृहाणेमं बलिं सत्य नमोऽस्तु ते। इदं तु मांसं भक्तं वै वस्त्रगन्धादिपूजितम्। गृहाणेमं वृषबलिं वास्तुदोषं प्रणाशय। इदं तु शावलंमासं नैवेद्यादिस्तु संयुतम्। गृहाणेमं बलिं हृद्यं व्योम शान्तिं प्रयच्छ मे । सुवर्णपिष्टकं चापवस्त्रगंधादिभिर्युतम् । घृतान्वितं गृहाणेमं सप्तजिह्व नमोऽस्तु ते। क्षीरं लाजसमायुक्तम् रक्तपुष्पादिमण्डितम् । गृहाणेमं बलिं हृद्यं पूषदेव नमोऽस्तु ते। दधिगंधादिभिर्युक्तम् पीतपुष्पसमन्वितम्। बलिं वितथ गृह्णेमं विघ्नमत्र प्रशामय। भक्तं मधुप्लुतं चैणं रक्तवस्त्रादिमण्डितम्। गृहाणेमं बलिं हृद्यं यमदेव नमोऽस्तु ते। पक्वमांसौदनं नवनीतवस्त्रादिमण्डितम्। प्रीतिं कर गृहाणेमं गृहरक्ष नमोऽस्तु ते। नाना गंधसमायुक्तं रक्तपुष्पादिभिर्युतम्। बलिं गृहाण गंधर्व सर्वदोषं प्रशामय । इमां तु शाकुनीं जिह्वां माषभक्तापरिस्थिताम्। गृहाणेमं बलिं भृङ्गराज शान्तिं प्रयच्छ मे। एवं घृततिलोपेतं गंधपुष्पादिसंयुतम् । गृहाणेदं बलिं हृद्यं मृगदेव नमोऽस्तु ते। शर्कराखंडसंयुतं वस्त्रगंधादिमंडितम् । प्रीतो बलिं गृहाणेमं रक्षोराज नमोऽस्तु ते। चन्दनागरुकाष्टं च गंधपुष्पादिभिर्युतम्। गृहाणेमं बलिं हृद्यं दौवारिक नमोऽस्तु ते। इदं तु पायसं नाथ गंधपुष्पादिमंडितम्। सुग्रीव वै गृहाणेमं बलिं शान्तिं प्रयच्छ मे। यवाग्राणि च गोदुग्धं भक्तोपरिसुरोपितम्। गृहाणेदं बलिं हृद्यं जलराज नमोऽस्तु ते । माषयुक्तं कुशस्तंबं घृतगंधादिसंयुतम्। पुष्पदन्त गृहाणेमं सर्वदोषं प्रणाशय । मधुनासाधितं पिष्टं गंधाद्यैरुपशोभितम्। बलिं गृहाण सुरेमं सर्वदोषं प्रणाशय । घृतं चान्नसमायुक्तं कर्पूरादिसमन्वितम्। गृहाणेमं बलिं शेष सर्वशान्तिं प्रयच्छ मे। यवजं तंडुलं नाथ गंधपुष्पादिशोभितम् । गृहाणेमं बलिं रोग सर्वदोषं प्रणाशय। सघृतं मंडकं चेदमन्नाद्यैरुपशोभितम्।गृहाणेमंबलिं हृद्यं मृगवाह नमोऽस्तु ते। इदं च कृशरं चान्नं पुष्पगंधानिमंडितम्। पातालेश गृहाणेमं विघ्नमत्रप्रशाम्य तु । नारिकेलोदकं भक्तं पीतवस्त्रादिसंयुतम्। गृहाणेमं बलिं मुख्यं वास्तुदोषं प्रणाशय । पायसं मधुनामिश्रं नानापूजोपशोभितम् । गृहाणेमं बलिं सोम सर्वदोषं प्रणाशय। ओदनं घृतसंमिश्रं गंधपुष्पसमन्वितम्। गृहाणेमं बलिं हृद्यं भल्लाट त्वं नमोऽस्तु ते।माषान्नं तु घृताभ्यक्तं पुष्पगंधादिमंडितम्। गृहाणेमं बलिं हृद्य मर्गलाख्य नमोऽस्तु ते । क्षीरखंडसमायुक्तं नानापूजोपशोभितम् । दैत्यमात गृहाणेमं सर्वदोषं प्रणाशय। पोलिकां मधुसंमिश्रां वस्त्रगंधादिसंयुताम् । गृहाणेमं बलिं हृद्यं देवमातर्नमोऽस्तु ते। स्वर्गपातालमर्त्ये च ये देवा वास्तुसम्भवाः। गृह्णन्त्वमुं बलिं हृद्यं तुष्टायां तु स्वमन्दिरम्। मातरो भूतवेताला येचान्ये बलकांक्षिणः। विष्णोःपारिषदा ये च ते पि गृह्णन्त्विमं बलिं। पितृभ्यःक्षेत्रपालेभ्यो बलिं दत्वा प्रकामतः।अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत्। इतिसर्वसंपदित्यनेन दिशां बलिरप्युक्तः। तदुक्तं प्रयोगसारे । वास्तु शेष क्रियाभूतःसर्वरक्षाविभूतिकृत्। भूतप्रीतिप्रदश्चास्मिन् दिशां बलिरुदीर्यते। दिक्पाल परिषत् सर्वभूतानुद्दिश्य नामभिः पूजाविसर्ज्जनान्ता यत् सविज्ञेयो दिशां बलिः। दध्यंबुरजनीपुष्प लाज सक्तु तिलां धसा। द्रव्येण वितरेद्दिक्षु बलिं दिक्क्रमयोगतः। सुराणां तेजसां चैव प्रेतानां रक्षसामपि । तथा जलानां प्राणानां नक्षत्राणां च यत्पुनः। विद्यानामधिपानां च तान्यथोक्ता बलिं हरेत्। सवाहनपदं प्रोक्ता परिवाराय शक्तये। तत्पार्षदेभ्यश्च ततः सर्वेभ्य इति संयुतं। भूतेभ्यश्च क्रमाद्भूयःप्रादक्षिण्यात्क्षिपेद्बलिम्। द्वि-

षत्पिशाचवेतालरक्षोरक्षा भयार्त्तिहा । दिशां बलिविशेषेण सर्वसंपत् समृद्धिदः। वास्तौ गृहे प्रदाहे भूतद्रोहे गृहप्रवेशे च। वितते च शान्तिहोमे दिशांबलिः सिद्धये प्रयोक्तव्यइति । तत्र यथोपदेशं प्रयोगो लिख्यते। अथ यजमानः आचार्यंवृणुयात् । तत्र आचार्योवक्ष्यमाणलक्षणां भूमिं परिगृह्य वक्ष्यमाणमार्गेण तच्छुद्धिं विधाय पञ्चब्रह्मभिः पंचगव्यैर्भूमिं सिंचयेत्। तन्मध्ये कनकशलाकया रत्नेन वा तदभावे रजत फल पुष्पस्यधान्यानामन्यतमेनवा । शान्तायशोवति कान्ता विशाला प्राणवाहिनी। सती च सुमना नन्दा सुभद्रा नवमी मतेति। नवरेखाःप्रागपरायत्ताःदक्षिणोपक्रमा उदगपवर्गाविलिख्य हिरण्यासुव्रता लक्ष्मी विभूति विमला प्रिया । जया कला विशोका च नवमी संस्मृता बुधैरिति नवरेखा दक्षिणोत्तरायताः। पश्चिमोक्रमाः पूर्वापवर्गा विलिख्य ततः शुक्ल दोरकादिनाताः सम्यक् निर्माय पूर्वोक्तप्रकारेण पंचरजोभिर्मंडितं पूर्वोक्तकोणकोष्टचतुष्टयोपेतं विचित्रंमण्डलं रचयेत्। तत्पश्चिमदिशि हस्तमात्रं त्रिमेखलं कुण्डं स्थण्डिलं वा विदध्यात्। ततो बहिः। कोणकोष्टस्थाम गुरुगणेशदुर्गाक्षेत्रपालान् चतुष्पदं नाभिगं ब्रह्माणं तत्पूर्वदिशि चतुष्पदं वामस्तनगमार्यकं इत्यादि । अर्द्धपदगामदितिं कर्णगावित्यंन्तं पूर्वोक्तेनतत्तत्पदगस्थितान् पंचाशद्देवान् पदार्थान्समयेम। ब्रह्मन् इहागच्छ इहतिष्ठेति सर्वानावाह्य प्रणवादि नमोन्तेन चतुर्थ्यन्तस्वस्वनाममन्त्रेण पाद्यादिभिरुपचारैः प्रपूजयेत् । ततोमण्डलादीशानकोणे अव्रणमकृशमूलं निर्मलजलपूर्णं दृढं कलशमक्षतोपरिस्थापयेत्। तत इमं मे वरुणइति वरुणगायत्र्या वरुणं कलशेन्यसेत्। गंगाद्याः सरितः सर्वा समुद्राश्च सरांसि च । आयांतु यजमानस्य दुरितक्षयकारका इत्यतेनतीर्थान्यावाह्य अश्वस्थानाद गजस्थान वल्मीक नदीसङ्ग ह्रद गोकुल रथ्यातःसमृत्तिका आनीय कलशनिक्षिप्य वंवरुणाय नम इति मन्त्रेण तत्र कलशे पञ्चोपचारैर्वरुण पूजयेत्। ततो पुरा मांसी वचा कुष्टं शैलेयं रजनीद्वयम्। सटी चंपक मुस्तं चेति । सर्वौषधीश्च प्रक्षिपेत्। ततः कुंडादिसमीपमेत्य संस्कारादि अग्निमुखान्तं कर्मकृत्वा ब्रह्मादिक्षिपं चाशद्देवेभ्यः अष्टोत्तरसहस्र मष्टोत्तशत मष्टाविंशतिमष्टौ वा प्रत्येकं यवैर्वा कृष्णतिलैर्वा उदुम्बरतदतिरिक्त क्षीरवृक्षीयपालाशखदिरापामार्ग कुश दूर्वाणामन्यतमसमिद्भिर्वा आहुतीर्जुहुयात् । केचित्तु । ब्रह्मण आहुतिशतं अन्येषां दशदशाहुतयइत्याहुः। तत ॐ वास्तोष्पतये नमः। अनेन वैदिकैर्वा तल्लिंगैः। पंचमंत्रैः। पंचबिल्वफलानि बिल्वबीजानि वा जुहुयात्। तत उत्तर तन्त्रं समाप्य वौषडन्तेनाग्निमन्त्रेण वरुणमन्त्रेण वा पूर्णाहुतिं हुत्वा । तन्त्रोक्त द्रव्यैं स्ततन्मन्त्रैश्च त्रिपंचाशद्देवताभ्यो बलिं दत्वा दिशां बलिं च विधाय आचार्यः प्रत्यङ्मुखो भूत्वा प्राङ्मुखं साध्यं शान्तिकलशोदकेन सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वरा इत्यादिभिर्वशिष्ट संहितोक्तैर्मन्त्रै वैदिकैश्च मङ्गलाभिषेकं कत्वा सर्वौषधि जलैः स्नापयेत्। तत आचार्यः पुनर्ब्रह्मादिदेवान् पञ्चोपचारैः संपूज्य । ततो यान्तुदेव गणाः सर्वे पूजामादाय पार्थिवीं। इष्टकाम प्रसिध्यर्थं पुनरागमनायचेति । ततः आचार्या यदक्षिणां दद्यात्। तत आचार्यो मण्डपस्यपश्चिमभागे स्थंडिलं कृत्वा तस्मिन् साध्यं संस्थाप्य सुदर्शनेनाघोरेण वा तंसकलीकृत्य स्वयमपितन्मूर्त्तिर्भूत्वा रक्तोष्णीषवस्त्रोत्तरीयमाल्यचन्दनादिना ऽलंकृत्य साध्यस्य दक्षिणेभागे उदङ्मुखः स्थित्वा सौवर्णराजतताम्रादीनामन्यतमं पात्रमादाय तत्रतान् ब्रह्मादिदेवतानिवेदितपिण्डान्। यथास्थानं निधाय तत्तद्देवताश्चवास्तुपुरुषेण

चार्यमणं जंभकं पिलिपिच्छकं ॥ ११ ॥ चरकीं च विदारीं च पूतनामर्चयेत्क्रमात् ॥ अ-र्चयेद्दिक्षु पूर्वादि सार्द्धांघ्रंतपदेष्विमान् ॥ १२ ॥ अष्टावष्टौविभागेन देवान्देशिकसत्तमः ॥ क्रमादीशानपर्जन्यजयंताः शक्रभास्करौ ॥ १३ ॥ सत्यो वृषांतरिक्षौ च दिशि प्राच्यामव-स्थिताः ॥ अग्निः पूषा च वितथो यमश्च गृहरक्षकः ॥ १४ ॥ गंधर्वो भृंगराजश्च मृगोद-क्षिणदिग्गताः ॥ निर्ऋतिर्दौवारिकश्च सुग्रीववरुणौ ततः ॥ १५ ॥ पुष्पदंतासुरौ शेषरो-गौ प्रत्यक् दिशिस्थिताः। वायुर्नागश्च मुख्यश्चसोमो भल्लाट एव च ॥ १६ ॥ अर्गला-ख्योदित्यदिती कुबेरस्य दिशि स्थिताः ॥ उक्तानामपि देवानां पदान्यापूर्वपंचभिः॥ १७॥ रजोभिस्तेष्वथैतेभ्यः पायसान्नैर्बलिं हरेत् ॥ अयं वास्तुबलिः प्रोक्तः सर्वसम्पत्समृद्धिदः ॥

सार्द्धं तत्रैव संस्थाप्य प्रत्येकं पिण्डेषु घृतदीपं निधाय रक्तपुष्पैरलंकृत्य साध्यं संप्रोक्ष्य तत्पात्रं करा-भ्यामादाय। भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम्। अन्यत्र वासं परिक-ल्पयन्तु क्षमन्तु नान्यत्र नमोस्तुतेभ्य इति। मन्त्रेण साध्यं नीराज्य अन्यस्मिन्पात्रे आढकपरिमितं रक्तोदकं भूतक्रूरं च निष्पाद्य तत्रापि नवदीपान्निधाय तेन नीराज्य खड्गपाणिः स्वयं खड्गहस्तै रनेकैः परिवृतः दीपिकाशतैः परिवृतश्च पञ्चविधवाद्यघोषं स्वस्तिसूक्तसञ्जुष्टदिग्भागश्चत्वरमहा-वृक्षभूतलं वा तडाग नदी देवालयानामन्यतम देशं गत्वा। तत्र स्थण्डिलंगोमयेनोपलिप्य प्राङ्मुख स्तत्तद्देवताः संस्थाप्य पिण्डानपि तत्र तत्र निधाय चतुर्दिक्षु भूतक्रूरेण पूर्वोक्तमन्त्रेण बलिदानं कृत्वा रक्तोदकं तत्र निक्षिप्य प्रदक्षिणं परिक्रम्य प्रक्षालितपाणिपादनयनः पुनः पुनरपश्यन्नेव तत्सर्वं परिवारानग्रतः प्रस्थाप्य स्वयंध्याननिष्टः सन् साध्यं समागत्यतस्य रक्षांकुर्यादिति मुख्यः प्रकारः। यदाहुः। वास्तूपशमनंकुर्यात्समिद्भिर्बलिकर्मणा। होम स्त्रिमेखले कार्यः कुण्डेहस्तप्रमा-णके। यवैः कृष्णतिलैः स्तद्वत्समिद्भिः क्षीरवृक्षजैः। पालाशैः खादिरैर्वापि मार्गो दुम्बरसम्भवैः। कु-शदूर्वामयैर्वापि मधुसर्पिसमन्वितैः। कार्यस्तु पञ्चभिर्बिल्वै र्बौल्वबीजैरथापिवा।होमांते भक्ष्यभोज्यैश्च वास्तुदेशे बलिं हरेत्। तत्तद्विशेष नैवेद्यमिदं दद्यात् क्रमेणत्वित्यादिना अन्यथा स्य प्रत्यब्दं का-लविशेषे कर्त्तव्यतोक्ता। यदाहुः। एवं सिंहगते भानौ पूर्णायां प्रतिवत्सरं।स्वगेहे वास्तुपूजाया म-ण्डलेशहुतक्रमात्। एवं विदधतो गेहे नाकल्याणम् कदाचन। आबालमरणं व्याधिभूतप्रेतादि-कानि च। न सर्पपीडा नान्योन्यकलहान्यशुभानि च। पुत्रपौत्रधनारोग्यपशुदासीसमृद्धिभाक्। अ-रोगी विजयी स्यात चिरञ्जीवति तद्गृहे। राजवेश्मसु सर्वत्र तथा च महिषी गृहे। सचिवामात्य सेनानी भवनेषु पुरे तथा। विदध्यात्प्रतिवर्षं तु प्रोक्तसिध्यै तु देशिकः। न चेदुक्तान्यथा रूपफलैः क्लेशोनिशं भवेत् इति ॥ १८ ॥ मंडप माह। नक्षत्रेति। ज्योतिःशास्त्रसमुक्तप्रकारेण नक्षत्रवारारा-शीनां मध्ये साध्यानुकूले नक्षत्रे साध्यानुकूलराशौ अनुकूलवारे शुभेहनि ज्योतिः शास्त्रसमुक्तशुभ-तिथौ ततो मंडपं रचयेत् इति सम्बन्धः। तथा च राजमार्तण्डे। आदित्य इय रोहिणी मृगशिरो हस्तो धनिष्ठोत्तरा पूषा विष्णु मघानुराध पवनैः शुद्धैः सुताराग्वितैः। सौम्यानां दिवसेषु पाप-रहिते योगे विरक्ते तिथौ विष्टित्यक्त दिने वदन्ति मुनयो वेश्मादि कार्यं शुभमिति। भूमितले शुद्धे इति। तत्र भूमिपरीक्षोक्ता। महाकपिल पञ्चरात्रे। तत्र भूमिं परीक्षेत वास्तुज्ञान विशारदः। स्फु-

टिता च सुशल्या च वल्मीका रोहिणी तथा। दूरतः परिवर्ज्याभूः कर्त्तुरायुर्द्धनापहा। स्फुटिता मरणं कुर्यात् ऊखरा धननाशिनी। सशल्या क्लेशदानित्यं विषमा शत्रुतोभयम्। ईशकोणप्लवा सा च कर्त्तुः श्रीदा सुनिश्चितम्। पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा। विद्वेषं मरणं व्याधिं कुर्यादग्निप्लवा मही। दक्षिणप्लवा च या भूमि र्नित्यं मृत्युभयप्रदा। गृहक्षयकरी सा च भूमिर्यानैर्ऋतप्लवा। धनहानिकरी पृथ्वी कीर्त्तिता वरुणप्लवा। वातप्लवा तथा भूमि र्नित्यमुद्वेगकारिणी। श्वेता तु ब्राह्मणीपृथ्वी रक्ता वै क्षत्रिया स्मृता। वैश्यापीता तु विज्ञेया कृष्णा शूद्रा प्रकीर्त्तिता। ब्राह्मणी घृतगन्धास्यात् क्षत्रिया रसगन्धकृत्। क्षीरगन्धा भवेद्वैश्या शूद्रा विट्गन्धिनी क्षितिः। मधुरा ब्राह्मणी भूमिः कषाया क्षत्रिया स्मृता। वैश्यातिक्ता च विज्ञेया शूद्रा स्यात्कटुका मही। ब्राह्मणीभू कुशो पेता क्षत्रिया स्या च्छरा कुला। कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला। सिता पीता तथा रक्ता कृष्णवर्णा समन्विता। स्थिरोदका दृढा स्निग्धा भूमिः सर्वसुखान्विता। शीतस्पर्शोष्णकाले च वह्निस्पर्शा हिमागमे। वर्षासु चोभयस्पर्शा साशुभापरिकीर्त्तिता इति। हयशीर्ष पञ्चरात्रे। सुरभीणां रतिर्यत्रसवत्सानां वृषैःसह। सुन्दरीणां रतिर्यत्र पुरुषैः सह सत्तम। कश्मीरचन्दनामोदकर्पूरागरुगंधिनी। कमलोत्पलगंधा च जातीचम्पकगंधिनी।पाटलामल्लिकागंधा नागकेसरगंधिनी। दधिक्षीराज्यगंधा च मदिरासवगंधिनी। सुगंधिव्रीहिगंधा च शुभगंधयुता च या। सर्वेषामेव वर्णानां भूमिः साधारणी मतेति। तथा। ज्ञात्वा भूमिं परीक्षेत पूर्वोदक् प्रवणांशुभां। असंकटां तथा छन्नां तृणैस्तोयपरिप्लुतां। संपूर्यमाणे खाते तु तथा धिकमृदां शुभाम्। कुसुम प्रकर स्तद्वत् यस्यामम्लनिम्नक्षति। ननिर्वाति तथा दीपस्तोयं शीघ्रं न जीर्यति। श्वेता रुणा पीत कृष्णा विप्रादीनां प्रशस्यते। आज्यासृग्गंधमद्यानां तुल्यगंधा तु या भवेत्। मधुरा च कषाया च अम्ला च कटुका च या। कुशैः शरैस्तथा काशैर्दूर्वाभिर्याचसंभृतेति। प्रयोगसारेपि। वितस्तिमात्रविस्तारं निर्माय विवरंभुवि। निक्षिपेत्तं मृदं तस्मिन् तासु शिष्टासु शोभनम्। समासु मध्यमं विद्यात् न्यूनास्वधम उच्यते। परीक्ष्यैवं प्रयत्नेन त्यक्त्वाभूमिं कनीयसीं। अङ्गार तुष केशास्थि हीनं कृत्वाथ भूतलमित्यादिना तुषेति। तुषाःधान्यत्वचः अंगारोनिर्वापितमुल्मुकं आदिशब्दार्दस्थिकेशपाषाण भस्मादि शल्यं तद्वर्जिते। अन्यथा दोषदर्शनात्। यदुक्तंवाशिष्ठयां खन्यमाने यदा कुंडे पाषाणः प्राप्यते भुवि। तदापमृत्यवे चा स्थिके शांगारै र्धनक्षयः। भस्मनाग्निभयं प्रोक्तं तुषैः प्रोक्ता दरिद्रता॥ तत्र श ल्यज्ञानमादियामलोक्ता हिबलचक्रात् ज्ञेयं॥ तद्यथा॥ अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितं॥ द्रव्यं शल्यं तथा शून्य येन जानाति साधकः। उर्द्धरेखाष्टकं लेख्यं तिर्य क्पंच तथैव च॥अहि चक्रे भवंत्ये वमष्टाविंशति कोष्टकाः। तत्र पौष्णाश्विनी याम्य कृत्तिका मघ भाग्यभं॥ उत्तराफाल्गुनी लेख्यं पङ्क्तौ तत्पत्रकं ध्रुवं। अहिर्बुध्नो जपाद्दत्त शतभं ब्रह्म सर्पभं॥ पुष्य हस्तं समालेख्यं द्वितीयां पंक्तिमास्थितं। अभिजिद्विष्णुधनिष्ठा सौम्यं रुद्रं पुनर्वसु। चित्रभं च तृतीयायां पंक्त्यां धिष्णस्य सप्तकं। विश्वर्क्षं तोय भं मूलं ज्येष्ठा मैत्रविशाखभौ। स्वाति पंक्त्यां चतुर्थ्यां तु कृत्वा चक्रं विलोकयेत्। रेवत्यश्विनी भरणी कृतिक ामघा पूर्वोत्तरा प्रथमपंक्तौ उत्तराभाद्रपदा पूर्वाभाद्रपदा शतभिषा रोहिणी आश्लेषा पुष्यहस्त द्वितीयपंक्तौ अभिजित् श्रवण धनिष्ठा मृग आर्द्रा पुनर्वसु चित्रा तृतीयपंक्तौ। तत उत्तराषाढा पूर्वाषाढा मूल ज्येष्ठा नुराधा विशाखा स्वात्यः चतुर्थपंक्तौ। एवं

१८ ॥ नक्षत्रराशिवाराणामनुकूले शुभे हनि ॥ ततो भूमितले शुद्धे तुषांगारविवर्जिते ॥ पुण्याहं वाचयित्वा तु मंडपं रचयेच्छुभं ॥ पंचभिः सप्तभिर्हस्तै र्नवभिर्वामितांतरं ॥२०॥ षो-

प्रजायते चक्रं प्रस्तारः पन्नगा कृतिः। द्वारशाखा मघा याम्या द्वारस्थाकृत्तिकामता। अश्वीशपूर्वाषाढादि त्रिकं पंच चतुष्टयं। रेवती पूर्वभाद्रं दोर्भावि शेषाणि भास्वतः।उदयादिग्गतानाडगोभघ्नाः षष्ठ्याप्तशेषके। दिनेंदुभुक्त युक्तो सौ भवेत्तत्कालचंद्रमाः। चंद्रवत्साधयेसूर्य्यं मृचस्थं चेष्टकालिकं। पश्चाद्विलोकयेतौ च स्वऋचे थान्यभेस्थितौ। चंद्रऋचे यदार्केंदु तदास्यान्निश्चितो निधिः। भानुचेस्थितौ तौ चे त्तदाशल्यं नचान्यथा। स्वस्वभे द्वितीयंज्ञेयंनास्ति किंचि द्विपर्यये। भुक्तराश्यं शमानेन भूमानं कांत्रिकैः करेदिति। इदं चक्रं गुरुमुखाच्छ्रुत्वाशल्योद्धारं कुर्यादिति। इदं च निवर्त्तनपरिमित भूमौ एकमेव कुर्यात्। निवर्त्तनस्वरूपंच। दंडस्तुदशहस्तः स्यात्रिंशद्दंडै र्निवर्त्तनमिति। तत्तन्मध्येवारद्वय मन्यचक्रं लेखनीयं। तत ऊर्द्धनेतिसंप्रदायविदः। अथवा महाकपिल पंचरात्रोक्त प्रकारेण शल्योद्धारः कर्त्तव्यः तद्यथा। प्रासादा रंभकाले च गृहादौ च विशेषतः। शल्योद्धारस्तु कर्त्तव्यो यदीच्छेच्छुभ मात्मनः। प्रासादारंभकाले च यदंगं स्पृशते पुमान्। वास्तुदेहे दृढं तत्र शल्यं विंद्याद्विचक्षणः। कंडूयति शिरः पुंसि शिरः शल्यं समुद्धरेत्। शल्यं तत्रास्थि विज्ञेयं खन्यमाने करत्रये। अग्निदाह स्तरोध स्त्र धनहानि स्त्र जायते। यत्नतोत्पाटयेच्छल्यं यदीच्छेत्सिद्धिमात्मनः। बाहुकंडूयमाने तु निर्द्दिशे त्लोहशृंखलं ॥ हस्तद्वयेन संतिष्ठे ल्लक्षणं कथितंतव। स्वामिनो मरणंविंद्या द्विदेशे गमनं तथा॥ यत्नेनोत्पाटयेचछल्यं यदीच्छेद्भद्रमात्मनः। ऊरूकंडूयमानेतु कांस्यशल्यं विनिर्दिशेत्। हस्तेमैकेनसंतिष्ठेल्लक्षणं कथितं तव। असती च भवेद्भार्या यशोहानि स्त्र जायते ॥ यत्नेनोपाटये च्छल्यं यदीच्छे च्छुभमात्मनः। हस्तं कंडूयमाने तु कंकालं च विनिर्द्दिशेत्। त्रिहस्तेन तु संतिष्ठेत् खन्यमान्ये च नान्यथा। अग्निदाह स्त्र रोग स्त्र सशल्ये मरणं भवेत्। यत्नेनोत्पाटये च्छल्यंयदीच्छेद्भद्र मात्मनः। पृष्टंकंडूयमाने तु बाहुशल्यं विनिर्दिशेत्। हस्तेनैकेन संतिष्टेन्नात्र कार्या विचारणा। स्वामिनाशोभवेत्तत्र भार्या वा जायते सती। पादौ कंडूयमाने तु हस्तशल्यं विनिर्दिशेत्। सार्द्धहस्तेन सतिष्ठेल्लक्षणं गदितं तव। गोनाशोराजदंड स्त्र सस्यंहा निस्त्र जायते। यत्नेनो त्पाटये च्छल्यं यदीच्छेच्छुभमात्मनः। कुक्षिं कंडूयमाने तु पाषाणं तत्र निर्द्दिशेत्। हस्तद्वितयमानेन लक्षणं गदितं तव। अग्निदाहो मनस्तापो क्लेश दुःखभयानि च। करोत्येवंविधं कर्मत स्मा त्तंवै समुद्धरेत्। गोशृंगं पीतमंडूकः शंखः शुक्ति स्त्र कच्छपः। शंबूकश्च प्रशस्तास्युर्याश्चान्या रत्नजायतयः। अंगारं वै तुषं केश मस्थिशल्यं विचारयेत्। खन्यमाने जलंयावच्छल्यदोषं विनश्यति। दूरनोचस्थितं वारि खनितुं नैव शक्यते। यंचहव्यं प्रखातस्यं स्वल्पदोषोपशांतये। शल्योद्धारं ततः कृत्वा पूरयेत्सुसमं यथेति। हयशीर्षे पंचरात्रेपि। प्रासादे दोषदं शल्यं भवेद्यावज्जलांतकं। तस्मात्प्रासादिकीभूमिःशोध्या यावज्जलांतिका। शिलांतं कर्करातं वायावद्वाशुद्धतां व्रजेदिति ॥१८॥ पुण्याहं वाचयित्वेति ॥ पण्याहवाचनं बव्हृचानां प्रसिद्धतरं ॥ अथवा स्ययजमानस्य पुण्याहं भवंतो ब्रुवंतु। एवं स्वस्ति भवंतः एवंऋद्धिं भवंत इतित्रिः पुण्याहवाचनं तदुक्तंबौद्धायनेन। पुण्याहं वाक्यस्वृद्धिमित्योकारपूर्वंत्रिस्त्रिरेकैकामाशिषं वाचयित्वेति। तत्र च पू-

वैदिक्ज्ञाननिश्चय पूर्वकमेवमंडपादि कुर्यादन्यथा दोषदर्शनात्। तदुक्तम्। यदिकुर्याद्यथादृष्टं विप्रो नरकं व्रजेत्। भामोर्गत्या दिशो ज्ञात्वा कुर्यात्कर्माणि देशिक इति। अन्यत्रापि । वास्तु वैषम्यतो यत्र सम्यक् न ज्ञायते ककुप्। तत्र शंकुं प्रतिष्ठाप्य जानीयाच्छुद्धदिक्स्थितिमिति। तद्विज्ञानोपायस्तत्रैवोक्तः ।तद्गत्यादिक्परिज्ञानं शृणु वक्ष्ये यथाविधि। सुसमे कुतले कृत्वा चिन्हेन मभितस्तथा॥ सममान परिभ्रांत्या कृत्वा वृत्तद्वयं पुनः। तयोः संश्लेषसंजातमध्यदक्षोत्तरस्थिते। संधिद्वये च प्राक् प्रत्यक् सूत्रं मध्ये तु विन्यसेत्। सूत्रं दक्षोत्तरंतेषामग्रैः प्रागादिकल्पयेत् इति।क्रियासारेपि। कृत्वा भूमिं समां तत्र वृत्तं हस्तमितं समं। द्वादशांगुलमानोच्चं शंकुं खादिरनिर्मितम्। अलाभे यज्ञवार्क्षं वा तत्र संस्थापयेत्सुधीः। तच्छाया संस्पृशेद्यत्र तन्मध्ये मध्यमं स्मृतम्। तिर्यक्प्रसारयेत्सूत्रं मध्ये याम्योत्तरे स्मृते। कोणास्तुरन्ये चत्वारस्ततुःसूत्रप्रसारणात्। एवमाशापरिज्ञानं समाख्यातं यथास्फुटं। ज्ञात्वैवं मंडपादीनि कुर्यात्सम्यक् विचक्षण इति। तत्र महाकपिल पंचरात्रे तु विशेषः। विषुवे तु गते सूर्य्ये शंकुमानं समाचरेत्। खादिरं विन्यसेच्छंकुं द्वादशांगुलविस्तृतम्। निश्चलीकृत्य हन्तव्यं गृहीत्वा लोहमुद्गरम्। अष्टधा च स्वयं हन्यात् प्रशस्तं क्रमतो लघुम्। हन्यमान्ये यदा शंकौ हस्तात्पतति मुद्गरः। तदा तार्डयितुः शोको जायते। दुस्तरो महान्। मौंजकौशेयकार्पासं प्राणिवालजमेव वा।चतुर्यवपरीणाहं सूत्रं शंकौ तु वेष्टयेत्।वेष्ट्यमानं यदा सूत्रं शंकुं मुञ्चति तत्क्षणं। पुत्रस्यमरणंविद्याच्छिन्ने वैस्वविनाशनम्।तत्रापि नारसिंहेन। होमेनाशुभनाशनमिति। मयेनाप्युक्तं। शंकुः सारद्रुमैःप्रोक्तस्तस्याग्रं चित्रवृत्तकं। सम्यक् कृत्वा दिनादौ तु स्थापयैत्समभूतले। शंकुद्विगुणमानेन तन्मध्ये वर्त्तुलं लिखेत्। पूर्वापराह्णयोश्छाया यदा तन्मण्डलान्तगा। तद्बिन्दुद्वयगं सूत्रं पूर्वापरदिगिष्यते। बिन्दुद्वयान्तरभ्रान्तशफरद्वयपुच्छगम्। दक्षिणोत्तरगं सूत्रमेवं सूत्रद्वयं न्यसेत्। तदग्राण्यपरान्तानि सूत्राणि च विनिक्षिपेत्। सूत्राणिस्थ पतिः प्राज्ञः प्रागुत्तरमुखानि चेति ! हयशीर्षपंचरात्रेपि। भूमिं तोयसमां कृत्वा दर्पणोदरसंन्निभम्। द्वादशांगुलमानेन तत्र वृत्तं तु भ्रामयेत्। मध्ये तु निश्चलं शंकुं स्थाप्य छायां निरीक्षयेत्। वृत्तं रेखा तु या बाह्यशंकुच्छाया प्रकल्पिता। प्रवेशनिर्गमे तस्यां शंकुच्छाया निरूपयेत्। शंकुच्छायाग्रचिन्हाभ्यां प्राक्प्रतीच्योःप्रसादयेत्। प्राक्प्रतीचीगते सूर्ये उदग्याम्यं तु साधयेत्। विषुवे विमलव्योम्नि शंकुना साधयेत् दिशं। शरद्वसन्तयोरेवमादित्यात्साधयेत् दिशं। प्राचीं वा पुष्यवेधेन चित्रास्वात्यन्तरेण वेति। अन्यत्रापि। यथैव पूर्वापरदिग्विभागविशेषविज्ञानमिहोपदिष्टम्। समासतस्तं विपर्यविविच्य कार्याणि कर्माणि यथोपदेशमिति। रात्रौतुप्राचीसाधनं यथा। कृतिका श्रवण पुष्य चित्रास्वात्योर्यदन्तरम्। एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुर इति। त्रिकांडमंडनेपि। श्रवणस्योदये प्राची कृत्तिकायास्तथोदये।चित्रास्वात्यन्तरे प्राची न प्राची चन्द्रसूर्ययोरिति। सूक्ष्म पूर्वदिगानयनन्तु त्रैराशिकेन कर्त्तव्यम्। तद्यथा। द्वितीयदिवसेपि तथैव शंकुं संस्थाप्य पूर्वापराह्णयोश्चिन्हे कुर्यात्। तत्र पूर्वापरदिवसद्वयचिन्हमध्यभुवं तिलादिना विभजेत्। ततस्त्रैराशिककल्पना षष्टिघटिकाभिरेतदन्तरंचेल्लभ्यते। पूर्वदिनपूर्वापरचिह्नयोरन्तरालघटीभिस्तदा कियदिति त्रैराशिकम्। तत्र त्रैराशिकसूत्रम्।यथा आद्यन्तयोस्त्रिराशावभिन्नजाती प्रमाणमिच्छा च। फलमन्यजातिमध्ये तदन्त्यगुणमादिना विभजेदिति। अनेन प्रकारेण या आगता तिलादिकप्रा-

माणिकाधन्तरभूस्तां उदगयने उत्तरतो दक्षिणायने दक्षिणतः प्रागंक एवं वर्द्धयेत्। तत्र रेखां कुर्यात्। एषा सूक्ष्मा प्राचीति। मंडपं रचयेदित्यनेनोत्तममध्यमकनीयो भेदेपि त्रिविधोपि मंडप उद्दिष्टो भवति ॥ तत्र मंडप त्रैविध्यं मंत्रमुक्तावल्यां । अथमंडपनिर्माणंब्रूमहेब्रह्मणोदितं । श्रेष्ट मध्यमहीनैस्तु मानैस्तच्च त्रिधा मत इत्यनेनमानाधिकोथवा न्यूनइत्यादिक्रियासारोक्तदोषपरिहारः सूचितः त्रिविधस्यापि मंडपस्य प्रमाणमाह । पंचभिरिति । तत्र यथाश्रुतव्याख्यानं तु पंचहस्तविस्तारायामवान्पंचविंशतिहस्तचेत्रफलः कनीयान् मंडपः । मध्यमस्तु सप्तहस्तविस्तारायामवान् एकोनपंचाशद्धस्तचेत्रफलः उत्तमस्तुनवहस्तायामविस्तारा काशीतिकरचेत्रफलः । तत्रोत्तममंडपं तावद्विचार्यते । ग्रंथकृदेवाग्रे नवकुंडीपक्षमस्मिन्नेवमण्डपे वक्ष्यमाणप्रकारेण वेद्याः पादांतरं त्यत्का तिस्रः पंच वा मेखलाः कार्य्याः । तदुक्तं पिङ्गलामते । मेखलैकाऽथवा तिस्रो भूतसंख्या ऽथवाप्रिये इति। तन्त्रान्तरेपि। मेखलाः पञ्च वा तिस्रो वैका वाथ सुरेश्वरीति । सिद्धान्तशेखरेपि । सर्वेषामेव कुण्डानमेका वा तिस्र एव वा । पञ्च वा मेखलास्तास्युरिति । प्रतिष्ठासारसंग्रहेपि । मेखलाः पंच वा कार्य इति । तत्र पंचमेखला पक्षे कुण्डानामेव न समावेशः । त्रिमेखलापक्षस्तुग्रन्थकारोक्तः । तत्पक्षेयथाकथंचित् कुंडानामेव समावेशः होमकर्त्रादीनां प्रचारसञ्चलमेव नास्ति अतिसङ्कीर्णत्वात् । किंच वैश्वदेवार्थं वक्ष्यमाणसर्कुंडलस्य वेद्यांशयीतेति वक्ष्यमाण शयनस्यापि समावेशोनास्ति । मध्यमाधमयोस्तुकाकथा । तत्र पञ्चकुण्डीपक्षस्यापि समावेशायोगात् । ग्रन्थकारेण तत्रापि नवकुंडीपक्ष उपन्यस्तः स अत्यन्तासङ्गत एव स्यात् । तस्मान्नयथाश्रुत व्याख्यानम् । केचितु । वक्ष्यमाणवेद्याख्यं मध्यमन्तरशब्दार्थमाहुः । तन्मते पंचदशविस्तारायामः पंचविंशत्यधिकद्विशतकरक्षेत्रफलः कनीयान्मंडपः । मध्यमस्तु एकविंशतिहस्तायामविस्तरः एकचत्वारिंशदधिकचतुःशतकरक्षेत्रफलः उत्तमस्तु सप्तविंशतिहस्तायामविस्तारः एकोनत्रिंशदधिकसप्तशतकरक्षेत्रफलः तदपि न संमतं सतां। यतो ग्रन्थान्तरे एतादृशमानमस्यानुक्तत्वात् । मन्त्रमुक्तावल्यादौ परमपिमानं चतुर्विंशतिहस्तं वा षट्त्रिंशतिकंतथेति । अन्यत्रापि । विंशद्धस्तप्रमाणेन मंडपं कूटमेवचेति । विंशतिहस्तं चतुर्विंशतिहस्तमेवचोक्तम् । तेनास्यशारदीयपद्यस्यैवमर्थोव्याख्येयः । पंचभिः सप्तभिरितिसमुच्चितम् । तेनद्वादशहस्तायामविस्तारः स चतुश्चत्वारिंशच्छतकरक्षेत्रफलः कनीयन्मंडपः । ततः पंचभिर्नवभिरित्यन्वेति तेन चतुर्दशहस्तायामविस्तारः चतुरून द्विशतकरक्षेत्रफलः मध्यमो मंडपः ततश्च सप्तभिर्नवभिरित्यन्वेति । तेन षोडशहस्तायाम विस्तारः षट्पञ्चादशधिकद्विशतकरक्षेत्रफल उत्तत्तमोमंडप इति । त्रिविधोपि मंडप उक्तो भवति । तदुक्तम् । प्रतिष्टासारसंग्रहे । स्वल्पो द्वादशहस्तोयं द्विद्विवृध्या ततः क्रमात् इति । एतेन चतुर्दशहस्तस्य मध्यमतोक्त षोडशहस्तस्योत्तमता च । सिद्धान्तशेखरेपि । मंडपोर्ककरोपि वा । कर्तव्या मंडपाश्चान्ये द्विद्वि हस्तप्रवृद्धित इति । सोमशंभुनापि । मंडपोर्ककरोथवा । द्विहस्तोत्तरयावृध्या शेषास्युर्मंडपाः शुभा इति । महाकपिलपंचरात्रेपि । हस्ताच्च द्वादशारभ्य क्रमाद्द्वौद्वौप्रवर्ध्यचेति । अन्यत्रापि । गृहस्यैशानभागे तु मंडपं कारयेद्बुधः । द्वादशैरष्टषट्हस्तैः षोडशैर्वा समन्तत इति । क्रियासारेपि । अथ द्वादशविस्तारः कनिष्टो मंडपः स्मृतः इति । पंचरात्रेपि । तथा षोडशभिर्हस्तैर्मंडपः स्याद्विजोत्तम इति । मन्त्र-

**दशस्तंभसंयुक्तं चत्वारस्तेषु मध्यगाः ॥ अष्टहस्तसमुच्छ्रायाः संस्थाप्याद्वादशाभितः ॥ २१॥**
**पंचहस्तप्रमाणास्ते विच्छिद्राऋजवः शुभाः ॥ तत्पंचमांशं निखनेन्मेदिन्यां तंत्रवित्तमः ॥२२॥**
**नारिकेलदलैर्वंशैश्छादयेत्तत्समं ततः द्वारेषुतोरणानि स्युः क्रमात्क्षीरमहीरुहां ॥ २३ ॥**

मुक्तावल्यां। उत्तमं मानमित्याहुर्हस्तषोडषकंतथेति। अयंमंडपश्चतुरस्रः कर्त्तव्यः। यदुक्तं परिशिष्टे कात्यायनेन। प्रमाणं चतुरस्रमादेशात् अन्यदिति। सिद्धान्तशेखरेऽपि। चतुरस्रं चतुर्द्वारमिति। समचतुरस्रता तु वास्तुमंडल प्रोक्तविधानेन विधातव्या। अत्र विशेषः सिद्धान्तशेखरे। स्थलादर्कांगुलोच्छ्रायं मंडपस्थलमीरितमिति। महाकपिल पंचरात्रे। मंडपं प्रक्रत्योक्तं। उच्छ्रायो हस्तमानं स्यात्सुसमं च सुशोभनमिति। अन्यत्रापि। रम्याखं मंडपमुन्नत इति। नन्वत्रमंडपत्रये कनीयसैव फलसिद्धेर्मध्यमोत्तमयोरननुष्ठानमेवस्यादितिचेन्न। फलस्य कर्मनिष्ठत्तेस्तेषांलोकवत् परिमाणतः फलविशेषः स्यात् इति न्यायेन फलतारतम्य कल्पनाददोषः। तथाह्यग्निहोत्रज्योतिष्टोमयोः स्वर्गः फलत्वेन श्रूयते तत्राद्येनैव तत्सिद्धौ द्वितीये महति कोपि न प्रवर्तेतेत्याशंक्य फले तारतम्य कल्पनमाकरे परिहृतम्। अर्थाद्वा कल्पनैकदेशत्वादित्यनेन कल्पनाया अपि श्रुत्येकदेशत्वेनोक्तेः। किंच वार्त्तिककृता स्थानप्रमाणादप्येतत्सिध्यति इत्युक्तम्। कर्मणामल्पमहतां फलानां च स्वर्गगोचरे। विभागस्थानसामान्यादविशेषेपि चोदित इति। एतस्य व्याख्याव्यवस्था कर्मणां स्थानसामान्यादुदिता यथा। मध्ये स्वसमुदाय स्य फलानामपि सा तथा। परिमाणस्य सामान्यादनुक्तेपि विशेषत इति। यत्तु। केन चिद्दश रवि करायामावत्यौमतावथ मध्यमौ रवि मनु करायामाविति द्वादशहस्तस्योभयरूपत्वमुक्तम्। तदसत्। स्तम्भादिप्रमाणसंकरापातात्। मंडपे स्तम्भनिवेशनप्रकारमाह। चत्वार इति। तेषु स्तम्भेषु मध्ये चत्वारो मध्यगाः वेदिकोणेषु स्थाप्याः। तदुक्तं सिद्धान्तशेखरे। मध्ये स्तम्भचतुष्कस्यात्तन्मध्ये वेदिकामतेति। अन्यत्रापि। वेदिकोणेषु विन्यस्ये स्तम्भान् वेदस्वरूपकान्। आग्नेयादिक्रमेणैवेति। तेन वेदिबहिर्द्वादशस्तम्भस्थापनमपि आग्नेयादिक्रमेणेति ज्ञेयम्। तदुक्तं। स्तम्भोच्छ्राये शिलान्यासे सूत्रयोजनकीलके। खननासंटवस्कारप्रारम्भो वह्निगोचर इति।ति च अष्टहस्तसमुच्छ्रायाः स्तम्भोच्चत्वं वदता ग्रन्थकृता षोडशहस्तस्यैवोत्तमत्वमुक्तम्। तदुक्तं यत्पञ्चरात्रे। मंडपार्द्धोच्छ्रितान्वेदसंख्यान्चूडान्वितांस्तथा इति। अभित इति। मध्यस्तम्भानभित इत्यर्थः। तदुक्तंक्रियासारे। भूमिंसमस्थलीं कृत्वा परिच्छिद्य च सूत्रतः स्तम्भान् समं च संस्थाप्ये ति। पंचरात्रेपि। स्तंभद्वादशकं पुनः बाह्येप्युक्तप्रामाणेन तत्रतत्र विभागइति। कोटराः षोडशस्तंभा निश्छिद्राःछिद्रवर्जिताः। एतेन दृढत्वमुक्तं। जवः अवक्राः। क्वचिदपि। नस्थूला नकृशाः अतएव शुभा इत्यर्थः। एवंविधत्वं च तेषां सारवृत्चोद्भवत्वं विना नसंभाव्यत इति। सारद्रूत्वात् इदमप्यर्थादुक्तं। यत्पंचरात्रे। सारदारुभवान् स्तंभान् दृढान् कुर्या दृजून्समान् इति। क्रियासारे तु विशेषः। यज्ञीय वृक्षोवेणुर्वा क्रमुक स्तंभकर्मणि। अन्येविशुद्धवृक्षावा भवेयुर्नान्यभूरुहाः। गृहशल्यः स्वयं शुष्कः कुटिलश्चपुरातनः। असौम्यभूमिजनितः संत्याज्यः स्तंभकर्मणि। इतिमध्यमाधमयोर्द्वादशस्तंभप्रमाणं त्रैराशिकेनानेयं।तत्पंचमांशमिति।स्तंभोच्छ्रायं पंचधाविभज्य पंचमांशं भुवि निखनेत् इत्यर्थः॥ २३ ॥ तत्समंतत इति। तस्य मंडपस्य समंततः

सर्वत्र द्वारवर्ज्यं वंशैर्नारिकेलदलैः प्रच्छादयेत्। नारिकेलदलाभावे कटैर्वेष्टयेत्। यद्वास्तुशास्त्रे। कटैः सद्भिस्तु संछाद्या विजयाद्यास्तु मंडपा इति। हयशीर्षपंचरात्रे। मण्डपं मण्डयेद्दार्द्रशाखाभिस्तु समंतत इति। यत्तुक्रियासारे। भित्तिं च परितः कृत्वेति। तत्स्थिरप्रतिमादिमंडपेष्विति ज्ञेयं नियमोयं समाख्यातः स्थिरलिंगक्रियासु चेति। तत्रैव वक्ष्यमाणत्वात्। तोरणस्थापनमाह। द्वारेष्विति। ननु द्वाराणामेवानुक्तत्वात् कथं द्वारेष्वित्युक्तिः। सत्यं। द्वारेष्वित्यनेनैव द्वाराच्येयः तत्प्रमाणं तत्स्थानंचोक्तं मंत्रमुक्तावल्यां। दिक्षु द्वाराणि चत्वारि विदध्यात्पंचमांशत इति। क्रियासारेपि। दिक्षु द्वाराणिमध्यतः तोरणानि च तेष्वेव द्वारेषु स्थापयेद्विध इति। पंचरात्रेप्रमाणमुक्तं। कनीयसि स्याद्विकरंचतुरंगुलवृद्धितः। मध्यमोत्तमयोर्द्वारंमिति न्यसेदिति निखनेत्। पंचमांशेनैव यद्वास्तुशास्त्रे। पंचमांशं न्यसेद्भूमौ सर्वसाधारणोविधिरिति। सिद्धांतशेखरे। तोरणस्तंभमधिकृत्योक्तं पञ्चमांशेन वा खातं सर्वेषां च शिवोदितमिति। क्रमादिति। पूर्वदक्षिणपश्चिमोत्तरदिशिक्षीरमहीरुहानिति। वटोदुंबराश्वत्थप्लक्षाणां। न्यग्रोधोदुंबराश्वत्थप्लक्षाः क्षीरमहीरुहा इति परिभाषणात् तदुक्तं सिद्धांतशेखरे न्यग्रोधतोरणं पूर्वेयाम्ये चोदुंबरं मतं पश्चिमेश्वत्थसंभूतमुत्तरेप्लक्षतोरणं पूर्वेवाप्लक्षसंभूतं न्यग्रोधश्चोत्तरे मत इति। क्रियासारेपि। प्लक्षोदुंबरबोधिस्तु वटाः पूर्वादितः क्रमात् तोरणानि च चत्वारीति सोमशंभुरपी प्लक्षोदुंबरकाश्वत्थवटजास्तोरणाः क्रमात् पूर्वादितो विधातव्या यद्वाद्यंतविपर्ययः। शलीभादिकमेवैषां सर्वाशासु निवेदयेदिति। मंत्रमुक्तावल्यामपि। अथाग्निमीलेति मंत्रेण विन्यसेत्पूर्वतोरणं। इषेत्वोर्जेति मंत्रेण दक्षिणं तोरणं न्यसेत्। अग्न आयाहि मंत्रेण पश्चिमस्य निवेशनं। शन्नोदेवीति मंत्रेण दद्यादुत्तरतोरणमिति। महाकपिलपंचरात्रेपि। देवास्तोरणरूपेण संस्थिता यज्ञमंडपे। विघ्नविध्वंसनार्थायरक्षार्थंत्वध्वरस्य च। न्यसेन्यग्रोधमैंद्र्यां तु याम्यां चोदुंबरं तथा। वारुण्यां पिप्पलं चैव कौबेर्यां प्लक्षकं न्यसेत्। सुशोभनं तंपूर्वस्यां ऋग्वेदादिसुमंत्रितं। ईषेत्वेति च मंत्रेण सुभद्राख्यं तु दक्षिणे। सुकर्माख्यं तु वारुण्यां सामवेदादिकेन तु। शन्नोदेवीति मंत्रेण सुहोत्रं तूत्तरेन्यसेदिति। यत्तु केनचिदश्वत्थोदुंबरजटिवटैरित्येषां पूर्वादिनिवेशनमुक्तं तदसंबद्धलिखितं नानावचनविरोधात् इदं च तोरणस्तंभनिवेशनं मंडपाद्बहिर्हस्तमानेनेति ज्ञेयं। तदुक्तं। मंडपद्वारबाह्ये च वेदिमानेन दिक्क्रमात्। प्लक्षमौदुंबराश्वत्थवटोत्थंतोरणंन्यसेत् इति वास्तुशास्त्रे तु अश्वत्थोदुंबरप्लक्षवटशाखाकृतानि तु। मंडपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् इति। द्वारेषु क्रियमाणत्वात् तोरणेषु द्वारनिर्देशः इदं तु पश्चिमदक्षिणोत्तरपूर्वेषु अपसव्येन वा पश्चिमद्वारादितिज्ञेयम्। अत्र विशेषः सिद्धांतशेखरे। एकमेषामलाभे स्यात्तदभावे शमीद्रुमः। जंबूखदिरसारांश्च तालो वातो रणे स्मृताः। इति क्रियासारे तु। अवक्राः सत्वचः सार्द्रादंडास्युः स्तोरणे सुरभाः ॥ २४ ॥ स्तंभेति ॥ सप्तहस्तैरिति ॥ उत्तममंडपे यतो ग्रंथकृत्सर्वं मानमुत्तमस्यैवाह। पृथक्पृथगिति। मध्यमाधमयोर्भिन्नं मानमित्यर्थः। तेन मध्यमे षड्ढस्ता। अधमे पंचहस्तास्तोरणस्तंभमधिकृत्य वास्तुशास्त्रे। पंचहस्तप्रमाणास्तेविस्तारेण द्विहस्तकाः। षडंगुलानि वृद्धास्तु सप्तहस्तास्तथोत्तम इति। अत्रविस्तारेणेति। तिर्यक्फलकमानं। मध्यस्यषड्ढस्तता अनुक्तापि न्यायाद्गम्यते। तदुक्तं कात्यायनेन। औचित्यादर्थात्परिमाणमिति। तेषांतोरणस्तंभानां परिणाहोविशालता स च परिध्यानयनेनज्ञातव्यःतत्र

**स्तंभोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक्पृथक् ॥ दशांगुलप्रमाणेन तत्परीणाह ईरितः २४**
**तिर्यक् फलकमानं स्यात्स्तंभानामर्द्धमानतः ॥ शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः२५**

परिध्यानयनं भास्कराचार्येणोक्तं । द्वाविंशतिघ्ने विहृतेऽथ शैलैः स्थूलोऽथवा स्याद्व्यवहारयोग्यः इति व्यासः १० द्वाविंशतिघ्नः २२ शैलैर्हृतः ३१ लब्धंएतावत्परिधिर्यस्यकाष्टस्यतस्यदशांगुलो विष्कंभः ॥ २४ ॥ तिर्यगिति ॥ उभयस्तंभमध्ये देहलीरूपेण उपरि यत्तिर्यक्फलकं तस्यमानं स्तंभानां पंचहस्तमितानां तोरणस्तंभानामर्धमानतः तेन सार्द्धहस्तद्वयं प्रमाणमुक्तम् । स्तंभानामिति । बहुवचनंद्वारबहुत्वात् । तोरणस्तंभानामपिबहुत्वमितियोज्यम् । अनेन कनिष्ठमंडपे पंचहस्तं तोरणस्तंभत्वमपि सूचितम् । इदं तिर्यक्फलकमानमुत्तमस्यैव । अनयोः षट्षडंगुल न्यूनताज्ञेया । वास्तुशास्त्रेशूलानीतिबहुवचनम् । चतुः संख्यापरंतोरणइत्येकवचनं जातौ तेन प्रतितोरणमेकमेकं शूलं कार्यं । तच्चहस्तप्रमाणं । तत्रांगुलत्रयं निवेशः षड्भागः परिणाहः एतच्च मंडपत्रये समानम् । तत्र शूलस्वरूपम् । मध्यकीलस्तीक्ष्णाग्रः ऋजुः तमभितो द्वौ तीक्ष्णाग्रौ वक्रौ मध्यकीलदेशगतवक्रभागाविति । तदुक्तंक्रियासारे । शूलं हस्तायतं तेषामिति । पिंगलामतेपि । शूलेन चिन्हिताः कार्या द्वारशाखाः स्वमस्तके । ऋजु वै मध्यशृंगं स्यात् किंचिद्वक्रं तु पक्षयोः। उभयं तत्समाख्यातं अंगुलं रोपयेत्तदेति । यदा तु तोरणे इत्येकवचनं विवक्षितम् । तदा शूलानीति बहुवचनं कपिंजलाधिकरणन्यायेन त्रित्वेपर्यवस्यति । हस्तमानत इति त्रयाणां मिलित्वा मानम् । तदुक्तंक्रियासारे । तोरणं घटयित्वैव मूर्द्ध्नि शूलत्रयं न्यसेत् । शूले नवांगुलं दैर्घ्यं तुरीयांसेन विस्तृतिः । शेषाणां द्व्यंगुला वृद्धिः वेशस्त्र्यंगुलहृडित इति । तेन कनिष्ठे द्व्यंगुलप्रवेशः । मंत्रमुक्तावल्यामपि । अग्रयोर्मध्यभागे च पट्टिकायां त्रिशूलकानिति । एतानि तत्काष्टमयान्येव शैव एवकर्त्तव्यानि इतिज्ञेयम् । वैष्णवं तु विशेषोवास्तुशास्त्रे । मस्तके द्वादशांशेन शंखचक्रगदांबुजम् । प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजमिति । एषां स्वदारुजत्वोक्तेः शैवे एतत्स्थानीयानां शूलानां न्यायादेव स्वदारुजत्वं प्राप्तम् । तत्र द्वादशांशस्तोरणस्तंभानामेव । पूर्ववाक्यशेषे सप्तहस्तास्तथोत्तमा इति । तेषामेव प्रकृतत्वात् तेन चतुर्दशद्वादशांगुलानि क्रमेणोत्तमादिषु शाखादीनां मानानि । विस्तारस्तु स्वतुर्यंशेनैव । यत्तु केनचित् । फलकद्वादशांशेन चतुरंगुलादिमानमुक्तम् । तदसत् । तस्याऽप्रकृतत्वात् । शूलमानस्य नवांगुलोक्तेश्च । एषां निवेशनमपि पूर्ववत् ज्ञेयम् । ततः प्रतितोरणं एकैकः कलशः स्थाप्यः प्रतिद्वारपार्श्वे द्वौद्वौ प्रतिकोणं चैकैकः । तदुक्तम् । गंधपुष्पांबरोपेतान्कुंभास्तेषुविनिक्षिपेत् । ध्रुवं धरां वाक्पतिं च विघ्नेशं तेषु पूजयेत् । मंडपस्य तु कोणस्थकलशेषु क्रमादमी । अमृतो दुर्जयश्चैव सिद्धार्थो मंगलस्तथा । पूज्या द्वारस्थकुंभेषु शक्राद्यास्तन्मनूत्तमैरिति। अन्यत्रापि। मंडपे कलशौ द्वौद्वौ द्वारे द्वारेनिवेशयेत्। गालितोदकसंपूर्णावाम्रपल्लवशोभिताविति। दिक्षुध्वजानिति ध्वजस्वरूपं प्रतिष्टासारसंग्रहे। पीतरक्तादिवर्णाश्च पंचहस्ता ध्वजाः स्मृताः। द्विपंचहस्तैर्दंडैस्ते वंशजैःसंयुता मता इति। द्विपंचहस्तैर्दशहस्तैः। अन्यत्रापि । पंचहस्ताध्वजाःकार्याविपुल्येन द्विहस्तकाः । दंडश्च दशहस्तः स्यात् अष्टदिक्षु च तान्यसेत् इति । क्रियासारे तुविशेषः । ध्वजानां लक्षणं सम्यगुच्यतेतुयथातथम्। मंडपस्य बहिर्दंडैर्दशहस्तायतैः सह । पूर्वाद्यष्टहरित्स्वष्टौ ध्वजान्संस्थापयेत् क्रमात् । तेषां हस्तद्वयं व्यासो मध्यश्च करसंमतः । व्यासार्द्धं शिखरं पुच्छं हस्तत्रितयमानकं । मत्स्याभं शिखरं पुच्छ शिखरं तु त्रिकोणकं । तयोर्म-

श्रीचतुष्कोणे ध्वजानेवप्रकल्पयेत् । मातंग वस्त्र महिष सिंह मत्स्येण वाजिनः । वृषभं च यथा न्या-
यं ध्वजमध्ये क्रमाल्लिखेत् । अथवा दिग्गजानष्टावैरावतपुरः सरान् । ध्वजेषु विलिखेदुक्तधातुभि-
श्च सलक्षणम् । एवं ध्वजानां कथितं लक्षणं शुभावहमिति । ध्वजानामावश्यकत्वमुक्तं । हयग्रीवपं-
चरात्रे । अतःपरं प्रवक्ष्यामि ध्वजारोपणमुत्तमं । यत् कृत्वापुरुषःसम्यक् समस्तफलमाप्नुयात्।यातुधा
नागुह्यकाश्च कूष्मांडाः खेचरास्तथा । चिंतयंत्यसुरश्रेष्ठा ध्वजहीनं सुरालयं । ध्वजेन रहिते ब्र-
ह्मन् मंडपे तु वृथा भवेत् । पूजाहोमादिकं सर्वं जपाद्यं यत् कृतं बुधैः । रक्षणेन विनायद्वत् क्षेत्रं-
नश्यति क्षेत्रिणः । ध्वजं विना देवगृहंतथा नश्येत सर्वथा । विष्णुपारिषदाः क्रूराः कूष्मांडाद्यास्तु
ये स्मृताः । पूजादिकं तु गृह्णंतिदेवंदृष्ट्वानरर्चितं । दृष्ट्वाध्वजांस्तुदेवस्य मंडपे ज्वलनप्रभान् । नश्यं-
ति सर्वे ते चाकरश्मिच्छिन्नं तमोयथेति । लोकपालसमप्रभानि । लोकपालवर्णास्तु ये वक्ष्यंते । सा-
रसंग्रहे पताकानिवेशनमप्युक्तं । प्रतिकुंडं पताकास्तु प्रोक्ताशास्त्रार्थकोविदैः । सप्तहस्ताःपताकास्युः
सप्तमांशेन विस्तृताः । लोकपालानुवर्णेन नवमी तुहिनप्रभा इति । सिद्धांतशेखरेपि । पताकाध्व-
जसंयुक्तमिति । सोमशंभुरपि । सप्तहस्ताः पताकास्युर्विंशत्यंगुलविस्तृताः । दशहस्ताःपताकानां दं-
डाःपंचांशवेशिताः।पताका आयुधांकाश्च पुष्पगंधसमन्विता इति।मंडपालंकारमाह।वितानैति।वि-
तानश्चंद्रातपः दर्भमालारज्जुग्रंथितादर्भाः आदिशब्देन दुकूलेन स्तंभवेष्टनं चूतपल्लवमालाबंधनमि-
त्यादिज्ञातव्यं । तदुक्तंसिद्धांतशेखरे । चूतपल्लवशाखाद्यं वितानैरुपशोभितं । विचित्रवस्त्रसंछन्नं तु-
लास्तंभविभूषितं । सफलैः कदलीस्तंभैः क्रमुकैर्नारिकेलकैः । फलैर्नानाविधैर्भोज्यैर्दर्पणैश्चामरैरपि
भूषितं मंडपं कुर्यात् रत्नपुष्पसमुज्वलमिति । हयग्रीवपंचरात्रेपि । दर्पणैश्चामरैर्घंटैःस्तंभान् वस्त्रै-
र्विभूषयेत् । कलशैर्घंटिकाभिश्च साधारैः कर्करैस्तथेति । मंडपान्यथाभावे दोषउक्तः । क्रियासा-
रे । अनुक्तसाधनैः क्लृप्तो यदि वा कुटिलाकृतिः । मानाधिकोथवा न्यूनो मंडपःकर्तृनाशनः । आख्या-
तः साधनैः क्लृप्तः शोभनः सममानकः।मनोज्ञो मंडपो योसौ कर्मकर्तुः शुभावह इति ॥ वेदि नि-
र्माणमाह । तदिति । तस्यमंडपस्य सूत्रस्य यस्त्रिभागस्तृतीयो भागः तन्मिते क्षेत्रे अन्यथा क्षेत्र
फलस्य तृतीयांशग्रहणे यत्किंचिदेवस्यात् । तदुक्तं । ततो मंडपसूत्रं तु त्रिगुणं परिकल्पयेत् । पूर्वा-
दिषु क्रमात्तस्य मध्य भागेन वेदिकेति । फलतश्च नवमभागेन वेदिका भवति । तदुक्तंसिद्धांतशे-
खरे । नवांशं मंडपं कृत्वा मध्यांशे वेदिका मतेति । अरत्निमात्रसमुन्नतां हस्तमात्रसमुन्नतां च
तुरस्रां वेदींमंडपमध्ये मंडलायवक्ष्यमाणसर्वतोभद्रमंडलाय कल्पयेत् । तदुक्तं । ततस्तस्य मध्येबुध-
स्त्रिभागैकभागेन वेदिं । अरत्निप्रमाणोन्नतां दर्पणांतनिभां मनोहारिणीं चापि कुर्यादिति । बहुभि-
र्ग्रंथकर्तृभिररत्निशब्दो हस्तेपि प्रयुक्तः।यथाकादिमते।अंगुललक्षणमुक्त्वा तैश्चतुर्भिर्भवेन्मुष्टिर्वितस्ति
तैस्त्रिभिर्गुणैः। अरत्निः तद्द्वयेन स्याद्धस्तः तद्द्वयतःशिवे इति । कात्यायनेनापि शुल्बे बहुषुस्थले-
षु अरत्निशब्दो हस्ते प्रयुक्तः मंत्रमुक्तावल्या मपि । अयुतहोमार्थं द्विहस्तकुंडकथने दशांगुलाधि-
कारत्निरित्युक्तं । तत्रैव लक्षहोमे च चतुर्हस्तोक्तौ चतुर्विंशत्यंगुलाधिकाऽरत्निरिति । तेनात्राप्यर-
त्निशब्दो हस्तमात्रे व्याख्यातः।तदुक्तं वसिष्ठसंहितायां । हस्तोन्नतां च विस्तीर्णां चतुर्हस्तैः समं-
ततः इति । मंत्रमुक्तावल्यामपि । इष्टकाभिर्मृदावापि वेदीदर्पणसंनिभा । राजहस्तो
च्छ्रया कार्या विदुषासिद्धिमिच्छतेति । राजहस्तो मध्यमागुल्यंतः। पंचरात्रेपि । वेदीमंडपस्य त्रिभा-

गतः चतुर्थांशोक्तिरितिस्तस्या इति। क्रियासारेपि, त्रिभागमंडपं कृत्वा मध्यभागस्तु वेदिका। हस्तमानं तदुत्सेधं चतुरस्रं समं यथा। पक्वाभिर्वाप्यपक्वाभिरिष्टकाभिर्दृढं यथा। कर्त्तव्या वेदिका श्रेष्ठा तदभावे मृदापि वा। अवक्र पार्श्वासुस्निग्धा दर्पणोदरसंन्निभेति। सिद्धांतशेखरे तु विशेषः। वेदी चतुर्विधा तत्र चतुरस्रा च पद्मिनी। श्रीधरी सर्वतो भद्रा दीक्षासु स्थापनादिषु। चतुरस्राचतुः कोणा वेदी सर्वफलप्रदा। तडागादिप्रतिष्ठायां पद्मिनी पद्मसन्निभा। राज्ञां स्यात्सर्वतो भद्राचतुर्भद्राभिषेचने। विवाहे श्रीधरीवेदी विंशत्यस्रसमन्विता। दर्पणोदरसंकाशा निम्नोन्नतविवर्जितेति। वेदिकाऽन्यथा भावे दोष उक्तः। क्रियासारे। वक्रपार्श्वक्लिन्नमध्या परुषा दृगशोभना। मानहीनाधिका या सा कर्त्तुः कर्मविनाशिनीति। वायवीयसंहितायां तु मंडपाद्युक्त्वा, कृत्वा पूर्वोदितं सर्वं विना वा मंडपादिकं। मंडलं पूर्ववत् कृत्वा स्थंडिलं चविशेषत इति। अंकुरार्पणकर्माह। प्रागेवेति। दीक्षादिवशात् प्राक्सप्तभिर्दिनैः एतेन दीक्षादिनमष्टमं यथा भवति तथा कर्त्तव्यमित्युक्तं। विधिवदित्यनेन नवभिः त्रिभिःसद्योवेत्युक्तं। तदुक्तं सिद्धांतशेखरे। प्रतिष्ठायां च दीक्षायां स्थापने चोत्सवे तथा। संप्रोक्षणे च शांत्यर्थं विवाहे मौंजिबंधने। सर्वमंगलकार्येषु कारयेदंकुरार्पणं। प्रतिष्ठादिवसात्पूर्वं नवमे सप्तमे दिने। पंचमे वा तृतीये वा सद्यो वा चांकुरार्पणमिति। महाकपिलपंचरात्रे। पुण्याहघोषणं कृत्वा ब्राह्मणैः सहदैशिकः। मंगलांकुरस्यवपनं कुर्यात्तत्रैव चाहनि। सप्तमान्नवमाद्वापि प्रागेव यज्ञकर्मण इति। अन्यत्रापि। उत्सवेषु विविधेष्वपि दीक्षास्थापनादिषु पवित्रविधौ च। मंगलांकुरविशेषणपूर्वं मंगलं भवति कर्मकृतं तत्। शस्तयोगदिवसात्तु पुरस्तात् सप्तमेहनि शुभे नवमे वा। पंचमेथ सुदिवसे सुमूहूर्त्ते मंगलांकुरविधिं विदधीतेति। तत्र पूर्वेद्युरुपवासं कृत्वा स्वगृह्योक्तविधिना नांदीश्राद्धं कृत्वाअंकुरार्पणमारभेत्। तदुक्तं। गुरुर्विशुद्धः प्रागेव शुद्धाह्नात् प्रथमेहनि। संकल्प्योपोष्य कर्त्तव्य मंकुरारोपणं शुभं। कुर्यान्नांदीमुखश्राद्धं पूर्वेद्युः स्वस्तिवाचनं। स्वगृह्योक्तप्रकारेण तदेतद्विदधीत वै। इति। संहितायामपि। सर्वत्राभ्युदयश्राद्ध मंकुरोत्पादानं तथा। आदावेव प्रकुर्वीतकर्मणो भ्युदयात्मन इति। शालामिति। तत्र विंशत्या तु करै र्मानं दशायामेनविस्तृतिः शालायाउत्तमं मानं। अत्रैतावत्याः प्रयोजनाभावादेतदर्धेन मध्यममानेन शालाकार्या। तेन दशहस्तदीर्घा पञ्चहस्तायामात्र कर्त्तव्या। तामेवाह। पूर्वापरायतामिति। दीर्घचतुरस्ररूपांगूढां परितः कटादिपरिवृतां दक्षिणैकद्वारवतीं निवातां च कुर्यात्। तदुक्तं प्रयोगसारे। अवागुदक्स्थिरां कृत्वा निवातां तां कुटीं दृढामिति। तस्यां मंडलं वक्ष्यमाणं रचयेत्। मण्डलमेवाह। पञ्चहस्तेति। शालाविस्तारमध्यभागे प्रागपरायतमेकं सूत्रं पञ्चहस्तप्रमाणं दत्वा तत्सूत्रस्य दक्षिणोत्तरभागयोः द्वादशद्वादशांगुलान्तरे द्वे द्वे सूत्रे दद्यात्। ततःतत्सूत्रव्यतिभेदीनि एकादशसूत्राणि अर्पयेत्। तद्वदिति। द्वादशांगुलान्तराणीत्यर्थः। एवं पञ्चापि हस्ताःसंगृहीताः। तदुक्तं प्रयोगसारे। प्रसार्यास्फोटयेत्सूत्रं यथायाम्योत्तरायतम्। पञ्चहस्तप्रमाणेन द्वे द्वे पार्श्वे च पातयेत्। तद्वत्पूर्वोक्तमानेन द्वादशद्वादशांगुले। प्राक्प्रत्यक्समं पश्चात् सूत्राण्येकादश क्रमात्। पातयेत्तासु रेखासु पूर्वसूत्रान्तरान्तरमिति। प्रमार्जयेदित्युत्तरत्रान्वेति। पंक्त्या चतस्रो वीथीर्मार्जयेत्। बाह्याइत्यर्थः। अन्तरिति वक्ष्यमाणत्वात्। पूर्वाश्चतुष्कोष्टामेकां वीथीमष्टकोष्टां दक्षिणवीथीं पुनश्चतुष्कोष्टां पश्चिमवी-

थीमष्टकोष्टामुत्तरवीथीं मार्जयेत्। ततः अन्तश्चतुष्कस्य मध्यचतुष्कस्य उभयपार्श्वयोः पार्श्वद्वये द्वे वीथ्यौ द्विद्विकोष्टरूपे चावमार्जयेत् इत्यस्यानुषंगः।फलितमाहाष्टेति। अत्र मंडले चतुष्कोष्टत्रयमवशिष्यते इति। तानि शिष्टानि चतुष्कोष्टत्रयस्थानि पदानि द्वादश प्रत्येकचतुष्कोष्टे श्वेतादिभिः रजोभिः रंजयेत्। तत्रश्वेतं वायुपदे। पीतमाग्नेये अरुणं रक्षःपदे असितमीशपदे इति सुधीरित्यनेनोक्तम्। तदुक्तमाचार्यैः। पीतारक्तसितासितप्रतिपदं वन्ह्यादिशर्वान्तकमिति। अथ अनन्तरं श्यामलेन हरितेन वीथीरापूरयेत्। अंकुरार्पणपात्राण्याह। पात्राणीति। स्थूलानि उच्चातिशरावाख्येव पालिकाशब्देनोच्यन्ते। पालिका एव किञ्चिन्नीचाः। पञ्चमुखयुक्ताः। पञ्चमुख्य उच्यन्ते शरावाः प्रसिद्धाः सर्वतन्त्रे त्वित्यनेन पञ्चदेवतादीक्षादिकर्मसु पात्रभेदो नास्तीत्युक्तम्। प्रथमा हरिरूपाः द्वितीयाः ब्रह्मरूपाः तृतीया शिवरूपाः एतेन हरिब्रह्मेशा एषुपात्रेषु पूज्याः इत्युक्तं भवति इति। तदुक्तं सारस्वतमते। प्रोक्तेषु पात्रेषु ब्रह्मविष्णुशिवान् यजेदिति। सिद्धान्तशेखरेपि। संपूजयेच्छरावेषु रुद्रं चन्दनपुष्पकैः।पालिकासु तथा विष्णुं ब्रह्माणंघटिकासुचेति। उत्सेध श्रीवत्यं अंगुलैः क्रमश इति पूर्वेण सम्बध्यते। महाकपिलपञ्चरात्रे तु विशेषः। पालिकाचक्रविस्तारः षोडशांगुल उच्यते। भवेत्कठबिलं वा स्यात् तदष्टांगुलविस्तृतम्। पादपीठस्य विस्तारं षडंगुलमुदाहृतम्। चतुरंगुल उत्सेधःतत्सन्धिश्चांगुलं भवेत्। तत्सन्धिस्तु भवेन्नाह पादपीठार्द्धमेव च। भवेत्पञ्चमुखीचैवं घटिका सर्वकामदा। चतुरंगुलविस्ताराण्याहुर्वक्त्राणि पंचवै। चत्वारि च चतुर्दिक्षु ऊर्द्धमेकं यथाविधि। घटिकायामविस्तारो द्वादशांगुल उच्यते। आचार्याः कथयंत्येके षोडशांगुलमेव वा। द्वादशांगुलविस्तारं शरावस्य मुखं स्मृतम्। चतुरंगुलविस्तारमध्यस्तान्मूलमुच्यते इति। अन्यत्रापि। तालमात्रमिह पञ्चमुखी स्यात् व्यासतोक्त्र्यमितार्घटिका स्यात्। दिक्षु तन्मुखचतुष्टयमेकं मध्यतस्तु समवर्तितभागम्। तालविस्तृतमुखं तु शरावं व्यासतो क्र्यगता द्वैमिताग्निः। दण्डमस्य चतुरंगुलनाहं कंठमस्य बिलवर्जमुदग्रम्। सम्भवे कनकरूप्यताम्रता मार्त्तिकान्यभिनवान्यथ वा स्युरिति। सिद्धान्तशेखरे तु। तथा सम्भवमानं वा पालिकादि समाचरेत् इति। तानीति। पात्राणि शुभानीति। कृष्णवर्णव्रणादिरहितानि। तन्तुनेति। त्रिगुणेन तत्र पूर्वं प्रक्षालनं पश्चात्तन्तुवेष्टनमिति ज्ञेयं क्रमः दर्भकूर्चमग्रे वक्ष्यमाणम्। पश्चिमादीति। पश्चिमचतुष्के पातलिकचतुष्टय मध्यमचतुष्टय मध्यमचतुष्कोपालिकाचतुष्टयंमध्यमाश्वतुष्के पञ्चमुखीचतुष्टयं पूर्वचतुष्के शरावचतुष्टयं निवेशयेत्। तन्मध्ये आग्नेयादिस्थापनमिति ज्ञेयम्। तदुक्तं। प्रयोगसारे। तेषु पात्राणि च न्यसेत्। वन्ह्यादीशादिपर्यन्तं चतुष्केषु पृथक्पृथगिति। करीषैः। करीषं शुष्कगोमयम्। चूर्णितैरुत्तरोत्तरम्। सर्वाण्यपि पात्राणि पूरयेत्। उक्तं च हयशीर्षपंचरात्रे। पूरयेदुत्तरोत्तरमिति। प्रयोगसारेपि। मृद्वालुकाकरीषैश्चोर्ध्वतः पात्राणि पूरयेत् इति। तत्र विशेषः सिद्धान्तशेखरे। गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे। गीतनृत्यसमायुक्तं गजवाजिसमन्वितम्। गुर्वादयो रथारूढा गजारूढास्तथापरे। गत्वा तीरं तडागस्य नद्याः पुष्पवनस्य वा। तत्र शुद्धं भुवो भागं दर्भैःसंमृज्य चास्त्रतः। अभ्युक्ष्य चार्घ्यतोयेन तत्तन्मन्त्रमनुस्मरन्। हृदा भूमिं समावाह्य गंधपुष्पैःसमर्चयेत्। कुद्दालीमस्त्रमन्त्रेण खात्वा भूमिमथो मृदम्। गृहीत्वा वामदेवेन पूरयेत् कांस्यपात्रके। हृदा मृदं च संमृज्य वस्त्रेणाच्छाद्य धारयेत्। पुरं वा निलयं वापि सर्वमंगलनिः

स्वनैः। गुरुः प्रदक्षिणं कृत्वामंडपं त्वानयेत्ततः। एतत्कर्म दिवा काले कुर्याद्रात्रौ न बुद्धिमान् इति। तेषु बीजावापमाह। सुधेति। सुधाबीजेन वमिति अनेन दुग्धैर्गोदुग्धैः प्रक्षाल्येति। महाकपिलपंचरात्रे तु विशेषः। द्वादशाक्षरमन्त्रेण क्षालयित्वा तु वारिणेति। सारस्वतमतेपि। बीजानि तानि प्रक्षाल्य जलक्षीरेण चक्रमात् इति। एतत्तन्त्ववित् इत्यनेन सूचितम्। मूलेति। मूलमन्त्रेण दातव्यमन्त्रेण अभिजप्तानि अष्टोत्तरशतमिति। तदुक्तं। महाकपिलपंचरात्रे। संख्यानुक्तौशतंसाष्टं सहस्रं वा जपादिषु इति।पंचघोषास्तु पटहंढक्का मृदङ्ग मुखवाद्य शङ्खाः। मङ्गलाचारेति। तत्तद्देशप्रसिध्या उल्लुलुध्वन्यादिदेशिको यतमानस इत्यनेनान्तानि बीजानिरेकीकृत्य रात्रौ मूलमंत्रेणप्राङ्मुख उदङ्मुखो वा पालिकादिषु निर्वपेदित्युक्तं। तदुक्तं सिद्धांतशेखरे। बीजमुख्येन मूलेन प्राङ्मुखो वा उदङ्मुखः। वापयेत्सर्वबीजानि पालिकादिष्वनुक्रमात् इति। बीजानामधिपः सोमस्तस्माद्रात्रौ तु निर्वपेत् इति। सारस्वतमतेपि। बीजेभ्यो दैवतेभ्यश्च स रात्रौ कांतिमान्यतः। तस्माद्गुरुस्तु बीजानि निशायामेव वापयेत् इति। बीजान्याह। शालीति। शालयोहैमंतिकाः श्यामः श्यामाकः कान्यकुब्जभाषायां सावा इति प्रसिद्धः आढकातूवरीनिष्पावावश्राः विष्णुपुराणटीकायां श्रीधरेण तथा व्याख्यातत्वात्। निष्पावान्। जमाषांश्च सुप्तदेवेविवर्जयेत् इति पृथगुक्तेर्नत एव ते। सारस्वतमते प्रत्येकं बीजेषु देवतापूजोक्ता। स्कंदं प्रियंगौ निष्पावे वायुमग्निं कुलत्थके। अटक्यां निर्ऋतिः सोमं मुद्गे वैवस्वतं तिले। प्रजापतिं शालिबीजेत्वनंतं सर्षपेर्चयेत्। इंद्रं श्यामे च माषे च वरुणं तु नगात्मजे। सिद्धांतशेखरे तु प्रत्यहं सोमपूजाप्युक्ता। सोमं संपूजयेन्नित्यमधिवासदिनावधि। अधिवासदिने प्राप्ते सोममुद्वासयेद्गुरुरिति। हरिद्रेति। तत्र मंत्र उक्तः प्रयोगसारे त्रियंबकाय शर्वाय शंकराय शिवाय च। सर्वलोकप्रधानाय शाश्वताय नमोनमः। विकीर्यानेन मंत्रेण हरिद्रा चूर्णमिश्रितं। तोयं प्रवर्षयेत्तेषु सिंचेत्तोयैर्दिनंप्रति। इदं देशिक इत्यनेन सूचितं। वस्त्रैर्नतनवस्त्रैः बहुवचनं कपिंजलाधिकरणन्यायेन त्रित्वे पर्यवस्यति। आच्छाद्येति। पात्रचतुष्टयमेकैकेन रात्रौ बलिं क्षियेत्इत्यन्वयः प्रातःपुनः स्थलमार्जनादिकृत्वा द्वितीयरात्रयादौ बलिदानम्। प्रणवाद्यैरिति। तत्र मन्त्रः ॐ भूतेभ्योनमः एवमन्यत्रापि मन्त्रः। महाकपिलपंचरात्रे तु विशेषः। ततो गन्धविमिश्रेण सिञ्चेद्वै शुद्धवारिणा। त्रिरात्रं तु यथा न्यायं पंचरात्रमथापि वेति। सारस्वतमते तु। प्ररूढान्यंकुराण्यन्यो न वीक्षेत कदा च न। आचार्य एव प्रविशेत्तच्छिष्यो वा तदाज्ञया इति।सिद्धान्तशेखरेपि। वस्त्रैराच्छाद्ययत्नेन सगुप्तानि चकारयेदिति। सप्तसुरात्रिषु पृथक्बलिद्रव्याण्याह। भूतेभ्य इति। सात्रा इत्यंतं षट् प्रथमरात्रौ। अस्यैव भूतकूरेतिनाम। तदुक्तं लाजतिलरक्तरजोदधिसक्तन्नानि भूत कूराख्यमिति। करंभो दधिसक्तवः अक्षताअखंडतंडुलाः यदा नवसुरात्रिषु बलिदानं तदा रात्रिद्वये बलिद्रव्यं देवताचोक्ताचार्यैः। वैष्णवं च दौग्धान्नं कृशरं चवैष्णवेयं यदि नवरात्रक्रमेण बलिरुक्ता इति ॥ ४५ ॥ तत इति ॥ तत्तद्दिशिपायसादिना बलिर्विधेयः तत्र नैर्ऋत्यप्रतीच्ययो र्मध्ये अनंतस्य॥ ईशपूर्वयोर्मध्ये ब्रह्मण इति। विधिवदित्यनेन पूर्वोक्तोदिशां बलिरत्रापि कर्त्तव्य इति सूचितं। एषां पात्राणां विनियोगमग्रे वक्ष्यति। अंकुरपरीक्षोक्ता। सिद्धांतशेखरे। यजमानाभिवृध्यर्थमंकुराणि परीक्षयेत्। सम्यगूर्ध्वंप्ररूढानिकोमलानि सितानि च। धूम्रवर्णान्यपूर्वाणि तथा तिर्यग्गतानि च। श्यामलानि च कुब्जानि वर्जयेदशुभानि तु। अवृष्टिं कुरुते कृष्णं धूम्राभं कलहं तथा।

दिक्षुध्वजान्निबध्नीयाल्लोकपालसमप्रभान् ॥ वितानदर्भमालाद्यैरलंकुर्वीत मंडपं ॥ २६ ॥
तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमन्वितां॥चतुरस्रां ततो वेदिं मंडलाय प्रकल्पयेत् ॥ २७॥
प्रागेव दीक्षादिवसात्सप्ताभिर्वाथिवाहिनैः ॥ सर्वमंगलसंपत्यै विदध्यादंकुरार्पणं ॥ २८ ॥ मं-
डपस्योत्तरे भागे शालां पूर्वापरायतां ॥ गूढांकुर्यात्ततस्तस्यां मंडलं रचयेत्सुधीः ॥ २० ॥
पंचहस्तप्रमाणानि पंचसूत्राणि पातयेत् ॥ पूर्वापरायतान्येषामंतरं द्वादशांगुलं ॥ ३० ॥
दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत् ॥ पदानि तत्र जायंते चत्वारिंशत्प्रमार्जयेत् ॥ ३१॥
पंक्त्यांवीथीश्चतस्रोंतश्चतुष्कोयभपार्श्वयोः॥वीथ्यौ द्वे च चतुष्काष्टतय मतावशिष्यते ३२
पदानि रंजयेत्तानि श्वेतपीतारुणासितैः ॥ रजोभिः श्यामलेनाथवीथीरापूरयेत्सुधीः ३३
पात्राणि त्रिविधान्याहुरंकुरार्पणकर्मसु॥ पालिकाः पंच मुख्यश्च शरावाश्च चतुक्रमात् ३४
प्रोक्ताः स्युः सर्वतंत्रज्ञैर्हरिब्रह्मशिवात्मकाः ॥ एषामुच्छ्राय उन्नेयः षोडशद्वादशाष्टाभिः ३५
अंगुलैः क्रमशस्तानि शुभान्यावेष्ट्य तंतुना॥प्रक्ष्याल्य देशिकस्तेषुपदेष्वाहितशालिषु ॥३६॥
सगंधदर्भकूर्चेषु पश्चिमादि निवेशयेत्॥करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत्॥३७॥सुधा-
बीजेन बीजानिदुग्धैःप्रक्षाल्य तंत्रवित् ॥ मूलमंत्राभिजप्तानि पंचघोषपुरःसरं ॥ ३८ ॥

अपूर्णं जननाशं च दुर्भिक्षं श्यामलांकुरं। तिर्यग्गते भवेद्व्याधि कुब्जे शत्रुभयं तथा। अशुभे चांकु-
रे जाते शांतिहोमं समाचरेत्। मूलमंत्रेण जुहुयात्गुरुर्मूर्त्तिधरैःसह। अघोरास्त्रेण चास्त्रेण शतं वा
यहस्रकमिति । सारस्वतेपि । प्ररूढैरंकुरैः कर्त्तुन्निर्दिशेच्छुभाशुभं। श्यामैः कृष्णैरंकुरैरर्थहानि-
स्तिर्यग्गूढैर्व्याधिरांदोलितैस्तैः। कुब्जैःदुःखं दुष्प्ररूढैर्मृतिं चरोगाभुग्नैः श्यामदेशेष्टहानिरिति।
कुंडस्थानमाह। प्रागिति। वेदिकायाबहिः सर्वतःचेत्रक्षेत्रमध्यसूत्रं त्रिधा विभज्य तत्तन्मध्यभागेप्रा
दक्षिणेनपूर्वादिश्वष्टाश्वासासुरम्याकाराणि कुंडानि। अनुक्रमात् परिकल्पयेदिति संबंधः विद्वान्
पंचमेखलादिकमपिजानन्नित्यर्थः आशासु दिक्षु ईशानांतासु इत्यर्थः। पूर्वाद्युक्तावधिक्छेदात् क्र-
मएवविवक्षित इति परिभाषणात्। तेन वेद्याः पदमात्रं त्यक्त्वा वक्ष्यमाणमेखलायोग्यं च तत्रस्था-
नंत्यक्त्वा कुंडानि कार्याणीत्यर्थः।संपन्नो भवति। तदुक्तं सोमशंभुना। वेदोपादांतरं त्यक्त्वेति। सि
द्धांतशेखरेपि।त्यक्त्वावेदिं चतुर्भागमिति। नारदीयेपि। कुंडवेद्यंतरं चैव सपादकरसंमितमिति अ-
त्र पादशब्दःकिंचिदधिकोपलक्षकःतेन मध्यमोत्तममंडपविषयत्वमस्य। क्रियासारेपि। वेदिकाकुंड-
योर्मध्ये हस्तद्वितयमंतरमिति। इदं चतुर्विंशतिहस्तमंडपविषयं। वासिष्ठसंहितायां तु। त्रयोद
शांगुलं त्यक्त्वा वेदिकायाश्चतुर्दिशं। कुण्डानि स्वागमोक्तानि विदध्यात् विधिवद्बुध इति। अत्रकु-
ण्डानीतिसमेखलानि तमेवक्रममाह। चतुरस्रमिति। तदुक्तमाम्नायरहस्ये। नवकुण्डविधाने तु दि
क्षु कुण्डाष्टकेस्थिते इति ॥ ५० ॥ आचार्यकुण्डमिति। गौरीपतिमहेंद्रयोर्मध्ये ईशपूर्वदिङ्मध्ये आ
चार्यं कुण्डं स्यात्। तदुक्तं तत्रैव।नवमं कारयेत्कुण्डं पूर्वेशानदिगंतरमिति । तत् वृत्तं चतुरस्रं
वा स्यात्। तदुक्तं सिद्धांतशेखरे। पुरंदरेशयोर्मध्ये वृत्तं वा चतुरस्रकं। तदाचार्यविनिर्दिष्टमिति।
अन्यत्रापि। मध्येवृत्तं च गौरीपतिसुरपद्विशोःपंडिताःकेचिदाहुरिति। क्रियासारेपि। वृत्तं वा चतु
रस्रं स्यान्म ध्यस्थानं त्वपेशयोरिति। तत्र सर्वकुण्डप्रकृतिभूतत्वादादितश्चतुरस्रकुण्डलक्षणमाह।

आशीर्वाग्भिर्द्विजातीनां मंगलाचारपूर्वकं ॥ निर्वपेत्तेषु पात्रेषु देशिकोयतमानसः ॥ ३९ ॥ शालिश्यामाढकीमुद्गातिलनिष्पावसर्षपाः ॥ कुलत्थकं गुमाषाश्च बीजान्यंकुरकर्मणि ॥ ४० ॥ हरिद्राद्भिः समभ्युक्ष्य वस्त्रै राच्छाद्य देशिकः ॥ बलिस्त्रिविधपात्राणां दिक्षु पूर्वादितो हरेत् ॥ प्रणवाद्यैर्नमोंतैश्च रात्रौ रात्रीशनामभिः ॥ भूतानि पितरो पक्षा नागा ब्रह्मा शिवो हरिः ॥ ४२ ॥ सप्तानामपि रात्रीणां देवताः समुदीरिताः ॥ भूतेभ्यः स्युर्लाजतिलहरिद्रादधिसक्तवः ॥ ४३ ॥ सान्नाः पितृभ्यः सतिलास्तंडलाः परिकीर्तिताः ॥ करंभलाजा यक्षेभ्यो नारिकेलोदकान्विताः ॥ ४४ ॥ सक्तुपिष्टं च नागेभ्यो ब्रह्मणे पंकजाक्षतं ॥ सापूपमन्नं शर्वाय विष्णवे च गुडौदनं ॥ ४५ ॥ ततो लोकेश्वरेभ्यो पि वितरेद्विधिवद्बलिं ॥ दीक्षागामभिषेकेषु नववेश्मप्रवेशने ॥ ४६ ॥ उत्सवेषु च संपत्यै विदध्यादंकुरार्पणम् ॥ प्राक् प्रोक्ते मंडपे विद्वान्वेदिकायां बहिस्त्रिधा ॥ ४७ ॥ क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥ अष्टास्वाशासु कुंडानि रम्याकाराण्यनुक्रमात् ॥ ४८ ॥ चतुरस्रं योनिमर्द्धचंद्रं त्र्यस्रं सुवर्तुलं ॥ षडस्रं पंकजाकारमष्टास्रं तानि नामतः ॥ ४९ ॥ आचार्यकुंडं मध्ये स्याद्गौरीपतिमहेंद्रयोः ॥ हस्तमानमितां भूमिं पूर्ववत्परिकल्पयेत् ॥ ५० ॥ समंतात्कुंडमेतत्स्याच्चतुरस्रं शुभावहं ॥ चतुर्विंशत्यंगुलाढ्यं हस्तं तंत्रविदो विदुः ॥ ५१ ॥ कर्तुर्दक्षिणहस्त-

हस्तेति । पूर्ववदिति । वास्तुमंडलवत् तुरस्रकरणसत्यासंमतात् चतुर्दिक्षु परिकल्पयेदिति संबंधः। चतुरस्रकुण्डलक्षणे हस्त उक्तः तल्लक्षणनिर्वाहार्थमंगुललक्षणमथाह ॥ ५२ ॥ चतुरिति कर्त्तुः संस्कार्यस्य शिष्यस्य नत्वाचार्यस्य प्रयोजककर्तृत्वेन शिष्येपि कर्त्तृशब्दप्रयोगात् । ननु मुख्यकर्तृपदश्राचश्राचार्य एवात्र किमिति न गृह्यत इति चेत् । उच्यते । दानवाचनान्वारंभणवरणप्रमाणेषु यजमानं प्रतीयात् इति कात्यायनवचनात् । नन्विदं श्रौतं प्रकृतं तांत्रिकं तत् कथमेकवाक्यत्वमिति चेत् । तत्र । परोक्तमविरोधि चेत्युक्तेः यथा श्रौते सोमयागादौ यज्ञोपवीतिनाकार्यं सदा बद्धशिखेन च । शुचिना कर्म कर्त्तव्यमित्याद्यविरुद्धं स्मार्त्तमपि गृह्यते । तद्वदिहापि । अत एवोक्तं । सर्वशाखाप्रत्ययमेकं कर्मेति तंत्रविद इत्यनेन तत्तंत्रोक्तनानाविधांगुललक्षणाभिज्ञा इत्युक्तं मध्यमांगुलिपर्वण इति । पर्वशब्देन मध्यमपर्वोच्यते । तन्मध्यस्य दैर्घ्यमानं यत्तदंगुलं अथ वा मध्यस्य मध्यमांगुलिपर्वणः दैर्घ्यमानं यत्तदंगुलमिति संबंधः । अग्रे ग्रंथकृद्यवद्वयक्रमेणैवेत्यादि । यव व्यवहारं करिष्यति तत्सिद्ध्यर्थमंगुलस्याष्टमो भागो यव इत्याह । यवानामिति । मानांगुलमिति । तस्यैव संज्ञांतरं नत्वंगुलस्येदं पृथक् लक्षणं वा शब्दादिप्रयोगाभावात् । ग्रंथांतरे च । जालांतरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते । त्रसरेणुस्तु विज्ञेयोऽष्टौ ते परमाणवः । त्रसरेणव एते स्युरष्टरेणुस्तु संस्मृतः । ते रेणवस्तथा त्वष्टौ वालाग्रं तत्स्मृतं बुधैः । बालाग्राण्यष्ट लिक्षा तु यूका लिक्षाष्टकं स्मृतं । अष्टौ यूका यवं प्राहुरंगुलं तु यवाष्टकम् । रत्निस्त्वंगुलपर्वाणि विज्ञेयस्त्वेकविंशतिः । चत्वारिविंशतिश्चैव हस्तः पादंगुलानि लिखिति । अंगुलद्वयमेकतयैवोक्तम् । त्रैलोक्यसारेपि । कर्त्तुर्मध्यमांगुलेर्मध्यपर्वणोरंगुलप्रमा तिर्यग्यवोदरास्त्वष्टातूर्ध्वा ग्रा व्रीहयस्त्रय इति । सिद्धांतशेखरेपि । मात्रांगुलेनैव कुंडं कर्त्तव्यमित्युक्तं । तद्यथा । मात्रांगुलेन हस्त स्यात् कुंडमा

स्य मध्यमांगुलिपर्व्वणः ॥ मध्यस्य दीर्घमानेन मानांगुलमुदीरितं ॥ ५२ ॥ यवानामष्टभिः क्लृप्तं मानांगुलमुदीरितं ॥ चतुरस्रीकृतंक्षेत्रं पञ्चधा विभजेत्सुधीः ॥ ५३ ॥ न्यसेत्पुरस्तादेकांशं कोणाद्धार्धप्रमाणतः ॥ भ्रामयेत्कोणमानेन तथान्यदपि मंत्रवित् ॥ ५४ ॥ सू-

ने शिवेरितः। मध्यमांगुलिमध्यस्थ पर्वदैर्घ्येण चोत्तमम्। मात्रांगुलेन वातेन मेखलाकंठनाभयः। कर्त्तव्याः कुंडयोनिश्चेति। मयेनापि परमाणुक्रमात् वृद्धं मानांगुलमितीरितमित्यादिना यवोऽष्टगुणितोऽगुलम्। अंगुलं तु भवेन्मात्रं वितस्तिर्द्वादशांगुल इत्यनेन। हयशीर्षपंचरात्रेपि। यवाष्टकैरंगुल स्याच्चतुर्विंशांगुलःकरः। चतुर्विंशांगुलश्चान्य स्वांगुष्ठेन तु संमितः इति। तत्रांगुष्टरेखामध्यपर्वणोरपिसमतैव। ननुयद्यपिवाशब्दादिप्रयोगो नास्ति तथापि मात्रांगुलमानांगुलशब्दाभ्यामेव विकल्पो भविष्यतीति चेत् तन्न।तथाग्रेपि।भिन्नतया व्यवहाराभावात्। यत्र तु पंचरात्रे पंचधांगुललक्षणमुक्तं। तत्र तु तेषां व्यवस्थाप्युक्ता। अत्र तु व्यवस्थायानोक्तत्वात् पर्यायतैव तत्तु। यथा तपंचरात्रे। वातायनपथं प्राप्यये यांति रविरश्मयः। तेषु सूक्ष्माविसर्पंते रेणवस्त्रसरेणवः। परमाणवस्तेष्टौ स्युरेणवस्तु तदष्टभिः।तेष्टौ बालाग्रकंतेष्टौलिक्षायूकातदष्टकम्।तदष्टकं यवास्तेष्टावंगुलंसमुदाहृतम्॥सातूत्तमांगु-लिःसप्तयवाः सैव तु मध्यमाः।षट्यवाःसाधमाप्रोक्ता मानांगुलमितीरितं। विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानांतरांगुलं।शिष्यदक्षिणहस्तस्य मध्यमांगुलिमध्यतःपर्वणोरंतरांदैर्घ्यं मात्रांगुलमुदाहृतम्। विनांगुष्टेन शेषाभिर्मुष्टिमंगुलिभिः कृतम्। चतुर्द्धा विभजेदेको भागो मुष्ट्यंगुलिः स्मृता। यं कंचित्पुरुषायामं विभज्य दशधा पुनः। एकं द्वादशधा भागं कृत्वा तेष्वेकमंगुलम्। देहलब्धांगुलं नाम जानीयात्तस्य तत्पुनः। उक्रायः प्रतिमायाः स्यात् महामानांगुलाश्रयः। महामानांगुलंयत्तन्मात्रांगुलमितीरितम्। मानांतरांगुलेनैव प्रतिमांगानि कल्पयेत्। प्रासादादीश्चतेनैव कुर्यान्मानांतरेण वा। वेदिकापीठशिबिकारथादीनां विधिं पुनः। मानांतरांगुलेनैव भवेनान्येन केनचित्। योगापकारणान्यत्र कुर्यान्मानांगुलेन वै। होमांगानि स्रुवादीनि कुंडं मुष्ट्यंगुलाश्रयम्। देहलब्धांगुलेनापि कुंडादीनि प्रकल्पयेत् इति। बहुषु पुस्तकेषु उभयत्र मानांगुलमित्येव पाठः एकत्र मानांगुलशब्दः परिभाषिकः अन्यत्र मानेन प्रमाणेनांगुलमिति यौगिको व्याख्येयः।चतुस्रकुंडक्षेत्रफलं तल्लक्षणेनोक्तम्। तस्यां गुलात्मकत्वात् ॥ तदज्ञाने वक्तुमशक्यत्वात् इत्यधुनोच्यते। तत्र लीलावत्यां भास्कराचार्यः समश्रुतौ तुल्यचतुर्भुजे च तथा यतेतद्भुजकोटिघातः इति त्रिशत्यां श्रीधराचार्योपि। समलंबक चतुरस्रे त्र्यस्रक्षेत्रे च जायते करणम्। भूवदनसमासार्द्धं मध्यमलंबेन संगुणयेदित्यनेन प्रकारेण चतुर्विंशतिश्चतुर्विंशत्या गुणिता पंचशतानि षट्सप्तत्यधिकान्यंगुलानिक्षेत्रफलम्॥ एतदेव क्षेत्रफलमष्टस्वपि कुंडेषु ज्ञेयम्। अतः सर्वकुंडानां मिदमेव प्रकृतिभूतं तंत्रांतरेप्यस्यैव प्रकृतितोक्ता। चतुरस्रमुक्त्वा तस्मिनन्यानि कुंडानि वदामि तवनामत इति।अन्यत्रापि। क्षेत्रं स्याच्चतुरस्रमत्र जनयेदन्यानि कुंडान्यपि इति। सिद्धांतशेखरेपि।योन्यादिसर्वकुंडानि चतुरस्राद्भवंतिहि। लक्षणं चतुरस्रस्य पूर्वं तस्मान्मयोच्यते इत्यादिना। चतुरस्रमिदं प्रोक्तं सर्वकुंडेषु कारणमित्यिनेन। क्रियासारेपि। चतुष्पदं चतुः कोणमेतत् क्षेत्राह्वयं भवेत्। चतुरस्रादिकुंडानां सर्वेषामत्र संभव इति। चतुरस्रप्रकृतितया योनिकुंडमाह। चतुस्रीकृतमिति। चतरस्री

कृतं चेत्रं पंचधा विभजेत्। तत्र सर्वस्य चेत्रफलस्य विभागे प्रयोजनाभावान्मध्यसूत्रस्यैव विभागः कार्य इति। सुधीरित्यनेनोक्तं तत्रायं पंचमोंशः ४ अंगुलानि सार्द्धषट्यवाः किंचिदूनाः एवंभूतमंशं गुरस्तात् दक्षिणोदग्गतसूत्रस्योत्तरभागेन्यसेद्दर्द्धयेदिति मंत्रविदित्यनेनोक्तं।ततःकोणार्द्धं धिप्रमाणतः कोणमानेन भ्रमयेत्। अत्र कोणशब्देनकोणसूत्रं गृह्यते॥ तस्यार्द्धं कर्णसूत्र द्वयं मध्यसंपातस्थानं तदर्द्धं अपरकोष्ठयुगले द्वितीयकर्णसूत्रयोगस्थानं। तत्प्रमाणतस्तस्मान्मानात्।कोणमानेन कोणसंलग्नतया भ्रमयेत्।प्रकारस्तु अपरैककोष्टकर्णसूत्रद्वयसंपातस्थाने सूत्रादि संस्थाप्य मध्य तिर्यक्सूत्राग्रात् तत्कोणसंलग्नं दक्षिणोदग्गतसूत्रस्यदक्षिणाग्रावधिसूत्राग्रं भ्रामयेत्मंत्रविदन्यदपि तथा भ्रमयेत् इत्यर्थः तत्रापि प्रकारः द्वितीया परकोष्टकर्णसूत्रद्वयसंपातस्थाने सूत्रादि संस्थाप्य मध्यमतिर्यग्गतसूत्रस्य द्वितीयाग्रात्तत्कोणसंलग्नं दक्षिणोदग्गतसूत्रस्य दक्षिणाग्रावधिसूत्राग्रं भ्रमयेत् ततः सूत्रयुग्मं दद्यात्। पार्श्वद्वयस्थवृत्ताग्राभ्यां पुरोवर्द्धितसूत्राग्रावधिसूत्रद्वयं पातयेत्। एवं योनिनिभमुत्तराभिमुखं कुंडं भवेत्। तदुक्तं कादिमते। तन्मध्यपंचमांशेन विकाश्यब्रह्मसूत्रकं पूर्वतः पश्चिमद्वंद्वकोष्टयोर्मध्यदेशतः। तत्कोणमानेन तथा भ्रामयेत्पश्चिमाग्रकान्। उत्तराग्रावधि तथा दक्षिणाग्रावधिप्रिये। तन्मध्यतिर्यक्सूत्रांश द्वयावष्टंभतस्तथा। विकाशितब्रह्मसूत्रावधिसूत्रद्वयं क्षिपेत्। योनिकुंडमिदंभद्रमिति। कामिकेपि। पंचमांशं पुरोन्यस्य मध्ये वेदांशमानतः भ्रमादश्वत्थपत्राभं कुंडमाग्नेयमीरितमिति। क्रियासारेपि। चेत्रं पंचांशकं कृत्वा पूर्वस्यामेकमंशकम्। न्यस्य तस्मान्न्यसेत्सूत्रे पार्श्वयोर्मध्यमावधि। ततः प्रत्यक् पदद्वंद्वं भ्रामयेत्तत्तदर्धतः। पृथक् पृथक् यथा सम्यक् तथा कोणत्रयावधि। एवं कृतेस्थिरं कुंडं भवेदश्वत्थपत्रवदिति॥ सिद्धांतशेखरेपि। योन्याख्यमुच्यते कुण्डमाग्नेयामुत्तरामुखं। प्रजावृद्धौ प्रतापे च शस्तं तत्रापि पूर्ववत्॥चतुष्कोष्टं समं कुर्यादंशं चेत्रस्य पंचमं। सोमसूत्रस्य बाह्याग्रे योजयेत् सौम्यभागके। अग्रयोर्गर्भसूत्रस्य न्यसेदंशे च सूत्रकं॥ सिध्यत्यनेन यत्राग्रं दक्षकोष्टद्वयस्यतु। मध्यकोष्टस्य चांते च भ्रामयेत्तद्भ्रमाद्भवेत्॥ यत्र पृष्टं सुसंविद्धं पत्र मश्वत्थपत्रवत्। इति। इदं योनिकुंडस्यादिति॥ अत्र चेत्रोपपत्तिरुच्यते॥ तत्रैकपार्श्वे अर्धं वृत्तं। द्वितीयपार्श्वे अर्द्धवृत्तं। एवमेकं वृत्तचेत्रं वृत्तार्द्धद्वयमध्यस्थमधोमुखं त्रिकोणमेकं॥ तदुपर्यूर्ध्वमुखं त्रिकोणमेकमिति॥ त्रीणि चेत्राणि। तत्र त्रयाणामपि पृथक् पृथक् फलमानीयैकीकृतं योनिकुंडचेत्रफलं भवति। तत्र वृत्तचेत्रफलं तावदुच्यते॥ व्यासस्य वर्गेभनवाग्नि ३९२७ निघ्ने सूक्ष्मं फलं पंचसहस्रभक्ते इति भास्कराचार्योक्त प्रकारेण॥ वृत्तचेत्रफलानयने श्रीधराचार्योक्तिः त्रिंशत्यांस्थूलेत्युपेक्षिता॥ तत्रैकांगुलस्य चतुस्त्रिंशांशेनोनानिसप्तदशांगुलानि व्यासः तदुपपत्तिरेवं ततृकृत्योर्योगपदमित्यनेन कर्णप्रमाणमानीय तदर्द्धं व्यासो भवति।इदं चाग्रे द्विहस्तकुंडकरणीकथनप्रस्तावे स्फुटोकरिष्यते तत्र व्यासस्य न्यासोयथा स वर्णितः अस्ययथोक्तकरणेन प्राप्तं चेत्रफलं॥ २२६॥ एकोयवश्च तिस्रोयूकास्तिस्रोलिक्षाः न्यासांशसवर्णनादि प्रकारस्तु ग्रंथगौरवभयान्नोक्तः॥१७॥ ३४॥ कृ: स तु पाटी॥ ५७७॥ ३४॥ गणिते लीलावत्यादौ द्रष्टव्यः ततो अधस्त्र्यस्रस्य फलं लंबगुणं भूम्यर्द्धं स्पष्टत्रिभुजे फलं भवति इति भास्कराचार्यप्रोक्तमार्गेण तत्र भूः २४ अंगुलानिलंब॥ १२॥ अंगुलानिततोभूम्यर्द्धं॥१२॥ लंब॥१२॥ गुणं॥ १४॥ इदंमध्यत्र्यस्रस्यफलं॥ तत उर्द्धत्र्यस्रस्य फलं तस्य भूः॥ २४॥ अंगुलानि ग्रंथकृदुक्तप्रकारेण लंबः तत्र मध्यसूत्रार्द्धं॥१२॥

**न्युग्मं ततो दद्यात्कुंडं योनिनिभं भवेत् ॥ चतुरस्रीकृतं क्षेत्रं दशधाविभजेत्पुनः ॥ ५५ ॥**
**एकमेकं त्यजेदंशमधऊर्ध्वं च तंत्रवित् ॥ ज्यासूत्रं पातयेदग्रे तन्मानाद्भ्रामयेत्ततः ॥ ५६ ॥**

अंगुलानि ततो वर्द्धितपंचमांशः उभयोः समच्छेदार्थंन्यासः १२।१।२४।५ समच्छेदौ ६०।५।२४। ५।योगः ८४।५।ततो यथोक्तकरणेन जातं क्षेत्रफलं २०१ किंचिन्न्यूनं क्षेत्रफलमध्ये सयवद्वय चतुरंगुलानि न्यूनानि भवंति ॥ उदाहृतकादिमतादिलक्षणेष्वपि इदमेवफलं ज्ञेयं॥ तत्र कश्चित् कामिकवचनं ॥ ४६८ ॥ एतावत्फलमानीय दूषितवानिति महाभ्रांत एव एवं सर्वेषामेकवाक्यत्वे सत्यपि च मानहीने दरिद्रतेत्यादि न्यूनाधिकप्रमाणं यद्यजमानविनाशकृदित्यादि दोषापत्तेरिति क्षेत्रफलसाम्यमत्रावश्यमपेक्षितं यतो भास्कराचार्यश्रीधराचार्यप्रोक्तगणितमार्गेण क्षेत्रफलानयनद्वारे चावश्यं कुंडानि वक्तव्यानि। क्रियासारे प्राक्कुंडेयत्प्रमाणं तदन्येषां क्षेत्रमानकमिति ॥ ग्रंथकृतापि तुल्यक्षेत्रफलानयनार्थमेव समचतुरस्रस्य प्रकृतितानिरूपिता। पंचदशशाखोपरिकल्पसूत्रं प्रणीतवतो भगवतः कात्यायनस्यापि परिशिष्टेस्वल्पे कुंडं वक्तुमिच्छोः श्रीधराचार्यभास्कराचार्यप्रोक्तमार्गेण क्षेत्रफलानयनद्वारैव प्रवृत्तिर्दृश्यते ॥ अतो वश्यं क्षेत्रफल साम्यं वक्तव्यं ॥ तदाचार्येणातिसूक्ष्मगणनायां शिष्यबुद्धिक्लेशो भविष्यतीत्युपेक्षितं॥सांप्रदायिकास्तदर्थं यवत्रयप्रक्षेपमाहुरेकहस्ते।मया क्षेत्रफलसमतार्थं सर्वानुगतप्रकारस्तूच्यते चतुर्विंशतिधा मध्यसूत्रं भंक्त्वापुरो न्यसेत् । पंचांशान्स्वैकैकस्य त्रीन् विंशांशान् कोणपादतः वृत्तार्द्धेस्तोमध्यतिर्यक् सूत्रांतं च ततोर्पयेत् । पुरो वर्धितसूत्रांतं सूत्रे द्वे स्यात् भगाकृति। अनेन प्रकारेण क्षेत्रफलमव्यभिचारीतिज्ञेयम् । अत्रपंचांगुलानि सयवानि यूकासार्द्धलिक्षाचतुष्टयसहितानि मध्यसूत्रं वर्द्धयेत्। तदालंबः १७।३।२०सवर्णितः ३४ ३।३०उक्तक्रमेण जातं क्षेत्रफलम् षट्यवास्तिस्रोयूका पंचलिक्षा एवमेकीकृतं सर्वक्षेत्रफलम्५७६एतत् सूक्ष्ममितिज्ञेयम्।यत्तु कादिमते चतुरस्राभितो या तु त्यक्ता भूःसान्यतस्थिता।लभ्यते सर्वकुंडेषुतेन सर्वाणिसर्वतः।तत्समान्येव जायंते षण्णवत्यंगुलात्मनेति।शिद्धांतशेखरेपि।क्षेत्रस्य चतुरस्रस्य समं सूत्रं चतुर्गुणं। योन्यादिसर्वकुंडानां पर्यंतेषु नियोजयेत्। चतुरस्रं समं तत्र चक्रभं योन्यादिकुंडकमिति। तदत्रास्मदुक्तप्रकारेण संवदंति। व्यासेभनंदाग्नि ३८ २७ हते विभक्ते खबाणसूर्यैः १२५० परिधिस्तु सूक्ष्मा इति प्रकाराद्वृत्तपरिधिः सूक्ष्मा १६० । ३० स्थूलस्तु ५४ अंगुलानि कर्णसूत्रद्वयम् २१। २१ अंगुलानि तत्कृत्योर्योगपदमित्यनेन प्रकारेण जातं मिलित्वा षण्णवत्यंगुलात्मता। परं त्विति। स्थूलमानत्वात् बहुषु स्थलेषु व्यभिचरतीदमित्युपेक्षितम्। यतोर्द्धचंद्रे ८८ अंगुलानि यव त्रयाधिकानिपरिधिः त्र्यस्रे ८ अंगुलानि ३ यवाः २ यूकाः वृत्ते ८५ अंगुलानि किंचिदधिकानि । षडस्रे ८८ अंगुलानि ४ यवाः ७ यूकाः अष्टास्रे ८७ अंगुलानि ४ यवाः एवं क्वचापि न मिलतीति यत्किंचिदेतत् । कश्चित्क्षारदा पद्यमिदमन्यथा व्याख्यातम्। पंचमांशेन प्राचीसूत्रं वर्द्धयेत्। ततः कोणयोः प्रतीची तिर्यक्सूत्रोत्पन्ननैर्ऋत्यवायव्ययो रर्द्धार्द्धप्रमाणेन एकत्र कोणे पंचमांशस्यार्द्धं अपरत्र कोणेपिपंचमांशस्यार्द्धं वर्द्धयेत्। कोणमानेन वर्द्धितवायव्यकोणात् प्राचीसूत्रपश्चिमाग्रावधि भ्रमयेत् । तद्वर्द्धितनैर्ऋत्यकोणात् प्राचीसूत्रपश्चिमाग्रावधि भ्रमयेत् । वर्द्धिताभ्यां वायव्यनैर्ऋतकोणाभ्यां वर्द्धितप्राची सूत्राग्रावधिसूत्रद्वयं दद्यादिति । तदसांप्रदायिकत्वादेतदर्थप्रतिपादकश्च

ष्टाभावात् लिखितकादिमतादिविरोधात् । स्वकपोकल्पितम् । सूक्ष्मगणनायां क्षेत्रफलस्याध्या धिक्याद्यत्किंचिदेतत्। यदतिगणितज्ञाभिमान आगमज्ञाभिमानिनश्च लक्षणम् । अष्टोनद्विमतां शसूत्रकचतुः कोणेषुरस्ताद्दलष्टत्रिंशतमेधय त्वथ लवान् श्रोण्योरिमानर्धशः। अग्रात् सूत्रयुगे त्रिकोणमिति। तच्छ्रोण्योस्ततोर्द्धभ्रमात् वृत्तार्द्धं बहिरालिखेत् इति भवेत् कुंडोत्तमंयोनिवदिति । चतुरस्रश्रोण्योरपिपश्चिमतिर्यक्सूत्रमुभयतस्तानष्टत्रिंशदंशान् अर्द्धार्द्धतया वर्द्धयेत् । एकोनविंशतिर्दक्षिणतः एकोनविंशतिः उत्तरत इति । यत्तत् स्वकपोलकल्पितं क्रियासारकादिमतकार्मिकसिद्धांतशेखरादिविरोधात् । क्षेत्रफलमध्ये च किंचिदधिकं क्षेत्रफलमिति ज्ञात्वा महद्भिः संतोष्टव्यमत्र । भ्रामयेतिलेखकदोषवशात् अपपाठः मित्वात् मितां ह्रस्व इति ह्रस्वत्वात्। भ्रमयेत् इत्येव पाठः चतुरस्रप्रकृतितया अर्द्धचंद्रकुंडमाह । चतुस्रीकृतमिति। क्षेत्रशब्देन पूर्ववन्मध्यसूत्रं गृह्यते। तद्द्विधा विभजेत्। तत एकं भागमध उत्तरतः एकमूर्द्धतो दक्षिणतश्च त्यक्त्वा अग्रे अग्रचिन्हे उत्तरभागे ज्यासूत्रं स्वेच्छाप्रमाणं पातयेदिति मंत्रविदित्यनेन सूचितं। ततस्तन्मानान्मध्ये व्यासमानाद्भ्रमयेत् तत्र प्रकारः ज्यासूत्रमध्यसूत्रसन्निपातेसूत्रादि संस्थाप्य ऊर्ध्वभागे यच्चिन्हं कृतम्। ततः ज्यासूत्रांतं भ्रमयेत्। तदर्द्धचंद्रनिभमुत्तराभिमुखं कुंडं भवेत् । तदुक्तंसिद्धांतशेखरे। अर्द्धचंद्रमथोच्यते। याम्येतन्मारणे शस्तमुत्तराभिसुखं सदेति ॥ अत्रक्षेत्रोपपत्तिः तत उभयतो दशांशत्यागेनसर्वस्य पंचमांशत्यागो भवति ॥ स च ४ अंगुलानि ६ यवा ३ यूका १ लिक्षा ३ बालाग्राणि ६ रेणवः ३ त्रसरेणवः १ परमाणुः तदायं शिष्टोव्यासः ॥ १८ ॥ अंगुलानि १ यवाः ४ यूका ६ लिक्षाः ३ बालाग्राणि १ रेणु ४ त्रसरेणवः ७ परमाणवः क्षेत्रफलानयनार्थं सवर्णितः८६५ एतद्व्यासेन फलानयने यवार्द्धाधिकमंगुलत्रयमधिकं क्षेत्रफलं भवति तदाचार्येणोपेक्षितमल्पत्वात् ॥ क्षेत्रफलाव्यभिचारी सर्वानुगतप्रकारस्तूच्यते ॥ चतुर्विंशतिधा भक्ते सूत्रे व्यासोर्द्धचंद्रके। विंशांशत्रयमेकस्य भागाएकोनविंशतिः। एतन्मानार्द्धभ्रमेण दलें द्व्ये गुणांकनात् ॥ तदा अयं व्यासः १८ अंगुलानि १ यवा १ यूका४लिक्षा५बालाग्राणि ३ रेणवः १ त्रसरेणुः ४ परमाणवः तदा २ अंगुले ३ यवाः ३ यूका १ लिक्षा ५ बालाग्राणि २ रेणु ३ त्रसरेणवः द्वौ परमाणु २ इममंशमूर्ध्वतस्त्यजेत्॥ एतादृशमेवांशमधस्त्यजेत् ॥ तत्र क्षेत्रफलानयनाय व्यासस्य न्यासः १८ । ३ । २० तेन एकोन विंशत्यंगुलानि । एकांगुलस्य विंशतिधा भक्तस्य त्रयोभागाः सवर्णितो यथा ३८३ । २० तत्र वृत्तफला ।यनार्थमयं द्विगुणीकृत स्तत्र छेदस्यैवार्द्धकरणेन उपरि ततो द्विगुणो भवत्येव तेनायं ३८ ३।१०संपूर्णवृत्तव्यासः ततो व्यासस्यवर्गे भनवाग्नीत्यादिना आनीतं क्षेत्र फलं सर्ववृत्तस्य११५२ एतदर्द्धीकृतं अर्द्धचंद्रस्य क्षेत्रफलं ५७६ सूक्ष्मं ज्ञेयं अथ वा द्विहस्तकुंडे एतद्वा सवर्गं द्विगुणीकृत्य तन्मूलमानियं तत्र एव व्यासः स एव मग्रेप्यूह्यं । यत्कस्य चिदतिगणि तज्ञाभिमानिनोलक्षणं। चतुरस्त्रीकृतं क्षेत्रं चतुर्विंशतिधा भजेत्। एकोनविंशत्या विंशद्वादशांशाव्ययालवैः। प्राच्यं तात्विभजे वृत्तफलं प्रत्यक्धनुस्थिति॥तदवध्येधयेत्प्राच्यां तिर्यक् सूत्रं ततो भवेत् । कुंडमर्द्धेदुसदृशं सम्यक् दृष्टिमनोहरमिति। अत्रापि सूक्ष्मगणनया अंगुलत्रयन्यूनं॥यतस्तेन व्यासार्द्धत्रयवर्गात् क्षेत्रफलं दशगुणान्मूलमिति श्रीधराचार्योक्तेन प्रकारेण क्षेत्रफलमानीतंतत्स्थूलं।यतोगणितग्रंथानामियं शैलो। यत् स्थूलं सूक्ष्ममपि फलानयनमुच्यते ॥ तत्र भगवताश्रीधराचार्येण बृहत्पाट्यां प्रकारद्वयमप्यु

अर्द्धचंद्रनिभं कुंडं रमणीयमिदं भवत् ॥ चतुर्द्धा भेदिते क्षेत्रे न्यसेदुभयपार्श्वयोः ॥५७॥ एकैकमंशं तन्मानादग्रतो लांछयेत्ततः॥सूत्रयुग्मं ततःकुर्यात्त्र्यस्रं कुंडमुदाहृतं ॥ ५८ ॥ अष्टाक्षा। तत् संगृहे त्रिशतीग्रंथे स्थूला एव प्रकारा दर्शिताः भास्कराचार्येण तु लीलावत्यां स्थूला एव सूक्ष्मा अपि प्रकाराउक्ताः तां बृहत्पाटीं चावलोक्य मया सूक्ष्मं फलमिदमानीतं। तदेव सूक्ष्ममिति मन्यते चेत्तदा मूले अत्यंतं फलाधिक्यं स्यात् ॥ अन्यच्च ॥ अस्योत्तराभिमुखत्वात् प्राच्यांतात्सूत्रं वर्धयेत् प्रत्यक् धनुस्थितीत्यंतमेवासंगतं स्वग्रंथे। स्वयं योनिलक्षणं वदन्नाह स्म ॥ मघवशिखिकृतांतदिक्स्थकुंडे प्वियमधिमेखलमेव मध्यभागे ॥ यमदिशिशशिदिङ्मुखा निवेश्येति तेन स्वग्रंथेषु विरोधोनोपलक्षित इति। यत्किंचिदेतत् ॥ यत्तु शुल्वे कात्यायनवचनं। मंडलं चतुरस्रं चिकीर्षन् विष्कंभं पंचदशभागान् कृत्वा द्वावुद्धरेच्छेषः करणीति तदपि संभवाभिप्रायं न तु सम्यग्गणनाभिप्रायं। एवमपि चेत्कस्य चिन्महापुरुषस्य मनसि संदेहउत्पद्यते। तेन प्रत्यक्षं परीक्षा कार्या धातुकाष्ठमृन्मयं वा एकहस्तमितं समचतुरस्रं पात्रं कारयित्वा तदुक्तमानेन मदुक्तमानेन च। एकं हस्तमितं वृत्तं पात्रंकारयित्वा चतुरस्रपात्रं सम्यक् जलेनापूर्य तज्जलेनैव वृत्तं पात्रं पूरयेत् यदेववृत्तं पात्रं सम्यक् पूर्णतामे ति तदेव शुद्धमिति मंतव्यं। तस्यैव यल्लक्षणांतरं चतुष्कोणक्षेत्रे जिनलवकमध्यस्थितगुणे विहायाधः सार्द्धद्वयमुपरि तावच्चमतिमान्। कलांशेनांशस्योनितमुपरि तिर्यक्सूत्र गुणं भ्रमाद्धं तन्मानादपि शशिदलं कुंडमिति त्विति। अत्रएकोनविंशत्यंगुलानि सार्द्धयवानिव्यासः तत्र सूक्ष्मगणनायां पंचांगुलानि न्यूनानितत्कृतस्थूलगणनप्रकारेणापि सार्द्धमंगुलं न्यूनं भवति। यत्तु तेनोक्तं। मंडलं चतुरस्रमिति। कात्यायनवचनेन संवाद्यमिति। तदप्यसिद्धं संवादाभावात्। सिद्धांतशेखरे तु नवधाभाजिते क्षेत्रे चतुरस्रे समे तदा। दक्षिणे चोत्तरे चांशमेकैकं तु परित्यजेत्। सप्तांशमध्यसूत्रेण भ्रमणादर्द्धचंद्रकमिति। कामिकेपि। चतुरस्रे गृहैर्भक्ते त्यक्त्वा त्वाद्यौतदंशकैः। मध्येसप्तांशमानेन कुंडं खंडेंदुवद्भ्रमात् इति। अत्रोभयत्रअष्टादशांगुलानि एकस्य द्वौ तृतीयांशौ व्यासःअतोत्यंतं न्यूनं क्षेत्रफलं। चतुरस्रप्रकृतितया त्र्यस्रिकुंडमाह५७चतुर्द्धेति। क्षेत्रचतुरस्रमध्यसूत्रे चतुर्द्धाभेदिते उभयपार्श्वयोस्तिर्यक् प्रतीचीसूत्रपार्श्वयोरेकैकमंशं वर्द्धयेत्। तन्मानात् चतुर्थांशमानेन अग्रतोलांछयेत्।ततःसूत्र त्रयं दद्यात् तत्रप्रकारः तिर्यक् प्रतीची सूत्रपार्श्वयोर्ये लांछने तदवधिप्रतीची सूत्रं वर्द्धयेदित्येकं। वर्द्धितनैरृत्यकोणात् मध्यसूत्राग्रदत्तलांछनं यावत्सूत्रंपातयेदिति द्वितीयं। ततो वर्द्धितवायुकोणात् मध्यसूत्राग्रदत्तलांछनं यावत्सूत्रं पातयेत् इति तृतीयं। एवमूर्द्धाग्रं पूर्वाभिमुखं त्र्यस्रिकुंडं भवति। तदुक्तं सिद्धांतशेखरे।त्रिकोणकुंडमुच्यते।नैरृत्ये दर्शितं कुंडं विद्वेषे पूर्ववत्क्रमकमिति। अत्र क्षेत्रोपपत्तिः भूः ॥ २६ ॥ लंबः ३० ततो लंबगुणंभूम्यर्द्धमित्यादिना जातं क्षेत्रफलं ॥ ५४० ॥ षट्त्रिंशदंगुलानि। न्यूनानिखर्व्वं च त्र्यस्रं यतः।षट्त्रिंशद्भूः।भुजौतु।तत् कृत्योर्योगपदं कर्ण इति प्रकारेणानीतौ पंचविंशदात्मकौ त्र्यस्रिकुंडे तु भुजत्रयं साम्यं चापेक्षितं तदर्थं के च न अन्यथा व्याचक्षते चतुर्द्धाक्षेत्रे भेदिते एकैकमंशं पार्श्वयोर्वर्द्धयेत्तन्मानेन वर्द्धितानंतरं यत् षट्त्रिंशमानं तेन मानेन अग्रतोलांयेत्। तत्रलांछनप्रकारः वर्द्धितपार्श्वयोः षट्त्रिंशदंगुलमितसूत्रस्यादिं निधाय प्राचीसूत्राग्रे लांछयेदिति। ततः पूर्ववत् सूत्रत्रयं दद्यात् इति। एवं

च सति भुजत्रयसाम्यं भवति। उभयपार्श्वे मिलित्वा यवचतुष्टयप्रक्षेपादेकहस्तक्षेत्रफलसाम्यं भवतीति बुधइत्यनेन सूचितमिति ते वदंति। मया तु समत्रिभुजता अन्यूनानतिरिक्तक्षेत्रफलता च यथा भवति तथा सर्वानुगतप्रकार उच्यते। चतुर्विंशतिधा भक्ते सूत्रे थोभयपार्श्वयोः। द्वादशांशान्नवैकस्य भागानेकोनविंशतिं। अर्द्धशोवर्द्धयेच्चास्मिन् भवेत्सूत्रत्रयात्समात्। अस्यायमर्थः संपन्नः। षडंगुलानि यूकोनयवद्वयाधिकानि एकपार्श्वे वर्द्धयेत्। एवं द्वितीयपार्श्वे तदा सप्तांगुलानि ४ यवा ६ यूकाधिकाः प्राक् सूत्रं वर्द्धितं भवति। ततो भूः ३६ अंगुलानि ३ यवाः ६ यूका सार्द्धलिक्षाद्वयं लंबः ३१ अंगुलानि ४ यवाः ६ यूकाः तत्र लंबेननिघ्नं कुमुखैक्यखंडमिति प्रकारेण क्षेत्रफलानयनाय लंबस्य व्यासो यथा ३१। १८। ३२ सवर्णितः ६८३।३८।१११।३२ भूः ३६।८।१८ सवर्णितः ६८३।१८ मुख शून्यमत ऐक्यमिदमेवतदर्द्धं छेदस्य द्विगुणत्वात् मुखैक्यखंडमिति। ततो लंबेन निघ्नंकुमुखैक्यखंडमिति कृते छेदेन भक्ते लब्धं क्षेत्रफलं यथा ५७६ अत्र भुजत्रयं सममेव। क्रियासारेपि। समभुजतोक्ता। क्षेत्रमष्टांशकं कृत्वा पार्श्वयोरंशकौबहिः। न्यस्त्वातन्मानसूत्रेण न्यसेत्सूत्रत्रयं समंमिति। क्षेत्रफलमत्रापि व्यभिचरत्येव। यतो२६ लंबः क्षेत्रफलं२८ अतिन्यूनत्वादन्ये एवं व्याचक्षते। पार्श्वयोरंशकाविति। एकस्मिन्पार्श्वे अंशद्वयं द्वितीयपार्श्वे अंशद्वयं ।तेन पंचदशांगुलानि नूतनक्षेत्रमध्येभवंति। द्वितीयमतव्याख्यात शारदापद्यार्थेन संवादश्च भवति। महाकपिलपंचरात्रेपि। समभुजतोक्ता द्वात्रिंशदंगुलं सूत्रं त्रिधातत्पातयेभ्रुवं। पूर्वाग्रं कुंडकं कृत्वा त्रिकोणं तु प्रकारयेत् इति। अत्रापिक्षेत्रफलं व्यभिचरत्येव यतः २७ अंगुलानि ५ यवाः लंबः क्षेत्रफलं ४४० अन्यत्रापिशर्वरी १६।८। सार्द्धभागीकृतक्षेत्रतः पार्श्वयोर्न्यस्य भागद्वयं पंडितः तेनमानेन सूत्रद्वयं विन्यसेत्। कुंडमेतत् भवेद्रुद्रनेत्रात्मकमिति। इदं लक्षणद्वयं षण्णवतिपरिधिरेषाभिप्रायेण अग्रे लिखितकादिमतेपि समभुजतोक्ता। मयाचलंबस्तु गणिता पटून् प्रति उक्तः गणितज्ञैस्तु। स्वाबाधाभुजकृत्योरंतरमूलं प्रजायतेलंबइति। लंबमानीयक्षेत्रफलंसंपाद्य संतोष्टव्यं। अथवा लंबंविनैव। सर्वदोर्युतिदलंचतुःस्थितं बाहुभिर्विरहितं चतद्वतेः। मूलमस्फुटफलं चतुर्भुजेस्पष्टमेदुदितं त्रिबाहुकेइति प्रकारेणानीय संतोष्टव्यं। मूलशेषाद्याबाधानयनार्थं। प्रकार उच्यते। मूलशेषं त्ववयवसंख्यानिघ्नमथोभजेत्। द्विघ्नसैकेन मूलेन फलंत्ववयवा मताः। अथवा भास्कराचार्यप्रोक्तमार्गेण वर्गेण महतेष्टेनवधात्छेदांशयोर्हतात्। पदंगुणपदक्षुण्णछिद्भक्तं निकटं भवेत्। इत्यानेयमासन्नमूलं। यत् कस्य चिदतिगणितज्ञाभि मानिनः आगमज्ञाभिमानिनश्च लक्षणद्वयं क्षेत्रचंद्रांशं पुरस्तुर्यमधश्चोभयपार्श्वयोः। वर्द्धयित्वाकृतैः सूत्रैः कुंडंत्र्यस्रं त्रिभिर्भवेदिति। क्षेत्रस्य मध्यमगुणे जिनभागभक्ते श्रोण्योः पृथक्शरलवान् परिवर्ध्य धीमान्। अग्रे विनाष्टमलवेन दशाथ सूत्रैस्त्र्यस्रिभिर्भवति कुंडमिहप्रयुक्तैरिति। अत्र पूर्वोक्तलक्षणं किंचिल्लंबत्र्यस्रं द्वितीयं तु महालंबं क्षेत्रफले च एकयवन्यूनता तेन यत्किंचिदेतत् अत्रक्षेत्रफलसाम्यात् त्र्यस्राकारत्वात् चत्रिकोणकुंडतेति चेत् तदाकुंडस्वरूपमननुगतं स्यात् यदा ३१ अंगुलानि ६ यवाः लंबः भूः२६ अंगुलानि२ यवौ अत्रापिक्षेत्रफलंसमानमेव। एवं सहस्रधा त्र्यस्रं कुंडं स्यात् अतस्त्र्यस्रिकुंडे क्षेत्रफलानयनमेव न प्रमाणं समत्रिभुजचावश्यमपेक्षितेत्यलं। अथ शुल्वेकात्यायनः प्रउगीयावानग्निः सपक्षपुच्छविशेषस्तावत् द्विगुणं चतुरस्रं कृत्वा यः पुरस्तात्करणमध्ये शंकुर्यौ च श्रोण्योः सोग्निरिति। अस्यार्थः संक्षिप्त उच्यते। यावतः क्षेत्रस्य त्र्यस्रता कर्त्तुमिष्टा तत् क्षेत्रद्विगुणितंन्यसेत्। ततः प्रतीचीसूत्रकोणोभय-

दशांशे क्षेत्रे च न्यसेदेकं बहिर्बुधः ॥ भ्रामयेत्तेनमानेन वृत्तं कुण्डमनुत्तमं ॥ ५९ ॥ अपृथा-
तःसकाशात्मस्य चे चफलमंगुलद्वयमधिकं। इदं तु ऋषिणा शिष्यबुद्धिक्लेशो माभूत् इत्युपेक्षित-
मिति तद्वृत्तिकारैरेव व्याख्यातं। इयंलंबता तु तत्रेष्टकाचिति संपादनार्थं न तु कुंडाकारता सं-
पादनार्थं। नन्विदमेवकल्पकृद्वचनं कुंडाकारतासंपादनार्थं प्रमाणमस्तु इति चेत्। तदा शारदा-
तिलककारादिमतपंचरात्रकामिकक्रियासारसिद्धांतशेखरआम्नायरहस्यमहाकपिल पंचरात्रादि-
ष्वन्येष्वपिबहुषु ग्रंथेषु मुनिप्रणीतेष्वपि विरोधोदृश्यते। अत्र किं ग्राह्यमिति संशय एव स्यात्।न च
वाच्यं कल्पसूत्राणां साक्षात् उपलभ्यमानश्रुतिमूलानां अनुमितिश्रुतिमूलाभ्यः स्मृतिभ्योऽधिकं प्रा-
माण्यं नानाशाखागतलिंगादिकल्पितश्रुत्यर्थोपसंहारोपनिबद्धस्य कल्पस्वरूपत्वात्। प्रयोगशास्त्रमि-
ति चेदित्यस्मिन्नधिकरणे भाष्यकृताकल्पप्रमाणव्यवस्थापितत्वादिति। वार्त्तिककारेणान्यथा धिक-
रणरचनायाः कृतत्वात्। तथाहि। इहकल्पानांप्रामाण्याप्रामाण्यचिंता न क्रियते। किं तर्हि कल्प
सूत्राण्युदा हृत्येदं चिंत्यते किं तेषां स्वतंत्राणामेव वेदवत् प्रामाण्यं उतस्मृतिवत्। श्रुतिपरतंत्रा-
णां मिति। तत्र श्रुतिपारतंत्र्येण स्मृतिवदेव प्रामाण्यंस्थापितं। किं च विरोधाधिकरणे औदुंबरींस्पृ-
ष्टोद्गायेदिति प्रत्यक्षश्रुतिविरोधात्। औदुंबरी सर्वा वेष्टयितव्येति कल्पकृद्वचनं लाभमूलमिति भा
ष्यकारैः सिद्धांतितं। अतः सर्वासां स्मृतीनां विरुद्धत्वात्। श्रुतिद्वैधं तु यत्रस्यात्तत्र धर्मावुभौ स्मृता
विति वचनस्यात्रानवकाशात्। अष्टदोषदुष्टत्वात् च विकल्पाभावात् संदेह एव स्थितःतथा च तत्र
विहितस्य कर्मणोऽननुष्ठानमेव स्यात्। तस्माद्यत्रसमत्रिभुजतातुल्यक्षेत्रफलत्वं च भवति तदेव त्रि
कोणकुंडमिति सिद्धांतः सर्वेषु लक्षणवचनेषु कानि चित् क्षेत्रफलव्यभिचारीणि कानि चित्समभु-
जताव्यभिचारीणीति। अतस्तानि त्र्यस्राकारतामात्रसंपादानफलानीतिज्ञेयं। सिद्धांतशेखरेपि।
चतुरस्रीकृते क्षेत्रे क्षेत्रमष्टांशकं बहिः। विन्यसेद्गर्भसूत्राग्रे प्रतीचीसूत्रपार्श्वयोः। सूत्राणांत्रितयं न्य-
स्येत्त्रिकोणं कुंडमीरितमिति। अत्र च सप्तत्यधिकशतांगुलानिन्यूनानि विषमभुजता च। तस्यैव
षष्ठमंशंतु पार्श्वयोः प्रविकाशयेत्। प्रत्येकं पश्चिमं सूत्रं तन्मानेनाथ सूत्रयोः। विन्यासाद्ब्रह्मसूत्रांता
त्तदग्रावधिलंबनादिति। कादिमतेषट्त्रिंशतांगुलानि समभुजतास्ति।षण्णवतिपरिधिरेखाभिप्रा-
यं चेदं लक्षणं। त्रिभागवृद्धितो मत्स्यैस्त्रिभिर्नैऋशाचरं भवेदिति। कामिकेपि। तत्र चतुर्वर्गचिंताम-
णिकारैःस्थानत्रयेभागत्रयवृद्धिरिति व्याख्यातं।तन्मते चतुःषष्ट्यंगुलान्यधिकानि।अन्यैस्तु अग्रे त्र्यंशवृ-
द्धिरुभयपार्श्वे अर्द्धार्द्धतया एकांशवृद्धिरिति व्याख्यातं। तन्मते चतुःषष्ट्यंगुलानि न्यूनानि उभयमते
पि विषमभुजतैवेत्यलं ॥ ५८ ॥चतुरस्रप्रकृतितया वृत्तं कुंडमाह। अष्टादशेति। क्षेत्रे पूर्ववच्चतुरस्र
मध्यसूत्रे अष्टादशांशे अष्टादशधाविभक्ते एकमंशंबहिः कस्मिन्नपि सूत्रे वर्द्धयेत्। तेन मानेन मध्या
त्तन्मानेन वर्द्धितमानेन भ्रमयेत्तदा वृत्तं पूर्वाभिमुखं कुंडं न विद्यते उत्तमं यस्मादित्यनुत्तमं। अत्र
क्षेत्रोपपत्तिः तत्राष्टादशांशः १ अंगुलं २ यवौ ५ यूकाः तत्र वृत्ते कृते व्यासे ,एतद्विगुणं २ अंगुले ५
यवाः २ यूके एतावद्वर्द्धते तदा २६ अंगुलानि। एकांगुलस्य द्वौ तृतीयांशौ। अयंव्यासः २६।२।३।
सवर्णितः ८०।२४।२४९॥८०।३॥ अथवा ग्रंथकृदुक्तप्रकारेणैव व्यासः तत्र द्वौ अष्टादशांशौ तेन ए-
को नवमांशस्तस्य समच्छेदार्थं न्यासःसमच्छेदौ२१६।९।२४।९।योगः२४०।९त्रिभिरपवर्तितःसएवांकः
ततो व्यासस्य वर्गो इत्यादि प्रकारेण लब्धक्षेत्रफलं पंचशतीअष्टाधिकानि पंचाशदंगुलानि तेनाष्टा-

**विभजत्क्षेत्रं मध्यसूत्रस्यपार्श्वयोः ॥ भागंन्कसेदेकमेकं भागेनामेन मध्यतः ॥ ६० ॥ कुर्यात्पार्श्वद्वयेमत्स्यचतुष्कं तत्रवित्तमः ॥ सूत्रषट्कं ततो दद्यात्षडस्रं कुंडमुत्तमम् ॥ ६१ ॥ चतुरस्त्रीकृतं**

दशांगुलं क्षेत्रं न्यूनं भवति । तेन क्षेत्रफलाव्यभिचारी सर्वानुगतप्रकारस्तूच्यते । वृत्तकुंडे मध्यसूत्रं चतुर्विंशतिधाभजेत् । एकांशपंचविंशांशसहितं सार्द्धमंशकं । बहिर्न्यस्य भ्रमान्मध्याद्वृत्तं कुंडमितीरितं । अत्र सार्द्धांशमेकमंगुलं चत्वारो यवाः एकस्य पंचविंशांशाः २ यूके४ लिचाअर्द्धसहिताः वृत्ते कृते एतत् द्विगुणं ३ अंगुलानि यवाः ५ यूकाः १ लिचाते न सर्वस्य व्यासस्य व्यासः २७ । २ २५ अयं स वर्णितः ६७७ । २५ व्यासस्य वर्गे भनवाग्नीत्यादिनालब्धं क्षेत्रफलं ५७६ इदं सूक्ष्मगणनया क्षेत्रफलं शृ तु त्वेकात्यायनः चतुरस्रं मंडलं चिकीर्षन् मध्यादंशेनिपात्यपार्श्वतः परिलिख्य यदतिरिक्तं भवति तस्यतृतीयेन सह मंडलं परिलिखेत्स समाधिरिति । तत्रांशशब्देन कोणः तत्कर्णसूत्रार्द्धं १७ अंगुलानि यूकाद्वयोनानि । तच्च मध्यसूत्रात् पंचांगुलानि यूकाद्वयन्यूनानि । अधिकं तस्य तृतीयोंशों गुलमेकमेकांगुलस्य द्वौ तृतीयांशौ तेन १३ अंगुलानि । एकस्य द्वौ तृतीयांशौ व्यासार्द्धं अयं द्विगुणितो व्यासः २७ । ३ । स वर्णितो यथा ८२ । ३ अस्य क्षेत्रफले दशांगुलानि वर्द्धंते । यत्तु गणितत्त्वाभिमानिनोलक्षणं षोडशधा कृतमध्यमसूत्रक्षेत्रपुरः परिवर्द्धितभागे एकैक एव ततोंतरचिह्नान्मंडलकुंडमिह भ्रमणात् । स्यादिति । अत्र सप्तविंशतिअंगुलानि व्यासः तस्य क्षेत्रफलं ५७२ अंगुलानि अत्र चत्वार्यंगुलानि न्यूनानि भवंति इति न तदपि सम्यक् । कामिके तु कर्णार्द्धाष्टांशसंन्यासात् वृत्तं कुंडमिहोदितमिति । पुरस्तात् सम्यक् न्यासः संन्यासः अत्र साष्टमांशचतुर्दशांगुलानि व्यासार्द्धमिति । महान्व्यभिचारः ग्रंथांतरे तु चतुरस्रं पुराकृत्वा कुंडक्षेत्रप्रमाणतः । नवभागं पुराकृत्वा चैकभागं बहिर्न्यसेत् । तस्मान्मध्यं गृहीत्वैवं भ्रमात्तद्वर्त्तुलं भवेदिति । अत्रैकस्य तृतीयांशसहितानि एकोनत्रिंशदंगुलानि व्यासः तेन महत्तरमंतरं के च न एकं भागं बहिर्न्यसेदर्द्धार्द्धतयेतिशेषः तदा मूलपद्येन सहैकवाक्यता भवति इति वदंति । सिद्धांतशेखरे तु । चतुरस्रे सुसंसिद्धे तद्बाह्ये भागमष्टमं । क्षेत्रस्य विन्यसेद्दिक्षुमध्यात्तन्मानसूत्रतः । भ्रमणभ्रामणेनैवं वृत्तं कुंडमुदीरितमिति । अत्र त्रिंशदंगुलानि व्यासस्तेन महत्तममंतरं । अतः सिद्धांतशेखरे वचनं कैश्चिदन्यथा व्याख्यायते । क्षेत्रस्याष्टमं भागं बाह्येदिक्षु विन्यसेदर्द्धार्द्धतयेति शेषः तेन उभयपार्श्वेमिलित्वा अष्टमो भागो भवति । तदा व्यासः२७क्षेत्रफलं चतुरंगुलं न्यूनं सूक्ष्मगणनयेति ज्ञातव्यं । स्थूलगणनायामंगोक्रियमाणायां लिखितकात्यायनवचने महदंतरं स्यादित्यलं॥६०॥ चतुरस्रप्रकृतितया षडस्रंकुंडमाह॥अष्टधेति । क्षेत्रं चतुरस्रमध्यसूत्रमष्टधा विभजेत् मध्यसूत्रस्येत्यत्र मध्यसूत्रपदेन दक्षिणोदग्गतसूत्रं गृह्यते पार्श्वयोरिति वचनात् । अन्यथा अधऊर्ध्वमित्येव ब्रूयात्तस्य पार्श्वयोर्दक्षिणोत्तरायोरेकमेकंभागंन्यसेद्बहिर्वर्द्धयेत् । ततो अनेन मानेन वर्द्धितचिन्हेन मध्यतो मध्याच्च पार्श्वयुगे वर्द्धितदक्षिणोदग्गतसूत्रमध्यस्य दक्षिणपार्श्वे वामपार्श्वे च पूर्वापरभागयोर्मत्स्यचतुष्कं कुर्यात्।तत्रवित्तम इत्यनेन संप्रदायेनैवायमर्थो ज्ञेय इत्युक्तं।तत्र मत्स्योत्पादनप्रकार क्षेत्रमध्यादुत्तरकृतचिह्नपरिमितसूत्रस्यादि क्षेत्रमध्ये निधाय पूर्वेशानयोरंतराले वृत्तार्द्धं कृत्वा तत उत्तरकृतचिह्ने तत्सूत्रादिं निधाय तदर्द्धवृत्तभेदिवृत्तार्द्धं कुर्यादेवं पूर्वेशानयोर्दिशोरंतराले मत्स्यसिद्धिः । एवमेव क्षेत्रमध्याद्दक्षिण-

कृतचिह्नाच्च पूर्वाग्नेयदिशोरंतराले च मत्स्यद्वयं कुर्यात्। तत उत्तरचिह्नात् पूर्वैशानांतरालमत्स्यं यावदेकं सूत्रं पश्चिमवायव्यांतरालमत्स्यं यावत् द्वितीयं सूत्रं दद्यात्। ततो दक्षिणचिह्नात् पूर्वाग्नेयांतरालमत्स्यं यावत् एकं सूत्रं पश्चिमनैर्ऋत्यांतरालमत्स्यं यावत् द्वितीयसूत्रं दद्यात्। एवं सूत्रचतुष्टयदानं। ततः पूर्वमत्स्ययोर्मिथ एकः तद्वत्पश्चिममत्स्ययोर्मिथ एकं सूत्रं दद्यात्। एवं षट्सूत्रसंपातेन पूर्वाभिमुखं षडस्रं कुंडं भवति। तदुक्तं क्रियासारे। क्षेत्रं वस्वंशकं कृत्वा बहिः पार्श्वद्वयेंऽशकौ। न्यस्खातेन प्रमाणेन मध्यात्तुल्यं यथान्यसेत्। कोणान्यन्यानि चत्वारि पार्श्वयोश्च द्वयं द्वयं। षट्सूत्राणि न्यसेत्तेषु तत् स्यात् षट्कोणकुंडकं इति। सिद्धांतशेखरेपि। चतुरस्रसमे सिद्धे क्षेत्रमष्टांशकं बहिः। अग्रयोर्गर्भसूत्रस्य यो जयेत्तत् प्रदेशतः। गर्भमध्यप्रमाणेन सूत्रेण भ्रमयं त्रकं। गर्भमध्ये बहिर्भागे विन्यस्य भ्रमणाद्भवेत्। उत्तरे दक्षिणे बाह्ये मत्स्ययोर्द्वितयं ततः। मीनेबाह्यांशके मीने मीनयुग्मे ततः क्रमात्। सूत्रषट्कं न्यसेत्तत्तु कुंडं षट्कोणमीरितमिति। अत्र गर्भसूत्रस्येति दक्षिणोदग्गतसूत्रस्य उत्तरेदक्षिण इति वर्द्धितदक्षिणोदग्गतसूत्रमध्यस्य उत्तरपार्श्वे दक्षिणपार्श्वे इत्यर्थः। अत्र क्षेत्रोपपत्तिः विषमचतुरस्रद्वयं कल्पयेत्। तत एकस्य भूः ३० अंगुलानि मुखं १५ लंबः १३ ततो लंबेन निघ्नंकुमुखैक्यखंडं इत्यनेन प्रकारेण लब्धं क्षेत्रफलं २९२ यवचतुष्टयाधिकं। एवं द्वितीयचतुरस्रस्यापि २९२ यवचतुष्टयाधिकं एकत्र मिलितं ५८५ एवं नवांगुलान्यधिकानि भवंति षट्भुजसमता भवत्येव। अत्र स्वाबाधाभुजकृत्योरंतरं मूलं प्रजायते लंबइत्यनेन लंबसाधनं ज्ञेयं। यद्वा क्षेत्रत्रयं कल्पयेत्। मध्ये आयतचतुरस्रं। पार्श्वयोस्त्र्यस्रद्वयं। तत्रायतः चतुरस्रस्यफलं३९० एकस्य चतुरस्रस्यफलं ९७ यवचतुष्टयाधिकं। एवं द्वितीयस्यापि मिलित्वा क्षेत्रफलं ५८५ एवं विषमचतुरस्रचतुष्टयं परिकल्प्य१४६ यवद्वयं एतावदेकैकस्य फलमानीय संतोष्टव्यं। यद्वा त्र्यस्रषट्कं परिकल्प्यएकैकस्य९७यवचतुष्टयाधिकं फलमानीय संवाद्य एवमन्यप्रकारेणापि फलसंवाद ऊहनीयः। अन्येत्वन्यथा वर्णयंति। क्षेत्रचतुरस्रमध्यसूत्रं अष्टधाविभजेत्। मध्यसूत्रस्य प्राचीसूत्रस्य पार्श्वयोरधऊर्ध्वं च एकं भागंन्यसेत्। मध्यसूत्रस्य दक्षिणोदग्गतस्य च पार्श्वयोरधऊर्ध्वमेकं भागं न्यसेत्। ततो मध्यतो तेन मानेन पार्श्वयुगे मत्स्यचतुष्कं कुर्यात् तत्र मत्स्यकरणप्रकारमाह। पूर्वापरायत्तसूत्रचिह्नद्वयस्य दक्षिणोत्तरतस्तेनमानेन मत्स्यद्वयं कुर्यात्। तत्र चतुरस्रपूर्वपरिधिरेखया दक्षिणोत्तरया प्राचीसूत्रस्य यत्रसंपातस्तत्रउपर्यधश्चत्रंगुलेन तांपरिधिरेखामंकयित्वापूर्वतः कृतचिह्नदक्षिणभागेअर्द्धवृत्तं कृत्वा परिधिरेखागतदक्षिणचिह्नात्तद्व्रज्ञिभेदिअर्द्धवृत्तं कुर्यात्। एवं दक्षिणभागेमत्स्यसिद्धिः। एवमुत्तरभागेपि। एवमुक्तप्रकारेण चतुरस्रपश्चिमपरिधिरेखायामपि अंकद्वयंकृत्वापश्चिमदिशि कृतचिह्नस्य दक्षिणोत्तरभागयोर्मत्स्यद्वयं कुर्यात्। ततो वर्द्धितदक्षिणचिह्नात् पूर्वदक्षिणभगमत्स्यं यावदेकंसूत्रंपश्चिमदिग्दक्षिणभागमत्स्यंयावत् द्वितीयंसूत्रं। एवं वर्द्धितोत्तरचिह्नात् पूर्वदिगुत्तरभागंमत्स्यं यावदेकंसूत्रं पश्चिमदिगुत्तरभागमत्स्यं यावत् द्वितीयंसूत्रं एवं सूत्रचतुष्टयदानं। ततः पूर्वमत्स्ययोर्मिथएकंसूत्रं। एवं षट्सूत्रस्य संपातात् षडस्र कुंडमिति। अत्र विषमचतुरस्रद्वयं प्रकल्प्य एकस्य क्षेत्रफलं२७०एवंद्वितीयस्यापि मिलित्वा ५४० तन्मते मध्यसूत्रस्य पार्श्वयोरित्यस्याप्रवृत्तिर्भवति। किंच क्वचिन्मध्यसूत्रशब्देन प्राचीसूत्रं गृह्यते। क्वचिद्दक्षिणोदग्गतसूत्रं तदसंबद्धं प्रमाणाभावात् मध्यत इति पदं व्यर्थमेव स्यात्। मत्स्योत्पादनार्थं चतुरस्रपरिधिरेखयोर्यदंक-

नं तदपि स्वकपोलकल्पितं। क्षेत्रफलमध्ये षट्त्रिंशदंगुलानि न्यूनानि विषमभुजताचेत्यज्ञानविजृंभितं। येतु अस्यैव व्याख्याने प्राचीसूत्रपूर्वापरभागयोःकोणपातमिच्छंति। तेनमत्स्या एव अथ तत्र क्षेत्रफलसाम्यापादनायबह्वः प्रकाराः संभाव्यंते। तत्र कश्चित्। अष्टधाविभजेत् क्षेत्रं मध्यसूत्रादधोपरि। भागं न्यसेदेकमेकं पार्श्वयोस्तु दिगंकतः। संवर्ध्य क्षेत्रेष्वष्टांशं तत ऊर्ध्वाधरौ तिमी। क्षेत्राष्टमांशतः कुर्याद्दिक्सूत्रे तावदंकतः। संभेद्यक्षेत्रषष्टांशगुणेनैवमुदक्तिमी। षट्सूत्रीं पातयेत् तेषु षडस्त्रं कुंडमुत्तममिति। अत्र दक्षिणोदग्गतमध्यसूत्रमष्टांगुलं वर्द्धितं क्षेत्रफलमन्यूनातिरिक्तमेव। षट्भुजसाम्यं नास्ति। तथाच। अष्टोनद्विशतांशकेतरगुणे क्षेत्रस्यतिर्यक्स्थितांतःसूत्रोभयतो भवद्वनभवांकोर्ध्वाधरेचिह्नयेत्। तत्वां २५ शेषु भवैः पुरोप्यधरतोंकद्वंश२८व्वह्नौ भषद्वंद्वाद्विद्विगुणैर्द्विपार्श्वगुणत स्तिम्योः षडस्रोरितमिति। अत्रापि। क्षेत्रफलमन्यूनानतिरिक्तमेव। षड्भुजसाम्यं च नास्ति अन्यच्च। इदंवायव्यकुंडं तच्च पूर्वाग्रं। अत्र च पूर्वपश्चिमयोरेवकोणपातात्योनिस्थापनानवकाशात्। न कुर्यात्कुंडकोणेषु योनिं तां तंत्रवित्तम इति। कोणेयोनिस्थापनस्य निषेधात्। कुंडस्य पूर्वाग्रता व्याहन्यते। एतल्लक्षणद्वयक्तता च स्वग्रंथे कुंडान्युक्तोक्तं। प्रागादिकुंडत्रयमुत्तराग्रं याम्यस्थयोनीतरपंचकुंडी प्रागग्रिका पश्चिमयोनिरत्रेति। योनिलक्षणं वदताचोक्तं। मघवशिखिकृतां तदिक्स्थकुंडेष्वियमधिमेखलमेव मध्यभागे। यमदिशि शशिदिङ्मुखी निवेश्यावरुणदिशीतरकुंडएंद्रवक्त्रेति। तेन स्वग्रंथे पूर्वापरविरोधोपिनोपलक्षित इतियत्किंचिदेतत्। तथाच। प्राचीमध्यसूत्रमंगुलत्रयं वर्द्धयेत्। ततो वर्द्धितचिह्नात् दक्षिणोत्तरतः चतुरंगुलमानेन चतुरस्रपूर्वपरिधिरेखांकाभ्यां मत्स्यद्वयं कुर्यात्।एवं पश्चिमदिश्यपिदक्षिणोदग्गतसूत्रमंगुलत्रयमंगुलस्यषष्ठांशसहितं वर्द्धयेत्। एवमपि क्षेत्रफलमन्यूनमेव। इतोपि बह्वः प्रकाराः संभाव्यंते। क्षेत्रफलसाम्यापादनाय नतु षड्भुजसाम्यापादनाय। एवं कुंडस्याननुगतता प्रसज्यते। तेन षडस्रं कुंडे षण्णामपि भुजानां सम्यक् क्षेत्रफलसाम्यमवश्यमपेक्षितं। यतोत्र क्रियासारे कादिमते कामिके सिद्धांतशेखरेपि षट्भुजसमताया उक्तत्वात्। तत्र सर्वानुगतप्रकारस्तूच्यते। षडस्रे मध्यसूत्रंतुचतुर्विंशतिधा भजेत्।तत्रैकैकनवांशोनत्र्यंशैः संवर्ध्य मध्यतः।भ्रमयेत् तेन सद्वृत्तंतद्व्यासार्द्धेन लांछयेत्।षट्सु स्थानेषु षट्सूत्रपातनात् तत्षडस्रकं। अस्यार्थः। त्रयोंशाः अंगुलत्रयं तत्कोष्टक्। एकस्य नवमोंशः तेनोनं तेनायं वृत्तव्यासः २८ अंगुलानि ६ यवाः २ यूके किंचिदूने तस्यसवर्णनार्थं व्यासः २८। ७८। सवर्णितः २६८८१ व्यासस्यार्द्धं १३४। १८ व्यासचतुर्थांशो ६७। ८ इयमेवाबाधा ततः स्वाबाधाभुजकृत्योरित्यनेनानीय लंबं कुमुखैक्यखंडे लंबेन गुणिते छेदेन भक्ते लब्ध एकविषमचतुरस्रस्य क्षेत्रफलं २८८ एवं द्वितीयस्यापि मिलित्वा क्षेत्रफलं ५७६। अथवा मध्ये आयत चतुरस्रं पार्श्वयोस्त्र्यस्रद्वयं कल्पयेत्। तत्र व्यासचतुर्थांशः शरः अयमेवोभय त्र्यस्रस्य लंबः ततः। व्यासाच्छरोनाच्छरसंगुणाच्च मूलं द्विनिघ्नं भवतीह जीवेति। आनीताज्या २६ किंचिदूनानतोमध्यायतचतुरस्रस्य तथायते तद्भुजकोटिघातद्दत्यनेन पूर्ववच्च त्र्यस्रद्वयस्यापि फलमानीय सर्वमेकीकृतंक्षेत्रफलं ५७६ एवं विषमचतुरस्रचतुष्टयं त्र्यस्रषट्कं वा कल्पयित्वाफलसंवादऊहनीयः। अत्र षण्णांभुजानामपि साम्यमस्ति। तत्तु। खखखाभ्ररसैरंके ६०००० वृत्तव्यासेसमाहते। खखखाभ्रार्क १२०००० संभक्ते लभ्यंतेक्रमशोभुजा इति भास्कराचार्योक्तपरिपाट्याभुजानयनेन समूह्यं। यत्तु कादिमते तन्मध्यद्वादशांशेन विका-

क्षेत्रं विभज्याष्टादशांशतः ॥ एकं भागं बहिर्न्यस्य भ्रामयेत्तेन वर्तुलं ॥ ६२ ॥ वृत्तानि क-र्णिकादीनां बहिस्त्रीणि प्रकल्पयेत् ॥ पद्मकुंडमिति प्रोक्तं विलोचनमनोहरं ॥ ६३ ॥ पूर्व

स्थब्रह्मसूत्रकं । तेन मानेन च तथा कृत्वा वृत्तमपि स्फुटं । तद्वृत्ते वृत्तमध्यस्य कुर्यादर्द्धेन चांकनं । तत्र षट् सूत्रपातेन भवेत्कुंडं षडस्रकमिति । अत्र क्षेत्रफलमध्ये द्विसप्तत्यंगुल मध्ये द्विसप्तत्यंगुलानि न्यूनानि । भुजसाम्यमस्त्येव षड्भागवृद्धितो मत्स्यैश्चतुर्भिः स्यात् षडस्रकमिति ॥ कामिकेतु महा स्त्वव्यभिचारः भुजसाम्य मन्यत्र षट्नवतिपरिधिरेखाभिप्रायेणेदंलक्षणं यत्तु ततस्तन्मत्स्यचतुष्ट यानुसारेण । चतुरस्रसंबंधिपूर्वपश्चिमपरिधिरेखायां लांछनचतुष्टयं विदध्यात् इति । चतुर्वर्गचिंता मणिकारव्याख्यातं । तत्तु क्षेत्रफलानुसारेण कल्पितमिति उपेक्षणीयं तादृशशब्दाभावात् ॥ भु-जसाम्याभावाच्च । चतुरस्रप्रकृतितया पद्मकुंडमाह ॥ ६२ ॥ चतुरस्रीकृतमिति ॥ इदं वृत्तकुंडे व्याख्यातं । तत्रकर्णिकादीनां वृत्तानि त्रीणि बहिः प्रकल्पयेत् इति । तत्र कृतवृत्तात् बहिस्त्रीणि वृत्तानि क्रियेतचेत् । तदा । यावान् कुंडस्यविस्तारः खननं तावदीरितमिति । वचनात् नज्ञा-यते कियद्धस्तं कुंडं स्यात् इतिनैतद्व्याख्यातं किंतर्हिबहिरिति । वीप्सामध्यादिति शेषः तेन वृत्ते कृते मध्याद्बहिर्बहिः कर्णिकादीनां त्रीणि वृत्तानि कुर्यादित्यर्थः तदुक्तंक्रियासारे कृत्वैवं पूर्वव द्वृतं तन्मध्ये वर्त्तुल त्रयम् । भ्राम्यैवं पंकजाकारं कारयेत्कर्णिकादिभिरिति । तदा यत्कृतं स-र्वबाह्यवृत्तं तदेव दलाग्रवृत्तं स्यात् । तदा दलाग्रकारणे यत्र क्षेत्रं त्यज्यते तेनात्यंतं क्षेत्रस्य न्यून ता स्यात् । पूर्वं वृत्तकुंडे अष्टादशांगुलन्यूनता दर्शिता । अत्र ततोपि न्यूनता स्यात् । तेनैव कैश्चि द्व्याख्यायते । इदं ग्रंथकृता यद्वृत्तमुक्तं तत्तु क्षेत्रसंग्रहमात्रं कृतम् । क्षेत्रसीमावृत्तमित्यर्थः वक्ष्य माणपद्मकरणे । पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः । तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समवि-भागत इत्युक्तत्वात् । अत्र व्यासद्वादशांशः अंगुलद्वयम् । सपादं तत्र यत्सीमावृत्तं तस्याधएकां गुलं एकोयवस्तत्रवृत्तं कुर्यात् तदुपर्यपि तेनैव मानेन वृत्तं कुर्यात् । तेन मध्येसीमावृत्तं जातं । त-त्रांतर्वृत्तस्य चतुर्विंशत्यंगुलानि यवत्रयं च व्यासः तत्र समविभागतस्त्रीणिवृत्तानि कुर्यात्ततोवर्द्धित द्वादशांशेन दलाग्राणि कुर्यात् । तत्र बहिर्वृत्तस्याष्टाविंशत्यंगुलानि सप्तयवाः व्यासस्तत्रोभयवृत्त क्षेत्रफलमेकीकृत्यार्द्धमस्य क्षेत्रफलं अत्रापि व्यभिचारः यतोऽधोवृत्तस्य क्षेत्रफलं ४६७ सर्वोपरि वृत्तस्य क्षेत्रफलम् ६५८ एकीकृतं ११२६ एतदर्द्धं ५६३ तेन त्रयोदशांगुलानि न्यूनानि भवंति । वस्तुतस्तु पद्मक्षेत्रस्योत्पादको यः पद्मकरणप्रकारः स सर्वतोभद्रमंडलादावेव ज्ञेयः नवकुंडकरणे तत्र क्षेत्रस्याधिक्यं स्यात् । यत्तु ग्रंथकारेण वृत्तानि कर्णिकादीनां बहिस्त्रीणिइति । क्रियासारेपि । वर्त्तुलत्रयमिति । तत्तु यत्रोर्ध्वभूवृत्ताभिप्रायेणैवेतिध्येयम् । यत्राग्रे वृत्तमधिकं कुर्यात् इति सूच यितुं तेनापि क्षेत्रफलमधिकं किंचित् । तेन पद्मकुंडकरणे पंचवृत्तान्येवेति ज्ञेयम् । तेनाऽत्र तद्द-र्द्धनिशाकरकरणमपि नास्ति । अत्र क्षेत्रफलाव्यभिचारी सर्वानुगतप्रकारस्तूच्यते । पद्मकुंडे मध्यसूत्रं चतुर्विंशतिधाभजेत् । भ्रमयेत्कर्णिकावृत्तं त्र्यंशवृत्तार्द्धमानतः । षडंशवृत्तार्द्धमानभ्रमिवृत्ते तु केसराः । नवांशवृत्तार्द्धमाने वृत्ते स्यात्यत्र मध्यभूः । द्वादशांशात्तु वृत्तार्द्धावृत्तं यत्रोर्द्धभूः स्मृता । दलाग्राणां तु वृत्तार्द्धं कृत्वा पंचदशांशकैः ।न्यूनैःपंचभिरेकांशचतुःषष्ठंशकै भ्रमात् । रेखाग्रेभ्यः यत्र

सोम्नो दलाग्राणि प्रकल्पयेत्। अत्र मध्ये "षडंगुलव्यासकर्णिका यावान् कुंडस्य विस्तारः। खननं तावदीरितमिति। वक्ष्यमाणत्वात् तेन कर्णिकाखननमपि प्राप्तम्। तत्र कर्णिका किंचिदुच्चा रच णीया। तदुच्चता यद्यप्यत्र नोक्ता। तथापि नाभिकथने एकहस्तस्यनाभिं नेत्रवेदांगुलोपेतामिति वक्ष्यति। तेन सा चतुरंगुलव्यासाद्यंगुलोत्सेधा तत्र यदि चतुरंगुलव्यासायाः द्व्यंगुलउत्सेध स्तदा षडंगुलव्यासायाः कियानुत्सेध इति। त्रैराशिकेनोच्चता आनेया। तत्र त्रैराशिकसूत्रम्। प्रमाणमिच्छा च समानजाती आद्यंतयोस्तः फलमन्यजाती॥ मध्ये तदिच्छा हतमाद्यहृत्स्यात् इच्छाफलं व्यस्तविधिर्विलोमेइति॥ तत्र त्रैराशिकस्य न्यासः ४। २। ६। ततो अंत्येन ६ गुणितं १२ आदिना ४ भक्तं लब्धोच्चता। तदुक्तं कामिके उत्सेधंतु ततः कुर्यात्कर्णिकाद्व्यंशमानत इति। अतोग्रंथकृदग्रे योनिकुंडे योनिमब्जकुंडे नाभिंच वर्जयेदिति वक्ष्यति। सिद्धांतशेखरेपि। योनौ योनिं न कुर्वीत पद्मे पद्मं न कारयेत्। इति। क्रियासारेपि योन्यामंबुजकुंडयोः क्रमेण योनिं नाभिंच न कुर्वीत। चतुर्मुखेपि तस्मात् त्र्यंगुलं कर्णिकोच्चता संस्थाप्यान्यत् खननीयं केसरस्थान मपि खनित्वा अधोभागे केसराणि स्थापयेत् दलाग्राकारतया दलमध्यः सर्वोपि खननीयः तत्र चतुर्विंशति व्यासवृत्ताद्बहिर्यत्वृत्तम्। तस्यार्द्धमेव यथा गम्यते। तथा कुशलतया बाह्यहस्तेन दलाग्राणि रचयेत्। यतस्ततएव यंत्राणांवक्रता सा च यत्र सीमारेखा यत्रोर्ध्वभूवृत्तसंपातात् यत्र मध्ये रेखां यावदुभयतो रेखादानात् इदं पद्मकुंडं। अत्र क्षेत्रोपपत्तिः चतुर्विंशतिव्यासवृत्ते पूर्ववत् फलं ४५२ अंगुलानि ३ यवाः ४ यूकाः बहिर्वृत्तस्य एकांगुलस्य दशभिस्त्रुः षष्ठ्यंशैरूनत्रिंशदंगुल व्यासस्यक्षेत्रफलं ६२२ अंगुलानि ४ यवाः ४ यूकाः १४ मिलितं ११५२ एतदर्धं क्षेत्रफलं ५७६ इदमतिसूक्ष्मफलं। तदुक्तं कामिके। चतुरस्राष्टभागेन कर्णिकास्याद्विभागशः। तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत्। तदीये दलमध्यानि चतुर्थे दलकोटयः। चतुरस्राद्बहिः कुर्यात् दलाग्राण्यपि यत्नत इति। अत्र क्षेत्रफलं चतुरंगुलमधिकं। यत्तु अतिगणितज्ञाभिमानिनो लक्षणे क्षेत्रं तस्रतु रस्रके विततिवस्वंशेनवृत्तं कृतं व्यासार्द्धेन तु कर्णिका। पुनरियद्वृध्या भ्रमात्केसराः। तद्वृध्या दलमध्यभूः पुनरियद्वृध्या भ्रमेणोर्द्धभूः क्षेत्रव्यासजिनांशकस्य विशिखैरूनंकलांशैः पुनः तत्संवर्ध्य दलाग्रकाणि रचयेत् क्षेत्रार्द्धमुभ्भ्रमन्विना स्यात् त्रिंशत्नवविस्तृतीयमद्यतात् द्विघ्नेन वृत्तं बहिः। स्वव्यासार्द्धमितोच्चतामिहखनेत्वकांतराकर्णिका कुर्वन्केसरचिह्नमष्टदलकं यद्वाचतुर्भिर्द्दलैरिति॥ अत्र क्षेत्रफले एकादशांगुलानि न्यूनानि भवंति। तथा भांशंतु वृत्तव्यासस्य स्वाष्टांशेनाधिकं बहिः संवर्ध्यमध्याद्विलिखेत् बाह्यवृत्तं द्वितीयकम्। तृतीयं तावतैवान्यत् सीमावृत्तांतरालिखेत्। अष्टसूत्राणिषोडशधा तत्क्षेत्रंविभजेत्ततः। पत्रमध्यस्थसूत्रान्ताद्यथाबाह्यकरस्तथा। तत्पार्श्वसूत्रांतरस्थवृत्तं संपाततोलिखेत्। वृत्तार्द्धे इदलाग्रार्थमंतवीथ्यां हि यावती। त्यक्ताभूः स्याद्बहिर्वीथ्यां स्तावतीगृह्यते यथा। क्षेत्रत्र्यंशेन मध्ये स्यात् कर्णिका स्वदलोन्नता। पत्राग्राणि तदाकारात् खनेदखिलमंतरम्। एवमष्टदलाब्जाभं जायते कुंडमुत्तममिति। अत्र महान् व्यभिचारः। कामिके च चतुर्द्दलताप्युक्ता। अवशिष्टं दलंवेद दलमष्टदलंतु वेति। अन्यत्रापि। दशांशे च विन्यस्य बाह्येंशमेकं परिभ्राम्य तेनैव वृत्तं दलानां बहिर्मध्यमे कर्णिकां वापि कुर्याद्वेदष्टपत्रं बुधःपद्मकुंडमिति। अत्राल्पमंतरम्। सिद्धांतशेखरे। चतुरस्रेऽष्टधाभक्ते कुर्याद्वृत्तचतुष्टयम्। कर्णिका केसरे वत्त तृतीये पत्रसंच

यः। दलाग्राणि चतुर्थेषु वृत्तान्येवं प्रकल्पयेत्। कोष्ठे युग्मस्यमध्येपि भ्रमयंत्रं निधायच। भ्रमणात्संधिमारभ्य पत्राग्रं बाह्यतो भवेत्। चतुर्दिक्षु चतुः पत्रं पद्माभं कुंडमीरितम्। अथवाष्टदलं पद्मं कुर्याच्छास्त्रोक्तमार्गतइति। अत्र तु अत्यंतं न्यूनं चेत्रफलम्॥६४॥ चतुरस्रप्रकृतितया अष्टास्रकुंडमाह॥ पूर्वोक्तमिति॥ पूर्वोक्तं चेत्रं पूर्वोक्तचतुरस्रमध्यसूत्रं चतुर्विंशतिभागतो विभजेत्। एकं भागं चतुर्दिक्षु बहिर्न्यस्य षड्विंशत्यंगुलायामविस्तारं चतुरस्रांतरं बहिः कुर्यादित्यर्थः। अत्रकोणशब्देन कोणसूत्रम्॥ अंतस्थ चतुरस्रस्य यत्कोणसूत्रं यूकाचतुष्टयोनचतुस्त्रिंशदंगुलानि॥ तदर्धंयूकाद्वयोनसप्तदशांगुलानि तदर्धं यूकोनसार्द्धाष्टांगुलानि तत्प्रमाणतः बाह्यस्यचतुरस्रस्यकोणाभ्यांसकाशात् परिलांछयेत्॥ बाह्यचतुरस्रपरिधिरेखास्थमित्यर्थं कोणाभ्यामितीशाग्नेयाभ्यां॥ एवमाग्नेयनैर्ऋताभ्यामित्यादि ततोदिशं प्रत्यष्टसूत्रसंपातादष्टास्रं कुंडम्। तत्रसूत्रपातनप्रकारः। कोणपार्श्वयोर्यैलांछनैतयोर्मिथएकं एवं दिक्षु सूत्रचतुष्टयं बाह्यचतुरस्ररेखास्तु लांछनद्वय मध्यसूत्राण्येव चतुर्दिक्सूत्राणि एवमष्टसूत्राणि। तत्राष्टसूत्राणां संभवात् अष्टसूत्राणि पातयेदित्युक्तिः इदमेव यथान्यायमित्यनेनोक्तम्॥ अत्र चेत्रोपपत्तिः तत्रत्रीणि चेत्राणि। मध्ये आयतचतुरस्रं पार्श्वयो विषमचतुरस्रे तत्रायतस्यैकोभुजः ८१।६४। सवर्णितः ५७७।६४। द्वितीयोभुजः २६ तथायतेत्रभुजकोटिघातइति। अनेन लब्धं चेत्रफलं २ ३४ अंगुलानि२यवाः२यूके ततो विषमचतुरस्रद्वयस्य भूः २६ मुखं सवर्णितं ५७७।६४। तयोर्लंबः सवर्णितः १०८७।१२८ लंबेन निघ्नं कुमुखैक्यखंडमिति लब्धं चेत्रफलम्। १४८ अंगुलानि ५५ यूकाः एवं द्वितीयस्यापि सर्वं मिलितं ५३ अंगुलानि ६ यवाः तेन यवद्वयाधिकश्चतुश्चत्वारिंशदंगुलानि न्यूनानि अष्टभुजसमताच नास्ति अन्यूनानतिरिक्तचेत्रफलानयनेनैव कुंडसिद्धिरितिचेत् तदा अष्टास्राणि अनेकानि कुंडानिस्युः तथाहि षट्त्रिंशविस्तारायामे बाह्यचतुरस्रे अर्धयवसहितसप्तांगुलैः कोणपार्श्वयोर्लांछिते सति मध्यायतचतुरस्रस्यैको भुजः २६ अपरोभुजः ११ अंगुलानि ७ यवा अस्य चेत्रफलं २०८ अंगुलानि ४ यवाः विषमचतुरस्रद्वयस्य भूः २६ मुखं ११ अंगुलानि ७ यवाः लंबः अर्द्धयवसहितसप्तांगुलानि अस्यचेत्रफलं १३३ अंगुलानि षट्यवाः एवमन्यस्यापि सर्वं मिलित्वा चेत्रफलं ५७६ तथा सप्तविंशतिविस्तारायामे बाह्यचतुरस्रे षट्यवाः अष्टांगुलैः कोणपार्श्वतोंकितेआयतचतुरस्रस्य भुजः २७ अपरः सार्द्धनवांगुलानि तस्यचेत्रफलं २५६ विषमचतुरस्रद्वयस्यभूः २७ मुखं सार्द्धनवांगुलानि। लंबोष्टांगुलानि षट्यवाः एकस्यचेत्रफलं १६० एतावदन्यस्यापि मिलित्वा चेत्रफलं ५७६ एवमष्टाविंशत्यायामविस्तारे बाह्यचतुरस्रे सार्द्धयवसहितदशांगुलैः कोणपार्श्वतोलांछिते मध्यायतचतुरस्रस्यैको भुजः २८ अपरः सप्तांगुलानि पंचयवाः तत्फलं २१३ विषमचतुरस्रद्वयस्य भूः २८ मुखं सप्तांगुलानि पंचयवाः लंबो दशांगुलानि सार्द्धयवःअस्यफलं १८१ अंगुलानि ४ यवाः एतावदन्यस्यापि मिलित्वा चेत्रफलं ५७६ एतादृशः सहस्रशः प्रकाराः संभाव्यंते॥ नहि तावंत्यपि सर्वाणि अष्टास्रकुंडानि। यतः कुंडस्याननुगतता प्रसज्यते। तेन यत्र तुल्याष्टभुजत्वं तुल्यचेत्रफलत्वं च तदेवाष्टास्रंकुंडमिति संप्रदायविदस्तस्यसर्वानुगतप्रकारस्तूच्यते॥ कुंडेष्टास्रमध्यसूत्रं चतुर्विंशतिधा भजेत्। एकस्मद्वाष्टमांशाद्यमंशमेकं बहिर्न्यसेत्। चतुर्दिक्ष्वथतन्मानाच्चतुरस्रांतरं भवेत्॥ षट्चत्वारिंशदेकांशचतुः शष्ठ्यंशसंयुतैः। सप्तांशैर्लांछये द्वाह्यचतुरस्राग्निपार्श्वतः। दिक्ष्वष्टसूत्रसंपातादष्टास्रं समवत्

ष्टुकम्। अत्र षड्विंशत्यंगुलानि यवत्रयं एतद्विस्तारायामं बाह्यचतुरस्रं तत्तु सप्तांगुलानि पंचयवाः षट्यूका एतन्मानेन कोणपार्श्वयोर्लांछितं तेनात्र मध्यायतचतुरस्रस्यैको भुजः २६३। ८। सवर्णितः २११। ८। अपरोभुजः ११। १। १। १३। सवर्णितः ३७५। १६ पूर्ववल्लब्धं चेत्रफलं २८० तत ऊर्ध्वाधो विषमचतुरस्रद्वयस्य। सवर्णितं ८ भूः २११। ८ सवर्णितं मुखं १७५ १६ लंबः सवर्णितः ४८४। ६४ अत्रैकस्य फलं १४४ एतावदपरस्यापि मिलित्वा चेत्रफलं ५७६ एवमत्राष्टानां भुजानां साम्यमपीति इदमेवाष्टास्रं कुंडमितिमंतव्यं चतुर्णांभुजानां साम्यं प्रत्यचतः सिद्धं। अन्येषां तु चतुर्णां तत्कृत्योर्योगपदं कर्णइत्यनेन प्रकारेणानेयं। तच्छब्देन कोटिभुजौ॥बहिश्चतुरस्रंगौ तत्कर्णोपरिस्थितौ तावन्तौ ४८४६४ अथवा सुगमप्रकारांतरमुच्यते। कुंडेष्टास्रे मध्यसूत्रं चतुर्विंशतिधा भजेत्। एकत्रिंदशमांशाढ्यं ह्यंशद्वयध्या च वर्तुलं तत् ४८४।६४। मध्ये दिक्ष्वष्टसूत्रदानात्अष्टास्रकं समम्। अत्रापि अष्टानामपि भुजानां समता सा तु द्विद्विनंदेषु वेदैस्त्र४५८२२॥वृत्तव्यासे समाहते।खखखाभ्रार्कसं१२००००भक्ते लभ्यंते क्रमशो भुजा इति॥भास्कराचार्योक्तमार्गेणानेया ये तु गणितज्ञस्य लचणे चतुरस्रे मध्यसूत्रे षष्ठांशेन विवर्द्धयेत्। स्वजिनांशाधिकेनाथतावन्मानं बहिर्गतम्। चतुरस्रांतरं कृत्वा कोणार्द्धार्द्धेषु लांछयेत्। स्थानाष्टके ततःसूत्राण्येकैकंस्यात्तु चिह्नतः। नयेत्तात्तीयतात्तीयं चिन्हं प्रत्यष्टबुद्धिमान्। ततसंपातांतरंमृष्ट्वा चतुरस्रे तथाउभे। अष्टास्रंदर्शयेत्कुंडंतुल्यचेत्रफलंसममिति तथा चेत्रव्यासजिनांशकेषु चतुरःसंवर्ध्य साकं तथा षट्त्रिंशेन लवेन चैकलवकस्यैताद्वितत्यावहेत्। वेदास्रन्युदुदारदिग्गुणयुतं दिक्कोणमध्ये कृताष्टांकेष्वष्टगुणैस्तृतीयमिलितैरष्टास्रिकुंडं भवेदिति। एतेअपि न सांप्रदायिके यतः चेत्रफलं यथाकथंचित् संवदंति॥ एकलांछनतः तृतीयलांछनपर्यंतं सूत्रपातः क्वचिदप्यनुक्त इति। स्वकपोलकल्पितमेतत्। किंच एवंभूते अष्टास्रकुंडे सति योनिस्थापनस्थानमेवनास्ति सर्वत्र कोणरूपत्वात् कुंडस्य ग्रंथकृदेव वक्ष्यति नार्पयेत्कुंडकोणेषु योनिं तां तंत्रवित्तम इति कामिकेतु चेत्रात् द्वादशकं भागं चतुर्दिक्षु तदंतरे। विन्यस्य तत्प्रमाणेन तुर्यास्रमपरं नयेत्। तस्य कर्णप्रमाणेन तद्भुजास्वपि लांछयेत्। तत्राष्टसूत्रसंपातादष्टास्रं कुंडमुच्यत इति। अत्र महान्व्यभिचारः अत्र चतुर्वर्गचिंतामणिकारः कर्णशब्दस्य कर्णार्द्धमर्थमुक्त्वा कोणयोरानुकूल्यप्रातिकूल्येनाष्टौलांछनानीतिव्याख्यातिस्म। तदुक्तं। तत्प्रतिपादकवचनाभावात्। अतिविषमभुजत्वात्॥ चेत्रफलव्यभिचाराच्च अत्र सर्वत्र चेत्रोत्पत्तयः ग्रंथगौरवभयान्नप्रपंचिताः तास्तु मत्कृतायां गणितलीलावती टीकायां सुबोधिन्यां द्रष्टव्याः। नोपयोगइहमत्कृते अमी केवलागमविदां तु यद्यपि॥ आगमं गणितमप्यवैति यस्तुष्यतु प्रियगुणः स कश्चन॥ अयमुत्तमो नवकुंडिका गणितपचः एतत्कुंडकरणशक्तः सर्वाणि कुंडानि चतुरस्राणि वृत्तानि वा कुर्यात्॥ तदुक्तमाम्नायरहस्ये॥ कुंडानि चतुरस्राणि वृत्तनानाकृतानिवेति। सोमशंभुनापि। शस्तानि तानि वृत्तानि चतुरस्राणि वासदेति। अन्यत्रापि। वेदास्राणि एवं तानिस्युर्वर्त्तुलान्यथवा क्वचिदिति। मध्यमस्तु पंचकुंडीपचः तदुक्तमाम्नायरहस्ये। नवपंचाप्यथैकं वा कर्त्तव्यं लचणान्वितमिति॥ सोमशंभुरपि। वेदीपादरंतांत्यक्त्वा कुंडानि नवपंचधेति। तन्निवेशनमप्याम्नायरहस्यएवोक्तम्। विधाने पंचकुंडानामीशाने पंचमं भवेदिति। ज्ञानरत्नावल्यामपि। दिक्षु वेदास्रवृत्तानि पंचमंत्वीशगोचरमिति। अत्र वृत्तशब्देन वृत्तार्द्धचंद्रपद्मानि गृह्यंते। उक्तचतुरस्रवृत्तविकल्पाभिप्रायेणवा। सोमशंभु

वद्विभजेत्क्षेत्रं चतुर्विंशतिभागतः॥ एकं भागं बहिर्न्यस्य च वुरसं प्रकल्पयेत् ॥ ६४ ॥ अंतस्थचतुरस्रस्य केपादर्द्धप्रमाणतः॥ बाह्यस्यचतुरस्रस्य कोणभ्यां परिकल्पयेत् ॥ ६५ ॥ दिशं प्रति यथान्यायमष्टौ सूत्राणि पातयेत् ॥ अष्टास्रं कुंडमेतद्धि तंत्रविद्भिरुदाहृतं ॥ ६६ ॥

रपि। कुर्यात् कुंडं क्रमादीशे पंचममिति। नारदीयेपि। यत्रोपदिश्यते कुंडचतुष्कं तत्र कर्मणि॥ वेदाश्रमर्द्धचंद्रं च वृत्तं पद्मनिभं तथा। कुर्यात्कुंडानि चत्वारि प्राच्यादिषु विचक्षणः। पंचमंकारयेत्कुंडमीशदिग्गोचरं द्विजेति। यत्तु पंचकुंडीचेन्निवेश्या दिक्त्वं तस्येशपूर्वयोरिति कस्यचिद्वचनम्। तदसंबद्ध लिखितं ग्रंथविरोधात्। एककुंडपक्षःकनीयान्। तन्निवेशनमुक्तमाचार्यैः। अथवा दिशि कुंडमुत्तरस्यां प्रविदध्याच्चत रस्रमेकमेवेति। क्वचित्प्रतीच्यामपितन्निवेशनमुक्तम्। भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे विशेषतः। दीक्षाहोमे तथाशांतौ वृत्तं वरुणदिग्गतमिति। सोमशंभुरपि। एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुध इति। तत्रैककुंडपक्षे चत रस्र वृत्तं वा तत्कार्यं। तदुक्तंक्रियासारे। चतुरस्रंभवेत्कुंडं वृत्तं कुंडमथापिवा। स्थिरार्चने चरार्च्चायां नित्येहवनकर्मणीति। पिंगलामतेपि। कुंडमेककरं वृत्तं मेखलाकंठनाभिमत्। नित्यकर्मणि दीक्षायां शांतीपुष्टौ शुभं सममिति। एवंहस्तमात्रं कुंडमुक्तं। यदुक्तं सिद्धांतशेखरे। हस्तमात्राणि। दीक्षासु स्थापनादिषु। नित्यं होमे च साहसेकुर्य्यात्कुंडानि सर्वदेति। द्विहस्तादिप्रकारस्तूच्यते। एकहस्तचेत्रफलं द्विगुणं द्विहस्तस्य त्रिगुणं त्रिहस्तस्य चतुर्गुणंचतुर्हस्तस्येति दशहस्तांतं ज्ञेयं तत्तन्मूलंचतत्तदायामसूत्रं च नामांतराणि करणीमध्यसूत्रादिति। तत्र भास्कराचार्यप्रोक्तमूत्रानुसारेण मूलानयनं ज्ञेयं। तद्यथा। त्यक्त्वांत्याद्विषमात्कृतिं द्विगुणयेन्मूलं समे तद्वृतेत्यक्त्वालब्धकृतिं तदादिविषमाल्लब्धं द्विनिघ्नं न्यसेत्। पंक्त्यांपंक्तिहृते समेत्यविषमात्यक्त्वाप्तवर्गं फलं पंक्त्यां तद्द्विगुणं न्यसेदिति मुहुः पंक्तेर्दलं स्यात्पदमिति। अस्यार्थो ग्रंथगौरवभयान्नोक्तः। स तु मत्कृतायां लीलावती टीकायां सुबोधिन्यां सोदाहरणो द्रष्टव्यः। अथवा एकहस्तस्यएककोणसूत्रं तदेव द्विहस्तकुंडायामसूत्रं एवं द्विहस्तकोणसूत्रं चतुर्हस्तकुंडस्यायामसूत्रं। त्रिहस्तकुंडकर्णसूत्रं षट्हस्तस्य चतुर्हस्तकर्णसूत्रमष्टहस्तस्य। पंचहस्तकर्णसूत्रं दशहस्तस्येतिज्ञेयं। अथ गणितापटून्प्रति दशहस्तांतं करणीलिख्यते। एकहस्तदशांशेन चतुस्त्रिंशद्विहस्तके। एतेन ३३ अंगुलानि ७ यवाः ४ यूकाः २ लिक्षे इयतीद्विहस्तकरणी। एकाष्टाविंशतिशतात् त्रिसप्तत्याथसंयुताः। एकचत्वारिंशदंगुलयस्तुस्युस्त्रिहस्तकेएतेन ४१ अंगुलानि ४ यवाः ४ यूकाः ४ लिक्षाः इयती त्रिहस्तकरणी। अष्टचत्वारिंशतास्याचतुर्हस्ते करस्त्वथ। तृतीयांशन्यूनचतुः पंचाशत् पंचहस्तके। एतेन ५३ अंगुलानि १ यवाः २ यूकं ४ लिक्षाः इयती पंचहस्तकरणीचतुरेकोनविंशोनोऽनषष्टिस्तदुत्तरे। ३ एतेन ५८ अंगुलानि ६ यवाः ३ यूका ४ लिक्षाः इयती षट्हस्तकरणी सप्तहस्तेत्र्यर्द्धयुता त्रिषष्टिः करणीमता। ऊनाः सप्तदशांशाभ्यां वसुषट्चाष्टहस्तके ४ एतेन ६७ अंगुलानि ७ यवाः ७ यूकाः ४ लिक्षाइयती अष्टहस्तकरणी। द्वासप्तत्यंगुला कार्य्या करणी नवहस्तके। ऊनविंशांशद्वयोना दशहस्तेषडुद्रयः। ५ एतेन ७५ अंगुलानि ७ यवाः १ यूका२ लिक्षेइयती दशहस्तकरणी ५ कृत्वेष्टचरतुरस्रं तु स्याद्योन्याद्युक्तमार्गतः। एवं दशांतं कुंडानां करणुक्ता मया स्फुटा॥ ६७॥ अथकुंडखातमाह। यावानिति। कुंडस्य यावान्विस्तारो मध्यसूत्रं।

तावत्प्रमाणः खातः कार्यइत्यर्थः। कादिमते। हस्तमात्राणि सर्वाणि कुंडान्युक्ता प्रोक्तानां सर्वकुंडानामरत्निः खातमानकमिति। अरत्निहस्तयोः पर्यायता तेनैवोक्ता यथा तथा पूर्वमेवदर्शितं। अन्यत्रापि। यावन्मानं कुंडविस्तारस्तूक्तस्तावत् खातस्यापि मानं प्रदिष्टमिति। आचार्यश्च विंशद्भिश्चतुरधिकाभिरंगुलीभिः सूत्रेणाप्यथ परिसूत्र भूमिभागं। तावद्भिः प्रखनत् तावतीभिरिति। वायवीयसंहितायामपि। कुंडं विस्तारवन्निम्नमिति। प्रयोगसारदिव्यसारस्वतयोरपि। चतुरस्रं चतुःकोष्टं सूत्रैः कृत्वा यथा पुरा। हस्तमानेन तन्मध्येतावन्निम्नायतं खनेदिति। गणेश्वरविमर्शिन्यामपि। चतुर्विंशांगुलायामं तावत्खातसमन्वितमिति। अन्ये तु मेखलया सह खातमाहुः। तदुक्तं मोहशूरोत्तरे। हस्त ात्रं खनेत्तिर्यगूर्द्धमेखलयासहेति। प्रतिष्ठासारसंग्रहेपि। पंचत्रिमेखलोक्तायं ज्ञात्वा शेषमधः खनेदिति। विश्वकर्माप्याह। व्यासात् खातः करः प्रोक्तो निम्नं तिथ्यंगुलेन तु। उन्नताद्यानवांगुलैरिति। स एव वक्ष्यति। प्रथमेपि। कुंडं जिनां गुलैस्तिर्य्यग्गूर्द्धं मेखलयासहेति। सिद्धांतशेखरेपि। खातं कुंडप्रमाणं स्यादूर्द्धं मेखलया सहेति। एतत्पक्षद्वय मध्ये प्रथमपक्ष एव युक्तियुक्तो भाति।यतःकुंडस्य रूपंजानीयात्परमं प्रकृतेर्वपुरित्यादिना मेखलानामंगत्वाभिधानात्। तासां भूषणरूपत्वात् तया सह खातो नोपपद्यते। भूषकत्वे कदाचिदकर्त्तव्यतापि स्यादिति चेत् शृंगाररहितं यच्चयजमानविनाशकृदित्युक्तेर्भूषणस्याप्यावश्यकत्वात्। अथ मरणं छिन्नमेखलमिति। तथा कुंडं जर्जरमेखलमिति। तथा मानेनाधिकमेखले व्याधयः संप्रवर्द्धंतइत्यादिना च तद्वैकल्ये दोषस्योक्तत्वादंगत्वमिति चेत्। अस्तु नामांगत्वं। तथापि तया सह खातोनुपपन्नः प्रधानेकार्यसंप्रत्ययस्यन्याय्यत्वात्। किंच खातेन विना कुंडस्वरूपप्राप्त्यसंभवात् एवंदृष्टद्वारासंन्निपत्योपकारकांगस्य तस्यादृष्टद्वारादुपकारकांगमेखलयासहसिद्धिरप्युक्ता। उक्तंचयोगिनीहृदये। खातं कुंडायते स्तुल्यमंगत्वं तस्य कीर्त्तितं। संन्निपत्योपकारेण मेखलादेर्विशिष्यत इति। नच व्रीहीणां प्रोक्षणादिव खातांगत्वं मेखलानामिति वाच्यं। कुंडानां मेखलास्तिस्र इत्यादिना कुंडांगत्वेनैव विधानात्। किंच-प्रधाने कार्यसंप्रत्ययश्चेन्नांगीक्रियते तदा द्विहस्तादि कुंडेष्वपि चेत्रद्वैगुण्यं न प्राप्येत। तत्रापि एकहस्तादिखातघनहस्तफलस्य यत् द्वैगुण्यादिकं तत्तन्मूलप्रमाणात्करणीस्यात्। तत्रानिष्टं तवमते चखातस्याननुगतता प्रसज्यते त्रिमेखलापक्षे अन्यः खातः पंचमेखलापक्षेऽन्यः द्वादशांगुलमेखलापक्षेऽन्यइति। अन्यच्च। निम्नं तिथ्यंगुले नतु उन्नताद्यानवांगुलैरिति विश्वकर्मवचनं। प्रतिष्ठासारसंग्रहेपि। पंचत्रिमेखलोक्तायं ज्ञात्वा शेषमधः खनेदिति। विशेषवाक्यद्वयैकवाक्यतया उर्द्ध मेखलयासहेत्यन्यानि सामान्यवचनानि व्याख्येयान्यवश्यं। आग्नेयं चतुर्द्धाकरोति इति विशेषविधिविषये पुरोडाशं चतुर्द्धाकरोति इति सामान्यविधिवत्। सामान्यविधिरस्पष्टः संक्रियेत विशेषत इति। वार्त्तिककृदुक्तेस्तेनानियतापि त्वया एकमेखलकुंडेमेखलयाविना खातोंगीकर्त्तव्यः मेखलया सह विधायकाभावात्। अतो मेखलया विनैव खातइति सिद्धांतः मेखलया सहखातवचनानि चतुररत्न्येरत्न्येकहस्तादिकुंडेषु।पंचाशतादिहोमे खाताधिक्यस्य प्रयोजनाभावात् तद्विषयाणि इतिज्ञेयं श्रुतिद्वैधं तु यत्रस्यात्तत्र धर्मावुभौ स्मृतौ स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथगित्युक्तेः एतदभिप्रायेणैव प्रयोगसारे उक्तं। कारयेन्मेखलास्तिस्रचतुस्त्रिद्व्यंगुलाः क्रमात्। अथवा मेखलामेकां कुर्यात्संक्षेप कर्मस्विति। यत्तु तेनैवोक्तं। अत्रपक्षे

बहुवचनसंमते बह्वनामनुग्रहोन्याय्यइति तदपि न सम्यक्। अस्मन्मतएवबहुत्त्वात्सएव पच्चोग्राह्यः। उक्तंच जैमिनिना। विप्रतिविरुद्धधर्मसमवाये भूयसां स्यात् सधर्मत्वमिति। तत्र प्रथमपच्चे स्यात् घनहस्तफलं १ अं १३८२४ अपरपच्चे १४७२ ४। अथ मेखलामाह। कुंडानामिति। चतुरस्रयोन्यादीनां यादृशं रूपं चतुरस्रत्वादि मेखलानां तादृशं रूपं चतुरस्रे चतुरस्ररूपामेखलायोनौ योनिरूपामेखलाकार्येत्यर्थः। एतेन मेखलाः कुंडाकाराः कार्याः मेखलानां रूपे चतुरस्रत्वहानिर्नास्तीत्युक्तं। तिस्रइति। मध्यमः पच्चः पंचमेखलापच्चः उत्तमः एकमेखलापच्चः कनीयानिति। यदातु ग्रंथकारोक्त त्रिमेखलापच्च एव उत्तमः पच्चः तदाद्विमेखलापच्चो मध्यमः एकमेखलापच्चः कनीयानिति। यद्वायवीयसंहितायां। मेखलानां त्रयं वापि द्वयमेकमथापिवेति। क्रियासारेपि नाभियोनिसमायुक्तं कुंडं श्रेष्ठं त्रिमेखलम्। कुंडं द्विमेखलं मध्यं नीचं स्यादेकमेखलमिति। अन्यत्रापि। तिस्रः कुंडे मेखला मेखले द्वे यद्वा विद्वानेकिकां मेखलां चेति स मशंभोत्। त्रिमेखलं द्विजे कुंडं चत्रियस्य द्विमेखलमिति। मेखलैकात् वैश्यस्येति। तत्र सर्वकुंडप्रकृतिभूतैकहस्तकुंडमुपक्रम्य वेदाग्निनयनांगुला इत्युक्तत्वात् सर्वत्रकरणीषष्ठाष्टद्वादशांशैः क्रमान्मेखलाः स्युरिति गम्यते। प्रकृतिवद्विकृतिः कार्येति भाट्टन्यायात्। तदुक्तं सोमशंभुना। कुंडानां यस्तु विंशो भागः सोंगुलसंज्ञकः। विभज्यानेन कर्त्तव्या मेखला कंठनाभय इति। महाकपिलपंचरात्रे तु स्पष्टमेव। कुंडषड्भागिकात्वाद्या द्वितीयाष्टांशका स्मृता। तृतीया द्वादशांशा स्यात् इति॥ योगिनीहृदयेपि मेखला शृणु मेदेविहस्तादिषु विशेषतः षट्नागार्कांशसंभागैर्मिता स्युर्गोपिताः शुभा इति। यत्तु मुष्ट्यादिकुंडे द्विहस्तादावपि ग्रंथकृदुक्तं तत् स्थूलमानेनेति ज्ञेयम्। मुष्टिमात्रेत्विति। उत्सेधायामत इति॥ एकहस्तपर्यंतं सर्वत्रान्वेति। तत्रोक्तांगुलमानेन एकविंशत्यंगुलं मुष्टिमात्रे कुंडं मुष्टिरत्न्योः पर्यायत्वात्। तत्र मुष्टिकुंडे सार्द्धं त्र्यंगुलाद्या सपंचयवद्व्यंगुलामध्यापादोनगुला तृतीया। अरत्निमात्रं कुंडमुक्तां गुलमानेनसार्द्धद्वाविंशत्यंगुलं अरत्निसकनिष्ठः सषोडशांशवियुक्तः इत्युक्तेः तत्रपादोनचतुरंगुलाद्याः स सार्द्धषट्यवद्व्यंगुलामध्यायवोनद्व्यंगुला तृतीया। तत्र मेखलाकरणप्रकारः एकहस्त द्व्यंगुलात्सेधा नवांगुलविस्तृता कंठात्प्रभृतिः आद्या मेखला कार्या तदुपरि द्वितीया। अंगुलोत्सेधा सप्तांगुलविस्तृता। तदुपरि चतुरंगुलोत्सेधा चतुरंगुलविस्तारा। एवं फलति वेदाग्निनयनांगुलत्वं भवत्येव उक्तं च या यातु मेखला पूर्वा सा सा भूमिरुदाहृता इति तेन प्रथमां। अंतर्नवांगुलोच्चा चतुरंगुलविस्तारा बहिश्चतुरंगुलोच्चा द्वितीयांतः पंचांगुलोच्चा त्र्यंगुलविस्तारा बहिस्त्र्यंगुलोच्चा। तृतीया तूभयुत्र द्व्यंगुलोच्चा द्व्यंगुलविस्तारतदुक्तं मोहशूरोत्तरे। कोण ४ राम ३ यमां २ गुलैरिति कोणाश्चत्वारः अन्यत्रापि। चतुरस्त्रिद्व्यंगुला यद्वा तिस्रः सर्वत्र शोभना इति विश्वकर्माप्याह। उन्नताद्यानवांगुलैरिति। क्रियासारेपि। प्रधानमेखलोत्सेधमुक्तमत्र नवांगुलं। तद्बाह्यमेखलोत्सेधं पंचांगुलमिति स्मृतं। तद्बाह्यमेखलोत्सेधमंगुलद्वितयं क्रमात्। चतुरस्त्रिद्व्यंगुलोच्चा मेखला त्रितयस्य त्विति। लक्षणसंग्रहेपि। प्रथमा द्व्यंगुलायामा उन्नता सा नवांगुलैः मध्यातु अंगुला बाह्ये तृतीया तु यमांगुलैरिति। सिद्धांतशेखरेपि। चतुर्विंशतिमो भागः कुंडानामंगुलं स्मृतमिति। पुनरप्यंगुलपरिभाषां कृत्वा। चतुर्भिश्च त्रिभिर्द्वाभ्यां मूर्द्धमध्यात्त्वधोगता। तिस्रः प्रोक्ता क्रमादेवं विस्तारादुच्छ्रयादपीति। एतेन प्रथमा। चतुरंगुला

**यावन्कुंडस्य विस्तारः खननं तावदीरितं ॥ कुंडानो यादृशं रूपं मेखलाद्यां च तादृशं ६७**
**कुडानांमेखलास्तिस्रो मुष्टिमात्रे तु ताःक्रमात् ॥ उत्सेधायामतोज्ञेयाद्व्येकार्द्धांगुलसंमिताः६८**
**अरत्निमात्रे कुंडस्युस्ताश्चिद्व्येकांगुलात्मिकाः ॥ एकहस्तमिते कुंडे वेदाग्निनयनांगुलाः ॥६९॥**
**मेखलानां भवेदंतः परितो नेमिरंगुलात् ॥ एकहस्तस्य कुंडस्य वर्द्धयेत्तत्क्रमात्सुधीः ॥७०॥**

तदुपरित्र्यंगुला तदुपरि द्व्यंगुलेति। बहिश्चतुरंगुला तदंतर्मध्यमा द्व्यंगुला कंठलग्नेति च व्याख्या-नद्वयं निरस्तं। यत्तु कस्य चिल्लक्षणं व्यासे चतुर्विंशतिधा विभाजिते। तिस्रश्चतुस्त्रीक्षणभागवि-स्तृताः समं ततः कंठबहिस्तु मेखला। नवर्त्तुरामांशकतुंगता मता इति। अत्र द्वितीयतृतीययोः ष-ट्भागत्रिभागतोच्चता उक्ता। तदसंबद्धं लिखितं बहुग्रंथविरोधात्। एतत्प्रतिपादकवचनाभावाच्च। विस्तारतुल्योन्नतयश्च कैश्चिदुक्ता इमा इति यत्तेनैवोक्तंतदप्यज्ञानविजृंभितं। लिखिततत्प्रतिपादकवच नार्थानवबोधात् यच्च कोणरामयमांगुलैरित्यादीनां वचनानां विस्तारमात्रे पर्यवसानं कृतं सोप्यबो-ध एव यदाचार्यैस्तु सत्वपूर्वकगुणान्विताः क्रमात् द्वादशाष्टचतुरंगुलोच्छ्रिताः सर्वतोंगुलचतुष्कविस्तृ ताः मेखलाः सकलसिद्धिदा मता इति तन्मतानुसारिभिरन्यैरपि सर्वेषां मेखलामानं वितस्त्यष्ट-तदर्द्धकैरित्युक्तं तत्तु साक्षात्सकलसिद्धिदा मता इत्युक्तत्वात्। फलविशेषता ज्ञेया। तत्रापि कंठा-द्बहिः प्रथममेखलाद्वादशांगुलविस्तारा चतुरंगुलोच्चा तदुपरि द्वितीयाष्टांगुलविस्तृता चतुरंगु-लोच्चा तदुपरि चतुरंगुलोच्चा चतुरंगुलविस्तारेति ज्ञेयं।एवं कुंडभागे द्वादशांगुलोच्चत्वं भवति। त-दुक्तं वसिष्ठसंहितायां प्रथमा मेखला तत्र द्वादशांगुलविस्तृता। चतुर्भिरंगुलैस्तस्याश्चोन्नतिश्च स-सं ततः तस्याश्चोपरि वप्रं स्यात् चतुरंगुलमुन्नतः अष्टाभिरंगुलैः सम्यक् विस्तीर्णस्तु समं ततः तस्यो परि पुनः कार्यो वप्रः सोपि तृतीयकः चतुरंगुलविस्तीर्णश्चोन्नतश्च तथा विध इति। पंचमेख-लापक्षे तन्मानमुक्तं लक्षणसंग्रहे। मेखलाः पंचवाकार्याः षष्ठपचाब्धित्रिपक्षकैरिति। सिद्धांतशे-खरेपि षट्बाणाब्धिवन्हिनेत्रमिता स्युःपंचमेखला इति। द्विमेखलापक्षे तल्लक्षणमुक्तं तंत्रांतरे षष्ठां शेन अष्टमांशेनमेखलाद्वितयं मतमितिएकमेखलापक्षेपिषट्चतुर्द्व्यंगुलायामविस्तारोन्नतिशालिनी ति योनिलक्षणं वदता ग्रंथकृतासूचितएव।तन्मानमुक्तं पिंगलामते।एका षडंगुलोत्सेधविस्तारा मे खला मता इति। महाकपिलपंचरात्रेपि। मेखलैकाथवा स्मृता। सा चतुर्थांशविस्तारेति। प्रथ-मेपि। कंठांगुलाद्बहिः कार्या मेखलैकाषडंगुलेति। सिद्धांतशेखरेपि। कुंडानां मेखलां कुर्यात् एकांचेत् षड्भिरंगुलैरिति। सोमशंभुरपि। अंगुलैःषड्भिरेकाचेति। अन्यत्रापि। षडंशविस्तृतोन्न-ताथवैकिकैव मेखलेति। कामिके तु विशेषः स्यात्तद्वेदर्त्तुभागतः मेखला पृथुतोच्छ्रायः कुंडाकारा-तु मेखला। सर्वेषां तु प्रकर्त्तव्या मखलैकात्र लाघवादिति ॥७०॥ कंठमानमाह। मेखलानामिति। मेखलानामंतः परितः सर्वतः अंगुलादंगुलमानान्नेमिरेकहस्तस्य। कुंडस्य भवेदिति संबंधः अंगु-लादंगुलं व्याप्येत्यर्थः ल्यब्लोपेपंचमी। क्वचिदंगुलेति पाठः तदा सामानाधिकरण्येन योजनीयं। एतेन कुंडव्यासचतुर्विंशांशोनेमिरित्युक्तं भवति। द्विहस्तादावपि तत्करण्याश्चतुर्विंशांशएव नेमिः यदर्द्धांगुलवशात् दशहस्ता तमन्येषां क्रमात्तांवर्द्धयेदित्युक्तं। तत्तु तद्विहस्ताभिप्रायेण। द्विहस्ते-च एकमंगुलं पंचत्रयं द्वे यूके चतस्रो लिक्षाः पंच रेणवः चत्वारस्त्रसरेणव इति। तदुक्तं महाकपि-

दशहस्तांतमन्येषां अर्द्धांगुलवशात्पृथक्॥ कुंडे द्विहस्ते ता ज्ञेयारसवेदगुणांगुलाः ॥७१॥ चतुर्हस्तेषु कुंडेषु वसुतर्कयुगांगुलाः ॥ कुंडे रसकरेताः स्युर्दशाद्व्यंगुलान्विताः ॥ ७२ ॥ वसुहस्तमिते कुंडे भानुपंक्त्यष्टकान्विताः ॥ ७३ ॥ दशहस्तमिते कुंडे मनुभानुदशांगुलाः ॥ विस्तारोत्सेधतो ज्ञेयामेखला सर्वतो बुधैः ॥ ७४ ॥ होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् ॥

लपंचरात्रे। चतुर्विंशतिभागेन कंठो वै परिकीर्त्तित इति तेन रत्निमात्रे सप्तयवः कंठः अरत्निमात्रे सार्द्धसप्तयवः तदुक्तं। मंत्रमुक्तावल्यां कंठोष्टयवैर्हस्तमानेषु कुंडेषु। अरत्निमितेषु च सार्द्धसप्तभिर्यवैः रत्निमितेषु च सप्तभिर्यवैरिति। कामिके त्वन्यथोक्तं चेत्रार्कांशेन तस्योष्टइति। सोमशंभुरपि। बहिरेकांगुलः कंठोद्व्यंगुलः क्वचिदागम इति। सांप्रदायकास्तु प्रथमपक्षमेव मन्यंते। बहुतंत्रसंमतेः तदुक्तं। एकहस्तमुपक्रम्य खातादूवाह्येंगुलः कंठस्तद्वाह्यमेखलाः क्रमादिति। पिंगलामतेपि। खातादेकांगुलं त्याज्यं मेखलाना स्थितिर्भवेत् इति। अन्यत्रापि। कंठोंगुलादूर्बाह्यः कार्य इति। सिद्धांतशेखरेपि। कुंडेहस्तमिते कंठं कुर्यादेकांगुलं तत इति। कालोत्तरे च खाताद्वाह्येंगुलः कंठः सर्वकुंडेष्वयं विधिः चतुर्विंशतिमं भागं अंगुलं परिकल्पयेत् इति तट्टीकाकारैर्व्याख्यातं यवोष्टगुणितोंगुलमित्यादिना प्रसिद्धेनैव हस्तांगुलव्यवहारेण होमानुसारात् कुंडमुक्तं इयं ततु खातादिमानकथनार्थंपरिभाषा क्रियते। चिकीर्षितकुंडक्षेत्रं चतुर्विंशतिधा विभज्य यावांश्चतुर्विंशतिमो भाग स्तावान्परिमाणमंगुलं परिकल्पयेदिति॥ अत एव सर्वकुंडेष्वयं विधिरित्युक्तम्। अन्यत्रापि। कंठोष्टयवमात्र स्यात् कुंडे तु करमात्रक इति अन्यत्रापि कुंडस्यैकाकारस्य बाह्यपरितो नेमिर्भवेदंगुलेनेति। द्विहस्तादिकुंडानां विस्तारायामंसूचयन् मेखला आह कुंडे ति अत्र सर्वत्र षष्ठाष्टमद्वादशांशे पूर्वोक्तवन्मेखलाः कार्याः विस्तारोत्सेधतो ज्ञेया इति वक्ष्यमाणं पूर्ववत्सर्वत्र संबध्यते। रसवेदगुणांगुला इति। अल्पमंतरमाचार्य्यै रुपेक्षितं शिष्यबुद्धिपरीक्षार्थं शिष्याणामूहापोहबुद्धिर्यथा स्यादिति: तत्र पंचांगुलानि पंचयवाः द्वे यूके इयं प्रथमा। चतुरंगुलानि द्वौ यवौ मध्या। द्व्यंगुले षट्यवाः पंचयूकाः अंत्या। अत्र यद्यपि त्रिपंचसप्तनवहस्तानां मेखला नोक्ता स्तथापि अग्रे एकहस्तमितं कुंडमेकलक्षेवि धीयते। लक्षणं दशकं यावत् तावद्धस्तेन वर्द्धयेत् इति। त्रिहस्तादीनां विनियोगउक्तः अतस्तन्मेखलामानमपि पूर्ववत् षष्ठाष्टमद्वादशांशैर्ज्ञेयं। तत्र त्रिहस्ते षडंगुलानि सप्तयवास्तिस्रो यूकाः तिस्रो लिक्षाः आद्या पंचांगुलानि एको यवः चतस्रो यूकाः चतस्रो लिक्षाः अर्द्धसहिता मध्या त्रीण्यंगुलानि त्रयोयवाः पंचयूकाः षट् लिक्षा स्त्र्यंशोना। अंत्या चतुर्हस्त इति वसवोष्टौ तर्काःषट् युगानी। चत्वारि अत्र षष्ठाष्टमद्वादशांशतायं थक्तैवप्रकटीकृता। एवं पचहस्तादावपि ज्ञेयम्॥ ७४॥ योनिमाह। होतुरिति। आसां मेखलानामुपरि मध्यभागे होतुरग्रे अश्वत्थपत्रवद्योनिः कार्या तदुक्तं सोमशंभुना। तासामुपरि योनिः स्याय़ं न्मध्येश्वत्थदलाकृतिरिति। इयं च पूर्वोक्तयोनिः कुंडाकारा कार्या होतुरग्रइत्यंतेन। तदुक्तं भवति। वेदो यथा पृष्टभागेन पतति होतुश्च प्राङ्मुखता उदङ्मुखता वा भवति तथा। केषां चित्पश्चिममेखलोपरि केषांचिद्दक्षिणमेखलोपरि योनिः स्थापनीयेति। तदुक्तं स्वायंभुवे। प्रागग्नियाम्यकुंडानां प्रोक्ता योनिरुदङ्मुखा। पूर्वा मुखाः स्मृताः शेषा यथा शोभं व्यवस्थिता इति।

मुष्ट्यरत्न्येकहस्तानां कुंडानां योनिरीरिता ॥ ७५ ॥ षट्चतुर्द्व्यंगुलायामविस्तारोन्नतिशालिनी ॥ एकांगुलं तु योन्यग्रं कुर्यादीषदधोमुखं ॥ ७६ ॥ एकैकांगुलतो योनिं कुंडेष्वन्ये-

त्रैलोक्यसारेपि। दक्षिणस्यापूर्वयाम्ये जलस्था पश्चिमोत्तरे। नवमस्यापि कुंडस्य योनिरिंद्रजलस्थितेति। अत्र पूर्वशब्देनाग्नेयीजलस्थितिनैरृते वायव्ये उत्तरे तीशाने। सिद्धांतशेखरेपि। इंद्राग्नियमदिग्योनिः सौम्यमुखोस्मृता। योनिः पूर्वामुखान्येषु पूर्वाशान्यतरा स्मृतेति। क्रियासारेपि होमकृत्पुरतःस्याप्याद्दक्षिणे पश्चिमेपि वेति। सोमशंभुरपि। पूर्वाग्नियाम्यकुंडानां योनिः स्यादुत्तराननना। पूर्वानना तु शेषाणामैशान्येन्यतरा तयोरिति। अत्रैशान्यर्दति। एकदेशेन नवमं कुंडं गृहीतं। एतेन पूर्वाग्नेयदक्षिणकुंडानि नवमां च कुंडमुत्तराग्रं। अन्यानि पंच कुंडानि प्रागग्राणीति। तस्याः प्रमाणमाह॥७५॥ मुष्टीति।एकहस्तप्रकृतितत्वात् सर्वकुडानां चतुः षड्द्वादशांशैःआयामविस्तारोन्नतिर्युक्ता सर्वत्र योनिः कार्या।तदुक्तं तंत्रांतरे।तुर्यषष्ठद्वादशांशैर्योनिःकुंडायतेर्भवेत्। आयता विस्तृता तुंगा जिनांशेनतदग्रकमिति। क्रियासारेपि। तत् षडंगुलमायामविस्तारं चतुरंगुलमिति।इदं तु एकमेखलापक्षे।अन्येत्वन्यथा यर्णयंति।षट्चतुर्द्व्यंगुलायामेति द्वादशांगुलदैर्घ्या षट्द्व्यंगुलविस्तारेति।तदुक्तं अष्टांगुलविस्ताराद्व्यंगुलोच्छ्रितिस्स्वायंभुवे।मेखला मध्यतो योनिः कुंडार्द्धत्र्यंशविस्तृतेति।सिद्धांतशेखरेपि। दीर्घार्कपर्वभिर्योनिर्विस्तारेणाष्टकांगुला।उन्नतिर्द्व्यंगुलेनास्या इति।प्रयोगसारेपि।त्रिभागां मध्यतोयोनिमायामे द्वादशांगुलां।द्वादशांशोच्छ्रितां कुर्यात्किंचित्कुंभनिवेशिनीमिति। क्वचिदेकांगुलोप्युच्छ्राय उक्तो यन्नारदीये। कुंडत्र्यंशेन विस्तारो योनेरुच्छ्रायतोंगुला। कुंडार्द्धेन तुदीर्घास्यादिति। त्रैलोक्यसारेपि। दैर्घ्यात्सूर्यांगुला योनिस्त्र्यंशोना विस्तरेण तु। एकांगुलोच्छ्रिता सा त्विति। पिंगलामतेपि। विस्तारोष्टांगुलो योनेरुच्छ्रायोंगुलसंमित इति। अन्यत्रापि। उत्सेधमंगुलमिति। तेन द्व्यंगुलोच्छ्रायैकांगुलोच्छ्राययोर्विकल्पः अष्टांगुलोविस्तारस्त्वादिभागे। अग्रे संकुचितत्वात्। अश्वत्थपत्रवदित्युक्तेः योनिमध्ये किंचिन्निम्नं कार्यं। तदुक्तं त्रैलोक्यसारे मध्ये त्वाज्यधृतिम्तथेति। सांप्रदायिका अपि। एतादृशीमेव योनिं मन्यंते। अन्ये तु षट्चतुर्द्व्यंगुलेति समुच्छ्रितमायामादिषु संबध्यते तेन द्वादशांगुलविस्तारा द्वाशांगुलदीर्घा द्वादशांगुलमुच्चा योनिः कार्ये त्याहुः। तदुक्तं पंचरात्रे। अर्कांगुलोच्छ्रयां योनिं विदध्यात्तावदायतामिति। अन्यत्रापि द्वादशस्वरूपत्वात्। योनिः स्याद्द्वादशांगुला उत्सेधायामतस्तुल्येति। एतत्पक्षद्वयमपि। यथा स्वगुरुसंप्रदायमूहनीयं। इदं तूक्तप्रमाणत्रिमेखलपक्षे। यदा द्वादशांगुलमेखलापक्षस्तन्मते योनिरुक्ता। प्रयोगसारे। सात्विकी मेखला पूर्वासत्वत्या द्वादशांगुला। द्वितीया राजसी प्रोक्तामेखलाष्टांगुलैस्ततः। तृतीया मेखलाख्याता तामसी चतुरंगुला। पृथक् विस्तारमेता सु चतुरंगुलमानतः। स्थितां प्रतीच्यामायामे सम्यक् पंचदशांगुलां। द्विपंचांगुलविस्तारां षट्चतुर्द्व्यंगुलां क्रमात्। व्यक्ताश्वत्थदलाकारां निम्नां कुंडेनिवेशितां। त्रयोदशांगुलोत्सेधां योनिं कुंडस्य कारयेत् इति। प्रतीच्यामिति। एककुंडपक्षानुसारेणेति ज्ञेयं॥ ७६ ॥ एकांगुलमिति एतेन चतुर्विंशांशेन सर्वत्र योन्यग्रमपि ईषदधोमुखं कुंडप्रविष्टं कुर्यादित्युक्तं। तदुक्तं नारदीये। कुंडोष्टीबोधिपत्रवत्इति। अष्टी योन्यग्रंकुंडप्रविष्टाग्रेत्यर्थः त्रैलोक्यसारेपि। प्रविष्टाभ्यंतरे तथा। कुंभद्वयसमायुक्ता चाश्वत्थदलवन्मतेति। वा-

**षु वर्द्धयेत् ॥ यवद्वयक्रमेणैवयोन्यग्रमपिवर्द्धयेत् ॥ ७७ ॥ स्थलादारभ्य नालंस्याद्योन्याममध्यं सरंध्रकं ॥ नार्पयेत्कुंडकोणेषु योनिंतां तंत्रवित्तमः ॥ ७८ ॥ कुंडानां कल्पयेदंतर्नाभिमंबुजसन्निभां ॥ तत्तत्कुंडानुरूपं वा मानमस्य निगद्यते ॥ ७९ ॥ मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधतारतः ॥ द्वित्रिवेदांगुलोपेताकुंडेष्वन्येषु वर्द्धयेत् ॥ ८० ॥ यवद्वयक्रमेणैव नाभिपृथगुदारधीः ॥ योनिकुंडेयोनिमब्जकुंडे नाभिंविवर्जयेत् ॥ ८१ ॥ नाभिक्षेत्रं त्रिधा भित्वा मध्ये कुर्वीत कर्णिकां ॥ बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ॥ ८२ ॥ मुष्टिमात्रमि-**

यत्रीयसंहितायामपि मेखला मध्यतःकुर्यात्पश्चिमे दक्षिणेपि वा। शोभनां मध्यतःकिंचित् निम्ना सुन्मूलिकां शनैः। अग्रेण कुंडाभिमुखां किंचिदुत्सृष्टमेखलामिति। अत्र ग्रंथगौरवभयाद्दशहस्तकुंडांतं प्रत्येकं योनितदग्रादीनां मानं नोक्तं। तथा पिकिंचिदुच्यते। आयामश्चार्द्धविस्तृत्या सत्र्यंशोनोथविस्तृतिः। विस्तारस्तुर्य्योन्नतिः स्यादुन्नत्यर्द्धा तदग्रकं। एकैकांगुलतो योनिं कुंडेष्वन्येषु वर्द्धयेत्। यवद्वयक्रमेणैव योन्याग्रमपि वर्द्धयेत् इति तु गणितापटून् प्रति स्थूलमानेनोक्तं। न तु सम्यक् गणनाभिप्रायमिति। नालमाह स्थलादिति। स्थलादारभ्य योन्यानावं स्यात्। स्थलादारभ्येत्यनेन बाह्यमेखलालग्नं नालं कार्यमित्युक्तं। तेन चतुरंगुलोत्सेधविस्तारां बाह्यमेखलासंदष्टां वेदीं कृत्वा तदुपरि नालं स्थापयेदित्यर्थः कथं मध्ये सरंध्रकं यथा मध्यमेखलोपरिपरिधिपरिस्तरणार्थं रंध्रं विधाय अन्यो मध्यभागः पूरणीय इत्यर्थः। तदुक्तं पंचरात्रे। स्थलादारभ्य योनिः स्याद्बाह्यमेखलया समेति। यस्तु मध्ये सरं ध्रकमिति। नालविशेषणमित्यवदत् संभ्रांत एव यतः सरंध्रस्यैव नालशब्दवाच्यत्वात्। तस्य सरंध्रकथने तस्यादृष्टार्थापत्तेश्च न च नालाद्बाह्ये परिध्यादिस्थापनमिति वाच्यं। दृष्टेनादृष्टबाधायोगात्। परिधिः परिस्तरणस्थलाभावाच्च। प्रयोगसारे तु। योन्याः पश्चिमतो नालमायामे चतुरंगुलं। त्रिद्वेकांगुलविस्तारं क्रमान्न्यूनाग्रमिष्यत इति ॥७८॥ नाभिमाह। कुंडानामिति। कुंडानामंतर्न्नाभिं कल्पयेत्। कुंडाकारं पद्माकारं वा नाभिं कृत्वाखातमध्ये स्थापयेदित्यर्थः आतपे क्षत्रिये नाभिःप्राण्यंगे तु द्वयोरिति नाभिशब्दः पुंल्लिंगोप्यस्ति। उत्सेधतारतः उच्चत्वविस्ताराभ्यां अत्रापि प्राग्वदेकहस्तस्य सर्वकुंडप्रकृति भूतत्वात्। कुंडविस्तारषष्ठांशेन विस्तृता तदर्द्धोच्चा इत्युक्तं भवति। अंबुजसादृश्यमेव। ह। नाभिरिति। कुर्वीतेति। अंशेनेति शेषः उक्तं नारायणीये। पार्श्वे योगभुवः खाते कुंडे सन्नाभिमेखलेति। उक्तमुष्ट्यादिकुंडानां विनियोगमाह। मुष्टीत्यादि। कोट्यामष्टकरमित्यंतेन शतहोमे। अरत्निमात्रमिति छेदः तदुक्तं मुष्टिमानंशतार्द्धे तु शते वारत्निमात्रकमिति। संहितायां तु। कुंडं च कोटिहोमेपितदर्द्धेपिकराष्टकमिति। पक्षांतरमाह। एकेति। इदं तु पुष्पाज्याद्यल्पद्रव्यविषयं एककर्तृकहोमपरं वा पंचकरपर्यंतं। तदूर्ध्वं तु बहुतद्रव्यविषयमनेककर्तृकविषयं वाज्ञेयं। केषामष्टकरमित्यनेन विकल्पो दशहस्तमित्यस्य। सिद्धांतशेखरे तु विशेषः लक्षार्द्धे त्रिकरं कुंडं लक्षहोमे चतुः करं। कुंडं पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमात्। षट्हस्तं लक्षविंशत्यां कोट्यर्द्धे सप्तहस्तकमिति। अन्यत्रापि केचिद्धस्तंलक्षहोमे द्विहस्तं लक्षद्वंद्वे वह्निहस्तं त्रिलक्षे द्विहस्तं प्राहुर्दोर्ष्णां पंचकं पंचलक्षे रसलक्षे रसहस्तं सप्तलक्षे स्यात्। वसुहस्तं नवलक्षे नवकरं कुंडं दशहस्तंदशलक्षे दशकरमेवेह कोटि-

तं कुंडं शतार्द्धे संप्र चक्षते ॥ शतहोमे रत्निमात्रं हस्तमात्रं सहस्रके ॥ ८३ ॥ द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितं ॥ दशलक्षे तु षड्हस्तं कोट्यामष्टकरं स्मृतम् ॥ ८४ ॥ एकहस्तमितं कुंडमेकलक्षेविधीयते ॥ लक्षाणांदशकं यावत्तावद्धस्तेन वर्द्धयेत् ॥ ८५ ॥ दशहस्तमितं कुंडं कोटिहोमेविधीयते ॥ सर्वसिद्धिकरं कुंड चतुरस्रमुदाहृतम् ॥ ८६ ॥ पुत्रप्रदंयोनिकुंडमर्द्धेंद्वाभं शुभप्रदम् ॥ शत्रुक्षयकरंत्र्यस्रं वर्तुलं शांतिकर्मणि ॥ ८७ ॥ छेदमारणयोः कुंडं षडस्रं पद्मसन्निभं ॥ वृष्टिदं रोगशमनं कुंडमष्टास्रमीरितं ॥ ८८ ॥ विप्राणां चतुरस्रं

होमेपि दशहस्तं न हि कुंडं परमस्ति महीतलेऽमुष्मिन्निति । अथ कुंडानां फलविशेषानाह । सर्वेति । छेद उच्छेदः उच्चाटनमिति यावत् । अयं च फलविशेषः पूर्वोक्ततत्तद्दिशि कुंडकरणएव ज्ञेयः तदुक्तं कामिके। ऐंद्र्यां स्तंभे चतुष्कोणमग्नौ भागे भगाकृतिः । चंद्रार्द्धमारणे याम्ये द्वेषे निर्ऋतिकोणकं । वारुण्यां शांतिके वृत्तं षडस्युच्चाटने निले। उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रिमुक्तिदमिति । पिंगलामतेपि । कुंडे कुशेशयाकारमुत्तरे वश्यकर्मणि । षडस्रमुच्चाटने वायावर्द्धेंदुमारणेयमे । वेदास्रं स्तंभने प्राच्यामाकर्षेग्नौ भगाकृतिः । वारुण्यां शांतिके वृत्तमीशे त्वष्टास्रिमुक्तिदमिति । सिद्धांतशेखरेपि । योन्याख्यमुच्यते कुंडमाग्नेयामुत्तरामुखं । प्रजावृद्धौ च तापे स्यात् अर्द्धचंद्रमथोच्यते । याम्ये तन्मारणे शस्तमुत्तराभिमुखं सदा । नैर्ऋते त्र्यस्रिकुंडं स्यात् विद्वेषे पूर्ववक्त्रकं । वृत्तं कुंडमथो वक्ष्ये वारुण्यां शांतिके हितम् । षडस्रमुच्यते कुंडं वायावुच्चाटने पटुः पद्मकुंडमथो वक्ष्ये सौम्ये तत्पुष्टिवर्द्धनम् । वक्ष्ये कुंडमथाष्टास्रमीशान्ये सर्वकामदं इति । अत्र दीक्षांगतया क्रियमाणाष्टकुंड्या संयोगपृथक्त्वन्यायेन तत्तत्कुंडोक्तफलसिद्धिरपि ज्ञेया क्रियासारेपि । पूर्वोक्तलक्षणैर्युक्तं कुंडं तालप्रमाणकं । उक्तं चरार्चने चैव न स्थिरे तु चतुर्मुख । कुंडमत्रोक्तमार्गेण निर्माप्याथ सलक्षणं । क्षत्रियोपि समृद्धो वा शूद्रस्ताम्रेण बंधयेत् । तदलाभे त्विष्टिकाभिः संबध्य सुदृढं यथा । पूर्वोदितप्रकारेण मृदया लेपयेत्तथा । ताम्रेण लक्षणोपेतं कुर्यान्मृत्तिकयापि वा । एतत्कुंडं चरार्चायां गृह्णीयान्न सुस्थिरार्चने । अत्र च पूर्ववाक्यैकवाक्यतया तालप्रमाणत्वं ज्ञेयं । अलेन ताम्रकं कुंडं मृन्मयं गोमयांभसा । सोधं च सुधया सम्यक् शोधयेदमरर्षभ । मृन्मयानां तु कुंडानां परितः संधिभिः सह । रक्तमृच्छालिपिष्टाभ्यां भूषयेद्दक्प्रियं यथेति । अत्रोक्तकुंडानां न्यूनत्वे आधिक्ये॥अन्यथा भावे दोषमाह विश्वकर्मा । खाताधिके भवेद्रोगी हीने धेनुधनक्षयः । वक्रकुंडे तु संतापो मरणं छिन्नमेखले । मेखलारहिते शोको ह्यधिके वित्तसंक्षयः । भार्याविनाशनं कुंडं प्रोक्तं योन्या विना कृतम् ॥ अपत्यध्वंसनं प्रोक्तं कुंडं यत्कंठवर्जितमिति। आगमांतरेपि । मानाधिके भवेन्मृत्यु र्मा नहीने दरिद्रतेत्यादि। क्रियासारेपि न्यूनाधिकप्रमाणं यत् कुंडे जर्जरमेखलंशृंगाररहितं यच्च यजमानविनाशकृत् इति। वसिष्ठसंहितायामपि । अनेकदोषदं कुंडमत्र न्यूनाधिकं यदि । तस्मात्सम्यक् परीक्ष्येदं कर्त्तव्यं शुभमिच्छतेति ॥ सिद्धांतशेखरेपि । मानहीने महाव्याधिरधिके शत्रुवर्द्धनं । योनिहीने त्वपस्मारो वाग्दंडः कंठवर्जितेइति जयद्रथयामलेपि । सूत्राधिके सुहृद्द्वेषो मानहीने दरिद्रता । वाग्रोधः कंठहीने स्यादसिद्धिर्न्यूनखातके अधिके वा सुरीभोगो मानेनाधिकमेखले । व्याधयः संप्रवर्द्धंते वितोषो स्यादपस्मृतिः उच्चा

**स्याद्राज्ञां वर्तुलमिष्यते वैश्यानामर्द्धचंद्राभं शूद्राणां त्र्यस्रमीरितं ॥ ८९ ॥ चतुरस्रं तु सर्वेषां केचिदिच्छंति तांत्रिकाः ॥ कुंडरूपं तु जानीयात्परमं प्रकृतेर्वपुः ॥ ९० ॥ प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ॥ उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥ ९१ ॥ नित्यं नैमित्तिकं काम्यं स्थण्डिले वा समाचरेत् ॥ हस्तमात्रेण तत्कुर्याद्वालुकाभिः सुशोभनम् ॥ ९२ ॥ अंगुलोत्सेधसं युक्तं चतुरस्रं समं ततः ॥ एवंप्रोक्तानि कुंडानि कथ्यतेस्रुक्स्रुवौ ततः ॥९३॥ प्रकल्पयेत्स्रुवं यागे वक्ष्यमाणेन वर्त्मना ॥ श्रीपर्णीशिंशपा क्षी-**

टः स्फुटिते छिद्रसंकुलं वाच्यता भवेदिति । अस्यापि क्रियासारे आवश्यकतोक्ता । दिग्देशकुंडनिर्मुक्तो यो नलो लौकिको हि सः तस्माद्दिग्देशकुंडानि संग्राह्याण्युक्तलक्षणैः कुंडमेवं विधं न स्यात् स्थंडिलं वा समाश्रयेत् इति कुंडं खातरूपं योनिः पश्चिमत इति नित्याभिप्रायेण एककुंडाभिप्रायेण च ग्रंथकृदुक्तिः॥८१॥कुंडानुकूल्यमाह नित्यमिति अंगुलोत्सेधसं युक्तम्। अंगुलं पूर्वोक्तलक्षणं यद्वाअंगुलानां हस्तशाखानां चतसृणां य उत्सेधस्तद्युक्तं यदाहुः स्थंडिलं रत्निमात्रायामंचांगुष्टपर्वोन्नतमपि सुसमं निर्मितं वालुकाभिः चतुः कोणंद्व्यंगुलोत्सेधमेकेबुधा हस्तविस्तारयुक्तं तदाहुरिति इदमल्पहोमविषयमितिज्ञेयं तदुक्तं वसिष्ठसंहितायां इषुमात्रं स्थंडिलं वा संक्षिप्ते होमकर्मणीति क्रियासारे तु स्थंडिले देशविशेषोयुक्तः होमोष्टदिक्षु प्राक्प्रवः प्रागुदक्प्रवणोथवा॥ उदक्प्रवः प्रदेशो वा स्थंडिलस्य स्थलं स्मृतमिति । पिंगलामतेतु विशेषः होमे प्रशस्यते कुंडं स्थंडिलं वा हसंतिके वायवीयसंहितायामपि अथाग्निकार्यंवक्ष्यामि कुंडे वा स्थंडिलेपि वा वेद्यां वा थायसे पात्रे मृन्मये वा नवेशुभेति स्थंडिलं वालुवाभिर्वा रक्तमृद्रजसापि वेति क्रियासारे विशेषः होमे अग्निचक्रमपि विलोकनीयं तदुक्तमन्यत्र नवकोष्टं समालिख्याथेशनिरृतयोः क्रमात् । वारीद्रेंद्रे वायुवन्ह्योर्दक्षिणोत्तरयोर्न्यसेत् सूर्यादीन्मध्यकोष्टे तु केतुं न्यस्यफलं दिशेत्। आदित्ये च भवेच्छोको बुधे धनसमागमः शुक्रस्थानेर्थलाभः स्यात् शनिर्हानिकरो भवेत् ॥ चंद्रे लाभं विजानीयाद्भौमे च वधबंधनम् । गुरुः स्यादर्थलाभाय राहुर्हानिकरो मतः केतुना मृत्युमाप्नोति ह्यग्निचक्रे सदैव हि त्रयंत्रयं च गणयेत् सूर्यर्क्षाद्दिनभावधि । नित्येनैमित्तिके दुर्गा होमादौ न विचारयेत् इति । उक्तमुपसंहरन् वक्ष्यमाणमवतारयति ८३ एवमिति स्थंडिलस्यापि कुंडानुकूल्यत्वेनोक्तत्वात् । कुंडानामेवोपसंहारः कृत इति ज्ञेयः स्रुक्लक्षणमाह प्रकल्पयेदिति श्रीपर्णी काश्मरी क्षीरशाखिनोन्यग्रोधादयः वेदित्र्यंशेनेति पादोनत्र्यंशैः कंठांतस्थो विष्कंभ इत्यर्थः स च तत्परिध्यानयनेन ज्ञेयः आरमिति मुखंकंठसमानं वेदीष्टतीयांशविस्तारं सर्वेषां दैर्घ्यस्योक्तत्वात् सर्पिषो निर्गमायेत्युक्ते मार्गमिति कंठवेदीपरिधिभेदिनम्॥ तदुक्तं मंत्रमुक्तावल्यां । कंठाधः कारयेन्मार्गं विद्वानाज्यस्य निर्गमे वेधं च मुखतः कुर्यात्तमलोहशलाकयेति वसिष्ठसंहितायामपि सुषिरं कंठदेशे स्यात् विशेद्यावत्कनीयसिति वेदीति कर्णिका तु खातमध्ये उच्चारक्षणीया तस्याकर्णिकायाः बहिः अभितः सर्वतः तेनांशद्वयं संगृहीतम्। अत्रटोगर्त्तः त्रिभिर्भागैरंगुलद्वयेनेत्यर्थः बहिरित्यत्रटस्यपरित इति हृत्तं ॥ परितस्तेनांशद्वयं संगृहीतं मुखवेद्योः परितः षडंशमानतो मेखला स्यादित्यन्वयः तेनाष्टांशेन मुसीपि मेख

रशाखिष्वेकमयं गुरुः ९४ गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः॥विंशत्यंशैर्भवेद्दंडो वेदिसैरष्टभिर्भवेत् ॥ ९५ ॥ एकांशेन मितः कंठः सप्तभागमितं मुखं ॥ वेदित्र्यंशेन विस्तारः कंठस्य परिकीर्तितः ॥ ९६ ॥ अग्रं कंठसमानं स्यान्मुखे मार्गं प्रकल्पयेत् ॥ कनिष्ठां गुलिमानेनसर्पिषोनिर्गमाय च ॥ ९७ ॥ वेदिमध्ये विधातव्या भागेनैकेन कर्णिका ॥ विदधीत बहिस्तस्या एकांशेनाभितो वटं ॥ ९८ ॥ तस्य खातंत्रिभिर्भागै र्वृत्तमर्द्धांशतो भवेत् ॥ अंशेनैके न परितो दलानि परिकल्पयेत् ॥ ९९ ॥ मेखलामुखवेद्योः स्यात्परितोर्द्धांशमानतः ॥ दंडमूलाग्रयोः कुंभौ गुणवेदांगुलैः क्रमात् ॥१००॥ गुंजोयुगयमांशैः स्याद्दंडस्यानाह ईरितः॥ षाड्भिरंशैः पृष्ठभा गोवेद्याः कूर्माकृतिर्भवेत् ॥ १०१ ॥ हंसस्य वा हस्तिनो वा पोत्रिणो वामुखंलिखेत् ॥ मुखस्य पृष्ठत्रभागेस्याः संप्रोक्तं लक्षणंस्रुचः ॥ १०२॥ स्रुचश्चतु

लाकार्या सा च वृत्ताकारा भवति ॥ तत एकेन कर्णिका द्वाभ्यामवट एकेन वृत्तं। अंसद्वयेन दलानि एकांशेन मेखला अर्थादर्द्धभागेन परितः समचतुरस्रसीमाघटनाकार्या तदुक्तं मंत्रमुक्तावल्यां अर्द्धां गुलाभवेच्छोभा समा वा चित्रितापि वा इति । अत्रांगुलशब्दो अंशवाची । एवमष्टापि भागाउपयुक्ताः सीम्नः कोणेषु वल्यादि चित्रं कार्यमुपदेशात् दंडेति अत्रांशप्रकारणात् । अंगुल शब्दो अंशवाची।तेन मूले अंशेन मूलभागमुखः अग्रे तु चतुरंशेन वेदिलग्नमुखः कार्यः क्रमा दित्यग्रे थन्वेति ॥ तत्र मूलकुंभलग्नाद्द्व्यंशात्रान्यत्र लग्नापि द्व्यंशा ॥ गंडी कंकणाकारा कार्या युगशब्दस्य युगंयुग्मे कृतादिष्विति कोशात् वाच्य द्वित्वार्थे संभवति लक्षणांगीकरणे प्रमाणाभावात् तदुक्तंसोमशंभुना मूले चाग्रे च दंडस्य गंडो कं कणवद्भवेदिति एतेनैकादशांशाजाताः मध्येनवांशमितोधारणार्थं दंडोऽवशिष्यते।तदुक्तं महाकपिलपंचरात्रे रसांगुष्टैर्भवेद्दंड इति।अत्रापिद्व्यंगुलशब्दे नांगुलानि गृह्येरन् । तदा सार्द्धास्त्रयोंशा दंडोऽवशिष्यते । ततो धारणार्थमवकाश एव न स्यात्।दंडस्यानाहोविशालता षड्भिरंशैःकार्योवेद्याःपृष्टभागः कूर्माकृतिरिति पृथगेव ये तु दंडस्यानाहोदैर्घ्यं ईरितमिति पृथक् योजयंति । षड्भिरंशैः वेद्याः पृष्टभागः कूर्माकृतिरिति च योजयंति ते बभ्रमुरेव । आनाहशब्दस्यदैर्घ्यवाचित्वाभावात् । दैर्घ्यस्य च प्रागुक्तत्वात् । तदुक्तं मंत्रमुक्तावल्यां । षडंगुलपरीणाहो दंडमध्यउदाहृत इति । कूर्माकृतिरित्यत्र षड्भिरंशैरित्यस्यानर्थक्यात् च अस्याः स्रुवोमुखपृष्टभागे हंसादेर्मुखं लिखेदिति संबंधः पोत्रिणोवराहस्य । स्रुवलक्षणमाह । स्रुवइति चतुर्भिरंशैरानाहो विस्तारः एतस्येति संबंधः । यन्मंत्रमुक्तावल्यां । दंडो वेदांगुलैर्भवेत् इति । कर्षेति । कर्षलक्षणंतु । माषोदशगुंजः स्यात् षोडशमाषो निगद्यते कर्ष इति । अंशद्वयेन तच्छिरः कुर्यात् । तत्कर्षाज्यग्राहिकं मृगपदाकृतिर्यथा स्यादेवं निखनेदिति संबंधः कंकणभूषित इत्युक्ते गांडीशब्दोत्र घटपर्य्यायः । तदुक्तं मंत्रमुक्तावल्यां । मूलाग्रयोः कारयेद्वौ कुंभो वाति मनोहरौ इति । तौ च विशेषानविधानात् प्राग्वत् कार्य्यौ कंकणमपि प्राग्वत् कार्यं । अन्यत्र विशेषः तदलाभे पलाशस्य पर्णाभ्यां हूयते हविरिति । अत्र पर्णाभ्यामिति मध्यमपर्णेनेति ज्ञेया । मध्यमेन पर्णेन जुहोतीति श्रुतेः । वायवीयसंहितायामपि । स्रुक्स्रुवौ ते जसौ ग्राह्यौ नकांस्यायससीसकौ । यज्ञदारुमयौ वापि तांत्रिकैः शिल्पिसंमतौ । पर्णे वा ब्रह्मवृक्षादेरच्छिद्रं मध्यउक्षितं इति । अन्यच तु पलाशपर्णाभावे तु पर्णैर्वा पि-

विंशतिभिर्भागैरारचयेत्स्रुवं ॥ द्वाविंशत्यादंडमानमंशैरेतस्य कीर्तितं ॥ १०३ ॥ चतुर्भिरं-शैरानाहः कर्षाज्यग्राहताच्छिरः ॥ अंशद्वयेन निखनेत्पंके मृगपदाकृतिं ॥ १०४ ॥ दंडमूलाग्रयोर्गंडी भवेत्कंकणभूषिता ॥ स्रुवस्य विधिराख्यातः कथ्यते मंडलान्यथ ॥ १०५ ॥ चतुरस्रे चतुः कोष्ठे कर्णसूत्रसमन्विते ॥ चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयं ॥ १०६ ॥ मध्येमध्ये यथा मत्स्या भवेयुः पातयेत्तथा ॥ पूर्वा परायते द्वे द्वे मंत्री याम्योत्तरायते ।१०७। पातयेत्तेषु मत्स्येषुसमंसूत्रचतुष्टयं ॥ पूर्ववत्कोणकोष्ठेषुकर्णसूत्राणि पातयेत् ॥ १०८ ॥ तदुद्भूतेषु मत्स्येषु दद्यात्सूत्रचतुष्टयम् ॥ ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणिपातयेत् १०९ यावच्छतद्वयं मंत्रीषट्पंचाशत्पदान्यपि ॥ तावत्तेनैव विधिना तत्र सूत्राणि पातयेत् । ११०। षट्त्रिंश तापदैर्मध्ये लिखेत्पद्मं सलक्षणं ॥ बहिः पंक्त्या भवेत्पीठं पंक्तियुग्मेनवीथिकाः

प्यलोद्भवैरिति । संहितायामपि । पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मुने । विदध्याद्वाश्वत्थपत्रे संचिते होमकर्मणि इति॥१०५॥अथवेदिकायां सर्वतोभद्रादिमंडलरचनामाह । चतुरस्र इति । वास्तुमंडलोक्तप्रकारेण कर्णसूत्रद्वयसहितं चतुष्कोष्टयुक्तं चतुरस्रं कुर्यात् इत्यर्थः श्लोकद्वयेन षोडशकोष्टोत्पादनप्रकारमाह । चतुर्ष्विति । चतुर्षुकोणसूत्रचतुष्कं तथा दद्या यथा मध्येमत्स्याभवेयुःमंत्री तेषु मत्स्येषु द्वे प्रागग्रायते याम्योत्तरायते । इदं समं सूत्रचतुष्टयं पातयेदितिसंबंधः एवं षोडशकोष्टोसंपन्नाभवती । चतुःषष्टिकोष्टोत्पादनप्रकारंसार्द्धपद्येनाह । पूर्ववदिति । तत्र प्रकारः कोणगतचतुःकोष्टेषु पूर्ववत् कर्णसूत्रचतुष्कं दत्वा तदुत्पन्नमत्स्यचतुष्केषु पूर्ववत् । प्रागग्रे द्वे उदगग्रेसूत्रे इदंसूत्रचतुष्टयंदद्यात् एतत्सूत्रचतुष्कपातोत्पन्नांतरालकोष्टमत्स्यचतुष्के पुनर्द्वे प्रागग्रे द्वे उदगग्रे सूत्रेदद्यात् एवं चतुःषष्टिकोष्टानि संपद्यंते ।तेनैव विधिनेत्यस्यायमर्थःकोणकोष्टचतुष्के पूर्ववत् कर्णसूत्रचतुष्टयं दत्वा तदुत्पन्नमत्स्यचतुष्केद्वे प्रागग्रे द्वे उदगग्रे सूत्रे दद्यात्।तत एतत् सूत्रचतुष्कपातोत्पन्नांतरालकोष्टमत्स्येषु षट्प्रागग्राणि ।षट्उदगग्राणि सूत्राणि दद्यात् । एवं द्विशते षट्पंचाशत्कोष्टानि संपद्यंते ॥ ११० ॥ कोष्टानां विनियोगमाह । षट्त्रिंशतेति । पद्मलेखनप्रकारमनंतरमेव वक्ष्यति बहिरिति । त्रिषु स्थानेष्वन्वेति । बहिः अष्टाविंशतिकोष्टात्मिकया वक्ष्यमाणरीत्यापीठं कुर्यात् । तद्बहिः पंक्तियुग्मेन परितः अशीति कोष्टात्मकेन वक्ष्यमाणरीत्या वीथिकां कुर्यात् । तद्बहिः परितः शिष्टाभ्यां द्वादशोत्तरशतकोष्टाभ्यां द्वाराणि शोभाउपशोभाःअस्रन्कोणात् वक्ष्यमाणरीत्याकुर्यात् । पद्मकरणप्रकारमाह । पद्मेति । तत्र षट्त्रिंशत् पदात्मकं पद्मक्षेत्रं तत् दिक्सूत्रद्वयेन कर्णसूत्रद्वयेन चाष्टधाभेदितं वर्त्तते । तान्येवसूत्राणि पत्रमध्यसूत्राणि । तत्र प्रकारः पद्मक्षेत्र यामं द्वादशधा विभज्य एकांशं सर्वतो बहिस्त्यजेत् । ततो दशभागान् षोढाविभज्य मध्ये सूत्रादि संस्थाप्य अंशद्वयेनैकंवृत्तं । तदुपर्यंशद्वयेनापरं तदुपर्यंशद्वयेनान्यदितिवृत्तत्रयं कुर्यात् । आद्यमित्याद्युक्तिस्तुवक्ष्यमाणां गावरणादीनां स्थानसूचनायेत्यवधेयं । मुक्तांशेनेतिद्वादशांशेन तत्र वृत्तमग्रे वक्ष्यति । बाह्येति । बाह्यंयत्पत्रवृत्तं तस्य यदंतरालं तस्य मानेन सुधीः केसराग्रेषु केसरवृत्ताग्रे निधाय सूत्रादिमितिशेषः विधिना परितउभयतः पद्ममध्यसूत्राणांमितिशेषः अर्द्धनिशाकरान् लिखित्वा संधिसंस्थानि अर्द्धनि शाकरसंस्थानि चत्वारि सूत्राणि तत्र पातयेदितिसंबंधः मानंय-

॥१११॥द्वारशोभो पशोभाढ्यान्शिष्टाभ्यां परिकल्पयेत्॥ शास्त्रोक्तविधिना मंत्री ततः पद्मं समालिखेत् ॥ ११२ ॥ पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ॥ तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः ॥ ११३ ॥ आद्यंस्यात्कर्णिका स्थानं केशराणां द्वितीयकं ॥ तृतीयं पद्म पत्राणामुक्तांशेन दलाग्रकं ॥११४॥ बाह्यवृत्तांतरालस्यमानं यद्विधिना सुधीः॥ निधायकेसराग्रेषु परितोर्द्धनिशाकरान् ॥ ११५ ॥ लिखित्वा संधिसंस्थानि तत्र सूत्राणि पातयेत्॥ दलाग्राणां च यन्मानं तन्नावृतमालिखेत् ॥ ११६ ॥ तदंतरालतन्मध्यसूत्रस्योभयतः सुधीः ॥ आलिखेद्बाह्यहस्तेन दलाग्राणि समं ततः ॥ ११७ ॥ दलमूलेषु युगशः केसराणि प्रकल्पयेत् ॥ एतत्साधारणं प्रोक्तं पंकजं तंत्रवेदिभिः ॥ ११८॥ पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् ॥ अवशिष्टैः पदैर्विद्वान् गात्राणि परिकल्पयेत् ॥ ११९ ॥ पदानि वीथिसंस्थानि मार्जयेत्पंक्तयभेदतः ॥ दिक्षुद्वाराणि रचयेद्द्विचतुष्कोष्ठकैस्ततः॥१२०॥

द्विधिनेतिपाठेबाह्यवृत्तांतरालस्य यन्मानं ते न विधिना तेन मानेनेत्यर्थः तत्रायंविधिः यत्र वृत्तांतरालमितसूत्रंके सरवृत्तदिक्सूत्रपाते संस्थाप्य तत् दिक्सूत्रोभयतः यत्र वृत्तस्पर्शिकेसरवृत्तलग्नांतद्वयंअर्द्धचंद्रं लिखेत्। एवं चतुर्षु दिक्सूत्रेषु चतुर्षु कोणसूत्रेषु च कृते अष्टार्द्धचंद्र जायते। एतच्च केसराग्रेष्विति। बहुवचनादेवलभ्यतेयतोष्टपत्रमध्ये अष्टौकेसरावस्थानानि ततो ष्टदलसिद्धिरिति। ततोर्द्धचंद्रयोः परस्परसंपातरूपाष्टसंधिषु संमुखीनयोर्द्वयोरेकैकंसूत्रं दद्यात्। एवमष्टपत्राणामपिअष्टौ सीमारेखा उत्पद्यंते। संध्यधोवर्त्तिसीमारेखोभयतः स्थितोर्द्धनिशाकरांशोमार्जनीयः तदुक्तम्। दलप्रसिध्यै दलमध्यसंधौ निधाय सूत्रं तुदलांतरालं। दलांतरालोभयसत् भ्रमोत्थैः शशांकखंडैस्तु दलं प्रसिध्येदिति। अन्यत्रापि। उक्तचेत्रस्य दिक्सूत्रे संस्थाप्यान्यद्विमृज्यतु। प्रसार्यकोणसूत्रे द्वेवृत्तदिक्मत्स्यमानतः। निधाय केसराग्रेषु दलसंधीस्तुलांछयेत्। पातयित्वा तु सूत्राणि तत्र पत्राष्टकं लिखेत् इति॥ ११८॥ चतुर्थं वृत्तमाह। दलेति दलाग्राणां यन्मानं बहिस्त्यक्ता द्वादशांशरूपं तन्मानं चतुर्थवृत्तं कुर्यात् दलाग्रकरणप्रकारमाह। तदिति। तदंतराले कृतदलाग्रवृत्तांतराले तन्मध्यसूत्रस्ययत्र मध्यसूत्रस्योभयतः बाह्यहस्तेन समं ततो दिक्षु विदिक्ष्वपि दलाग्राणि सुधीरालिखेदिति संबंधः तत्र प्रकारः। चतुर्थवृत्तांतराले यत्र मध्यसूत्रस्योभयतः संधिसूत्रस्याग्रे सूत्रादिं निधाय मध्यवृत्ततःदलाग्रवृत्तपत्रमध्यसूत्रसंपातपर्यंतं सूत्रद्वयं दद्यात् तत्र सूत्रप्रांत एकः पत्रस्य शोंद्वितीयो दलाग्रमध्यसूत्रसंपातस्पर्शीसूत्रद्वयाग्रभागस्य परस्पराभिमुखो यथा स्यादित्येतत् अर्थं बाह्यहस्तेने त्युक्तं। ततः कर्णिकावृत्तं त्यक्त्वा बाह्यस्थत्रीणि वृत्तानि पद्मपत्रमध्यरेखास्य सर्वं सम्यक् मार्जयेत्। यथा ष्टदलं पद्मं दृष्टिमनोहरं दृश्यते केसरप्रकारमाह। दलेति। कर्णिकावृत्तस्य शीसंधिगतयत्रसीमासूत्रांतराले यत्र मध्यसूत्रस्योभयतःएकैकस्मिन्पत्रे द्वौ द्वौ केसरौ कर्णिकावृत्तलग्नमूलो केसरवृत्तलग्नाग्रो अग्रे किंचित् स्थूलौ परस्परसंमुखौ कुर्यात्। उपसंहरति। एतदिति। यत्र कुत्रापि। पंकजंकुर्यादिति धत्त्र्यति। तत्रायं प्रकारो ज्ञेयः पीठं कुर्यादिति यदुक्तं तत्प्रकारमाह पदानीति। पीठार्थं स्थापितपंक्तौ एकैकं कोणकोष्टं तदुभयपार्श्ववर्त्तिकोष्टद्वयं च एवं च त्रीणिकोष्टानि पादार्थं मार्जयेत्। अवशिष्टैश्चतुर्भिः पदैः पीठगात्राणि कल्पयेत्। वी-

पदैस्त्रिभिरथैकेन शोभा स्युर्द्वारपार्श्वयोः ॥ उपशोभास्युरेकेन त्रिभिः कोष्ठैरनंतरम् २१अव-
शिष्टैः पदैः षड्भिःकोणानां स्याच्चतुष्टयं ॥ रंजयेत्पंचभिर्वर्णैर्मंडलं तन्मनोहरं ॥ १२२ ॥
पीतं हरिद्राचूर्णं स्यात्सितं तंडुलसंभवं ॥ कुसुंभचूर्णमरुणं कृष्णदग्धं पुलाकजं ॥ १२३ ॥
बिल्वादिपत्रदं श्याममित्युक्तं पंचवर्णकं ॥ अंगुलोत्सेधविस्ताराः सीमारेखाः सिताः शुभाः
॥ १२४ ॥ कर्णिकां पीतवर्णेन केसरा ण्यरुणेन च ॥ शुभ्रवर्णेन पत्राणि तत्संधिः श्यामले-
न च ॥ १२५ ॥ रजसा रंजयेन्मंत्री यद्वा पीतैव कर्णिका ॥ केसराः पीतवर्णाक्ताः अरु-
णानि दलानि च ॥ १२६ ॥ संधयः कृष्णवर्णास्युः पीतेनाप्यसितेन वा ॥ रंजयेत्पीठग-
र्भाणि पादाः स्युररुणप्रभाः ॥ १२७॥ गात्राणि तस्य शुक्लानि वीथीषु च चतसृषु ॥ आ-

र्थं स्थापितपंक्तिद्वयस्यैकाकारेण मार्ज्जनं कार्यं ॥ १२० ॥ द्वाराण्याह । दिक्ष्विति । द्वाराद्य-
र्थं परितः स्थापितपंक्तिद्वयमध्ये चतुर्दिक्षु द्वारचतुष्टयार्थं आंतरपंक्तिस्थं मध्यसूत्रोभयपार्श्ववर्त्तिको-
ष्ठद्वयं तथा बाह्यपंक्तिस्थमध्यसूत्रपार्श्ववर्त्तिकोष्टचतुष्टयं मार्जयेत् एवं चत्वारि द्वाराणि स्युः । शो-
भा माह । पदैरिति । अंतः पंक्तिस्थानिद्वारपार्श्वद्वयगतानि त्रीणि कोष्ठानि बाह्यपंक्तिस्थद्वारपा-
र्श्वद्वयगतमेकैकं कोष्ठं मार्जयेत् । एवमष्टौ शोभा स्युः ।उपशोभा इति । अंतः पंक्तिस्थं शोभालग्न-
मेकैकं कोष्टं त्रीणि बाह्यपंक्तिकोष्टानि मार्जयेत् । एवमष्टावुपशोभा स्युः अवशिष्टैरिति । उभयउप-
शोभालग्नान्यंतः पंक्तिस्थानि त्रीणि कोष्टानिबाह्यपंक्तिस्थानि च त्रीणि कोष्टानि मार्जयेत् ।
एवं चत्वारः कोणा स्युः ॥ १२२ ॥ मंडलरंजनार्थं पंचवर्णानाह । रंजयेदिति कुसुंभेति । अन्यत्वारु-
णांतरमुक्तं । तथा दोषारजः क्षारसंयुक्तं रक्तमुच्यत इति । पुलाकजं तुच्छधान्यजं । पुलाकस्तुच्छ-
धान्यंस्यात् इति त्रिकांडो ॥ तत्प्रक्रिया यथा । तुच्छधान्यस्या र्द्रदाहावसरे दुग्धादिना सित्क्ता
ततो वस्त्रगालितं चूर्णं कुर्यात् । आदिशब्देनाम्रहरितपत्रादि । तदुक्तं प्रयोगसारे । श्यामं
श्यामकदोद्भूतं रजः प्रोक्तं स्वकर्मस्विति । श्यामशब्देनात्रहरिद्वर्णो गृह्यते । महाकपिलपंचरा
त्रे तु । अश्यावश्यकतोक्ता । पीतं क्षितिस्तु विज्ञेया शुक्लमापः प्रकीर्त्तिता । तेजोवैरक्तवर्णं स्यात्
श्यामं वायुः प्रकीर्त्तितः । आकाशं कृष्णवर्णं तु पंचमं तु महामुने । सिते धिदेवता रुद्रो रक्ते ब्रह्मा
धिदेवता । पीतेधिदेवता विष्णुः कृष्णे चैवाच्युतः स्मृतः श्यामेधिदेवता भागः समाख्यातो मया
नघ ।शुक्लं गृह्णाय दोहं तिरक्तं क्रूरगणोद्भवम् । कृष्णं सर्वासुरोत्साहं नीलं वैनायकीं तथा । पैशा-
चीं राक्षसीं चैव निघ्नंती हरितं रजः । तस्माद्धोमे भिषेके च यागे चैव विशेषतः वर्त्तयेन्मंडलं तै
स्तु देवसंतुष्टिकारकमिति । तंत्रांतरे तु विशेषः ।शक्तस्तुवांछेद्यदि सिद्धिमुग्रांतद्वर्णरत्नैरिहमंडलानि
आभूषयेन्मौक्तिकपुष्परागमाणिक्यनीलैर्हरितै श्च रत्नैरिति सीमा रेखा इति सर्वाः पूर्वं श्वेतक
मलमुक्ता रक्तकमलमाह यद्वेति विष्णुशाक्तशैवदीक्षादौ तु व्यवस्थितविकल्पो ज्ञेयः पीतैवेति
द्वितीयपक्षेपि । पक्षांतरं समाप्य प्रकृतमाह । पीतेनेति । स्वेच्छया विकल्पोयम् । पीठगर्भाणी
ति । कमल क्षेत्रकोणात् तत्र गर्भं एषामस्तीति गर्भंकोणस्थानम् । अर्शादित्वादच् । ततो नपुं
सकता तस्येति । पीठस्य कल्पलतिकालेखनमुपदेशतो ज्ञेयम् । बहिरिति सर्वबाह्यकृतसीमारे
खायाबाह्ये त्यर्थः वसिष्ठसंहितायां तु विशेषः । पूर्वे पीतं सितं देयं पश्चिमे प्युत्तरे तथा । रक्तं तु द

लिखेत्कल्पलातिका दलपुष्पफलान्विता ॥ १२८ ॥ वर्णैर्नानाविधैश्चित्रैः सर्वदृष्टिमनोहराः ॥ द्वाराणि श्वेतवर्णानि शोभारक्ताः समीरिताः ॥ १२९ ॥ उपशोभाः पीतवर्णाः कोणान्यसितभांसि च ॥ तिस्रोरेखा बहिः कुर्यात्सितरक्तासितः क्रमात् ॥ १३० ॥ मंडलं सर्वतो भद्रमेतत्साधारणं मतं ॥ चतुरस्रां भुवं भित्वा दिग्भ्यो द्वादशधा सुधीः ॥ १३१ ॥ पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतं ॥ चतुश्चत्वारिंशदाढ्यं पश्चात्षट्त्रिंशतांबुजं ॥ १३२ ॥ कोष्ठैः प्रकल्पयेत्पीठं पंक्त्यानैवात्र वीथिकाः ॥ द्वारशोभे यथा पूर्वमुपशोभा न दृश्यते ॥ १३३ ॥ अवशिष्टैः पदैः कुर्यात्पड्भिः कोणानि तंत्रवित्॥ विदध्यात्पूर्ववच्छेषमेवं वा मंडलं शुभं ॥ १३४ ॥ चतुरस्रे चतुः षष्टिपदान्यारचयेत्सुधीः ॥ पदैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः ॥ १३५ ॥ वीथीश्चतस्रः कुर्वीत मंडलांतावसानिकाः ॥ दिग्गतेषु चतुष्केषु पंकजानि समालिखेत् ॥ २३६ ॥ विदिग्गतचतुःष्कानि भित्वा षोडशधा सुधीः ॥ मार्जयेत्स्वस्तिकाकारान् श्वेतपीतारुणासितैः ॥ १३७ ॥ रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः ॥ प्राक् प्रोक्तेनैव मार्गेण शेषमन्यत्समापयेत् ॥१३८ ॥ नवनाभमिदं प्रोक्तं मंडलं सर्वसिद्धिदं ॥ पंचाब्जं मंडलं प्रोक्तमेतत्स्वास्तिकवर्जितं ॥ १३९ ॥ दीक्षायांदेवपूजार्थं मं-

त्रिणि क्रष्णं पाटलं वन्हिसंस्थितं। नैर्ऋत्ये नीलवर्णं तु वायव्ये धूम्रवर्णकं। ईशे गौरं विनिर्दिष्टं अष्ट पत्रे ष्वयंक्रम इति ॥ १३१ ॥ मंडलांतरमाह चतुरस्रमिति। अत्र मत्स्योत्पादनप्रकारासंभवात् दिग्भ्योद्वादशधेति उक्तिः तत्र चतुर्दिक्षु द्वादशधाभूमिं विभज्य तत्र सूत्राणि पातयेदिति । तत्र प्रकारः पूर्ववत् षोडशकोष्टानि कृत्वा तेष्वेकं कोष्टं समांशेन त्रेधा विभज्य तत् चिह्नद्वये प्रागग्रं सूत्रद्वयं दद्यात् एततसूत्रद्वयसंपातोत्पन्नप्रतिकोष्टमत्स्यद्वंद्वेषु द्वे द्वे उदगग्रे सूत्रे सूत्र एव मुदगग्रामष्टसूत्रीः पातयेत्। ततस्तत् सूत्रसंपातोत्पन्नकोष्टमत्स्यद्वंद्वे प्रागग्रे एवं प्रागग्रांषट्सूत्रीं दद्यात् । एवमेकशतचतुश्चत्वारिंशत्कोष्टानि जायंते । कोष्ठैरिति । पूर्ववान्वेति अंबुजमुक्तप्रकारेणैव पंक्तांपीठं पूर्ववदेव ॥ १३६ ॥ अवशिष्टैरिति । तत्रैकं पदमंतः पंक्तिसक्तं पंचकोष्टानि बाह्यपंक्तिस्थानि। एवं षड्भिरित्यर्थः शेषमिति रंजनबाह्यरेखात्रयकरणादि॥१३७॥नवनाभमंडलमाह । चतु रस्रमिति ॥ तत्र पूर्ववत्चतुः षष्टिकोष्टानि कृत्वा तत्र मध्यचतुष्के पूर्ववत्पद्मम् । ततश्चतुर्दिक्षु अष्टाष्टकोष्टिकाश्चतस्रो वोथोः कुर्यात् । एवमष्टदिक्षु चतुःकोष्टाष्टकमवशिष्यते। तत् भित्वाषोडशधेति पूर्ववदेवमार्जयेत् इति । मार्जनप्रकारस्तु षोडशधेतिकोष्ठेषु मध्यचतुष्कस्थैकैकं कोष्टं परस्परविरुद्धैकैकदिशिसंमाज्र्यतत् संलग्नबाह्यवीथ्याः कोणकोष्टादिकोष्टत्रयं तत् दिक्स्थमेवमार्जयेत् एवमुपशोभाकारवत् चत्वारि कोष्टानि मार्जितानि स्वस्तिकाकाराणि संपद्यंते । केचित्वन्यथामार्जनमाहुः मध्यचतुष्क पूर्वदिग्गतकोष्टद्वयं पूर्वदिशि संमाज्र्य तल्लग्नं बाह्यवीथिस्थं दक्षिणदिक्पर्यंतं कोष्टद्वयं मार्जयेत् । एवंदक्षिणदिग्गतकोष्टद्वयं दक्षिणदिशि संमाज्र्य तल्लग्नं बाह्यवीथिस्थं पश्चिमदिक्पर्यंतं कोष्टद्वयं पश्चिमदिशिसंमाज्र्य तल्लग्नंबाह्यवीथिसक्तं उत्तरांसकोष्टद्वयं मार्जयेत् ॥ पक्षद्वयमपिसांप्रदायिकमेव शिवादित ईशानादि वायव्यांतं शेषमिति । पद्मरंजनादिवीथिषु कल्पलतालिखनरेखात्रयं च । स्वस्तिकवर्जमिति ।स्वस्तिकचतुष्कं मार्जयेदि

त्यर्थः चतुष्टयमिति। एषां विषयउक्तः प्रयोगसारे। नवनाभमुक्ता। कलशानां नवानां तु प्रोक्तमेत त्परं पदम्। तथा प्राक् प्रस्तुते स्थाने पद्मं संकल्प्य पूर्ववत्। वीथीस्तद्दद्यसंयोज्य चतुष्टयचतुष्टये। स्वस्तिकान्यालिखेद्दिचु कोणकोष्टानि मार्जयेत्। पंचानां कलशानां च पदंस्यादेतदुत्तमम्। चतुरस्रोदितस्थाने तथापद्मं समालिखेत्। कलशस्यैकदेवस्य प्रोक्तं साधारणं पदमिति ॥१४२॥ इति शारदातिलकटीकायां राघवभट्टकृतायांतृतीयः पटलः ॥ ३ ॥ श्रीगणेशाय नमः॥ मंत्रो यः साधयेदेकं जपहोमार्चनादिभिः। क्रियाभिर्भूरिभिस्तस्य सिध्यंत्यन्येल्पसाधनात्। सम्यक्सिध्यैकमंत्रस्यानासाध्यमिह किं च न॥ बहुमंत्रवतः पुंसः काकथाहरिरेव स इत्यादिना॥ महाकपिलपंचरात्रनारायणीययोः। अन्यत्रापि। पुस्तकाल्लिखितो मंत्रो येन सुंदरिजप्यते। न तस्य जायते सिद्धिर्हानिरेव पदे पद इति तथा न्यत्रापि द्विजानामनुपेतानां स्वकर्माध्ययनादिषु॥ यथाधिकारो नास्तीह स्याच्चोपनयनादनु। तथा वा दीक्षितानां च मंत्रदेवार्चनादिषु। नाधिकारोस्त्यतः कुर्यादात्मानं शिवसंस्कृतमिति नारयणीये च यदृच्छया श्रुतं मंत्रं छलेनाप्यछलेन वा। पचेक्षितं वा गाथावत् तज्जपेद्यद्यनर्थकृत् इतितत्रैव। प्रविश्य विधिवद्दीक्षामभिषेकावसानिकाम्। श्रुत्वा तंत्रं गुरोर्लब्धं साधयेदीप्सितं मनुमिति अन्यत्रापि गुरुमुख्याः क्रियाः सर्वाभुक्तिमुक्तिफलप्रदाः तस्मात्सेव्यो गुरुर्नित्य मुक्त्यर्थं सुसमाहितैः। गुर्वनुक्ताःक्रियाः सर्वाः निष्फला स्युरतो ध्रुवमिति। अन्यत्रापि।जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः। नास्ति पापं यतस्तेषां सूतकं वायतात्मना मित्यादिना दीक्षागृहीतमंत्रफल स्योक्तत्वात्। तां विना अविधिप्राप्तेभ्य स्तेभ्यः फलं नसिध्यति इत्यवश्य वक्तव्य दीक्षां वक्तुं प्रतिजानीते।अथेति अथ मंडलकथनानंतरं मंत्राणां दीक्षां प्रवक्ष्यामि हितकाम्यया। पूर्वप्र कृतशिष्याणामिति शेषः। यद्वा वैदिकजनानामिति शेषः अयमेव सांप्रदायिकः पाठः एतेन सर्वसामान्यरूपामंत्रदीक्षोच्यते इत्युक्तम्। तदुक्तमीशानशिवेन। सा तु मंत्रशिवशक्तिविष्णुभेदाच्चतुर्विधा। सामान्यभूता खलु मां त्रिकी स्यात् दीक्षास्मृता मंत्रगणेषु तद्वत्। वर्णेषु चापिद्विजपूर्वकेषु स्याच्छैवशाक्तेष्वपि वैष्णवेष्विति। प्रयोगसारेपि। मंत्रमार्गानुसारेण साक्षात्कृत्वेष्टदेवताम्। गुरुर्योद्‌बोधयेच्छिष्यं मंत्रदीक्षेति सोच्यत इति। षडन्वयमहारत्नेपि। त्रिविधा सा भवेद्दीक्षा प्रथमा आणवी परा। शाक्तेपी शांभवी चान्या सद्योमुक्तिविधायिनी। । मंत्रार्चनासनस्थानध्यानोपायादिभिः कृता। दीक्षासात्वाणवी प्रोक्ता यथाशास्त्रोक्तरूपिणी सिद्धो स्वशक्तिमालोक्य तया केवलया शिशोः निरुपायं कृतादीक्षा शाक्तेपि परिकीर्तिता। अभिसंधिं विना चार्यशिष्ययोरुभयोरपि। देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी। अत एव ग्रंथकृत्भैरवीपटले वक्ष्यति दीक्षांप्राप्येति तत्र शक्तिदीक्षां प्राप्येत्यर्थः तथा द्वादशाक्षरे दीक्षितो विजितेंद्रिय इति। तत्र वैष्णवमार्गेण दीक्षित इत्यर्थः तथा शैवपंचाक्षरेपि दीक्षितः शैववर्त्मनेति। तत्र शक्तिविष्णुशिवदीक्षास्तत्तंत्रे ज्ञेयाः मंत्रिणामिति पाठे मंत्रिणां हितकाम्यया दीक्षां प्रवक्ष्यामि उत्तरार्द्धे सर्वमंत्रफलामिति। मंत्रशब्दस्योच्चारितत्वात् अत्र मंत्राणामिति संबध्यते इति वदंति। परं तु मुख्यमंत्रपदस्यैव संबंधाभावात्। यदपि मंत्रपदं तदपिहृत्तिर्गर्भितमिति न समंजसः पाठः आचार्या अपि। अथ प्रवक्ष्ये विधिवन्मनूनां दीक्षाविधानं जगतो हिताययेति। वायवीयसंहितायां। शांभवी चैव शाक्ती च मांत्रीचैव शिवागमे। दीक्षोपदिश्यते त्रेधा

शिवेन परमात्मना। गुरोरालोकमात्रेण स्पर्शात् संभाषणादपि सद्यः संज्ञाभवेज्जंतोर्दीक्षा सा शांभवी मता । शाक्तीज्ञानवती दीक्षा शिष्यदेहं प्रविश्यतु । गुरुणा योगमार्गेण क्रियते ज्ञान चक्षुषा । मांत्री क्रियावती दीक्षा कुंभमंडलपूर्विकेति । यतो यस्मात् कारणात् यया दीक्ष या विना सर्वे च ते मंत्रा स्व तेषां यत् फलं तन्न लभ्यते नप्राप्यते एतेनैतदुक्तं यःकस्य न मंत्रो दीक्षयै व शिष्येणगुरुभ्यो ग्राह्य अन्यस्य फलदायकत्वनियमाभावात्। किं च शिवादिदीक्षया तत्तन्मंत्राणा मेव फलदायकत्वं। अनया तु सर्वमंत्राणां। अयं च सर्वं च तन्मंत्रफलमिति फलविशेषणत्वेनापि व्याख्येयं। तेनोपदेशादिमात्रेण सकलंफलं न प्राप्यते। अनया तु सर्व्वमपीत्यर्थः। उपदेशस्यापि तंत्रांतरे विहितत्वादिति। मंत्रशब्दव्युत्पत्तिरुक्ता पिंगलामते। मननंविश्वविज्ञानं त्राणंसंसारबंध-नात्। यतः करोति संसिद्धो मंत्र इत्युच्यते तत इति। रुद्रयामले च मननात्त्राणनाच्चैव मद्रूपस्या-वबोधनात्। मंत्र इत्युच्यते सम्यक् मदधिष्ठानतः प्रिये इति अन्यत्रापि। गुप्तोपदेशतो मंत्रो मनना-त्राणनादपीति ॥ १ ॥ दीक्षाशब्दव्युत्पत्तिमाह ज्ञानमिति। दद्यात् क्षयमित्यनयोराद्यवर्णमादायेयं निरुक्तिः अप्यक्षरसाम्यान्निर्ब्रूयादिति यास्कोक्तेः। यदुक्तं। ददातियस्मादिहदिव्यभावं मायामले क-र्म च संक्षिणोति। फलं च तुर्वर्गभवं च यस्मातस्मात्तुदीक्षेत्यभिधानमस्या इति। प्रयोगसारेपि। दीयते ज्ञानसद्भावः क्षीयते पापसंचयः। तेनदीक्षेति साज्ञेया पाशच्छेदक्षयात् क्रियेति। अत्र दीक्षा-यामेव तंत्रेण नित्यपूजाया अपि वक्ष्यमाणत्वात्। देशिक इत्यनेन सूचितं स्नानात्पूर्वं नित्यकृत्यं-किं चिदुच्यते ब्राह्मे मुहूर्त्ते उत्थायस्मृत्युक्तविधानेन शौचादिकं देहशुद्धिं च विधाय रात्रिवासः परि-त्यज्य वासोंतरं परिधाय मंत्रस्नानं कृत्वा देवगृहमागत्य संमार्जनोपलेपनादिकं कृत्वा देवस्य नि-र्माल्यमपसार्यपूर्वदिनावशिष्टपत्रादिनाऽभ्यर्च्य नमस्कुर्यात्। अन्यथा दोषदर्शनात्। यदाहुः तृषा-क्रांतः पशुर्व द्धः कन्यका च रजस्वला। देवता च सनिर्माल्या हंति पुण्यं पुराकृतं इति। यदुक्तं मंत्र प्रकाशे। स्मृत्युक्तेन विधा नेन सम्यक्शौचं विधाय च। प्रक्षाल्यपादावाचम्य कृत्वान्यासं यतात्मवा न्जलिंप्रविश्यदेवतास्थानं निर्माल्यमपकृष्य च।दद्यात्पुष्पां। विद्वान् अर्घ्यपाद्ये तथैव च।मुखप्रक्षाल नं दद्यात् दद्याद्वै दंतधावनं। दद्यादाचमनीयं च दद्याद्वासोमलं शुभमिति। ततो यथोक्तासने उप विश्य गुरून् मूर्द्धि ध्यायेत् ॥ प्रातः शिरसि शुक्लेब्जे द्विनेत्रं द्विभुजं गुरुम् । प्रसन्नवदनं शांतं स्म-रेत्तन्नामपूर्वकम् । अहं देवोनचान्योस्मि ब्रह्मैवाहं न शोकभाक्। सच्चिदानंदरूपोहं नित्यमुक्तस्व-भाववानिति। गुरुदेवतात्मनामैक्यं भावयित्वाप्रार्थयेत्। त्रैलोक्यचैतन्यमया दिदेव श्रीनाथविष्णो भवदाज्ञयैव। प्रातः समुत्थाय तवप्रियार्थं संसारयात्रा मनुवर्त्तयिष्ये । जानामि धर्मं न च मे प्रवृ-त्तिर्जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदिस्थितेन यथा नि युक्तोस्मि तथा करोमि इति । अत्र श्रीनाथविष्णो इति शिवादावूहः कार्यः चंडीशशंभो इत्यादि। ततो देवतागुणनामा दिकीर्त्तयन् स्नानार्थं नद्यादौ गच्छेत् ॥ स्नानादिकोपदेशोऽनुक्रमकथनाय। यतस्त्वाशुचिवस्त्रमस्नात मनलंकारं पुरुषं देवतानाधितिष्ठंति इति । अनेन मज्जनमस्नाने अशक्तः स्नानांतरमपि कुर्यादि-त्युक्तं भवति। यदाहुः। भूत्यावागोरजोभिर्भवति विपदितत्केवलैर्वापिमंत्रैरिति। अथ च विधिव त्स्नात्वा पूर्वाह्णिकोः क्रियाः कृत्वेति मंत्रस्नानं मंत्रसंध्यां मंत्रतर्पणं च कर्त्तव्यमिति सूचितम्। अ-थ स्नानं प्रवक्ष्यामि सर्वपापहरं शुभम् । यत्कृत्वा साधकः सम्यक् सर्वकर्मार्हको भवेत् इत्यादि-

मा महाकपिलपंचरात्रे । वसिष्ठसंहितायामपि । कृत्वादौ वैदिकं स्नानं ततस्तांत्रिकमाचरेत् । इत्यादिना च मंत्रस्नानादिविधिरुक्तः तत्र मंत्रस्नानं द्विविधम् । आंतरं बाह्यं च तत्र वैष्णवस्नानमांतरमुक्तं वसिष्ठसंहितायां । अनंतादित्यसंकाशं वासुदेवं चतुर्भुजम् । शंखचक्रगदापद्ममुकुटं वनमालिनम् । तत्पादोदकजां धारां निपतंती स्वमूर्द्धनि । चिंतयेद्ब्रह्मरंध्रेण प्रविशंतीं स्वकां तनुम् । यावसंक्षालयेत्सर्वमंतर्देहगतं मलम् । तत् क्षणाद्विरजामंत्री जायते स्फटिकोपमः । इदं स्नानं वरं मंत्रात्सहस्रमधिकं स्मृतं मिति । शक्तानामाभ्यंतरं स्नानमुक्तम् । श्रीपंचमीमते । स्नानप्रकारो द्विविधो बाह्याभ्यंतरभेदतः । आंतरं स्नानमत्यंतरहस्यमपि सादरात् । कथयामि भवध्वस्त्यै चतुर्वर्गाप्तयेऽपि च । संवित्त्रयमनुस्मृत्य चरणत्रयमध्यतः । स्रवंतः सच्चिदानंद प्रवाहं भावगोचरम् । विमुक्ति साधनं पुंसां स्मरणादेव योगिनां । तेनाप्लावितमात्मानं भावयेद्भवशांतये । एवमाभ्यंतरं स्नानमिति शैवागमे आभ्यंतरं स्नानमुक्तं । मनसा मूलमंत्रेण प्राणायामपुरःसरम् । कुर्वीत मानसं स्नानं सर्वत्र विहितं च तदिति । बाह्यप्रकारस्तूच्यते स्वशाखोक्तविधिना स्नात्वा प्राणायामपुरः सरमंगे षडंगानि विन्यस्य । ब्रह्मांडोदरतीर्थानि करैः स्पृष्टानितेरवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ गंगे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिंधु कावेरि जलेस्मिन् संनिधिं कुरु । आवाहयामि त्वां देवि स्नानार्थमिह सुंदरि । एहि गंगे नमस्तुभ्यं सर्वतीर्थसमन्विते इति । मंत्रैरंकुशमुद्रयाऽऽदित्यमंडलात्तीर्थमाकृष्य आवाह्य वमित्यंभसि नियोज्य सोमसूर्याग्निमंडलानि तत्र संचिंत्य वमित्यमृतबीजेन द्वादशधाभिमंत्र्य कवचेनावगुंठ्यास्त्रेण संरक्ष्यमूलमंत्रेणैकादशवारमभिमंत्र्य आधारः सर्वरूपस्य विष्णोरतुल्यतेजसः तद्रूपाश्च ततो जाता आपस्ताः प्रणमाम्यहं इत्युपस्थाय निमजेत् । अनेनोपस्थाय तीर्थं निमज्जेत् । चिंतयन्हरिमिति । मंत्रतंत्रप्रकाशउक्तेस्तत्र मूलमंत्रं देवताकृतिं च संचिंत्योन्मज्य मूलमंत्रेण सप्तकृत्वो द्वादशकृत्वो वा शंखमुद्रया कलशमुद्रया वात्मानमभिषिच्य । सिसृक्षोर्निखिलं विश्वं मुहुः शुक्रं प्रजापते । मातरः सर्वभूतानामापोदेव्यः पुनंतु माम् । तारवारुणबीजेन पुटितत्वेन मुच्चरेत् । अलक्ष्मी मलरूपायां सर्वभूतेषु संस्थिताम् । चालयंति निजस्पर्शादापोनित्यं पुनंतु मामिति मंत्राभ्यांचाभिषिच्य । यन्मे केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतुवोनमः । संततिः चितिरास्तिक्यमापस्सन्तु वो नमः । आयुरारोग्य मैश्वर्यं विद्या भवतु वो नम इत्यभिषिंचेदिति । बाह्यं मंत्रस्नानम् । अभिषिंचेदथात्मानं वरुणैर्मूलविद्ययेति । मंत्रतंत्रप्रकाशउक्तेः । तदुक्तम् । विहितावश्यकः शौचमाचामं दंतधावनं । मुखप्रक्षालनादीनि कृत्वा स्नानं समाचरेत् । हृन्मुद्रां कुशमुद्राभ्यां तीर्थमाकृष्य मंडलात् । आवाह्यांभसि संयोज्य सोमसूर्याग्निमंडलम् । संचिंत्य मंत्री तन्मध्ये निमज्जेत्सुसमाहितः । मूलमंत्रं समावर्त्य मनसो लिख्य चाकृतिम् । उत्थायाचम्यतत् पश्चात्षडंगन्यासंयुतः । आत्मानं मूलमंत्रेण मुद्रयाशंकुशाख्यया सप्तकृत्वोभिषिच्याथ मनुना मंत्रितैर्जलैरिति । वसिष्ठसंहितायामपि । विन्यस्यांगे षडंगानि प्राणायामपुरःसरम् । श्रीसूर्यमंडलात्तीर्थमाकृष्यां कुशमुद्रया । वमित्यनेन चाप्लाव्य कवचेनावगुंठयेत् । संरक्ष्यास्त्रेण मूलेन मंत्रयेद्रससंख्यया । निमज्य तस्मिन् श्रीदेवं ध्यायेच्छक्त्या जपन्मनुम् । उन्मज्य कुंभमुद्रां चबध्वा स्नायात् द्विषट् ततः । शालग्रामशिलातोयं तुलसीगंधमिश्रितम् । कृत्वा शंखे भ्रामयन् त्रिः प्रक्षिपेन्निजमूर्द्ध-

नि। शालग्रामशिलातोयमपीत्वा यस्तु मस्तके । प्रक्षेपणं प्रकुरुते ब्रह्महा स निगद्यते। विष्णुपा दोदकात्पूर्वं विप्रपादोदकं पिबेत् । विरुद्धमाचरन्मोहात् आत्महा स निगद्यते । पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे। ससागराणि तीर्थानि पादे विप्रस्य दक्षिणे । ततः संक्षेपतो देवान् मनुष्यांस्तर्पयेत् पितॄन्। पीडयित्वांबरं चोक्तं प्रक्षाल्याचम्य यत्नतः । धारयेद्वाससी शुद्धे परिधानोत्तरीयके। अक्लिन्ने सदृशे शुक्ले आचमेत्पीठसंस्थितः। ऊर्द्ध्वपुंड्रं त्रिपुंड्रं वा कृत्वा संध्यां समाचरेत् इति । अंकुशकंभशंखमुद्रालक्षणानि यथा। दक्षमुष्टिगृहीतस्य वाममुष्टेस्तु मध्यमाम्। प्रसार्य तर्जन्याकुंचेत्सेयमंकुशमुद्रिका ॥ १ ॥ दक्षांगुष्ठे परांगुष्ठं क्षिप्त्वा हस्तद्वयेन तु। सावकाशं त्वेकमुष्टिं कुर्य्यात्कुंभस्यमुद्रिकाम् ॥ १ ॥ वामांगुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना। कृत्वोत्तानं तथा मुष्टिमंगुष्ठं तु प्रसारयेत् । वामांगुल्यस्तथा शिष्टाः संयुक्ताः सुप्रसारिताः। दक्षिणांगुष्टसंस्पृष्टा मुद्रा शंखस्य चोदिते ति। तत्र वैष्णवतिलके विशेषः । ललाटे तु गदा कार्या मूर्ध्नि चापशरं तथा । नंदकं चैवहृन्मध्ये शंखचक्रं भुजद्वये । शंखचक्रांकितोविप्रः श्मशाने म्रियते यदि। प्रयागे या गतिः प्रोक्ता सा गतिस्तस्यनारदेति । शैवैस्तूर्ध्वपुंड्र धारणानंतरमेव भस्मना त्रिपुंड्रधारणमपि कार्यं । यतोद्विजानामूर्ध्वपुंड्रस्यावश्यकत्वं तदुक्तं ब्रह्मांडपुराणे। ऊर्ध्वपुंड्रमृजुं सौम्यं ललाटे यस्य दृश्यते। स चांडालोपि शुद्धात्मा पूज्य एव न संशयः। अशुचिश्चाप्यनाचारो मनसा पापमाचरन् । शुचिरेवभवेन्नित्यमूर्ध्वपुंड्रांकितो नरः। मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुरानन। मद्भक्तो धारयेन्नित्यमूर्द्ध्वपुंड्रमतंद्रितइति । तत्र त्रिपुंड्रधारणविधानं यथा । भस्माग्निहोत्रसंभूतमानयेच्छ्रोधितं बुधः। यद्वा धरामसंस्पृष्टं सद्येनानीय गोमयम् । वामेन पात्रे संशोष्य अघोरेण विनिर्द्दहेत्। तत्पुरुषेण समुद्धृत्येशानेन विशोधयेत् । इत्थं तु संस्कृतं भस्म अग्निरित्यादिमंत्रतः । विमृजरांगानि संस्पृश्य पुनरादाय मंत्रतः । तस्माद्ब्रह्मेति यजुषा मंत्रयेद्रुद्रसंख्यया । प्रणवाद्यैश्चतुर्थीहृदंतैस्ताद्योसवेशकैः । पंचवर्णाक्षराद्यैश्च भालांसोदरहृत्सु च । त्रिपुंड्रधारणं कुर्यान्मूर्ध्नि पंचाक्षरेण च । त्रिपुंड्रं धारयन्मंत्री साक्षाच्छिव इवापरइति। मंत्रास्तु । अग्निरिति भस्म वायुरिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं हवा इदं भस्म मन एतानि चक्षूंषि । तस्माद्व्रतमेतत्पाशुपतं यत् भस्मनांगानि संस्पृशेत् । तस्माद्ब्रह्मतदेतत्पाशुपतं पशुपाशविमोक्षाय । यजुषा पंचाक्षरेणेत्यर्थः । प्रकारांतरेण वा ललाटे ब्रह्मविज्ञेयं हृदये हव्यवाहनः । नाभौ स्कंदोगले पूषा रुद्रो दक्षिणबाहुके । आदित्यो बाहुमध्ये च शशी च मणिबंधके । वामदेवो वामबाहौ बाहुमध्ये प्रभंजनः । मणिबंधेच वसवः पृष्ठदेशे हरः स्मृतः । शंभुः ककुदि संप्रोक्तः परमात्मा शिरः स्मृत इति । वायवीयसंहितायाममंत्रमेव त्रिपुंड्रधारणमुक्तम् । पुनर्न्यस्तकरो मंत्रो त्रिपुंडं भस्मना लिखेत् इति । भस्मग्रहणमपि तत्रैवोक्तम्। शिवाग्नेर्भस्मसंग्राह्यमग्निहोत्रोद्भवं तु वा। वैवाह्याग्न्युद्भवं वापि पक्वं शुचि सुगंधि च । कपिलायाः शकृच्छस्तं गृहीतं गगने पतत्। नक्लिन्नं नातिकठिनं नदुर्गंधि नचोषितम् । उपर्य्यधः परित्यज्य गृह्णीयात्पतितं यदि । पिंडीकृत्य शिवाग्नौतु तत्क्षिपेन्मूलमंत्रतः । अपक्वमतिपक्वं च संत्याज्यं भसितं सितम् । आदाय वासससालोड्य भस्माधारे विनिक्षिपेत् । भस्मसंग्रहणं कुर्याद्देवेनुद्वासिते सति । उद्वासने कृते यस्माच्चंडभस्म प्रजायत इति । ततः स्वशाखोक्तसंध्यां कृत्वा मंत्रसंध्यां कु

येत्। तद्यथा प्राणायामत्रयं कृत्वा तीर्थजलं दक्षहस्ते गृहीत्वा मूलमंत्रेण त्रिःसंजप्य तेन मूलेन त्रिराचम्य पुनस्तीर्थजलं दक्षहस्तेन सव्यहस्ते निधाय मूलेन त्रिधाभिमंत्र्य तद्गलितोदकबिंदुभिः सप्तधा मूलेनात्मानं संमार्ज्य अवशिष्टं जलं दक्षहस्ते गृहीत्वा नासिका समीपं नीत्वा इडया देहांतराकृष्य क्षालितैः पापसंचयैः कृष्णवर्णं तदुदकं दक्षनाड्या विरेचितम्। ध्यात्वा पुरकल्पितवज्रशिलायामस्त्रमंत्रेण प्रक्षिपेदिदमघमर्षणम्। पुनरंजलिना जलमादाय सूर्यमंडलस्थाय देवायार्घ्यं कल्पयामीति तत्तद्गायत्र्यामूलेन वा त्रिरर्घ्यं दत्वा सूर्यमंडलस्थं देवं ध्यायन् मूलमंत्रेणोपस्थाय तत्तन्मंत्रगायत्रीं मूलमंत्रं वाष्टाविंशतिवारं जपेत्। ततो मूलमंत्रमुच्चार्य देवं तर्पयामि इति अष्टाविंशति वारं तर्पयित्वा सूर्यमंडले देवतां संचिंत्य सूर्यायार्घ्यं दत्वा संहारमुद्रया तीर्थं विसृज्य सूर्यादिकं नमस्कृत्य देवतास्तुतिं पठन् यागमंडपं गच्छेदिति। तदुक्तं मंत्रप्रकाशे। कृत्वा संध्यां जपन् स्तोत्रं यायाद्वै यागमंदिरमिति। तथा उक्तेनैव विधानेन कृत्वा स्नानं तु तांत्रिकम्। वैदिकीं तांत्रिकीं संध्यां कृत्वा तर्पणमेवच। जपन्स्तोत्राणि नामानि यायाद्देवनिकेतनमिति। मौनीत्यनेनान्यजनसंभाषानिषेधः। संहारमुद्रालक्षणं यथा। अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकं। क्षिप्त्वांगुलीरंगुलिभिः संयोज्य परिवर्त्तयेत्। प्रोक्तासंहार मुद्रेयमर्पणे तु प्रशस्यत इति। तदुक्तंमहाकपिलपंचरात्रे। उपविश्य शुचौ देशे प्राणायामत्रयंक्रमात्। परतलेनकृत्वा-वै देहे कुर्वीत मार्जनं। नासामाश्लिष्य तोयेनततस्तेना घमर्षणं। समस्तेन समुद्दिष्टमर्घ्यं पापहरं शुभं। उपस्थानंततःकुर्यात्पश्चात्तत्वेन मंत्रवित्। स्मृत्वा ज्योतिर्मयं विष्णुं मंडलस्थं महात्मकं। जपन्पश्चात्प्रकुर्वीत मूलमंत्रेण साधकः। गयत्र्यावाथ वैष्णव्या प्रणवाद्यन्तकद्वयं। उपविश्य शुचौ देशे ततस्तर्पणमाचरेत्। विष्ण्वाद्या देवतास्तत्र पितॄंश्चमनुजानथ। तर्प्ययेत्तत्प्रयत्नेन ततस्तीर्थं क्षमापयेत्। मूलमंत्रं जपन्गच्छेत्यावत्प्राप्नोति वै गृहं। प्राप्य हस्तौ च पादौ च प्रक्षाल्याचम्य यत्नतः। यागमंडपमासाद्य विशेत् कृत्वा प्रदक्षिणमिति। अन्यत्रापि। पुनराचम्य विन्यस्य षडंगमपि पूर्ववत्। वामहस्ते जलं गृह्य गलितोदकबिंदुभिः। सप्तधा प्रोक्षणं कृत्वा मूर्ध्नि मंत्रं समुच्चरन्। अवशिष्टोदकं दक्षहस्ते संगृह्य बुद्धिमान् इडयाकृष्यदेहांतः क्षालितैः पापसंचयैः। कृष्णवर्णं तदुदकं दक्षनाड्या विरेचितं। दक्षहस्तेथ तन्मंत्री पापरूपं विचिंत्य च। पुरतोवज्रपाषाणे प्रक्षिपेदस्त्रमंत्रतः। दिनेशायोत्क्षिपेत्तिष्ठन् वारिणांजलित्रयं। अष्टोत्तरशतावृत्या गायत्रीं प्रजपेत्सुधीः। रविमंडलगं देवं प्रणिपत्यक्षमापयेत्। संहारमुद्रया तीर्थमुद्वास्याचम्य वाग्यतः। एवं संध्यां समाप्याथ न्यासकर्मसमारभेत्। शैवागमेतु। ततः शिवात्मकैर्मंत्रैः कृत्वा तीर्थं शिवात्मकं। मार्जनं संहितामंत्रैस्तत्तोयेन समाचरेत्। वामपाणिपतत्तोययोजनं सव्यपाणिना। उत्तमांगे क्रमान्मंत्रैमार्जनं समुदाहृतं। नीत्वा तदुपनासाग्रं दक्षपाणिपुटे स्थितं। बोधरूपं सितं तोयं वामयाकृष्य कुंभयेत्। तत्पापंकज्जलाभासंपिंगयारेच्यदक्षयाक्षिपेत्। वज्रशिलायां यत् तत् भवेदघमर्षणं। स्वाहांतशिवमंत्रेण कुशपुष्पाक्षतान्वितं। शिवायार्घांजलिंदत्वागायत्रीं शक्तितो जपेत्। समाचम्य विधानेन अंजलेनार्घ्यमुद्धरेत्। रक्तपुष्पादितोयेन मूलमंत्रेण भानव इति। वायवीयसंहितायामपि। आचरेद्ब्रह्मयज्ञांते कृत्वा देवादितर्पणं। मंडलस्थं महादेवंध्यात्वाभ्यर्च्य यथाविधि। दद्यादर्घ्यं ततस्तस्मै शिवायादित्यरूपिण इति शिवसंहितायांतु। व्योमव्याप्नोति यो मंत्रः पंचब्रह्माणियानि च। ये मंत्राः शिवगायत्री रुद्रं चे

डलानां चतुष्टयम्। सर्वतंत्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ॥ १४०॥ इति श्री शारदातिलके तृतीयः पटलः॥३॥अथ दीक्षांप्रवक्ष्यामि मंत्रिणां हितकाम्यया ।विना तया नलभ्येत सर्वमंत्रफलं यतः ॥ १ ॥ दिव्यं ज्ञानं यतो दद्यात्कुर्यात्पापस्य संक्षयः ॥ तस्मादिति च संप्रोक्तादेशिकैस्तंत्रवेदिभिः ॥ २ ॥ चतुर्विधा सा संदिष्टा क्रियावत्यादि भेदतः ॥ क्रियावती वर्णमयी कलात्मा वेधमय्यपि ॥ ३ ॥ ताः क्रमेणैव कथ्यंते तंत्रेऽस्मिन्संपदावहाः ॥ देशिकोविधिवत्स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः ॥ ४ ॥ पायादलंकृतो मौनी यागार्थं यागमंडपं ॥ आचम्यविधिना तत्र सामान्यार्घं विधाय च ॥ ५ ॥ द्वारमस्त्रांबुभिः

ति यथाक्रमं । सर्वपापापहा प्रोक्ताविद्येयं शिव संहिता इति । अमीमूमाघतो व्योम व्यापिने च प्रकीर्त्तयेत् । प्रणवाद्यंतरुद्धोयं व्योमव्यापी प्रकीर्त्तित इति । अयं सामान्यविधिः । मंत्रविशेषे । आचमनादौ मंत्रविशेषास्तत्तत्कल्पोक्ता अनुसंधेयाः इयं च संध्या त्रिकालं कार्या । यदगस्तिसंहितायां । रामात्मानं गुरुं ध्यात्वा रामसंध्यामथाचरेत् । सायंप्रातश्च मध्याह्न इति । शैवागमेपि । प्रातर्मध्याह्नसायाह्ने संध्यां कुर्याच्च मंत्रवित् इति ॥ ४ ॥ आचम्येति । तत्र यागमंडपबाह्यदेशे । महाकपिलपंचरात्रे तथोक्तेः । विधिनेति स्मृत्युक्तविधिना वैष्णवादिविधिना च । यदाहुः।प्राग्वक्त्रोचोदङ्मुखःसूपवीती बध्वा चूडां जानुमध्यस्थबाहुः । तोयं चेत्तनूपविष्टोथमौनी स्यादाप्रह्वस्त्वेकधाराच मिश्यन् । अदुष्टरसगंधाद्यैरकीटाफेनबुद्बुदैः । अनुष्णैरंबुभिः शुद्धैराचामेदपि वीचितैः । ह्रत्कंठास्यगताः पुनंति विबुधानाथो द्विजादीन् क्रमात् त्रिः पीताप्रृषलस्त्रियावपि सकृत् कुंडानुलोमादिकान् । आचम्य त्रिरपस्त्रिवेद पुरुषाः प्रीणंति निर्मार्ष्टि यत् द्विःसाष्टावषडंगयज्ञपुरुषाः प्रीतस्युरंगुष्ठतः।प्रीणात्यर्कमनामिकानयनयोःस्पर्शात्।तथांगुष्ठयुक्सांगुष्ठात्वथतर्जनीसममिता घ्राणद्वये मारुतं। अंगुष्ठेन कनिष्ठिका श्रवणयोराशाश्चनाभेर्वसून् आत्मानं तु हृदंसयोर्गिरमृषीन् मूर्ध्नः समस्तांगुलैरिति । यद्वा वैष्णवाचमनं तथा । केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ । द्वाभ्यामोष्ठौ तु संमृज्येत् द्वाभ्यांमृज्यान्मुखं तथा । एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः । संप्रोक्ष्यैकेन मूर्द्धानं ततः संकर्षणादिभिः । आस्यनासाक्षिकर्णांश्च नाभ्यूरः कं भुजौस्पृशेत् । एवमाचमनं कृत्वा साक्षान्नारायणोभवेत् । केशवाद्याः पुराप्रोक्ता वक्ष्ये संकर्षणादिकान् । संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः । पुरुषोत्तमाधोक्षजश्चनृसिंहश्च तथाच्युतः । जनार्द्दनोपेंद्रहरिर्विष्णवोद्वादशैवतेइति । शाक्तमाचमनं पिंगलामते । आचम्य चात्मतत्वाद्यैः प्रणवाद्यैः स्वधांतिमैः । मंत्रैस्त्रेधा ततो वक्त्रं नासाक्षिश्रोत्रनाभिहृत्। मस्तकांसानं स्पृशेदुक्तं हृदाश्चोचाभिवंदनं। आत्मविद्याशिवास्तत्वा प्रणवो वाग्भवं मतमिति । शैवागमेतुसंवोच्यत्रिःपिबेदंबुब्रह्मतीर्थेन शंवरैः। स्वधांतैरात्मतत्वाद्यैरात्मविद्याशिवात्मकं। क्रमात्तत्वत्रयंविद्यात् ह्रांह्रींहूं शंवराःक्रमातद्दति।सामान्यार्घ्यं विधायचेति बहिरेव च।सामान्यार्घ्यउक्तो मंत्रमुक्तावल्यां । पात्रमस्त्रेण संशोध्य हृन्मंत्रेणाभिपूरयेत् । तीर्थमावाह्य गंधादीन् निक्षिपेत् प्रणवेन तु। धेनुमुद्रां दर्शयेच्च सामान्यार्घ्य उदाहृत इति । अत्र प्रणवशब्देन यथायथं पंचप्रणवानामपि ग्रहणं ज्ञेयं तत्रप्रकारः । साधारं पात्रं द्वा राभिमुखं संस्थाप्य ओंफ्रः द्वारार्घ्यं साधयामि इति। कृत्वा श्लोकोक्त क्रमोनुसंधेयः ॥ ५ ॥ द्वारमिति । अस्त्रमंत्रमुच्चार्य सामान्यार्घ्यंजलेन द्वारं प्रोक्षयेत् ।

प्रोक्ष्य द्वारपूजां समाचरेत् ॥ ऊर्ध्वोदुंबरके विघ्नं महालक्ष्मीं सरस्वतीं ॥ ६ ॥ ततो दक्षिणशाखायां विघ्नं क्षेत्रे शमं ततः ॥ तयोः पार्श्वगते गंगायमुने पुष्पवारिभिः ॥ ७ ॥ देहल्यामर्चयेदस्त्रं प्रतिद्वारमिति क्रमात् ॥ अनंतरं देशिकेंद्रोदिव्यदृष्ट्यवलोकनात् ॥ ८ ॥ दिव्यानुत्सारयेद्विघ्नानस्त्राद्भि श्चांतरिक्षगान् । पार्ष्णिघातैस्त्रिभिर्भौमानिति विघ्नान्निवारयेत् ॥ ९ ॥ किंचित्स्पृशन्वामशाखां देहलीं लंघयेद्गुरुः । अंगं संकोचयन्नंतः प्रविशेद्दक्षिणांघ्रिणा ॥ १० ॥ नैर्ऋत्यां दिशि वास्त्वीशान् ब्रह्माणं चसमर्चयेत् ॥ पंचगव्यार्घतोयाभ्यां प्रोक्षयेद्यागमंडपं ॥ ११ ॥ चतुष्पथान्तं तच्छुद्धिं विदध्याद्वीक्षणादिना ॥ वीक्षणं मूलमंत्रेण शरेण प्रोक्षणं मतं ॥ १२ ॥ तेनैवताडनं दर्भैर्वर्मणाभ्युक्षणं मतं॥ चंदनागरुकर्पूरैर्धूपयेदंत-

सामान्यार्घ्यमग्रे वक्ष्यति । अत्र सर्वत्राग्रे पि अस्त्रादिप्रस्तुतदेयमंत्रास्रांते अस्त्रायफट्इति । सामान्यास्त्रंयोजयेत् एवंसर्वागमंत्रेषु केचनास्त्रादिषु फट्काराद्याः । केवलजातीराहुः । द्वारपूजामेवाह । ऊर्ध्वेति । द्वारशाखोपरितनतिर्यक्काष्ठमूर्ध्वोदुंबरकं देहल्यामुदुंबरशाखाभिधेया प्रवर्त्तते। साप्यूर्ध्वस्थदेहलीचेति । साम्यात्तत्र लक्षणयोदुंबरशब्दप्रयोगः तत्र मध्ये महालक्ष्मीर्मिति । द्वारश्रियं पुष्पवारिभिः अर्घ्यजलपुष्पैः प्रपूजयेत् इति संबंधः । तदुक्तं । ऊर्द्धद्वारश्रियंचेष्ट्वेति । अन्यत्रापि । द्वारश्रियै तद्दक्षवामयोः विघ्नं सरस्वतींचेति । तत ऊर्द्धस्थकोणद्वये दक्षिणादिविघ्नं सरस्वतीं पूजयेत्॥६॥ दक्षिणशाखायामिति । दक्षिणशाखाधः अत्र केचन दुर्गापूजामाहुः । अन्यत इति । वामशाखाधः क्षेत्रेशमिति संबंधः । तदुक्तं । कोणेषु विघ्नं दुर्गां च वाणींक्षेत्रे समर्चयेत् इति। तयोरिति । विघ्नक्षेत्रेशयोःपार्श्वगते गंगायमुने इत्यनेन पूजासूचिता सैव क्रमादित्यनेनाग्रे सूचिता । वारिसान्यार्घ्यजलं । तारसबिंदुस्वनामाद्यक्षरादिङे०तस्वनामनमोन्विता एतेषां मंत्राः द्वां द्वारश्रियै नमइत्यादिप्रयोगः तदुक्तंडामरे । ॐकारबिंदुमध्यस्थं नामधेयाद्यमक्षरं । देवतानां स्वबीजं तत् पूजायामृद्धिसिद्धिदमिति । ग्रंथकृदपिवक्ष्यति । स्वनामाद्यक्षरादिक मिति । एतच्च यत्र बीजं नोक्तं तद्विषयं ज्ञेयं । देहल्यामिति । ॐक्षः अस्त्राय फट्नमः । इत्यस्त्रपूजापुष्पवारिभिरित्येव । तदुक्तं । हकाररेफौच विसर्गवंतावस्त्रायफट्कारवचस्तदंते । उल्कांतरे सर्षपमक्षतान्वा पुष्पाणि मुंचेदथ चात्र विद्वान् इति।अन्येतु वास्तुपुरुषपूजामत्रेकंति।तदुक्तं।पूज्योवास्तुपमांस्तत्र तत्र द्वाः पीठमध्यत इति।एषां ध्यानंतत्तत्प्रकरणे ज्ञेयं।अतएव तत्र महालक्ष्मीपदप्रयोगः प्रतिद्वारमित्यनेनैतदुक्तं भवति । यदाहुः। द्वारस्यशोभनस्याथ शाखयोर्दक्षवामयोः।धात्रे गंगायै यमुनायै च पूर्वतः।ॐभद्राय सुभद्रायगोदां कृष्णां च दक्षिणे।चंडाय प्रचंडायरेवां तापीं चपश्चिमे।ॐ शंखपद्मनिधयेवाणीं वेणीं तथोत्तरइति।सोमशंभुरपि । स्वनामभिश्चतुर्थ्यंतैस्रवंतीनां द्वयंद्वयमिति।अन्यत्र तु भद्रं सुभद्रं गंगां च यमुनां द्वारशाखयोः।चतुर्थ्यंतं नमोंतं च प्राग्द्वारे संप्रपूजयेत्।नलप्रबलचिच्छक्ति मायाशक्तीतथैवच । चतुर्थ्यंतं नमोंतं च दक्षिणद्वारिपूजयेत् । चंडं प्रचंडं गौरीं च श्रियं च द्वारशाखयोः । चतुर्थ्यंतंनमोंतं च पश्चिमे संप्रपूजयेत् । जयं च विजयं चैव शंखपद्मनिधी तथा । चतुर्थ्यंतं नमोंतं च उत्तरे संप्रपूजयेत् इति । केचन वक्ष्यमाण द्वारपालपूजामपि नित्यामाहुःएतत्सर्वं नित्यपूजायामपि समानं ज्ञेयम् । यदाहुः विधेयमेतत्सर्वत्र सुस्थापितेषु विशेषत इति । दीक्षायांविशेषस्तंत्रांतरोक्तः । वैष्णवा

रं सुधीः ॥ १३ ॥ विकिरान्विकिरेत्तत्र सप्तजप्तां च्छराणुना ॥ लाजाश्चन्दनसिद्धार्थभस्म-दूर्वांकुशक्षताः ॥ १४ ॥ विकिरा इति संदिष्टाः सर्वविघ्नौघनाशनाः ॥ अस्त्रजप्तेन दर्भाणां मुष्टिना मार्जयेच्छतान् ॥ १५ ॥ ईशस्य दिशि वर्द्धन्या आसनाय प्रकल्पयेत् ॥ पुण्याहं-

दिप्रभे देन द्वारपालान्समर्चयेत् । प्रतिद्वारं पार्श्वयोस्तु द्वौ द्वावष्टावितिं क्रमात् । नंदः सुनंद खंडाख्यः प्रचंडो बलनामकः। प्रबलो भद्रनामा च सुभद्रो वैष्णवा मताः। अथ नंदि महाकालो गणेशवृषभौ पुनः । ततो भृंगिरिटि स्कंदः पार्वतीशश्च सप्तमः। चंडेश्वरोऽष्टमः शैवाद्वारपालाः क्रमादमी। वक्रतुंडैकदंष्ट्रश्च महोदरगजाननौ ॥ लंबोदराख्यविकटौ विघ्नराजश्च सप्तमः। धूम्रराजोष्टमो ज्ञेयो गाणपत्यादिति क्रमात् । ब्राह्मयाद्या मातरः प्रोक्ता शाक्तेयाद्वारपालका इति । अन्ये तु गोपाल रामचंद्रद्वारपालनन्यानाहुः । चंडप्रचंडौ प्राक्धातृविधातारौ च दक्षिणे। जयश्च विजयः पश्चात्बलः प्रबलउत्तरेइति । अयंचानंतरमित्यनेन सूचितः देशिकेंद्रइत्यनेन सदाशिवमात्मानं विचिंत्येत्युक्तम् । सदाशिवरूपस्यदृष्ट्यवलोकनम् । अद्भिरितिसामान्यार्घ्यजलैः पार्ष्णिघातैरिति । तत्रायं मंत्रः। अपसर्पंतु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया । अपक्रामंतु ये भूताः पिशाचाः सर्वतोदिशं सर्वेषामविरोधेन ब्रह्मकर्मसमारभेत् इति वसिष्ठसंहितायामपसर्पंत्वित्यादिपठित्वोक्तम् । पार्ष्णिघातत्रयं कृत्वा मंत्रेणानेन मंत्रवित् । भूतसंघान्समुत्सार्य संविशेदासने बुध इति । सोमशंभौतु । दक्षपार्ष्णे स्त्रिभिर्घातै र्भूमिष्ठानिति । इत्येवं प्रकारेण विघ्नान् त्रिविधान पोति । अंगभिति । वामांगं संकोचयन्निति । निः सरद्विघ्नावकाशदानाय । तदुक्तम् । उत्सारितानां विघ्नानां ददद्गत्नंतु वामत इति । अन्यत्रापि। निर्गच्छतां विघ्नकृतामथैषां वामांगसंकोचन चेष्टितेन। प्रदायमार्गमिति। तथान्यत्रापि । वामतः निः सार्य विघ्नसंघं चेति । अंतः स्पृशन्नित्यादित्रयं दृष्टार्थं देहल्यामपि देवस्य पूजितत्वात् । वास्त्वीशइति । तत्र क्षेत्रस्य क्षेत्रपालम् । ते च मया क्षेत्रपालमंत्रेण वक्ष्यंते। दिव्यदृष्टीत्यादिब्रह्मार्चनांतं नित्यपूजायामपि समानम् । पंचगव्येति । पंचगव्यप्रकारमेकविंशे वक्ष्यति । अर्घ्यतोयं सामानार्घ्यं जलंप्रोक्षयेदिति देवमंत्रेण । तदुक्तं नारायणीये । गव्येन प्रोक्षयेद्वीक्षास्थानं मंत्रेण शोधितमिति । चतुः पथांतमिति पूर्वेण संबध्यते । तत्र मंडपाद्बहिरातोरणस्तंभहस्तमात्राव्यवहारभूतश्चतुष्पथशब्दवाच्यावीक्षणादिभिश्चतुर्भिस्त्कुर्विं मंडपशुद्धिं कुर्यात् । अत्रापि। चतुष्पथांतमित्यन्वेति । वीक्षणमिति। मूलमंत्रेणेतिदेयमंत्रेण शरेणेत्यस्त्रमंत्रेण । प्रोक्षणाभ्युक्षणस्वरूपमग्रे वक्तव्यम् । ते च सामान्यार्घ्यजलेनैव ॥ अंतरमिति। मंडपमध्यं सुधीरित्यग्रिमेण संबध्यते । अनेन च सोमशंभूक्तोविशेषः सूचितः। तत्रेति मंडपमध्ये शराणुनेत्यस्त्रमंत्रेण। अणुशब्दोमंत्रपर्यायआगमशास्त्रे । सिद्धार्था गौरसर्षपाः भस्मगोमयभस्म । सर्वविघ्नौघनाशन इतिध्यानम् ॥ १५ ॥ अस्त्रजप्तेनेति। सप्तेनेति। सप्तेत्यनुषज्यते । मार्जयेच्चेति चकारेण विकिरानीत्यनुषज्यते । तानित्युत्तरेण संबध्यते। सोमशंभौ तु विशेषः । विकिरान्शुद्धलाजान् वा सप्तशस्त्राभिमंत्रितान् । अस्त्रांबुप्रोक्षितानेतान् कवचेनावगुंठितान् । नानाप्रहरणाकारान् विघ्नौघविनिवारकान् । दर्भाणां तालमानेन कृतां षट्त्रिंशतादलैः। सप्तजप्तां शिवास्त्रेण मुष्टिं बोधासि

वाचयित्वा तुब्राह्मणान्परितोष्य च ॥ १६ ॥ उक्तेषु मंडलेष्वेकं वेदिकायां समालिखेत् ॥ विशेन्मृद्वासने मंत्री प्राङ्मुखो वाप्युदङ्मुखः ॥ १७ ॥ बद्धपद्मासनो मौनी समाहितजितेंद्रियः ॥ स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि देशिकः ॥ १८ ॥ सुवासितां बुसंपूर्णं सव्ये-

सुत्तममिति । विकिरणमार्ज्जनेदेयमंत्रेण ईशस्येति । सनालं पात्रं वर्द्धनी तस्याः आसनायईशस्य दिग्विशेषान्या तान् विकिरान् प्रकल्पयेत् इति संबंधः ॥ १६ ॥ पुण्याहमिति । पुण्याहवाचनं पूर्वमुक्तम् । एकमिति मंडलम् । एतावदीक्षायामेव । विशेदित्युपविशेत् । मृद्वासनमिति अनुद्वेगायइति । दृष्टार्थं उद्वेगेसति तत्रैव मनो याति नतु जपपूजादौ । मंत्रीत्यनेनैतदुक्तम् । अनंतासनाय नमः । विमलासनाय नमः । पद्मासनाय नम इति जप्तान् कुशानासने दत्वा आसनं संपूज्य आसनमंत्रस्य मेरुपृष्ठ ऋषिः । कूर्मोदेवता सुतलं छंदः आसनोपवेशने विनियोगः ॐ पृथ्वि त्वया धृता लोकादेवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरुचासनमिति । आसनमंत्रेणोप विशेत् इति । तदुक्तम् । तदासनस्यर्षिमुशंतिकूर्मं छंदस्तथा स्यात्सुतलं सुधीरः । प्रोक्तातु पृथ्वी किल देवतास्य जपादिकर्मण्युपयोग युक्ता इति । तत्रासनानि तंत्रोक्तानि । कौशेयं वाथचैलं वा चार्मं तौलमथापिवा । वेत्रजं तालपत्रं वा कांबलं दार्भमासनम् । वंशाश्मदारुधरिणी तृणपल्लवनिर्मितम् । वर्ज्जयेदासनं मंत्री दारिद्र्यव्याधिदुःखदम् । धर्मार्थकाममोक्षाप्तिर्श्चैलाजिनकुशोत्तरमिति । दार्वासनेन्यत्र विशेष उक्तः । यतीनामासनं श्लक्ष्णं कूर्माकारं तु कारयेत् ॥ अन्येषां तु चतुःपादं चतुरस्रं तु कारयेत् । गोशकृन्मृन्मयं भिन्नं तथा पालाशपिप्पलं लोहविद्धं सदैवार्कं वर्जयेदासनं बुधः । दानमाचमनं होमं भोजनं देवतार्चनम् । प्रौढपादो न कुर्वीत स्वाध्यायं चैव तर्प्पणम् । आसनारूढपादस्तु जानुनोर्वाथजंघयोः । कृतावसक्थिको यस्तु प्रौढपादः स उच्यते इति । बद्धपद्मासन इति । पद्मासनमंत्ये वक्ष्यति । अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यामित्ययं भागो योगे एवोपयुक्तः सोत्र नास्ति । तंत्रांतरे पद्मासनलक्षणस्य तथैवोक्तत्वात् । सव्यं पादमुपादाय दक्षिणोपरिविन्यसेत् । तथैव दक्षिणं सव्यस्योपरिष्टान्निधापयेत् । विष्टभ्य कट्योः पार्ष्णीं तु नासाग्रन्यस्तलोचनः । पद्मासनं भवेदेतत् सर्वेषामपि पूजितमिति । पद्मासन इत्युपलक्षणम् । यदाहुः पद्मस्वस्तिकवीरादिष्वेकासनसमास्थितः । जपार्चनादिकं कुर्यादन्यथा निष्फलं भवेत् इति । मौनमित्यनेन रागप्राप्तसंभाषणनिषेधः । तदुक्तम् । सभ्यैरपि नभाषेत जपहोमार्चनादिष्विति । समाहितः सावधानश्चासौजितेंद्रियश्चेति विशेषण समासः ॥ १७ ॥ १८ ॥ पूजाद्रव्याणि पुष्पादीनि । देशिक इत्युत्तरेण संबध्यते । अनेनार्घ्यपाद्याचमनपात्राण्यपि सव्ये स्थापयेदित्युक्तम् । सुवासितमिति ॥ कर्पूरादिना मनोहरमिति । दर्पणादीनां चतुर्णामपि विशेषणं दर्पणं स्थापयेदित्यादिरन्वयः । विशेदित्यादि । एतदंतं नित्यपूजायामपि । समानं मंगलानि मंगलरूपाणि यानि अंकुरपात्राणि उक्तरीत्या उक्तबीजानि तानि दिक्षु स्थापयेत् । देशिक इत्यनेनैतदुक्तं भवति । उक्तक्रमेण पूर्वादि दिशि । एवंत्रिरात्रत्येति तेषामिदमेव प्रतिपत्तिकर्म इदं दीक्षायामेव । कृतांजलिपुटो भूत्वा वामदक्षिणपार्श्वयोः । गुरून्गणेशानं नत्वेति संबंधः । तत्र प्रयोगः । ॐ गुं गुरुभ्यो नमः । ॐ गं गणपतये नमः । तदुक्तमाचार्यैः । गुर्वाद्यास्तारादिका येंगमंत्रालोके शांतास्ते चतुर्थीन्त

कुंभं सुशोभनं ॥ प्रक्षालनाय करयोः पश्चात्पात्रं निवेशयेत् ॥ १९ ॥ घृतप्रज्वालितान्दीपान्स्थापयेत्परितः शुभान् ॥ दर्पणं चामरं छत्रं तालवृंतं मनोहरं ॥ मंगलांकुरपात्राणि-स्थापयेद्दिक्षुदेशिकः ॥ कृतांजलिपुटो भूत्वावा मदक्षिणपार्श्वयोः ॥ २० ॥ नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत् ॥ करशुद्धिं समासाद्य पश्चातालत्रयं ततः ॥ २१ ॥ ऊर्द्ध्वोर्द्ध्वमस्त्रमंत्रेण दिग्बंधमपि देशिकः ॥ तेन संजनितं तेजो रक्षां कुर्यात्समं ततः ॥ २२ ॥ सुषुम्ना वर्त्मनात्मानं परमात्मनि योजयेत् ॥ योगयुक्तेन विधिना चिन्मंत्रेण समाहितः

मांताः पूजायां स्युर्वह्निकार्येद्विठांता इति। अत्र वह्निकार्ये द्विठांताइत्युक्तेः वक्ष्यमाणाग्निजिह्वादीनामपि संग्रहः तदनंतरं लोकेशमंत्रै र्होमविधानात् । गुरूनितिबहुत्वात् गुरुपरमगुरुपरमेष्ठीगुरवो गृह्यंते । यदाहुः। तत आदित आरभ्य नमेद्गुरुपरंपरामिति । ततः इमां ऋचं पठेत्। ॐ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः यजाम देवान्यदि शक्नुवाम मा-ज्यायसः शं समावृक्षिदेवा इति ॥ २२ ॥ करशुद्धिमिति। अत्र करशुध्यादिषु त्रिषु अस्त्रमंत्रेणेति संबध्यते ॥ तत्र करशुद्धिर्नामांगुष्ठादिष्वंगुलीषु उभयकरांतः उभयकरबाह्ययोः उभयकरपार्श्वद्वये अस्त्रमंत्रस्य व्यापकत्वेन न्यासः। तदुक्तम्। व्याप्य व्याप्ययोर्हस्तयोर्मंत्रमंतर्बाह्ये पार्श्वे इति। दिग्बंधमिति । नाराचमुष्ट्युद्धृततर्जन्या दशदिशि अस्त्रमंत्रन्यासः। तदुक्तंप्रयोगसारे। आच्छाद्य दिक्षुतर्जन्यां ज्येष्टाग्रस्खलिताग्रयेति। अन्यत्रापि। आंगुष्ठमग्रं यदिमध्यमाग्रं स्पृशेत् स्युरन्यांगुलयस्त्वलग्नाः तदाभवेत्भूतनिषूदनस्य। नाराचनाम्नोस्त्रवरस्य मुद्रेति। अन्यत्र मंत्र विशेषः। प्रणवहृदोरवसाने स चतुर्थिसुदर्शनं तथास्त्रपदं। उक्ता फडं तमनुना ललयेच्च दशहरितइति। देशिकइत्यनेन सुदर्शनमंत्रेण वक्ष्यमाणाग्निप्राकारमंत्रेणापि अग्निप्राकारं कुर्यादिति सूचितं। अग्निप्राकारमुद्रोक्ता प्रयोगसारे। त्रिशूलाग्रौ करौ कृत्वा व्यत्यस्तावभितो न येत् । अस्त्रमुद्रेयमाख्याता वह्निप्राकारलक्षणा। परद्रोहोपशमनी नागाशनिभयापहेति। तदुक्तं। ततोस्त्रमंत्रेण विशोध्य पाणित्रितालदिग्बंधहुताशशालामिति। एषां फलमाह। तेनेति सुषुम्णेति। समाहितः सुषुणवर्त्मना कुंडलिन्या आत्मानं योगुरूक्ते न विधिना चिन्मंत्रेण परमात्मनि योजयेदिति संबंधः। तत्रात्मानं जीवात्मानं हृदयकमलस्थितमित्यर्थः। यदाहुः। हृदंडजे ब्रह्मकंदसंभूते ज्ञाननलालके। आराग्रमात्रो जीवस्तु चिंतनीयो मनीषिभिरिति। योगयुक्तेनविधिनेत्यस्यायमर्थः। गुरूपदिष्ट-मार्गेण हुंकारेण कुंडलिनीमुत्थाप्यतां हृदयकमलगतां विभाव्यततो जीवं मुखे गृहीत्वा सहस्रारगतां विभावयेत्। अतएव समाहित इत्युक्तिः चिन्मंत्रेण वक्ष्यमाणात्ममंत्रेण। यदाहुः। नेतव्योहं समंत्रेण द्वादशांते सितः पर इति। अन्यत्रापि। जीवं स्वाब्जेस्वनाशा स्वनिलयत उदनीय तं हं सेनेति। अन्यत्रापि। संयोज्यजीवमथदुर्गममध्यनाडीमार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे। हंसेनेति परमात्मनि सहस्रारकर्णिकागत इत्यर्थः। कारण इति। सर्वभूतानां कारणे परमात्मनि बीजभावेन व्युत्क्रमात् लीनानि तत्वानि पृथिव्यादीनि चिंतयेदित्यन्वयः। तत्र सृष्ट्यपेक्षया व्युत्क्रमः सर्वत्र कार्यस्य कारणे लयोदृष्टः। अतएव प्रथमपटले सृष्ट्युक्तिः। विनासृष्टिकार्यकारणाज्ञानात्। अतएव सर्वभूतानां कारणेइति विशेषणोक्तिः । अपिशब्दाद्वर्णानपि । यदुक्तं। संकल्प्यैवं ततो

न्यासस्थानान्वर्णांश्च संहरेत् । प्रतिलोमेन चलयोर्लकारेऽस्यहकारके। इलयवसकारेथ सलयय
षकारके। क्रमेणैवमपर्यंतं लयमुत्पाद्य यत्नतः। अकारं ब्रह्मरंध्रे च सहस्राब्जे नियोजयेत्इति। च
कारंपूर्वसमुच्चये। ततइति वायुबीजेन मकारेण वायुना तदुत्थेनेत्यर्थः अनेन पूरकउक्तः । वह्निबी
जेन रेफेण तेनैवत्यग्निबीजोत्थाग्निना सकलां स्वकल्मषरूपपापपुरुषसहितां तनं निर्दहेत् । पा-
पपुरुषध्यानं यथा। ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् । सुरापानहृदायुक्तं गुरुतल्पकटिद्वय
म् । तत्संयोगिपदद्वंद्वमंगप्रत्यंगपातकम्। उपपातकरोमाणं रक्तश्मश्रुविलोचनम् । खड्गचर्मध
रं पापमंगुष्टपरिमाणकम् । अधोमुखं कृष्णवर्णं दक्षकुक्षौ विचिंतयेत् इति अनेन कुंभक उक्तः ।
तदा दाहे जाते दोषान् दोषरूपपापपुरुषभस्मविश्लेषयेदिति रेचक उक्तः अत्र भस्सविश्लेषोपि
वायुबीजेनेति ज्ञेयम् । यदाहुराचार्यः पूर्वविधिना मुंचेदिति नागभट्टोपि सास्यादिनाथमरुताप
अशेषं तद्भस्मराशिमिति। गणेश्वरविमर्शिन्यामपि। तद्भस्मकूटमखिलं वायुवीजोत्थावायुना। वि
कीर्येति अन्यत्रापि तदुच्यद्दसुवपुरनलप्लुष्टदेहो निलेनतत्भस्मोत्क्षिपेदिति । अत्र स्थानत्रये षो
डशचतुः षष्टिद्वात्रिंशत्संख्याक्रमेणेति केचित् । अन्येद्वादशपंचाशत्। पंचविंशतिसंख्येत्यूचुः । तदु
क्तं संहितायां। मरुदग्निसुधाबीजैः पंचाशन्मातृमात्रकमिति । आचार्याश्च अथवा शोषण दहन
प्लावनभेदेन शोधिते देहे । पंचाशद्भिर्मात्राभेदैर्विधिवत् समापयेत्प्राणान्। पंचाशदात्मकोपिच
कलाप्रभेदेन तारउद्दिष्टः । तावन्मात्रापमनात्कलाश्च विधृता भवंति तत्वविदेति। केचित्तु स्थानत्र
येपि। प्रत्येकं त्रिविधं प्राणायाममिच्छंति । अमृतेनामृतबीजेन वमित्यनेन। अमृतांभसा तदुत्थेना
मृतेन। आपादतलमस्तकं देहमाप्याय्याप्लावयेदिति संबंधः स्वसृष्ठानमिति । सृष्टिक्रमेण प्रथमप
टलोक्तरीत्या तदेत्यनेन अकारादिक्षांतान् वर्णान् । अपि सृष्टिक्रमेण स्वसृष्ठानं प्रापयेदित्युक्तम् ।
तदुक्तं अमुतः सकलार्णमर्पीलपरजपालिपासरचयेच्चतपा । सकलं वपुरमृतौघवृष्टिमिति। इत्यार-
चय्य वपुरर्णशताईकेनेति। परमात्मनः सकाशात् हंसदेवस्य मनुना आत्मानं हृदयांभोजमानयेदि-
ति संबंधः हंसस्य जीवस्य देवः परमात्मा उपास्यत्वात् तेनमंत्रेणसोहमित्यनेन । यद्वा परमात्मनः
मनुना इतिसंबध्यते इति पूर्वं परमात्मनि योजयेदित्युक्तं तत इत्यर्थाल्लभ्यते । हंसदेवस्येत्यग्रिमेण
सहसंबध्यते। तदुक्तं वसिष्ठसंहितायां। सोहंमंत्रेण तामाद्यां नादांते सिद्धिभाविताम्। ध्यात्वैकं ब्रह्मरं-
ध्राच्च हृदि जीवलां न्यसेत्। इति। गणेश्वरविमर्शिन्यामपि। सोहं धिया त्वचैतन्यंसमानीय चिदं-
बरात्इति। तत्र गुरूपदेशतः प्रकारो लिख्यते। श्रीदेवपूजाधिकारसिद्धये। भूतशुध्यादि करिष्ये
इति संकल्प्य। मूलाधारादुत्थितां विद्युत्सहस्रप्रभाभासुरां बिसतंतुरूपांसुषुम्णामार्गेण हृदयकमल
मागतां कुंडलिनीं विभाव्य हृदयकमलाज्जीवं प्रदीपदलिकाकारं गृहीत्वा द्वादशांतांबुजं सहस्र-
दलगतां विभाव्य तत्र जीवात्मानं हंसमंत्रेणपरमात्मनि योजयेत्। ततः पादादिजानुपर्यंतं चतुरस्रं
पीतंपृथिवीमंडलं तत्र पादगमनक्रियागंतव्यगंधघ्राणपृथिवीब्रह्मनिवृत्तिसमानवायून् संस्मृत्यो। लीं-
ह्रांब्रह्मणे पृथिव्यधिपतये निवृत्तिकलात्मने हुं फट् स्वाहा इत्यमुं मंत्रमुच्चार्यतान्सर्वान् कुंडलिनी-
द्वारा आशुप्रविलापयामीत्यपांस्थाने संहरेत्। जान्वादिनाभिपर्यंतं शुक्लमर्धचंद्राकारं जलमंडलं तत्र
हस्तादानादातव्यरसरसना जलविष्णुप्रतिष्ठादानान्स्मृत्वा ॐह्रीं विष्णवे जलाधिपतये प्रतिष्ठाकलात्म
ने हुं फट् स्वाहा इत्यमुं मंत्रमुच्चार्य तान्सर्वान् कुंडलिद्वारा अग्नौ प्रविलापयामि इत्यग्निस्थाने

संहरेत्। नाभ्यादि हृदयपर्यंतं त्रिकोणं रक्तं वन्हिमंडलं तत्र पायुविसर्ग विसर्जनीयरूपचक्षुस्तेजो-रुद्रविद्याख्यानात् संस्मृत्य ॐ ह्रूं रुद्राय तेजोधिपतये विद्याकलात्मने हुं फट् स्वाहाइत्यमुं मंत्रमुच्चार्य तान्सर्वान् कुंडलिनीद्वारा वायौ प्रविलापयामीति वायुस्थाने संहरेत्। ततो हृदादि भ्रूपर्यंतं कृष्णं वर्त्तुलं षट्बिंदुलांछितं वायुमंडलं तत्रोपस्थानं दर्ताइषस्पर्शस्प्रष्टव्य वायुवीश्वरशांत्यपानात् संस्मृत्यऊ ह्रोंईशानाय वायुवधिपतये शांतिकलात्मने हुंफट् स्वाहा इत्यमुं मंत्रमुच्चार्य तान् सर्वान् कुंडलिनीद्वारा आकाशे प्रविलापयामि इत्याकाशस्थाने संहरेत्। ततो भ्रूमध्यात् ब्रह्मरंध्रपर्यंतं स्वच्छं वर्त्तुलमाकाशमंडलं। तत्र वाग्वदनवक्त व्यशब्दश्रोत्राकाश सदाशिवशांत्यतीताप्राणान् संस्मृत्य ॐ ह्रौं सदाशिवायाकाशाधिपतये शांत्यतीताकलात्मने हुं फट् स्वाहा। इत्यमुं मंत्रमुच्चार्य तान्सर्वानहंकारे प्रविलाप्य तमहंकारं महत्तत्वे महत्तत्वं मातृकासंज्ञकशब्दब्रह्मस्वरूपायां हृत्स्वार्थभूतायां प्रकृतौ प्रविलापयामि इति प्रविलाप्य तां यथाविधां नित्यबुद्धशुद्धस्य भावे स्वप्रकाशे सत्यज्ञानानंतानंदलक्षणे परमकारणे परब्रह्मणि प्रविलापयामीतिप्रविलापयेत्। तदुक्तं मंत्रतंत्रप्रकाशे। गंधादिघ्राणसंयुक्तां पृथिवीमप्सुसंहरेत्। रसादिजिह्वा सार्द्धं जलमग्नौ प्रलापयेत्। रूपादि चक्षुषासार्द्धमग्निं वायौ नयेत्स्वयं समीरमंबरे विद्वान्स्पर्शादि त्वक्समन्वितं। अहंकारे हरेद्व्योम स शब्दं तं महत्यपि। महच्चसर्वशक्तीनामव्यक्ते कारणे परे सच्चिदानंदरूपं यत् वैष्णवं परमं पदं। पृथिव्यादिक्रमात्सर्वं तत्र लीनं विचिंतयेत् इति। ततः शरीरस्यांतर्यामी ऋषिः। सत्यंदेवता। प्रकृतिपुरुषंछंदः। सशरीरपापपुरुषस्य शोधने विनियोगः। इत्युक्त्वा दक्षकुक्षिस्थं शुक्लरूपं पापपुरुषं विचिंत्ययमिति वायुबीजस्यकिष्किंधऋषिः। वायुर्दे वता जगतीछंदः। सशरीरपापपुरुषशोषणे विनि योग इत्युक्त्वानाभिमंडले षड्विंदुमंडलेयं विचिंतयेत्। तद्वायुबीजं च धूम्रं चंचकध्वजसंयुतं। धूधूशब्दयुतं सर्वशोषणं त्वोशदैवतमिति ध्यात्वा पूरकप्रयोगेण षोडशवारं द्वादशवारं वायुबीजमावर्त्यतद्बीजोत्थ वायुना सशरीरं पापपुरुषं शोषितं विभावयेत्। ततो रमित्याग्निबीजस्य। कश्यपषिः। अग्निर्दाहे विनियोग इत्युक्त्वा चिंतयेद्धृदयेरक्तं त्रिकोणं वन्हिमंडलं विद्याकलायुतं रुद्रदैवतं वरमीरितमिति ध्यात्वा कुंभकप्रयोगेण चतुःषष्टिवारं पंचाशद्वारं वा बी जमावर्त्तयेत्। तद्बीजोत्थाग्निना तद्भस्मीभूतं विभावयेत्। ततो रेचकेण द्वात्रिंशन्मा त्रया पंचविंशतिमात्रया वा पूर्वोक्तरूपं वायुबीजमावर्त्य पुरुषभस्म रेचयेत्॥ ततो वमिमि वरुणबीजस्य हिरण्यगर्भ ऋषिः हंसो देवता त्रिष्टुप्छंदः प्लावने विनयोगः इत्युत्क्वाव रुणमंडलं मूर्ध्नि शुभ्रं चंद्रार्द्धसंन्निभं सितपंकजयुग्मकं वंस्याद्वरुण दैवतमिति ध्यात्वा तद्बीजता मृतेन तच्छरी रभस्म पिंडीभूतं विभावयेत् ततो लमिति पृथिवी बीजस्य ब्रह्मऋषिः इंद्रोदेवता गायत्रीछंदः कविनीकरणे विनियोगः इत्युत्क्वा अधारमंडले पृथिवीमंडलं वज्रलांछितं चतुष्कोणं च कविनं पीतवर्णंद्रदैवतं लंबीजेन समायुक्तं ध्यायेन्मनसि पूर्ववत् इतिध्यात्वा तद्बीजोत्थ काठिन्येन तनुं दृढांभावये त् ततो हमित्याकाशबीजस्य ब्रह्माऋषिः आकाशो देवता पंक्तिश्छंदः व्यूहने विनियोग एत्युत्क्वा आकाशमडलंवृत्तद्वादशांते हमुज्वलं शांत्यतीता कलायुक्तं चिंत्यमाकाशदैवत मिति ध्यात्वा तदुत्थे नाकाशेनावकाशं भावयेत् तदुक्तं ग्लौमिति पृथिवीबीजे न तं च सहनतां नयेत् ॐ हंव मिति बीजेनावयवीकरणं भवेदिति॥ एवं स्वशरीरं विचिंत्य परमात्मनः सकाशात्सृष्टिक्रमेण तत्वानि स्वस्वस्थानं नयेत्। ततः परमात्मनः सकाशा-

र् जीवं सोहं मंत्रेण हृत्पद्ममानयेदिति संक्षेपः। इयं च भूतशुद्धिरावश्यकीयं च शुद्धिविहीनेन कृता पूजाभिचारवत्। विपरीतं फलं दद्यादभक्त्या चार्चनं तथा। निर्ऋतिर्विधीहीनानां फलं हंति हि कर्मणाम्। निशाचराधिपत्यं च कुरुते शंकाराद्ययेति। शैवागम उक्तेः अन्यत्रापि शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसंपर्कांद्र् तच्छुद्धिरियं मता। भूतशुद्धिं विनाकर्मजपहोमार्चनादिकम्। भवेत्तन्निष्फलं सर्वं प्रकारेणाप्यनुष्ठितमिति वक्ष्यमाणप्रतिष्ठामंत्रेण॥ एतदनंतरं स्व प्राणतिष्ठावश्यं कर्त्तव्या सम्प्रदायाद्गुरूपदेशाच्च॥ अत्र विशेषो वसिष्ठसंहिताया। हृदिहस्तं संनिधाय्य प्राणस्थापनमाचरेत्॥ ततो जन्मादिकाष्टक्रियासंस्कारसिद्धये॥ षोडषप्रणवावृत्तीः कृत्वा शक्तिं परां स्मरेत् इति अनंतरकर्त्तव्यमाह। हंसदेवस्ये ति। ततः मूलमंत्रेण यथाविधि प्राणायामत्रंय कृत्वा हंसदेवन्यासादिकं कुर्यादिति संबंधः तत्र यथाविधीत्यस्यायमर्थः यदाजपान्यासं तदा अजपायाः यदा प्रणवन्यासः तदा प्रणवेन। यदा बहिर्मातृकान्यासस्तदा मातृकया एव यदा भुवनेशीन्यासस्तदातया यदा मूलमंत्रन्यासस्तदा जप्यमानमंत्रेणेति। तत्र मातृकाप्राणायामे विशेषः यदाहुः इडया पूरयेत्प्राणं स्वरैः स्पर्शैश्च कुंभयेत्। रेचयेद्यादिकैः रूष्मैस्ततः पिंगलया पुनः। तथैव पूरणं वायोः कुंभनं रेचनं पुनः। इडयास्थात्ततो द्वाभ्यां पूरणादित्रयं पुनः। प्राणायामत्रयं कृत्वा पश्चाद्व्यापकमाचरेत्। अकाराद्यैः चांतवर्णैरापादतलमस्तकांमिति। जप्यमानमंत्रेतु मंत्रमुख्येनैकेन बीजेन प्राणायामः कार्यः सर्वेण वा। तत्रैकेनचेत् कुंभके चतुः षष्ट्या हृत्तिः अष्टाक्षरश्चेत्द्वात्रिंशद्वारं इत्यादिज्ञेयम्। यदाहुः अष्टाविंशतिवारमिष्टफलदम्। मंत्रं दशार्णं जपन्नायच्छेत्पवनं सुशंसितमिति लष्टादशार्णेनचेत्। अभ्यस्यन्नविचारमन्यमनुभिर्वर्णानुरूपं जपन् कुर्याद्रेचकपूरकर्मनिपुणः प्राणप्रयोगं नर इति। न्यासो यथाऽजपायाः आद्यं मूले परं शिरसि। तथा दक्षवामभागयोः। तत्रायं प्रयोगः हं पुरुषात्मने नमः सः प्रकृत्यात्मने नमः हंसः प्रकृतिपुरुषात्मने नम इतिव्यापकं तद्रूपेणांतर्मातृकान्यासोपि। आदिशब्दात् पूजापूर्वदिनजपनिवेदनं तद्दिनसंकल्पश्च। एतदनंतरं हंसमंत्रोत्पन्नत्वात्। प्रणवन्यासः सोपि ॐ आं विष्णवे नमः। इत्यादि मातृकास्थानेषु न्यसेत्। नामानि तु अंत्यपटले प्रणवोत्पत्तौ मया वक्ष्यंते। तज्जन्य चतुर्नवतिकलान्यासोपि सूचितः। तन्न्यासस्थानं यथा। मूलाधारत्रिकोणेषु विन्यसेदग्निजाः कलाः। हृत्पंकजदलेष्वर्ककला द्वादशसंख्यकाः। मूर्ध्नि षोडशपत्राणां मध्ये सोमभवः कलाः नादजास्तु स्वरस्थाने विंदुजाः पंचवक्त्रके। पूर्वदक्षिणसौम्येषु पश्चिमोर्ध्वमुखेषु च। हृन्नलांसेषु नाभौ च सोदरेपृष्ठवक्षसोः। उरोजयोर्न्यसेच्चापि कलामाक्षरसंभवाः। पादे गुह्ये सोरुजानू जंघास्फिक्षुउकारजा। पादहस्ततलप्राणकेषु बाह्वोश्च पादयोः। न्यसेदकारजा गुप्तकलाः पंचप्रविन्यसेत्। कास्यहृत् गुह्यपादेष्विति। उक्तवक्ष्यमाणानां सामान्यतः ऋष्यादिन्यासमाह। ऋषीति अतएव मंत्रस्येति सामान्यग्रहणम्। अत्र देवतायाः अपि प्राप्तत्वादात्मन इत्युक्तिः तेनाजपान्यासे अजपायाः प्रणवन्यासे प्रणवस्य बहिर्मातृकान्यासे मातृकायाः भुवनेशीन्यासे तस्याः मूलमंत्रन्यासे जप्यमानस्य मंत्रस्येति। मंत्रवित्। यथाक्रमादित्यनेन बीजशक्तीनामपि न्यासउक्तः सदक्षिणवामकंशयोरित्येके। गुह्यपादयोरित्यन्ये। स्तनयोरित्यपरे ऋष्यादिन्यासस्यावश्यकतोक्ता न्यत्र ऋषिश्छंदोदेवतानां विन्यासेन विना यदा जप्यते साधितोप्येषःतस्यतुच्छं फलंभवेत् इति बहिर्मातृकान्यासमाह। विदध्यादिति मातृकान्यासं वक्ष्यमाणप्रपंचयागांतमित्यर्थः मंत्रन्यासं भुवनेशी

॥ २३ ॥ कारणे सर्वभूतानांतत्वान्यपि च चिंतयेत् ॥ बीजभावेन लीनानि व्युत्क्रमात्परमा त्मनि ॥ २४ ॥ ततः संशोषयेद्देहं वायुबीजेन वायुना ॥ वन्हिबीजेन तेनैव संदहेत्सकलां तनुं ॥ २५ ॥ विश्लेषयेत्तदा दोषानमृतेनामृतांभसा ॥ आप्लाव्याप्लावयेद्देहमापादतलमस्तकं ॥ २६ ॥ आत्मलीनानि तत्वानि स्वस्थानं प्रापयेत्तदा ॥ आत्मानं त्हृदयांभोजमानयेत्परमात्मनः ॥ २७ ॥ मनुना हंसदेवस्य कुर्यान्न्यासादिकं ततः ॥ ऋषिश्छंदो देवतानिन्यसेत् मंत्रस्य मंत्रवित् ॥ २९ ॥ आत्मनो मूर्ध्नि वदने त्हृदये च यथाक्रमात् ॥ विधाय मूलमंत्रेण प्राणायामं यथाविधि ॥ ३० ॥ विदध्यान्मातृकान्यासं मंत्रन्यासमनंतरं ॥ अंगुष्ठादिष्वंगुलीषु न्यसेदंगैःसजातिभिः ३१अस्त्रं तत्तलयोर्न्यस्य कुर्याच्तालत्रयादिकं॥ दिशस्ते-

न्यासं विदध्यादिति संबंधः यदाहुःप्रणवो मातृकादेवी ह्रल्लेखेत्यमृतत्रयम्। दीपनं सर्वमंत्राणांइत्याह भगवान् शिवः इति। वायवीय संहितायां।हंसन्यासस्तु तत्राद्यः प्रणवन्यास एव च। तृतीयोमातृकान्यासो ब्रह्मन्यासस्ततः परम्। पंचमः कथ्यते सद्भिर्न्यासः पंचाक्षरः स्मृतः। एतेष्वेकमनेकं वा कुर्यात्पूजादिकर्मस्विति ॥ ३१ ॥ उक्तवक्ष्यमाणानां करन्यासमाह। अनंतरं अंगुष्ठेति अनंतरमित्यनेन मूलमंत्रेण करशुद्धिः कर्त्तव्येत्युक्तम्। अतएव लक्ष्मीपटलेवक्ष्यति। हस्तौ संशोध्य मंत्रेणेति। तदुक्तं व्याप्यश्याप्योर्हस्तयोर्मंत्रमंतर्बाह्ये पार्श्वे ताररुद्रं बुधेनेति अंगैस्तत्तत्कल्पोक्तअंगमंत्रैः तत्र ह्रम्म त्र मुच्चार्य अंगुष्ठाभ्यां नम इत्यादिप्रयोगः। तदुक्तमाचार्यैः। अंगुलीषु क्रमादंगैरंगुष्ठादिषु विन्यसेत्इति। सजातिभिरिति अग्रिमेण संबध्यते। तत्तलयोरिति तच्छब्देन प्रकृतत्वात् अंगुलयउच्यंते ताभिः करो लक्ष्यते। तलशब्देनांतर्बाह्यमपि गृह्यते। तेनास्त्रमंत्रमुच्चार्य करतलकरपृष्ठाभ्यां नम इति प्रयोगः। तदुक्तं अंगुष्ठाभ्यां नमो क्रांक्रीं तर्जनीभ्यां नमस्ततः। मध्यमाभ्यां नमो क्रूं क्रैं अनामाभ्यां नमस्ततः। ॐ क्रौ कनिष्ठिकाभ्यां च नमो क्र स्तलपृष्टयोःरिति। कुर्यात्तालत्रयेति अंगास्त्रावििति योगः। तत्स्वरूपमुक्तमन्यत्र प्रसारिततलाभ्यां तु तालत्रयमुदीरितमिति। तालत्रयादिकमित्यादिशब्दोक्तं विशदयति दिश इति। तेनैवेत्यस्त्रमंत्रेण छोटिकानाराचमुद्रा रूपा अंगुष्ठतर्जन्यग्राभ्यां स्फोटो नाराचमुद्रिकेति तल्लक्षणात् समाहित इत्यग्रिमेण संबध्यते तत्रैवं संबंधः ततः समाहितः सुधीः जातिभिः अंगमंत्रान् हृदादिषु च विन्यसेत् इति। चकारोंगुष्ठादिषु इति पूर्वोक्तसमुच्चयार्थः तत इति वक्ष्यमाण तत्तत्कल्पोक्त वत्तन्मंत्रन्यासानंतरं इत्यर्थः यदाहुः आदावृष्यादि विन्यासः करशुद्धिस्ततः परम्। अंगुलिव्यापकन्यासौ हृदादिन्यासएवच नालत्रयं च दिग्बंध इति। अन्यत्रापि करन्यासं पुराकृत्वा देहन्यासमतः परम्। अंगन्यासं न्यसेत्पश्चादेषसाधारणोविधिरिति। आचार्या अपि। षडंगन्यासांतमुक्त्वा जपारंभे मनूनां हि सामान्येयं प्रकल्पना इति :समाहितः सुधीरित्यनेन षडंगमुद्राः सूचिताः। तदुक्तमागमांतरे प्रसारिततलेनैव पाणिना हृदयं शिरः। प्रोक्ता शिखा सम्यगधोंगुष्ठेन मुष्टिना तथाविधाभ्यां पाणिभ्यां वर्मस्कंधादिनाभिगं। तर्ज्जनीमध्यमानामाः प्रोक्ताः नेत्रत्रये क्रमात्। यदा नेत्रद्वये प्रोक्तं तदातर्जनिमध्यमा इति। अत्र प्रसारिततलेनेत्यत्र अंगुष्ठवर्जमंगुलीचतुष्टये नेत्यर्थः। तदुक्तं अंगुष्ठवर्जमंगुल्यश्चतस्रो हृदि मूर्द्धनि शिखायां मुष्टिरेव स्यादंगुष्ठकृतनालिका। सर्वांगुलय आनाभेः पाण्योः कवचबंधनं इति। शक्तिखंडमुद्रा तंत्रांतरे। हृदयं

नैव बध्नीयाच्छोदिकाभिः समाहितः ॥ ३२ ॥ हृदयादिषु विन्यस्येदंगमंत्रांस्ततः सुधीः ॥ हृदयायनमः पूर्वं शिरसे वह्निवल्लभा ३३ शिखायै वषडित्युक्तं कवचाय हुमीरितं॥ नेत्रत्र-यायवौषट् स्यादस्त्राय फडिति क्रमात् ॥ ३४ ॥ षडंगमंत्रानित्युक्तान्षडंगेषु नियोजयेत् ॥ पंचांगानि मनोर्यस्य तत्र नेत्रमनुंत्यजेत् ॥ ३५ ॥ अंगहीनस्य मंत्रस्य स्वेनैवांगानि कल्पये-त्॥तत्तत्कल्पोक्तविधिनान्यासानन्यान्समाचरेत् ॥ ३६ ॥ कल्पयेदात्मनो देहे पीठं धर्मादि-भिः क्रमात् ॥ अंसोरुयुग्मयोर्विद्वान्प्रादक्षिण्येन देशिकः ॥३७॥ धर्मं ज्ञानं च वैराग्यमैश्वर्यं

मध्यमाऽनामा तर्जनीभिः स्मृतं शिरः मध्यमातर्जनीभ्यां स्यादंगुष्ठेन शिखा स्मृता। दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम्। प्रोक्तांगुलिभ्यामस्त्रंस्यादंगक्लृप्तिरियं मता इति। शैवषडंगमुद्राः। शैवागमे कृतमुष्टिपादौ हस्तौ कृत्वांगुष्ठौ हृदि न्यसेत्। हृन्मुद्रेयं समाख्याता शिरोमुद्रा प्रकीर्त्यते ललाटाग्रे समाधाय कृतमुष्टिपुटौ करौ। कुर्यादूर्ध्वप्रसक्ताग्रे तर्जन्यौ ज्येष्टबाह्यतः। करौ शिखायां संयोज्य कृतमुष्टिपुटाकृती। ज्येष्टावधः प्रसक्ताग्रौ कनिष्ठावूर्द्धतस्तथा। कुर्यात्सेयंशिखा मुद्रा सर्वोपद्रवनाशिनी। कृत्वांगुष्ठौ प्रसक्ताग्रौ तर्जन्यौ च त्रिकोणवत् मूर्ध्नि पश्चान्मुखं कृत्वानयेदुभयपार्श्वतः। करौ हृदंतमुद्रेयं कवचस्याभयप्रदा। कृत्वा नेत्रोन्मुखं हस्तं सक्तांगुष्टकनिष्टिकंप्रसार्यमध्यमां किं चित् नमयेदितरांगुलिं। नेत्रमुद्रेयमुद्दिष्टारक्षीभूतार्त्तिभंजिनी। परस्परतलद्वंद्व पुनरास्फोटयेद्भ्रमिति ॥ ३३ ॥ जातिभिरित्युक्तास्ताः काइत्यपेक्षायामाह। हृदयायेति। पूर्वंप्रथमोमंत्रः शिरसे एतदनतरंवह्निवल्लभा स्वाहेत्युच्चरेत् इत्यर्थः नेत्रत्रयायेत्युपलक्षणं। तेन द्विनेत्रेविष्णवादौ नेत्राभ्यां वौषडिति प्रयोगः षडंगमंत्रान् तत्तत्कल्पोक्तानित्येवं प्रकारेणोक्तान् जातिमंत्रांश्च मिलित्वा षडंगेषु हृदयादिषुउक्तमुद्राभिर्नियोजयेन्न्यसेदित्यर्थः। अंगेति। अंगहीनत्वंनाम नारायणाष्टाक्षरादिवन्मंत्रोद्धाराभावः स्वेनैवेत्यावृत्याक्षेदेन वा। एतेनांगानां आवश्यकत्वमुक्तं। यदाहुः। पूजाजपार्चनाहोमाः सिद्धमंत्रकृताअपि। अंगविन्यासविधुरानदास्यंति फलान्यमी इति। गौतमेन षडंगकरणप्रयोजनमप्युक्तं। इज्यमानोह्ययमात्मायं हृदयेस्याच्चिदात्मकः। क्रियतेतत्परत्वं तु हृन्मंत्रेण तमः परं। सर्वज्ञादिगुणोत्तुंगे संविद्रूपे परात्मनि। क्रियते विषयाहारः शिरोमंत्रेण धीमता। हृच्छिरोरूपचिद्धामनियता भावनादृढा। क्रियते निजदेवस्य शिखामंत्रेण सादरं। मंत्रात्मकस्य देहस्य मंत्रवाच्येन तेजसा। सर्वतो वर्म मंत्रेण क्रियते नान्यसंहृतिः। यद्ददाति परं ज्ञानं संविद्रूपे परात्मनि। हृदयादिमयं तेजः स्यादेतन्नेत्रसंज्ञकं। आध्यात्मिकादिरूपं यत् साधकस्य विनाशयेत्। अविद्याजातमस्त्रं तत्परं धामसमीरितमिति। पूर्वं तत इतिमंत्रन्यासानंतरमिति। व्याख्यातं॥३४॥३५॥ तत्र कोःमंत्रन्यासःइत्यपेक्षायामाह। तत्तदिति।न्यासान्मंत्रन्यासान्।एषामप्यावश्यकतोक्तान्यत्र। न्यासं विना जपं प्राहुरासुरं विफलं बुधाः। न्यासत्तत्तदात्मको भूत्वादेवोभूत्वा तु तं यजेत् इति।कुलप्रकाशतंत्रेपि। आगमोक्तेनमार्गेण न्यासान् नित्यं करोति यः। देवताभावमाप्नोति मंत्रसिद्धिश्च-जायते। अकृत्वा न्यासजातं यो मूढात्मा प्रभजेन्मनून्। सर्वविघ्नैश्च बाध्येत व्याघ्रैर्मृगशिशुर्यथा। यो ध्या सकवचकृतो मंत्रं जपति तं प्रिये। विघ्ना दृष्ट्वा पलायंते सिंहं दृष्ट्वा यथा गजा- इति

न्यस्यतु क्रमात् ॥ मुखपार्श्वनाभिपार्श्वेऽधर्मादींश्च प्रकल्पयेत् ॥ ३८ ॥ धर्मादयः स्मृताः पादाः पीठगात्राणिचापरे ॥ अनंतं त्हृदये पद्मम स्मिन्सूर्येंदुपावकान् ॥ ३९ ॥ एषु स्वस्वकलान्यस्येन्नामाद्यक्षरपूर्विकाः ॥ सत्वादींस्त्रीन् गुणान्यस्येत्तथैवात्र गुरूत्तमः ॥ ४० ॥ आ-

वायवीयसंहितायामपि। नाशिवः शिवमभ्यस्योनन्नशिवः शिवमर्चयेत्। नाशिवस्तु शिवं ध्यायेन्नाशिवः शिवमाप्नुयात् इति। ग्रंथकृदपि। मंत्राक्षराणि विन्यसेद्देवताभावसिद्धयइति। एतेन यत्र मंत्रे अक्षरन्यासो वाचनिको नोक्तस्तत्रापि कर्त्तव्य इत्युक्तं। आत्मयागार्थं देहे पीठकल्पनामाह। प्रकल्पयेदिति। आत्मनो देहे न्यस्तैर्धर्मादिभिः पीठंकल्पयेदित्यर्थः। अत्र क्रमादित्यनेनैतदुक्तं भवति। मंडूकाय नम इत्याधारे। कालाग्निरुद्राय नम इति स्वाधिष्ठाने। कूर्माय नम इति नाभौ। ततो हृदि आधारशक्त्यादि न्यासं कृत्वापश्चाद्धर्मादिन्यास इति यदाहुः। न्यसेदाधारशक्तिप्रकृतिकमठशेषक्ष्माक्षीरसिंधून् श्वेतद्वीपं च रत्नोज्वलमहीमंडपं कल्पवृक्षं हृदंशे इति। अंसेति। प्रादक्षिण्येन दक्षिणावर्त्तक्रमेण विद्वान् देशिक इत्यनेन दक्षिणां समारभ्य दक्षोरुपर्यंतन्यास इत्युक्तं। अयं पक्षः सांप्रदायिकः। तदुक्तमीशानशिवेन। आधाराख्यां यजेच्छक्तिं हृदये से च दक्षिणे। धर्मं ज्ञानं च सव्यांसे ऊर्मोर्वामान्ययोरपि। वैराग्यसंज्ञमैश्वर्यमिति। क्रमादित्युत्तरेण संबध्यते ॥३७॥ मुखेति। अत्रापि प्रादक्षिण्येनेत्यनुषंगः। क्रमादित्यनेनैतदुक्तं। मुखं ततो वामपार्श्वं ततो नाभिःततो दक्षिणपार्श्वं। तदुक्तं मुखे च वामपार्श्वे च नाभौ दक्षिणपार्श्वके। अधर्मं चाप्यथाज्ञानमवैराग्यमनैश्वरमिति। ईशानशिवेनाप्युक्तं। अधर्मंवदने ततः अज्ञानं सव्यपार्श्वे च नाभौ पार्श्वे चदक्षिणे अवैराग्यमनैश्वर्यमिति। यत्वाचार्यवचनं। आननाभिमूलपार्श्वद्वयैरिति। तदपि टीकाकारैराननपार्श्वनाभीमूलपार्श्वैरित्येव व्याख्यातं अधर्मादीन् तानेव नञ्पूर्वानित्यर्थः। अपर इति। अधर्मादयः अक्षिप्रित्यंतेन। पद्ममिति वक्ष्यमाणलक्षणं। एतेन पूर्वपूर्वस्योत्तरोत्तरं प्रत्याधारतोक्ता। अस्मिन् पद्मे सूर्येंदुपावकानिति योज्यं। एष्विति त्रिषु मंडलेषु नामादौ यदक्षरं कभादि यादि यादितत्पूर्विकाः। तत्रक्रमः सूर्यमंडलं विन्यस्य तत्र तत्कलाः ततः सोममंडलं तत्र तत्कलास्ततो वन्हिमंडलं तत्र तत्कलाश्च न्यसेदिति। तथैवेति पूर्वपूर्वस्योपरि। नामाद्यक्षरपूर्वकानिति। पदमेवात्राकृष्यते तेनाम्नोयदाद्यक्षरं तत्पूर्वकान्न्यसेदिति। अत्र गुरूत्तम इत्युत्तरेण संबध्यते। ततश्च सं सत्वाय नम इत्यादि प्रयोगः। तदुक्तं। आद्यक्षरैः सत्वरजस्तमांसि इति। एतच्च दिक्प्रदर्शनमात्रं पूर्वं सर्वत्र तथोक्तेः अत्रपरमात्मनि तु शब्दो व्यतिरेके। तेनायमर्थः आत्मादित्रयेष्वाद्यक्षरमेव बीजं। ज्ञानात्मनि तु मायाबीजमिति गुरूत्तमपदेनोक्तं। न्यस्येत्पीठमनुं तत इत्यनेनैतदुक्तं भवति। मां मायातत्वायनमः कं कलातत्वाय नमः पं परतत्वाय नमः हृत् पद्माग्राद्यष्टदलमूलेषु मध्ये च पीठशक्तिनवकं च न्यसेदिति। तदुक्तं। मायातत्वं कलातत्वं विद्यातत्वं परं तथा विन्यस्यपीठशक्तीश्च ततः पीठमनुं न्यसेत् इति। अन्यत्रापि। अथाष्टदिक्षु परितो मध्ये च शक्तीर्नवन्यस्त्वापीठमहामनुं च विधिवत्तत्कर्णिकामध्यगमिति ॥ ३८ ॥ ३९ ॥ तत्तद्विशेषमुद्रा स्तत्तत्कल्पोक्ताः तास्तत्तत्पटले मया वक्ष्यते। विधिवदित्यनेनैतदनंतरं मानसीं पूजां कृत्वादेवमभ्यर्थयतेत्युक्तं। तत्राभ्यर्थनमंत्रः ॐ स्वा

त्मानमंतरात्मानं परमात्मानमत्र तु ॥ ज्ञानात्मानं प्रविन्यस्य न्यसेत्पीठं मनुं ततः ॥ ४१ ॥
एवं देहमये पीठे चिंतयेदिष्टदेवतां ॥ मुद्राः प्रदर्श्य विधिवदर्घ्यस्थापनमाचरेत् ॥ ४२ ॥
शंखमस्त्रांबुना प्रोक्ष्य वा मतो वह्निमंडले ॥ साधारंस्थापयेद्विद्वान् बिंदुच्युतसुधामयैः ॥ ४३ ॥
तोयैः सुगंधिपुष्पाद्यैः पूरयेत्तं यथाविधि ॥ आधारपावकं शंखं सूर्यं तोयं सुधामयं ॥ ४४ ॥
स्मरेद्वन्ह्यर्क्कचंद्राणां कलास्तास्तेष्वनुक्रमात् । मूलमन्त्रं जपेत्स्पृष्ट्वान्यसेत्तस्यांगमंत्रवित् ४५

गतं देवदेवेश संनिधीभव केशव । गृहाण मानसीं पूजां यथार्थपरिभाविताभिति । अत्र केशवेत्यत्र तत्तद्देवतानाम्नामूहः कार्यः । तदुक्तं इति । ध्यात्वात्मानं पटुविशदधीर्नंदतनयं पुरोबुध्यै वार्घ्य प्रभृतिभिर्यजेदिति । अन्यत्रापि । ध्यात्वा देवं प्रदर्श्याथ मुद्रा अपि विधानतः । पूजां च मानसीं कुर्यात् ततोर्घ्यस्थापनं चरेत् इति । अर्घ्यस्थापनमाचरेदित्युक्तं । तद्विधिमाह । शंखमिति । वामतो वामभागे स्वाग्रत इति ज्ञेयं ॥ ४० ॥ यदुक्तं । आत्मनः पुरतः शंखमिति । वन्हिमंडले ऊर्ध्वाग्रे त्रिकोणे साधारं शंखमित्यन्वयः।विद्वानित्यनेनात्र वन्हिमंडल इत्युपलक्षणमित्युक्तं । तेन त्रिकोण षट्कोण वृत्त चतुरस्ररूपे शंखमुद्रावष्टब्धे पूजितषडंगे इति ज्ञेयं । तदुक्तं । अग्रे त्रिकोणमालिख्य षट्कोणं च ततो बहिः । वर्त्तुलं चतुरस्रं च मध्ये मायां विलिख्य च शंखमुद्रां प्रदर्श्याथ कोणदिक्ष्वंगपूजनमिति । अन्यत्रापि । त्रिकोण षट्कोण वृत्त चतुरस्राणि कारयेत् । शंखमुद्रामवष्टभ्य षडंगानि प्रपूजयेदिति । बिंदुर्भ्रूमध्यं केचन ब्रह्मरंध्रमिति वदंति । तत्रचंद्रमंडलस्य सत्वादिति । बिंदुस्रुतसुधामयैरिति जलध्यानं । यत्सौमशंभौ । बिंदुप्रसूतपीयूष रूपतोयाक्षतादिना । हृदापूर्वषडंगेन पूजयित्वा भिमंत्रयेदिति पूरयेत्तं यथाविधीत्यनेनैतदुक्तं । बिंदुं तां प्रतिलोममातृकां विलोममूलमंत्रं च जपन्निति । तदुक्तं । पूरयेद्विमलपाथसा सुधीरक्षरैः प्रतिगतैः शिरो तर्कैरिति । आधारमिति आधारं पावकमंडलत्वेन शंखं सूर्यमंडलत्वेन तोयमिंदुमंडलत्वेन तेषु मंडलेषु तत्तत्कला अपि स्मरेत् केचन पूजयंत्यपि तत्रप्रयोगः स्ववामाग्रतः चतुरस्र वृत्त षट्कोण त्रिकोण मंडलं कृत्वा शंखमुद्रयावष्टभ्य पुष्पाक्षतैः पूजाक्रमेण षडंगानि संपूज्य आधारमस्त्रमंत्रेण प्रक्षाल्य मं अग्निमंडलाय दशकलात्मने अमुकार्घ्यपात्रासनाय नम इति आधारं प्रतिष्ठाप्य पूर्वाद्यग्नेर्दशकलाः पूजयेत् । ततः शंखमंत्रेण शंखं प्रक्षाल्य अं सूर्यमंडलाय द्वादशकलात्मने अमुकार्घ्यपात्राय नम इति पात्रमाधारेनिधाय प्रादक्षिण्येन द्वादशस्थानेषु सूर्यस्य द्वादशकलाः संपूज्य विलोममातृकां विलोमं मूलमंत्रं च जपन् शुद्धोदकेन शंखमापूर्य ऊं सोममंडलाय षोडशकलात्मने अमुकार्घ्यामृताय नम इति संपूज्य सोमस्य षोडशकलास्तत्र प्रादक्षिण्येन पूजयेदिति । ततस्त्वत्रगंगेचेति मंत्रेण सूर्यमंडलादंकुशमुद्रया तीर्थमावाह्य स्वहृत्कमलाद्देवमप्यावाहयेत् । देशिको देवताधियेति वक्ष्यमाणत्वात् । तदुक्तम् । तत्र तीर्थमनुनाभिवाहयेत् तीर्थमुष्णरुचि मंडलात्पुनः । स्वीयहृत्कमलतोहरिं तथेति । अंकुशमुद्रालक्षणं स्नानप्रसंगे उक्तम् । यद्वेयमंकुशमुद्रा । यदाहुः ऋजु मध्या मध्यपर्वाक्रांता तर्जन्यधोमुखो । विज्ञेयांकुशमुद्रेयं कुंचिता मध्य पर्वत इति । स्पृष्ट्वेति । अप इति संबध्यते । न्यसेदिति । अस्विति संबंधः तस्येति । मूलमंत्रस्य अंगवदित्यनेन वक्ष्यमाणदिक्क्रमपूजनेनैव न्यास इत्युक्तम् । अभिसंपूज्येति अप इति संबंधः हस्ताभ्यां छादयत्र देशिक इत्यनेन मत्स्यमुद्रयेत्युक्त

हृन्मंत्रेणाभिसंपूज्य हस्ताभ्यां छादयन्नपः। जपेद्विर्यां यथान्यायं देशिको देवताधिया ४६
अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुंठ्य च। धेनुमुद्रांसमासाद्य रोधयेन्मत्स्यमुद्रया ॥ ४७ ॥
दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत् ॥ किंचिदर्घांबु संगृह्य प्रोक्षण्यंभसि योजयेत् ४८
अर्घस्योत्तरतः कार्यं पाद्यं सा चमनीयकं ॥ आत्मानं यागवस्तूनि मण्डलं प्रोक्षयेद्गुरुः ४९
प्रोक्षणीपात्रतोयेन मनुनान्यदपि क्रमात् ॥ न्यासक्रमेण देहे स्वे धर्मादीन्पूजयेत्ततः ॥ ५० ॥
पाद्यार्घैः पीठमन्वंतं तस्मिंश्च परदेवतां ॥ पंचकृत्वः पुनः कुर्यात्पुष्पांजलिमनन्यधीः ५१

म्। तल्लक्षणंतु। अधोमुखावुभौ हस्तौ स्वस्योपरि च संस्थितौ। पार्श्वद्वयगतांगुष्ठौ मत्स्यमुद्रेयमीरि-
तेति। अत्र मूलमंत्रविद्याशब्दाभ्यामेवमादिविधौ पुंस्त्रीदेवताकत्वमविवक्षितमित्युक्तम्। अन्य
थैकग्रहणे इतरग्रहणं न स्यात्। यथान्यायमिति सप्तकृत्वोष्टकृत्वो वा। इयं संख्या पूर्वमपि ज्ञेया।
तदुक्तम्। संस्पृशन् जपतु मंत्रमष्टश इति। संरक्षेत्रति तदिति संबंधः। तच्च संरक्षणं छोटिकाभि
रिति ज्ञेयम्। अवगुंठ्येत्यत्रापि तदिति संबध्यते। तच्चावगुंठनमुद्रया समापाद्येत्यमृतबीजेन स्वमुद्र
येति संन्निरोधिन्या। अत्रावगुंठनधेनुसंन्निरोधमुद्रास्त्रयोविंशे वक्ष्यंते। ततः शंखोपरि शंखं मुसल
चक्र महामुद्रा योनिमुद्राः प्रदर्शयेत्। यदाहुः चिन्मयं चिंतयेत्तीर्थं मानीयांकुशमुद्रया। ब्रह्मांडो
दरतीर्थेभ्यो धेनुमुद्रां प्रदर्श्य च। शंखमुद्रां चक्रमुद्रां मुसलाख्यां च दर्शयेत्। परमीकृत्य यत्नेन
गुह्याख्यं चैव दर्शयेत् इति। कृष्णमंत्रे गालिनीप्रदर्शनं राममंत्रे गरुडमुद्राप्रदर्शनमित्यादि विशे
षोऽनुसंधेयः। शंखमुद्रालक्षणमुक्तं प्राक्। अन्यासां लक्षणानि तु। मुष्टिं कृत्वा तु हस्ताभ्यां वाम
स्योपरि दक्षिणम्। कुर्यान्मुसलमुद्रेयं सर्वविघ्नप्रणाशिनीति मिथः कनिष्ठिके बध्वा तर्जनीभ्याम
नामिके अनामिकोर्ध्वगाश्लिष्टदीर्घमध्यमयोरधः अंगुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरितेति। विप
र्यस्ते तले कृत्वा वामदक्षिणहस्तयोः अंगुष्ठौ ग्रथयेच्चैव कनिष्ठानामिकांतरे। चक्रमुद्रेयमुद्दिष्टा स
र्वसिद्धिकरी शुभेति। महामुद्रालक्षणं त्रयोविंशे वक्ष्यते। कनिष्ठांगुष्ठकौ सक्तौ करोयोरितरेतरम्
। तर्जनीमध्यमानामाः संहताः भुग्नसज्जिताः मुद्रैषा गालिनी प्रोक्ता शंखस्योपरि चालितेति।
हस्तावभिमुखौ कृत्वा रचयित्वा कनिष्ठिके। मिथस्तर्ज्जनिके श्लिष्टे श्लिष्टावंगुष्ठकौ तथा। मध्यमा
नामिके द्वे तु द्वौपक्षाविति कुंचयेत्। एषा गरुडमुद्रास्यात् अशेषविषनाशिनी इति। दक्षिणइति
पात्रं ताम्रादिजं यदाहुः रत्नं रौक्मं रौप्यमब्जं ताम्रं मृद्दारुपैत्तलं। पात्रं पालाशमुत्कृष्टान्यम
वाप्यच्युतार्चने। सर्वोत्कृष्टौ ताम्रशंखावर्घायाज्वोतिशस्यत इति। अर्घ्यस्येत्यर्घ्यपात्रस्य शक्तौ स-
ति। एतानि भिन्नानि भिन्नानि। अशक्तौ एकेनैव सर्वं यदाहुः। एकस्मिन्नथवा पात्रे पाद्यार्घ्या
दीनि कल्पयेत् इति। मनुनेति मूलमंत्रेण प्रोक्षयेदिति संबंधः इदंच सामान्यविधानं अन्यत्तु
मंत्रविशेषे प्रोक्षणमंत्र उक्तस्तत्र तेनैव प्रोक्षणमिति ज्ञेयम्। गुरुरित्यनेनेदं योक्षणं त्रिरित्युक्तं भव-
ति। यदाहुः प्रोक्षयेन्निजतनुं ततो मुना त्रिः कणैरमनुनाखिलं तथा। साधनं कुसुमचंदना
दिकमिति। अन्यान्यपि यागवस्तूनि पूजाद्रव्याणि क्रमात्प्रोक्षयेदिति संबंधः। अंतरयागमाह। न्या
सेति तदुक्तं द्विविधं स्याद्बुधमानो बाह्यांतरमुपासनम्। न्यासिनां चांतरं प्रोक्तमन्येषामुभयं तथे

उत्तमांगं त्वदाधारपादसर्वांगके क्रमात् ॥ विना निवेद्यं गंधाद्यैरुपचारैः समर्चयेत् ॥५२॥
गुरूपदिष्टविधिना शेषमन्यत्समापयेत् ॥ सर्वमेतत् प्रयुंजीत प्रोक्षणीस्थेन वारिणा ॥५३॥
विसृज्य तोयं प्रोक्षण्याः पूरयेत्तां यथापुरा ॥ ततस्तन्मंडलं मंत्री गंधाद्यैः साधुपूजयेत् ५४
शालिभिः कर्णिका मध्यमापूर्योपरितंडुलैः ॥ अलंकृत्य पुनस्तेषु दर्भानास्तीर्य तंत्रवित् ५५
कूर्चमक्षतसंयुक्तं न्यसेत्तेषामथापरि ॥ आधारशक्तिमारभ्य पीठमंत्रमयं यजेत् ॥५६॥ अथः

ति । वायवीयसंहितायामपि । आदावभ्यंतरं यागमग्निकार्यावसानकम् । विधाय मानवः पश्चा द्वहिर्यागं समाचरेत् इति । तथा संहितायां शंभुवाक्यमपि । न गृही ध्यानमात्रेण परत्रेह च मंगल म् । प्राप्नोति चंद्रवदने दानहोमादिभिर्विना । गृहस्थो यदि दानादि दद्याञ्जुहुयादपि । पूजये द्विधिनानैवकः कुर्यादेतदन्वहम् । न ब्रह्मचारिणो दातुमधिकारोस्ति भामिनि । गुरुभ्योपि च स र्वेभ्यः को वा दास्यत्यपेक्षितं नारण्यवासिनां शक्तिर्नते संति कलौ युगे । परिव्राट् ध्यानमात्रेण दा नहोमादिभिर्विना । सर्वदुःखपिशाचेभ्यो मुक्तो भवति नान्यथा । परिव्राडविरक्तश्च विरक्तश्च गृ- ही तथा । कुंभीपाके नसज्जंते द्वावुभौ कमलानने । पुण्यास्त्रियो गृहस्थाश्च मंगलैर्मंगलार्थिनः । पूजोपकरणैः कुर्युर्द्द्युर्दानानिचार्हणां । वानप्रस्थाश्चयतयो यद्येवं कुर्युरन्वहं । संसारान्ननिवर्त्तंते विध्यतिक्रमदोषतः । आरूढयतितायेते भवेयुर्दुःखभाजनमिति । अत्र न्यासक्रमेणेत्यनेनैतदुक्तं भवति । मंडूककालाग्निरुद्रकूर्मान् । आधारस्वाधिष्ठाननाभिदेशे ततः आधारशक्त्यादि पश्चाद्धर्मा दीनष्टौ यथास्थानं संपूज्य पुनर्हृदि शेषादिपरतत्वांता पूजा । तदुक्तं रामपूर्वतापिनीये । मायावि- द्येकलापारतत्वे संपूजयेद्विमलादीश्च शक्तीरिति । पुष्पस्याद्यं गंधवद्बहुवचनमाद्यर्थंतेन गंधाद्यैरित्य र्थः एतादृशयुक्तिस्तु आदिशब्देन पुष्पमात्रग्रहणार्था यद्वा पुष्पाणि च । आद्योगंधश्च पुष्पाद्यैः उप- चारेषु गंधानंतरं पुष्पस्योद्दिष्टत्वात् । पीठमन्वंतमिति । पीठशक्तिपीठमंत्रपर्यंतमित्यर्थः तस्मिन्नि- ति । एवंभूते देहमये पीठे परदेवतां गंधाद्यै रुपचारैस्समर्चयेदिति अग्रिमेण संबंधः आद्येन पुष्पं तत्र विशेषमाह । पंचेति । अनन्यधीरित्यनेन त्रिंशोवेत्युक्तं । तदुक्तमाचार्यैः । कुर्यात्पुष्पांजलिम- पिनिजदेहे पंचशोथवापि त्रिंश इति । विनानिवेद्यमिति । अस्यायमभिप्रायः आसनादिदीपांता- नुपचारान् प्रदर्श्य बाह्ये नैवेद्यं न देयं ततो गुरूपदिष्टविधिना कुंडलिनीमुत्थाप्यद्वादशांतं नीत्वा त- त्रत्य शिवेन समागमय्य तदुत्थामृतधारया देवं प्रीणयेदिति गुरूपदिष्टेति अन्यच्छेषं मानसौ धूप- दीपौ मंत्रजपः जपनिवेदनं ब्रह्मार्पणं क्षमापनादि विसर्जनवर्जं यदाहुः । ध्यात्वा यजेच्चंदनाद्यैर्मा- नसैर्धूपदीपकैः भोजनावसरे किंचित् जपं कृत्वानिवेदयेत् इति । अशक्तंप्रत्याह । सर्वमिति । नत्वा गुरूनित्यादि एतदंतं नित्यपूजाया अपि समानं । विशेषस्त्वयं नित्यपूजायां एतच्छंखं जलमेव व- ह्निन्यांक्षिपेत् इति । ततः प्राणायामत्रयं कृत्वा अष्टोत्तरसहस्रं नित्यजपं कृत्वापुनः प्राणायामत्रयं कुर्यात् । किंचनक्षिपेत्तु वर्द्धनीजले इति । पुरतोजपस्य परतोपि विहितमप्येतत्रयं बुधैरिति चोक्तं । तदुक्तं मंत्रप्रकाशे । अष्टोत्तरसहस्रं तु कृत्वांतर्यागमादरात् । जपेत् प्रतिदिनं यत्तु नित्य एव जपः स्मृतः । अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः । द्वादश्यां पूर्णिमायां च तेषु नैमित्तिको ज-

कूर्मेशिलारूढां शरच्चंद्रनिभप्रभां ॥ आधारशक्तिं प्रयजेत्पंकजद्वयधारिणीं ॥ ५७ ॥ मूर्द्धि तस्यासमारूढं कूर्मं नीलाभमर्चयेत् ॥ ऊर्ध्वं ब्रह्मशिलासीनमनंतं कुंदसन्निभं ॥ ५८ ॥ यजेच्चक्रधरं मूर्न्द्धि धारयंतं वसुंधरां ॥ तमालश्यामलां तत्र नीलेंदीवरधारिणीं ॥ ५९ ॥ अभ्यर्च्चयेद्वसुमतीं स्फुरत्सागरमेखलां ॥ तस्यां रत्नमयं द्वीपं तस्मिंश्चमणिमंडपं ६० यजेत्कल्पतरूंस्तस्मिन्साधकाभीष्टसिद्धिदान् ॥ अधस्तात्पूजयेत्तेषां वेदिकां मंडपोज्ज्वलां ६१ प-

पः। नित्याद्विगुणतः सोथ पूजाचैवहरेस्तथेति। आंतरं या गमुत्का बहिर्यागमाह ॥ तत इति। ततस्तदनंतरं मंत्री साधु शोभनत्वेन सर्वतोभद्रत्वमुक्तं मंडलवेदिमध्यलिखितं सर्वतोभद्रमंडलं गंधाद्यैः पूजयेदिति संबंधः आदिशब्देनपुष्पं। मंत्रीत्यनेन श्रीसर्वतोभद्रमंडलाय नम इति पूजामंत्रः सूचित इति ज्ञेयं। शालिभिरिति। उपरिशाल्युपरितंडुलैरलंकृत्य तंडुलान् तत्र निक्षिप्येत्यर्थः पुनरनंतरं तेषु तंडुलेषु। तत् प्रमाणमन्यत्रोक्तं। शालीस्तुकर्णियां च निक्षिप्याढकसंमितान्। तंडुलांश्च तदष्टांशान् कूर्चंचोपरि विन्यसेत् इति। आढकलक्षणंतु कुडवस्तु पलं स्यात् प्रस्थः कुडवैश्चतुर्भिस्यात्। प्रस्थैश्चतुर्भिराढकः इति। तदष्टांशानिति। कुडवद्वयमितान्। सप्तविंशतिसाग्रदर्भपत्रमयं वेण्याकारेण ग्रथितं विष्टरापरपर्यायं कूर्चं। तदुक्तंडामरे। सप्तविंशतिदर्भाणां वेण्यग्रे ग्रंथिभूषिता विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्त्तितमिति। अत्र आत्मादि तत्त्वत्रयेण देवं संपूज्य बाह्यपूजामारभेतेति संप्रदायविदः। आधारशक्तीति अत्र प्रथमं गुरुगणपतिपूजनं कुर्यात्। तदुक्तं वायव्यादीशपर्यंतमर्चापीठस्योदगौरवीपंक्तिरादौ। पूज्योन्यत्राप्यांविकेयः करार्ब्जैः पाशं दंत शृण्यभीतीर्दधान इति। अन्यत्रापि। पीठस्योत्तरे भागे गुरुपंक्तिं पूजये च मंत्रवित्। यावन्निरीशकोणवायोःकोणं समारभ्य। अथ गुरुपरमगुरू द्वौ परमेष्टीगुरूंस्तथा भ्यर्च्य परमाचार्यं गुरूंस्तथाभ्यर्च्य परमाचार्यगुरुंचादिसिद्धिगुरूमथार्चयेत्। स्वगुरुमिति। अत्रपरमाचार्यगुर्वनंतरंप रापरगुरुः परमसिद्धगुरुरपिज्ञेयः। तेषां ध्यानं मंत्रतंत्रप्रकाशे उक्तं। श्वेतांवरधरा गौरा गुरवः पुस्तकान्विताः। व्याख्यानमुद्रया युक्ता ध्यायंतो वा हरिं निजं। ध्यातव्याः पूजनादौ च तध्यानात् ज्ञानवान् भवेत् इति। शाक्तादौतु विशेषस्तंत्रांतरे। ते रक्तमाल्यांवरगंधभूषिताः सालंकृताःपंकजविष्टरस्थाः। सर्वेच सालंवन योगनिष्टाः प्राप्ताखिलैश्वर्यगुणाष्टकार्थाइति। तत्र श्रीगुरुभ्यो नम इत्यादिप्रयोगः देवं गुरुस्थानं चेत्राधिदेवताः सिद्धाधिवासांश्चश्रीपूर्वं समुदीरयेत् इत्युक्तेः अर्चयेदित्युक्तं तदेवाह। अध इति। अनेनैतदुक्तं भवति। कर्णिकायां महायं रक्तमंडूकं मंडूकाय नम इति यजेत्। तदूर्ध्वं दशभुजं पंचवक्त्रं रक्तकृष्णदक्षिणवामपार्श्वं कालाग्निरुद्रं कालाग्निरुद्राय नम इति तदुपरि महाकायं कूर्मं कूर्माय नम इति। तदुक्तं शौनककल्पे। मंडूकादिपृथिव्यादिकर्णिकायां यजेत् क्रमादिति। नारसिंहकल्पेपि। पद्मे ष्टपत्रे मंडूकं परतत्वांतमर्चयेत् इति। कूर्मशिलेति कूर्माकाराशिलाकूर्मशिला तामारूढां पूर्वं। पूजितः कूर्म एव कूर्मशिलेतिज्ञेयं। वक्ष्यमाणस्तु कूर्मस्तद्भिन्न एव। तदुक्तं तापिनीये। शक्तिं साधाराख्यकां कूर्मनागाविति। शरच्चंद्रस्येत्यस्यार्थः पूर्ववत् ज्ञेयः। ब्रह्मशिलेति। मूलप्रतिमाधस्तनशिलायाःसंज्ञा। तदुक्तंवायवीयसंहितायां। शोधितांच

श्चादभ्यर्चयेतस्यां पीठं धर्मादिभिः पुनः ॥ रक्तश्यामहरिद्रेंद्रनीलाभान्याद्रूपिणः ६२ वृषकेसरिभूतेभरूपान् धर्मादिकान्यजेत् ॥ गात्रेषुपूजयेत्तांस्तु नञ्पूर्वाननुक्तलक्षणान् ६३ आग्नेयादिषु कोणेषु दिक्षु चाथांबुजं यजेत् ॥ आनंदकंदं प्रथमं संविन्नालमनंतरं ६४ सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनंतरं ॥ मंत्री प्रकृतिपत्राणि विकारमयकेसरान् ६५ पंचाशद्बीजवर्णाढ्यां कर्णिकां पूजयेत्ततः ॥ कलाभिः पूजयेत्सार्द्धं तस्यां सूर्येन्दुपावकान् ॥ ६६ ॥ प्रणवस्य त्रिभिर्वर्णैरथ सत्वादिकान् गुणान् ॥ आत्मानमंतरात्मानं परमात्मानमर्चयेत् ॥ ६७ ॥ ज्ञानात्मानं च विधिवत्पीठमंत्रावसानकं ॥ पीठशक्तीः केसरेषु मध्ये च सवराभयाः ॥ ६८ ॥ हेमादिरचितं कुंभमस्त्राद्भिः क्षालितांतरं ॥ चंदनागुरुकर्पूरधूपितं शोभनाकृतिं ॥ ६९ ॥ आवेष्टितां गंनीरंध्रं तंतुना त्रिगुणात्मना ॥ अर्चितं गंधपुष्पाद्यैः कूर्चाक्षतसम-

दमालिप्तां श्वभ्रे ब्रह्मशिलां क्षिपेत् रत्नन्यासं ततः कृत्वा नवभिः शक्तिनामभिः हरितालादि धातूंश्च बीजं गंधौषधीरपि। शिवशास्त्रोक्तविधिना क्षिपेद्ब्रह्मशिलोपरि इत्यादिना लिंगं ब्रह्मशिलोपरि। प्रागुदग्प्रवणं किंचिदित्यंतेन। अनंतमिति। नाभ्यूर्द्धं नराकृतिमधस्त्वह्याकृतिमेककुंडलं सहस्रफणमिति तत्स्वरूपं। अन्यच्च तत्ध्यानमुक्तं। द्वात्रिंशद्भिः खलु तत्वैर्धराद्यै र्विद्यातैः स्वैर्म्महितं विष्णुतेजः आनंत्यं तत्कथितं ह्यासनं स्यात्पीठाकारः सतु नागोह्यनंत इति। अन्यत्रापि। तत्वैर्धरादिविद्यातैर्द्वात्रिंशत्संख्यकैरिह। पीठाकारोह्यनंतंस्यात् अनंतासनमीरितमिति नीलेंदीवरेधारयतीतिसमासःवक्ष्यति। इंदीवरेह्ने इतिस्फुरत्सागरमेखलामित्यनेन पृथिव्यनंतरं सागराय नम इति समुद्रः पूज्य इत्यर्थः तत्र सरस्वतीमंत्रे विद्याब्धिः लक्ष्मीविष्णुमंत्रे क्षीराब्धिः गणेशमंत्रे इक्षुरसः समुद्रः अन्यत्रामृतसमुद्र इत्यादि ज्ञेयं। तस्याविशिष्टांयां वृषेति। केसरीसिंहः भूतो देवयोनिः तत्स्वरूपमुक्तमन्यत्र। रक्तवस्त्रधराः कृष्णानखदंष्ट्राः सुदंष्ट्रिकाः कर्त्रीखट्वांगहस्ताश्चराक्षसाघोररूपिणः भूतास्तथै वदीनास्या इति। इभोहस्ती। नञ्पूर्वान् धर्माज्ञानवैराग्यानैश्वर्यान्। उक्तलक्षणानिति रक्तादिवर्णान् वृषादिरूपान्।उक्तं च धर्मंरक्तंवृषरूपं च सिंहं ज्ञानं श्यामं दुष्टभूतं तु पीतं वैराग्यं स्याद्गजरूपासितांगमैश्वर्यं च क्रमतः पीठपादाः पीठः स्युरधर्मादयोयेयेचत्वारस्तेह्युदिताकाररम्या इति। आग्नेयादिष्विति। आदिशब्देन निर्ऋतिवायवीशकोणाः दिक्षु प्राक्दक्षिणपश्चिमोत्तरासुचः समुच्चये। आकाशश्चतस्रो लभ्यंते। दिक्शब्देन वृषादय इति परिभाषणात्। वायवीयसंहितायामपि। अधर्मादींश्च पूर्यादीनुत्तरांताननुक्रमात् इति। इह देवता पुरोभागस्य पूर्वत्वमित्याचार्याः। तथाचागमे देवसाधकयोरंतः पूर्वासादिगिहोच्यते इति अन्यत्रापि देवाग्रे स्वस्य चाप्यग्रे प्राचीप्रोक्ता तु देशिकैः प्राच्येव प्राचीचोद्दिष्टा मुक्तातु देवतार्चनमिति तंत्रांतरेपि यत्रैव भानुस्तुवियत्यु देति प्राचीति तां वेदविदो वदंति। तथा परापूजकपूज्ययोश्च सदागमज्ञाः प्रवदंति तांतु इति। अन्यत्रापि द्वारपूजावसरे देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत्। तदादिपरिवाराणां अंगाद्यावरणस्थितिरिति। मत्रयुक्तिरपि। देहेपीठदेवतान्यासावसरे मुखे अधर्मन्यासउक्तः सचाग्रभागः महागणपतिपूजावसरे ग्रंथकृदपि त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु समभ्यर्च्ये-

न्वितं ॥७०॥ नवरत्नोदरं मंत्री स्थापयेत्तारमुच्चरन्। ऐक्यं संकल्प्य कुंभस्या पीठस्य चवि-धानवित् ॥ ७१ ॥ क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा ॥ तीर्थोदकैर्वाकर्पूरगंधपुष्पसुवा-

दित्युक्त्वा अग्रस्थबिल्ववृक्षाधइत्युक्तवान्। तथा रामपूजायां। द्वितीयावरणे हनूमंतं ससुग्रीवमित्युक्त्वा पुनराह। वाचयंतं हनूमंतमग्रतोधृतपुस्तकमिति।अन्यच्च उत्तराभिमुखत्वेनापि पूजाविहिता-कमांतरे च प्रतीच्यादिमुखत्वेन च तत्रच अधर्मादिपूजनमंगादिपूजनं च कदाचित् क्रमांतरेण स्या त्। अन्यदा क्रमेणस्यादिति विरुद्धे। तंत्रांतरेच। होतुः पूर्वं पूर्वभागं प्रनिष्टं सव्यं भागं दक्षिणं त्वा गमज्ञैः। दक्षं विंद्यादुत्तरं भागमग्रंग्र प्रज्ञावद्भिः पश्चिमं भागमुक्तमति। नृसिंहकल्पेच। अथावर-णपूजास्वपुरःप्राचीं प्रकल्पयेत्। तदादिपरिवाराणां प्रादक्षिण्येन पूजनमिति। नारायणीयेपि। अ-ग्न्योरग्रादिपत्रेषु लक्ष्म्याद्याधृतचामरा इति। अतएव पीठशक्तिपूजने अग्रदलादीनि व्याख्यास्यते। तेनोदङ्मुखपूजादावपि स्वाग्रभागस्य पूर्वत्वमाकल्प्यधर्मादिपूजनमंगादिपूजनमितिज्ञेयं। तेन यं-त्रादावपि दलेष्वक्षरलेखने अग्रदलात्प्रभृति लिखनीयमिति ज्ञेयं। इयं दिक् चरार्चायां । अथांबु-जंयजेदिति वक्ष्यमाणक्रमेण अत्रांबुजात्पूर्वमनताय नम इत्यनतं पूजयेदित्यथशब्देनोक्तं हृदयशे-षमब्जमितिशरीरे न्यासावसरे ग्रंथकृदप्युक्तवान्। अनंत हृदये पद्ममस्मिन्निति। कलाभिरिति। तत्र द्वादशकलात्मकसूर्यमंडलाय षोडशकलात्मकचंद्रमंडलाय दशकलात्मकवह्निमंडलायेति। के-चन कलाभिः सार्द्धमित्यस्यार्थं व्याचक्षते। अन्येत्वन्यथा वर्णयंति । द्वादशकलादित्वमनुक्तमपिल भ्यते। तेन सूर्यमंडलं संपूज्य तत्र द्वादशकलाः ततः सोममंडलं ततषोडशकलास्तत अग्निमंडलं तद्दशकलाः पूजयेत् इति। अयं सांप्रदायिकः पक्षः तस्यामिति । कर्णिकायां। प्रणवस्य त्रिभि-र्वर्णैः रकारोकारमकारैः कलाभिः सार्द्धं सूर्येंदुपावकान्यजेदिति संबंधः। तदुक्तं सूर्येंदुवह्नीन् प्रणवांशयुक्तान् इति। एतेन तत्तन्मंडलाधिष्टात्रीदेवताः ब्रह्मविष्णुईशास्तत्तन्मंडले पूजनीया इति सूचितं यदाहुः सौरेबिंबेचतुरास्यः किरीटी हंसे सौधं कलशं चाक्षमालां ब्रह्मा बिभ्रत् वरदं चाभ याख्यं हस्तैर्ध्येयः सितवस्त्रश्चतुर्भिः । सौम्ये बिंबे गरुडे मेघनीलश्चक्रं शंखं सद्गदाब्जं दधानः। हा री मालो कटकीसत्किरीटी विष्णुः पीतं वसनं कौस्तुभं च । अग्ने बिंबे वृषभे चंद्रमौलिः श्वेतो रु-द्रो दशबाहुस्त्रिनेत्रः टंकैणाग्निस्त्रिशिखाह्यकपालमुद्राक्षस्रक् वरदाभीतिपाणिरिति अन्यत्रापि ब्र-ह्मविष्णोश्वरास्त्वर्च्याः क्रमादेमंडलत्रय इति । अथ सत्वादिकानिति शुक्लरक्तकृष्णरूपान्। तदुक्तं सितरक्तासिताः प्रोक्ता गुणाः पीठोपरिस्थिता इति। विधिवदित्यनेनैतदुक्तं भवति । एतदनंतरं मायाकलाविद्यापरतत्वानि संपूजयेदिति । आत्मादिपरतत्वांतमिष्ट्वाशक्तीः पूजयेदित्युक्तेः। वै हायसी मंत्रप्रकाशेपि। सत्वं रजः शार्वरसंज्ञकं च बिंबानि चार्केंदुहुताशनानाम् । संपूजये दात्म चतुष्टयांते विद्यादिकं तत्वचतुष्टयं चेति वायवीयसंहितायामपि त्रिमंडलोपर्यात्मादितत्वत्रितयमा सनमिति । पीठं मंत्रावसानकमित्यनेनाक्षिप्तानां पीठशक्तीनां पूजास्थानमाह। पीठेति केसरेषु पूजितपद्मकेसरेषु तत्र अग्रदलादि । अष्टसु प्रादक्षिण्येन मध्ये च पीठशक्तिपूजांकृत्वा पीठमंत्रपू जनमित्यर्थः अस्यत्येनाविशेषोक्तो क्रमः सर्वत्र गृह्यत इति परिभाषणात्। अतएव देहे पीठदेवता

न्यासावसरे पीठशक्तिन्यास उक्तो मया । पीठशक्तयः पीठमंत्राश्च तत्तन्मंत्रे वक्ष्यंते । सवराभया इति ध्यानम् । आसां वर्णा अप्युक्ता आचार्य्यैः श्वेताकृष्णा रक्ता पीता श्यामा नलोपमा शुक्ला । अंजनजपासमानतेजोरूपाश्च शक्तयः प्रोक्ता इति । मंडूकादिएतदंतं नित्यपूजायामपि समानम् । एवंपूजिते पीठे कुंभस्थापनमाह । हेमादीति आदिशब्देन राजत ताम्र मृन्मयाः शक्त्यनुसारेण ग्रेयाः कुंभं कलशं तदुक्तं महाकपिलपंचरात्रे । सौवर्णं कलशं रम्यं रौप्यं ताम्रमथापिवा । निर्दोषं मृन्मयं वापि चंदनेन विलेपितमिति अन्यत्रापि सौवर्णं राजतं वापि मार्त्तिकं वा यथोदितम् । क्षालयेदस्त्रमंत्रेण कुंभं सम्यक्सुरेश्वरि इति । अन्यत्र कलश शब्दव्युत्पत्तिः प्रमाणं चोक्तम् कलां कलां गृहीत्वा वै देवानां विश्वकर्मणा । निर्मितोयं सुरैर्यस्मात् कलशस्तेन उच्यते । पंचाशदंगुलव्यास उत्सेधः षोडशांगुलः कलशानां प्रमाणं तु मुखमष्टांगुलं भवेत् इति । पद्मपादाचार्यैस्तु कलशैरत इति व्युत्पत्तिः कृता । अस्त्राद्भिः अस्त्रमंत्रजप्तोदकैः त्रिगुणात्मना त्रिगुणेन सत्वादिगुणरूपेण च तंतुना आवेष्टितांगं तेन कंठसूत्रवेष्टनं कुर्वंति नीरंध्रमिति कुंभविशेषणम् । तदुक्तं वायवीयसंहितायां । सौवर्णं राजतंवापि ताम्रं मृन्मयमेववा । गंधपुष्पाक्षताकीर्णं कुशदूर्वांकुरार्चितम् । सितसूत्रावृतं कंठे नववस्त्रयुगावृतमिति । केचित्तु नीरंध्रं यथास्यात्तथा तंतुना आवेष्टितांगमिति योजयंति । तन्मते सर्वोपि घटः तंतुवेष्टितो भवति तदात्वांगशब्दवैयर्थ्यं स्यात् । अन्यत्र विशेषः कन्याकर्त्तितसूत्रेण त्रिगुणेन च कर्मणा । गुणत्रयात्मकेनैव वेष्टयेदभितः सर्ममिति । आदिशब्देन धूपः । नवरत्नोदरमिति । नवरत्नानि षष्ठे वक्ष्यंते । एवं भूतं कुंभं तारमुच्चरन् स्थापयेदित्यन्वयः अत्र तारशब्देन यथार्हं तत्तन्मंत्रेषु पंचप्रणवानामपि ग्रहणमिति ज्ञेयम् । मंत्रीत्यनेन मूलमंत्रोच्चारोप्युक्तः विधानविदित्यनेन विनापि पंचाशदौषधिक्वाथैस्तज्जन्यसामर्थ्यापादनक्षम इत्युक्तम् । क्षीरेति क्षीरद्रुमकषायेण । अश्वत्थोदुंबरप्लक्षवटत्वक्काषायेणेत्यर्थः। आयुर्वेदोक्तरीत्या चतुर्थांशावशेषः कषायो ग्राह्यः विधिवदिति सबिंदुकं तद्वदितिविलोमेनेति आत्मभेदेन देवताधिया पूरयेदिति संबधः आत्मदेवता जलानामैक्यं भावयन्नित्यर्थः । शंख इति । स्थापितशंखादन्यस्मिन् तत्र शंखस्थापनांतं कर्म्म पूर्ववत्कार्यम् । क्वाथांबुनेति कलशपूरणावशिष्टेन संपूर्ण इति । समूलेन हृदयेन । गंधाष्टकं विलोड्येति पिष्टगंधाष्टकम् । तदुक्तं अष्टमूर्त्याष्टकं पिष्टमष्टगंधं विलोड्यचेति । अभीष्टदमित्यनेन गंधद्वारामित्यस्य जपउक्तः । पूजयेच्छिरसा धेनुमुद्रां प्रदर्श्येति ज्ञेयम् । सकलाः चतुर्नवति द्वादशात्मन इति सूर्यस्यपश्चादित्यनेनैतदुक्तम् । अकारजकलानंतरं हंस इति । उकारजानंतरं । प्रतद्विष्णुरिति मकारजानंतरम् । त्र्यंबकमिति बिंदुजानंतरं तत्पदादिकाम् । नादजानंतरं विष्णुयोनिमिति ऋचमिति । पंचाशदेव पंचाशत्कलाः तारपंचभेदोत्थाः अत्राष्टत्रिंशत्कलाः ततः एकपंचाशत्कलाः पश्चात्पंचगुप्तकलाश्च शंखजले पूजनीयाः ताश्चेच्छाज्ञानक्रिया । चिदात्मानंदात्मिकाः एवं चाष्टत्रिंशत्कलाः पंचगुप्तकलाश्चेति चतुर्नवतिदेवतात्मकत्वम् । यदाहुराचार्याः । प्रथमं प्रकृतेर्हंसः प्रतद्विष्णुरनंतरम् । त्रियंबकस्तृतीयः स्यात् चतुर्थस्तत्पदादिकः विष्णुर्योनिमितीत्यादि पंचमः कल्प्यतां मनुः चतुर्नवतिमंत्रात्मदेवतावाह्य पूजयेत् अत्रयाः पंचसंप्रोक्ता अक्षचत्वारस्य पंचभिः कलाप्रभेदैश्च मिथो युज्यंते ताः पृथक् पृथगिति । अन्यत्रापि चतुर्नवतिसंख्याश्च समाह्य कलाः क्रमात् इति । समाहितेनेति मंत्रस्य देवतां समाहितेन मनसा ध्यायन् प्रतिलो

सितैः ॥ ७२ ॥ आत्मा भेदेन विधिवन्मातृकां प्रतिलोमतः ॥ जपन्मूमलनु तद्वत्पूरयेद्देवता-धिया ॥ ७३ ॥ शंखेक्वाथांबुसपूर्णौ गंधाष्टकमभीष्टदं ॥ विलोड्य पूजयेत्तस्मिन्नावाह्य सकलाः कलाः ॥ ७४ ॥ दशवन्हेः कलाः पूर्वं द्वादशद्वादशात्मनः ॥ कलाः षोडश सोमस्य पश्चात्पंचाशतं कलाः ॥ ७५ ॥ जपित्वा प्रतिलोमेन मूलमंत्रं च मंत्रवित् ॥ समाहितेन मनसा ध्यायन्मंत्रस्य देवतां ॥ ७६ ॥ प्राणप्रतिष्ठां कुर्वीत तंत्रमंत्रविचक्षणः ॥ कलात्मकं शंख-

---

मेन मूलमंत्रं जपित्वा । तामेवावाह्य पूजयेदिति संबंधः इदं चकारान्मंत्रवित्पदाच्च लभ्यते । यदाहुः । मूलमंत्रमावाह्य मंत्रवित् । अभ्यर्च्य शंखसलिलं दिव्यकुंभे विनिक्षिपेदिति । समाहितेन मनसेति । प्रसंगसंगत्यात्वोक्तं परं सर्वत्रध्याने इदं विशेषणं ज्ञेयम् । अन्यथा ध्यानस्यैव कर्तुमशक्यत्वात् । प्राणेति प्रतिष्ठाशब्दव्युत्पत्तिरुक्ता महाकपिलपंचरात्रे । प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्वात्तु तिष्ठतेः । बह्वर्थत्वान्निपातानां संस्कारादौ प्रतेः स्थितिः । अर्थस्तदयमेतस्य गीयते शाब्दिकैर्जनैः । विशेषसंन्निधिर्यातु क्रियते व्यापकस्य हि । सन्मूर्त्तौ भावनामंत्रैः प्रतिष्ठा साभिधीयते इति तत्र प्रयोगः । धूम्रार्चिराङ्गताभवेत्यावाहिन्याद्यष्टमुद्राः प्रदर्श्य यं धूम्रार्चिषेनम इति संपूज्य प्राणप्रतिष्ठामंत्रे अमुष्यपदस्थाने षष्ठ्यंतं धूम्रार्चिः पदं प्रक्षिप्य प्रतिष्ठां कुर्यात् । एवं सर्वास्वपि कलासु । अथवा दशानामप्यग्निकला एकदैवावाहनादि कृत्वा प्रत्येकं पूजां कृत्वा प्राणप्रतिष्ठामंत्रे अमुष्यपदस्थाने सर्वासां षष्ठ्यंतं नामोच्चार्य प्राणप्रतिष्ठां कुर्यात् । कलाध्यानं द्वितीयपटलोक्तमनुसंधेयम् । तत्रतत्रेत्यस्यायमर्थः प्रथमं दशवन्हिकलानां ततो द्वादशसूर्यकलानां ततः षोडशसोमकलानां ततो दशाकारजानां तद्वचस्ततो दशोकारजानां तद्वचस्ततो दशमकारजानां तद्वचस्ततः पंचानां बिंदुजानां तद्वचस्ततः षोडशनादकलानाम् । तद्वचस्ततः पंचगुप्तानां विचक्षण इत्यनेन सर्वत्र त्रिः प्राणप्रतिष्ठामंत्रं जपेदित्युक्तम् । अन्येतु प्रतिलोमेनेति सर्वत्रयोजयंति तत्तु आभिचारिकाभिषेकविषयं तथा प्रथमं नादकलास्ताष्टक् ततो बिंदुकलास्ताष्टक् ततो मकारकलास्ताष्टक् तत उकारकलास्ताष्टक् ततोकारकलास्ताष्टक् ततः सोमसूर्याग्नीनाम् । यदाहुः । स्थंडिलाधारगं शंखं पूरयित्वा तदंबुना । अष्टमूर्त्यात्मकं पिष्टमष्टगंधं विलोड्य च कलानादक्रमेणैव स्वस्वनामसमायुताः । हृल्लेखांगानि विन्यस्य प्रत्येकं ताः प्रयोजयेत् । अत्र नादकलांते विष्णुर्योन्यादिकां कलांसर्वासां व्यापिनीव्याप्तां सम्यगावाह्य पूजयेत् । स्पृष्ट्वा सुस्थापनमनुं दक्षिणेनैव पाणिना । युक्तनादकलानामित्यादिना योजयेत् त्रिंशत् बिंद्वादितारभेदानां कलाः सौम्यादि नैऋतुः अग्नेरपि समावाह्य तथैवाभियजेत्क्रमादिति । विनिक्षिपेदिति । मूलमंत्रेणेति शेषः । तदुक्तम् । पुनस्तोयं कलात्मकम् । उच्चारयेन्मूलमंत्रं कलशेसंन्निधापयेत् इति । अन्यत्रापि कलशेतत्क्षिपेत् मूलमंत्रमुच्चार्य मंत्रविदिति । गंधाष्टकं विलोड्ये त्युक्तम् । तदाह । गंधकष्टशक्तिविष्णुशिवात्मकमिति । तदात्मकतोक्त्या।अत्यंतं प्रियत्वं सूचितं चोरइति भटि ऊरइतिमिति । कान्यकुब्जभाषायाम् । रोचना गोरोचना । कपिगंठिवनेति प्रसिद्धं क्षीवेरो वालकम् । कुष्टं कूठः इति प्रसिद्धम् । सैव्यकमुशीरम् । जटामांसोमुरमिति समाहारद्वंद्वेकत्वेन नपुंसकत्वम् । मुरा स्वनाम्ना प्रसिद्धा । तमालं पत्रजं जलं वालकम् । कुसीतं रक्तचंदनम् । एतानि समभागानि ग्राह्याणि । गणपति

संहितायां गणेशगंधाष्टकमप्युक्तं। स्वरूपं चंदनं चोरं रोचनागरुमेवच। मदंमृगद्वयोद्भूतं कस्तूरीचंद्रसंयुतं। अष्टगंधं विनिर्दिष्टं गणेशस्य महाविभोरिति। प्राणप्रतिष्ठां कुर्वीतेत्युक्तमतस्तन्मंत्रमाह। पाशादीति। पाशादित्रयस्वरो नवमे वक्ष्यते। आत्मा जीवमंत्रः अत्रपाशादि त्र्यक्षर आदौ आत्ममंत्र अंत इत्यनेन यरलवशषसहौं इत्येतान्यष्टबीजानि त्रयोविंशे वक्ष्यमाणानि संगृहीतानि इति संप्रदायविदः अत्र पाशाद्यात्मांतानां प्रत्यमुष्यपदं आवृत्तिरपिज्ञेया त्रयोविंशे तथावक्ष्यमाणत्वात्। अमुष्यपदस्यायमर्थः साध्यदेवतायंत्रादेः षष्ठंतं नामपदं प्रयोक्तव्यमिति। तथाच इमममुष्य पुत्रममुष्याः पुत्रमस्यैविशएष वः कुरवो राज्ये त्यस्याः श्रुतेः प्रयोगकथने कल्पसूत्रे कात्यायनः असावित्यपनोद इति तद्भाष्ये च अपनोदः अदःपदमनूद्य नाम प्रयोक्तव्यमित्यर्थ इति।नारायणीयेपि। अमुकपदं यद्रूपं यत्र मंत्रेषु दृश्यते।साध्याभिधानं तद्रूपं तत्रस्थाने नियोजयेत् इति।तट्टीकायामपेक्षितार्थद्योतनिकायामेवमुक्तं एतच्च पुरुषोत्तममंत्रव्यतिरिक्तस्थानेऽवगं व्यतम्।तत्राऽमुकशब्दे दुरितपदस्याललोपदस्य वा प्रयोगादिति।तथेति।अमुष्यपदं वर्देदित्यर्थः।वाङ्मनोनयनमिति।नयनपदपर्यायस्य चक्षुःपदस्योपलक्षकं।केवलं छंदोनुरोधात्तथोपदेशः तथा च त्रयोविंशे असावेव सर्वेन्द्रियाण्यमुष्यांनेवाङ्मन चक्षुरंतत इति मंत्रविदामप्युपदेशे चक्षुःपदमेवोपदिष्टमुपलभ्यते संप्रदायविदां तथाचाचार्यचनंदीचापटले तद्वद्वाङ्मनसी उदीर्यतदनुप्रमाणा इच्छायालिख्ति तीकाकाराःपद्मपादाचार्याव्याख्यातवंतः वाङ्मनसी ग्रहणं चक्षुः श्रोत्रघ्राणानामुपलक्षणार्थमिति।तथा प्राणप्रतिष्ठापटले आचार्यास्तद्वद्वाङ्मनसं दृशं श्रुतिमथोघ्राणं च सप्राणकमिति। अन्यत्रापिटीकाकारैर्व्याख्यातं। दृक्पदेनचक्षुःपदं गृह्यत इति। एवंचेन्नस्यात् क्वचिन्नयनपदं क्वचिच्चक्षुः पदं क्वचिद्दृक्पदं तद्वत्क्वचित् लोचनपदमपि स्यात्। तच्चायुक्तं। नहि पर्यायेणोच्चारितो मंत्रः समंत्रो भवति। अन्यथा मंत्रोदारश्लोक एव मंत्रभवेयुः तस्मान्नयनपदं चक्षुः पदोपकलक्षक मिति स्थितं। प्राणप्राणपदानीति अत्र मंत्रेप्राणाइति बहुवचनांतता ज्ञेया। वागादीनां बहूनां पदानां द्वंद्वसमासात् त्रयोविंशे वक्ष्यति वाक्श्रोत्रघ्राणपदे प्राणा इति। ठद्वयं स्वाहा। नन्वत्र मंत्रे यदमुष्य स्थाने साध्यदेवतायंत्रादेर्नामपदयोगः तस्य कथं मंत्रत्वमितिचेत्। मीमांसाधिकारसिद्धांतसिद्धमिति ब्रूमः। तथाहि। द्वितीयाध्याये भावार्थचरणे अनाम्नातेषु मंत्रत्वमाम्नातेहि विभागः स्यात् इत्यत्राधिकरणे ऊहप्रवरनामधेयानां मंत्रत्वंत्वममंत्रवेति संशय्यतेषांमंत्रत्वं सिद्धांतितं।तत्प्रसंगेनेदमपि विचारितं।यदूहप्रवरनामधेयानां प्रक्षेपे सर्वस्यैवामंत्रत्वं उत प्रक्षिप्तस्यैवेति।तत्र प्रक्षिप्तस्यैवामंत्रत्वं सिद्धांतितं।तत्प्रसंगानुप्रसंगेनेदमपिचिंतितं।यत्र मंत्रे इमममुष्य पुत्रममुष्याःमसुर्ष्यं विशएष दोराजेत्यादौ यत्सर्वनामस्थाने राजादिशब्दप्रयोगस्तस्यामंत्रत्वमुतमंत्रत्वमिति।तत्राम्नातस्य सर्वनाम्नो राजादिपदप्रयोगे प्रामाण्यसमर्प्यकत्वमात्रमिति ऊहादिवदमंत्रत्वमिति पूर्वः पक्षः सिद्धांतस्तु भवेदेवं यदि आम्नातस्यसर्वनाम्नो राजादिपदप्रयोगे प्रामाण्यसमर्प्यकत्वं स्यात्। किंतु सर्वनाम्नां तत्स्थाने शब्दांतरसमर्थकत्वमेव। तथाहि। ऊहेतु अग्नयेत्वा जुष्टं निर्वपामि इतिप्रकृतौ श्रुतौ च मंत्रः विकृतौ तु सूर्यदेवताके चरौ न्यायात् सूर्यायेति पदमूह्यते इति भवतुतस्यामंत्रत्वं। एवं प्रवरशब्देनासितदेवलशांडिल्यप्रवराभिधामिपदकीर्त्तनं। नामधेयशब्देन च यजमानभिधायिविष्णुशर्म्मादिनामकीर्त्तनसभिमतं। तेषां च वेदे अनाम्नानात् प्रवरनामधेयानि कीर्त्तयेदिति वाक्येन स मंत्रप्रयोज्यविशेषकल्पे-

थाम्नानाभावान्नमंत्रत्वंसर्वनाम्नामाम्नानंतु राजादिविशेषनाम्नामामंत्यादाम्नातुमशक्यत्वात् राजादिविशेषार्थप्रतिपादनार्थं नचास्यस्वतस्तत्प्रतिपादनसामर्थ्यमस्तीति स्वयं प्रयोगानर्हं सत् विशेषशब्दानेवप्रयोगार्हानुपलक्षयति। यथातस्यापत्यमित्यादौ। अतोविवक्षितस्वरूपराजाद्यर्थं विशेषविषयशब्दाम्नंत्रवाक्यनिवेशिनो दर्शयतीत्येतदर्थमेव सर्वनामपदं दृष्टार्थेनाध्ययनविधिना ध्यापितमिति निश्चीयते।तस्माद्राजादिनाम्नामस्यन्नातप्रायत्वात्।मंत्रत्वमेवेति।इन्द्रवल्लीति। इंद्रवारुणी लताविशेषः चषकं कलशसजातीयं शरावादिविधिवदित्येनेन मूलमंत्रोच्चारणमुक्तं। क्षौममित्यतसीसंभवं। तदभावे पट्टवस्त्रादि। अन्यत्र एकवस्त्रवेष्टनमप्युक्तं। अतिसूक्ष्मतरेणैव विशुद्धेन नवेन च। मायातत्त्वस्वरूपेण वेष्टयेद्वाससा घटमिति। मंत्रस्य देवतामित्येकमंत्रदीक्षायां पंचायतनदीक्षापक्षे पंचकलशान्संस्थाप्य। तत्तत्कलशे तत्तद्देवतामावाहयेदिति मंत्रीत्यनेनोक्तं। तदुक्तमाचार्यैः प्रोक्तेनैवं कलशविधिनैकेन वानेककुंभैरिति पंचायतनदीक्षाया देवतास्थापनक्रमउक्तो विज्ञानमालायां। यदातु शंकरं मध्ये ईशान्यां श्रीपतिं यजेत्। आग्नेय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतं। वायव्यां च सदा पूज्या भवानी भक्तवत्सला। यदातु मध्ये गोविंदं ईशान्यां शंकरं यजेत्। आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा। वायव्यामंबिकां चैवयजेन्मंत्री समाहितः। सहस्रांशुं यदा मध्ये ईशान्यां पार्वतीपतिं। आग्नेय्यामेकदंतंच नैर्ऋत्यामच्युतंतथा। वायव्यां पूजयेद्देवीं भोगमोक्षैकभूमिकां। भवानी तु यदामध्ये ईशान्यां माधवं यजेत्। आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकं। प्रद्योतनं तु वायव्यामाचार्यस्तु प्रपूजयेत्। हेरंबं तु यदा मध्ये ईशान्यामच्युतं यजेत्। आग्नेय्यां पंचवक्त्रं च नैर्ऋत्यां जगदंबिकां। वायव्यां द्युमणिं चैव यजेन्मंत्री ह्यतंद्रितः। स्वस्थानवर्जितादेवाःशोकदुःखभयप्रदाः।तन्मंडलस्थितो राजा साधकश्च विनश्यति इति। अन्यत्रापि। शंभौ मध्यगते हरीनरहरभूदेव्यो हरौ शंकरेभास्ये नागसुता रवौ हरगणेशाजांबिकास्थापिताः देव्यां विष्णुहरैकदंतरवयो लंबोदरेजेश्वरार्यैनाः शंकरभागतोतिशुभदा व्यस्तास्तुतेहानिदाइति। पंडितास्त्वपि। शं ना ग र दे मध्यास्ता शं गरमेशतः सूशं गंनादे देनाशं गरगं नाशंभसू विदिक् पूज्या इति। अन्यत्राग्नेयादिक्रमेण स्थापनमुक्तम्। सूर्यैकदंताच्युतशक्तिरुद्रा विघ्नेश्वरेशाद्रिसुतार्ककृष्णाः। श्रीनाथविघ्नेशभगांबिकेशाश्चंडीशहेरबपतंगकृष्णाः। श्रीशंभुसूर्याखुरथांबुकृष्णाःप्रदक्षिणं मध्यविदिक्षु पूज्याः। स्वस्थानगासर्वमनोरथाप्त्यै अथं निर्विघ्नंति परत्र संस्थाइति। अन्यत्रापि। मध्ये भ्यर्च्य हरिं गणेननगजाशर्वागणंमध्यतः शंभ्वार्य्यारविविष्णवोरविमथोविघ्नाजशक्तीश्वराः। मध्येशक्तिमथेशविघ्नरवयो विष्णुस्वमध्ये हरं सूर्यंभास्यशिवाच्युताहि विहिता .आग्नेयकोणादिमा इति। अत्रोभयत्रस्थापनं क्रमे फलतः साम्यमेवं। पूजातुगणपतिमारभ्ययत्रगणपतेर्मुख्यत्वं तत्र सूर्यमारभ्येतिज्ञेयं। यदाहुः। मुख्येपुष्पांजलिं दत्वा गणेशाद्यर्चनंभवेत्। गणेश एव मुख्यश्चेत् तत्र सूर्यक्रमाद्भवेत् इति। एतद्व्याख्यानमुभयथा कुर्वंति। पुष्पांजलिमिति मुख्ये प्रथमतः पुष्पांजलिमात्रं कृत्वा पश्चाद्गणेशाद्यर्चनं कृत्वा मुख्यपूजेति। अपरे तु पुष्पांजलिशब्देन पूजासमाप्तौ यः पुष्पांजलिः ससंगृहीतः तेन मुख्यदेवतापूजानंतरं गणेशाद्यर्चनमिति। एतच्च स्वस्वगुरुसंप्रदायानुसारेण ज्ञेयं। अयमेवदेवतास्थापनक्रमो नित्यपूजायामपि मानः तत्र नित्यपूजा शालग्रामे मणौ यंत्रे वा पाषाणादिप्रतिमायां वा कार्या। तदुक्तं ज्ञानमालायां। गिरिजा रतसौख्याय जाताविघ्नपराः सुराः।

तच्छ्रुत्वा चरितं देव्याः शापोदन्तोऽतिदारुणः पार्वतीशापसंयुक्ता देवा अश्मत्वमागताः विष्णुमा शंकरेणापि तथान्ये सुरसत्तमैः संस्तुता वरदा जाता पाषाणत्वे पि भो सुराः। स्वस्थाने पूजयिष्यंति पुरुषार्थचतुष्टयं दातुं समर्थाः महाभ्याद्देव एव वरोऽर्पितः। तस्मात् पूजा विधातव्या पाषाणप्रतिमासु चेति। हयशीर्षपंचरात्रे। मृन्मयी दारुघटिता लोहजा रत्नजा तथा। शैलजा गंधजा चैव कौसुमी सप्तधा स्मृता। कौसुमी गंधजा चैव मृन्मयी प्रतिमा हिता। तत्कालपूजिताश्चैताः सर्वकामफलप्रदा इति। महाकपिलपंचरात्रेपि। शैलजा लोहजा वापि रत्नजा वाथ दारुजा मृन्मयी चेति पंचैताः प्रतिमाः परिकीर्त्तिताः। सर्वेषामेव देवानां मणिनीला यशःप्रदा। दारुजा कामदा प्रोक्ता सौवर्णी भुक्तिमुक्तिदा। राजती स्वर्गराज्यदा ताम्री ह्यायुर्विवर्द्धिनी। कांस्या बन्धापदं हंति रैतिकी शत्रुनाशिनी। सर्वभोगप्रदा शैली स्फाटिकी दीप्तिकारिका। महाभोगप्रदाख्याता मृन्मयी खलु शोभना मानांगुलप्रमाणेन दशपंचांगुलात्मिका गृहे तु प्रतिमा पूज्या नाधिका हि प्रशस्यत इति। अन्यत्रापि। अंगुष्ठपर्व आरभ्य वितस्तिर्यावदेव तु। गृहे तु प्रतिमा कार्या नाधिका शस्यते बुधैरिति। यत्तु सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा। क्षेमसुभिक्षाय भवेत्त्रिचतुर्हस्तप्रमाणोच्चेति। तत् स्थापितप्रतिमाविषयं। मृन्मय्या तत्रैव विशेष उक्तः मृन्मयीं प्रतिमां वक्ष्ये यथावत्तां निबोध मे। पक्वा पक्वा द्विधा प्रोक्ता मृन्मयी प्रतिमा क्रमात्। सर्वे लोका न शंसंति प्रतिमां दग्धमृन्मयीं। अपक्वा प्रतिमा शस्ता सैव कार्या विचक्षणैः सुधयानैव कर्त्तव्या नाश्मचूर्णैः कदा च न मृदैवमृन्मयीं कुर्याद्यथावदनुपूर्वशः ब्राह्मणस्य सितामृद्वै क्षत्रियस्यारुणा स्मृता। विशां पीता भवेन्मृद्वै कृष्णा शूद्रस्य कीर्त्तितेति। अन्यत्र विशेषः नृपभयमत्यंगायांहीनां गायामकल्यता कर्त्तुः क्षामोदर्या क्षुद्भयमर्थविनाशः कृशांगायां मरणं तु सक्षतायां शस्त्रनिपातेन निर्दिशेत्कर्त्तुः वामे विनता पत्नीं दक्षिणविनता हिनस्त्यायुः अंधत्वमूर्द्ध्वदृष्टौ करोति चिंतामधोमुखी दृष्टिः सर्वप्रतिमास्वेवं शुभं भास्करोक्तमवगच्छेत् इति। तथान्यत्रापि। नाधिकांगी न हीनांगी कर्त्तव्या देवता क्वचित्। अधिका शिल्पिनं हन्यात् कृशा चैवार्थनाशिनी। कृशोदरीति दुर्भिक्षं निर्मांसाधननाशिनी। वक्रनासातिदुःखाय संक्षिप्तांगी भयंकरी। चिपिटादुःखशोकाय अनेत्रानेत्रनाशिनी दुःखदा हीनवक्त्रा तु पाणिपादकृशा तथा हीनांसासीनजंघा च भ्रमोन्मादकरी नृप शुष्कवक्त्रा च राजानं कटिहीना च मारयेत्। पाणिपादविहीनायां जायते नरको महान्। जंघाहीना च या मूर्त्तिः शत्रुकल्याणकारिणी। पुत्रमित्रविनाशाय हीना वक्षस्थलेन या। संपूर्णावयवाया तु आयुर्लक्ष्मीप्रदा सदा। एवं लक्षणमासाद्य कर्त्तव्या मूर्त्तिरुत्तमेति। अन्यत्र विशेषः खंडिते स्फुटिते भ्रष्टे दग्धे मानविवर्जिते। यागहीनेथ वोत्क्षिप्ते पतिते दुष्टभूमिषु। अन्यमंत्रार्च्चिते चैव पतितस्पर्शदूषिते। दशस्वेतेषु भो चक्रुः संनिधानं दिवौकसः इति सर्वतो विष्णुः परिभाष्य चकारहेति। खंडितां स्फुटितां जीर्णामवलीढां च वन्हिना प्रतिमां वर्जयेत्प्राज्ञो भग्नां स्थानच्युताम्। निक्षिपेद्दारुजामग्नौ तथान्यामप्सु निक्षिपेत् इति। तथा। एकाहपूजा विहतौ कुर्याद्द्विगुणमर्चनं द्विरात्रे तु महापूजा संप्रोक्षणमतः परं। मासादूर्द्ध्वमनेकाहं पूजा यदि विहन्यते प्रतिष्ठैवेष्यते केश्चित् केचित् संप्रोक्षणक्रमः संप्रोक्षणलक्षणं यथा तत्रैव संप्रोक्षणं तु देवस्य देवमुद्वास्य पूर्ववत्। पंचपंचक्रमेणैव स्नापयित्वा मृदंभसा। गवांरसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च। प्रोक्षयेत्प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतं सपुष्पं सकुशं पाणिं न्यस्य देवस्य मस्तके। पंचवारं

जपेन्मूलमष्टोत्तरशतोत्तरं। ततो मूलेन मूर्द्धादि पीठांतं संस्पृशेदपि। तत्त्वन्यासं लिपिन्यासं मंत्रन्यासं च विन्यसेत्। प्राणप्रतिष्ठामंत्रेण प्रतिष्ठापनमाचरेत्। पूजां च महतीं कुर्यात् स्वतंत्रोक्तां यथाविधि। यागहोमादिषु प्रायः संप्रोक्षणविधिः स्मृत इति। अन्यत्रापि। शालग्रामे मणौ यंत्रे मंडले प्रतिमासु च। नित्यं पूजा हरेः कार्या न तु केवलभूतले इति रामपूर्वतापनीयेपि। सोभस्यास्य देवस्य विग्रहो यंत्रकल्पना विना यंत्रेण चेत् पूजा देवता न प्रसीदति इति। संहितायामपि। यंत्रमंत्रमयं प्राहुर्देवतामंत्ररूपिणी। यंत्रेणापूजिते देवः सहसा न प्रसीदति इति। तथा सर्वेषामपि मंत्राणां यंत्रे पूजाप्रशस्यतइति। ईशानशिवेनाप्युक्तं। शक्तिं निजैकयेन तथैव चक्रे चित्रे पटे वा यजनं न भूमौ। मोहादसौ स्थंडिलगां यजेच्चेद्भ्रश्येत्त्रिवर्गादिति मंत्रसिद्धा इति। शिवपूजा तु शिवमूर्त्तौ शिवलिंगे स्थिरे वाचले कार्या तत्र चले पाषाणादिलिंगे। यत्पंचसूत्रादिलक्षणमुक्तं तदवश्यं द्रष्टव्यं रत्नलिंगादौ तु तल्लक्षणाभावेपि न दोषः तदुक्तं हयशीर्षपंचरात्रे। नकुर्याल्लक्षणोद्धारं रत्नजानां चलात्मनां। सुप्रभालक्षणं त्वेषां स्वर्णजानामपि द्विज। तस्मात्तत्र लक्षणोद्धारं कुर्यात्पाषाणलिंगवत्। अचलानां तैजसानां क्वचिदिष्येत लक्षणं। लक्षणं कल्पनीयं तु स्थाप्यलिंगे यथाविधि। चललिंगे कुशाग्रेण लक्षणं कल्पयेद्गुरुः मनसा चिंतयेद्वापिलक्षणं लिंगसंस्थितमिति। सोमशंभुनापि। रत्नजे लक्षणोद्धारो न लौहे न सरिद्भवे। लिंगेषु च न लौहेषु न दृष्टं क्वचिदागमे। स्वरूपलक्षणं तेषां प्रभारत्नेषु निर्मलेति। अन्यत्र तु विशेषः गृहे लिंगद्वयं नार्च्यं गणेशद्वयमेव च। शक्तित्रयं तथा शंखं मत्स्यादिदशकांकितं। द्वौ शंखौ नार्चयेच्चैवशालग्रामशिलाद्वये। द्वे चक्रे द्वारिकायास्तु तथा सूर्यद्वयं बुधः एतेषामर्च्चनान्नित्यमुद्वेगं प्राप्नुयाद्गृहीति। आवाह्य पूजयेदित्युक्तं। तत्रावाहनप्रकारमाह मूलेति। स्वस्थानात् हृदयकमलात्। अन्ये सूर्यमंडलादित्याहुः तदुक्तं वैहायसीमंत्रकोशे। अथाकृतौ वा हृदयारविंदादावाहयेत्रंदसुतं सुवेषमिति। अन्यत्रापि। आवाहयेन्महादेवीं हृदयां बुजगह्वरात्। सूर्यमंडलतो वापि स्वीया वा द्वादशांतत इति। ब्रह्मरंध्रेणेति ब्रह्मरंध्रद्वाराक रस्थमातृकांभोजेपुष्पसंचय इति व्यधिकरणसप्तम्यौ सुधीः मूलमंत्रमुच्चार्य स्वस्थानात्तेजःसुषुम्णा वर्त्मना आनीय ब्रह्मरंध्रद्वारा नासिका रंध्रनिर्गतं। तच्च तत्रांकस्थमातृकांभोजे पुष्पसंचये संयोज्य मूर्त्तावावाहयेदिति संबंधः तदुक्तं। देवं सुषुम्णा मार्गेण आनीय ब्रह्मरंध्रकं वामनासापुटे ध्यात्वा निर्यांतं स्वांजलिस्थितं। पुष्पमारोप्य तत् पुष्पं प्रतिमादौ निधापयेत् इति॥ तत्रावाहनमाह्वानं। तदा वाहन्यातच्च मूलमंत्रांते। आवाहितोभवमम इति प्रकारेण आगमोक्तश्लोकांते वा यद्वा मूलमंत्रांते आगमश्लोकमुच्चार्येति सुधीरित्यनेनोक्तं। अयमेव मुख्यः प्रकारः संहितायामपि धूपमंत्रमुक्त्वा एवमित्थं तु बीजांते धूपमंत्रउदाहृत इत्यादिनोक्तं। एवमग्रेपि स्थापनादिषूह्यं श्लोकस्तुआत्मसंस्थमजं शुद्धत्वामहं परमेश्वरअरण्यामिवहव्यांशं मूर्तावावाहयाम्यहमिति। इदमावाहनादिशालग्रामादौ न कार्यं यदाहुः शालग्रामे स्थावरे वा वाहनं न विसर्जनं। शालग्रामशिलादौ यन्नित्यंसन्निहितो हरिरिति। अन्यत्रापि उद्वासावाहने नस्तः स्थिरायामुद्धवार्चने। अस्थिरायां विकल्पः स्यात् स्थंडिले तु भवेद्वयं शालग्रामार्च्चनेनैव ह्यावाहनविसर्ज्जनं इति। अत्र पंचायतनपक्षे प्रत्येकं देवतानामावाहनं ततः प्रत्येकंस्थापनमिति पदार्थानुसमयो वा उतावाहनादिनैवेद्यांतमेकत्र समाप्य पश्चादेवमन्यत्रेति कांडानुसमय इति संशये अत्र कांडानुसमय इति सिद्धांतः यतो मुख्ये पुष्पांज

शेस्थं क्वाथं कुंभे विनिक्षिपेत् ॥ ७७ ॥ गंधाष्टकं तत्त्रिविधं शक्तिविष्णुशिवात्मकं ॥ चंदनागरुकर्पूरचौ रकुंकुमरोचनाः ॥ ७८ ॥ जटामांसीकपियुता शक्तेर्गंधाष्टकं विदुः ॥ चंदनागुरुह्रीवेरकुष्ठकुंकुमसेव्यकाः ॥ ७९ ॥ जटामांसी मुरमिति विष्णोर्गंधाष्टकंविदुः ॥ चंदनागुरुकर्पूरतमालजलकुंकुमं ॥ ८० ॥ कुशीतं कुष्ठसंयुक्तं शैवं गधाष्टकं विदुः ॥ पाशादित्र्यक्षरात्मांते स्यादमुष्यपदं ततः ॥ ८१ ॥ क्रमात्प्राणा इहप्राणा स्तथा जीव इह स्थितः ॥ अमुष्य सर्वेन्द्रियाणि भूयोमुष्य पदं भवेत् ॥ ८२ ॥ वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ ॥ पश्चादिहागत्य सुखं चिरंतिष्ठंतु ठ द्वयं ॥ ८३ ॥ अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥ पश्चादश्वत्थपनसचूतकोमलपल्लवैः ॥ ८४ ॥ इंद्रवल्लीसमाबद्धैः सुरद्रुमधिया गुरुः॥ कुंभवक्त्रं पिधायास्मिंश्चषकं सफलीकृतं ॥ ८५ ॥ संस्थापयेत्फलधिया विधिवत्कल्पशाखिनां ॥ ततः

---

लिं दत्वा गणेशाद्यर्चनं भवेत् इत्युक्तं तत्रा र्चनशब्दः पूजावाचकः स चावासनादिनैवेद्यांतः इदं च पंचमाध्याये द्वितीयावरणे। वचनात्तु परिव्याणांतमित्यधिकरणे सिद्धांतितं। सुधीः स्थापनं विदध्यादिति संबंधः संस्थापनं स्थापनं। तत्स्थापिन्या श्लोकस्तु। तवेयं महिमामूर्त्तिस्तस्यां त्वां सर्वगं विभो भक्तिस्नेहसमाकृष्टं दीपवत् स्थापयाम्यहमिति। सुधीरित्यतेनासनोपवेशने कर्त्तव्ये इत्युक्तं भवति। तद्यथा मूलमंत्रांते सर्वांतर्यामिणे देवसर्वबीजमयं शुभं। स्वात्मस्थायपरं शुद्धमासनं कल्पयाम्यहं। आसनं गृहाण नमः ततो मूलमंत्रांते। अस्मिन्वरासने देव सुखासीनोचरात्मक। प्रतिष्ठितो भवेश त्वं प्रसीद परमेश्वर। उपविष्टो भव नमः संन्निधापनं नैकट्यावस्थितं प्रार्थनं तत्संन्निधायिन्याश्लोकस्तु अनन्या तव देवेश मूर्त्तिशक्तिरियं प्रभो सांन्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्परेति। संन्निरोधः संन्निरोधनं। अनन्यचित्तप्रार्थनं। तत्संन्निरोधिन्या श्लोकस्तु। आज्ञया तव देवेश कृपां भोधे गुणांबुधे। आत्मानंदैकतृप्तंत्वां निरुणध्मि पितर्गुरो इति। सिद्धांतसारे। आवाहनादीनामन्यथा लक्षणमुक्तं! स्वतएवाभिपूर्णस तत्वस्येहार्चनादिषु। सादरं संमुखीभावस्तदावाहनमुच्यते। शिवस्यावाहितस्यास्य विद्याद्देहेषु संततं।स्थिरीकरणमुद्दिष्टं स्थापनं भक्तितोर्चने। पूजां प्रपूज्यमानांयां तु गृहीत्वानुग्रहादिकं। कर्त्तुं सामर्थ्यमस्येह तत्सांन्निध्यं प्रचक्षते। असमाप्तेस्तु पूजायाः सांन्निध्यं हि शिवस्य यत्। स संन्निरोध उद्दिष्टो विभोरस्यापिशक्तित इत्यादिना। अनंतरमित्यनेन संमुखीकरणं प्रार्थनं च मुद्राद्वयेनोक्तं श्लोकौतु। अज्ञानाद्दुर्मनस्त्वाद्वावैकल्पात्साधनस्य च। यदा पूर्णं भवेत्कृत्यं तदाप्यभिमुखो भव। दृशापीयूषवर्षिण्या पूरयन्यज्ञविष्टरं। पूर्त्तावा यज्ञसंपूर्त्तेः स्थिरो भव महेश्वरेति। मुद्रालक्षणं यथा। मुष्टिद्वयस्थितांगुष्टौ संमुखौ च परस्परं संश्लिष्टावुक्षितौ कुर्यात्सेयं संमुखमुद्रिकेति। प्रसृतांगुलिकौ हस्तौ मिथः श्लिष्टौ च संमुखौ। कुर्यात्स्वहृदये सेयंमुद्राप्रार्थन संज्ञिकेति। संकलीकरणं पूर्णरूपत्वेनावस्थितप्रार्थनं तच्च देवतांगे षडंगन्यासात् अवगुंठनं अयोग्यदृष्ट्या विषयत्वापादनं तदवगुंठिन्यो श्लोकस्तु अभक्तवाङ्मनश्चक्षुः श्रोत्रदूरामितद्युते। स्वतेजः पंजरेणाशुवेष्टितो भव सर्वतः इति अमृतीकरणमानं दपूर्णतावस्थितित्वं। तद्धेनुमुद्रया। परमीकरणं सर्वापराधसहिष्णुत्वं तन्महामुद्रया। स्वमुद्राभिरिति। त्रयोविंशे वक्ष्यमाणाभिः समाहित इत्यनेन मूलमंत्रपुटितमातृकाक्षराणि देव देहे विन्यसेदित्युक्तं भवति।

पूजाया वक्ष्यमाणत्वात्। अथेति। उपचारशब्दार्थो ज्ञानमालायामुक्त: भक्त्या चैते कृता देवे सा धकं देवसंन्निधिं। चारयंति यतस्तस्मात् उच्यंतेह्युपचारका:समीपे चारयाहापि फलानांते तेषो दिता इति। मूले षोडश उक्ता: ज्ञानमालायामन्येपि। तद्यथा अष्टत्रिंशत् षोडशार्कदश पंचोपचा रका: तान्विभज्यप्रवक्ष्यामि के के ते तै: कृतैश्च किं आसनं प्रथमं तेषामावाहनमुपस्थिति: सांन्नि ध्यमाभिमुख्यं च स्थिरीकृतिप्रसाधनं। अर्घ्यं च पाद्याचमने मधुपर्कमुपस्पृश्य स्नानं नीराजनं वस्त्र माचामचोपवीतकं पुनराचामभूषे च दर्पणालोकनं तत: गंधपुष्पे धूपदीपौ नैवेद्यं च तत: क्रमा- त्। पानीयंतोयमाचामं हस्तवासस्तत: परं। तांबूलमनुलेपं च पुष्पदानं पुन:पुन: गीतं वाद्यं तथा नृत्यं स्तुतिं चैव प्रदक्षिणं। पुष्पांजलिनमस्कारावष्टत्रिंशत्समीरिता इति मंत्रतंत्रप्रकाशेपि। आसनं प्रथमं तेषु ततश्चावाहनं मतं। उपस्थानं च सां न्निध्यमित्यादिना पुष्पांजलिनमस्कारौ विष्णुप्रीत्यै- भवंत्यमी। त्रिंशच्चाष्टौ समाख्याता उपचारा मनीषिभिरित्यंतेन। षोडशमूलेस्पष्टा: तथा। आ सनस्वागते वस्त्रभूषे त्यक्त्वा तु द्वादश। अर्घ्यपाद्यचमान्येव मधुपर्काचमान्यपि। गंधादयो निवे- द्यांता उपचारा दश क्रमात्। गंधपुष्पे धूपदीपौ नैवेद्यं पंचमं स्मृता: सपर्या पंचधा प्रोक्तातासा- मेकां समाचरेत् इति प्रयोगसारे षष्टौ अप्युक्ता: अर्घ्यं गंधं तत: पुष्पमक्षतं धूपमेव च। दीपो नैवेद्य सप्तांगो सपर्येत्यपरे जगुरिति स्वागतमिति कुशलप्रश्नमिति। स्वागतस्यार्थकथनं। श्लोकस्तु यस्यद- र्शनमिच्छंति देवा:स्वाभीष्टसिद्धये। तस्मै ते परमेशाय स्वागतं स्वागतं च मे इति एतदनंतरं सुस्वा- गतमपि मूलमंत्रांते। श्लोकस्तु कृतार्थोस्म्यनुगृहीतोस्मि सफलं जीवितं मम। आगतो देवदेवेश सुस्वागतमिदं पुन रिति। पाद्यमिति हृदयाणुना नमोमंत्रेण श्लोकस्तु। यद्भक्तिलेशसंपर्कात्परमानं- दसंभव: तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पय इति। अत्र नमो मंत्रमुच्चार्य पाद्यं गृहाण न म: इति शंखस्थं जलमुत्सृजेत्। यत्र मंत्रविशेषो नोक्तस्तत्र मूलमंत्र एव ज्ञेय: एतदिति श्यामा- क: सांवेति प्रसिद्ध: महाकपिलपंचरात्रेपि।दूर्वा च विष्णुपत्नी च श्यामाकं पद्ममेव च।पाद्यांगानि च चत्वारि कथितानि समासतइति।सुधामंत्रेण वमित्यनेन श्लोकस्तु।वेदानामपि वेदाय देवानांदेवता त्मने। आचमं कल्पयामीश शुद्धानांशुद्धिहेतव इति।जोती जातीफलं।कंकोलं कोशफलं कवाव इति कान्यकुब्जभाषायां। तदुक्तमगस्तिसंहितायां। तथाचमनपात्रेपि दद्याज्जातीफलं मुनो। लवं गम- पि कंकोलं शस्तमाचमनीयकमिति।महाकपिलपंचरात्रे।आचमनीयद्रव्याणि अन्यथोक्तानि।कर्पूरम गरु पुष्पं द्रव्याण्याचमनीयकमिति।अन्यत्रापिविशेष:अर्घ्यंत्रिर्ददाति।पाद्यंत्रिर्ददातिआचमनीयंषट् ददाति। आगताय तथार्चायां स्नातुमासनगाय च। पूजांते गंतुकामस्य दद्यादर्घ्यं विचक्षण: आ- गतेस्नानकाले च नैवेद्योपक्रमे तथा। पाद्यस्यापि समुद्दिष्ट: समयस्त्रिविधो बुधैरिति। शिरोमंत्रेण स्वाहेत्यनेन महाकपिलपंचरात्रे। कुशाग्रस्थाने फलमुक्तं सिद्धार्थमक्षत चैव दूर्वा च तिलमेव च। यवं गंधं फलं पुष्पमष्टांगं त्वर्घ्यमुच्यत इति। सर्वदेवानामिति सर्वत्र संबध्यते। पाद्याद्युक्तद्रव्याणि सर्वदेवतासु समानानीति इत्यर्थ:श्लोकस्तु। तापत्रयहरं दिव्यं परमानं दलक्षणं तापत्रय विनिर्मुक्तं तवार्घ्यं कल्पयाम्यहमिति। मधुपर्कमिति श्लोकस्तु। सर्वकालुष्यहीनाय परिपूर्णसुखात्मक। मधुप- र्कमिदं देव कल्पयामि प्रसीद मे। अत्रार्घ्यादि प्रोक्तं तत्तद्द्रव्याभावे केवलतंडुलानेव निक्षिपेत्। त- दुक्तं मंत्रतंत्रप्रकाशे द्रव्याभावे प्रदातव्या: क्षालितास्तंडुला:शुभा इति अन्यत्रापि तंडुला: प्रपेचि

कुंभं निर्मलेन क्षौमयुग्मेन वेष्टयेत् ॥ ८६ ॥ मूलेन मूर्तिमिष्ट्वास्मिन्छायायां कल्पशाखिनां ॥ आवाह्य पूजयेतस्यां मंत्री मंत्रस्य देवतां ॥ ८७ ॥ मूलमंत्रं समुच्चार्य्य सुषुम्णा वर्त्मना सुधीः ॥ आनीय तेज स्वस्थानान्नासिकारंध्रनिर्गतं ॥ ८८ ॥ करस्थ मातृकांभोजे चैतन्यं पुष्पसंचये ॥ संयोज्य ब्रह्मरंध्रेण मूर्त्यामावाह येत्सुधीः ॥ ८९॥ संस्थापनं सन्निधानं सन्निरोधननंतरं ॥ संकलीकरणं पश्चाद्विदध्यादवगुंठनं ॥ ९०॥ अमृतीकरणं कृत्वा कुर्वीत परमाकृतिं ॥ क्रमादेतानि कुर्वीत स्वमुद्राभिः समाहितः ॥ ९१ ॥ अथोपचारान्कुर्वीत मंत्रवित्स्वागतादिकान् ॥ स्वागतं कुशलप्रश्न निगदेदग्रतो गुरुः॥ ९२॥ पाद्यं पादांबुजेदद्याद्देवस्य त्हृदयाणुना ॥ एतच्छ्यामाकदूर्वाब्जविष्णुक्रांताभिरीरितं ॥ ९३॥ सुधामंत्रेण वदने दद्यादाचमनीयकं॥ जातीलवंगकंकोलैस्तदुक्तं तंत्रवेदिभिः॥९४॥ अर्घ्यंदिशेत्ततो मूर्ध्नि शिरोमंत्रेण देशिकः ॥ गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ॥ ९५ ॥ सदूर्वैः सर्वदेवानामेतदर्घ्यमु-

---

त्तेषु द्रव्यालाभे तु तत्समान् इति। तेनैव मनुना सुधाणुनेति इत्यर्थः श्लोकस्तु। उच्छिष्टोप्यशुचिर्वापि यस्यस्मरणमात्रतः शुद्धिमाप्नोति तस्यैते पुनराचमनीयकमिति। मधुपर्कांते।आचमनमुपलक्षणं। तेनस्मृत्युक्तनिमित्तेप्याचमनं दद्यात्। स्नानांते वासोदानांते उपवीतदानांते नैवेद्यांते। तदुक्तं महाकपिलपंचरात्रे।स्नानेवस्त्रे तथा भक्षे दद्यादाचमनीयकमिति।एवंषडप्याचमनीयानि।तदुक्तं स्नानमालायां।पाद्ये च मधुपर्के च स्थाने वस्त्रोपवीतयोः भोजने चाचमनं देयमिति।स्नानात्पूर्वं महाकपिलपंचरात्रे तु विशेषः।गंधतैलमथो दद्यात् देवस्याप्रतिमं तत इति श्लोकस्तु।स्नेहं गृहाण स्नेहेनलोकनाथमहाशय सर्वलोकेषु शुद्धात्मन् ददामि स्नेहमुत्तमं तत उद्वर्त्तनं महाकपिलपंचरात्रे।रजनी सहदेवी च शिरीषो लक्ष्मणापि च। सदा भद्रांकुशाग्राणि उद्वर्त्तन मिहोच्यते इति। अन्यत्रापि। अभ्यंगोद्वर्त्तने चापि महास्नानं समाचरेत् इति। गंधाद्भिरिति। तदुक्तं मंत्र तंत्रप्रकाशे शुद्धतोयादंधतोयं श्रेष्ठं शतगुणोत्तरं गंगादितीर्थतो यानां फलं शास्त्रप्रणोदितं। तत्र तत्राधिगंतव्यमिति तथा। नाहरेन्मलिनं तोयं केशकीटादिदूषितं। मलिनेनापि भांडेन व्यंगेनाशुचिना तथेति तत्रैव विशेषःअक्षतागंधपुष्पाणि स्नानपात्रे तथा त्रयमिति श्लोकस्तु परमानंदबोधाब्धिनिमग्न निजमूर्त्तये। सांगोपांगमिदं स्नानं कल्पयाम्यहमीशते इति। एतदनंतरं शंखजलेन देवायाभिषेकं कुर्यात् यदाहुःशतं सहस्रमयुतं शक्त्यावान्यभिषेचयेत्। शंखं संपूर्य तेनैव सपुष्पेण च देवतामिति। अन्यत्रापि। स्वशक्त्या गंधतोयेन संस्नाप्य जगदीश्वरमिति। अत्र विशेषः महाभिषेकं सर्वत्र शंखेनैव प्रकल्पयेत्। सर्वत्रैव प्रशस्तोब्जः शिवसूर्यार्चनं विनेति। तत्र विशेषस्तंत्रांतरे प्रतिमा पटयंत्राणांनित्यं स्नानं न कारयेत्पर्वदिवसे तथा मलनिवारणमिति। वाससीति। द्विवचनेनोत्तरीयमपि गृहीतं श्लोकौतु। माया चित्रपटच्छन्नजिजगुह्योरुतेजसे। निरावरणविज्ञानवासस्ते कल्पयाम्यहं। यमाश्रित्य महामायाजगत्संमोहिनी सदा। तस्मै ते परमेशाय कल्पयाम्युत्तरीयकमिति। तत्र विशेषो मंत्रतंत्रप्रकाशे। पीतं कौशेयवसनं विष्णोः प्रीत्यै प्रकीर्त्तितं। रक्तं शक्त्यार्कविघ्नेषु ईश्वरस्यसितं प्रियं मलहीनं तथा छिद्रं क्षौमं कार्पासमेव च। तैलादिदूषिताद्रोगः सच्छिद्राद्दाच्यता भवेत्। जीर्णाद्दारिद्रता कर्त्तुः

दीरितं ॥ सुधाणुना ततः कुर्यान्मधुपर्कं मुखांबुजे ॥ ९६ ॥ आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ॥ तेनैव मनुना कुर्यादद्भिराचमनीयकं ॥ ९७ ॥ गंधाद्भिः कारयेत्स्नानं वाससी परिधाययेत् ॥ दद्यादिव्योपवीतं च हाराद्याभरणैः सह ॥ ९८ ॥ न्यासक्रमेण मनुना पुटितैर्मातृकाक्षरैः ॥ अभ्यर्च्चर्य देवं गंधाद्यैरंगादीन्पूजयेततः ॥ ९९ ॥ गंधश्चंदनकर्पूरकाला

---

मलिनात्कांतिहीनतेति। यज्ञोपवीतमिति स्लोकस्तु। यस्य शक्तित्रयेणेदं संप्रोतमखिलं जगत्। यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पय इति हाराद्याभरणैरिति स्लोकस्तु। स्वभावसुंदरांगाय नाना शक्त्याश्रयाय ते। भूषणानि विचित्राणि कल्पयाम्यमरार्चिनेति ॥ ९८ ॥ उपचारात्पूर्वं कृतो यो देवदेहेन्यासस्तत् क्रमेण मूलमंत्रपुटितमेकैकमक्षरं कृत्वेत्यर्थः वर्णैर्मनुपुटितैः क्रमशः शतार्द्ध न्यास क्रमादभियजेत्सकलासु मंत्रीगंधादिभिः प्रथमतो मनुदेवतासुत्रैलोक्यमोहन इति प्रथितप्रयोग इति। आचार्योक्तेः अभ्यर्च्यदेवीमिति। अत्र देवीमित्युपलक्षणं स्वेष्टदेवतामित्यर्थः क्वचिद्देवीमिति पाठः संपुटितलक्षणं त्रयोविंशे वक्ष्यति। ततो गंधाद्यैरभ्यर्च्य पुनरनंतरमंगादीन्यावरणान्यर्चयेत्। इति क्रमविधायकंगधाद्यैरित्यादिशब्देन पुष्पं अंगादीनीति तत्कल्पोक्तांगाद्दत्यादि अस्यायमाशयः मुख्यदेवे गंधपुष्पे दत्वा अंगादिलोकपान्संपूज्य धूपादिदद्यादिति। गंधाद्यैरित्युक्तं। तत्स्वरूपमेवाह गंधइत्यादिना स्लोकस्तु। परमानंदसौरभ्यपरिपूर्णं दिगंतरं। गृहाण परमं गंधं कृपया परमेश्वरेति। इदं गंधदानं कनिष्ठिकयेति ज्ञेयं। यदाहुः शंखपात्रस्थितं गंधं मंत्रैर्दद्यात् कनिष्ठयाइति। ततो गंधमुद्रां प्रदर्शयेत्। तल्लक्षणं तु। कनिष्ठांगुष्ठसंयुक्ता गंधमुद्राप्रकीर्त्तितेति। कमले इति द्वे इतिश्वेतरक्तेस्लोकस्तु। तुरीयवनसंभूतंनानागुणमनोहरं। अमंदसौरभंपुष्पंगृहाणमिदमुत्तममिति ततः पुष्पमुद्राप्रदर्शयेत्। केतके द्वे इति श्वेतपीते मंदारोर्कः पुंनागोनागकेसरः आरग्वधो राजवृक्षः धनवदर इति कान्यकुब्जभाषायां पारंतीलताभेदः सौगंधिकं कह्लारभेदः देशिकैः पूजायामुपदिष्टानि इत्यनेनान्येषु पुष्पाध्यायेषु विहितानि ग्राह्याणि तत्तद्देवतानां निषिद्धानि त्याज्यानि इत्युक्तं ज्ञानमालायां। नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपं। नदूर्वया यजेद्दुर्गां बिल्वपत्रैर्दिवाकरं। उन्मत्तमर्कपुष्पं च विष्णौ वर्जेत्सदा बुधैः देवीमां चार्कं मंदारावादित्येतगरं तथा। गणेशाय च सूर्याय रक्तपुष्पमतिप्रियं। शिवे कुंदंमदंती च यूथीं बंधूककेतके। जपां रक्तां त्रिसंध्ये द्वे सिंदूरं कुडजानि च। मालतीं घुसृणं रक्तं हयारिं बर्बरीं त्यजेत् उग्रगंधमगंधं च कृमिकेशादिदूषितं। अशुद्धपात्रपर्णांगवासोभिः कुत्सितात्मभिः आनीतं नार्पयेत्कुंभो प्रमादादपि दोषकृत्। कलिकाभिस्तथा नेज्यं विना चंपकपंकजैः शुष्कैर्नपूजयेद्विष्णुं पत्रैः पुष्पैः फलैरपि स्नात्वानीतैः पर्युषितैर्याचितैः कृष्णवर्णकैः स्वयं चपति तैर्भुवि। वर्जयेद्बृहतीद्वंद्वं कां चनारं कुरंटकं। सर्वपुष्पैः सदा पूजा विहिता विहितैरपि। कर्त्तव्या सर्वदेवानां भक्तियोगोत्र कारणं। पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखं। दुखदं तत्समाख्यातं यथोत्पन्नं तथार्पणं। चित्रपूजासु सर्वासु न विद्धस्यापि दूषणं। अधोमुखार्पणंनेष्टं पुष्पांजलिविधौ न तत्। लक्षपूजासुपुष्पमेकैकमर्चयेत्। समुदायेन चेत्पूजा लक्षपुष्पार्पणं तु तत् इति मंत्रतंत्रप्रकाशेपि ॥ पुष्पं पंचविधं प्रोक्तं मुनिभिर्नारदादिभिः॥परापरोत्तमं चैव मध्यमं च तथा धमं। सौवर्णं

गुरुभिर्सीरितः ॥ कमले करवीरे द्वे कुमुदे तुलसीद्वयम् ॥ १०० ॥ जातीद्वयं केतकीद्वे कल्हारं चंपकोत्पले ॥ कुंदमंदारपुन्नागपाटला नागचंपकं ॥ १०१ ॥ आरग्वधं कर्णिकारं पारंती

---

तु परं प्रोक्तमपरं चित्रवल्लजम्। वृक्षगुल्मलतापुष्पमुत्तमं परिकीर्त्तितम्। अधमं पत्रतोयादि मध्यमं तु फलात्मकम्। उत्सृष्टं न क्रियायोग्यं सदायोग्ये परापरे। पत्रेषु तुलसी श्रेष्ठा बिल्वं दमनकं शुभम्। मरुको देवकल्हारो विष्णुक्रांता तथैव च। अपामार्गो थ गांधारी पत्री सुरभिसंज्ञिका। नागवल्ली दलं दूर्वांकुशपत्रं तथा मतम्। पत्रं चागस्त्यवृक्षस्य पुष्पं धात्रीदलं तथा॥ फलेष्वामलकं श्रेष्ठं बादरं तिंतिणीभवम्। दाडिमं मातुलिंगं च जंबीरं पनसोद्भवम्। कदलीभूतसंभूतं श्रेष्ठं जंबूफलं तथा॥ यजेदेतैः सदा विष्णुं पत्रपुष्पफलैरपि॥ तथा॥ दिवसे दिवसोत्फुल्लैः पुष्पैःपूजा तथा निशि। पुष्पालाभे प्रवालैर्वा पूजयेच्च नकोरकैरिति।अन्यार्थमाहृतं दुष्टं तथैवान्योपभुक्तकमिति। गुरुरित्यनेन केषुचित्पर्युषितेषु दोषाभाव इत्युक्तं यत्ज्ञानमालायाम्। न पर्य्युषितदोषोस्ति जलजोत्पलचंपके। तुलस्यगस्तिबकुले बिल्वगंगाजले तथेति। पंडितैर्दिनसंख्यया केषां चित् पर्य्युषितदोषाभाव उक्तः बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृंगदूर्वामंदांभोजाह्विदर्भामुनितिलतगराब्रह्मकल्हारमल्ली।चंपाश्वारातिकुंभीमरुवकदमनाविश्वतोऽह्नानिच स्युः त्रिंशत्त्रेऽकार्यरीशोदधिनिधिवसुभूयमाभूय एवमिति। शताशतपत्रं भृंगं भृंगराजः मंदो मंदारः आह्विद्रोणकलशः ब्रह्मपलाशः अश्वारातिः करवीरः एषां यथायोग्यं पत्रपुष्पाणि ग्राह्याणि। अरयः षट्। यमो द्वयम्। एवमेकावृत्त्या आहृतानां दिनसंख्याभूय एवं अस्यार्थः द्वितीयावृत्या दर्भादीनामियं दिनसंख्येति स्मृत्यंतरेपि पंकजं पंचरात्रं स्यात् दशरात्रं च बिल्वकम्। तुलस्यैकादशाहात्तु पुनः प्रक्षाल्य पूजयेत् इति। तुलस्यां निर्माल्यदोषोपि नास्ति यदाहुः सद्यः पर्युषिता वापि निर्माल्या नैव दुष्यति।तथान्यैर्नै हरेस्तुष्टिस्तुलस्या तुष्यते हरिरिति॥१०७॥ उद्दिष्टमुक्त्वा प्रकृतमाह॥धूपयेदिति॥वामहस्तेन घंटामंत्रेण पूजितां घंटां वादयन् धूपं दद्यादित्यर्थः देशिक इत्यनेन घंटामंत्रेण पूजनमुक्तं यदाहुः जगद्ध्वनिततोमंत्रमातः स्वाहेत्युदीर्य च। अभ्यर्च्य वादयेद्घंटामिति। शैवागमे तु धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाणुना। अस्त्रेण पूजितां घंटां वादयन् गुग्गुलं दहेत् इति श्लोकस्तु वनस्पतिरसोपेतो गंधाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतामिति तदुक्तं घंटां गंधाक्षतकुसुमकैरर्चितां वादयान इति। अन्यत्रापि ततः समर्पयेे धूपं घंटां वाद्य जपस्वनैरिति तत्र प्रयोगः धूपपात्रमस्त्रेण प्रोक्ष्य नमो मंत्रेण पुष्पं दत्वा वामया तर्जन्या संस्पृशन् मूलमंत्रं श्लोकं च पठित्वा सांगाय सपरिवाराय देवाय धूपं समर्पयामीति नमः इति शंखजलमुत्सृज्य धूपमुद्रां प्रदर्श्य घंटामंत्रेणार्चितां घंटां वामहस्तेनवा दयन् देवतागुणनामयशस्तुत्यादि कीर्त्तयेत् देवं धूपयेत्। उक्तं च धूपस्थानं समभ्यर्च्य तर्ज्जन्या वामया स्पृशन्। संकल्प्यैवं ततः पुष्पांजलिं दत्वा यशः पठेत्। बह्वृचपरिशिष्टेपि धूपस्य व्यजनेनैव धूपेनांगविधूपने नीराजनेषु सर्वेषु देवनामादि कीर्त्तयन्। जयघोषं प्रकुर्वीत कारुण्यं वापि कीर्त्तयेत्। तथा मंगलघोषं च जगद्बीजस्य च स्तुतिमिति मंत्रतंत्रप्रकाशे तु न दहेद् ूषितं धूपं कार्या सार्स्थिशिरोरुहैरिति। एवं दीपदानेपि। घंटावादनादि सर्वं पूर्ववत् कुर्यात् विशेषस्त्वयं उत्सर्गो वा मध्यम

नवमल्लिका ॥ सौगंधिकं सकोरंटं पलाशाशोकमल्लिकाः ॥ १०२ धत्तूरं सर्जकं बिल्वमर्जुनं मुनिपत्रकं ॥ अन्यान्यपि सुगंधीनि पत्रपुष्पाणि देशिकैः ॥ १०३ ॥ उपादिष्टानि पूजाया-माददीत विचक्षणः॥मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितं ॥ १०४ ॥ अंगस्पृष्टं समाघ्रातं त्यजेत्पर्युषितं गुरुः ॥ देवस्य मस्तकं कुर्यात्कुसुमोपहितं सदा १०५ ॥ पूजाकाले देवताया-नोपरि भ्रामयेत्करं ॥ अगुरूशीरगुग्गुलु शर्करामधुचंदनैः ॥ १०६ ॥ धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकैः ॥ वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ॥ १०७ ॥ आरोप्यदर्शये-द्दीपानुच्चैः सौरभशालिनः॥स्वादूपदंशं विमलं पायसं सहशर्करं ॥ १०८ ॥ कदलीफलसं-युक्तं साज्यं मंत्री निवेदयेत् ॥ तत्रतत्र जलं दद्यादुपचारांतरांतरम् ॥ १०९॥ अंगादि लो-कपालांतं यजेदावरणान्यपि ॥ केसरेष्वग्निकोणादि हृदयादीनि पूजयेत् ॥ ११० ॥ नेत्रम

---

याद्दीपपात्रस्पर्शः दीपमुद्रादर्शनं च श्लोकस्तु सुप्रकाशो। महादीपः सर्वतस्तिमिरापहः । सबा ह्याभ्यंतरं ज्योतिर्दीपोयं प्रतिगृह्यतामिति । उक्तं च ज्ञानमालायां । सर्वनादप्रिया देवी नैकः कर्त्तुं च नाक्षमः । सर्वनादमयी घंटा स्वात्मा सर्वनादकृत् इति । नीचैरिति देवतानाभिदेशे उच्चैरिति । नेत्रदेश इत्याचार्याः इष्टयाद्यतिविशदधीः पादपर्य्यंतमुच्चैरित्युक्तेः बहुवर्त्तिदीपपक्षे विषमा एव वर्त्तिसंख्या ग्राह्या यदाहुः आरार्त्तिकं तु विषमबहुवर्त्तिसमन्वितमिति । प्रयोगसारे तु। तैलेन कपिलाज्येन सिक्थकेनापरेण च । स्नेहेन वर्त्तिसंयुक्तं दीपमुच्चैः प्रदर्शयेत् इति। तत्र सर्पिषा चेद्दीपस्तदा दक्षिणतः तैलेन चेद्वामत इति संप्रदायः एवं च सितावर्त्ति स्नेहदक्षिणतः र-क्षा चेद्वामतो निवेदनमिति । मंत्री निवेदयेदित्यनेनैतदुक्तम् । नैवेद्यमस्त्रमंत्रजप्तजलेन संप्रोक्ष येत् शैवागमे तु ततो मृत्युं जयेनैव वौषडं तेन सप्तधा। जप्तैः सदर्भशंखस्थैः सिंचेत्तत्तो यबिंदुभिरि ति । ततश्च चक्रमुद्रया ऽभिरक्ष्य वायुबीजेन द्वादशवाराभिमंत्रितजलेन हविः संप्रोक्ष्य तदुत्थवायु ना तद्दोषं संशोष्य दक्षिणकरतले ऽग्निबीजं विचिंत्य तत्पृष्टलग्नं वामकरतलं कृत्वा नैवेद्यं प्रदर्श्य तदुत्थाग्निना तद्दोषं दग्ध्वावामकरतले ऽमृतबीजं विचिंत्य तत्पृष्टलग्नं दक्षिणकरतलं कृत्वा नैवे द्यं प्रदर्श्य तदुत्थामृतधारया प्लावितं विभाव्य मूलमंत्रितजलेन संप्रोक्ष्य तदखिलममृतात्मकं ध्या-त्वा तत् स्पृष्ट्वा मूलमंत्रमष्टधा जप्त्वा धेनुमुद्रां प्रदर्श्यजलगंधपुष्पैरभ्यर्च्य देवतायै पुष्पांजलिं स-मर्प्य तन्मुखात्तेजो निर्गतमिति ध्यात्वा वामांगुष्ठेन मुख्यं नैवेद्यपात्रं स्पृष्ट्वा दक्षिणकरेण जलं गृहीत्वा स्वाहांतं मूलमंत्रम् सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम्। निवेदयामि देवेश सानुगा य गृहाण तदिति च श्लोकं जप्त्वा सांगाय सपरिवाराय देवाय नैवेद्यं समर्पयामि नम इति जल मुत्सृज्य नैवेद्यमुद्रां प्रदर्शयेत् । ततः सपुष्पांभ्यां हस्ताभ्यां नैवेद्यपात्रं त्रिः प्रोद्धरन् निवेदयामि भवते जुषाणेदं हविर्हरेति जपेत्। तत्र हरे इति पदस्थाने तत्तदेवतानामोह्यम् । यदाहुः अस्त्रो क्षितं तदरिमुद्रिकय भिरक्ष्य वायव्यतोयपरिशोषितमग्निदोष्णा । संदह्य वामकरसौधरसाभिपू र्णमंत्रामृतोक्षतमथाभिमृशन् प्रजप्यात्। मनुमष्टशःसुरभिमुद्रिकया परिपूर्णमर्चयतु गंधमुखैर्हरिम र्चयेत् अथ कृतप्रसवांजलिरास्यतोस्य विसरेच्च महः । वीतिहोवदमितातमुच्चरन् मूलमंत्रमथ नि-क्षिपेज्जलम्। अर्प्पयेत्तदमृतात्मकं हविर्दोर्युजा सकुसुमं समुद्धरन् । निवेद्यार्पणमंत्रोयं सर्वार्चा

ग्नेदिशां स्वत्रं ध्यातव्या अंगदेवताः॥ तुषारस्फटिकश्याम नीलकृष्णारुणार्चिषः ॥१११॥
वरदाभयधारिण्यः प्रधानतनवः स्त्रियः॥ पश्चादभ्यर्चनीयास्युः कल्पोक्ता वृत्तयः क्रमात्

सु निजाख्ययेति । ततो वामकरेण ग्रासमुद्रां दक्षिणकरेण प्राणादिमुद्राश्च दर्शयन् प्राणाय स्वाहे त्यादि मंत्रान्जपेत्। यदाहुः। ग्रासमुद्रां वामदोष्णा विकचोत्पलसंनिभां। प्रदर्शयन् दक्षिणेन प्राणा दीनां च दर्शयेत् । स्पृशेत्कनिष्ठोपकनिष्ठिके द्वे स्वांगुष्ठमूर्ध्ना प्रथमेह मुद्राम् । तथापरातर्ज्जनी मध्यमेस्यादनामिकामध्यमिके च मध्या । अनामिकातर्ज्जनिमध्यमा स्यात्तद्वच्चतुर्थी सकनिष्ठि कास्ताः । स्यात्पंचमो तद्वदिहोपदिष्टाः प्राणादिमुद्राः निजमंत्रयुक्ताः । प्राणापानोदानव्यान समानाः क्रमाच्च तुर्थ्यायुक्ताः ताराधारावध्वाचेड़ाः कृष्णाध्वनस्त एते मनव इति पुष्पादिमुद्रालक्ष णानि च । ज्येष्टांगुष्ठस्य पुष्पस्य युक्ता धूपस्य तर्ज्जनी । दीपस्य मध्यमानामा नैवेद्यस्य प्रकीर्त्ति- ता । इतरांगुलिसंयोगात् पंच मुद्राः प्रकीर्त्तिताः । गंधादिष्वपिभेदेषु मुद्राश्चेमाः प्रदर्शयेत् । मुद्रया यत्कृतं कर्म तदक्षयफलप्रदमिति । तत्रेति । उपचाराणा मंतरांतरा पुष्पाजलिं दत्वा जलं दत्वा स्वहस्तं प्रक्षालयेदिति परमगुरवः । इदानीं तंत्रांतरोक्त विशेषो लिख्यते । अनिर्मा- ल्यं सनिर्माल्य मर्चनं द्विविधं मतम् । दिव्यैर्मनोभवैर्द्रव्यै गंधपुष्पैः स्नगादिभिः । यदर्चनमनिर्मा ल्यं दिव्यभोगापवर्गदम् । ग्राम्यारण्यादिसंभूतैर्यागद्रव्यैर्मनोरमैः। भक्त्यैत् क्रियते सम्यक् सनिर्मा ल्यं तदर्चनम् । तत्र तत्वसागरसंहितायां निर्माल्यत्वमुक्तम् । जातमात्राणि पुष्पाणि घ्रातान्येव निसर्गतः।पंचभिश्च महाभूतैर्भानुना शशिना तथा । प्राणिभिश्च द्विरेकाद्यैः पौष्पैरेव न संशयः । अतो निर्माल्यचित्युक्तम् । निर्माल्यं चेदनेन फलं कथमित्याशंक्य तत्रैवोक्तम् । घ्रातपुष्पात्फलं सिध्येदल्पं नोमानसा यथा । तस्मादपरिहार्यत्वादन्यथा चानुपायतः। अल्पबुद्धित्वतो नृणां बाह्य पुष्पैर्भवेत्क्रियेति । तथा पुनस्त्रिधा पूजा उत्तमाधममध्यमा । अधिकारिनिमित्ताभ्यां भि द्यते शतधा पुनः । यागोपकारणैः कृत्स्नैः क्रियमाणोत्तमा मता । यथालब्धैर्विनिष्पाद्या द्र ष्टैः पूजा तु मध्यमा । पत्रपुष्पांबुनिष्पाद्या पूजाचाधमसंज्ञिता । विदिताखिलवेदार्थैर्ब्रह्मर्षि भिरकल्मषैः । क्रियामाणा तु या पूजा सात्विकी सा विमुक्तिदा । राजर्षिभिस्तपोनिष्ठैर्भगवत्त त्ववेदिभिः । या पूजा क्रियते सम्यक् राजसी सा सुखप्रदा । स्त्रीबालवृद्धमूर्खाद्यैर्भक्तैरक्षुद्रमान सैः । या पूजा क्रियते नित्यं तामसी सा प्रकीर्त्तिता । आसुरी सात्विकी चैव त्रासीदौर्बोधिकी तथा । साधनाभाविनी चेति पंचधा भिद्यते पुनः । यदि लंघनपर्यंतो व्याधिरात्मनि दृश्यते । तदा पूजा न कर्त्तव्या स्थंडिले प्रतिमासु च । न स्नानं दंतकाष्ठं वा कुर्याद्धोममथापि च । रवि मंडलमालोक्य प्रतिमामथ वा पुनः । मूलमंत्रं सकृज्जप्त्वा पुष्पं साक्षतमुत्क्षिपेत् । शांतो व्याधिभिरत्युग्रैः क्लांतश्चै वोपवासकैः।तेजसामपि कैर्वापि स्वकर्त्तव्यं समापयेत्।स्नात्वा देवमथाग्नींश्च गुरून्विप्रान् प्रपूज्य तु । एतावत्कालविच्छिन्ना पूजा युष्मत्प्रसादतः । न दोषो मेस्त्विति प्रार्थ्य पु नः पूर्ववदाचरेत् । अथ सूतमिनः पूजां वदाम्यागमचोदिताम् । स्नात्वा नित्यं च निर्वर्त्य मान स्या क्रियया तु वै । बाह्यपूजा क्रमेणैव ध्यानयोगेन पूजयेत् । यदि कामी न चेत्कामी नित्यं पू र्ववदाचरेत् । त्रासिनो वक्ष्यते पूजा यथैवागमचोदिता । लब्धं वा यदि वा लब्धं अर्घ्यपात्रादि

साधनम्। पूजोदकेन कर्त्तव्या न चेत्तोयं च विद्यते। यदि संपूजये देवं भावना कुसुमादिभिः। दौर्बाधिकीं प्रवक्ष्यामि पूजामागमचोदिताम्। मूर्खस्त्रीबालवृद्धाद्या दुर्बोधा इति भाविताः रत्न मंडलधर्मादिमतुष्कसुरगोंबुजम्। मूलमूर्त्तेस्तथांगानि तेषां पूजाविधीयते। अन्येषामपि सर्वेषां प्रोक्ता संक्षेपकर्मणि। सर्वोपचारवस्तूनामलाभे भावनैव हि। निर्मलेनोदकेनाथ पूर्णतेत्याह नार द इति। पूजाकरणासमर्थं प्रति। आराधनासमर्थस्य हृद्यादर्चनसाधनम्। यो दातुं नैव शक्नोति कुर्यादर्चनदर्शनम्। नैकं च यस्य विद्येत तस्योधो यात्येव नान्यथा। यस्तु भक्त्या प्रयत्नेन स्वयं संपाद्य चाखिलम्। साधनं चार्चयेद्विद्वान् स समग्रफलं लभेत्। योर्च्चयेद्विधिवद्भक्त्या परानीतैस्तु साधनैः। पूजाफलार्द्धमेवास्य न समग्रफलं लभेत् इति। अंगादीन्पुनरर्चयेदित्युक्तम्। तच्चा द्यंते सामान्येति। तयोर्ध्यानस्थानप्रयोगादक्रमादिशब्दार्थं च प्रकटयितुं पुनः संगृह्णाति। अंगादी ति पूजावसरस्य प्रागुक्तत्वात् अत एव वक्ष्यति। एवं संपूज्यविधिवन्निवेद्यांतमिति अंगमंगावृत्तिरा दो यत्र तत्। लोकपालावृत्तिरंते यत्र तत् अंगादिलोकपालांतमिति क्रियाविशेषणम्। लोकपा लशब्देनैव स्वाखावृत्तिग्रहणं ज्ञेयम्। एतच्च संभवाभिप्रायं बहुषु स्थलेषु तथादर्शनात् न नियमः अपिशब्दादत्रापि अंतरांतराजलं दद्यात् इत्यनुषज्यते। अंगपूजायाः सर्वसामान्यार्चनस्थानमाह। केसरेष्वति। अग्निकोणादित्यादिशब्देन नैरृतवायव्येशानकोणेषु। तदुक्तम्। वन्ह्यादीशां गमंगानि हृदादिकवचांतिकम्। अर्चयेत्पुरतो नेत्रमस्त्रं दिक्षु बहिः पुनरिति। अन्यत्रापि। हुत वहनिरृतिसमीरणशिवदिक्षु हृदादि वर्मांतमिति। अन्येतु। आग्नेयेशाननैरृतवायुकोणेष्विति व्याचक्षते। यदाहुः। इष्ट्वा हृदयमाग्नेयामीशान्यां तु शिरो यजेत्। नैरृत्यां तु शिखा पूज्या वायव्यां कवचं यजेत्। अभ्यर्च्य पुरतो नेत्रं दिक्षु शस्त्रमथार्चयेत् इति अन्यत्रापि आग्नीशासुरवाय व्य मध्यदिक्ष्वंगपूजनम्। यथागुरूपदेशं च निर्णयः। अत्राग्नेयादीनि पुरःकल्पित पूर्वदिगपेक्षया नतु प्रसिद्धानीति। नेत्रमग्र इति।कर्णिकायां देवस्य पुरतः शिरः प्रभृति मंत्रेषु पूजायां नमोंतता ज्ञे या। होमे तु हृदयादीनां स्वाशांतता। आद्यद्वितीययोस्तज्जातियुक्तत्वादेवन तत्प्रयोगः। अधिकर णसिद्धस्वायमर्थः तथाहि मंत्रे स्ववाक्यशेषत्वं गुणोपदेशात्स्यादित्यत्राधिकरणे स्वाहाकारेण वषट् कारेण वा देवेभ्यो हविर्ददानीति सामान्येन विहितया स्वाहाकारांततया पृथिव्यै स्वाहा अंत रिक्षायस्वाहेत्यादिषु मंत्रेषु नपुनस्तस्यावापः सामिधेनी साम्नदश्यवदुपसंहाराभावान्नान्यमंत्रेषु बा- धश्चेति स्थितं प्रधानत नवस्त्विय इति। पक्षद्वयं इति पद्मपादाचार्याः। उक्तंच। वरदाभयधारिण्यो महिलाकृतयोंगदेवताः पूज्या इति। आवरणानीत्युक्तानां स्थानमाह। पश्चादिति। पश्चादंगावृत्य नंतरमित्यर्थः इदमपि प्रायिकम्। तत्पूर्वमप्यावृत्तीनां सत्वात्। अंत इति बाह्ये। चतुरस्रे आवर णांतत्वस्य पूर्वमुक्तेः एतच्च व्याख्यानं वैहायसी मंत्रकोशे वायवीयसंहितायां च। तथा दर्शनात्ससं प्रदायाच्च। पूर्वादितोदिक्षु क्रमाच्च। अंते इंद्रमग्निं इत्यादीन् लोकपालान् ,यजेदितिसंबंधः तत्र सामान्यत इंद्राय नम इत्यादिप्रयोगे प्राप्ते विशेषमाह। मूलेत्यादिना अंते इत्यत्रापि संबध्यते तेने दं पदं सर्वांते देयमेवेत्यर्थः तच्च प्रयोगलिखने स्फुटी भविष्यति। मूलपारिषदान्वितानित्यस्यायम र्थः यदा शक्त्यावरणे इंद्रादिपूजा तदा प्रत्येकं शक्तिपारिषदायेति लोकपालानां च वज्रादीनां च विशेषणं ज्ञेयम्। एवं शिवपूजायाम्। प्रत्येकं शिवपार्षदायेति। एवं गणेशपूजायां प्रत्येकं गणेशपा-

॥ ११२ ॥ अंते यजेल्लोकपालान्मूलपारिषदान्वितान् ॥ हेति जात्यधियोपेतान्दिक्षु पूर्वा दितः क्रमात् ॥ ११३ ॥ इंद्रमग्निं यमं रक्षोवरुणं मरुतं विधुं ॥ ईशानं पन्नगाधीशमधऊर्ध्वे पितामहम् ॥ ११४ ॥ पीतो रक्तो सितो धूम्रः शुक्लो धूम्रः सितावुभौ ॥ गौरोरुणः क्रमादे ते वर्णतः परिकीर्तिताः॥ ११५ ॥ वज्रं शक्तिदंडमसिं पाशमंकुशकं गदां ॥ शूलं चक्रं प द्ममेषामायुधानि क्रमाद्विदुः ॥ ११६ ॥ पीतशुक्लसिताकाशविद्दुमद्रक्तासितासिताः॥ कु

---

र्षदायेति। एवं सूर्यपूजायाम्। प्रत्येकं सूर्यपार्षदायेति एवं विष्णुपूजायां प्रत्येकं विष्णुपार्षदायेति चरणद्वयो गोपनार्थं कृतः हेतीत्यत्रापि अंत इति संबध्यते। इंद्रायेत्यादेरंत इत्यर्थः अत्रापि प्र योगेजात्यधिपानां पूर्वमुच्चारणपश्चाद्धेतीनाम्। मूले तु हेति शब्दस्याल्पत्वात् पूर्वनिपातः हेतयः आयुधानि। जातयः सुरतेजः प्रेतरक्षोजलप्राणनक्षत्रभूतनागलोका सवाहनान्सपरिवारानिति ज्ञे यम्। वाहनानितु। ऐरावत अज महिष नर मकर मृग अश्व वृष भरथहंसाः तदुक्तमाचार्यैः जा- त्याधिपहेति परिवारांताः क्रमेण यष्टव्या इति। वक्ष्यति च स्वयं नित्यामंत्रैः लोकपालान् यजेदंते वाहनायुधसंयुतान् इति। सशक्तिकानितिज्ञेयम्। तदुक्तं वैहायसीमंत्रकोशे लोकेश्वरान्पार्थिवमंड ले सशस्त्रान् सशक्तीन् सहवाहनांश्च। सपार्षदांश्चंदनपुष्पधूपैर्यजेत् समंत्री निजवांछितायेति। स्व बीजाद्यानित्यपिज्ञेयम्। बीजानितु। लं रं मं क्षं वं यं शं हं नं कम्। तदुक्तं महाकपिलपंचरात्रे। या नुलोमतृतीयं तुद्वितीयं त्वविलोमतः। चतुर्थं फानुलोमेन रानुलोमेन चाष्टमम्। तृतीयं चानुलोमे न लविलोमात्तृतीयकम्। चतुर्थं सप्तमं वर्णं रानुलोमेन संस्थितम्। चतुर्थं थानुलोमेन तृतीयं ग- विलोमतः। स्वरोपांत्यत्वनामाभ्यां भेदितं सर्वमेव तत्। आनुपूर्वोद्धृतं बीजं ब्रह्मांतं वासवादिममि ति। एतानि दीर्घाण्यपीति केचित्। अनंतब्रह्मणोर्मायापाशबीज इति केचित्। तदुक्तं पृथ्व्यग्निपव नाद्यांत्य वरुणानिलसेश्वरैः। अनंतबिंदुसंयुक्तैरर्च्या पाशेन मायया इति। तत्ररक्ष इति. निरृतिम् पवनं वायुं विधुं सोमम्। पन्नगाधीशमनंतं पितामहं ब्रह्माणम्। दिक्षु पूर्वादितः क्रमादिति अत्र प्रसिद्धा एव पूर्वादयो ग्राह्याः। तदुक्तम्। प्रयजेत् स्वदिक्ष्वमलधीः स्वजात्यधीश्वरहेति यत्र परिवार संयुतानीति। नारायणीये चेंद्रादींश्च स्वदिक्षु इति। इंद्रादि कान् लोकपालान् स्वस्वदिक्षु समर्चये त् इति। तत्राष्टदिक्षु अष्टपूजयितव्याः निरृतिवरुणयोर्मध्ये अनंतम्। इंद्रेशानयोर्मध्ये ब्रह्माणम् । तदुक्तं वायवीयसंहितायाम्। विष्णुं नैरृते विधिमैश्वरे । बहिः पद्मस्यवज्राद्यानब्जांतान्यायुधा न्यपि। प्रसिद्धरूपास्वाशासु लोकेशानां क्रमाद्यजेत् इति। अत्र नैरृते ईश्वर इति तत्सामीप्य लक्ष कमिति ज्ञेयम्। अत्र क्वचिद्ब्रह्माणं पूजयित्वानंतं पूजयेदिति क्रमः सपौराणिक इति ज्ञेयं न तांत्रि कः महाकपिलपंचरात्र हयशीर्षपंचरात्र प्रपंचसारादि बहुतंत्रविरोधात्। तथाचाचार्याः अनंतब्र ह्मपर्यंतैः पंचमींद्रादिभिर्मता। चक्रपद्मांतिकैः षष्ठीवज्राद्यैरिति। प्रयोगो यथा। ॐ लं इंद्राय सु- राधिपतये सायुधाय सवाहनाय सपरिवाराय सशक्तिकाय विष्णुपार्षदाय नम इति। एवं ॐ रं अ ग्नये तेजोधिपतयेइत्यादि एषां पूजायां लोकपालमुद्रादर्शनीयाः यदाहुः पाणिमूले सुसंलग्ने शा- खाः सर्वाः प्रसारिताः लोकेशानामियं मुद्रा तेषामर्चासु दर्शयेदिति असिं खड्गं आकाशो नीलव- र्णः करवंदः नीलपुष्पोऽतसीप्रायोवृक्षः तत्पुष्पवर्ण इत्यर्थः तदुक्तमाचार्यैः कारवंदारुणवर्णा इति।

रविंदपाटलाभा वज्राद्याः परिकीर्तिताः ॥ ११७ ॥ एवं संपूज्य विधिवन्निवेद्यांतं ततोगुरुः ॥ दक्षिणे स्थंडिलं कृत्वा तत्राधाय हुताशनम् ॥ ११८ ॥ संस्कृत्य विधिवद्विद्वान्वैश्वदेवं समाचरेत् ॥ तत्र संपूज्य गंधाद्यैर्देवतामुक्तविग्रहाम् ॥ ११९ ॥ तारव्याहृतिभिर्हुत्वा मूलमंत्रेण मन्त्रवित् ॥ सर्पिष्मता पायसेन पञ्चविंशतिसंख्यया ॥१२०॥ हुत्वा व्याहृतिभिर्भूयो ग

---

तत्र प्रयोगो यथा। ॐ वं वज्राय वज्रलांच्छितमौलये सायुधाय सवाहनाय सपरिवाराय सशक्तिकाय विष्णुपार्षदाय नम इत्याद्यूह्यम्। तदुक्तं अर्चाबहिर्निजसुलक्षितमौलियुक्ताः स्वस्वायुधाभयसमुद्यतपाणिपद्मा इति। मूलेन मूर्त्तिं क्लृप्तेत्यादि निवेद्यांतमिति नित्यपूजायामपि समानम् विद्वान्विधिवत् संस्कृत्येत्यनेन वोक्षणादयश्चत्वारः संस्काराः घृतसंस्कारा अग्नेराज्याहुति क्रमेण गर्भधानादि संस्काराश्च कर्त्तव्या इत्युक्तं भवति। तारं व्याहृतिभिरिति। अत्राद्याश्चतस्रः सतारव्याहृतिभिः एका समस्तेन भूयो अनंतरं व्याहृतिभिर्हुत्वेति संबंधः पूर्ववदितिज्ञेयं पुनरनंतरं गंधाद्यैस्तां देवतां अर्चयेत्। आदिपदेन पुष्पधूपदीपनैवेद्यानि पीठस्थमूर्त्तौ योजयित्वा ऽतामित्यनुषज्यते। तत इत्यनेनैतदुक्तं भवति। पानार्थं जलं दद्यात्। मूलमंत्रांते। श्लोकस्तु समस्तदेवदेवेश सर्वतृप्तिकरं परम्। अखंडानंदसंपूर्णं गृहाण जलमुत्तममिति। ततः भोजनशेषोदकं च दत्वा निर्गततेजोदेवमुखे संहृत्य निवेद्यांशं विष्वक्सेनादिभ्यो दत्वेति तदुक्तम्। मुख्यादीशानतः पात्रान्नैवेद्यांशं समुद्धरेत्। सर्वदेवस्वरूपाय पराय परमेष्ठिने। श्रीरामसेनायुधाय विष्वक्सेनाय ते नमः। गणेशे वक्रतुंडाय सूर्ये चंडांशवेर्पयेत्। शक्तावुच्छिष्टचांडाल्यै शिवे चंडेश्वराय चेति देवतायाः पार्षदेभ्यो इत्यत्रापि। पारिषदशब्देनैतेषामपि ग्रहणम्। सर्वसंपत्यै देवतायै इति व्यधिकरणे चतुर्थीसमर्थयेदिति। अत्र नित्यपूजायां तांबूलछत्रादर्शचामराणिसमर्थबुद्धिः सवासनाक्लृप्त्यादर्पणमंगलानि च। मनोवृत्तिर्विचित्रा ते नृत्यरूपेण कल्पिता। ध्वनयो गीतरूपेण शब्दावाद्यप्रभेदतः।छत्राणि नवपद्मानि कल्पितानि मया प्रभो। सुषुम्णा ध्वजरूपेण प्राणाद्याश्चामरात्मना। अहंकारो गजत्वेन वेगः क्लृप्तोरथात्मना। इंद्रियाख्यश्वरूपाणि शब्दादिरथवर्त्मना। मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः। सर्वमन्यत्तथा क्लृप्तं तवोपकरणात्मनेति श्लोकान्पठित्वा यथाशक्ति मूलमंत्रं जप्त्वा। गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मेदेवि त्वत्प्रसादात्वयि स्थितेत्यनेन तं जपं देवतायै निवेदयेत् तदुक्तं शैवागमे मंत्रोश्लोकं पठित्वा तु दक्षहस्तेन शंभवे। मूलाणुनार्घ्यतोयेन दक्षहस्ते निवेदयेत् इति। ततः पराङ्मुखार्घ्यं दत्वा शंखं पूजयेत्। तदुक्तं मंत्रतंत्रप्रकाशे। पूजयेद्गंधपुष्पाद्यैः शंखं वै देववद्बुध इति। अन्यत्रापि त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया शंखे तिष्ठंति विप्रेंद्र तस्माच्छंखं सदार्चयेत् इति। ततः प्रदक्षिणां कुर्यात्। तत्र विशेषस्तंत्रांतरे एकां चंड्यां रवौ सप्त तिस्रो दद्याद्विनायके। चतस्रः केशवे दद्याच्छिवस्यार्द्धप्रदक्षिणमिति।ततःस्तुत्वा नत्वा नित्यहोमं कुर्यात् तत्र तंत्रांतरे विशेषः। अग्न्या धानादिकं कर्म नित्यहोमे न विद्यत इति। ततश्चुलुकोदकेन। इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं तदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहामां मदीयं च सकलं हरेः समर्प्पयेत्। ॐ तत्सदिति ब्रह्मार्प्पणमंत्रेणात्मनं समर्प्य स्वहृत्कमले संहारमुद्रया देवमु

न्धाद्यैः पुनरर्चयेत् ॥ तां योजयित्वा पीठस्थमूर्तौ वह्निं विसर्जयेत् ॥ १२१ ॥ अवशिष्टेन ह विषा विकिरेत्परितो बलिम् ॥ देवतायाः पार्षदेभ्यो गन्धपुष्पाक्षतान्वितम् ॥ १२२ ॥ ततो निवेद्यमुद्धृत्य शोधयित्वा स्थलं पुनः ॥ पञ्चोपचारैः संपूज्य दर्शयेच्छत्रचामरे ॥ १२३ ॥ कर्पूरशकलोन्मिश्रं तांबूलं च निवेदयेत् ॥ सहस्रावृत्य सञ्जप्य मूलमन्त्रमनन्यधीः ॥१२४ ॥ तज्जपं सर्वसंपत्यै देवतायै निवेदयेत् ॥ ततः शम्भोर्दिशि गुरुर्विकिरे पूर्वसञ्चिते ॥१२५॥ हेमवस्त्रादिसंयुक्तां कर्करीतोयपूरिताम् ॥ संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम् ॥ ॥ १२६ ॥ घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम् ॥ चलासनेन सम्पूज्य तामादाय गुरुः पुनः ॥ १२७ ॥ रक्षेति लोकपालानां नालमुक्तेन वारिणा ॥ देवाज्ञां श्रावयन्नन्तः परिवृत्य प्रदक्षिणम् ॥ १२८ ॥ अस्त्रमन्त्रं समुच्चार्य्य यथापूर्वं निवेशयेत् ॥ अभ्यर्च्य भूयो गन्धाद्यैरस्त्रं तत्र स्थिरासने ॥ १२९ ॥ ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् ॥ अस्त्रेण क्षालिते

---

पसंहरेदिति विशेषः। संहारमुद्रालक्षणमुक्तमेव । प्रसादस्वीकारे च तत्तद्देवताभक्तेन तत्तद्देवता प्रसादः स्वीकर्त्तव्य एव। पंचदेवतापूजायां तु विष्णोरेव शालिग्रामशिलास्पर्शादन्येषांच तथाव क्षचपरिशिष्टे। पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम्। अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत्। अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलास्पर्शात् सर्वं याति पवित्रतामिति। अन्योविशेषस्तंत्रांतरे। विक्षेपादथवा लिंग्याज्जपहोमार्चनांतरा। उत्तष्टति तदान्यासं षडंगं विन्यसेत्पुनरिति ॥ शंभोर्द्दिशि इति। ऐशान्यां कर्करीति सनालं जलपात्रम्। तस्माकर्कर्य्यां एवं भूतामस्त्रदेवतां पूजयेदित्यन्वयः। चलासनेनेत्युक्तितासनेन। तामिति गुरुः कर्करीमादाय नालमुक्तेन वारिणा लोकपालानां रक्षेतिदेवाज्ञां श्रावयन् अंतर्मंडपांतर्वेद्याः परितः प्रदक्षिणं परिवृत्य यथा पूर्वंतां निवेशयेदिति संबंधः तत्र कर्कर्यामुक्तिरासनेनिश्चलासने उपविश्य इत्यर्थः संस्कृते वन्हावि ति आचार्येण स्वकुंडे संस्कृते यतोग्निपटले वक्ष्यमाणाग्निजननकर्माचार्येणास्मिन्नेव काले कृतमस्ति तस्यानुवादः संस्कृतेवन्हाविति। तदुक्तं प्रयोगसारे। कुंडमस्त्रेणसंप्रोक्ष्य तत्राधाय हुताशनम्। सान्वाधानादिकं देवं यथावत्पूजयेत्ततः कृत्वा तंडुलनिर्वापं तस्मिन् क्षीरेपचेच्चरुमिति । नारायणीयेपि। तत्र संभृत संभारः शिवमिष्ट्वा विधानतः। मूलमूर्त्यंगविद्याभिस्तंडुलक्षेपणादिकम्। कृत्वा चरुं पचेत्क्षीरे पुनस्तद्विभजेत्त्रिधा निवेद्यैकं परं हुत्वा सशिष्योन्यदभुजेद्गुरुरिति। तंडुलानिति प्रसृतीनां पंचदशभिः परिमितानि इति शेषः तंडुलान् मूलमंत्राभिमंत्रि तान् क्षिप्त्वा मूलमंत्रेण क्षिप्त्वेत्यर्थः ततोऽस्त्रमनुं जपन् प्रक्षाल्य तत्रैव पात्रे इति ज्ञेयम्। प्रसृतिलक्षणमग्रे वक्ष्यते। स्रुवेणेति। संसिद्धे चरौ स्रुवेण कृत्वा मूलमंत्रेणाज्येन तत्राभिघारणं दद्यादिति संबंधः विधिवद्गुरुरित्यनेन मूलेन कुशेन समविभागः कार्य इत्युक्तम् । अग्नाविति। कुंडाग्नौ। देशिकः प्रजुहुयादित्यनेनैतदुक्तम्। साज्येन चरुणा तथेत्यग्निपटले मूलेन पंचविंशतिवारमुक्तं । होमोक्तानुसंधेय इति भुंजीतेति तत्र विशेषः सोमशंभौ। चरोस्तृतीयभागं तु ग्रासत्रितयसंमितम्। अष्टग्रासप्रमाणं वा दर्शनस्पर्शवर्ज्जितम्। पालाशे पुटके मुक्तौ भुक्तौ पिप्पलपत्रजे। रुद्रासंभोजयेन्मंत्री पूतेराचम

पात्रे नवे ताम्रमयादिके ॥ १३० ॥ तंडुलान् शालिसंभूतान् मूलमंत्राभिमंत्रितान् ॥ प्रसृतीनां पंचदश क्षिप्त्वा चास्त्रमनु जपेत् ॥ १३१ ॥ प्रक्षाल्य पात्रवदनं पिधाय कवचाणुना ॥ प्राङ्मुखो मूलमंत्रेण देशिकेंद्रश्चरू न्पचेत् ॥ १३२ ॥ स्रुवेणाज्येन संस्विन्नेदद्यात्तत्राभिधारणं ॥ मूलेन पश्चाततत्पात्रं कवचेनावतारयेत् ॥ १३३ ॥ अस्त्रजप्ते कुशास्तीर्णे मंडले विधिवद्गुरुः ॥ तं विभज्य त्रिधाभागमेकं देवायकल्पयेत् ॥ १३४ ॥ अन्यमग्नौ मजुहुयादपरं देशिकःस्वयं॥शिष्येण सार्द्धं भुंजीत विहिताचमनस्तदा॥१३५॥आचांतं शिष्यमानीय सकलीकृत्यदेशिकः ॥ तालप्रमाणं हृज्जप्तंक्षीरवृक्षादिसंभवं ॥ १३६ ॥ दंतकाष्ठं तदादद्याच्छिष्याय नियतात्मने ॥ दंतान्विशोध्य स पुनस्तत्प्रक्षाल्य विसर्जयेत् ॥ यथाविधि तमाचांतं शिखाबंधाभिरक्षितम् ॥ विधाय सार्द्धममुना वेद्यां दर्भास्तरे गुरुः ॥ १३८ ॥ शयीत तस्यां तांरा

---

येज्जलैरिति। संकलीकृत्येति मंत्रषडंगमस्यांगे न्यस्येति। तालेति। प्रसृतपाणेरंगुष्ठाग्रान्मध्यमाग्रं यावत्तालः। तदुक्तम्। अंगुष्ठमध्यमांगुल्यौ ये हस्तस्य प्रसारिते। तदग्रयोरंतरालं तालमाहुर्मनीषिण इति देशिको दद्यादित्यनेन मंत्र उक्तः। यत्पिंगलामते। मायादंडिनि तद्दद्यं प्रदद्यादसुनाचतदिति। विसर्ज्जनानंतरं तत्परीक्षाकर्त्तव्येति। विसर्ज्जयेदित्यनेनोक्तम्। प्रक्षाल्य निक्षिपेद्भूमौ वा मतो वामपाणिनेति। प्रयोगसारे विशेषः। सयथा नारायणीये दंतकाष्टं हृदाजप्तं क्षीरवृक्षादिसंभवम्। संमार्ज्य दंतांस्तच्छित्वा प्रक्षाल्यै तद्भुवि क्षिपेत्। दिक्षु पूर्वाद्यधोर्ध्वासु तस्याग्रपतनं क्रमात्। वृद्धिस्तपो म्रुतिर्वित्तं क्षयं शांतिर्गदो धनम्। सुखं वृद्धि परंदुःखं फलान्येतानिशंसतीति अन्यत्रापि धीश्रीतापवियोगोपमृत्यु शुभदुस्थताश्मैशादी। रदधावनाग्रपतने कुफले मूलाहुतितिलैर्दिशतीति। तथा अन्यत्रापि अथात्रचूतवृक्षस्य द्वादशांगुलमानतः दंतकाष्टं प्रदातव्यं तद्दंताग्रविचर्वितम्। ऊर्ध्वस्थं क्षेपयेत्तत्र मंडले पीठमुन्नयेत्। पश्चिमोत्तररुद्रे हि शुभः पातोन्यथाऽशुभः। दुर्निमित्तविनाशाय जुहुयाच्छतमस्त्रत इति। वायवीयसंहितायांतु। त्यक्तं तदंतपवनं दृश्यते गुरुणा यदि। प्रागुदक्पश्चिमेशाग्रं शिवमन्यत्क्षिवेतरम्। अशस्ताशामुखे तस्मिन् गुरुस्तद्दोषशांतये। शतमर्द्धं तदर्द्धं वा जुहुयान्मूलमंत्रत इति॥ १३७॥ यथाविध्याचांतं यथाविधिशिखाबंधाभिरक्षितं विधायेति संबंधः तत्राचमने विधि पूर्वं मयोक्त एव। शिखाबंधेतु यथाविधीत्यनेनै तदुक्तं भवति मूलमंत्रस्य सजातिशिखामंत्रेणाघोरादिमंत्रेण च शिखां वध्नीयात् इति गुरुः शयीतेति गुरुस्तस्यां वेद्यां अमुना शिष्येण सार्द्धं दर्भास्तरे तां रात्रि शयीतेति संबंधः वेद्यामिति सामीप्यमधिकरणार्थं। तदुक्तं नारायणीये पुनस्तं शिष्यमाचांतं शिखाबंधाभिरक्षितम्। कृत्वा वेद्यां सहानेन स्वपेदर्भास्तरेगुरुरिति। गुरुरित्यनेन देवदक्षिणभागे पूर्वशिरसा शिष्यं स्वापयेदित्युक्तं स्वप्रमाणवमाश्रित्य स्वापयेत्पूर्वमस्तकमिति पिंगलामत उक्तः। सोमशंभौ तु गृहस्थान् दर्भशय्यायां पूर्वशीर्षान्नरक्षितान्। हृदा सद्भस्मशय्यायां यतीन् दक्षिणमस्तकान् इति। वायवीयसंहितायां तु। देवस्य दक्षिणे भागे शिष्यं तमधिवासयेत्। अहतास्तरणास्तीर्णे सदर्भशयने शुचिः। मंत्रिते च शिवं ध्यायन् प्राक्शिरस्को निशि स्वपेत्। शिखाबद्धस्य सूत्रस्य शिखायास्तच्छिखां गुरुः। आवेष्टाहतवस्त्रेण तमाच्छाद्य च परितो भ

त्रिमधिवासः समीरितः ॥ इतिशारदातिलके चतुर्थः पटलः ॥ ततोग्निजननं वक्ष्ये सर्व तंत्रानुसारतः ॥ आचार्यकुंडे विधिवत्संस्कृते शास्त्रवर्त्मना ॥ १ ॥ अष्टादशस्युः संस्काराः कुंडानां तंत्रचोदिताः ॥ वीक्षणं मूलमंत्रेण शरेण प्रोक्षणं मतं ॥ २ ॥ तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणंस्मृतं ॥ अस्त्रेणखननोद्धारौ हृन्मंत्रेण प्रपूरणम् ॥ ३ ॥ समीकरणमस्त्रेण सेचनं

---

स्वना तिलसर्षपैः। कृत्वास्त्रजप्तै स्वहाद्ये दिगीशानां बलिंहरेदिति। स्वप्नमाणवमंत्रो वैष्णवेषु। मंत्रतंत्रप्रकाशे। ॐ हूंसकललोकाय विष्णवे प्रभविष्णवे। विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः। स्वप्नमाणवमंत्रोयं कथितो नारदादिभिरिति। शैव शाक्तादौ तु पिंगलामते तारो हिलिद्वयं शूलपाणये ठिठ ईरितः। स्वप्नमाणवमंत्रोयं शंभुना परिकीर्त्तित इति। तंत्रांतरोक्तो विशेषः। नभोऽजाय त्रिनेत्राय पिंगलाय महात्मने। वामाय विष्णुरूपाय स्वप्नाधिपतये नमः। स्वप्ने कथयमे तथ्यं सर्वकार्येष्वशेषतः। क्रियासिद्धिंविधास्यामि त्वत्प्रसादान्महेश्वरेति। मंत्रेण स्वापकाले देवं संप्रार्थ्यस्वपेत्। प्रातश्च स्वप्नपरीक्षाकार्या। तदुक्तं पिंगलामते। स्वप्ने शुभाशुभं दृष्टं पृच्छेत्प्रातः शिशुं गुरुः। शुभे शुभं वदेत्तस्य जुहुयादशुभे शतम्। अस्त्रेणेति क्रमात् प्रोक्तो विधिः शिष्याधिवासन इति अन्यत्रापि। क्रूरेधमामध्यमास्याददृष्टेतूत्तमोत्तमेति। महाकपिलपंचरात्रेपि गुरुपादार्चनं कृत्वा उपपवासीजितेंद्रियः। दर्भशय्यां गतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत्। कन्या छत्रं रथं दीपं प्रसादं कमलं नदीम्। कुंजरं वृषभं माल्यं समुद्रं फणिनं द्रुमम्। पर्वतं च हयं मेध्यमाममांसं सुरासवम्। एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात्। चांडालं करभं कारुं गर्त्तं शून्यममंगलम्। तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकंटकम्। प्रासादमतलं दृष्ट्वा नरो रोगमवाप्नुयात्। दृष्ट्वा दुःस्वप्नकं चैव होमात्सिद्धिमवाप्नुयात् इति। अत्रोपवासीति। रागतः प्राप्तभोजननिषेधः ननु वचनविहितवरंभोजननिषेधः। मंत्रतंत्रप्रकाशेपि अथ प्रातः समुत्थाय स्वप्नं दृष्ट्वा विचारयेत्। भद्रं भद्रे विजानीयादभद्रे जुहुयाच्छतमित्यादि। नारायणीयेतु। स्वप्नात्संवीक्षितान् शिष्यः प्रभाते श्रावयेद्गुरुं। शुभैः सिद्धिं परैर्भुक्तिरिति। अधिवासः समीरित इति। मंत्रग्रहणपूर्वदिने। पिंगलामते सद्यो धिवासोप्युक्तः सद्योधिवासमथवा प्रकुर्वीत यथाविधि इति मंत्रतंत्रप्रकाशेपि। दिनद्वये नैव कुर्याद्दीक्षाकर्मविचक्षणः। सद्यो धिवासनं वास्यादेकस्मिन् दिवसे यदि इति। अधिवासशब्दार्थ उक्तो महाकपिलपंचरात्रे। वसतेरधिपूर्वस्य भावेघञ्प्रत्यये कृते। अधिवास इति ह्येषप्रयोगः सिद्धिमेति च। गुर्वादिसहितो वासो रात्रौ नियमपूर्वकः। सोस्यार्थो हि निपातानामनेकार्थतया मत इति। ॥१३८॥इतिशारदातिलकटीकायां सत्संप्रदायव्याख्यायां पदार्थादर्शाभिख्यायां चतुर्थः पटलः॥ ४ ॥

श्रीगणेशाय नमः॥ अथाधिवासनदिवस एवास्त्रदेवतापूजानंतरं आचार्यकर्त्तव्यकुंडसंस्कारादिकर्माह। तत इति। शास्त्रवर्त्मना विधिवत्संस्कृते आचार्यकुंडे सर्वतंत्रानुसारतोऽग्निजननं वक्ष्य इति संबंधः॥ १ ॥ तमेवविधिमाह अष्टादशेति। शरेणेत्यस्त्रेण अत्र सर्वत्रास्त्रादिमंत्रा देयमंत्रस्यज्ञेयाः वीक्षणं मूलमंत्रेणेति प्रथमतउक्तेः केचनजातिमात्रमेवाहुः। तच्चासांप्रदायिकम्। प्रोक्षणमित्युत्तानेन हस्ताग्रेण। उत्तानेल हस्तेन प्रोक्षयेदितिसूत्रणात्॥ २ ॥ अभ्युक्षणमिति। मुष्टिबंधेन सर्वत्र सेच

वर्मणामतं ॥ कुट्टनंहेतिमंत्रेण वर्ममंत्रेण मार्जनं ॥ ४ ॥ विलेपनं कलारूपकल्पनं तदनंतरं ॥ त्रिसूत्रीकरणं पश्चाद्धृदयेनार्चनं मतं ॥ ५ ॥ अस्त्रेण वज्रीकरणं हृन्मंत्रेण कुशैः शुभैः ॥ चतुष्पथं तनुत्रेण तनुयाद्दक्षपाटनं ॥ ६ ॥ यागे कुंडानि संस्कुर्यात्संस्कारैरेभिरीरितैः ॥ अथवा तानि संस्कुर्याच्चतुर्भिर्वीक्षणादिभिः ॥ ७ ॥ तिस्रस्तिस्रो लिखल्लेखा हृदा प्रागुदगग्रगाः ॥ प्रागग्राणां स्मृतादेवा मुकुंदेशपुरंदराः ॥ ८ ॥ रेखाणामुदगग्राणां ब्रह्मवैवस्वतेंदवः ॥ अथवाषट्कोणावृत्तं त्रिकोणं तत्र संलिखेत् ॥ ९ ॥ वर्मणाभ्युक्ष्य तारेण योगपीठमथार्चयेत् ॥ वागीश्वरीमृतुस्नातां नीलेंदीवरसन्निभां ॥ १० ॥ वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् ॥ सूर्यकांतादिसंभूतं यद्वा श्रोत्रियगेहजं ॥ ११ ॥ आनीय चाग्निं पात्रेण क्रव्या-

---

नं उद्धार: खातमृद: पूरणमन्यमृदासेचनमभ्युक्षणमेव । अभेदात्वर्थानुवर्त्तनात् कश्चित्तमनुवर्त्तत इत्युक्तः ॥ ३ ॥ हेतिमंत्रेणेत्यस्त्रमंत्रेण । वर्ममंत्रेणेति । अग्रिमेषु चतुर्षु संबध्यते । तदुक्तं सोमशंभुना । संमार्जने समालेपं कलारूपप्रकल्पनम् । त्रिसूत्रीपरिधानं च वर्मणाभ्यर्चनं हृदेति ॥ ४ ॥ कलारूपकल्पनमिति । चंद्रसूर्याग्निकलारूपकल्पनं त्रिसूत्रीकरणमिति । सूत्रत्रयवेष्टनम् ॥ ५ ॥ वज्रीकरणमिति वज्रवद्दृढचिंतनम् । चतुष्पथमिति । मध्यात् । कुशैश्चतुर्दिक्षुमार्गचतुष्टयकरणम् । तनुत्रेणेति । कवचमंत्रेण । अक्षपाटनमिंद्रियोद्घाटनमित्येके । अन्येतुक्षपाटना राक्षसा: नविद्यंते क्षपाटना यस्मिन्तत् । हुंकारेणराक्षसनिवारणं कुर्यादित्यर्थः अन्येतुसांप्रदायिका: अटपटगतौ गतिर्ज्ञानं आदिक्षांतानां पटनं व्याप्तिः ॥ ६ ॥ अशक्तान्प्रत्याह । अथवेति ॥ ७॥ तिस्रइति । तिस्रस्तिस्रो रेखा लिखेत् । गाइत्यनेनैतदुक्तं भवति । प्रागग्राणामुदक्संस्थत्वं उदगग्राणां पूर्वसंस्थत्वमिति । सर्वाः प्रादेशमिता इत्यपि संप्रदायात् तदुक्तं सौत्रामणितंत्रे । प्राची पूर्वमुदक्संस्थं दक्षिणारंभमालिखेत् । उदगग्रं पुरः संस्थं पश्चिमारंभमालिखेत् । तिस्रस्तिस्रोलिखित्वैवं प्रोक्षयेद्वाग्भवेनचेति । अथवा षट्कोणावृतं त्रिकोणं लिखेत् । अत्र केचित् । षट्कोणवृत्तत्रिकोणमिति पाठंपठन् । तदज्ञानविजृंभितं । तथाचाचार्याः । अथवा षट्कोणावृतत्रिकोणके गुरुजनोपदेशेनेति तथाच यामले षट्कोणेनावृतं देवि त्रिकोणं चात्र संलिखेत् इति । अन्यत्रापि कृत्वा रेखाश्च मध्यतः षट्कोणं त्रिकोणं चेति ॥ ८ ॥ सर्वाणीति एतानि प्रणवेनाभ्युक्ष्य योगपीठं वागीशीयोगपीठम् । मंडूकादि परतत्वांतं संपूज्य नवमोक्ताः पीठशक्तीः संपूज्य । ह्रीं वागीश्वरी वागीश्वर्या योगपीठाय नम इति योगपीठं पूजयेत् । अत्र तारशब्देन यथास्वं तत्तन्मंत्रेषु पंचप्रणवानामपि ग्रहणं ज्ञेयम् । प्रपूजयेदिति पीठे शक्तिबीजेन वागीशीं साध्यमंत्रेण वागीशं तदुक्तं गणेश्वरविमर्शिन्याम् । शक्तिबीजेन वागीशीं वागीशं साध्यमंत्रत इति अन्यत्रापि साध्यमंत्रेण तं देवमित्यादिना । सूर्यकांतादीत्यादिशब्देन अरणिजन्यः । तदुक्तम् । जातं मार्त्तंडकांताद्धुतवहमरणेः श्रोत्रियागारजंचेति । श्रोत्रियगेहजमिति । श्रोत्रियत्वं वेदाध्ययनेन तत्कर्मानुष्ठातृत्वेन च तेन साग्नित्वेतात्पर्यम् । तदुक्तं वसिष्ठसंहितायाम् । प्रमथ्यविधिनैवाग्निमाहिताग्नेर्गृहादपि आनीयचदधीताचेति ॥ १० ॥ ११ ॥ पात्रेणेति । कांस्यादिपात्रेण पात्रांतरपिहितेनेत्याचार्याः अन्यत्र श्रोत्रियागारजं वापि सूर्यकांतोद्भवं

दांशं परित्यजेत्। संस्कुर्यात्तं यथान्यायं देशिकोवीक्षणादिभिः ॥ १२ ॥ औदर्यबैंदवा-ग्निभ्यां भौमस्यैक्यं स्मरन्वसोः ॥ योजयेद्वह्निबीजेन चैतन्यं पावके तदा ॥ तारेण मंत्रितं मंत्री धेनुमुद्रामृतीकृतं ॥ अस्त्रेण रक्षितं पश्चात्तनुत्रेणावगुंठितं ॥ १४ ॥ अर्चितंत्रिः परिभ्राम्य कुंडस्योपरि देशिकः ॥ प्रदक्षिणं तदा तारमंत्रोच्चारणपूर्वकं ॥ १५ ॥ आत्मनोभिमुखं वन्हिं जानुस्पृष्टमहीतलः ॥ शिवबीजधिया देव्या योनावेव विनिक्षिपेत् ॥ १६ ॥ पश्चाद्देवस्य देव्याश्च दद्यादाचमनीयकं ॥ ज्वालयेन्मनुना नेन तमग्निमथ देशिकः ॥ १७ ॥ चित्पिंगलहनदहपचयुग्मान्युदीर्यच ॥ सर्वज्ञाज्ञापय स्वाहा मंत्रोयं प्रागुदीरितः ॥ १८ ॥ अग्निं प्रज्वलितं वंदे जातवेदंहुताशनं ॥ सुवर्णवर्णममलं सामिद्धं विश्वतोमुखं ॥ उपतिष्ठेत विधिवन्मनुनानेन पावकं ॥ विन्यसेदात्मनो देहे मंत्रैर्जिव्हाहविर्भुजः ॥ २० ॥ लिंगपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः ॥ वन्हीरार्घीशसंयुक्ताः सादियांताः सबिंदवः ॥ २१ ॥ वर्णमंत्राः समुद्दिष्टाजिव्हानां सप्तदेशिकैः ॥ जिव्हास्तास्त्रिविधा प्रोक्तागुणभेदेन कर्मसु ॥२२॥ हिरण्या गगनारक्ताः कृष्णान्या सुप्रभा मता ॥ बहुरूपातिरक्ता च सात्विक्यो यागकर्मसु ॥ २३ ॥ पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता ॥ लोहितानंतरं श्वेता धूमिनीच कराालिका ॥ २४ ॥ राजस्योरसनावन्हेर्विहिता काम्यकर्मसु ॥ विश्वमूर्तिस्फुलिंगिन्यौ धूम्र

---

तु वा । अरणीसंभवं वापि चित्रं स्वर्णादिभाजन इति । अग्निरपि पात्रांतरेण पिहिते ताम्रपात्रादिके शुभे । अग्निप्रणयनं कुर्याच्छरावे ताद्दशेपिवेति अन्यत्रापि । चेत्रान्निचिप्य पात्रेवरकनकमये ताम्रपात्रेऽथवापि मृत्पात्रे वापिधायानलविपुलमतिरिति यत्तु स्मृतिसारे शरावे भिन्नपात्रे वा कपाले वोल्मुकेपिवा । नाग्निप्रणयनंकुर्याद्व्याधिद्दानिभयावहमिति । तत्र :मुख्यपात्रसंभवेशरावो नग्राह्य इति तात्पर्यम्। क्रव्यादांशं परित्यजेदिति। अस्त्रमंत्रेण नैर्ऋत्यइति ज्ञेयम् । तदुक्तम्। अस्त्रेणाग्निं समधाय कवचेन पिधायच। क्रव्यादांशं तुचास्त्रेण नैर्ऋत्ये संत्यजेत्प्रिये इति । अन्यत्र वन्हिबीजेन क्रव्यादांशत्यागः। तदुक्तं वन्हिबीजेन मंत्रीक्रव्यादांशं त्यजेत्तं तदनुच मनुना शोधयेदस्त्रकेनेति। मंत्रमुक्तावल्यां तु विशेषः। आनीयास्त्रेण नैर्ऋत्ये क्रव्यादांशं परित्यजेत्। देवांशं मूलमंत्रेण स्थापयेत्पुरतः सुधीरिति। यथान्यायमित्यनेन प्रोक्षणाभ्युक्षणे तथा। कार्येयथानीतोचाग्निरित्थितोत्युक्तम्। वीक्षणादिभिरित्यनेन शब्देन संस्कारत्रयम्॥ १२ ॥ औदर्येति। बिंदुः प्रसिद्धः परमात्मरूपः तस्याग्नीषोमत्वात् तद्भवो वन्हिर्बैंदवः अन्ये बिंदुभ्रूमध्यमिति भौमस्य पार्थिवस्य वसोरग्नेः। तारेणेति । पूर्ववत्तारशब्दार्थः अमृतीकृतमित्यमृतबीजेनेत्याचार्याः उक्तं चामृतीकरणम् । ततो विदध्याज्जलबीजेन सबिंदुना क्रशानोरिति। रक्षितमिति दिग्बंधेनप्रदक्षिणमिति पूर्वेणसंबध्यते ॥ १४ ॥ तारमंत्रोच्चारणेति। तारस्य मंत्रस्य मूलमंत्रस्योच्चारणम् । तदुक्तं योनावेनं विन्यसेत्स्वाभिवक्त्रं पश्चादग्निं मूलमंत्रेण मंत्रीति। अत्रापि तारशब्दार्थः पूर्ववत्। रंवन्हिचैतन्याय नमइति पद्मपादाचार्याः अन्येतु तारशब्देन हुंकारम्। मंत्रशब्देन वन्हिचैतन्याय नम इत्याहुः। तदुक्तं हुं वन्हिपूर्वं चेतन्यं चतुर्थ्यंतं नमोन्वितम्। मंत्रमुच्चार्य पश्चात्तं वन्हिमुत्थाप्य देशिकः। भूमिष्टजानुको

भूत्वा कुंडस्योर्द्ध प्रदक्षिणम्। भ्रामयित्वा त्रिधा तत्र वागीशीगर्भगोचरे शिवबीजमिति ध्यात्वा निक्षिपेदाशुशुक्षणिमिति॥ १५॥ शिवबीजधियेति शैवे तत्तंत्रे तथोक्तेः सएव वक्ष्यति च। नामापि शिवाग्निरिति कल्पयेत् इति। नारायणीयेपि। शिवाग्निं जनयित्वेति अतएव संहितायाम्। लक्ष्मीमृतुमती तत्र प्रभोर्नारायणस्य च। ग्राम्यधर्मेण संजातमग्निं तत्र विचिंतयेत् इति। अतएव ग्रंथकृदपि वन्हेः पितराविति साक्षान्यतो वक्ष्यति। अग्नौच जुहुयाद्दैष्णवे वन्हाविति। जानुभ्यां स्पृष्टं धरातलं येनेति विग्रहः। वायवीयसंहितायां तु। वन्हिबीजं समुच्चार्यत्वादधीताग्निमासने। योनिमार्गेण वा तद्ददात्मनः संमुखेनचेति॥ १६॥ आचमनादिकमित्यादिशब्देन आचमनोत्तरोपचारग्रहणम्। उपचारैः प्रपूजयेदित्युक्तेः ज्वालयेदिति। अनेनवक्ष्यमाणेन। तत्रविशेषः जुहुषुश्च हुताग्निश्च पाणिशूर्प्पस्रुवादिभिः। नकुर्यादग्निधमनं न कुर्याद्व्यजनादिना। मुखेनैव धमेदग्निं मुखादेषो ह्यजायत। नाग्निमुखेनेति तु यत् लौकिकेयोजयेत्तु तदिति॥ १७॥ चित्पिंगलमिति। शब्दकर्मणि द्वितीया मंत्रेतु संबुध्यंतम्। हनेत्यादित्रयाणां युग्मानि। ज्वालयेन्मनुनानेनेति योमंत्रः प्रागुदीरितउद्दिष्टःसमत्रोयमीरित क्वचित्तु समुदीरित इत्येव पाठः॥१८॥अत्राग्निज्वालने। ज्वालिनीमुद्रां प्रदर्शयेत्। तल्लक्षणंतु। मणिबन्धौ समौ कृत्वा करौ तु प्रसृतांगुली। मध्यमे मिलिते कृत्वा तन्मध्येंगुष्टको क्षिपेत्। इयं सापरमामुद्राज्वालिनी होमकर्मणि इति। विधिवदित्यनेनैतदुक्तं उत्थायकृतांजलिपुटोभूत्वा मंत्रंजपेदिति। अनेनाग्निमित्यादिना सर्वत इति सप्तमंस्थानं सर्वांगे इत्यर्थः। स सर्वांगेषु जिह्वास्वित्याचार्योक्तिः इदं च न्यासस्थानं बहुरूपायाः पूजायास्तथा वक्ष्यमाणत्वात्। उक्तंच। सलिंगहृद्गुर्ध्वाक्षि नासा नेत्रेषु च क्रमात्। विन्यसेदतिरक्तां ताः सर्वांगे बहुरूपिणीमिति। उद्देशक्रमस्तु बीजोद्धारे सौकार्य्यायेति अवधेयं। वन्ही रेफः इरोपः अधाशः उणतश्चुताः सादियांताः सकारादि यकारांताः वैपरीत्येन। एते वर्णाः सबिंदवो मंत्राः भवंति। जिह्वानामिति। चिविधानामपि। तत्रप्रयोगः सन्यूं हिरण्यायै नम इत्यादिकल्याणरेतसो अग्नेः अधिदेवता आह। अमर्त्तेति। अत्र जिह्वानामधिदेवताकथनं तत्तत्स्थाने न्यासार्थं च। तेन सुरेभ्यो नम इत्यादि। अन्येतु सुराधिपतये हिरण्यायै नम इत्यादिवदंति। किं च तत्तद्देवतां जिह्वामध्यस्थां बुध्वा तस्यां तस्यां तत्तद्द्रव्यैस्तत्तत्कर्मणि क्रियमाणे फल सिद्धिरितिदर्शनार्थं तथाचाचार्याः जिह्वासु त्रिदशादीनां तत्तत्कार्यसमाप्तये। जुहुयाद्वांछितां सिद्धिं दधुस्ता देवतामता इति।गणेश्वरविमर्शिन्यां द्रव्यविशेषोप्युक्तः। एधांसि च हिरण्यायां गगनायां चरुं घृतं। सिद्धार्थं बहुरूपायां रक्तायां तु यवांस्तथा। कृष्णायां तुहुनेल्लाजान् सुप्रभायां तु सक्तुभिः। तिलांश्चैवातिरक्तायां कनकायां तु सर्वदा। सर्वद्रव्याणि जुहुयात् साधकः सर्वकर्मस्विति। कर्माण्यपि तंत्रांतरे। फलं तुकामभेदेन क्रमादासामुदीर्यते। वश्याकर्षणयोराद्यागगनास्तंभने मता। विद्वेषमोहयो रक्ता कृष्णा मारणकर्मणि। सुप्रभा शांतिके पुष्टा सुरक्तोच्चाटने मता। एकैव बहुरूपातु सर्वकामफलप्रदेति। तनौस्वात्मगइत्यनुषज्यते। एवमग्रेपि। उक्तेन प्राक्पटलोक्तेन प्रयोगस्तु सहस्रार्चिषे हृदयाय नमइत्यादि। मूर्त्तीति॥ २०॥ अंसपार्श्वकटिषु वामेषु अंधुगुदं। केचन लिंगमित्याहुः पश्चात् त्कटिपर्श्वांसकेषु दक्षिणेषु तारागनय इति। तारः प्रणवः अग्नये इति पदं एते आदौ यासांता इति विग्रहः नत्यंता इति न्यासे पूजायां च होमेतु स्वाहांतत्वमित्युक्तं। प्रयोगस्तु। हुं अग्नये जा-

वर्णामनोजवा ॥ २५ ॥ लोहितान्या करालाख्या काली तामस्य ईरिताः ॥ एताः सप्त नपुज्यन्ते क्रूरकर्मसु मन्त्रिभिः ॥ २६ ॥ स्वस्वनामसमाभाः स्युर्जिह्वाः कल्याणरेतसः ॥ अमर्त्यपितृगंधर्वयक्षनागपिशाचकाः ॥ २७ ॥ राक्षसाः सप्त जिन्हानामीरिता अधिदेवताः ॥ वन्हेरङ्गं मनून्यस्येत्तनावुक्तेन वर्त्मना ॥ २८ ॥ सहस्रार्चिः सप्तपूर्ण उत्तिष्ठपुरुषः पुनः ॥ धूमव्यापी सप्तजिन्हो धनुर्धर इति क्रमात् ॥ २९ ॥ षडंगमनवः प्रोक्ताजातिभिः सहसंयुताः ॥ मूर्तीरष्टौ तनौ न्यस्येद्देशिको जातवेदसः ॥ ३० ॥ मूर्द्धांसपार्श्वकव्यं धुकटिपार्श्वांसके पुनः ॥ प्रदक्षिणवशान्यस्येदुच्यन्ते ता यथाक्रमात् ॥ ३१ ॥ जातवेदाः सप्तजिन्हो हव्यवाहनसंज्ञकः ॥ अश्वोदरजसंज्ञोन्यः पुनर्वैश्वानराह्वयः ॥ ३२ ॥ कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः ॥ तारागनये पदाद्याः स्युर्नत्यंतावह्निमूर्त्तयः ॥ ३३ ॥ आसनं कल्पयित्वाग्नेर्मूर्तिं तस्य विचिंतयेत् ॥ इष्टं शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयंतं जपाभम् ॥ ३४ ॥ हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः ॥ परिषिंचेत्ततस्तोयैर्विशद्धैर्मेखलो परि ॥ ३५ ॥ दर्भैरग्रैर्मध्यस्थमेखलायां परिस्तरेत् ॥ निक्षिपेद्दिक्षु परिधीन् प्राचीवर्जं गुरूत्तमः ॥ ३६ ॥ प्रादक्षिण्येन सम्पूज्यास्तेषु ब्रह्मादिमूर्तयः ॥ ध्यातं वह्निं यजेन्मध्ये गंधाद्यैर्मनुनामुना ॥ ३७ ॥ वैश्वानरजातवेदपदे पश्चादिहावह ॥ लोहिताक्षपद

---

तवेदेसनमो मूर्ध्नि इत्यादि। आसनं कल्पयित्वेति तनावित्यनुषज्यते। मंडूकादिपरतत्वांतं चतुर्दशपटलोक्त पीठशक्तिपूर्वकं रं अग्न्यासनायनम इति येषां देहेन्यासआसन कल्पना इष्टमिति। इष्टं वरं दक्षाधः कराद्वामाधः करपर्यंतमिष्टादीनि ध्येयानि स्वस्तिकयुक्ता अभीतिरिति मध्यमपदलोपी समासः आकल्पोभूषा तत इति। अंतर्यागक्रमेण स्वहृदये वन्हिं संपूज्येत्यर्थः परिस्तरेदिति। प्रागुदगग्रतया। तदुक्तं। गणेश्वरविमर्शिन्यां पूर्वाग्रैरुत्तराग्रश्चदर्भैरग्निं परिस्तरेत् इति। अन्यत्रापि। अथ दर्भैर्हरिधनददिशाग्रैः परिस्तीर्यकुंडमिति। गुरूत्तम इत्यनेन एकमेखलादिकुंडे पिपरिस्तरणादिकार्यमित्युक्तं। यदाहुः। एकमेखलकुंडे निश्चितमतिर्मेखलाधस्तात् परिस्तरे तद्विमेखले द्वितीयमेखलोपरि त्रिमेखले तदंतरा मेखलोपरि न्यसेत् इति। प्राचीवर्ज्यं दिक्षु परिधीन्निक्षिपेत् इत्यन्वयः परिधयस्तु कात्यायनोक्ताः। परिधीन्परिदधात्यार्द्रानेकहस्त्चीयान् बाहुमात्रान् पालाशवैकंकतकाश्मर्य्यबैल्वानिति स्थंडिलेपि परिस्तरणप रिधिक्षेपोवश्यं कर्त्तव्यः मध्यास्थमेखलायामित्युक्तत्वात्। स्थंडिले मध्यस्थमेखलनामभावात् परिस्तरणाद्यपि नकार्यमिति नमंतव्यं। यतस्तदग्निस्थाप नांगं नकुंडांगं ग्रंथकृतातु स्वोक्तत्रिमेखलकुंडेषु परिस्तरणादिकर्त्तव्यमित्यपेक्षायां मध्यस्थमेखलायामित्युक्तं। यदाहुः। वाह्येथस्थंडिलं वा त्रिपरिधिसहितं प्रागुदग्रास्तदर्भमिति। अन्यत्रापि। स्थंडिलके सिकतानां वाह्येथ त्रिन्यसेत्परिधीनिति। मध्येइति। मंडूकादिपीठमंत्रांतमंत्रैः पूजितकुंडमध्य इत्यर्थः। तदुक्तं सौत्रामणितंत्रे कुंडमध्ये विधानवित्। पद्मासनांतमाधारशक्त्यादिमनुभिः क्रमात्। उपर्युपरि संपूज्य वन्हिरासनशक्तयः पूर्वादिदलमूलेषु मध्ये पूज्याः क्रमेणत्विति। अग्निमंत्रमाह। वैश्वानर इति वन्हिजाया स्वाहा ॥ ३८ ॥ अग्न्यावरणपूजामाह। म-

ध्यइति। अनेन षट्कोणकर्णिकमष्टदलमग्निपीठमुक्तं। ज्वालाद्य इति। जिह्वाध्यानं। तदुक्तं प्रयोगसारे। जिह्वाः सर्वाः परिज्ञेया ज्वालाभासाः स्वरूपतइति। अपिभिश्चक्रमः तत्र षट्सुकोणेषु मध्येपि जिह्वायजेदिति संबंधः तत्र षट्सु कोणेषु इशादिवायुकोणांतं। यथान्यासं षट्जिह्वाः संपूज्य यथान्यस्तां बहुरूपां मध्ये पूजयेदिति संप्रदायविदः। तदुक्तं सोमशंभौ। रुद्रेंद्रवन्हिमांसाद वरुणानिलगोचरे। हिरण्याद्य स्थितावन्हे रसनाः षट्स्वनुक्रमात्। मध्यतो बहुरूपांत्विति। गणेश्वरविमर्शिन्यामपि। मध्ये च कोणषट्के च जिह्वाः संपूजयेत्ततः हिरण्या तप्तहेमाभा शूलपाणिदिशे स्थिता। वैदूर्यवर्णा गगना प्राच्यां दिशि समाश्रिता। तरुणादित्यसंकाशारक्ताजिह्वाग्निदिक्स्थिता। कृष्णानीलाब्जसंकाशा नैर्ऋत्यां दिशिसंस्थिता। सुप्रभापद्मरागाभा वारुण्यां दिशि संस्थिता। अतिरक्ता जयाभासा वायव्यां दिशि संस्थिता।बहुरूपा यथार्थाभा दक्षिणोत्तरसंस्थिता। एता ज्वाला रुचा पीता वराभययुता अपि इति। अन्यत्रापि। कोणषट्के च मध्येच जिह्वा अंगानि केसर इति वायवीयसंहितायामपि। हिरण्या प्रागुदक्जिह्वा कनकापूर्वसंस्थिता। रक्ताग्नेयांनैर्ऋते च कृष्णान्यासुप्रभा मता। अतिरक्ता मरुज्जिह्वा स्वनामानुगुणप्रभा त्रिशिखा मध्यमाजिह्वा बहुरूपा समाह्वया। तच्छिखैका दक्षिणतो ज्वलंती वामतः परा। स्वबीजानंतरं वाच्या इति। यथाश्रुत पाठक्रमादरिणः केचन प्रथमां मध्ये ततः शिवकोणादिप्रादक्षिण्येन वायुकोणांतं यथान्यस्ताःषट् जिह्वाः पूजयेदित्याहुः। तेषामयमभिप्रायः तत्तत्कर्मणि तां तां मध्यस्थामिष्ट्वा ईशादि अन्या यजेदिति। तदुक्तं। कुंडस्यमध्ये त्वथसाप्रशस्ता जिह्वा हिरण्या भुवि कर्मणादौ। स्तंभनादिषु मता कनकांतर्द्वेषणादिषु मता खलुरक्ता। मारणे निगदिता भुवि कृष्णा सुप्रभा बुधवरैरिहशांत्या। उच्चाटनेतिरक्तं तरिति। संप्रदायविदुक्तं तुदीचायामेव बहुरूपायाः सर्वकामफलप्रदत्वात्। उक्तं च। तनुते मध्ये शुभानि सदेति। तंत्रांतरेतु। अन्येत्वागमपारगा मलधियः प्राहु र्बुधाः सुप्रभां द्वारेः ककुभिस्थितां पितृपतेः कृष्णां हिरण्यां पुनः। वारुण्यां बहुरूपकां पुरभिदो रक्तामुदीच्यां स्थितामाग्नेय्यामतिरूपकां च कनकां कुंडस्यमध्ये स्थितामिति। एतदनंतरमधिदेवतापूजाप्येषु स्थानेषु ज्ञेया। उक्तमार्गेणेति। पूर्वपटलोक्तेन। एतदनंतरं मातृभैरवावृतिमपीच्छति पद्मपादाचार्याः। मूर्त्तीपूजयेदिति। यथान्यस्ताः तत्र पूजा प्रकारः सहस्रार्चिषे हृदया यनमः स्वस्तिपूर्णाय शिरसे स्वाहा। नम इत्यादिष्वविति। मेखलाश्रितदर्भेष्विति। प्रसिद्धपूर्वादिदिक्ष्वित्यपिज्ञेयं। यदाहुः। मध्ये च कोणषट्केच जिव्हाभिः केसरेष्वपि। अंगमंत्रैस्ततोबाह्ये त्वष्टाभिर्मूर्त्तिभिः क्रमात्। मेखलाश्रितदर्भेषु दिक्पतीन्पूर्वतःक्रमात् इति उक्तलक्षणान् प्राक्पटलोक्तस्वरूपान् पश्चादित्यनेन सूचितः तंत्रांतरोक्तोवश्यकर्त्तव्योविशेषो लिख्यते। स्ववामभागे प्रागग्रान् कुशानास्तीर्य तेषामुपरि प्रणीतापात्रे आज्यस्थाल्यौ स्रुक्स्रुवौविखंसितौ कुशमूलकौ पंचपलाशसमिधः एवमुक्तान्यपि पात्राणि द्वंद्वशोधोमुखानि निधाय मूलेन पवित्रेण प्रोक्षितानि पात्राण्युत्तानीकृत्य प्रणीतापात्रंजलेमापूर्य तत्र तीर्थान्यावाह्य पवित्रमक्षतादि च निक्षिप्योत्पूय उत्तरस्यां दिशि संस्थाप्य तज्जलं किंचित्प्रोक्षणी पात्रे निधाय तेन जलेन नमोमंत्रेण मूलमंत्रेण वा सर्वं हवनीयद्रव्यजातं प्रोक्ष्य अत्र कर्मणि कृता कृतावेक्षकत्वेन त्वं ब्रह्मा भवेति ब्रह्माणमावाह्याभ्यर्च्यासने उपवेशयेदिति तदुक्तं संहितायाम्। पा

स्यांते सर्वकर्माणि साधय ॥ ३८ ॥ वह्निजायावधिः प्रोक्तो मंत्रः पावकवल्लभः ॥ मध्ये ष-ट्स्वपि कोणेषु जिह्वाज्वालारुचो यजेत् ॥ ३९ ॥ केसरेषूक्तमार्गेण पूजयेदंग देवताः ॥ दलेषु पूजयेन्मूर्तीः शक्तिस्वस्तिकधारिणीः ॥ ४० ॥ दलाग्रे मातरः पूज्याः सासितांगादिभैरवाः ॥ लोकपालांस्ततो दिक्षु पूजयेदुक्तलक्षणान् ॥ ४१ ॥ पश्चादादायपाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ ॥ त्रिः संप्रतापयेद्वह्नौ दर्भानादापदेशिकः ॥ ४२ ॥ तदग्रमध्यमूलानि शोधयेत्तैर्यथाक्रमात् ॥ गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणे नतौ ॥ पुनः प्रताप्य तौ मंत्रीदर्भानग्नौ विनिः क्षिपेत् ॥ आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशास्तरे ॥ ४४ ॥ आज्यस्था

---

ल्याखासाद्य विधिवत् द्वंद्वशश्चापि मंत्रवित्। तान्यवोक्ष्य पवित्रेण चोत्तानानि विधाय च। पुनः प्रक्षालयेत्पात्रं परिपूर्यं शुभांबुना। दत्वाक्षतान्पवित्रं च तदुत्पूय निधाय तत्। दिश्युत्तरस्यां तत्पात्रं प्रणीतेत्युच्यते बुधैः। ततः किंचित्प्रणीतांबुप्रोक्षण्यादाय तज्जलैः। यज्ञसाधन संभारं प्रोक्षये न्मूलमंत्रतः। ततो ब्राह्मणमावाह्येत्यर्चयेन्मूलमंत्रत इति। तत्राधोमुखेन हस्तेन सेचनं अवोक्षणम्। अवाङ्मुखेन हस्तेनावोक्षयेदिति सूत्रणात्। अन्यत्रापि वामेचास्तीर्यं दर्भान् बलरिपुहरिदग्रान तदूर्ध्वं निधाय पात्राणि द्वंद्वशो धोवदनमथतथोत्तानवक्त्राणि कृत्वा छन्नं त्रेणाभिपूर्यन्यतममथजलैर्मंत्रपूतैरथैभिः अभ्युक्ष्योपेतकूर्चैः सकलमपि हृदा सव्यगं हव्यजातमिति। अन्यत्रापि स्ववामभागे प्रागग्रान्दर्भानास्तीर्यचोपरि यथावित्तानुसारेण सौवर्णादीनि कर्मणि। अधोमुखानि पात्राणि विन्यसेत्। उत्तानीकृत्य पात्राणि जलाद्यैः संप्रपूजयेत् इति अन्यत्रापि। ततो वामभागे परिस्तीर्यं दर्भान्युलोमात्मजावल्लभाशागताग्रान्। तदूर्ध्वं न्यसेद्द्वंद्वरूपेण पात्राण्यथाधोगतास्यानि सर्वाणिधीमान्। अथोत्तानि तेषु पात्रेषु पात्रं जलैरेकमापूर्य तीर्थानि तत्र सुसं चिंत्यतैः प्रोक्षयेत् कूर्चदर्भैर्हृदा सव्यभागे स्थितं द्रव्यजातमिति। स्रुक्स्रुवसंस्कारमाह। आदायेति। आदानमूर्द्धमुखयोरेवेति ज्ञेयं। तावधोमुखौ तापयेदित्युक्तेः। पाणिभ्यां दक्षिणवामाभ्यां। शोधयेदिति प्रत्येकं यथाक्रमादित्यस्यायमर्थःदर्भमूलैस्तन्मूलं। दर्भमध्यैस्तन्मध्यं दभाग्रैस्तदग्रमिति। दक्षिणेन दक्षिणहस्तेन प्रोक्षयेदिति प्रोक्षण्युदकेन। पुनः पुनरित्यनेनपाणिद्वयस्थावधोमुखौचिश्यइत्युक्तं। दर्भानग्नः विनिक्षिपेत् इति प्रतिपत्तिकर्म मंत्रीत्यनेन मूलमध्याग्रेषु क्रमेण इच्छाज्ञानक्रियाशक्तीनां न्यासो नमोमंत्रेण स्रुचिशक्तिं स्रुवेशंभुं च विन्यसेदिति सूचितंशैवे तु। आत्मादि तत्वत्रितयं। यदाहुः। गृहीत्वा स्रुक्स्रुवावूर्द्ववदनाधोमुखौ क्रमात्। प्रताप्याग्नौ त्रिधादर्भमूलमध्याग्रकैःस्पृशेत्। पुनस्त्रिशः प्रताप्याधो मुखावग्नौ कुशान् क्षिपेत्। मूलमध्याग्रकेन्यस्येच्छक्तीरिच्छादिकाः क्रमात्। स्रुचिशक्तिं स्रुवेशंभुं विन्यसेद्धृदयाणुनेति। शैवागमे तु। गृहीत्वास्रुक्स्रुवावूर्द्ववदनाधोमुखौ क्रमात्।प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत्।कुशभागप्रदेशेषु आत्मविद्याशिवात्मकं।क्रमात्तत्वत्रयं न्यस्य हां हीं हूं शंवरैःक्रमात्। स्रुचिशक्तिं स्रुवे शंभुं विन्यस्य हृदयाणुना। त्रिसूत्रवेष्टितग्रीवौपूजितौ कुसुमादिभिःकुशानामुपरिष्टात्तुस्थापयित्वात्वदक्षिण इति। एवं स्रुक्स्रुवयोरष्टौ संस्कारा उक्ताः ताविति। स्रुक्स्रुवौ सर्वत्रपुंस्त्वेन पाठक्रम एवानुसंधेयः। आज्यसंस्कारमाह। आज्येति। अस्त्रवारिणेति। अस्त्रमंत्रजप्तेन प्रोक्षणीजलेन। वीक्षणादिभिः संस्कृतमाज्यं तस्यामाज्यस्थाल्यां

लीमथादाय प्रोक्षयेदस्त्रवारिणा । तस्यामाज्यं विनिक्षिप्य संस्कृतं वीक्षणादिभिः ॥ ४५ ॥
निरुध्य वायव्येंगारानहृदांतेषु निवेशयेत् । इदं तापनमुद्दिष्टं देशिकैर्मंत्रवेदिभिः ॥ ४६ ॥
सन्दीप्य दर्भयुगलमाज्ये क्षिप्त्वा नलेक्षिपेत् । गुरुर्हृदयमन्त्रेण पवित्रीकरणं त्विदम् ॥४७॥
दीप्तेन दर्भयुग्मेन नीराज्याज्यं सवर्मणा । अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम् ॥४८॥
घृते प्रज्वलितान्दर्भान् प्रदर्श्यास्त्राणुना गुरुः । जातवेदसितान्यस्येदुद्योतनमिदं मतम् ।४९।
गृहीत्वा घृतमङ्गारान् प्रत्यूह्याग्नौ जलं स्पृशेत् । अंगुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसंमितौ ५०
धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनं त्विदम् । तद्वद्धृदयमन्त्रेण कुशाभ्यामात्मसम्मुखम् ॥५१॥
घृते संप्लवनं कुर्युः संस्काराः षडुदीरिताः । प्रादेशमात्रं सग्रन्थिदर्भयुग्मं घृतान्तरे ॥ ५२ ॥

---

विनिक्षिप्येत्यन्वयः । अत्राज्यं गव्यादिज्ञेयं । तदुक्तंपिंगलामते । उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवं । अधमं छागलीजातं तस्माद्गव्यं प्रशस्यत इति । अतएवग्रंथकृत्तत्र वक्ष्यति । गव्येन सर्पिषेति महिषीघृतसंप्लुता इति । मेषीघृताक्ता इतिच निरूह्येति । कुंडाग्नितःपृथक्कृत्वा हृदानिवेशयेत् इत्याज्यस्थालीमितिशेषः तंत्रवेदिभिर्देशिकैरिदंतापनादूर्ध्वं पश्चादिष्टमुक्तमित्यर्थः एतेन पूर्वं मूलमंत्रेणाभिमंत्रणं । स्वीयब्रह्ममूर्त्तिभावनमिति संस्कारद्वयं सूचितं । यदाहुः गव्यमाज्यं समादाय मूलेनैवाभिमंत्रितं । स्वकां ब्रह्ममयीं मूर्त्तिं संचिंत्याग्नौ प्रतापयेत् इति । शैवागमेपि । गव्यमाज्यं समादाय मूलमंत्राभिमंत्रितं । स्वकां ब्रह्ममयीं मूर्त्तिं संचिंत्य चेति । वायवीयसंहितायामपि । न्यस्यमंत्रं घृतेमुद्रां दर्शयेद्धेनुसंज्ञितामिति । एवं संस्कारद्वयं वक्ष्यमाणाश्च षट्संस्कारा एवं घृतेप्यष्टसंस्काराः । यदुक्तं पिंगलामते । कुंडेचाष्टादशज्ञेयाः संस्काराः शिवशास्त्रतः।घृते स्रुचिस्रुवे चाष्टाविति ॥ ४५ ॥ संदीप्येति । दर्भयुगलं संदीप्यहृदयमंत्रेणाज्ये क्षिप्त्वाअनलेक्षिपेदित्यन्वयः नीराज्येत्यभितः परिभ्राम्यस इतिगुरुः । वर्मणेति । कवचमंत्रेण वर्मणाज्यं संनीराज्येति संबंधः दर्भमिति । दर्भयुग्मं अत्र संस्कारत्रये वक्ष्यमाणसंस्कारद्वयेपि दर्भाणामग्नौ प्रक्षेपः प्रतिपत्तिकर्म अतएव मंत्राभावोपि तत्रांतस्यकेनापिकारणेनदर्भनाशे जाते सति अग्निप्रक्षेपरूपं कर्मदर्भाणां न प्रयोजकं । एतच्चतुर्थाध्याये प्रतिपादितं तौ तानि ते एवं स्रुक्स्रुवसंस्कारे पिघृतं गृहीत्वेत्वाज्यस्थाली मुद्दस्येत्यर्थः आधाराधेययोरैक्योपचारात् । प्रत्यूह्य संयोज्येत्यर्थः स एतदनंतरं जलस्पर्शं कुर्यात् । अंगुष्ठेतिउपकनिष्ठाऽनामांगुष्ठोपकनिष्ठिकायाभ्यां हस्तद्वयस्येतिशेषः उत्पुनीयादित्यग्निसंमुखमितिज्ञेयं । उक्तंच शैवागमे । प्रादेशमात्रदर्भाभ्यामंगुष्ठानामिकाग्रकैः । घृताभ्यां संमुखं वन्हेरस्त्रेणोत्प्लवमाचरेत् इति । तद्वदिति । हस्तद्वयस्य अंगुष्ठानामिकाग्राभ्यांधृत्वेत्यर्थः अत्रापि संस्कारद्वये कुशयोर्वन्हिप्रक्षेपलक्षणं प्रतिपत्तिकर्मज्ञेयं । होमविधिमाह । प्रादेशेति । घृतांतरे घृतमध्ये । शुक्लेतरौ।वामेशुक्लपक्षः दक्षे कृष्णपक्षः ध्यात्वेति।तिस्रोपि घृतएव । यथाविधीत्युक्तं । विधिमाह स्रुवेणेति।तद्वदिति स्रुवेणहृदयाणुनावामत आदायेतिसंबधः हृदयाणुना मध्यादाज्यं समादायेति संबंधः । हेतिसंपातयेद्भाग इति केचनपठंति तत्रहेतिराहुतिशेषः येतु इतिसंपातयेदितिपठंति । तन्मते इति समाप्तौ स्वाहांतहोमंविधायअग्निनेत्रवक्त्राणांकुर्यादुद्घाटनंगुरुः ॥ ५६ ॥

निःषिण भागौ द्वौ कृत्वा पक्षौ शुक्लेतरौ स्मरेत्।वामेनाडीमिडां भागे दक्षिणेपिङ्गलांपुनः ५३
सुषुम्नां मध्यतो ध्यायेत्कुर्याद्धोमं यथाविधि। स्रुवेणदक्षिणाद्भागादादायाज्यं हृदागुरुः५४
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने । वामतस्तद्वदादाय वामे वह्नि विलोचने ॥ ५५ ॥
जुहुयादथसोमाय स्वाहेति हृदयाणुना। मध्यादाज्यं समादाय वह्नेर्भालविलोचने ॥ ५६ ॥
जुहुयादग्नीषोमाभ्यां स्वाहेतिहृदयाणुना। हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय दक्षिणात्५७
जुहुयादग्नये स्विष्टकृते स्वाहेति तन्मुखे। हेतिं सम्पातयेद्भागेष्वज्यस्याथाहुतिंक्रमात् ५८
इत्यग्निनेत्रवक्त्राणां कुर्यादुद्घाटनं गुरुः। सताराभिर्व्याहृतिभिराज्येन जुहुयात्पुनः॥५९ ॥
जुहुयादग्निमन्त्रेण त्रिवारं देशिकोत्तमः। गर्भाधानादिकां वह्नेः क्रियां निर्वर्तयेत्क्रमात् ६०
अष्टाभिराज्याहुतिभिः प्रणवेन पृथक्पृथक्। गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः ॥६१॥

---

स्वाहा इत्यस्यांते यस्माद्भागादाज्यहुतिर्गृहीता। तस्मिन्नेव भागे तस्य संपातं कुर्यादित्यर्थः सांप्रदायिकात्स्विममेव पाठमिच्छंति। अन्वाहुति। आहुतिमनुप्रत्याहुति इत्यर्थः । तदुक्तं शैवागमे । स्रुवेणादायहोमयेत्। स्वाहेत्यग्नौहेति तद्भागशेषमाज्यं क्षिपेत्क्रमादिति। इत्यग्नीति। तेनाहुतिचतुष्टयेन नेत्रत्रयवक्त्राणा मुद्घाटनं क्रमेणेत्यर्थः सताराभिर्व्याहृतिभिरिति व्यस्तसमस्ताभिः अतएव नारायणीयेपि पंचभिर्मनुभिर्हुनेदिति। पुनरनंतरमिति उत्तरेण संबध्यते अग्निमंत्रेणेति। वैश्वानरेति। पूर्वोक्तेन प्रणवेनेति। पंचापि प्रणवा गृहीताः देशिकोत्तम इत्यनेन तत्तन्मंत्रे यथास्वं विनियोगोविज्ञेय इत्युक्तम्। गर्भाधानादिका इत्यादिशब्दसंगृहीतमेवाह ॥ ५७ ॥ गर्भाधानमिति । पुनरनंतरं जातकर्म। अनंतरं तथा नामकरणं स्यादिति संबंधः अनंतरमित्यस्यायमर्थः वक्ष्यमाणं पंचसमिद्धोमलक्षणम्। नालायनयनं कर्मकृत्वा सूतकं विशोध्य तथा तत्तद्देवतानामग्नेर्नामकरणं कुर्यात्। यथाक्रमाणाग्निर्नारयणाग्निर्दुर्गाग्निरिति । ततोग्नेः पितरावात्मनि संयोज्योपनिष्क्रमणादि संस्कारान् कुर्यात्। आदिशब्दकथनार्थमेकक्रमेणोक्तिः तदुक्तं वायवीयसंहितायां जातं ध्यात्वैवमाकारं जातकर्मसमाचरेत्। नालापनयनं कृत्वा ततः संशोध्य सूतकं। शिवाग्निरिति नामास्य कृत्वाहुतिपुरःसरम्। पित्रोर्विसर्जनं कृत्वा चौलोपनयनादिकम्। अथोद्वाहावसानं च कृत्वा संस्कारमस्यत्विति। सौत्रामणीतंत्रे। गर्भाधानादिकाः क्रियाः जातकर्मादिका वह्नेर्वाग्भवेन पृथक् पृथक् । आज्याहुत्यष्टकं कृत्वात्ररोह्यग्निर्भवेतिच। नामकृत्वा ततो वह्नेरन्नप्राशनपूर्वकं। विवाहांतं वाग्भवेन पूर्वोक्ताष्टाहुतिक्रमात् इति। अत्र गोदानंतरं समावर्त्तनमनुक्तमपि कर्त्तव्यमित्याचार्याः । तदुक्तं गणेश्वरविमर्शिन्याम्।समावर्त्तनमुद्वाहमाधानं चततः परमिति अन्यत्रापि तेनैव समावर्त्तनविवाहयोराहुतोर्जुहुयादिति अन्यत्रापि। कुर्वीत समावर्त्तनमुद्वाहं तेन विधिनैवेति केचितु तथोपनिषदं स्नानमिति पठित्वा स्नानं समावर्त्तनमिति व्याख्याति। तन्मते समावर्त्तनानंतरं। प्रयोगस्तु ॐ अस्याग्ने गर्भाधानसंस्कारं करोमि स्वाहा इत्यादि । ततइति नामकरणानंतरं तस्य वह्नेः पितरौ पूर्वोक्तौ ॥ ६२ ॥ समिधः पंचजुहुयादिति। नालापनोदाय जातकर्मानंतर इत्यर्थः तदुक्तं शैवागमे वक्त्राणामक्षमंत्रेण ततो नालापनुत्तये। समिधः पंचहोतव्याः प्रांते मूले घृतप्लुता इति। वायवीयसंहि

अनन्तरं जातकर्मस्यान्नामकरणं तथा । उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ॥ ६२ ॥
चौलोपनयनं भूयो महानाम्न्यं महाव्रतम् । अथोपनिषदं पश्चाद्गोदानोद्वाहकौ मृतिः॥६३॥
शुभेषु स्युर्विताहान्ताः क्रियास्ताः क्रूरकर्मसु।मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः ॥६४॥
ततश्च पितरौ तस्य संपूज्यात्मानि योजयेत् । सामधःपञ्चजुहुयान्मूलाग्रघृतसंप्लुताः ॥ ६५॥
मन्त्रैर्जिह्वांगमूऽर्तीनां क्रमाद्वह्नेर्यथाविधि । प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ॥ ६६ ॥

---

तायां तु ताः पालाश्यः परावापि यज्ञीयाः द्वादशांगुलाः। अवक्रास्त्वयं शुष्काः सत्वचोनिर्व्रणाः समाः।दशांगुलावा विहिताः कनिष्ठांगुलिसंन्निभाः।प्रादेशमात्रा वालाभे होतव्याः सकला अपीति । मंत्रैरिति न्यासप्रस्तावोक्तैः क्रमादिति। न्यासक्रमात् यथाविधीत्यनेन होमे स्वाहांततेत्युक्तम् । स्मारयेति प्रयोगस्तु स्यूंहिरण्यायै स्वाहा इत्यादि। एतदनंतरं ॐ सुरेभ्यः स्वाहेत्याद्यधिदेवताहोमेपि । सहस्राचिषे हृदयाय नमः स्वाहेत्यादि। ॐअग्नये जातवेदसे स्वाहेत्यादि। तंत्रवित्तम इत्यनेन लोकपाल तदस्त्राहुत्ति ग्रहणमुक्तम् । तदुक्तं गणेश्वरविमर्शिन्याम् । जुहुयादंगमंत्राद्यैस्ताराद्यैश्च सकृत् सकृत्। तत्तत्स्थानेषु शितधीः स्वाहांतश्च यथाक्रममिति । प्रयोगसारेपि सर्वे मंत्राः प्रयोक्तव्याः स्वाहांता होमकर्मस्विति । अवदायेति यतामानसो देशिकः स्रुवेणाज्यं चतुर्वारमुविनिधाय तां स्रुचं स्रुवेण पिधाय तिष्ठन्नेव वौषडंतेन वह्निमंत्रेणाग्नौ जुहुयादित्यन्वयः । यतमानो देशिक इत्यनेन समपादत्वं शृंगाग्र व्यग्रलोचन त्वादिकमुक्तम् । वौषडंतेनेति स्वाहा पदस्थाने वौषट्पदप्रक्षेप इत्यर्थः शैवागमेतु विशेषः घृतेन स्रुचिपूर्णायां निधायाधोमखं स्रुवम्। शृंगाग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना। पुनः सव्येन तौ धृत्वा शंखसंन्निभमुद्रया । समुन्नतोर्द्धकायश्च नमपादः समुत्थितः। नाभौ तन्मूलमाधाय श‍ृंगाग्रव्यग्रलोचनः। वामस्तनांतरानीय तयोर्मूलमतंद्रित इति । विघ्नेश्वरस्येति महागणपतेर्दशधाविभक्तेन पूर्वपूर्वानुविध्येनेति ज्ञेयम् । समस्तेनाहुतिचतुष्टयं दद्यादित्यपि। तदुक्तं गणेश्वरविमर्शिन्यां। महागणेशमंत्रेण पूर्वपूर्वयुतेन च। तारादिबीजषट्केषु करणेष्वद्विवर्णकैः। भिन्नेषुदशधा हुत्वा समस्तेन सुरेश्वरि इति। तथाचार्याः। तारायैर्दशभिर्भेदे पूर्वपूर्वसमन्वितैः। मनुना गाणपत्येन जुहुयाच्चदशाहुतीः। जुहुयाच्चचतुर्वारं समस्तेनैवतेनत्विति। अन्यत्रापि। महागणेशमंत्रेणपूर्वपूवुयुतेन च भिन्नेन दशधा हुत्वा समस्तेन सुरेश्वरि इति। देवतायाइति। प्रकृतदेवताया इत्यर्थः देवतामिति। सावरणां। वक्त्रैकीकरणमिति। तदुक्तंशै वागमे। इतष्टिवक्त्रे वक्त्राणामंतर्भावस्तुचैकता। अथवा कुंडमानत्वं यदीष्टवदने स्मरेत्। अंतर्भाव्यानि वक्त्राणि तदेकीकरणं मतमिति। नाडीसंधानमिति। अग्निदेवतात्मनां त्रयाणां नाड्येकीकरणं। अंगमुख्यानामाहुतीनामिति प्रकृतदेयमत्रदेवताया इत्यर्थः। अत्राप्यंगेत्यादिसंभवाभिप्रायं। सम्यगित्यनेन यत्रांगाहुत्तेराद्यत्वं नास्तितत्र यथाहुत्तिस्तदादीनामाहुत्तीनामित्युक्तं। देशिकोत्तमइत्यनेन मूलमंत्रेण दशाहुतयो होतव्या इत्युक्तं। यदाहुः परिवारस्यैकैकां देव्यास्तु दशाहुतीर्जुहुयात्। संस्कृतेष्विति। ऋत्विग्भिरितिशेषः। तेनऋत्विजःस्वे स्वे कुंडे षोडशसंस्कारान्यथाविधि कुर्युः। आचार्योग्निविहरणं कुर्यात्सर्वत्रैवेत्यर्थः। पूर्वादि षु दिशांते समाहित इत्यनेनाविच्छेदेनाग्निविहरणमुक्तं। देवतामिष्ट्वेति। अत्र पूजानंतरं तद्देवतांगाहुत्यादीनां पूर्ववदेकैका

अवदाय स्रुवेणाज्यं चतुःस्रुचिपिधायताम् । स्रुवेणतिष्ठन्नेवाग्नौ देशिको यतमानसः ॥६७॥
जुहुयाद्वह्निमन्त्रेण वौषडन्तेन सम्पदे । विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश ॥ ६८ ॥
सामान्यं सर्वतन्त्राणामेतदग्निमुखं मतम् । ततः पीठं समभ्यर्च्य देवताया हुताशने ॥६९॥
अर्चयेद्वह्निरूपां तांदेवतामिष्टदायिनीम् । तन्मुखेजुहुयान्मंत्री पञ्चविंशतिसंख्यया ॥ ७० ॥
आज्येन मूलमन्त्रेण वन्ह्यैकीकरणन्त्विदम् । वन्हिदैवतयोरैक्यमात्मना सह भावयन् ॥७१॥
मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः । नाडीसन्धानमुद्दिष्टमेतदागमवेदिभिः ॥ ७२ ॥
जुहुयादंगमुख्यानामावृत्तीनामनुक्रमात् । एकैकामाहुतिं सम्यक् सर्पिषा देशिकोत्तमः ॥७३॥
ततोन्येष्वपि कुण्डेषु संस्कृतेषु यथाविधि । आचार्योविहरेदग्निं पूर्वादिषु समाहितः ॥७४॥
ऋत्विजो गन्धपुष्पाद्यैरंगाद्यावरणान्विताम् । तन्त्रोक्तदेवतामिष्ट्वा पञ्चविंशतिसंख्यया ७५

---

माहुत्वा मूलदेवतायादशाहुतीर्जुहुयुरितित्रेयं सोज्येन चरुणा तथेति । पूर्वपटले यश्चरुः कारितः तस्य भागत्रयं कृतं । एको भागो देवतायै निवेदितः अन्यमग्नौ प्रजुहुयादित्युक्तं । तस्यैवायं होम स्तथेति मूलेन पंचविंशति वारं ॥ ७३ ॥ इतीयदिनकृत्यमाह । प्रातरीति जुहुयुरित्याचार्याः प्रत्ये-कमृत्विजश्च । तत्र विशेषो वायवीयसंहितायां । स्रुवेणाज्यं समित्याख्या स्रुचा शेषकरेण वा । तच्च दिव्येन होतव्यं तीर्थनार्षेण वा तथेति । पृथक् प्रत्येकमष्टोत्तरसहस्रं । तत्र सुसमिद्धेग्नौ होतव्यं । अन्यथा दोषदर्शनात् । तदुक्तं बह्वृचपरिशिष्टे । अंधोबुधः सधूमेच जुहुयाद्यो हुताशने । यजमानो भवेदंधः सपुत्र इति चश्रुतिः । छंदोगपरिशिष्टेपि । योनर्चिषि जुहोत्यग्नौ व्यंगारिणि च मानवः । मंदाग्निरामयावीच दरिद्रश्चोपजायते । तस्मात्समिद्धे होतव्यं नासमिद्धे कथंचन । आरोग्यमि-च्छतायुश्च श्रियमात्यंतिकीं तथा इति । महाकपिलपंचरात्रेपि । अप्रदीप्तेन होतव्यं मध्यमेनाप्य-निधते । प्रदीप्ते लेलिहानेग्नौ होतव्यं कर्मसिद्धय इति ॥ ७४ ॥ होमानंतरं गुरुकृत्यमाह । तत इति । पंचगव्यं पाययित्वेति । मंडपबाह्यएव पंचगव्यप्रकारं तु एकविंशे वक्ष्यति । तदुक्तंप्रयोगसा-रे । पंचगव्यं यथाप्रोक्तं पीत्वा चांतं यथाविधि । द्वारेण दक्षिणेनाथ यागस्थानं प्रवेशयेत् इति॥७५॥ तच्चैतन्यमिति । तद्वदोवहन्नाड्या अंकुशमुद्रयाचैतन्यमाकृष्य स्ववहन्नाडीमार्गेण स्वहृदि संयोजये-दित्यर्थः तदुक्तं हृदिस्थितं तच्चैतन्यं प्रस्फुरत्तारकाकृति । आदाय स्थापयेत्स्वीये हृदयेंकुशमुद्र-येति । अध्वविशोधनमिति । तदुक्तंषडन्वयमहारत्ने । शोधनंनामतत्वानां कारणैकत्वचिंतनं । वर्णादीनां कलानां च तस्यां बिंदैक्य चिंतनमिति ॥ ७५ ॥ ७६ ॥ उक्तमिति । इति त्रयं इति च त्र यं उक्तं तंत्र विद्भिरिति शेषः । आद्यास्त्रयोर्थरूपाः परेत्रयः शब्दरूपाः । तदुक्तं वायवीयसंहितायां । तेत्र शब्दास्त्रयो धातस्त्रयस्त्वर्थाः समीरिता इति । अन्यत्रापि । मंत्राध्वाच पदाध्वाच वर्णाध्वाचेति शब्दतः । भुवनाध्वा च तत्वाध्वा कलाध्वा चार्थतः क्रमात् इति । अत्रतु संहारक्रमेणोक्तिः मूलेतु सृ-ष्टिक्रमेणेति ज्ञेयम् बहुधेति । पंचधा मंत्राणि सांख्या नि । तदुक्तं वायवीयसंहितायां । पौराणानि च तत्वानि त्रिपुरायाश्च कानि चित् सांख्ये योगप्रसिद्धानि तत्वान्यपि चकानि चित् । शिवशास्त्र-प्रसिद्धानि ततोन्यान्यपि सन्त्यत्र इति त्रिपदात्मनस्त्रिपुरायाः शुद्धानीति । आणव कार्मण मायी

मूलेनाज्येन जुहुयुः साज्येन चरुणा तथा। प्रातरुत्थाय जुहुयुः पुनराज्यान्वितैस्तिलैः ॥७६॥
द्रव्यैर्वाकल्पविहितैः सहस्रं साष्टकं पृथक्। ततः सुधौतदन्तास्यं स्नातं शिष्यं समाहितम् ७७
पाययित्वा पञ्चगव्यं कुंडस्यांतिकमानयेत्। विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदंबुजात् ७८
गुरुरात्मनि संयोज्य कुर्यादध्वविशोधनम्। उक्तं कलाध्वा तत्वाध्वा भुवनाध्वेति च त्रयम् ७९
वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्यपरं त्रयम्। निवृत्याद्याः कलाः पञ्चकलाध्वेति प्रकीर्तितः ८०
तत्वाध्वा बहुधाभिन्नः शिवाद्यागमभेदतः। षट्विंशाच्छिवतत्वानि द्वाविंशद्वैष्णवानितु॥८१॥
चतुर्विंशतितत्वानि मैत्राणि प्रकृतेः पुनः। उक्तानि दश तत्वानि सप्त च त्रिपदात्मनः ८२

---

य मलत्रय रहितत्वात्। शुद्धत्वं तत्राणवो नाम सदाशिवस्य स्वस्यानवमर्शं कार्मोनाम पुण्यपापवानहमिति प्रतीतिः मायोयोनाम षहंकारादावात्मबुद्धिः। उक्तं च वायवीयसंहितायां। शिवः शक्तिस्ततो नादस्तस्माद्बिंदुः सदाशिवः। तस्मान्महेश्वरोजातः शुद्धा विद्या महेश्वरात्॥८१॥ शुद्धानीति। कारणत्वेन मलत्रय राहित्याच्छुद्धत्वं। कार्यरूपत्वेन तद्युक्तत्वादशुद्धत्वं। तदुक्तं वायवीय संहितायां सा वाचामीश्वरी शक्तिर्वागीशाख्यस्य शूलिनः। यासा वर्णस्वरूपेण मातृकेतिविजृंभते। षथानंतसमायोगान्मायां कालमवासृजत्। नियतिं च कलां विद्यां कलातो रागपूरुषा वित्यादि षट्त्रिंशत्संख्ययोपेतः शुद्धाशुद्धोभयात्मक इत्यंतेन। ज्ञानकर्मेंद्रियाणीति। दशपंचेत्युभयत्रसंबध्यते। तेजसां त्रयमग्नींदुसूर्याः वासुदेवादयश्चत्वारोऽष्टमेवर्चते। इंद्रियाणि दशगर्वो हंकारः बुद्धिर्महत्तत्वं प्रकृतिः स्वयमात्मा स्वकपोलकल्पितत्वशंकांवारयति। तत्तदागमवेदिभिरिति। भुवनानि आकाशवायुतैजसाप्यपार्थिवभुवनानि पं च। वायवीयसंहितायां तु। आधाराद्युन्मन्यंतं च भुवनाध्वाप्रकीर्तित इति वर्णसंघः सबिंदुवर्णाः वायवीयसंहितायांतु। अनेकभेदसंभिन्नः पदाध्वा पदसंहतिःमहामंत्रोपमंत्राणां वर्त्तते ऽवयवात्मना। प्रधानावयवत्वेन सोध्वायं च पदात्मक इति मंत्रराशयःअकचटतपयाः सप्तमंत्राः मूर्द्धनि ब्रह्मरंध्रे तत्रायं शोधनप्रकारः पादे कलाध्वानं स्मृत्वापद्गुह्य हृद्भ्रूशिरःसु स्वबीजादिकाः कलाविन्यस्य पश्चात् कलाध्वविशोधनं एवंतत्वाध्वानं अधोस्मृत्वा विलोमेषुपूर्वस्थानेषु तान्विन्यस्य पश्चात्तत्वाध्वशोधनं।एवं भुवनाध्वानं नाभौ स्मृत्वा अनंतरस्थानेषु स्वबीजाद्यान् विन्यस्य पश्चात्तच्छोधनं। एवं हृदि वर्णाध्वानं संस्मृत्य शुद्धान्वर्णान् तद्देहे विन्यस्य पश्चाद्वर्णाध्वशोधनं।एवं भाले पदाध्वानं संस्मृत्य सबिंद्वर्णान् विन्यस्य तच्छोधनं एवं मूर्द्धनि मंत्राध्वानंसंस्मृत्य सप्तमंत्रान् तत्तत्स्थानेषु व्याप्य पश्चात्तदध्वविशोधनमिति गुरूत्तम इत्यनेनोक्तं।विधिवदित्यनेन शिष्यइति ज्ञेयं।तं गुरुः स्पृशेदितिभिन्नं वाक्यं।तदुक्तं नारायणीये।ध्यानेनात्मनि तं शिष्य संहृत्य प्रलयक्रमात्। पुनरुत्पाद्य तत्पाणौ दद्याद्दर्भान्स मन्त्रितान् इति। केचन तं स्पृशन्निति यतन्ति। तदा विधिवदित्यनेन वामकरस्थेनेति ज्ञेयं। गुरुरष्टावाहुतीरधुना ताराद्यं पृथक् जुहुयादितिसम्बन्धः। शोधयामिति। अमुष्येत्यर्थे संयुक्ते रित्यवकरं दूरीकृत्य प्रक्षाल्य संशोषितैरित्यर्थः। प्रयोगस्तु ॐ अमुष्य कलाध्वानं शोधयामि स्वाहेत्यादि शिवे सहस्रारस्थिते इति पूर्वेण सम्बध्यते। क्रमादित्यग्निमं पूर्वस्मिन्निति शिवपर्यन्तं शिवाद्दृष्टिमार्गस्थान् जनयेदिति सम्बन्धः दृष्टिमार्गतः प-

तत्वानि शैवान्युच्यन्ते शिवशक्तिः सदाशिवः। ईश्वरोविद्यया सार्द्धं पंचशुद्धान्यमूनिहि ८३
माया कालश्च नियतिःकलाविद्या पुनः स्मृता। राग पुरुष एतानि शुद्धाशुद्धानिसप्त च ८४
प्रकृतिर्बुध्यहंकारो मनोज्ञानेन्द्रियाण्यथ। कर्मेन्द्रियाणि तन्मात्रा पंच भूतानि देशिकः॥८५॥
एतान्याहुरशुद्धानि चतुर्विंशतिरागमे। शैवानामिति तत्वानां विभागोत्र प्रदर्शितः॥८६॥

---

वैश्वादग्निमं नियोजयेदिति। यथा आनीतं तथैवेत्यर्थः अनेनाध्वविशोधनेनशरीरशुद्धिः कृता भवति। यतः षडध्वमयमेवशरीरम्। यदाहुः। शांत्यतीतकलामूर्द्धा शान्ति वक्त्रशिरोरुहा। निवृत्तिजानुजंघांघ्रिर्भुवनाध्वशिरोरुहा। मन्त्राध्वमांसरुधिरा पदवर्णशिरायुता। तत्वाध्वमज्जामेदोस्थिधातुरेतोयुता शिवे इति। मूलमन्त्रेणेति। देशिक इत्यनेन वौषडन्तेनेत्युक्तम्। तदुक्तं वायवीयसंहितायां।ततो होमावशिष्टेन घृतेना पूर्यवै स्रुचं निधाय पुष्पं तस्याग्रेस्रुवेणाधोमुखेनताम्। सदर्भेण समाच्छाद्य मूलेनांजलिनोत्थितः। वौषडन्तेन जुहुयाद्धारां तु यवसंमिताम्। इत्थं पूर्णाहुतिं कृत्वेति। उद्वास्य अग्निं उद्वासनं कृत्वा कुंभेआनीयेत्यर्थः देशिको गुरुरित्यनेन देवतायाः अङ्गाहुत्यादीनामेकैकामाहुतिं हुत्वा उद्वासनमित्युक्तं भवति व्याहृतिभिर्व्यस्तसमस्ताभिः। साम्प्रदायिकास्तु। व्याहृतिशब्देनात्र महाव्याहृतय उच्यन्तइत्याहुः ताश्च ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा। ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा। ॐ स्वरादित्याय च दिवे च महते च स्वाहा। ॐ भूर्भुवःस्वश्चन्द्रमसे च नक्षत्रेभ्यः दिग्भ्यश्च महते च स्वाहा इति। उक्तं च। पुनः समापयेद्धोमं महाव्याहृतिपूर्वकमिति। विभावसोर्जिह्वादीनामित्यादिशब्देनाधिदेवतां गमूर्त्तिलोकताल तदायुधानि। परिषिच्येति। पावकमितिसम्बध्यते। अद्भिःप्रोक्षण्युदकैरित्यर्थः स्वे आत्मनि पावकं योजयित्वेति तत्र प्रार्थनमन्त्रेण संप्रार्थ्य पश्चादुद्वासनम्।तदुक्तं गणेश्वरविमर्शिन्यां। भोभो वह्ने महाशक्ते सर्वकर्मप्रसाधक कर्मान्तरेपि संप्राप्ते सांनिध्यं कुरु सादरमिति मन्त्रेण संप्रार्थ्यवन्हिमुद्वासयेदपीति। वाससेति। नवेन शुक्लेन। तदुक्तंमहाकपिलपञ्चरात्रे। नवेन शुक्लवस्त्रेण नेत्रेबध्वेति। पिङ्गलामतेतु विशेषः नेत्रवस्त्रेण तन्नेत्रे नेत्रमन्त्रेण बन्धयेत् इति।मन्त्रतन्त्रप्रकाशेपि। अथ नेत्रेण तन्नेत्रे बध्वा नेत्रेण देशिक इति। नारायणीयेतु। नेत्राद्यैर्नेत्रं नेत्रेण बन्धयेदिति॥८८॥ मण्डलंनयेदिति। प्रादक्षिण्येन पश्चिमद्वारमिति शेषः। तदुक्तं नारायणीये। न्यासं शिष्यतनौ कृत्वा तं प्रदक्षिणमानयेत्। पश्चिमद्वारमानीय क्षेपयेत्कुसुमाञ्जलिमिति। यथाविधि क्षेपयेदित्यनेन विशेषः। पिङ्गलामतोक्तः संगृहीतः पुष्पैरञ्जलिमापूर्य योगपीठे प्रदापयेत्। पश्चिमोत्तरदद्रे द्रे: पुष्पपातः शुभोशुभे। अष्टोत्तरशतं शांत्यै जुहुयादस्त्रमन्त्रत इति। आत्मयागक्रमाद्दक्ष्यमाणप्रपञ्चयागक्रमेणेतिकेचित्। सांप्रदायिकास्तु। आत्मयागः अन्तर्याग तत् क्रमात्तत्रोक्तभूतशुद्धिक्रमेणेत्यर्थः तत्र भूतसंहारस्य भूतसृष्टेश्चोक्तत्वात्। देहं संहृत्य भूयोनन्तरमुत्पाद्येत्यन्वयः। तदुक्तं प्रयोगसारे। गुणांशेन पृथिव्यादि भूतानि विलयं नयेत्। यथावत्पिण्डसंस्थानि संहारक्रमयोगतः। ततः सृष्टिक्रमेणैव पिण्डं संभावयेत्तदेति। मन्त्रतन्त्रप्रकाशेपि। उपविश्यासने दिव्ये संहरेत्तस्य विग्रहं गन्धादिघ्राणसंयुक्तां पृथिवीमप्सुसंहरेदित्यादिना उत्पन्नं भावयेत्ततइत्यनेन। अन्यत्रापि। अथा-

जीवप्राणाधिपश्चितं ज्ञानकर्मेंद्रियाण्यथ ॥ तन्मात्राः पंचभूतानि त्वत्पद्मं तेजसांत्रयं ॥८७॥ वासुदेवादयश्चेति तत्वान्येतानि शार्ङ्गिणः ॥ पंचभूतानि तन्मात्रा इंद्रियाणि मनस्तथा ॥ ८८ ॥ गर्वो बुधिः प्रधानं चमेत्राणीति विदुर्बुधाः ॥ निवृत्याद्याः कलाः पंच ततो बिंदुकलाः पुनः ॥ ८९ ॥ नादः शक्तिः सदा पूर्वशिवश्च प्रकृतेर्विंदुः ॥ आत्मविद्या शिवः पश्चाच्छिवो विद्या स्वयं पुनः ॥ सर्वतत्वं च तत्वानि मोक्तानि त्रिपदात्मनः ॥ तत्वाध्वा कथितोत्येष तत्तदागमवेदिभिः ॥ ९१ ॥ ईरितो भुवनाध्वेति भुवनानि मनीषिभिः ॥ वर्णाध्वेति वदंत्यर्णा नादिक्षांतान्मनीषिणः ॥ ९२ ॥ वर्णसंघः पदाध्वास्यान्मंत्राध्वा मंत्रराशयः ॥ क्रमादेतान्पुनः षड्चशोधयेद्गुरुसतत्तमः ॥ ९३ ॥ पादांबुनाभिहृद्भालमूर्द्धस्वपि शिशोः स्मरेत् ॥ ततः कूर्चेन विधिवत्तं स्पृशन्जुहुयाद्गुरुः ॥ ९४ ॥ आचार्यकुंडे संशुद्धैस्तिलैराज्यपरिप्लुतैः ॥ शोधयाम्यमुमध्वानं स्वाहेति पृथगध्वनः ॥ ९५ ॥ ताराद्यमाहुतीरष्टौ क्रमात्तां विलयं नयेत् ॥ शिवे शिवांतसंलीनान्जनये त्सृष्टिमार्ग तः ॥ ९६ ॥ विलोकयन्दिव्यदृष्ट्या तं शिशुं देशिकोत्तमः ॥ आत्मस्थितं तच्चैतन्यं पुनः शिष्येनियोजयेत् स्रुचा पूर्णाहुतिं दत्वा मूलमंत्रे ण मंत्रवित् ॥ उद्वास्यदेवतां कुंभे सांगां सावरणां गुरुः ॥ ९८ ॥ पुनर्व्यात्दृतोभिर्हुत्वा जिव्हादीनां विभावसोः ॥ एकैकामाहुतिं दत्वा परिषिंच्याग्निरात्मनि ॥ ९९ ॥ पावकं योजयित्वा स्वे परिधीन्सपरिस्तरान् ॥ नैमित्तिके दहेन्मंत्रो नित्ये तु नदहेदिमान् ॥ १०० ॥ नेत्रे शिष्यस्य बध्नीयान्नेत्रमंत्रेण वाससा ॥ करे गृहीत्वा

---

भिषेकमण्डपे सुखोपविष्टमासने। गुरुर्विशोधयेदमुं परिवशोषणादिभिरिति । नारायणीयेपि। शोषादिना सुखासीनं तत्रसम्बोधयेद्गुरुरिति। अत्र देवताप्रार्थनमाहुराचार्याः । कारुण्यनिलयेदेवि सर्वसम्पत्तिसंश्रये। शरण्यवत्सले मातः कृपामस्मिन् शिशौ कुरु । आणवप्रमुखैः पाशैः पाशितस्य सुरेश्वरि। दीनस्यास्य दयाधारे कुरुकारुण्यमीश्वरि । ऐहिकामुष्मिकैर्भोगैरपि सम्बध्यतामसौ। स्वभक्तिः सकलाचास्मै दीयतां निष्कलाश्रयेति। अन्यस्मिन्मण्डल इति। मण्डपाद्बहिरैशान्यां । तदुक्तंसोमशंभुना।यागालयाद्विशोशस्य रचिते स्नानमण्डपे।कुर्यात्करद्वयान्यां वेदिमष्टांगुलोच्छ्रिताम्। श्रोपर्ण्याद्यासनेतत्र विन्यस्यानन्तमासनम्। शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् इति । प्रयोगसारे। अथैशान्यांदिशि यथामन्त्रविन्यस्तविग्रहं । पीठस्थं चतुर स्रायां वेद्यान्दर्भाग्रपाणिनम्। अभिषिं चेत्स्वयं शिष्यमात्मतत्वानुवर्त्तिनमिति। उपवेशयेत् इति। भुक्तौ प्राङ्मुखं मुक्तावुदङ्मुखमितिज्ञेयम्। तदुक्तं सोमशम्भौ। स्नाने तूदङ्मुखंमुक्तौ पूर्ववक्त्रं चभुक्तये । ऊर्ध्वकायं समारोप्येति। अन्यत्रापि। मण्डलेत्वीशदिक्कृत्वा मुमुक्षूनुत्तराननान्। भुक्तये पूर्ववक्त्रांश्च शिष्यांस्तत्रनिवेशयेत् इति। विधिवन्मातृकां मनसा जपन् मूलेनाभिषिंचेदिति सम्बन्धः तत्र विधिवदिति विलोमपतितं मूलं च। तादृग्रूपमिति। तदुक्तमाचार्यैः।यथा पुरापूरितमन्त्ररैर्घटं सुधामयैः शिष्यतनो तथैवसः। प्रपूरयेन्मन्त्रिवरोभिषेचयेदवाप्सयेमंचु यथेष्टसम्पदामिति । अन्यत्रापि। सुमतिरभिषिंचन्नरो मन्त्रजापीति। अन्यत्रापि। अभिषेचयता यथावत् तात्वैरान्तैर्वर्णैरभिपूर्णवनुसिरुक्त-

तं शिष्यं कुंडतो मंडलं नयेत् ॥ १०१॥ तस्यांजलिं पुनः पुष्पैः पूरयित्वा यथाविधि ॥ कलशे देवताप्रीत्यै क्षेपयेन्मूलमुच्चरन् ॥ १०२ ॥ व्यपोह्य तं नेत्रबंधमासीनं दर्भसंस्तरे ॥ आत्मयागः क्रमाद्भूयः संहृत्योत्पाद्यदेशिकः । १०३ ॥ तत्तन्मंत्रोदितान्मासान्कुर्याद्देहे शिशोस्तदा ॥ पंचोपचारैः कुंभस्थां पूजयित्वेष्टदेवतां ॥ १०४॥ तस्यां तंत्रोक्तमार्गेण विदध्यात्सकलाकृतिम् ॥ मंडले लंकृते शिष्यमन्यस्मिन्नुपवेशयेत् ॥ १०५ ॥ नदत्सु पंचवाद्येषु सार्द्धं विप्राशिषा गुरुः । विधिवत्कुम्भमुद्धृत्य तन्मुखस्थान्सुरद्रुमान् ॥ १०६ ॥ शिशोः शिरसि विन्यस्य मातृकां मनसाजपन्। मूलेन साधितैस्तोयैरभिषिंचेतमात्मवित् १०७ पूजितां पुनरादायवर्द्धनीमस्त्ररूपिणीं । तस्यां सुसाधितैस्तोयै सिंचेद्रक्षार्थमंजसा ॥ १०८ ॥ अवशिष्टेन तोयेन शिष्यमाचामयेद्गुरुः । ततस्तं सकलीकुर्याद्देवतात्मानमात्मवित् ॥ १०९॥ उत्थाय शिष्यो विमले वाससी परिधाय च। आचम्य वाग्यतो भूत्वानिषीदेत्संनिधिं गुरोः ११० देवतामात्मनः शिष्ये संक्रान्तां देशिकोत्तमः। पूजयेद्गन्धपुष्पाद्यैरैक्यं सम्भावयंस्तयोः ॥ १११॥ दद्याद्विद्यां ततस्तस्मै विनितायाम्बुपूर्वकम्। गुरोर्लब्धां पुनर्विद्यामष्टकृत्वो जपेत्सुधीः॥ ११२॥ गुरुविद्यादेवतानामैक्यं सम्भावयन्धिया। प्रणमेद्दण्डवद्भूमौ गुरुं तं देवतात्मकम् ॥ ११३ ॥ तस्य पादाम्बुजद्वन्द्वं निजमूर्द्धनि योजयेत्। शरीरमर्थं प्राणं च सर्वं तस्मै निवेदयेत् ॥ ११४॥

---

मन्त्रान्तैरिति। सुसाधितैरित्युनुवादमात्रमुभयत्रापि। पूजितामित्यपि अनुवादः। अञ्जसा तत्वेन। अवशिष्टेनेति। अभिषेकावशिष्टकलशस्थेन । देवतात्मानमभिषेकेनासंन्निधौ समीपे संक्रातामित्यभिषेकेन। देशिकोत्तम इत्यनेनाद्यशब्देन धूपदीपे एवग्राह्ये इत्युक्तम्। तयोरिति । शिष्यदेवतयोस्तत इत्यनेन शिष्यमूर्द्धनि हस्तं दत्वाऽष्टोत्तरशतं मन्त्रं जपेदितिसूचितम् । तदुक्तं वसिष्ठसंहितायाम्। ततस्तच्छिरसि स्वस्य हस्तं दत्वाशतं जपेत् । अष्टोत्तरशतं मन्त्रं दद्यादुदकपूर्वकमिति। अन्यत्रापि। अथ सम्पादयेन्मन्त्रं हस्तं शिरसि धारयेत्। समोस्त्वित्यच्चतन्दद्यादिति । मन्त्रतन्त्रप्रकाशेपि। विश्वात्मा स्वयमाचार्यस्तन्मूर्द्ध्नि स्वकरंन्यसेदिति। दक्षिणकर्णे त्रिवारं यावत्पाठं वा। तदुक्तं। ऋष्यादियुक्तमथमंत्रवरं यथावत् ब्रूयात्त्रिशोगुरुरनर्घ्यमवामकर्ण इति । अंबुपूर्वकमिति। ब्राह्मणविषयं। एतदनंतरं आवयोस्तुल्यफलदोभवत्वेवमुदीरयेत्। प्रसन्नवदनस्तस्मैशिष्याय मुनिपुंगव। स्वतो ज्योतिर्मयीं विद्यां गच्छंतीं भावयेद्गुरुः। आगतां भावयेच्छिष्य इति ।वायवीयसंहितायांतु। अथ गुर्वाज्ञया शिष्यः शिवाग्निगुरुसंन्निधौ । भक्त्यै वर्मभिसंधाय दीक्षावाक्यमुदीरयेत्। वरंप्राणपरित्यागः छेदनं शिरसोपि वा। नत्वनभ्यर्च्यभुंजीयांभगवंतं त्रिलोचनमिति। विद्यादानानंतरं गुरुरष्टोत्तरसहस्त्रं मंत्रं जपेत्। तदुक्तं। अष्टोत्तरसहस्रं स्वशक्तिह्रानानवाप्तये जप्यादिति। नारायणीयमहाकपिलपंचरात्रयोरपि। मंत्रं दत्वा सहस्रं वै स्वसिध्यै देशिको जपेत् इति॥ १११॥ प्रणमेदिति। त्वत्प्रसादादहं देव कृतकृत्योस्मि सर्वतः। मायामृत्युमहापाशाद्विमुक्तोस्मिचेति मंत्रं पठन् इति ज्ञेयं। तत्र अष्टांगः पंचांगो वा प्रणामः कार्य इत्यर्थः। यदाहुः। दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा। मनसा वचसा चेति प्रणामोष्टांग ईरितः। बाहुभ्यां च सजानुभ्यां शिरसा

ततः प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः। ऋत्विग्भ्यो दक्षिणां दत्वा समग्रांप्रीतमानसः ११५
ब्राह्मणास्तर्पयन्पश्चाद्भक्ष्यभोज्यैः सदक्षिणैः।एषा क्रियावती दीक्षा प्रोक्ता सर्वसमृद्धिदा ११६
अथ वर्णात्मिकां वक्ष्ये दीक्षामागमचोदिताम्। पुंप्रकृत्यात्मकावर्णाः शरीरमपितादृशम् ११७
यतस्तस्मात्तनौ न्यस्येद्वर्णान् शिष्यस्य देशिकः।ततस्स्थानयुतान्वर्णान्प्रतिलोमेन संहरेत् ११८

---

धिया। पंचांगकः प्रणामः स्यात् सर्वत्र प्रवराविमाविति। अथ निवेदयेदित्यनेन गुरवे दक्षिणां कुंभादिकं च दद्यादित्युक्तं। यदाहुः। द्रव्यार्द्धं गुरवेदद्यादक्षिणां वा तदर्द्धकमिति। मंत्रतंत्रप्रकाशेपि। आचार्यादनभिप्राप्तः प्राप्तस्यादत्तदक्षिणः।सततं जप्यमानोपि मंत्रःसिद्धिं नगच्छति। सर्वस्वं वा तदर्द्धं वा वित्तशाठ्यविवर्जितः। गुरवे दक्षिणां दत्वा चतो मंत्रग्रहोमत इति। वायवीयसंहितायां। मंडपं गुरवे दद्याद्यागोपकरणैः सहेति। अन्यत्रापि। तां वित्तशाठ्यं परिहृत्यदक्षिणां दत्वा तनुं स्वां च समर्पयेत्सुधीरिति। अन्यत्रापि। कृतकृत्यस्तथा शिष्यःसर्वं तस्मै निवेदयेत्। यद्य यावचतद्वत्त्यागुरोराकृष्टचेतनः। गोभूहिरण्यं विपुलंगृहक्षेत्रादिकं बहु। नचेदर्द्धं तदर्धं वा तदर्द्धांशमथापि वा। अन्नं प्रादन्नवस्त्रादि दद्याद्वित्तानुसारत इति। तथाकुंभादिकं च सकलं गुरवेसमर्प्येति। अन्यत्रापि। विभवानुरूपतो सौदातव्या दक्षिणा च निजगुरवे। प्राणप्रदानकर्त्रे नच कार्यं वित्तशाठ्यममलधियेति। तत्र गुरोः कृत्यं तंत्रांतरोक्तं लिख्यते। स्नानसंध्येसदाचारं नित्यं काम्यंतथैवच। मंत्रसिद्धिप्रकारांश्च शिष्यायाभिवदेद्गुरुरिति। मंत्रतंत्रप्रकाशे। अन्यत्रापि। अभिवंद्य ततः शृणोतुसम्यक्समयान् भक्तिभरा वनम्रमूर्त्तिरिति। तत्र सदाचार उक्तः प्रयोगसारे। देवस्थाने गुरुस्थाने स्मशाने वा चतुष्पथे। पादुकासनविण्मूत्रमैथुनानि परित्यजेत्। देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताः।सिद्धिं सिद्धाधिवासा श्च श्रीपूर्वंसमुदीरयेत्। प्रमत्तामंत्यजां कन्यां पुष्पितांप तितस्तनीं। विरूपां मुक्तिकेशीं च कामार्त्तां च न निंदयेत्। कन्यायोनिं पशुक्रीडां दिग्वस्त्रां प्रकट स्तनीं। नालोकयेत्परद्रव्यं परदारांश्च वर्ज्जयेत्। धान्यगोगुरुदेवाग्नि विद्याकोशनरान्प्रति। नैव प्रसारयेत्पादौ नैतानपिच लंघयेत्। आलस्य मदसंमोहशाठ्यपैशून्यविग्रहान्। असूयामात्मसंमानं परनिंदां च वर्ज्जयेत्। लिंगिनं व्रतिनं विप्र वेदवेदांगसंहिताः। पुराणागमशास्त्राणि कल्पांश्चापि नदूषयेत्। युगंमुसलमश्मानं दामचुल्लीमुलूखलं। शूर्पसंमार्जनीदंडध्वज वैतूर्यमायुधं। कलशं चामरं छत्रं दर्पणं भूषणं तथा। भोगयोग्यानि चा न्यानि यागद्रव्याणि यानि च। महास्थानेषु वस्तूनि यानि वादेवतालये। दिव्योक्तानि पदार्थानि भूताविष्टानि यानि वै। लंघयेज्जातु नैतानि नैतानि च पदा स्पृशेत्। या गोष्टी लोकविद्दिष्टा या च स्वैरविसर्प्पिणी। परहिंसात्मिका या च नतामवतरेत्सदा। प्रतिग्रहं न गृह्णीयादात्मभोगविधित्सया। देवतातिथिपूजार्थं यत्नतोप्यर्जयेद्धनं। धारयेदार्जवं सत्यं सौशील्यं समतां धृतिं। क्षांतिं दयामनास्थां च दिव्यां भक्तिं च सर्वदा। अत्रोक्तान्यः सदाह्येतानैहिकामुष्मिकोचितान्। आचारानाद्दते शांतिदीक्षितः सोधिगच्छतीति। बिभीतकार्ककारंजस्नुहीच्छायां नचाश्रयेत्। स्तंभदीपमनुष्याणामन्येषां प्राणिनां तथा। नखाग्रकेशनिष्ठ्यूत स्नानवस्त्रघटोदकं।एतत्स्पर्शंत्यजेद्दूरं खरश्वाजरजस्तथेतिमंत्रतंत्रप्रकाशे

**स्वाज्ञया देवताभावाद्विधिना देशिकोत्तमः। तदाविलीनतत्वायेंशिष्योदिव्यतनुर्भवेत्॥११९॥**
**परमात्मनि संयोज्य तच्चैतन्यं गुरूत्तमः। तस्मादुत्पाद्यतान्वर्णान्यस्येच्छिष्यतनौ पुनः॥१२०॥**
**सृष्टिक्रमेण विधिवच्चैतन्यं च नियोजयेत्। जायते देवताभावः परानन्दमयः शिशोः॥१२१॥**

---

सोमशंभौ तु। न निंदेत्कारणं देवं न शास्त्रं तेन निर्मितं। न गुरुं साधकंचैव लिंगच्छायां न लंघयेत्। नाद्याद्गंधेन निर्माल्यं न दद्याच्छिवदीक्षिते इति षडन्वयमहारत्नेपि। न लंघयेद्गुरोराज्ञामुत्तरं न वदेत्तथा। रात्रौ दिवा च तस्याज्ञां दासवत् परिपालयेत्। असत्यं अशुभं तद्वत् बहुवादं परित्यजेत्। अप्रियं च तथालस्यं कामक्रोधौ विशेषतः। अप्रच्छन्नसुखो ब्रूयाद्गुरोरग्रे कदापि न। अभिमानं न कुर्वीत धनजात्याश्रमादिभिः। गुरुद्रव्यं नभोक्तव्यं तेनादत्तं कदाचन। दत्तं प्रसादवद्ग्राह्यं लोभतो न कदान। अद्वैतं देवपूजां च गुरोरग्रे परित्यजेत्। पादुकायोगपदादिगुरुचिह्नानि सादरं। नलंघयेत्स्पृशेन्नैव पादाभ्यां प्रणमेत्सदा। पर्यंकशयनं तद्वत्तथा पादप्रसारणं। अंगभंगं च लीलां च न कुर्याद्गुरुसंनिधौ। गमनागमने कुर्यात्प्रणम्य गुरुपादुकां। विचार्यकार्यं कुर्वीत गुरुकार्यं मदवान्। छायां न लंघयेत्तद्वद्गच्छेत्पुरतो गुरोः। पश्चात्पादेननिर्गच्छेत्प्रणम्य च गुरोर्गृहात्। गुरोरग्रे न कुर्वीत प्रभावं शिष्यसंग्रहं। अहंकारं न कुर्वीत नोल्बणं धारयेद्वपुः। अगुरोः संनिधौनैव स्वगुरुं प्रणमेद्बुधः। नमस्कारायचोद्युक्तं गुरुं दृष्ट्वानिवारयेत् इति तथा न नियोगंगुरोर्दद्यात्पुत्रदानैवभाषयेदिति। गुरोः प्रियं कुर्वीतेत्यनेन गुरुसंतोषस्य मुख्यत्वमुक्तं भवति। तदुक्तं दशपटल्यां। शिष्येणापि प्रकर्तव्याशुश्रूषा च गुरोः सदा। शुश्रूषयाविनाविद्या न भवेत्स फलप्रदा। गुरौतुष्टे शिवस्तुष्टः शिवे तुष्टे जगत्त्रयं। गुरौ रुष्टे महेशानि नाहं त्राता त्वया सह। तस्मात्सर्वप्रयत्नेन गुरोः क्रोधं न कारयेत् इति। ऋत्विग्भ्यइति। ब्रह्मादिभ्यः तत्र प्रणीता मार्जनं कृत्वा ब्रह्मणे दक्षिणां दत्वा ब्रह्माणमुद्वास्य हुतचरुशेषं प्राशयेदितिज्ञेयं। तदुक्तं संहितायां। प्रणीतामार्जनं कृत्वा दद्याच्च ब्रह्मदक्षिणां। स्वस्ववित्तानुसारेण लोभमोहविवर्जितः। ततो ब्रह्माणमुद्वास्य ब्राह्मणान् भोजयेदथ। आशीर्वचोभिर्विदुषामेधमानः सुखीभवेत्। हुतशेषं ततः प्राश्यं कुक्कुटांडप्रमाणकं। मंत्रितंमंत्रगायत्रि। अन्यच्च त्र्यायुषं जमदग्ने इति मंत्रेण भस्मधारयेत्। पूर्णपात्रं पूर्यतोयैः सप्तकृत्वोभिर्मंत्रितैः। आत्मानमभिषिंचेत्कैः सदूर्वैस्तुलसीदलैरिति। क्रमप्राप्तां वर्णात्मिकांदीक्षामाह। अथेति। तत्त दिति। देशिकोत्तमः तच्चैतन्यंशिष्यचैतन्यं परमात्मनि संयोज्य देवताभावात्। स्वस्यदेवतात्वात्। अतएव आज्ञासिद्धत्वात्। स्वस्यस्वाज्ञयाविधिना प्रतिलोमेन वर्णस्थानोभयप्रातिलोम्येन तत्त त्स्थानयुतान्वर्णान् संहरेत्। अग्रिमं स्थानं वर्णं पूर्वस्मिन् स्थाने वर्णे च संहरेदित्यर्थः गुरूत्तम इत्युत्तरेण सम्बध्यते। तस्मात्परमात्मनः विधिवदिति पूर्वस्मात् स्थानात् वर्णादग्रिमस्थानं वर्णं च चैतन्यं चेति चकारेण शिष्यतनावित्यनुषज्यते। तदुक्तमाचार्यैः। अग्नींदुयोगविकृता लिपयो हि सृष्टास्ताभिर्विलोमपठिता भिरिदं शरीरम्। भूतात्मकं त्वगसृगादियुतं समस्तं संव्यापयेन्निशितधीविधिना यथावत्। अन्त्यावृषरवभूम्यादिषु गलिपिपुतांस्तान् चतुर्वर्गवर्णेष्वेतान्यस्मम्पदस्तदिततदपि परेष्वक्षरेषु क्रमेण। संहृत्यस्थानयुक्तं क्षपितसकलदेहोललाटस्थितान्तः प्राप्तिव्याप्तद्विसप्ताधिकभुवनत-

एषा वर्णमयी दीक्षा प्रोक्ता संवित्प्रदायिनी। ततः कलावती दीक्षा यथावदभिधीयते॥ १२२॥
निवृत्त्याद्याः कलाःपञ्च भूतानां शक्तयो यतः।तस्माद्भूतमयेदेहे ध्यात्वा तां वेधयेच्छिशोः॥ १२३॥
निवृत्तिर्जानुपर्यं तन्तलादारभ्य संस्थिता। जानुनोर्नाभिपर्यन्तं प्रतिष्ठाव्याप्यतिष्ठति॥ १२४॥
नाभेःकण्ठावधि व्याप्ता विद्याशांतिस्ततःपरम्।कंठाल्ललाटपर्यंतंव्याप्ता तस्माच्छिखावधि १२५
शांत्यतीता कला ज्ञेया कलाव्याप्तिरितीरिता।संहारक्रमयोगेन स्थानात्स्थानांतरे गुरुः१२६
संयोज्य वेधयेद्विद्वानाज्ञया ताः शिरोवधि।इयं प्रोक्ता कलादीक्षा दिव्यभाव प्रदायिनी १२७
ततोवेधमयीं वक्ष्येदीक्षां संसारमोचिनीं। ध्यायेच्छिशुतनोर्मध्ये मूलाधारेचतुर्दले ॥ १२८ ॥
त्रिकोणमध्ये विमले तेजस्त्रयविजृम्भिते । वलयत्रयसंयुक्तां तडित्कोटिसमप्रभाम् ॥ १२९ ॥
शिवशक्तिमयीं देवीं चेतनामात्रविग्रहाम्। सूक्ष्मां सूक्ष्मतरां शक्तिंभित्वा षट्चक्रमंजसा १३०

---

लीयातुमञ्जावमेव । मूलाधारात्स्फुरिततडिदाभाप्रभासूक्ष्मरूपोन्नच्छन्त्यामस्तकमणुत्तरा तेजसां मूलभूता।सौषुम्णाध्वा चरणनिपुणो सासविश्वानुविद्वा ध्याता सद्योमृतमथरवेःस्रावयेत्सार्द्रसोमात्।
शिरसि निपतिताया बिंदुधारा सुधा या भवति लिपिमयी सा नाभिरंगं सुखांर्चा।विरचयतु समस्तं पातितास्तस्य तेजस्यनलदवष्टतास्योद्दीपयेदात्मतेजः संहृत्य चोत्पाद्य शरीरमेवं तेजोमयं व्याप्तसमस्तलोकम्।सङ्कल्प्यशत्यात्मकमात्मरूपं तच्चिन्हमात्मन्यपि संदधीतेति॥ १२१॥कलावतीदीक्षाक्रममाह । तत इति ध्यात्वेत्यत्र यद्ध्यानमुद्दिष्टन्तन्निवृत्तिरित्यादि ईरितेत्यन्तेनोक्तम्।तलात्पादतलात्।
जानुनोर्नाभेः कंठात्तस्माल्ललाटादारभ्येति सम्बन्धः स्थानात्स्थानांतरे ताः संयोज्य संहारक्रमयोगेन शिष्योदेहे वेधयेदिति सम्बन्धः पूर्ववदेव स्वस्वकारणे शिवावधि शिवपर्यन्तं शिवात्सृष्टिमार्गेणोत्पत्तिरनुक्तापि पूर्ववदेवनुसंधेयावेधमयीम् दीक्षामाह ॥ १२८ ॥ तत इति । तनोर्मध्ये मूलाधारे त्रिकोणमध्ये व्यधिकरणः सप्तम्यः शिष्यतनोर्मध्ये चतुर्द्दले मूलाधारत्रिकोणमध्ये एवंभूतां शक्तिं ध्यायेदिति सम्बन्धः कीदृशीं शक्तिं वलयत्रयसंयुक्ताम्। अत्र यद्यपि शक्तेरपरिमितानिवलयानि । तथापि वेदत्रयादेः प्रधानतमस्सृष्टेर्वलयत्रयादुत्पत्तेस्तदुक्तिः पुनः कीदृशीं षट्चक्रं भित्वा मध्यमार्गेण सुषुम्णा मार्गेण परशिवावधिगच्छंतीं। षट्चक्राणि तु मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाख्यानि कमलासने ब्रह्मणि । आधाराधिष्ठातृदेवतायाः। एवं विष्णादयः स्वाधिष्ठानाद्यधिष्ठातृदेवा ज्ञेयाः तं ब्रह्माणं । तान्वादिलांतान् तं विष्णु नाभिपंकजेमणिपूरके योजयेत् । ततो वेधयेदित्यनुषंगः तान्वर्णन डादिफांतान् : तं रुद्रं अर्कपत्राद्येद्वादशपत्राढेर हृदयांबुजे अनाहते योजयित्वा वेधयेदित्यनुषंगः गुरुस्तान्वर्णान् कादिवांतान् ईश्वरे संहरेदित्यन्वयःभूयोनंतरं तमोश्वरमस्मिन्कंठपंकजे विशुद्धौयोजयित्वा वेधयेदित्यनुषंगः तान्स्वरान् सदाशिवे संहृत्येत्यन्वयःतं सदाशिवं भ्रूसरोरुहे आज्ञायां योजयित्वा वेधयेदित्यनुषंगःअग्रे नियोजयेदित्यादेर्वेधयेदित्यर्थः तदर्णौ हक्षौ बिंदौ शिवे बिंदुःशिवात्मक इत्युक्तेःतं शिवं कालादीनि भ्रूमध्यादुपर्युपरितानि षट्चक्राणिअतएव सहस्रारस्य इन्द्रशांत तया।एवं पूर्वोक्तक्रमेणआत्मना शिष्यजीवात्मना शक्तिं कुंडलिनीं परमे शिवे वेधयेदिति संबंधः शक्तिं विना वेधस्य

गच्छन्तीं मध्यमार्गेण दिव्यां परशिवावधि। वादि सान्तदलस्थार्णान्संहरेत्कमलासने॥१३१॥
तं षट्पत्रमये पद्मे वादिलान्ताक्षरान्विते।स्वाधिष्ठाने समायोज्य वेधयेदाज्ञया गुरुः॥१३२॥
तान्वर्णान्संहरे द्विष्णौ तं पुनर्नाभिपंकजे।दशपत्रे डादिफांतवर्णाढ्ये योजयेद्गुरुः॥१३३॥
तान्वर्णान्संहरेद्रुद्रे तं पुनर्हृदयांबुजे। कादिठांतार्कवर्णाढ्ये योजयित्वेश्वरे गुरुः॥ १३४ ॥
तान्वर्णान्संहरेदस्मिन्स्तं भूपः कण्ठपङ्कजे।स्वराढ्ये षोडशदले योजयित्वा स्वरान्पुनः १३५
सदाशिवे तान्संहृत्य तं पुनर्भ्रूसरोरुहे। द्विपत्रे हक्षलसिते योजयित्वा ततो गुरुः॥१३६॥
तद्वर्णौ संहरेद्बिन्दौ कलायां तं नियोजयेत्। तां नादे नंतरंनादं नादांते योजयेद्गुरुः॥१३७॥
तमुन्मन्यां समायोज्य विधुवक्त्रांतरे च तां। तां पुनर्गुरुवक्त्रे तु योजयेद्देशिकोत्तमः॥ १३८॥
सहैवमात्मना शक्तिं वेधयेत्परमेश्वरे। गुर्वाज्ञया छिन्नपाशस्तदा शिष्यः पतेद्भुवि॥१३९॥
संजातदिव्ये बोधोसौ सर्वं विंदति तत्क्षणात्।साक्षात्शिवोभवत्येष नात्रकार्याविचारणा १४०
एषा वेधमयी दीक्षा सर्वसवित्प्रदायिनी। क्रमाच्चतुर्विधा दीक्षा तंत्रेस्मिन्सम्यगीरिता १४१
अथात्र होमद्रव्याणां प्रमाणमभिधीयते। कर्षमात्रं घृतं होमे शुक्तिमात्रं पयःस्मृतम्॥ १४२॥

---

कर्तुमशक्यत्वात् अतएवादौमूलाधारे शक्तिं ध्यायेत् इत्युक्तिः ततश्च स्वाधिष्ठानादावपि श-क्त्यैव वेध इति ज्ञेयम्। छिन्नपाशः पाशत्रयविमुक्त इत्यर्थः। यत्प्रयोगसारे। पाशस्तु तत्सु वा तत्सु कर्म स्वाख्या समीरिता। त्रिविधः सतु विज्ञेयः पाशो बन्धैकसाधनः। प्रथमः सहजः पाशस्तथावागन्तुकः परः। प्रासङ्गिकस्तृतीयः स्यात् इति पाशत्रयं स्मृतमिति। यथा ग्रन्थ-कृत्परमगुरुसोमानन्दाचार्यकृतवेधेनग्रन्थकृद्गुरवउत्पलाचार्याः शिवात्मनो रैक्यतां ग्रन्थकृद्गुरुपंक्ति-स्तुत्ततीयश्लोकव्याख्याने दर्शिता तथा चन्द्रेश्वराचार्यकृतवेधेन शिवस्वामी शिवात्माजातः। तथा च श्रीकण्ठाचार्याऊचुः। कालज्ञानं तथाकालवञ्चमान्यतनौ तथा। प्रवेशे वेधइत्यादि प्रसन्नेलभ्यते शिव इति। उपसंहरति। क्रमादिति। षडन्वयमहारत्ने। इयमाणवी दीक्षा दशविधेत्युक्तम्। तद्यथा। आणवी बहुधा दीक्षा शाक्तीपोशाम्भवी पुनः।एकधैवेति विद्वद्भिः पठ्यते शास्त्रकोविदैः। आ-णवी बहुधेत्युक्ता तद्भेद अधुनोच्यते। स्मार्त्ती मानसिकी योगी चाक्षुषी स्पार्शनी तथा। वाचिकी मान्त्रिकी हौत्री शास्त्री चेत्याभिषेचिकी। विदेशस्थं गुरुः स्मृत्वा शिष्यं पाशत्रयं क्रमात्। विश्लेष्य लयनोभाङ्गविधानेगा परे शिवे। सम्यग्योजनरूपेषा स्मार्त्ती दीक्षेति कथ्यते।स्वसंन्निधौ समासीन-मालोक्य मनसा शुचिः।मलत्रयादुपायैर्या मोचिकी सा तु मानसी। योगोक्तक्रमतो योगी शिष्यदेहं प्रविश्यतु। गृहीत्वा तस्य चात्मानं स्वात्मना योजितात्मिका। योगदीक्षेति सा प्रोक्ता मलत्रयविना-शिनी। शिवोहमिति निश्चित्य वीक्षणं करुणार्द्र या। दृशा सा चाक्षुषी दीक्षा सर्वपापप्रणाशिनी। स्वयं परशिवो भूत्वा निःसन्दिग्धमना गुरुः।शिवहस्तेन शिष्यस्य समन्त्वं मूर्द्धनि संस्पृशेत्। स्पर्शदी-क्षेति सा प्रोक्ता शिवाभिव्यक्तिकारिणी।शिवहस्तलक्षणं सोमशम्भौ।गन्धैर्मण्डलकंस्वीये विदध्याद्दक्षिणे करे। विधिनाचार्चयेद्देवमित्थं स्याच्छिवहस्तकमिति। गुरुवक्त्रं निजवक्त्रं विभाव्य गुरुरादरात्। गुरुवक्त्रप्रयोगेण दिव्यं मन्त्रादिकं शिशौ। मुद्रा न्यासादिभिः सार्धं दद्यात्सेयं हि वाचिकी।दीक्षा

उक्तानि पंचगव्यानि तत्समानि मनीषिभिः ॥ तत्समं मधुदुग्धान्नभक्ष्यमात्रमुदाहृतं ॥ ४३ ॥
दधिप्रसृतिमात्रं स्याल्लाजास्युर्मुष्टिसंमिताः ॥ पृथुकास्तत्प्रमाणा स्युः सक्तवोपि तथामतः ॥४४॥
गुडं पलार्द्धमानं स्याच्छर्करापि तथामता ॥ ग्रासार्द्धं चरुमानं स्यादिक्षुः पर्वावधिर्मताः ॥४५॥
एकैकं पत्रपुष्पाणि तथापूपानि कल्पयेत् ॥ कदलीफल नारंगफलान्येकैकशो विदुः ॥४६॥
मातुलिंगं चतुः खंडं पनसं दशधा कृतं ॥ अष्टधा नारिकेलानि खंडितानि विदुर्बुधाः ४७
त्रिधाकृतं फलं बिल्वं कापित्थं खंडितं त्रिधा ॥ उर्वारुकफलं होमे चोदितं खंडितं त्रिधा ४८
फलान्यन्यानि खंडानि समिधः स्युर्दशांगुलाः ॥ दूर्वात्रयं समुद्दिष्टं गुडची चतुरंगुला ॥४९॥
व्रीहयो मुष्टिमात्राः स्युर्मुद्गमाषायवा अपि ॥ तंडुलाः स्युस्तदर्द्धांशाः कोद्रवामुष्टिसंमिताः १५०

---

परा तथा मन्त्रन्याससंयुक्तविग्रहः स्वयं मन्त्रतनुर्भूत्वा सक्रमं मन्त्रमादरात्। दद्याच्छिष्यायसादीक्षा मान्त्री मलविघातिनी। कुण्डे वा स्थण्डिले वापि निक्षिप्याग्निं विधानतः।लयभोगक्रमेणैव प्रत्यध्वानं यथाक्रमम्। मन्त्रवर्णकलातत्व पदविष्टयमेव च । शुध्यर्थं होमरूपैषा हौत्री दीक्षा समीरिता। योगशिष्याय भक्ताय शुश्रूषार्चापराय च । साङ्गं शास्त्रपदा च्या शास्त्रीदीक्षेति सोच्यते । शिवं च शिवपत्नीं च कुम्भे सम्पूज्य सादरम् । शिवकुम्भाभिषेकात्सा दीक्षास्यादभिषेचिकीति। कर्षमात्रमिति। कर्षलक्षणं प्रागुक्तम्। तैलस्याप्येतदेव प्रमाणमिति ज्ञेयम्। शुक्तिमात्रमिति। कर्षद्वयं शुक्तिः अक्षमात्रं कर्षमात्रं प्रसृतिमात्रं पलद्वयमात्रम्। मुष्टिसम्मिताः पलसम्मिताः पृथुकाश्चिपिटकाः पलार्द्धमानं कर्षद्वयम्। ग्रासार्द्धं अशीतिरक्तिकामितम् । तदुक्तम् । गुञ्जाभिर्द्वाभिर्माषः शाणो माषचतुष्टयम् । द्वौ शाणौ धटकः कालोबदरं द्रक्षणस्त्रयः। तौ द्वौ पाणितलं कर्षसुवर्णं कवलग्रहः पिचुर्विडालपदकतिंदुकोक्षश्च तद्द्वयम्। शुक्तिरष्टमिका ते द्वे पलं बिल्वं चतुर्थिका ।मुष्टिराम्रं प्रकुञ्चोथ द्वे पले प्रसृतिस्तयेति । मातुलिङ्गं बीजपूरम् ॥ १४७ ॥ उर्वारुकं कर्कटीसमिध इति। तत्र विशेषः।विशीर्णा द्विदला ह्रस्वा वक्रा स्थूला कृशा द्विधाः। क्रमिदष्टाश्च दीर्घाश्च विलत्वचः परिकीर्त्तिताः। विशीर्णायुः क्षयं कुर्याद्विदला व्याधिसम्भवम्। ह्रस्वायां मृत्युमाप्नोति वक्राविघ्नकरी तथा । स्थूलाभिर्हरतेलक्ष्मीं कृशायां याजकक्षयः द्विधायां नेत्ररोगास्युः कीटदष्टार्थनाशिनी। इत्थं प्रकुर्वते दीर्घा प्राणघ्नो निस्त्वचस्मृताः।सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः आर्द्रत्वं समच्छेदं तर्जन्यंगुलिवर्त्तुलां।ईदृशीं होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम्। श्रौतेस्मार्ते च तन्त्रोक्ते समिधः परिकीर्त्तिता इति। विशेषान्तरं प्रयोगसारे । श्लेष्मातकपिशाचत वंत्यक्त्वा अन्येभ्यः समाहरेत्तमिध इति। मुष्टिमात्राः पलसंमिताः तदर्द्धांशाः कर्षद्वयमिताः चुलुकमात्राः कर्षमात्राः पाणितलशब्देन चुलुकग्रहणात्। शुक्तिः कर्षद्वयम् । पुरुगुग्गुलुः वरदमानमशीतिगुञ्जामितं रामठं हिंगुः। शैवागमेतु। खण्डत्रयं तु मूलानां सूक्ष्माणि पञ्चहोमयेत् । कन्दानामष्टमं भागं लतानामंगुदलयमिति। स्थितमुत्थितम्। आस्यादीनां लक्षणमुक्त मन्यत्र । सधूमोग्निःशिरो ज्ञेयो निर्धूमश्चक्षुरेव च। ज्वलत्कृशोभवेत्कर्णः काष्टलग्नस्त नासिका। यग्निर्लालायते यत्र शुद्धस्फटिकसंनिभः।तन्मुखं तत्र विज्ञेयं चतुरंगुलमानत इति। गुरुप्रोक्ते वनदुर्गाकल्पे तु सर्वकार्यप्रसि-

गोधूमरक्ते कलभा विहिता मुष्टिपानतः । तिलाश्चुलुकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ५१
शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः । पुरं बदरमानं स्याद्रामठं तत्समंस्मृतम् ॥ ५२ ॥
चन्दनागुरु कर्पूर कस्तूरी कुंकुमानि च । तिंतिडीबीजमानानि समुद्दिष्टानि देशिकैः ॥५३॥
वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु देशिकः । शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥५४॥
सधूमोग्निः शिरो ज्ञेयं निर्धमश्चक्षुरेवहि । ज्वलत्कृष्णो भवेत्कर्णःकाष्ठमग्ने मनस्तथा ॥५५॥
प्रज्वलोग्निस्तथा जिव्हा एतदेवाग्निलक्षणम् । आस्यान्तर्जुहुयादग्नेर्विपश्चित्सर्वकर्मसु॥५६॥
कर्णहोमे भवेद्व्याधिर्नेत्रेंधत्वमुदीरितम् । नासिकायां मनःपीडा मस्तके धनसंक्षयः ॥ ५७॥
स्वर्णसिन्दूरबालार्ककुंकुमक्षौद्रसंन्निभः । सुवर्णरेतसोवर्णः शोभनः परिकीर्त्तितः ॥ ५८ ॥
भेरीवारिद हस्तींद्रध्वनिर्वन्हेः शुभावहः । नागचपंकपुन्नागपाटला पूथिका।निभः ॥ ५८ ॥
पद्मेंदीवरकल्हारसर्पिर्गुग्गुलुसन्निभः । पावकस्य शुभो गन्ध इत्युक्तं तन्त्र वेदिभिः ॥१६१॥
प्रदक्षिणास्त्यक्तकंपाश्छत्राभाः शिखिनः शिखाः।शुभदायजमानस्य राज्यस्यापि विशेषतः६२
कुदेंदुधवलो धूमो वह्नेः प्रोक्तः शुभावहः।कृष्णः कृष्णगतेर्वर्णौ यजमानं विनाशयेत् ॥६२॥
श्वेतो राष्ट्रंनिहत्याशुवायसस्वरसान्निभः।खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशककृत् ॥ ६३ ॥
पूतिगन्धो हुतभुजो होतुर्दुःखप्रदोभवेत् । छिन्नावर्ता शिखाकुर्यान्मृत्युं धनपरिक्षयम् ॥६४॥
शुकपक्षनिगो धूमः पारावतसमप्रभः । हानिं तुरगजातीनां गवां च कुरुते चिरात् ॥ ६५ ॥

---

ध्यर्थं जिह्वायां तत्र होमयेत् । चक्षुःकर्णादिकं ज्ञात्वा होमयेदेशिकोत्तमः अग्निकर्णे हुतं यत्तु कुर्याच्चेद्व्याधितो भयम् । नासिकायां महद्दुःखं चक्षुषोर्नाशनं भवेत् । केशे दारिद्र्यदं प्रोक्तं तस्माज्जिह्वासुहोमयेत् । यत्र काष्टं तत्र श्रोत्रे यत्र धूमस्तु नासिके । यत्राल्पज्वलनं नेत्रं यत्र भस्मस्तु तच्छिरः।यत्रैव ज्वलितो वन्हिस्तत्र जिह्वा प्रकीर्त्तिता इति । विपश्चिदित्यनेनैतदुक्तं भवति । शत्रुनाशकहोमे । एतदंगेषु हवनात्तदङ्गक्षयो भवति । यदाहुः । वन्हेः शिरसि नासाया श्रोत्रे चक्षुषि वा तथा । जुहुयाच्चेत्तदा क्षिप्रं तदङ्गानि विनाशयेत् इति । क्षौद्रं मधु । स्वर्णकुंकुमक्षौद्रसंन्निभोवर्णः शोभन इति । आकृष्टावितिज्ञेयम् । यदाहुः श्रीमतङ्गपारमेश्वरे । दिव्यानामप्यदिव्यानामाकृष्टाविष्यते सदा । ध्मातश्चामीकरप्रख्योहरितालनिभश्चयः। हरिद्रा कुनटी वर्णो रोचनाभश्च शस्यत इति । सिन्दूरबालार्कइति । जयार्थ इति ज्ञेयम् । पद्मरागद्युतिश्रेष्टो लाक्षारससोमपि वा । बालार्कवर्णोहुतभुक् जयार्थं शस्यते बुधैरिति । अन्यकर्मणि तु तत्रैव । इन्द्रगोपकसङ्काशः शोणिताभोथ पावकः।शक्रचापनिभः शस्तं कुंकुमांबुनिभस्तथा । रक्तानां पुष्पजातीनां तुल्यो वर्णः प्रशस्यत इति । भेरीत्याद्युपलक्षणम् । जीमूतवल्लकीशङ्खमृदङ्गध्वनितुल्यकः। शब्दोग्नेःसिद्धये होतुरतोन्यो सिद्धिदः स्मृत इति । नागेत्याद्युपलक्षकम्। सुगन्धद्रव्यगन्धोग्निर्घृतगन्धश्चशोभनइत्युक्तेः । पद्मगन्ध आयुषे इन्दीवरादि गन्धः सौभाग्ये । तदुक्तं । नीलोत्पलसमोगन्धः सौभाग्येशस्यतेजंमा । आयुषे पद्मगन्धः स्याद्बिल्वगन्धश्च सुव्रते ति।विशिषोपि । उग्रगं धोभिचारेच्च प्रशस्तः सर्वदानल इति । छत्राभइत्युपलक्षणम् । छत्राकारभुजः श्रेष्ठोध्व जचामरसंन्निभ इत्युक्तेः । कृष्णो यजमानं श्वेतो राष्ट्रं

**एवं विधेषु दोषेषु प्रायश्चित्ताय देशिकः। मूलेनाज्येन जुहुयात्पंचविंशतिराहुतीः ॥ १६ ॥ इति शारदातिलके पंचमः पटलः ॥५॥ अथ वर्णतनुं वक्ष्ये विश्वबोधविधायिनीम्। यस्यामनुपलब्धायां सर्वमेतज्जगज्जडम् ॥ १ ॥ ऋषिर्ब्रह्मासमुद्दिष्टो गायत्रं छन्द ईरितम्। सरस्वती समाख्याता देवता देशिकोत्तमैः ॥ २ ॥ अक्लीब ह्रस्वदीर्घांतर्गतैः षड्वर्गकैः क्रमात्। षडङ्गानि विधेयानि देशिकैर्जातिसंयुतम् ॥ ३ ॥ पंचाशल्लिपिभिर्विभक्तमुखदोः पेत्संध्यव-**

---

मिहन्तीति। यत्र कर्मणि रक्तपीतादिवर्णो विहितस्तत्रेति ज्ञेयम्। ननु सामान्यतः। यदाहुः। ज्वाला कर्मानुरूपां तां तस्यतस्यानुकूलताम्। कर्मणः सततं ग्राह्यस्त्याज्यो वा तद्विलोमत इति। विशेषस्तत्रैव। मारणोद्वाटनोत्सादकर्मण्यस्मिन् सुशोभनः। कृष्णानां पुष्पजातीनां वर्णो वह्निरिहेष्यते। शङ्खस्फटिककुन्देन्दुवर्णेभ्योपि सितः शुभः। शान्तिके पौष्टिके वापि विहितः सर्वदानल इति। त्याज्यं कृष्णत्वमपि तेनैवोक्तं षट्पदां जननिस्त्रिंशस्तुल्यो वर्णो न सिद्धिद इति। अन्योपि विशेषः मार्जाराचिनिभो ग्राह्यः शुकपिच्छाभ एव च। मयूरकण्ठसदृशश्चित्रपारावतप्रभ इति। पूतिगन्धो दुर्गन्धमृत्युमित्यादियथाक्रमम्। एवंविध इत्यनेनैतदुक्तं भवति। वृषकुञ्जरयानेन तुल्योग्निः पुष्टिदः सदा विमानानां वितानानां प्रासादानां चयो भवेत्। आकारेणाथ हंसानां मयूराणां च शस्यते। सिंहाकृतिः सदा वह्निः सद्यः सिद्धिकरः स्मृतः। शेषाणां दंष्ट्रिणां रूपं न शस्तं होमकर्मणि। खरोष्ट्रमहिषादीनां रूपमत्रनसिद्धये। स्निग्धः प्रदक्षिणावर्त्तः सुशब्दश्चापियो भवेत्। वेद्यः सोर्थप्रसिध्यर्थं मन्यथाविघ्नकारकः। कृतश्चटचटाशब्द अपसव्यगतिः सदा। उल्लिखेद्दसुधां यस्य य श्वाधः शिख एव च नेष्यते सौ मुनिश्रेष्ठ शास्त्रेस्मिन्परमेश्वरि इति। पञ्चविंशतिदोषद्वयदर्शने दोषत्रयदर्शने वा प्रतिनिमित्तं नैमित्तिकमावर्त्तत इति न्यायात् तावत्कृत्वः पञ्चविंशतिराहुतयो होतव्या इति ॥ १६३॥ इति शारदातिलकटीकायां सत्संप्रदाय कृतव्याख्यायां पदार्थादर्शाभिख्यायां पञ्चमः पटलः ॥ ५ ॥

श्रीगणेशाय नमः। अथ दीक्षा कथनान्तरं मन्त्रावक्तव्याश्चतस्तेषांप्रतिभूतां मातृकां वक्तुं प्रतीजानीते। अथेति। वर्णतनुं मातृकां विश्वेषां सर्वेषांबोधानां ज्ञानशक्तिप्रसरात्मकानां तदुत्पादकानां वैखरी मध्यमापश्यंतीपराकृपाणां विधायिनी उन्मीलिनी शक्तिस्तामित्यर्थः समुद्दिष्ट इत्यनेन विधिपद योगः समाख्यातेत्यनेन मातृकापदप्रयोगः पद्मपादाचार्यसंमतमेतत् देशिकोत्तमैरित्यनेन बीजश क्ती अपि वक्तव्ये इति सूचितं तत्र केचिद्धलो बीजानि स्वराः शक्तयः। तदुक्तं दक्षिणामूर्त्तिसंहितायां। हलोबीजानि शक्तयः स्वरास्तुपरमेशानीति। एते एव बीजशक्तीः प्रपंचयागव्यतिरिक्तभूतलिप्यंतसर्वमातृकामंत्राणामिति ज्ञेयं। अन्यत्रान्येबीजशक्ती उक्ते। यदाहुः। बीजमस्य स्मृतं घोषः शक्तिर्जीवः प्रकीर्त्तित इति। अन्यत्रान्ये। यदाहुः। अकार बिंदुसहितं बीजमस्यप्रकीर्त्तितं। द्विबिंदुसहितोकारः शक्तिरित्यभिधीयतइति। नियोगस्तु। मातृकामंत्रजपकाले जपेविनियोग इति। अव्यमंत्रांगत्वेनन्यासेऽनुष्ठीयमानामुकमंत्रांगत्वेन न्यासेविनियोग इति ज्ञेयं। अक्लीबेति। क्लीबा नपुंसकाः ऋॠऌॡतद्रहिताः अक्लीबाये ह्रस्वदीर्घाः अइउएओअं एते ह्रस्वाः परे षट्दीर्घाः तदंतर्गतैः तनुमध्यस्थैः षट्च ते वर्गाश्चबहुवचनमाद्यर्थंकादयः कचटतपयास्तैः क्रमाद्धृदयादि जातियुक्तानिहृदयाय

नमइत्यादि युक्तानि प्रयोगस्तु अंकंखंगंघंङंआंहृदयाय नम इत्यादिदेशिकैरित्यनेनैतदुक्तं भवति।नपुंसकचतुष्टयेन करशुद्धिंविधाय अंगुष्ठादिष्वंगुलीषु न्यसेदंगैरित्युक्तं अंकंखंगंघंङं आं अंगुष्ठाभ्यानम इत्यादिकरतलकरपृष्ठांतं षडंगानि विन्यस्य ततो दक्षवामकरतलयोस्तत्पृष्ठयोः करयोः दक्षिणकनिष्ठादिवामांगुष्ठांतमंगुलीषु षोडशस्वरान् विन्यस्य वामतर्जनीमारभ्य दक्षतर्जन्यंतं एकैकस्यांपर्वस्वग्रे च चतुरोवर्णान् इति क्रमेण कादिसांतान्विन्यस्य अंगुष्ठयोर्हंलौसर्वांगेषु क्षकारं न्यसेत् इति करस्य मातृकान्यासो ज्ञेयः एवं सर्वत्र बोध्यं। यत्प्रयोगसारे। करपृष्ठतद् व्याप्या षडादौ विन्यसेत्ततः कनिष्ठांगुलिमारभ्य दक्षिणास्वंगुलीषु च। वामांगुष्ठांतकं न्यस्यततश्च व्यंजनान्यपि। वामतर्जनीमारभ्य चतुष्टयचतुष्टयं। यथांगुलिक्रमेणैव यावदक्षिणतर्ज्जनी।न्यसेदंगुष्ठयोः शेषैकरन्यासःसमीरित इति। पंचाशदिति। विभक्तत्वं वक्ष्यमाणन्यासस्थानकथनेनैव स्फुटीभविष्यति। मुद्रा ज्ञानमुद्रा अंगुष्ठतर्जनीयोग रूपा पार्श्वाभिमुखी। यदाहुः। श्लिष्टाग्रेंगुष्ठतर्जन्यौ प्रसार्यान्याः प्रयोजयेत्। पार्श्वस्याभिमुखीसेयं ज्ञानमुद्रा प्रकीर्त्तितेति। विद्यां पुस्तकं तन्मुद्रेत्यर्थः वाममुष्टिः स्वाभिमुखो बद्धा पुस्तकमुद्रिकेति। विशदप्रभां शुभ्रवर्णां इदं वक्ष्यां गरागमाल्यानामुपलक्षकं। एवमग्रेपि सर्वत्र वर्णवाचकेषुद्रष्टव्यं ऊर्ध्वादि आद्ये दक्षे परे वामे इत्यायुधध्यानं।अत्र ध्यानानंतरमायुधमुद्राः प्रदर्शयेत्। एवमग्रेपि सरस्वती मंत्रांतं ज्ञेयंप्रत्यक्षरध्यानं तंत्रांतरोक्तं यथा। चामीकरनिभः शूलगदाराजद्भुजाष्टकः। चतुराशीतिकायस्यादकारःकूर्मवाहनः। पाशांकुशकरा श्वेता पद्मसंस्थेभवाहना। षष्ठ्यूर्ध्वयोजनमिता स्यादा मौक्तिकभूषणा। पीतं कराब्जकुलिशपरशुं वैरिनाशनं। द्व्येकयोजनमानं स्यादिकारं कच्छपस्थितं। दशयोजनदीर्घार्धनाल्हा सोहं सवाहना। ईस्यात्त्वष्टिप्रदा श्वेता मौक्तिकाढ्या सितानना। गदां कुशकरं काकवाहनं कृष्णभूषणं। योजनद्विसहस्राणां मानमुद्वयमक्षरं। पाशशक्तिभुजं रक्तं वन्हिबिंबस्थितोष्ट्रगं। उक्तप्रमाणं कालघ्नमूकारवर्णद्वयं भवेत् चतुरस्राब्जहंसस्थं पुष्परागसमप्रभं। पाशवज्रकरं रौद्रं लृयुगं स्यान्निरोधनं। गदाफलारी पद्माढ्यकरं हरविभूषणं। चक्रवाकस्थितं श्याममेकारं तु महद्भवेत्। नवकुंदनिभा शूलवज्रवाहा द्विपस्थिता। कोटियोजनमानास्यादैमूर्त्तिः कविता करी।चिन्मयंसर्वगं शांतं द्विसहस्रकरोज्वलं। पीतं गोवृषसंस्थं स्यादोरूपंस्त्रीमरात्मकं।तप्तहेमनिभा पाशवज्रबाहुर्विभूतिदा।योजनानां सहस्रेण स्यादौ वर्णामितौजसा।नवकुंकुमसंस्थापः पद्मस्थो रक्तभूषणः। चतुर्भुजः स्यादंवर्णःश्रीकरो रिपुनाशकः। वज्रशूलकरं क्षुद्रं फलदंखरवाहनं। सहस्रयोजनमितंस्वरांतं द्विभुजं स्मरेत्।भूबिंबगजसंस्थःस्यान्नवकुंकुमसंन्निभः। शूलवज्रकरः कार्णः सहस्रद्वययोजनः।पाशतोमरस्तः श्वोमिषसंस्थो निरोधनः। योजनानां सहस्रेण मितः कृष्णविभूषणः। पाशांकुशकरः पद्मे फणिसंस्थोरुणप्रभः। गकारः सर्वभूषस्याच्छतयोजनसंस्थितः। उष्ट्रोलूखसंस्थः स्यादगदावज्रकरोमितः। योजनानां सहस्रेण द्विमुखोघः सितेतरः। कोटियोजनदीर्घार्द्धनाहं कृष्णं ज्वलप्रभं। द्विभुजं काकवाहंस्यात्ङार्णं क्षुद्रफलप्रदं। युगाग्रपद्मसंस्थं स्यात् चतुर्बाहुः सितप्रभः। चः कपर्दी सुगंधाढ्यः कोटियोजनसंस्थितः। सितस्त्वावमस्मितः पद्मे चतुर्बाहुश्शथवर्णकः।जन्नौच कोटिमानौस्तश्चतुर्बाहुसितप्रभौ।योजनानां सहस्रेःस्यात्वमितं काकवाहनं।विद्वेषकरणं आर्णं कृष्णवर्णंभुजद्वयं।क्रौंचस्थो द्विभुजः टःस्यान्नागनद्वो महाध्वनिः। धरापद्मगजेंद्रः स्थोष्ठवर्णो द्विकरोज्वलःलक्षयोजनमानं स्यादगरनाशकरो विभुः।ड्वर्णो

क्षस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलांसापीनतुङ्गस्तनीम् । मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥ ४ ॥ ललाटमुखवृत्ताक्षि श्रुतिद्व्घ्राणेषु गंडयोः । ओष्ठदन्तोत्तमाङ्गास्येदोःपत्सन्ध्याग्रकेषुच ॥५॥ पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंसके । ककुद्यंसेच हृत्पूर्वपाणिपादयुगे तथा ॥ ६ ॥ जठराननयोर्न्यस्येन्मातृकार्णान्यथाक्रमात् । त्वगसृक्मांसमेदोस्थिमज्जाशुक्रात्मकान्विदुः ॥ ७ ॥ वादि-

---

प्यष्टबाहुः स्याच्चतुर्वक्त्रः स्वलंकृतः।योजनानां सहस्रेणमितः कुवलये स्थितः। अग्निबिंबजगोढार्णो दशबाहुज्वलत्प्रभः। सहस्रमानं व्याघ्रस्थं योजनानां हिणं भवेत्। षष्टिद्वायनसंस्थः स्यात् चतुर्बाहुः स्वलंकृतः सहस्रमानो गंधाद्यैः कुंकुमाभश्च तावरः। कोटियोजनमानःस्यात्अष्टबाहुश्चतुर्मुखः।सितवर्णोवृषारूढः थवर्णोपि भयंकरः। द्विमुखं षट्भुजं कोटिमानदं महिषस्थितं। सिंहवाहश्चतुर्बाहुः धश्चतुर्लक्षसम्मितः। द्विभुजं काकवाहं तं तत्सहस्रैर्मितं भवेत्। विंशद्भुजो दशास्यो यः कोटिमानोवकस्थितः। दशकोटिमितः फार्णो योजनानां भुजद्वयः। कंठीरवसितांभोजेनिषण्णश्चचलः सितः। षडास्यो द्विभुजो वः स्याद्दशकोटिमितोरुणः नीलोत्पललसद्धंसवाहनः पुष्टिदायकः।त्रिहस्तं त्रिमुखं व्याघ्रवाहनं भीषणाकृतिं। दशलक्षसितं भार्णं धूम्राभं स्यान्महाबलं चतुर्भुजो ककारः स्यात् सविषोरगसेन्निभः मंडितोमुंडमालाभिःशशिखंडविराजितः व्याप्तश्चतुर्मुखो धूम्रो यार्णः स्यान्मृगसंस्थितः त्रिकोणांबुजमेषस्थो रार्णोबाहुचतुष्टयः।चतुरस्राब्जदंतींद्रपृष्ठे नोपरिराजिता। चतुर्भुजालकारस्यमूर्त्तिःस्यात् घुसृणप्रभा।अब्धिस्थपद्मनक्रस्थोद्विभुजो वःसितस्मृतः।करद्वयाब्जगा हैमवर्णा शीर्णाकृतिस्तथा। सहस्रमानः कृष्णाभो द्विभुजः कार्मणे षषः। कोटिमानः सितः सस्यात् हयांगो द्विभुजान्वितः। हार्णःश्वेत स्त्रिबाहुःस्यात् व्याप्तःसीतांशुशेखरः। पाशभयकरालार्णमूर्त्तिः श्वेतागजस्थिता। भूबिंबशैलसंस्थः चोदशबाहुर्मणिप्रभः। मूर्त्तिभेदा यथार्णानां मयात्रप्रतिपादिता इति। अक्षरन्यासस्थानान्याह। ललाटे केशांते केशांताननवृत्त इत्युक्तः मुखवृत्तेत्येकं स्थानं। दक्षिणावर्त्तेन अक्षयादिगंडांतं दक्षादिश्रोष्टदंतयोरूर्ध्वादि श्रास्ये तदंतः जिह्वायामित्यर्थः दोः पदोर्दक्षादि। दोः पत्संध्यग्राणि च पंचशेषयोरंगुलिसंधित्वात्। पार्श्वयोर्दक्षादि। अंसक इति दक्षिणांसे ककुदिग्रीवायां अंस इति वामे हृत्पूर्वं पाणिपादयुगेषु इति। स्थानचतुष्टयं जठराननयोरित्यत्रापिहृत्पूर्वमिति संबध्यते।तदुक्तं मंत्रमुक्तावल्यां।हृदंसककुदंसेषु हृदादिकरयोर्युगे।त्वगसृक्मांसमेदोस्थिमज्जाभिर्यादिषांतगान्। हृदादियुग्मे च तदाद्युदरके तथा। तदादि मूर्द्धनि प्राज्ञो न्यसेत्सादीन् कषांतगान् इति केचनोत्तरां सम्बन्धेन कक्षाद्वयं व्याचक्षते। तन्मते अंसद्वये वर्णद्वयं ककुद्येकं कक्षाद्वये वर्णद्वयं पार्श्वयोर्युगे। एकं पादयोर्युगे एकमिति न्यासः अयंसां प्रदायिकः। तदुक्तंदक्षिणामूर्त्तिसंहितायां। हृद्दोर्मूलेषु संन्यस्य तथापरगलेन्यसेत्। कक्षाद्वये हृदाद्यपाणिपादयुगे तथा। जठराननयोर्व्याप्त्यान्यसेदित्यर्णरूपिणीमिति। आचार्या अपि। हृद्दोर्मूलापरगलकक्षेष्विति। तत्र प्रयोगः अंनमः मुखवृत्ते इत्यादि उक्तंच। ॐमाद्यतो नमोंतो वा सबिंदुर्बिंदुवर्ज्जितः। पंचाशदक्षरन्यासः क्रमेणैव विधीयत इति। यथा। क्रमादित्यनेनैतदुक्तं भवति। सोस्-

हांतान् न्यसेदात्मपरमज्ञानपूर्वकान्। दीक्षितः प्रोक्तमार्गेण न्यसेल्लक्षं समाहितम्॥ ८॥
जपेत्तत्संख्यया विद्वानयुतं मधुराप्लुतैः। विदधीत तिलैर्होमं मातृकामन्त्रहंज पेत्॥ ९॥
व्योमेंदुद्वौरसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केसरं पत्रान्तर्गतपंचवर्गपशलाणादित्रिवर्गं क्रमात्।
आशास्वस्रिपुलांतलांगलियुजाक्षोणीपुरेणावृतं पद्मंकल्पितमत्र पूजयतुतांवर्णात्मिकांदेवताम्॥१०
आधारशक्तिमारभ्य पीठशक्त्यन्तमर्चयेत्।मेधा प्रज्ञा प्रभा विद्या श्रीर्धृतिस्मृतिबुद्धयः॥११॥
विद्येश्वरीति संप्रोक्ता भारत्यान वशक्तयः।वर्णाब्जेनासनं दद्यान्मूर्तिमूलेन कल्पयेत्॥१२॥

---

स्थानिकौस्थानिकस्नानभोजनानुष्ठानेषु लिपिर्विन्यस्तव्या इति। तत्र सौस्थानिके उक्तप्रकारेण एकपंचाशद्वर्णन्यासः आस्थानिके सप्तवर्गाणां मुखबाहुपादद्वयनाभिहृत्सु व्यापकत्वेन न्यासः। तत्देवताः। ब्रह्मसरस्वतोविष्णुश्रीरुद्रोमासर्वेश्वराः। स्नानेऽकथादिवर्गत्रयस्य मुखमध्यपादेषु न्यासः। एतद्देवताश्चंद्रसूर्याग्नयः भोजनकाले समस्तस्य समस्तकादिपादांतो न्यासः। देशकालाद्यपेक्षयास्वतप्रयोक्तव्या इति। तत्संख्ययेति। लक्षसंख्यया एकवारं न्यासं कृत्वा एकरं जपेदिति ज्ञेयं। समाहित इत्यनेन कृतपुरश्चरणधर्म इत्युक्तं। तदुक्तं। पंचाशद्वर्णमूर्त्तिं स्वामेवंध्यात्वा सुविग्रहे। स्थानेषु क्रमतो न्यस्य पूर्वोक्तेषु जपेल्लिपिं। पंचाशत्संख्यया नित्यं यावल्लक्षं प्रपूर्यत इति। मधुराप्लुतैः पयोघृतमधुयुक्तैः। तदुक्तं। प्रयोगसारे। पयोमधुघृतं चेति समंत्रिमधुरं स्मृतमिति। व्योमेति। ॥ ८॥ व्योम हः इंदुः सः श्रोः स्वरूपं रसनार्णोविसर्गः। व्योमादिः स चतुर्दशस्वरविसर्गांतस्फुरत्कर्णिकमित्युक्तेः। अचां स्वराणां। अत्र केसरेषु स्वरलिखनं पत्रेषु वर्गलिखनं च। अग्रपत्रादिकर्णिकाभिमुखत्वेन वेति ज्ञेयं। आशासु दिक्षु अस्रिषु कोणेषु लांते वः लांगलो ठः अनयोरेखासंलग्नतयालिखनं ज्ञेयं। तदुक्तं दक्षिणामूर्त्तिसंहितायां। चतुस्रं ततः कुर्यात्सिद्विदं दिक्षुसंलिखेत्। ठकाराणां चतुष्कं च रेखांतं बाह्यतस्ततः। वारुणं च समालिख्य देवीमावाहयेत्सुधीरिति। अत्रपूजायांवेपि अवरादिलिखनस्योक्तेः। केषांचिन्मते इदमेवधारणयंत्रमिति सूचयति। पद्ममिति श्वेतंस्मरेत्पद्म तथासितमित्युक्तेः तेन श्वेतकमलासना ध्येयेत्यर्थः। अर्चयेदिति चतुर्थोक्तप्रकारेण। तत्र मंडूककालाग्निमूलम्। अंनेनावरणंपूर्वहितोयंयुगमशःस्वरैः। रुद्रकूर्मशिलाः संपूज्य पश्चादाधारशक्त्यादिपूजनेपृथिव्यनंतरं विद्याब्धिं संपूज्य अंते मायाकलाविद्यापरतत्वानि संपूज्य पीठशक्तिपूजनमिति सर्वत्र क्रमोनुसंधेयः पीठशक्तीराह। मेधेति। आसां ध्यानं यथा। कृतांजलिद्वयकरास्तत्तदूर्ध्वकरद्वये। दधत्यः पुस्तकं कुंभं श्वेताः सुंदरमूर्त्तय इति। पीठमंत्रमुद्धरति वर्णाब्जेनेतिहसौः मातृकायोगपीठाय नम इति मंत्रेणासनपूजा अयंपीठमंत्रः सर्वमातृकामंत्रसाधारण इतिज्ञेयं। अन्येत्वन्यथा व्याचक्षते। वर्णाब्जेन वर्णाब्जकर्णिकाबीजादिनासनमंत्रेणेति। तत्र प्रयोगः। हसौः। सर्वशक्तिकमलासनाय नमः एवमग्रे सरस्वतीमंत्रेपि। पद्मपादाचार्यैस्तु ॐ ऐं वर्णाब्जाय सरस्वत्यासनाय नम इति पीठमंत्रः सूचित इत्युक्तं। आवाह्येति तुर्योक्तप्रकारेण अंगैरावरणं कर्णिकामध्ये इति ज्ञेयं।युग्मशःस्वरैरिति॥ तत्रप्रयोगः। अं आं नमः बीजैःपूजास्वाद्विभक्त्याविद्युक्तैरित्याचार्योक्तेः।१२एवमष्टवर्गेष्वपि।उक्तं च।संहितायां।नियोज्यस्वरयुग्मांतेनमस्कारंपृथक् पृथक्।तथैव कादिवर्गेषु नमस्कारं पृथक् क्षिपेत् इति।तच्छक्तिभिरिति वर्गशक्तिभिः

आवाह्य पूजयेत्तस्यां देवीमावरणैः सह । अंगैरावरणं पूर्वं द्वितीयं युग्मशः स्वरैः ॥ १३ ॥ अष्टवर्गैस्तृतीयं स्यात्तच्छक्तिभिरनन्तरम् । पंचमं मातृभिः प्रोक्तं षष्ठं लोकेश्वरैः स्मृतम् ॥१४॥ लोकपालायुधैः प्रोक्तं वज्राद्यैः सप्तमं ततः । विधिनानेन वर्णेशीमुपचारैः प्रपूजयेत् ॥ १५ ॥ व्यापिनी लापिनी पश्चात्पाविनी क्लेदिनी तथा । धारिणी मालिनी भूयो हंसिनी शंखिनी स्मृता ॥ १६ ॥ शुभ्राः पत्रेषु संपूज्या धृताक्षगुणपुस्तकाः । ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णवी मता । वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी मता ॥१७॥ अष्टमीस्यान्महालक्ष्मीः प्रोक्ताः स्यु र्विश्वमातरः ॥१८॥ दण्डकमण्डलुं पश्चादक्षसूत्रमथाभयम् । बिभ्रती कनकच्छाया ब्राह्मी कृष्णाजिनोज्वला ॥ १९ ॥ शूलं परश्वधं क्षुद्रं दुन्दुभिं नृकरोटिकाम् । वहन्ती हिमसङ्काशाध्येया माहेश्वरीशुभा ॥ २० ॥ अंकुशं दण्डखट्वांगौ पाशं च दधतीकरैः । बन्धूकपुष्पसङ्काशा कौमारी कामदायिनी ॥ २१ ॥ चक्रं घण्टां कपालंच शंखं च दधीकरैः । तमालश्यामला ध्येया वैष्णवी बिभ्रमोज्वला ॥ २२ ॥ मुशलं करवालं च खेटकं दधती हलम् । करैश्चतुर्भिर्वाराही ध्येया कालघनच्छविः ॥२३॥ अंकुशं तोमरं विद्युत्कुलिशं बिभ्रती करैः । इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा ॥२४॥ शूलं कृपाणं नृशिरः कपालं दधदी करैः । मुण्डस्रङ्मण्डिता ध्येया चामुण्डा रक्तविग्रहा ॥२५॥ अक्षस्रजं बीजपूरं कपालं पङ्कजं करैः ।

---

पत्रमध्योपरि अनंतरमिति । चतुर्थं मातृभिरिति । पत्राग्रे लोकेश्वरैरायुधैश्चेति पश्चात्बहिर्भू पुरे । ब्राह्म्यादीनामायुधध्यानं ब्राह्म्या माहेश्वर्यां च दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्यो कौमार्यांवा मोर्ध्वादिदक्षिणोर्ध्वपर्यंतं । वैष्णव्यां दक्षोर्ध्वतो वामोर्ध्वं यावत् वाराह्यां दक्षाधस्तनाद्वामाधःपर्यंतं । इंद्राण्यां चामुंडायांच दक्षवामयोरूर्ध्वादिमहालक्ष्म्यां दक्षोर्ध्वहस्त मारभ्य वामाद्धःपर्यंतं आसां वाहनान्यपि ध्येयानि । तानि तत्तद्देवतानामिति ज्ञेयं । ब्राह्म्यां हंस इति । तत्र वाराह्यां महिषः । तदुक्तं । वाराही च प्रवक्ष्यामि महिषो परि संस्थितामिति । चामुण्डायां प्रेतइति ज्ञेयं । वाराही वराहवक्त्रा । चामुण्डा निर्मांसाध्येया । आसु च कौमारी वैष्णवीइंद्राणी महालक्ष्म्यो द्विनेत्राः अन्यास्त्रिनेत्राः आसां बीजानि तंत्रांतरोक्तानि । अष्टौ दीर्घाःचादयोष्टौ सानंताश्च विलोभनाः । इंद्र आकाशसंयुक्तो बीजान्यासां क्रमाद्विदुरिति । सकधासत्तम इत्यनेन । एवं प्रकारेण साधितां मातृकामन्यमंत्राङ्गत्वेनविनियुंज्यादित्युक्तं भवति ॥ २५ ॥ सृष्टिन्यासमाह । न्यसेदिति यदा सृष्ट्या सृष्टिमार्गेणन्यसेत्तदा भर्गान्वितामिति । यत्तदोरध्याहारेणान्वयः । एवमग्रेपि । यथाविधीत्यनेनैतदुक्तं भवति । अत्र सृष्टिमातृकादेवता पूर्ववद्विसर्गांते वर्णैः षडंगन्यासः ऋषिच्छंदसो ध्यानं पूजादिकमपि पूर्ववदेवन्यासस्थानान्यपि पूर्वोक्तान्येवेति । प्रयोगस्तु । अंनमः केशान्ते । आंनमः मुखवृत्ते इत्यादि ॥ २६ ॥ स्थितिन्यासमाह । सर्गेतिडार्णाद्यामिति । ठपर्यन्तामित्यर्थः भर्गबिन्द्वन्तिकामिति । बिंदुसर्गान्वितत्वं प्रत्यक्षरमिति ज्ञेयम् । बिन्द्वामीत्यनेनैतदुक्तं भवति । स्थितिमातृकादेवताषडंगान्यपि पूर्ववदेव सर्गबिन्द्वन्तिकवर्णैः कार्याणीति । तत्र योगः । डं नमः दक्षिणगुल्फे ढं नमः दक्षिणपादांगुलिमूले इत्यादि चान्तं विन्यस्य अं नमःकेशान्त इत्यादि तं नमः दक्षिणजानुनि इत्यन्तं न्यसेत् । तदुक्तं ग्रैवे । डकारादि ठकारान्ता योजयेत्परदे-

वहन्ती हेमसङ्काशा महालक्ष्मीः समीरिता ॥२६॥ पूजयन्मेयमातृकामित्थं नित्यं साधकसत्तमः। न्यसेत्सर्गान्वितां सृष्ट्या नत्वा देवीं यथाविधि ॥२७॥ सर्गे बिन्द्वन्तिकान्यस्येत् हार्णाद्यां स्थितिवर्त्मना । विद्यात्पूर्वोदितान्विद्वानृष्यादीनङ्गसंयुतान् ॥ २८ ॥ ध्यायेद्वर्णेश्वरीं मन्त्रवल्लभेन समन्विताम् ॥ सिन्दूरकान्तिममिताभरणां त्रिनेत्रां विद्याक्षसूत्रमृगपोतवरं दधानाम् । पार्श्वस्थितां भगवतीमपिकाञ्चनाङ्गीं ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम् ॥ २९ ॥ अभ्यर्चनादिकं सर्वं विदध्यात्पूर्ववर्त्मना । बिंदुयुक्तामिमांन्यस्येत्संहृत्यात्मतिलोमतः ॥ ३० ॥ विद्यात्पूर्वोदितान्विद्वानृष्यादीनङ्गसंयुतान्। ध्येया वर्णमये पीठे देवी वाग्वल्लभा शिवा ॥३१॥ अक्षस्रजं हरिणपोतमुदग्रटङ्कं विद्यां करैरविरतं दधतीं त्रिनेत्राम् । अर्द्धेंदुमौलिमरुणामरविंदवासां वर्णेश्वरीं प्रणमतस्तनभारनम्राम् ॥ ३२ ॥ न्यासार्चनादिकं सर्वं कुर्यात्पूर्वोक्तवर्त्मना । तारोत्थाभिः कलाभिस्तांन्यसेत्साधकसत्तमः ॥ ३३ ॥ वर्णाद्यास्तारसंयुक्ता न्यस्तव्यास्तानमोन्विताः । ऋषिः प्रजापतिश्छन्दोगायत्रं समुदाहृतम् ॥ ३४ ॥ कलात्मा वर्णजननी देवता शारदा स्मृता । ह्रस्वदीर्घान्तरगतैः षडङ्गं प्रणवैः स्मृतम् ॥३५ ॥ ह्रस्वैः पञ्च

---

वतामिति । अत्र केचित् । सृष्टौ अकारादितकारपर्यंतन्यासं कारयन्ति । स्थितौ डकारादिचकारपर्यन्तम् । तदविचारितरमणीयम् । समग्रमातृकावृत्तिर्न्यासत्वात् । अत्रेति । स्थितिन्यासे पार्श्वं वामम् । आयुधध्यानं उर्ध्वादिदक्षे । अक्षमालावरौ वामे मृगपोतविद्येतिशिवे । उक्तंच पद्मपादाचार्यैः वराक्ष सूत्रमृगपुस्तकधरं देवमिति ॥ वर्णमालामक्षमालामियं दक्षे विद्यावामे कराब्जेति । उपमा समासः ॥ २८ ॥ संहारन्या समाह बिंदुयुक्तामिति । प्रतिलोमतः क्षकारादि अकारांतस्थानानि तु तान्येवविद्वामित्यनेनैतदुक्तं भवति । संहारमातृका देवता षडंगान्यपि पूर्ववदेव बिंद तैर्वर्णैः। तदुक्तं ततः सबिंदुके न्यासे ऋषि च्छंदस्तु पूर्ववत् ॥ संहारशारदा देवी सबिंद्वर्णैः षडंगकमिति । प्रयोगस्तु क्षं नमः हृदादिमुखे ळंनमः हृदादि जठरे इत्यादि अत्रेति उदग्रस्तीक्ष्णः ऊर्द्धाग्रो वा टं कः परशुः आयुध्यानं दक्षे । ऊर्ध्वादिपरशुवर्णमाले परे वामे।उक्तंच पद्मपादाचार्यैः अक्षमालाटंक पुस्तकधरां ध्यायेदिति ॥ अरविंदवासं श्वेताब्जवस्त्रं कानामस्त्रष्टिस्स्थितिः। संहृतिर्वेति ॥ तदुच्यते अंतर्गतस्य बहिरवभासः सृष्टिः शिवेवभासर्गतिः संस्कारमात्रशेषतया अंतरवस्थानं विनाशः यदाज्ञः चिद्रूपस्यात्मनः सर्वजगतामीशितुः प्रभोः। ग्राह्यग्राहकत्वे चिन्मयप्रकाश सृष्टिरीश्वरी । अत्र स्थितिः स्याज्जगतामवभासः समीरितः। संस्कार मात्रशेषोयं विनाशः संहृतिः शिवे इति एवं ध्यानेन न्यासत्रयं कर्त्तव्यमित्यर्थः ॥ ३१ ॥ कलान्यासमाह तारोत्थाभिरिति । प्रणवपंचभेदसमुत्पाचाभिः सृष्ट्यादिभिः कलाभिः सह तां मातृकां न्यसेदित्युक्त स्थानेषु साधकसत्तम इत्यनेन प्रणवत्रयादित्वमप्युक्तं भवति ॥ वर्णाद्य इति अकारादि वर्णाद्याः एवं भूतास्तारसंयुताः अनेनायं क्रमः प्रथमत प्रणवः पश्चदकाराक्षरं ॥ पश्चात्कलानाम अतएवाद्यसंयुक्तशब्दो नमोन्विता इति संप्रदायादंते नमस्यायोगात्चतुर्थ्यं तत्वं न्यसेदित्यनेननैराकांक्ष्येपि पंचभेदकलानामादौ न्यासस्थापनयाह न्यस्तव्यास्ता इति ॥ तत्र तु न्यासे तु योजयेदादौ षोडशस्वरगाः

रथांगं गुणमथहरिणं पुस्तकं वर्णमालां टंकं शुभ्रं कपालं वरममृतलसद्धेमकुम्भं वहन्तीम्। मुक्ता विद्युत्पयोदस्फटिकनवजपाबन्धुरैः पञ्चवक्त्रैस्त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां शारदां तां नमामि॥ ३६॥ अर्चयेदुक्तमार्गेण शारदां सर्वकामदाम्। तार्तीयपूर्वां तान्यस्येन्नमोंतां रुद्रसंयुताम्॥ ३७॥ सधातुप्राणशक्त्यात्मयुक्तापादिषु ते क्रमात्। ऋषिः स्याद्दक्षिणामूर्तिर्गायत्रं छन्दईरितम्॥ ३८॥ अर्धनारीश्वरः प्रोक्तो देवता तन्त्रवेदिभिः। हसा-

---

कला इत्युक्तत्वात्॥ प्रथममादकलानां निवृत्यादीनां न्यासः पश्चादकारोकारमकारबिंदुजानां सृष्ट्यादीनां। प्रयोगस्तु। ओं अं निवृत्त्यै नमः केशांते इत्यादि कलात्म। वर्णजननी शारदादेवतेति॥ कलात्ममातृकदेवतेत्यर्थः ह्रस्वदीर्घांतरगतैरिती॥ क्लीबह्रस्वदीर्घस्वरमध्यगैरित्यर्थः॥अं ॐ आं हृदयाय नम इत्यादि प्रयोगः॥ ३४॥ हस्तैरिति। रथांगं चक्रं गुणस्त्रिशूलं। वर्णमाला। अक्षमालां टंकः परशुः शुभ्रतिति। कपालविशेषणं दरः शंखः आयुधध्यानं दक्षाधस्तनतोवामाधस्तनपर्यंतं पुस्तकाक्षमालयोर्विपर्ययः। यदुक्तं पद्मपादाचार्यैः। पद्मचक्रमृगाक्षसूत्रपुस्तकटंककपालशंखकलशधरा ध्येयेति। मुक्तेति ऊर्ध्वादिमुखानां वर्णाः सकलशशिनिभां शुभ्रवर्णा सर्वकामदामिति विनियोगोक्तिः अतएव पद्मपादाचार्याः सर्वत्र सर्वचेति॥ ३४॥ श्रीकंठमातृकामाह॥ तार्तीयेति तार्त्तीयं भैरव्याः द्वादशं वक्ष्यमाणं॥ केचन रेफवर्जितं तद्वदंति॥ अयमेव सांप्रदायिकः पक्षः यतो मातृकाज्ञकणिकाबीजमेवं संगृहीतं भवति॥ भैरवीत्रिंशद्भेदमध्ये एकस्य भेदस्य तार्त्तीयं रेफवर्जितं भवत्येव। ग्रन्थकृदतएव षडङ्गावसरे हसाः षट्दीर्घयुक्तेनेति वक्ष्यति न्यसेदित्युक्तस्थानेषु। साम्प्रदायिकास्तु प्रणवशक्तिप्रासादपश्चात्वरी योगमाहुः रुद्रसंयुतामिति सशक्तिकश्रीकंठादिसहितां नमोंतामित्यनेन चतुर्थी योगोप्युक्तः हसौः अं श्रीकंठेशपूर्णोदरीभ्यां नमः। केशान्त इत्यादि प्रयोगः। अयं साम्प्रदायिकः पक्षः अत्र ग्रंथकृता छन्दोनुरोधादीशशब्दः क्वचिन्नदत्तः न्यासावसरेऽवश्यं ज्ञेय इति। केचित्तु। पूर्णोदरीसहिताय श्रीकण्ठाय नम इति। अन्येतु पूर्णोदर्यै श्रीकण्ठाय नम इत्याहुः तदुभयमते रुद्राणां प्राधान्यमिति ते वदन्ति। पूर्णोदरी श्रीकण्ठाभ्यां नम इत्यपि केचिदिच्छन्ति। तत्पक्षत्रयमसाम्प्रदायिकम्। सहितशब्दस्यानुक्तस्याधिकस्य प्रथमपक्षे प्रयोगःद्वितीयपक्षे उभयत्र चतुर्थ्यनुपपन्ना एकत्र नमोसंयोगात् प्राप्यते।अन्यच्च प्रापकाभावात्।पक्षत्रये च रुद्रसंयुतामिति उक्तत्वात् मातृकाया रुद्रैः सहाव्यवधानेन संयोगो न भवति। अतः साम्प्रदायिकः पक्ष एव ज्यायान्। अपेक्षितार्थद्योतनिकाकारस्तु श्रीकण्ठेशाय पूर्णोदर्यै नम इति प्रयोगमाहस्म तदप्ययुक्तम्। यतो ध्याने अग्नीषोमादिवत् समुच्चितयोरेव देवतात्वं प्रतीयते। अस्मिंश्च प्रयोगे देवतयोः समुच्चितत्वम्। पृथक्चतुर्थीनिर्देशेनेतरेतरनिरपेक्षयोरेव तत्प्रतीतेः किञ्च यदग्नये च प्रजापतये च सायं जुहोतीत्यत्र शब्दद्वयकृत परस्परापेक्षयोः प्रत्येकं क्रियान्वयाभावेपि देवतासमुच्चयस्येष्टत्वात्। अत्र तु तदभावेन प्रत्येकं नमोन्वयात् सुतरान्तत्समुच्चयाप्रतीतिः तेन होमादावपि श्रीकण्ठेशपूर्णोदरीभ्यां स्वाहेत्येकैवाहुतिः एवं केशवादिकामगणेशन्यासेष्वपि द्रष्टव्यम्। यत्तु क्वचित्क्वशवाय च कीर्त्येत्युच्चारश्छन्दोनुरोधेनेति॥ ३६॥ सधात्विति। ते रुद्राः या-

षट्दीर्घयुक्तेन कुर्यादङ्गानि देशिकः ॥ ३९ ॥ बन्धूककाञ्चननिभं रुचिराक्षमालां पाशाङ्कुशौ च वरदं निजबाहुदण्डैः। बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रमर्द्धाम्बिकेशमनिशं वपुराश्रयामः ४०

दिषु यकारादिषु दशसु व्यापकेषु धातवः त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि प्राणः शक्तिः आत्मा च एतद्युता क्रमात् ज्ञेयाः अत्र यद्यपि रुद्रपदं समासगर्भितम् । तथापि सर्वनाम्ना परामृश्यते। सर्वनाम्नां तु वृत्तिर्वृत्तिच्छन्नस्येति वामनसूत्रात्। प्रयोगस्तु। ह्सौः यं त्वगात्मभ्यां वालीशसुमुखीश्वरीभ्यां नमः हृदय इत्यादि। अत्रात्मशब्दः सम्प्रदायात्प्रयुज्यते । ग्रन्थान्तरे आत्मशब्दस्थाने क्रोधशब्दमुक्ता आत्मशब्दः सर्वत्र प्रयोक्तव्य इत्युक्तं यादीन् धातुप्राणशक्तिक्रोधाद्यात्मने युतानिति । अन्यत्रापि। जीवं शक्तिं क्रोधमप्यात्मनेतानिति। आचार्यस्तु। तावपि धातवो याद्याः सप्तसमीरणश्च सपरः चः क्रोध इत्यम्बिके इति। अत्र तु चकारस्य नरसिंहबीजत्वात् क्रोधशब्दोक्तिः । पद्मपादाचार्यैः प्रथमपद्यव्याख्याने विरचितेत्यादिना मातृकास्थानोक्तिः आख्यायते। एभिरिति सप्तधातवः हृच्छब्देन प्राणः शक्तिश्चाभिहिता। कशब्देन सुखार्थेन परमात्मोक्त इति । यादिन्यासस्थानानीत्युक्तम् । तन्मतानुसारेणेह मूलकारेण आत्मग्रहणं कृतम् । ननु त्वगादिपरमात्मस्य देवतात्मनो यादिन्यासेनैव साधकशरीरे संनिधाने सति किमव शिष्टाचरन्यासेनेति । देवतावयवविशेषरचनाकल्पनाकल्पनेति ब्रूमः नच प्रथमं सामान्यकल्पना पुनर्विशेषकल्पनेतिनियमोस्ति । येनलिपिन्यासस्य चकारादित्वं स्यात्सर्वत्र नित्यवशे मेसामान्यविषरूपं हि देवताशरीरं तस्य साधकशरीरे संनिधिर्न्यासे नोत्पाद्यते। अतः प्रथममकारादिन्यासे नावयवविशेषं संनिधिस्मरणेन कश्चिद्दोषः नच संहारक्रमेण मातृकान्यासे प्रथमं सामान्यसंहारः पश्चाद्विशेषेसंहार इतिक्रम कोपः उभयोरप्यात्मन्येव संहारात्।नच सामान्यसंहारेणैव संहृतत्वाद्विशेषाणां पृथक्संहरणमनर्थकं विशेषसंहारक्रमचिंतायाः कर्त्तव्यत्वात्। षटदीर्घाः आई ऊ ऐ औअः तद्युतेन हसाहकारसकारेण। देशिक इत्यनेन मिलितेनेत्युक्तं। प्रयोगस्तु। ह्सौ हृदयाय नम इत्यादि अन्येतु हृल्लामादिकानि मातृकांगानि एवमिच्छंति। सांप्रदायिकास्तु। प्रणवमायालक्ष्मी पंचाचरीब्रह्माणि माहेश्वरी कौमारी वैष्णवी वाराही इंद्राणीति बीजाद्याः रक्षयुग्मांता अमुकवाहने प्रमुखरक्षयुग्मांताः अमुकहस्ते प्रमुख मां रक्ष युग्मांता। दीर्घत्रया क्रांतमायापुटितमातृकांगानि तार्तीयं च संजोविनि ऊर्द्धकेशिनि जटिलकेशिनि विश्वरूपिणि ताराक्षिणि हिःमारयशब्दानुच्चार्य हृदादीन्युच्चारयेदिति। प्रयोगस्तु। ॐ ह्रीं श्रीं नमः शिवाय नमः हं ब्रह्माणी रक्ष २ हंसवाहने रक्ष पद्महस्ते मां रक्ष २ ह्रां ह्रीं ह्रूं अं कं खं गं घं ङं आं ह्रां ह्रीं ह्सौः सजीविनि हृदयाय नम इत्यादिबीजानि तु मां कं क्रों हुं हुं आयुधानि पद्मशूलशक्तिचक्रगदावज्राणि। व्यापकमंत्रस्तु। ॐ ह्री श्रों नमः शिवाय हुं चामुण्डे रक्ष २ वेतालवाहनेरक्ष २ पाशहस्ते मम सर्वांगं रक्ष २ ह्रां ह्रीं ह्रं ह्रस्वषटकं आदिचांतं दीर्घषट्कमुच्चार्य ह्रांह्रीं ह्रूंह्सौः सर्वांगव्यापिनि स्वाहेति व्यापकं कृत्वा श्रीकंठमातृकां न्यसेदिति। अत्रान्ये मुखादौ षष्ट्यव्यापकमंत्राः संप्रदायतो ज्ञेयाः । यत्प्रयोगसारे। मातरोष्टौ समुत्पन्ना वर्गाणां नायि कास्तताः। व्यापिनी पालिनी देवी पावनी क्लेदिनी पुनः।धारिणी मालिनी भूयो हंसिनीशातिनीतथा।वर्गाणां नायकाश्चाष्टौ भैरवाःसमुदीरिता इति।

पूर्वोक्तेनैव मार्गेण पूजयेत्तं यथाविधि। स्मराद्यां मातृकां न्यस्येत्केशवादिनमोन्विताम् ॥४१॥
सधातुप्राणशक्त्यात्मयुक्तायादिषु विष्णवः। ऋषिःप्रजापतिः प्रोक्तो गायत्रं छन्दईरितम् ॥४२॥
अर्द्धलक्ष्मीर्हरिः साक्षाद्देवतात्र समीरिता। दीर्घयुक्तेन बीजेन षडङ्गानि समाचरेत् ॥४३॥
हस्तैर्बिभ्रत्सरसिजगदाशंखचक्राणि विद्यापद्मादर्शौ कनककलशं मेघविद्युद्विलासम्। वामो-
त्तुङ्गस्तनमविरलाकल्पमाश्लेषलोभादेकीभूतं वपुरवतुवःपुण्डरीकाक्षलक्ष्म्योः ॥४४॥ अत्रा-
र्चनादिकं सर्वं प्राग्वन्मन्त्री समाचरेत्। शक्तिपूर्वां तनौन्यस्येन्मातृकां मन्त्रवित्तमः ॥४५॥

---

अष्टमो व्यापकन्यासस्तु आदिक्षांतमुच्चार्य संहारभैरव शांतिनीभ्यां नमः सर्वांगे । आयुधध्यानं। दक्षेऊर्द्धादि। अंकुशाक्षमालेऽपरे वामे यथाविधीत्यनेनैतदुक्तं भवति। स्मराद्यांवालाद्या वा काम-मात्रदां न्यसेत्। क्लीं कामरतिभ्यां नम इति केशांते इत्यादिप्रयोगः। ध्यानं च। रक्तांगरागकुसुमां वरमात्तभूषानीलोत्पलाढ्यकरशक्तिसुभूषितांकं। ध्यायेत्प्रसूनशरमिक्षुधनुर्द्धरं च सद्दाडिमीकुसुम-भासमनंगमूर्त्तिमिति। एवं गणपतिबीजाद्यां षट्बीजाद्यां वा गणपतिमातृकांन्यसेत्। तत्र प्रयो-गः। गं विघ्नेश ह्रीं श्रीं श्यां नमः केशांते। इत्यादि ध्यानंच। तारुण्योन्मदचारुलोहितलसत्कां-तांगरागांबरं सद्रक्तोत्पलहस्तया वनितया वामांकमारूढया। हस्ताब्जैर्वरमंकुशं गुणमभीतिंधार यंतं शुभं ध्यायेयं गणपं गजेंद्रवदनं नेत्रत्रयोल्लासितमिति। अत्रोभयोर्व्यापकेषुत्वगादियोगोप्यनुसंधे-यः। केशवादिमातृकान्यासमाह। स्मराद्यामिति। कामत्रीजाद्यां सांप्रदायिकास्तु। त्रिपुटा नारा यणाष्टाक्षरयोगमिच्छंति। अन्येप्रणवत्रययोगं परे प्रणवत्रयपुटितत्वं। केचन श्रीबीजयोगमिति। य-थासंप्रदायं व्यवहारः। प्रयोगस्तु। क्लीं अं केशवकीर्त्तिभ्यां नमः केशांत इत्यादि ॥ ४० ॥ सधात्विति। यंत्वगात्मने पुरुषोत्तमाय वसुधायै नमः हृदय इत्यादिदीर्घयुक्तेति। दीर्घाषट् पूर्वोक्ताः तद्युक्तेनादिबीजेन कामबीजेन तेन क्लांमित्यादिहृदादिषुज्ञेयं। अन्येतु क्लीभादि-कानि मातृकांगान्येवेच्छंति। सांप्रदायिकास्तु। माया नारायणाष्टाक्षराजपापरमात्ममंत्र स्वरपुटितैः कादिवर्णैः देवीपद्मिनी विष्णुपत्नी वरदा कमलरूपा शूलिनीयुक्तैर्हृदयादीन्यंगानि इ-ति मन्वते। प्रयोगस्तु। ॐ नमो नारायणाय हंसः सोहं अं कं खं गं घं ङं आं ॐ नमो नारायणा य हंसः सोहं देव्यै हृदयाय नम इत्यादि ॥ ४२ ॥ हस्तैरिति। मेघेत्यादि। वपुर्विशेषणं। आकल्पो भूषा। आयुधध्यानं। दक्षिणाधोहस्तमारभ्य वामाधस्तनं यावत्। तेन पुरुषायुधानि दक्षिणतःस्त्र्या युधानि वाम त इति सिध्यति। पद्मपादाचार्याणां संमतमेतत्। उक्तंच। विद्यारविंदमुकुरामृतकुं भपद्मकौमोदकीदरसुदर्शनशोभि हस्तमिति। अत्र वामोर्ध्वांतं क्रमो ज्ञेयः। अन्यत्र। यदस्मिनन्या से चतुर्भुजध्यानं तत्केवलविष्णोर्नलक्ष्मीसहितस्यैव ध्येयं। अयमयावश्यकः। यदाहुः। केशवादिर यं न्यासो न्यासमात्रेण देहिनां। अच्युतत्वं ददात्येव सत्यं सत्यं नचान्यथेति ॥ ४४ ॥ ऋषिः शक्तिरि ति। वसिष्ठपुत्रः सर्वसौभाग्यदायिनीति। विनियोग उक्तः दीर्घेति। दीर्घाः षट्दीर्घाः अर्द्धेंदुबिंदुः एतद्युक्तेन मायात्मना बीजेनेति शेषः। प्रयोगस्तु। ह्रां हृदयाय नम इत्यादि। केचन ह्रामादिका नि मातृकांगान्येवेच्छंति। एवमग्रेपि ॥ ४५ ॥ उद्यदिति। मंजीरैः नूपुरैः जपवटीमक्षमालां। आ

ऋषिः शक्तिः स्मृतं छन्दोगायत्रं देवता बुधैः। संप्रोक्ताविश्वजननी सर्वसौभाग्यदायिनी४६ दीर्घार्द्धेन्दुयुजाङ्गानि कुर्यान्मायात्मना बुधः ॥ उद्यत्कोटिदिवाकरप्रतिभटोतुङ्गोरुपीनस्तनी वद्धार्द्धेन्दुकिरीटहाररसनामंजीरसंशोभिता । बिभ्राणा करपंकजैर्जपवटीं पाशांकुशौ पुस्तकं दिश्याद्वो जगदीश्वरी त्रिनयना पद्मेनिषण्णा सुखम् ॥४७॥ पुरोदितेन विधिना देवीमन्व- हमर्चयेत् । न्यसेच्छ्रीबीजसंपन्नां मातृकां विधिना तनौ ॥ ४८ ॥ ऋषिर्भृगुःस्मृतं छन्दो गा- यत्रं देवता स्मृता । समस्तसम्पदामादिर्जगतां नायिकाबुधैः ॥ ४९॥ प्राक्प्रस्तुतेन बीजेन कुर्यादङ्गानि साधकः । विद्युद्दामसमप्रभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः शुण्डादण्डसमुद्धृतामृ- तघटैरासिच्यमानामिमाम् । बिभ्राणां करपंकजैर्जपवटीं पद्मद्वयं पुस्तकं भास्वद्रत्नसमुज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीं ॥ ५० ॥ आराधयेदिमां प्रोक्तवर्त्मना कुसुमादिभिः ॥ न्य- सेत्स्मराद्यां वपुषिमातृकां मंगलप्रदां ॥ ५१ ॥ ऋषिः संमोहनः प्रोक्तश्छंदो गायत्रमुच्यते ॥ देवतामंत्रिभिः प्रोक्ता समस्तजननी परा ॥ ५२ ॥ स्मरेण दीर्घयुक्तेन विदध्यादंगकल्पनां॥ बालार्ककोटिरुचिरां स्फटिकाक्षमालां कोदंडमिक्षुजनितं स्मरपंचबाणान् ॥ विद्यां च हस्त- कमलैर्दधतीं त्रिनेत्रां ध्यायेत्समस्तजननीं नवचंद्रचूडाम् ॥ ५३ ॥ अर्चनादिक्रियाः सर्वाः प्रोक्ताः पूर्वविधानतः ॥ शक्तिश्रीकामबीजाद्यां देवीं वर्णतनुं भजेत् ॥ ५४ ॥ ऋषिः पूर्वो- दितश्छंदोगायत्रंदेवताबुधैः ॥ सन्मोहनी समुद्दिष्टा सर्वलोकवशंकरा ॥ ५५ ॥ आवर्तितै स्त्रिभिर्बीजैः षडंगानि प्रकल्पयेत् ॥ ध्यायेयमक्षवलयेक्षुशरासपाशान् पद्मद्वयांकुशशरान्नवपु स्तकञ्च ॥ आबिभ्रतीं निजकरैररुणां कुचार्तां संमोहनीं त्रिनयनां तरुणेंदुचूडां ॥ ५५ ॥

---

युधध्यानं। दक्षे ऊर्ध्वादि अंकुशाक्षमाले परे वामे। उक्तंच। पद्मपादाचार्यैः अक्षसूत्रांकुशपाशपु स्तककरा ध्येयेति। समस्तसंपदामादिरिति। विनियोगोक्तिः। प्राक्प्रस्तुतेनेति।,पूर्वोक्तेन मार्गे ण षट्दीर्घयुक्तेनेत्यर्थः बीजेनेत्यर्थः तेन श्रां श्रीमित्यादि षडंगं। एतदादीनि मातृकां गानि वा। आयुधध्यानं। दक्षाधस्तादामाधः पर्यंतं स्मराद्यामित्यनेन काम श्रीशक्त्यादिकामपि न्यसेत् इत्यु क्तं तस्य त एव ऋष्याद्याः हिरक्लैर्बीजैरंगानि पंचबाणपद्मांकुशाक्षमालापुस्तकपाशपद्मधनुर्द्धरारुणा ध्येया। आयुधध्यानंदक्षाधस्तनमारभ्य वामाधस्तनपर्यंतं। न्यासपूजादिकं पूर्ववदेव। सौकर्यायध्या नश्लोकोपि। सापं च बाणकमलांकुशकाक्षमालाविद्यागुणाब्जधनुरष्टकरा त्रिनेत्रा। रक्तारुणांबर विलेपनभूषणाद्या पायात्तु वर्णजननी शशिशेखरावः। मंगलप्रदामिति। विनियोगोक्तिः दीर्घयुक्ते न षट्दीर्घयुक्तेन ॥ ५१ ॥ बालेति। विद्यां पुस्तकं। अक्षमालां। पंचबाणान्। दक्षे अधस्तनादि वामे पुस्तकचापौ इत्यायुधध्यानं। तदुक्तं पद्मपादाचार्यैः अक्षस्रक्चापपंचबाणपुस्तकधरा ध्येया इति पूर्वोदित इति। संमोहनः सर्वलोकवशंकरीति विनियोगोक्तिः आवर्त्तितैरिति। द्विवारं प्रथमाति क्रमेकारणाभावात्।एवं षट्बीजानि भवंति क्रीं हृदयायनम इत्यादि प्रयोगः।ध्येयेयमिति। इक्षुशराम इषु धनुः आयुधध्यानं।दक्षेऊर्ध्वादि। अंकुशपद्मशराक्षमालाः वामे पद्मधनुः पुस्तकानि।तदुक्तं पद्मप. दाचार्यैः अक्षस्रक्पंचशरपद्मांकुशपाशपद्मेक्षुधनुः पुस्तकधरारुणा ध्येया इति। प्रपंचेति। सच्चिदानं

यजेदावरणैः सार्द्धमुपचारैः सुशोभनां ॥ प्रपञ्चयागं वक्ष्यामि सच्चिदानन्दसिद्धिदम् ५६
वेदादिशक्तिरजया परमात्मा महामनुः॥ वह्नेर्जाया च कथि तापञ्चमन्त्राः शुभावहाः॥५७॥
तारशक्त्यादिकां न्यस्येदजयात्माद्विठांतिकां ॥ मातृकामुक्तमार्गेणसृष्ट्या देहेविधानवित् ५८
ऋषिर्ब्रह्मासमुद्दिष्टश्छन्दो गायत्रमीरितम्॥समस्तवर्णसंव्याप्तं परंतेजोस्य देवता॥५९॥स्वाहाद्यैः
पञ्चमनुभिःपञ्चांगानि प्रकल्पयेत्॥ अस्त्रं दिक्षु बुधः कुर्याद्भूयो हरिहराक्षरैः ॥६०॥ तारादिप-
ञ्चमनुभिःपरिचीयमानं मानैरगम्यमनिशंजगदेकमूलम्॥सच्चित्समस्तगमनश्वरमच्युतं तत्तेजः

---

दसिद्धिदमिति । विनियोगोक्तिः वेदादः प्रणवः अजपाहंसः आत्मा महामनुः सोहं वह्नेर्जायास्वा
हा प्रणवोबीजं हृल्लेखाशक्तिः शुभावहा इत्यनेनास्य स्वातंत्र्यमप्युक्तं । यदाहुः स्वतंत्रोपि जपात्सि
द्धिं कुर्यादष्टाक्षरो मनुः तस्माद्यथावत् प्रजपेद्धीमान् मोक्षपरः पुमान् इति । सांप्रदायिका वाग्भ
वहृल्लेखासंपुटमाहुः ॥ ५७ ॥ तारशक्त्यादेशिकमिति । आत्मा परमात्ममंत्रः अजपायाः पूर्वमुक्तत्वाद्वि
ठः स्वाहाप्रतिवर्णमादौ तारमाये अंतेत्वजपादयः ॐ ह्रीं अं हंसः सोहं स्वाहा । केशांत इत्यादि
प्रयोगः संहारस्य वक्ष्यमाणत्वाद सृष्ट्येत्युक्तिः विधानविदित्यनेनैतदुक्तं भवति । षडंगन्या
सपूर्वकं सावरणं महागणपतिं ध्यात्वा चतुश्चत्वारिंशद्वारं गणेशबीजं सकृद्गणानांत्वेत्येवं चतुराह्व-
त्तमहागणपतिमंत्रं प्रजप्य यथोक्तां शुद्धमातृकां त्रिर्विन्यस्य अकचटतपयादिपूर्वानक्षादीनपिसप्त
सुखदोःपदुदरहृत्सु न्यस्येदिति ॥ ५८ ॥ स्वाहाद्यैरिति । विपरीतैः स्वाहाहृदयाय नमः सोहं शिर
सेस्वाहा इत्यादिप्रयोगः दिक्ष्विति।छोटिकाभिः भूयोनंतरं षष्ठांगादित्यर्थः।हरिहराक्षरैरिति यथाश्रु-
तैः।तदुक्तं। जायाग्ने हृदयमथो शिरश्च सोहं हंसात्मात्वथ च शिखा स्वयं च वर्म।ताराख्यं स मुदित-
मीक्षणं तथास्त्रं प्रोक्तं स्याद्धरिहरवर्णभंगमेवेति। क्लिक्ल इति केचित् ॥ ६० ॥ तारादीति तत्प्रसिद्ध
परतेजः ब्रह्मानिशं । सर्वदाभजता अन्येअन्येषांतेजसामितद्ग्राप्यत्वादस्य परत्वं । सांद्रसुधांबुराशिमि-
ति व्यस्तरूपकं । तेनपुंल्लिंगत्वदोषोपिन । अंगुल्यः पल्लवान्यासन्निति वत् । एतेनानंदमयत्वं ध्वनितं
अच्युतमविकारी।अविनश्वरामविध्वंसी समस्तगं व्यापकं चित्स्वप्रकाशज्ञानरूपं सत्सत्तात्मकं। विद्धी
दसर्वंसत्सदिति । विद्धीदं सर्वं प्रशस्यत इति श्रुतेः । जगदेकमूलं तत्परिणामरूपत्वात् जगतः । अत
एवाह । एतैः परिचीयमानं एतेषां जपेन लभ्यमित्यर्थः । तत्र तारस्य पंचावयवस्य प्रलीनाशेषप्र-
विकृतित्वात् देवी तारावयवानामपि तदवयवैरभेदानंदप्रत्ययार्थपर्यवसायित्वात् । अजपात्ममन्त्रो-
रपि जीवपरमात्मतादात्म्यर्थत्वात्पंचद्विठावयवानामपि सर्वत्रानुगतविदर्थत्वात् । संहितायां तु
प्रणवश्चित्कला ज्ञेया मायाव्याप्तिस्वरूपिणी हंसः पदेनदेवेशि साक्षादात्मस्वरूपिणी।तत्रत्यबिंदुश्चित-
यात्सृष्टिस्थितिलयात्मिका । प्रसूतो बिंदुनाद्येन वामेयं ब्रह्मरूपिणी।बिंदुनाथ द्वितीयेन पालयंती
जगत्त्रयं।ज्येष्टेयं वैष्णवी माया चाद्यासत्वगुणा प्रिये । अंत्येव बिंदुना सर्वं रसंती तमसावृता । रौद्री
बिंदुत्रयं देवि प्रसूते चांबिका तदा।आत्मानं दर्शयत्येषा हंसाख्या संहृति यदा । तदेयं दर्पणाकारा
ततोज्योतिर्मयी भवेत् । वर्णाभ्यां वन्हिजायायाः परंज्योतिरितिप्रिये। एवं विचारयन्मंत्री साक्षद्ब्रा-
ब्रह्म भवेत्तु स इति । अत्र प्रपंचयागमूर्त्तेः पूजानोक्ता सातंत्रान्तरोक्ता यथा । मातृकामंत्रसंप्रक्तो

परम्भजत सांद्रसुधां शुराशिं ॥ ६१ ॥ पंचभूतमया वर्णा वर्गेभ्यः प्रागुदीरिताः ॥ तस्माद् ज्ञानेंद्रियात्मानः प्रपञ्चं तन्मयंविदुः ॥ ६२ ॥ देहोपिताद्दशस्तस्मिन्न्यसेद्वर्णान्विलोमतः ॥ ततस्स्थानयुतान्मंत्री जुहुयात् परतेजसि ॥ ६३ ॥ एवं वर्णमयं होमं कृत्वा दिव्यतनुर्भवेत् ॥ न्यस्य मन्त्रीयथान्यायं देहे विश्वस्य मातरम् ॥ ६४॥ जपेन्मंत्रान्भजेद्देवान्यजेदग्निमनन्यधीः द्रव्यैश्चजुहुयादग्नौ मन्त्राविंत्तत्रचोदितैः ॥ ६५ ॥ अश्वत्थोदुंबरप्लक्षन्यग्रोधसमिधस्तिलाः ॥

---

पीठे संलिपि पंकजे। प्रपंचयागमूर्त्तिं तु समावाह्य प्रपूजयेत्। स्वरैराद्याहृतिः प्रोक्ता द्वितीयाकादि मूर्त्तिभिः। तृतीया तु समुद्दिष्टा भारत्याद्यष्टशक्तिभिः। चतुर्थी मातृभिः सार्द्धमसि तांगादिभैरवैः। वासवादिदिशां नाथैः पंचमीत्वायुधैः परेति। प्रपंचयागं वच्चामीत्युक्तं तत्र प्रपंच इज्यतेह्वयते यत्रेति। प्रपंचयागः तमिव होमप्रकारं वदन् न्यासांतरमपि सूचयति। पंचभूतेति। प्रागिति द्वितीयेज्ञानेंद्रियात्मान इत्युपलक्षणं तेनाकाशवर्णाः ज्ञानकर्मेंद्रियात्मानः वायुवर्णाः तदर्थरूपाः अग्निवर्णाः प्राणादिदशवायुरूपा इत्यप्यूह्यं। तादृशइति। पंचभूतमयस्तत्र वर्णान्न्यसेत् इति। तत्र प्रकारः पृथिव्यादशवर्णान् प्रपंचयागवदुच्चार्य। तलादिजानुपर्यंतं विन्यसेद्देवमाकाशांतविलोमत इति पुनः शकाशादिवर्णांस्तत्र स्थानेषु भूमिपर्यंतं विन्यसेत्। तत्तदिति। विपरीतन्यासे ध्यानं। एवं ध्यानं कृत्वा विपरीतं न्यसेत्॥६३॥ पूर्वोक्तं प्रपंचयागेप्यतिदिशति। एवमिति। तत्र प्रकारः ॐ क्रौंचंहंसः सोहं स्वाहा इति। आंतं विन्यसेत् तत्र चकारं तदधिष्ठातृदेवतां तत्तत्स्थान च तदवच्छिन्ने चैतन्ये जुहोमि इति ध्यायन्। एवं संहारन्यासं कुर्यात्। इति तात्पर्यार्थः अयं सांप्रयिकः पक्षः। तदुक्तं आधारोत्थाशक्तिबिंदूत्थिताया वक्त्रे मूर्द्धेंदुशसंस्थाः प्रियायाः। ह्याद्यांतार्णान्पातयेद्वह्निसोमप्रीतान्मंत्री मुच्यते रोगजातैरिति। एवमुक्तसर्वविधमातृकान्यासस्य मंत्रांतरादौ कर्त्तव्यतामाह। न्यस्येति। मंत्री यथान्यायमित्यनेनैतदुक्तं भवति। सर्वान्मातृकान्यासान् कर्त्तुमशक्तः शक्तेः कलामातृकादीन्। शैवे श्रीकंठमातृकादीन् वैष्णवे केशवमातकादीन्। शुद्धप्रपंचयागमातृके सर्वत्र न्यसेदिति। तदुक्तं। जपादौ सर्वमंत्राणां विन्यासेन लिपेर्विना। कृतं तन्निष्फलं विद्यात्तस्मात्सर्वं लिपिं न्यसेत् इति। कादिमतेपि। मातृकायाः षडंगं च मातृकान्यासमेव च। सर्वासां प्रथमं कृत्वा पश्चात्तंचोदितं न्यसेत् इति। आचार्यश्च लिपिन्यासादिकान्सागानिति। नारायणीयेच। अंगानि च न्यसेत् सर्वे मंत्राः सांगास्तु सिद्धिदा इति। अन्यत्रापि। रुद्रैर्युक्तां केवलां वा मनूनां कर्मारंभे मातृकां विन्यसेद्यः। मंत्रान्सद्यः कुर्वते तस्य सिद्धिं पापैः सार्द्धं याति नाशं जराचेति। अनन्यधीरित्यनेन मातृकापुटितत्वजपेन सिद्धिरुक्ता। तदुक्तं। कुलप्रकाशतंत्रे। मंत्री तु प्रजपेन्मंत्रं मातृकाक्षरसंपुटं। क्रमोत्क्रमात् शतावृत्यामासात्सिद्धो भवेन्नरः। मातृकाजपमात्रेण मंत्राणां कोटिकोटयः। सुसिद्धाः स्युर्नसंदेहो यस्मात्सर्वंतदुद्भवमिति। प्रयोगसारेपि। मातृकायां तु सिद्धायां सिद्धास्युर्मंत्रजातयः। सर्वे मंत्रा यतो मग्नामातृकायामितस्तत इति। सर्वमातृकामंत्राणां काम्यकर्माण्याह। द्रव्यैरिति ॥६४॥६५॥ द्रव्याण्याह। अश्वत्थेति। जुहुयाल्लक्षमिति। द्वादशसहस्राणि पंचशती एकैकेन द्रव्येण तदर्द्धंचेति षट्सहस्राणिपंचाशदधिकाद्विशती एकैकेन द्रव्येण समाहित इत्यनेन तस्याप्यर्द्धमिति सूचितं मंत्री

सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः ॥ ६६ ॥ अमीभिर्जुहुयाल्लक्षं तदर्द्धं वासमाहितः ॥ सर्वान्कामानवाप्नोति परां सिद्धिंच विंदति ॥ ६७ ॥ एभिरर्कसहस्राणि हुत्वामंत्री विनाशयेत् ॥ रिपून्क्षुद्रग्रहान्भूतान्ज्वरांच्छायां श्च पन्नगान ॥६८ ॥ मंत्राणामयथावृत्ति प्रतिपत्तिसमुद्भवान् ॥ विकारान्नाशयेदाशु होमोयं समुदीरितः ॥ ६९ ॥ एभिस्त्रिमधुरोपेतै र्जुहुयाल्लक्षमानतः ॥ अचिरादेव सभवेत्साक्षाद्भूमिपुरंदरः ॥७०॥ अमीभिः साधको हुत्वा वश्यादीनापि साधयेत् ॥ हुत्वा लक्षं तिलैः शुद्धैर्मुच्यते सर्वपातकैः ॥ ७१ ॥ पायसान्नेन जुहुयान्मंत्री सर्वसमृद्धये ॥ पद्मानां लक्षहोमेन महतीं श्रियमाप्नुयात् ॥ ७२ ॥ घृतेन जुहुयाल्लक्षं प्राप्नुयात् कीर्तिमुत्तमां ॥ जातीकुसुमहोमेन सर्वलोकवशं नयेत् ॥ ७३ ॥ संशोधितैस्त्रिमध्वक्तैर्लवणैर्लक्षमानतः ॥ जुहुयाद्गुलिकां कृत्वा वशयेत्सर्वमंजसा ॥ ७४ ॥ लिखित्वा पत्रखण्डेषु मातृकार्णान्पृथक्पृथक् ॥ अभ्यर्च्य जुहुयाद्वन्हौ तत्पत्राक्षरमुच्चरन् ॥ ७५ ॥

---

तदर्द्धमथवापि तदर्द्धकं य इत्युक्तेः तदा त्रिसहस्री सपादशतमेकैकेन द्रव्येण अर्कसहस्राणीति तदा सार्द्धसहस्रमेकैकेन मंत्रीत्यनेनैतदुक्तं।विद्यादीनामल्पत्वमहत्वे विचार्य तत्तद्द्विगुणं चतुर्गुणं वा होमः कार्य्य इति ।उक्तं च।द्वादशसहस्रमथवा तद्द्विगुणं वाचतुर्गुणं वाथ जुहुयादिति।तदा सहस्रत्रयं सहस्रषट्कं वैकेन। एवमुत्तरत्रापि अत्यल्पत्वे एकादशशताहुत्येत्यपि ज्ञेयं। तदुक्तं। एकद्विकत्रिकचतुष्कशताभिवृत्या तां तां समीचप्रविकृतिं प्रजुहोति मंत्री। क्षुद्रं नारायणीयोक्तं। स्तम्भद्वेषौ तथोत्साद उच्चाटो भ्रममारणे व्याधिश्चेति स्मृतं क्षुद्रमिति ॥ ६८ ॥ प्रयोगांतरमाह। मंत्राणामिति। अयथावृत्तिर्वर्णाना मन्यथोच्चारणं। अप्रतिपत्तिरयं मंत्रफलदो नेति ज्ञानं। तदुद्भवान् विकारान् तत्र अयथावृत्तेर्विकारो वा तत्कुष्ठादिः अप्रतिपत्तेर्विकार उन्माद इति। मारसिंहे प्रपंचितम् । तेन यथावृत्तिश्च प्रतिपत्तिश्च यथावृत्तिप्रतिपत्तीपश्चात्तज्जा सम्बन्धः होमः समुदीरित इति । सहस्र हुत्येति ज्ञेयम्।शमयेदचिरात्सहस्रहुत्तेत्युक्तेः त्रिमधुरोपेतैरेभिरष्टभिः पयोमधुघृतं त्रिमधुरम् ।तदुक्तम्। आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यत इति। पयस्थाने शर्करावा। अमीभिरष्टभिः साधक इत्यनेन लक्षार्द्धमब्दत्रयादर्वागित्युक्तम्। यदाहुः। लक्षं तदर्द्धकं वा मधुरत्रयसंयुतैर्हुनेदेतैः। अब्दत्रयादथार्वाक् त्रिभुवनमखिलं वशीकुरुते। शुद्धैरिति । अवकरं दूरीकृत्य प्रक्षाल्यसंशोषितैरित्यर्थः । जुहुयाल्लक्षमिति। सम्बध्यते होमेनेति। लक्षमानत इति सम्बध्यते।संशोधितैस्त्यक्ता वकरैर्लवणैर्गुलिकाः कृत्वेति सम्बन्धः हुत्वा लक्षमित्यादिका संख्या महति कार्ये जुहुयाच्चकार्यगुरुता लाघवमभिवीक्ष्य योग्यपरिमाणमित्युक्तेः ॥७४॥ लिखित्वेति।पत्रखण्डेषु तालत्रयादि खण्डेषु मातृकार्णान् पृथक्प्रत्येकं लिखित्वा पृथक्प्रत्येकमभ्यर्च्य अग्नौ मातृकापीठमिष्ट्वा तमन्त्राक्षरमुच्चरन् जुहुयादितिः सम्बन्धः। तत्र प्रत्यक्षरमृषिश्छन्दो देवताशक्तिबीजान्युच्चार्य ध्यानम् । कृत्वा तेनैवाक्षरेण गन्धादि दद्यात् इत्यर्चनाक्रमः तत्र ऋष्यादि यथा। अर्जुन्याय नमश्चे द्वौ भार्गवस्त्वौ प्रतिष्ठिका। अग्निवेश्यः सुप्रतिष्ठा त्रिशतोऽब्धिषु गौतमः।गायत्री च भरद्वाज उष्णिगैकारके परे । लोहिशायनकोनुष्टु पूर्वशिष्टो बृहती द्वयोः माण्डव्यो दण्डकश्चापि स्वराणां मुनिछन्दसी। मौद्गलायनश्च पंक्तिः केजस्त्रिष्टु पूर्द्दितये

अभिचारहरो होमः सर्वरक्षाप्रसिद्धिदः ॥ सहस्रहोमे वितरेद्दक्षिणान्निष्कमानतः ॥ ७६ ॥ अर्द्धं वा शक्तितोऽथवा यथोक्तं फलमाप्नुयात् ॥ अन्यथा सप्तसंजप्तं पिबेत्प्रातर्दिनेदिने ॥ ७७ ॥ सलिलं सभवेद्वाग्मी लभते कवितां परं ॥ ब्राह्मी रसे वचा कल्के पयसा विपचेद्घृतम् ॥ ७८ ॥ अयुतं मातृकाजप्तमर्चितं च विधानतः ॥ पिबेत्प्रातः समेधावी भवेद्वाक्पतिसतमः ७९ ॥ ब्राह्मी सहस्रसंजप्तां वचां वापयसा पिबेत् ॥ सलभेन्महती मेधामचिरान्ना-

---

षण्डो: योग्यायनश्च जगतो गोपाल्यायनको मुनिः। छन्दोतिजगतीचेच्छे वृषकः शर्करीध्वजः शर्करी काश्यपश्चाति शक्करी भजयोष्टवोः शुनकोष्टिः सौमनस्यो त्वष्टिडेकारणौ धृतिः। ढणोर्लतिव्यातिधृती सांकृत्यायनमः कृतिः त्रिषु क।त्यायनस्तु स्यात्प्रकृतिर्नयकेषु वेदाचायनाकृति व्याघ्रायणोभे विकृतिर्मता। शांडिल्यसंकृती येथकांडल्यातिकृतीपरोः दांड्यायनोत्कृतीलेथवे जातायनदण्डकौ। छाद्यायनो दण्डकः शेषसहे जयदण्डकौ मांडव्यदण्डकौ लचे कादीनामृषिछन्दसी एवमुक्ते देवताश्च श्रीकण्ठादय ईरिताः बीजमस्याश्चशक्तयस्तु पूर्णोदर्प्य दयोमता । इति ध्यानं पूर्वोक्तम् । तदुक्तमनुसन्धेयम् ॥ ७६ ॥ निष्केति। सुवर्णचतुष्कम् अनयेति । अयमत्र प्रयोगक्रमः स्वयं देवता विग्रहो भूत्वा लिपिपद्मे जलमादाय बाला दशाक्षरी षः विपरीतदशा क्षरी बाला च। एवं चान्तं जप्त्वा चाद्यन्तमेवं सबिंदुकं पुनः सबिंदुविसर्गमादिचान्तं च जप्त्वा भ्रूमध्ये। अक्षराणां दीपशिखावदव्याप्ति ध्यायन् पिबेदिति। वर्णानामास्यान्तरुद्गमनं आस्यात् शास्त्राद्याकारेण निर्गमनं च ध्यायन् पुनर्द्विवारं पिबेदिति ॥ ७७ ॥ सलिलमिति। पूर्वेणसम्बध्यते भवेदित्यर्कमासत इति ज्ञेयम्। अनेन मूकोपि कवित्व गर्वितः परां च सिद्धिं लभतेर्कमासत इत्युक्तेः। ब्राह्मीरसमिति । अत्र घृतं जीववत्सैकवर्णगोरेवग्राह्यं दुग्धमपितादृश्या एव। आयुर्वेदोक्त प्रकारेण च घृतपाकः तत्र कल्काच्चतुर्गुणस्नेह इति। सामान्यतः स्नेहस्यचतुर्थभागः कल्कउक्तः अत्रत्वयं स्वरसपाक इति कृत्वा स्नेहाष्टमांशः कल्को ग्राह्यः। तदुक्तं। स्नेहः सिध्यति शुद्धांबुनिः क्वाथः स्वरसैः क्रमात्। कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टममिति। अत्र ब्राह्मी तु रसः स्वरसः।तदुक्तं। संपिष्यार्द्रं वस्तु वस्त्रगालितं स्वरसं विदुरिति। कल्कइति। कल्को दृषदि पेषित इति। तत्रायं क्रमः । प्रस्थमितं घृतं पलद्वयमितः श्वेतवचा कल्कः घृताच्चतुर्गुणो ब्राह्मीरसश्चतुर्गुणं क्षीरम्। पंचप्रकृति यत्रस्युर्द्रव्याणि स्नेहसंनिधौ तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणमित्युक्तत्वात् । चतुर्गुणं जलं देयम्। क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित्। चतुर्गुणं जलं तत्र वीर्याधानार्थ माचरेत् इति। पाकज्ञानं च। नांगुलिग्राहिता कल्के न स्नेहोग्नेश्च शब्दता। वर्णादिसंपद्य यदा तदैनं शीघ्रमाहरेत्। तथान्यत्र । स्नेहस्य पाके कल्कस्तु वर्त्तितो वर्त्तिवद्भवेत्। तथा घृतस्य फेनोपशमस्तैलस्य च तदुद्भवः स्नेहस्य तनुमत्ताप्सु मज्जनं मरणं नचेति। इदं घृतं पानार्थमिति। अत्र सम एव पाकः। तदुक्तं। स्नेहः पक्वो भवेत्त्रिध्यै पाकः पानेभवेत्समः खरोभ्यङ्गे मृदुर्न्यस्येत् सामान्येयंप्रकल्पनेति । विधानत इति। ततो घृतं सममुत्तार्य शीतलमयुतं जप्तं मातृकानीतं घृतेविभाव्य मातृकोक्तविधानेन पूजितं पिबेदिति। भवेदिति संवत्सरादितिज्ञेयम्। कविर्भवति वत्सरतइत्युक्तेः। तंत्रान्तरेतु विशेषः। पलं श्वेतवचा-

त्रसंशयः ॥ ८० ॥ पूर्वोक्तपंकजं कृत्वा कुंभं संस्थाप्य पूर्ववत् ॥ क्वाथेन पूरयेन्मंत्री यथावत् क्षीरशाखिनां ॥ ८१ ॥ अष्टगन्धं विलोड्यास्मिन्नवरत्नसमन्विते ॥ आवाह्यपूजयेद्देवीं मातृकामुक्तमार्गतः ॥ ८२ ॥ सहस्रसाधितैस्तोयैरभिषिंचत्प्रयंनरं ॥ भानुवारे शुभेलग्ने ब्राह्मणानपिभोजयेत् ॥ ८३ ॥ गुरवे दक्षिणां दद्याद्भक्तियुक्तः स्वशक्तितः ॥ रक्षाकरं विशेषेण कृत्वाद्रोहोपशांतिदं ॥ ८४ ॥ ऐश्वर्यजननं पुंसां सर्वसौभाग्यसिद्धिदं ॥ अभिषेकमिमंप्राहुर्विश्वसंमोहनं परं ॥ ८५ ॥ पूर्वोक्तमंडलं कृत्वा मंत्रीनवपदान्वितं ॥ मध्यादिस्थापयेत्तेषु पदेषु कलशान्नव ॥ ८६ ॥ तंतुभिर्वेष्टितान् शुभ्रान्वाहिश्चंदनचर्चितान् ॥ सुधूपवासितान्मंत्री दूर्वाक्षतसमन्वितान् ॥ ८७ ॥ आपूर्य शुद्धतोयैस्तान्वेष्टयेदंशुकैस्तुतान् ॥ मुक्तामाणिक्य वैडूर्यगोमेदान्वज्रविद्रुमौ॥८८॥पुष्यरागं मरकत गरुडोद्गारमेवच॥ उक्तानिनवरत्नानितेषु-कुंभेषु निक्षिपेत् ॥ ८९ ॥ विष्णुक्रांतामिन्द्रवल्ली देवीं दूर्वाश्च निक्षिपेत् ॥ स्थापयेत्कुंभवक्रेषु कोमलांश्चूतपल्लवान् ॥ ९० ॥ विन्यसेदक्षतोपेतांश्चषकांश्चफलान्वितान् ॥ मध्ये कुंभं समाराध्य देवीं मंत्री वृषादितः ॥ ९१ ॥ अर्चयेद्दिक्षुकुंभेषु व्यापिन्याद्याः पुरोदिताः॥ वर्गमंत्रयुताः प्रोक्तलक्षणाः सर्वसिद्धिदाः ॥ ९२ ॥ शर्कराघृतसंयुक्तं पायसं च निवेदयेत् ॥ स्पृष्ट्वा कुंभान्कुशैर्विद्वान् जपेत्साग्रंशतंशतं ॥९३॥ अभिषिंचेद्विलोमेन साध्यं तं दत्तदक्षिणं सर्वपापक्षयकरं शुभदं शांतिसिद्धिदं ॥ ९४ ॥ कृत्वाद्रोहादिशमनं सौभाग्यश्रींजयप्रदं ॥

---

चूर्णं कर्वंतुरगगन्धिच । कृष्णा हरिद्रा सिंधूत्थं धात्रीकृमिविश्वभेषजं । प्रतिनिष्कं तु संचूर्ण्य घृतप्रस्थे विनिक्षिपेत् । ब्राह्मी रसे चतुःप्रस्थे पचेन्मृद्वग्निपाकवित् । ब्राह्मी घृतमिदं प्रोक्तं अनया युतमन्वितम् । पिबेत्सूर्योपरागे तु सर्वज्ञत्वमवाप्नुयात् । दिनादौ वा लिहेन्नित्यं पंचाशदभिमन्त्रितं वाग्विलासमसौ विंदेत् कविवृन्देषु सम्मतमिति ॥ ८० ॥ पूर्वोक्तमिति । मातृकापूजावसरोक्तम् । पूर्ववदिति । तुर्योक्तरीत्या क्वाथेन कषायेण यथावदिति । चतुर्थांशावशिष्टेन सबिंदुकां मातृकां जपन् पूरयेदिति च क्षीरशाखिनामिति । तत्वचामित्यर्थः । अष्टगन्धमिति शाक्तम् । नवरत्नानि वक्ष्यन्ते । सहस्रसाधितैः सहस्रसंजप्तै रित्यर्थः भानुवारे शुभेलग्ने तोयैरभिषिंचेदिति सम्बन्धः मासमिति ज्ञेयम् । पंचाग्निमासमित्युक्तेः नरमिति लिङ्गमविवक्षितम् । नारी वंध्यापि नानाविधगुणनिलयं पुत्रवर्यं प्रसूते इत्युक्तेः संवननमिति वश्यं नवपदान्वितमिति नवनाभम् । शुभ्रान्व्रणकालिमादिरहितान् सुधूपवासितानित्यन्तः यथाक्रमान्निक्षिपेदिति मध्यादितः सर्वत्र सर्वाणि देवीमिति सहदेवीनिक्षिपेदिति सर्वत्र सर्वाः वृषा इन्द्रः तदादित इति । पूर्वादितः वासवो वृत्रहा वृषेति कोशः ॥ ९१ ॥ दिक्षु कुंभेषु । इति व्यधिकरणे सप्तम्यौ । वर्गाः आकाराद्याः व्यस्तसमस्तास्त एव मन्त्रास्तद्युतास्तदाद्याः विद्यां मातृकां साग्रमष्टोत्तरशतं शतमित्यनेनप्रतिकुम्भम् । विलोमेनेति । ईशानादिस्थितैर्घटैरित्यर्थः । तदुक्तं प्रयोगसारे । पुनरन्तादिमध्यांतमभिषिंचेत्प्रियां स्त्रियमिति । क्षुद्रभूतग्रहाअपि नश्यंतीत्यनुषज्यते।परतेजसि सहस्रारकर्णिकास्थितपरमशिवे विधुं तत्वमेव॥९८॥ त्रिशक्तिमुद्रिकामाह सोमेति लोहत्रयमिति । सर्वं तैजसं लोहमित्युक्तत्वात् । रूप्यहेमताम्राणां

पुत्रप्रदं च वंध्यानामभिषेकमिमंविदुः ॥ ९५ ॥ ज्वरार्तस्य पुरः स्थित्वाजपेत्साग्रं सहस्रकम् ॥ ज्वरो नश्यति तस्याशु क्षुद्रभूतग्रहा अपि ॥ ९६ ॥ परतेजसि संचिंत्य शुभ्रं सुतसुधामयं ॥ विधुं विद्यांजपेद्योगो विषरोगविनाशकृत् ॥ ९७॥ वलीपलितरोगघ्नः क्षुत्पिपासाप्रणाशनः ॥ पुष्टिदः सर्वसौभाग्यदायी लक्ष्मीशुभप्रदः ॥ ९८॥ सोमसूर्याग्निरूपाः स्युर्वर्णा लोहत्रयं तथा ॥ रौप्यमिंदुः स्मृतो हेमसूर्यस्ताम्रं हुताशनः ॥ ९९ ॥ लोहभागाः समुद्दिष्टाः स्वराद्यक्षरसंख्यया । तैर्लोहैः कारयेन्मुद्रा असंकलितसङ्गताम् ॥ १०० ॥ साग्रं सहस्रं संजप्य स्पृष्ट्वा तां जुहुयात्ततः । तस्यां सन्तापयेन्मंत्री सर्पिषा पूर्वसंख्यया ॥ १ ॥ निक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना । आवाह्य पूजयेद्देवीमुपचारैः समाहितः ॥ २ ॥ अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः । इयं रक्षः क्षुद्ररोगविषज्वरविनाशिनी ॥ ३ ॥ व्याघ्रचोरमृगादिभ्यो रक्षां कुर्याद्विशेषतः । युद्धेविजयमाप्नोति धारयन्मनुजेश्वरः ॥ ४ ॥ विभजेन्मातृकां मंत्री नववर्गान्यथाक्रमात्। अष्टावष्टौ स्वराः स्पर्शाः पंचशो व्यापका अपि॥५॥ नववर्गाः समुत्पन्ना नवरत्नेश्वरा ग्रहाः । अर्केन्दुरक्तज्ञगुरुभृगुमन्दाहिकेतवः ॥६ ॥ माणिक्यं मौक्तिकं चारुविद्रुमं गारुडं पुनः । पुष्परागं लसद्वज्रं नीलं गौमेदकं शुभम् ॥ ७ ॥ वैदूर्यं नवरत्नानि मुद्रान्तैः कल्पयेच्छुभाम् । जपहोमादिकं सर्वं कुर्यात्पूर्वोक्तवर्त्मना ॥ ८ ॥ यो-

---

लोहशब्देनाभिधानम् । तथेति । सोमसूर्याग्निरूपमित्यर्थः तदेवाह । रौप्यमिंदुरिति । स्वरादीनि । रौप्यं १६ सुवर्णं २ ताम्रं १० केचित्तु वर्गाणां द्वादशकलात्मकत्वात् । सुवर्णभागा द्वादशेति वदंति अयमेव पक्षः साम्प्रदायिकः शैवागमेपि। तास्त्रतारसुवर्णानामङ्क षोडशेखेंदुभिरिति। तत्रव्यत् क्रमेण संख्येति व्याख्यातम् । असङ्कलितेति । असङ्कलितामिलितम्। पश्चात्संगङ्गतां मिलिताम् । तत्र प्रकारः तत्तद्भागमितस्य लोहत्रयस्य मुद्रिकात्रयं कृत्वा पश्चात्संयोजयेदिति ॥ १०० ॥ साग्रमित्यष्टाधिकं संजप्येति । मातृकामिति शेषः ततो मन्त्री पूर्वसंख्यया अष्टोत्तरसहस्रमित्यादि सर्पिषा जुहुयादिति संबन्धः तस्यां संपातयेदिति। संपातो नाम स्रुवस्थाहुतिशेषाज्यस्य प्रत्याहुतिमुद्रिकायां पातः अभिषेकोक्त्येककलशप्रोक्तेन आवाह्येति कुंभे । अभिषिंचेति साध्यं व्यालः सर्पः मृगो व्याघ्रः ॥ १०४ । नवरत्नमुद्रिकामाह । विभजेदिति । मन्त्रीत्यनेन नवग्रहन्यासोपि सूचितः तत्र प्रकारः स्वरानुक्त्वा सोममण्डलाय नमः । इति मूर्द्धादिगलपर्यंतं कादिमान्तमुच्चार्यसूर्यमण्डलाय नम इति । गलादिहृदयांतम् । याद्यानुक्त्वा वन्हिमण्डलाय नम इति हृदयादि पादांतं व्यापकं न्यसेदिति मण्डलत्रयंन्यासः आदिठांतमुक्त्वा सोममण्डलाय नम इति । मूर्द्धादिहृदयांतं डादिक्षांतमुक्त्वा अग्निमण्डलाय नम इति हृदादि पादांतं न्यसेदीत्यग्नीषोमन्यासः आदिक्षांतमुक्त्वा हंसः पुरुषात्मने नम इति व्यापकत्वेन न्यसेत् इति । हंसन्यासः । एते न्यासा यथाक्रमादिति पदेन सूचिताः ततः । अं आं इं ईं उं ऊं ऋं ॠं सूर्याय भगवते नम इत्यादि क्रमेण केवलं विन्यस्य पुनः प्रथमोक्तन्यासत्रयं वैपरीत्येन कुर्यादिति ग्रहन्यासस्तत्र शेषाष्टस्वरैः सोमः कवर्गेणांगारकः चवर्गेण बुधः टवर्गेण बृहस्पतिः तवर्गेण शुक्रः यवर्गेण शनैश्चरः पवर्गेणराहुः षवर्गेण केतुः । अयमत्र न्यास-

मुद्रां धारयेदेनां तस्यस्युर्वशगाग्रहाः। वर्द्धते तस्य सौभाग्यं लक्ष्मीरव्याहता भवेत्॥ ९॥ कृत्याद्रोहा विनश्यन्ति नश्यन्ति सकलापदः। रक्षोभूतपिशाचाद्य नेक्षन्ते तं भयाकुलाः १० उपर्य्युपरि वर्द्धन्ते धनरत्नादि सम्पदः। तार्तीयोज्वलकर्णिकं स्वरयुगैराविर्भवत्केसरं वर्गोल्लासिवसुच्छदं वसुमतीगेहेनसंवेष्टितम्। ताराधीश्वरवारिवर्णविलसद्दक्कोणसंशोभितं यंत्रं वर्णतनोः पदं निगदितं सर्वामयघ्नं परम्॥ ११॥ इति श्रीशारदातिलकेषष्ठःपटलः॥६॥ अथ भूतलिपिं वक्ष्ये सुगोप्यामतिदुर्लभाम्। यां प्राप्य शंभोर्मुनयः सर्वान्कामान्प्रपेदिरे॥१॥ पञ्चह्रस्वाः संधिवर्णा व्योमेराग्निजलंधराः॥ अंत्यमाद्यं द्वितीयं च चतुर्थं मध्यमं क्रमात्॥२॥ पञ्चवर्गाक्षराणिस्युर्वांतश्वेतेंदुभिः सह॥ एषाभूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः॥ ३॥

---

क्रमः स्थानानितु मूलाधारलिङ्गनाभिहृदयगललंबिकाभ्रूमध्यललाटब्रह्मरंध्राणीति। व्यापकाय-कारायाः। अपीत्यपिशब्दात्पंचम इत्यत्राप्यन्वेति। ग्रहक्रममाह। अर्केति। रक्तोमंगलः ज्ञोबुधः मंदः शनैश्चरः अहिः राहुः चाविंत्यनेन। नातिलोहितप्रवालस्य ग्रहणमुक्तं। लसदित्यनेन। षट्कोणवज्रस्येव ग्रहणमुक्तं। पूर्वोक्तवर्त्मनेति। पूर्वमुद्रोक्तप्रकारेण। धारणयंत्रमाह। तार्तीयेति। तार्त्तीयं पूर्वोक्तकर्णिकाबीजं। ताराधीश्वरःउकारआकारसाम्यात्। गौडलिपौताद्दक् स्वरूपस्य लिखितत्वात्। वारिवर्णः वकारः ताभ्यां विलसंतौ यौ दिक्कोणौ ताभ्यां संशोभितं तेनात्र पूर्वयंत्रादयमेव विशेषःउक्तं कादिमते। दावावूदिग्विदिक्षु चेति। आचार्यैः पूर्वोक्तं पूजायंत्रमेवधारणयंत्रमेवमुक्तं। इदमपि पद्यं कैश्चित्तदनुसारी व्याख्यायते। विनाजसंतौ युक्तौ यौ दिक्कोणौ ताभ्यां संशोभिना तेन विदक् विकोण इति जातं। ततो विदिक्षु वकारः विकोण शब्देन दिश उच्यंते ततो दिक्षु वकार इत्यर्थः। तदुक्तमाचार्य्यैः। क्ष्माबिंबेन च सप्तमार्णवपूजास्याशासुसंवेष्टितं। वर्णाब्ज शिरसिस्मृतं विषगदप्रध्वंसि मृत्युंजयमिति॥ १११॥ इति शारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायांषष्ठः पटलः॥ ६॥ श्रीगणेशाय नमः॥ अथ मातृकाविशेषं भूतलिपिमंत्रमाह॥ अथेति शंभोः सकाशाद्यां प्राप्येत्यन्वयः सर्वान्कामानित्यनेन विनियोग उक्तः॥ १॥ मंत्रमुद्धरति। पंचेति। पंचह्रस्वाः अइउऋऌप्रथमो वर्गः संधिवर्णाः एऐओऔद्वितीयः व्योमहः ईरोयः अग्नीरः जलंवः धरालः अयंतृतीयपंचवर्गाक्षराणांक्रममाहअंत्यमिति। अंत्यं ङ आद्यं कः द्वितीयं खः चतुर्थं घः मध्यमं गः अयंक्रमोग्रेपि चतुर्षु॥ २॥ एवं वर्गाष्टकं वांतं शः श्वेतषः श्रीकंठादिपाठात्। इंदुः सः अयं नवमः॥ ३॥ नववर्गाद्यक्षराण्याह। आयंवरार्णा इति। अश्च ए च अं वरार्णश्च इति द्वंद्वः तत्र अए अनयोर्वृद्धिरेचीति वृद्धौ कृतायां ऐ ततो अं इत्यस्मिन्परतः एचोयवायाव इति आयिकृते आयंवरार्ण इति सिध्यति। अं वरार्णोहः वर्गाणां अकचटतपानां॥ ४॥ वर्गवर्णानांभूतात्मतामाह। व्योमेति। पृथक् प्रत्येकं नववर्गाणां प्रथमादयो वर्णा व्योमादिरूपा इत्यर्थः।क्वचिन्नववर्णान् पृथक्विदुरिति पाठः तत्रनवेतिवीप्साज्ञेया पृथक् प्रत्येकं व्योमवाय्वादिरूपानववर्णान् विदुरिति योजना। तत्रांत्योपांत्ययोः सप्ताष्टाक्षरात्मकत्वात् कथं नववर्णत्वमित्यत आह। प्रथमपाठे प्रत्येकं वर्गवर्णानां पंचभूतात्मकत्वमुक्तं तत् द्वितीयनवयोर्नघटत इत्यत आह। द्वितीयेति। उभयत्रभो

आयं वराणां वर्गार्णाः पञ्चमाः शार्णसंयुताः॥ वर्गाद्या इति विज्ञेया न ववर्गाः स्मृता अमी ॥ ४ ॥ व्योमेराग्निजलक्षोणो वर्गवर्णा न्पृथक्क्वविदुः ॥ द्वितीयवर्गे भूर्नस्यान्नवमे न जलेश्वरा ॥ ५ ॥ विरंचिविष्णुरुद्राश्चि प्रजापतिदिगीश्वराः ॥ क्रियादि शक्तिसहिताः क्रमात्स्युर्वर्गदेवताः ॥ ६ ऋषिः स्याद्दक्षिणामूर्तिर्गायत्रं छंद ईरितं ॥ देवता कथितासद्भिः साक्षाद्वर्णेश्वरी परा ॥ ७ ॥ हादिषड्वर्गकैः कुर्यात्षडंगानि सजातिभिः ॥ ध्यायेल्लिपितरोर्मूले देवीं तन्मयपंकजे॥८॥ वदंति सुधियोवृक्षं नित्यं वर्णमयप्रभम् ॥ परसंविन्महाबीजं बिंदुनादमहाशिफम् ॥ ९ ॥ पृथिव्यक्षरशाखाभिः सर्वाशासुविजृंभितम् ॥ सलिलाक्षरपत्रैस्वस्संछादितजगत्रयम् ॥ १० ॥ वन्हिवर्णांकुरैर्दीप्तैरत्नैरिवसुरद्रुमम् ॥ मरुद्वर्णलसत्पुष्पैर्द्योतयंतं वपुःश्रियम् ॥ ११ ॥ आकाशार्णफलैर्नम्रं सर्वभूताश्रयं परम् ॥ परामृताख्यमधुभिस्सिंचंतं परमेश्वरीम् ॥१२॥ वेदागमादिभिः क्लृप्तं समुन्नतिमनोहरम् ॥ शिवशक्तिमयं साक्षात् छायाश्रितजगत्रयम् ॥ १४ ॥ एनमाश्रित्य मुनयः सर्वान्कामानवाप्नुयुः ॥ अंकोन्मुक्तशशांककोटिसदृशीमापीनतुङ्गस्तनीं चन्द्रार्द्धांकितमस्तकां मधुमदादालोलनेत्रत्रयां ॥ बिभ्राणामनिशं वरं जपवटीं विद्यांकपालं करैराद्यांयौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये ॥ १४॥ आधारदेशे धिष्ठाने नाभौ हृदि गले पुनः॥ बिंदौ नादे ततः शक्त्याशिवे देशिकसत्तमः॥ १५ ॥ न वाधारेषु विन्यस्य स्वरान्नव यथाविधि ॥ हादिवर्णास्तनौ न्यस्येन्मुखे ऊर्द्धादितः सुधीः ॥ १६ ॥ ऊर्द्धमाहेंद्रयाम्योदक्पश्चिमेषु समाहितः ॥ दोः, पत्सु पञ्चवर्गाणां व-

---

यसंभवाभिप्रायमितिभावः। द्वितीयवर्गस्य चतुरक्षरात्मकत्वात् अंत्यंभवात्मकमक्षरं नास्ति नवमस्य त्रिवर्णात्मकत्वादुभयोरभावः॥ ५ ॥ नववर्गदेवता आह। विरिंचीति। दिगीश्वराः इंद्र यम वरुण सोमाः सर्वे कोदृशाः। क्रियादिशक्तिसहिताः त्रिरावृत्तक्रियाज्ञानेच्छाशक्तिभिरुपेताः केचित्तु दिगीश्वर इत्येकः क्रियाशक्त्यादयस्तिस्र इति नव देवता इच्छन्ति ॥ ७ ॥ हादीति। तृतीयवर्गेण हृदयं एवमन्यैरष्टमांतैरन्यानि। हंयं रं वं लं हृदयाय नम इत्यादि प्रयोगः। ध्यायेदिति। तन्मयपंकजे वर्णाब्जे लिपितरोरित्युक्तं॥ ८ ॥ ९ ॥ तत्स्वरूपमाह। नित्यमिति। वैयाकरणभाट्टमते वर्णानां नित्यत्वात् परसंचित्कुंडलीनि परब्रह्मेति कश्चित्। शिफा मूलं नित्यमित्युक्तं चेत्तस्य कथं बीजादुत्पत्तिः अभिव्यंजकत्वेन बीजवदुपचर्यते स्वैरित्यनेन द्वितीयोक्तभूतवर्णनिरासः इदं पृथिव्यादिष्वपियोज्यं ॥ १२ ॥ वेदागमेति। एतद्रूपेणवृत्तस्योच्चत्वमित्यर्थः॥ १३॥ ध्यायेदित्युक्तं ध्यानमाह। अंकइति। अंकः कलंकः तेन उन्मुक्तः त्यक्तः। आयुधध्यानं। वामाद्यधस्तनयोराद्ये तदूर्ध्वयोरन्ये अन्येतूर्ध्वादि दक्षे आद्ये परे वामे इत्याहुः॥ १४ ॥ आधारदेशे। गुदमेंढ्रांतराले। अधिष्ठाने लिंगे। बिंदौ भ्रूमध्ये नादे केशांते। शक्त्यां तदूर्ध्वदेशे शिवे द्वादशांते नवाधारेषु। यथाविधीत्यनेन तत्तदाधारभावनां कृत्वेत्युक्तं भवति। अतएव आधारेत्याद्युक्तापि पुनर्नवाधारेष्वित्युक्तिः आधारभावना अंत्यपटले वक्ष्यते देशिकसत्तम इत्यनेन वर्णानां सबिंदुकत्वमुक्तं। ऊर्ध्वादित इति यदुक्तं तदेव विवृणोति॥ १५ ॥ १६ ॥ ऊर्ध्वेति। सद्यैव पंचमुखकल्पनया न्यास इति सुधीरित्यनेनोक्तः समाहित इ

र्णान्देशिकसत्तमः ॥ १७ ॥ अग्रमूलोपमूलाग्रमध्यदेशक्रमेण तु ॥ जठरे पार्श्वयुगले नाभौ पृष्ठे समाहितः ॥ गुह्यहृत् भ्रूदले न्यस्येत् शादिवर्णत्रयं क्रमात् ॥ सृष्टयां सर्गावसानास्यात्स्थितौ वन्हिमरुत्पयः ॥ १९ ॥ वियद्भूमिक्रमान्न्यस्येद्विंदुसर्गावसानिकां ॥ संहृतौ भतिलोमेन विन्यसेद्विंदुभूषितां ॥ २० ॥ आगमोक्तेन मार्गेण दीक्षितः साधकोत्तमः ॥ लक्षं न्यसेज्जपेत्तावदयुतं जुहुयात्तिलैः ॥ २१ ॥ पूजयेदन्वहं देवीं पीठे प्रागीरितेसुधीः ॥ वर्णाब्जनासनन्दद्यान्मूर्तिमूलेन कल्पयेत् ॥ २२ ॥ देवीं सम्पूजयेत्तस्यामंगाद्यावरणान्यजेत् ॥ आदावंगावृतिः पश्चादंबिकाद्याभिरीरिता ॥ २३ ॥ द्वितीयामातृभिः प्रोक्तातृतीया द्व्यष्टशक्तिभिः ॥ चतुर्थी पञ्चमी प्रोक्ता द्वात्रिंशच्छक्तिभिः पुनः ॥ २४ ॥ चतुःषष्ट्यास्मृता षष्ठी शक्तिभिर्लोकनायकैः ॥ सप्तमीपुनरेतेषामस्त्रैः स्यादष्टमावृतिः ॥ २९ ॥ एवं पूज्या जगद्धात्री श्रीभूतलिपिदेवता ॥ स्थानेषुतेषुविधिवदभ्यर्च्यांगानि पूर्ववत् ॥ २६ ॥ अंबिकावाग्भवी दुर्गा श्रीशक्तिश्चोक्तलक्षणाः ब्राह्मयाद्याः पूर्ववत् प्रोक्ताः कराली विकारल्युमा ॥ २७ ॥ सारस्वती श्रीदुर्गौषालक्ष्मीश्रुत्यौ स्मृतिर्धृतिः ॥ श्रद्धामेधामतिः कांतिः आर्याः षोडशशक्तयः ॥ २८ ॥ खड्गखेटकधारिण्यः श्यामाः पूज्याः स्वलंकृताः ॥ विद्याह्रीपुष्टयः प्रज्ञा सिनीवाली कुहूः पुनः ॥ २९ ॥ रुद्रा वीर्या प्रभा नंदा स्यात्पोषाऋद्धिदा शुभा ॥ काळरात्रिर्महारात्रिर्भद्रकाली कपर्दिनी ॥ ३० ॥ विकृतिर्दंडिमुंडिन्यौ सेंदुखंडा शि

---

त्यनेन वर्णानां सबिंदुत्वमुक्तं। दोः पदिति। देशिकसत्तमः अथ मूलोपमूलाग्रमध्यदेशक्रमेणदोः पत्सु जठरादिपृष्ठांतेषु पंचवर्गाणां वर्णान् न्यसेदित्युत्तरेण संबंधः मूलं च मूलाग्रे तयोः समीपमुपमूलाग्रं अग्रं च मूलं च उपमूला ग्रं च मध्यदेशति विग्रहः अग्रसंगुल्यं तः मूलमंसोरुमूलं। कूर्परजानुनी उपाग्रं करपादांगुलीप्रथमसंधिः मध्यदेशो मध्यसंधिर्म्मणिबंधगुल्फे समाहित इत्युत्तरेण संवध्यते। देशिकसत्तमइत्यनेन वर्णानां सबिंदुत्वमुक्तं। भ्रूमध्ये समाहित इत्यनेन वर्णानां सबिंदुत्वमुक्तं। क्रमादिति। स्वरादिषु सर्वत्र संवध्यते। तत्र एत तस्मं चोक्त क्रमादित्यर्थः। सृष्टाविति सर्गावसानभूता लिपिरितिशेषः स्थितौ बिंदुसर्गावसानिकां तां क्रमादित्यर्थः। न्यसेदितिति संबंधः कः क्रम इत्यपेक्षायामाह। वह्नीति। तत्र वन्ह्यादीदामेकैकं वर्णं विन्यस्यपुनस्तेनैव क्रमेण न्यसेत्। तत्रायं क्रमः उं इं लृं ओः एं औं ऐं इत्यादि आगमोक्तेन कुलप्रकाशतंत्र प्रोक्तेन दीक्षितः तावदिति लक्षं तत्र एकोन्यास एकाआवृत्तिरेवेति क्रमइति साधकोत्तम इत्यनेनोक्तं ॥२१॥ पूजयेदिति। अत्र कश्चित् प्रागीरिते पीठ इत्युक्तेरष्टपत्र एव षोडशशक्तीनां द्विरावृत्याद्वात्रिंशन्मितानां चतुरावृत्या चतुःशष्टिमितानामष्टावृत्यापूजनं अन्यथा पीठेप्रागीरित इति व्याहन्येतेत्युवाच। तदसांप्रदायिकं तेषां मते अष्टावृत्तित्वं व्याहन्येत। आवृत्तिर्नाम सर्वत आवरणत्वेन पूजनं। तदेकधाष्टशक्तिपूजनेनैव जातं तदतिरिक्तद्वितीयावृत्तिश्चेत् पूज्यते आवृत्यंतरमेवभवति। न तु तस्यत्वन्त्रांतर्भावः मंत्रांतरेषु नच दृष्टपूर्वं सांप्रदायिकपक्षे तु पीठेप्रागीरित इत्यस्यायमर्थः प्रागुक्तपीठशक्तिपीठमंत्रानत्रापि पूजयेदिति।इदं सर्वत्रानुसंधेयं।तथाच ग्रंथकृत् महागणपतिपूजावसरे वक्ष्यति।प्रा-

खंडिनी॥ निशुंभशुंभमथिनी महिषासुरमर्दिनी॥३१॥ इंद्राणी चैव रुद्राणी शंकरार्द्धशरीरिणी॥ नारी नारायणी चैव त्रिशूलिन्यपिपालिनी॥ ३२॥ अंबिका ल्हादिनी चैवद्वात्रिंशच्छक्तयासिताः॥ चक्रहस्ताः पिशाचास्याः संपूज्या श्चारुभूषणाः॥३३॥ पिंगलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेवच॥ श्रद्धा स्वाहा स्वधा भिख्या माया संज्ञा वसुंधरा ॥ ३४॥ त्रिलोकधात्री सावित्री गायत्री त्रिदशेश्वरी॥ सुरूपा बहुरूपाचस्कंदमाताच्युतप्रिया॥३५॥ विमला चामला पश्चादरुणी पुनरारुणी॥ प्रकृतिर्विकृतिः सृष्टिः स्थितिः संहृतिरेवच३६ सन्ध्या माता सती हंसी मर्दिका परदेवमाता॥देवमाता भगवती देवकी कमलासना॥३७॥त्रिमुखीसप्तमुख्यान्यासुरासुरविमर्दिनी॥ लम्बोष्ठी चोर्ध्वकेशी च बहुशीर्षा वृकोदरी ॥३८॥ रथरेखाह्वया पश्चाच्छशिरेखा तथा परा॥ गगनवेगा पवनवेगाच तदनंतरम् ॥ ३९॥ ततोभुवनपालाख्या ततः स्यान्मदनातुरा॥ अनंगानंग मदना तथैवानंग मेखला ॥४०॥ अनंग कुसुमाविश्व रूपासुरभ यंकरी॥ अक्षोभ्यासत्यवादिन्यौ वज्ररूपा शुचिव्रता॥४१॥ वरदाख्याचवागीशा चतुः षष्टि समीरिताः॥चापबाणधरा सर्वा ज्वाला जिह्वाःसमीरिताः४२ दंष्ट्रिण्य श्चोर्द्ध्वकेश्यस्ता युध्यो पक्रांत मानसाः॥ सर्वाभरणसंदीप्ताः पूजनीयाः प्रयत्नतः॥ ४३॥ लोकेशाः पूर्ववत्पूज्या स्तद्वद्वज्रादिकान्यपि॥ इत्थंयः पूजयेन्मंत्री श्रीभूत लिपिदेवतां॥ ४४॥ श्रीवाण्योः सभवेद्भूमिर्देवैरप्यभिवंद्यते॥ कमलै रयुतं हुत्वा राजानं वशमानयेत्॥ ४५॥ उत्पलै र्जुहुयात्तद्वन्महालक्ष्मीः प्रजायते॥ पलाशकुसुमै र्हुत्वावत्स

---

गुक्ते पीठे पूजयेदिति। तत्र यदि पूर्वोक्त मेकाचरगणपतिनिर्दिष्टं अष्टदलमात्रं पीठं गृह्यते तदा याषट्कोणादिषु पूजा वक्ष्यते सानुपपन्ना स्यात्। ध्याने च त्रिकोणषट्कोणमातृकां बुजं यत्पीठमुक्तं तदप्यसंगतं स्यात्। यद्युच्यते। प्रागुक्ते पीठ इति ध्यानोक्त इत्यर्थ इति। तदा पीठशक्ति पीठमन्त्रपूजा प्रापकवचनाभावात् तत्पूजा न स्यादेवेत्यलम्।तेनात्राष्टदलं षोडशदलं भूपुरं चतुर्द्वारं च कृत्वा तत्र प्रागुक्ताः पीठशक्तीः संपूज्य वर्णाब्जे नासनं दत्वा मूर्त्तिं मूलेन सङ्कल्प्य तत्र देवीमभ्यर्च्य केसरेषु यथापूर्वमङ्गानि चाभ्यर्च्य तदुपरि दिग्दलेषु चतस्रोंबिकाद्याः तदग्रे ब्राह्म्याद्याः षोडशदलादिषु कराल्याद्याः पूजयेत् इति।वर्णाब्जेनेति। ह्सौः वर्णाब्जाय भूतलिपियोगपीठाय नम इति प्रयोगः तस्यां मूर्त्तौ अङ्गादित्यादिशब्दं विहृणोति। आदावित्यादि अंगावृतेः पूजास्थानमाह।स्थानेष्विति। उक्तेषु तुर्योक्तेषु विधिवदित्युक्तम्। ध्यानानि। अंबिकाद्येत्यादिशब्दं विहृणोति । पूजयेदिति॥ चासां ध्यानं स्वस्वप्रकरणेनुसंधेयम्। मातृपूजा स्थानमाह। उक्तेति। उक्तलक्षणाः प्राक्पटलोक्तध्यानाः। पूर्ववदिति। पूर्वोक्तस्थानेषु द्राष्टशक्त्यादिशब्दान् विहृणोति।करालीति। सद्रावीर्येतिपाठः तेन रुद्रा सप्तमी।वीर्याअष्टमीप्रभा नवमी। नन्दा दशमी। शुभेति विशेषणम्। न शक्तिनाम। तदुक्तं संहितायां। रुद्रा वीर्या प्रभा नन्दा योषिणी ऋद्धिदानयेति। दक्षिमुखिन्याविति । दक्षिनी सुखिनी इतिशक्तिद्वयम्। विकृतिर्दक्षिनीचैवेत्युक्तेः निशुम्भमथिनीत्येका संपूज्या इति षोडषपत्रायतत्संधिषु। तदुक्तं संहितायां। पूर्वादिक्रमतः पूज्या दलाग्रेषु च संधिष्विति। स्वधेति अभिख्या

रेण कविर्भवेत् ॥ ४६ ॥ राजी लवणहोमेन वनितां वशमानयेत् ॥ मातृकोक्तानि कर्माणि कुर्यादत्रापि साधकः ॥४७॥ भूतलिप्या पुटीकृत्य योमंत्रं भजते नरः ॥ क्रमोत्क्रमात् शतावृत्या तस्य सिद्धो भवेन्मनुः ॥४८॥ सुषुप्तभुजगाकारां कुंडलीं मध्यवर्त्मना ॥ संगमय्य परं स्थानं प्राणवित्तां परामृतैः ॥४९॥ प्लावयेन्मूर्द्धिमूलांतं योगोयं सर्वसिद्धिदः ॥ अनयान्यस्तदेहस्तु तेजसोभास्करोभवेत् ॥ ६० ॥ यंत्रक्रियाविशेषास्तुज्ञात्वाकर्माणिसाधयेत् बिंद्वाढ्यंगगनं तदेवशिवयुकक्षानी चतुर्थ्यायुतो नत्यंतो मनुरेष मध्याविहितःसान्यस्यबन्ध्वक्षरः ॥ पत्रेष्वक्षरशो हकारपुटितां स्तद्भूतवर्णांल्लिखेच्छिष्टं चांत्यदलेविलिख्य मतिमान् वृत्तेन संवेष्टयेत् ॥६१॥ विषयंत्रमिदं प्रोक्तं लाक्षा

---

यस्याः मायेति संज्ञा यस्याः सा इति विग्रहः तथा चाचार्या मायाभिख्यावसुन्धरेति । अन्यत्रापि । श्रद्धा स्वाहा स्वधाख्या च मातृका च वसुन्धरेति । स्थितिः संस्तुतिरेवचेत्यत्र संस्थितिः स्थितिरेवचेति क्वचित्पाठः अयमेव साम्प्रदायिकः । परेति । शक्तिनामसुरेत्येका असुरविमर्द्दिनीति अपरा । तदुक्तं ससप्तसुख्यथसुरा तथाऽसुरविमर्दिनीति । तथा अपरेति । शक्तिनाम तदन्तरं पवनवेगेति संबधः असुरभयङ्करीति पदच्छेदः अक्षोभ्याच सत्यवादिनीचेति विग्रहः पूजनीयाः प्रयत्नत इति चतुरस्रान्तरपादिप्रादक्षिण्येन । तदुक्तं संहितायां । एताः शक्तीस्तुपूजयेत् । प्रादक्षिण्यक्रमेणैवेति पूर्ववदिति । तुर्योक्तवत् । तदुक्तं संहितायां तद्बहिर्लोकपालांश्च भूबिंबे पूजयेत्प्रिये इति । तद्वदिति । चतुर्थोक्तवत् । तद्वदित्ययुतम् । उत्तरप्रयोगद्वये पीयमेव संख्या मन्त्रान्तरस्यापि ॥ ४७ ॥ अनयैवसिद्धिमाह । भूतेति । क्रमोत्क्रमात् पुटीकृत्येत्यन्वयः सिद्धोभवेन्मनुरिति समंत्रस्तस्य सिध्यतीत्यर्थः मासमात्रेणेति ज्ञेयम् । तदुक्तं कुलप्रकाशतंत्रे । मासमात्रं जपेन्मन्त्रं भूतलिप्यर्णसंपुटम् । क्रमोत्क्रमात्सहस्रं तु तस्य सिद्धोभवेन्मनुरिति । यद्वा साध्यरिस्थामपतितः सिद्धस्थानगतमन्त्रफलं ददातीत्यर्थः मध्यवर्त्मनेति । सुषुम्णा मध्यमार्गेणेत्यर्थः मूर्द्ध्नि परं स्थानं संगमय्येति । षट्चक्रभेदक्रमेण परं स्थानं द्वादशान्तं शिवसद्म । प्राणवदित्यनेन योगी उक्तः मूलान्तं मूलाधारपर्यन्तं परामृतैः प्लावयेदिति संबन्धः अस्यान्यमन्त्राङ्गत्वमाह । अनयेति ॥ ५० ॥ विषयंत्रमाह । बिन्द्विति । गगनं हः बिन्द्वाढ्यं हं तदेव सविंकं गगनं शिव एकारस्तद्युक् तेन हेम् । अत्रैकादशरुद्रां इति शिवशब्देन एकादशसंख्या ११ लक्षिता । तयाचैकादशस्वरस्तेन एकारः शिवशब्दवाच्यः क्षामीशब्दश्चतुर्थ्यायुतश्चतुर्थ्येकवचनेन युतस्तेन क्षामिने नत्यन्तो नमोन्तः एषमनुर्मन्त्रः मध्यविहितः कर्णिकायांलेख्यइत्यर्थः साध्यस्य विषादिग्रस्तदेवदत्तादेर्बन्ध्वक्षरैः सिद्धार्णा बान्धवाः प्रोक्ता इत्युक्तेः सिद्धकोष्ठाक्षरैः सह पत्रेषु तद्भूतवर्णान् । एतत्पटलोक्त व्योमभूतवर्णान् अक्षरशः प्रत्यक्षरं हकारपुटितान् लिखेत् । अन्ते नवमं अंत्यदले तेनाष्टमदले व्योमभूतवर्णद्वयं प्रत्येकं हकारपुटितं लिखेत् मतिमानित्यनेन सर्वाण्यक्षराणि सबिंदुकानीत्युक्तं देवदत्तस्य विषंहरेति क्रियामध्ये लेख्या ॥ ५१ ॥ लाक्षा अलक्तकः रोहिण्यासुदये । राहोरिति । अत्र तात्कालिकनक्षत्रमुहूर्त्तं तत्तद्भूतग्रहोदये तत्तद्यंत्रं लेखनीयं तत्र दिवसे नवमं रोहिणीमुहूर्त्तं रात्रावप्यष्टमम् । रोहिणीमुहूर्त्तं तत्र राहोरुदये वायुभूतोदयं राहोरुदयोभवति । यतः । प्रतिराशिपंचभूतोदयस्य नियतत्वात् नवग्रहोदयोप्यस्त्येव । यदुक्तं । प्राणाग्नीलांबुखात्मानः पवनाद्युर्यथाक्रमम् । गुरुराहू भृगुकुजौबुधार्कौ चन्द्रसूर्यजौ । क्रमाच्चतुर्षु भूतेषु

चंदननिर्मितम् ॥ रोहिण्यामुदयेराहोर्विषघ्नं सर्वशांतिदं ॥ ५२ ॥ यौ द्वौ साक्ष्यधरें कुखं ण्डशिरसौ स्यातां क्रमात्ङेयुतं कोपेशंनमसान्वितं विरचयेन्मध्ये दलेष्वष्टसु ॥ वायव्यान् यपुटान्विलिख्य विधिनाशिष्टार्णमंत्येदले यंत्रं वायुगृहेण वेष्टितमिदं स्यात्तालपत्रस्थितम् ॥ ५३ ॥ स्वात्यां मंदोदये यंत्रं वायव्ये निखनेद्रिपोः ॥ द्वार्युच्चाटनकृत्तस्य मृतिर्वाभवतिध्रुव म् ॥ ५४ ॥ वन्हेर्बीजयुगं क्रमाच्छ्रवणसद्यार्द्धेंदुयुक् स्यात्स्वरो रीः फट्द्वन्मनुरेष मध्य विहितःपुत्रेषु वन्हृयक्षवान्॥वर्णान्वन्हिनिरोधितान् प्रविलिखेत्साध्याक्षरैः पोषकैरंत्यंचात्यदले क्रमानुपुरगं भूर्जोदरेकालिपतम् ॥ शुभवारर्क्षसंयोगे लाक्षाकुंकुमनिर्मितम् ॥ रक्षाकृत्सर्वभूतानां

---

व्योमसर्वात्मकं भवेत् इति। अन्यचापि गुरुराहू च वायव्ये चरतोग्नौ भृगुः कुजः।भूम्यांबुधरवी ज्ञेयौ जले चन्द्रशनैश्चरौ। आकाशं सग्रहं विंद्यादेवं सर्वेषु राशिषु। षष्ठ्युत्तरैश्च त्रिशतैः श्वासैरेकातु नाडिका। पंचभिर्नाडिकाभिस्तुराशिरेकः प्रकीर्त्तितः दिनं मेषादिमीनान्तैरेकं द्वादशराशिभिः राशिष्वेतेषु भूतेषु विज्ञातव्या ग्रहोदयाः एकैकस्मिन् भवंत्यत्र राशौ भूतानि पंच च । वायुर्वन्हिस्तथा भूमिरापश्चमिति पंचमम्। एकैकस्मिन्पंचसूक्ष्माण्युदयन्ति हितेषु च । सर्वेषामेव राशीनां वायव्याद्यातु नाडिका। द्वितीया नाडिकाग्नेयी तृतीया पार्थिवीमता।चतुर्थी वारुणी ज्ञेया व्योमाख्या पंचमी स्मृता। पूर्वोदयास्तु सर्वत्र सौम्याः पापा स्त्वनन्तराः। राहुः कुजो रविः सौरिरेतेदक्षिणतः शुभाः गुरुर्भृगुर्बुधश्चन्द्रः सव्ये सौम्याः शुभावहाः।एवं राशिषु भूतेषु ग्रहोदय उदीरित इति। भूतोदयमंत्यपटले वक्ष्यति। नक्षत्रमुहूर्त्तानि उक्तानि ज्योतिः शास्त्रे । आर्द्राश्लेषानुराधा च मघाचैव धनिष्ठिका। पूर्वाषाढोत्तराषाढे अभिजिद्रोहिणीतथा।ज्येष्टा विशाखा मूलं च नक्षत्रं शततारिका। उत्तरा पूर्वफाल्गुन्यौ दिने पंचदशक्षणाः रात्रावार्द्रा तथा चाष्टौ पूर्वाभाद्रपदादयः पुनर्वसुः स्मृतः पुष्य श्रुतिःस्त्रिषः करादिकाश्रुतिः श्रवणम् । करादिका हस्तादिका। तिस्रः हस्तचित्रा स्वात्यः एवमपरेपि ज्ञेयम्।अन्ये तु यदा रोहिणीनक्षत्रे राहुर्भवति तदाकर्त्तव्यमित्याहुः॥५२॥वायव्यमाह। यौद्वाविति। अत्रि इकारः अमव्यभविशेषोक्ताविति परिभाषणात्।अधरऐकारः इंदुखंडोबिंदुः आंश्च च अधरश्च साध्यधरौ एतास्यां सह वर्त्तमानौ साध्यधरौ तौ च ताविंदुखण्डशिरसौ चेति विग्रहः क्रमादित्यस्मि तेन प्रिये इति कोपेशं ङेयुतं कोपेशाय नमसान्वितम्।नमोयुक्तमिमं मंत्रं मध्येकर्णिकायां रचयेल्लिखेत्।वायव्यानेतत्पटलोक्ते वायुभूतवर्णान् विधिनायपुटान् प्रत्यक्षर इत्यर्थः बिन्दन्तामित्यपि। वायुगृहेण वृत्तं दिवस्तात्। षट्बिंदुलांछितं मातरिश्वन इत्युक्तेः षट्बिंदुलांछितेन वृत्तेन वेष्टयेत्। अत्रापि पूर्ववत्। कर्मलिखनीयम् ॥ ५३ ॥ स्वात्यांमन्दोदयेति। स्वातीनक्षत्रमुहूर्त्ते यदामन्दस्य शनैश्चरस्योदयः जलभूतोदय इत्यर्थः रिपोर्द्वारि वायव्यं यंत्रं निखनेदित्यन्वयः ॥ ५४ ॥ आग्नेयमाह। वन्हेरिति। श्रवणः उ सद्य ओ अर्द्धेंदुबिंदुः क्रमादेतद्युतं वन्हेर्बीजयुगं रेफद्वयम् । तेन रुं रौं इति अस्यतत्स्वरूपम्। स्वरमः पदं एषमनुर्मन्त्रमध्यविहितः कर्णिकास्थः वन्हिनिरोधितान् रेफपुटितान् प्रत्यक्षरमिति ज्ञेयम्। अत्र रोध एकाक्षरत्वात् संपुटे पर्यवस्यति । साध्याक्षरैः पोषकैः साध्यस्यपोषकाक्षरैः सुसिद्धाः पोषका ज्ञेया इत्युक्तेः सुसिद्धकोष्टाक्षरैरित्यर्थः क्रमानुपुरगम् । स्वस्तिकत्रिको-

यंत्रमाग्नेयमीरितम् ॥५५॥ घातकाक्षरमिश्रं तत्कृतिकायांकुजोदये ॥ चितांगारेण तद्वस्त्रे लिखितंनाशयेद्रिपुम् ॥ ५६ ॥ नासार्द्धेंदुमदंबुतन्मनुयुतं सार्द्धेंदुरुंतोविदुर्विध्वंते तु भुवे नमोनिगदितो मध्येमनुर्वारुणान् ॥ वर्णान्पत्रपुटे युवाक्षरपुटान्साध्यस्यवंध्वक्षरेरालिख्याप्यपुरेणवेष्टितामिदं यंत्रं भवेद्वारुणम् ॥ ५७ ॥ भूर्जपत्रे लिखेदेतत् रक्तचंदनवारिणा ॥ वरुणर्क्षोदये काव्ये यंत्र वश्यादिकृद्भवेत् ॥ ५८ ॥ गंडो बिंदुविभूषितो वसुमती स्यातादृशीगण्डयोर्मध्यस्थौ तु जगौलुकेन तिरिमं मन्त्रं लिखेन्मध्यतः ॥ लांतांल्लार्णपुटीकृतान्वसुमतीवर्णान्दलेष्वालिखेत्सेवावर्णयुतान्यथाविधिभुवो गेहेन संवेष्टयेत् ॥ ५९ ॥ ज्येष्ठायामुदिते सौम्ये मृदि गैरिकनिर्मितम् ॥ पार्थिवं यन्त्रमचिरात्सर्वस्तंभककृद्भवेत् ॥ ६० ॥ गुह्याद्गुह्यतरा नित्या श्रीभूतलिपिदेवता ॥ यः सेवतेशुभैःपुत्रैर्धनधान्यैश्चपूर्यते ॥६१॥ अत्रिर्वरुणसंरुद्धो दवाग्वादिनिठद्वयम् ॥ वागीश्वर्या दशार्णोयं मन्त्रो वाग्विभवप्रदः ॥६२॥ ऋषिःकण्वोविराट्-

---

यमध्यगं घातकाक्षरमिश्रं पोषकाक्षरस्थाने इत्यर्थः वैरिणोघातका मता इत्युक्तेररिकोष्ठाक्षराणि घातकाक्षराणि कृत्तिकायां कृत्तिकानक्षत्र मुहूर्त्ते कुजोदये मङ्गलोदये वह्निभूतोदय इत्यर्थः तद्वस्त्रे चितावस्त्रे नाशयेदिति गृहादि निखातम् ॥ ५७ ॥ वारुणयन्त्रमाह । नासेति । नासा ऋः अर्द्धेंदुबिंदुस्तद्युक्तम् । अंबु वः तेनद्वन्त्वदंबु वः मनुरौ तद्युतं सार्द्धेंदुस्सबिंदु सूतेन वौं । अत्र मनुशब्देन चतुर्दशमनवइति चतुर्दशसंख्यालक्षिता तया चतुर्दशस्वरस्तेन औकारो मनुशब्दवाच्यः उंतो विभुर्विधवे विध्यन्ते । विधुशब्दान्ते । भुवे तेन । विधुभुवे नमः अयं मनुर्मन्त्र मध्येकर्णिकायां निगदित उक्तः लेख्यत्वेनोक्त इत्यर्थः । वाक्षरपुटान् वकाराक्षरपुटितान् । प्रत्यक्षरं सबिंदुकान् । आप्यपुरेण । पार्श्वद्वयपङ्कजद्वयसहितार्द्धेन्दुना ॥ ५८ ॥ वारुणर्क्षं शततारका तन्मुहूर्त्ते काव्ये शुक्रे उदिते वह्निभूतोदय इत्यर्थः । वश्यादित्यादिशब्देन आकर्षणमोहनादि ॥ ५९ ॥ पार्थिवयन्त्रमाह । गंड इति बिंदुभूषितो गंडः लृं वसुमती लकारस्तादृशीबिंदुमती । तेन लं । गंडयोर्वर्णयोर्मध्यस्थौ जगौ वर्णौ । तत्रगंडयोरिति । अत्र प्रथमं गकारमात्रं । उत्तरत्रयरसवर्णयुक्डकारः तेन गजगंड इतिसिद्ध लुकेस्वरूपं मतिर्न्न मः इमं मंत्र मध्यतः कार्णिकायां लिखेत् । अं चैकाक्षरस्य न्यूनत्वात् लांतामीत्युक्तं तेनाष्टमेलकारत्रयं लेख्यमित्यर्थः लार्णपुटीकृतान् प्रत्यक्षरं सेवावर्णयुतान् साध्यास्ते सेवकाश्रृताइत्युक्तेः साध्यस्य साध्यकाष्ठाक्षरैरित्यर्थः । यथाविधीति । सबिंदुकानित्यर्थः ॥ ६० ॥ ज्येष्ठायां ज्येष्टानक्षत्रमुहूर्त्ते सौम्ये बुधे उदिते भूमेरुदय इत्यर्थः मृदिमृत्पात्रे सर्वस्तंभकृदिति । वाय्वग्निजलशुक्रखड्गधारासेनादिस्तंभनं ज्ञेयं । तत्रशुक्रादौ धारणं । सेनादौ निखननमिति यथा यथं ज्ञेयमिति सुधीभिः । एवं मातृकामंत्रानुक्त्वा तदङ्गभूतान्सरस्वतीमंत्रान्वक्तुकामो दशार्णं वाग्वादिनी मंत्रमुद्धरति ॥ ६२ ॥ अत्रिरिति । अत्रिर्दकारः वरुणेन वकारेण संरुद्धः संपुटितः तेन वदव इतिज्ञेयं दवाग्वादिनीति स्वरूपं ठद्वयं स्वाहा । वाग्विभवौ प्रकर्षेण ददातीति वाग्विभवप्रद इत्यनेनास्य विनियोगं वदता बहवो भेदाः सूचिताः । तदुक्तं सारस्वतमते । तारमायासंपुटीयं महासारस्वतप्रद इति । वाग्बीजमांयाद्यश्चाचार्यस्तुतावुद्धृतः वाग्बीजं भुवनेश्वरीं वदव-

च्छंदो देवतावाक्समीरिता ॥ शिरः श्रवण दृङ्नासावदनांधु गुदेष्विमान् ॥ ६३ ॥ न्यस्यार्णान्प्राग्वदंगानिमातृकोक्तानिकल्पयेत्॥तरुणशकलमिंदोर्बिभ्रतीशुभ्रकांतिः कुचभरनमितांगी सन्निषण्णा सिताब्जे ॥ निजकरकमलोद्यल्लेखनीपुस्तकश्रीः सकलविभवसिध्यै पातु वाग्देवता नः ॥ ६४ ॥ दशलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः ॥ पुण्डरीकैः पयोभ्यक्तैस्तिलैर्वामधुराप्लुतैः ॥ ६५ ॥ मातृकोदीरिते पीठेवागीशीमर्चयेत्सुधीः ॥ वर्णाब्जेनासनंदद्या-

---

देत्युच्चार्य वाग्वादिनि स्वाहा । वर्णपातकभरा ध्यायामि नित्यां गिरमिति । वाग्बीजमायापुटित इतिकेचित् मायाद्यइत्यन्ये । तंत्रांतरे केवलवाग्भवाद्योप्युद्धृतः अत्रैव शिवशक्तियोग इतिकेचित् । अपरे वैपरीत्यमपीच्छती ।प्रयोगसारे वालादिरप्युद्धृतः पंचप्रणवपुटितः एक आदौ मध्ये स्वाहादौ च बालाबीजयुतो परवाग्भवपुटितसंबोधनः परः बालातात्तीयपुटितसंबोधनोन्यः कामबीजपुटितसंबोधनः पंचमः स्वाहादौ बालायुतः षष्ठः एवमस्या अन्येपि भूयांसो भेदास्ते ग्रंथगौरवभयान्नोक्ताः स्वस्वगुरुसंप्रदायात्ज्ञेयाः । तदुक्तमाचार्यस्तवे । आद्यंतपंचप्रणवप्रभिन्न विद्येश्वरिप्रोज्वलशूलहस्ते । भक्तद्विषां कार्मणयंत्रविद्यां प्रत्यंगिरेत्वं जयसंहरेति । वीप्सावसाने समसायकेन युक्ता तथादावपि वाग्भवेन । संबोधनांते समनुद्विचंद्रे विद्योत्तमं देवि तवानतोस्मि । मध्येस्थितं वाग्भव बीजयोर्वा त्वन्नामसारस्वतसंपुटवा । जात्यापि मूकस्य हठात्कवित्वं वागीशि तन्नौमि पदा तनोति । कामेश्वरी संपुटिताय नित्यं नारीनराणा मपि मोहकाय । कस्मैचिदस्मै सततं नमोस्तुत्वन्नामदेवायगिरामधीशि।यद्बालयापल्लवितं जडानांत्वन्नामरत्नं रसनाविराजि । उद्दामकाव्यप्रकरप्रभाभिरुल्लासतेस्मै न तिमातनोमिइति । अन्ये संबोधनांते वागीश्वरीति संबुद्धिमधिकामाहुः एषां ध्यानविशेषा गुरुमुखात् ज्ञेयाः ॥ ६३ ॥ धिषणोवाक्ऋषिर्ज्ञेयः । तदुक्तमीशानशिवेन । ऋर्षिस्तु धिषणोमतस्त्वथपरे च कण्वं विदुरिति । वागिति । बीजं स्वाहेति शक्तिः ब्रह्मबीजं मायाशक्तिः जीवो बी जं बुद्धिः शक्तिः उदानो बीजं कुंडलिनी शक्तिः इदं सूक्ष्मं बीजादित्रयं सर्वमंत्रेषु ज्ञेयं । तदुक्तं प्रयोगसारे ईश्वरो जगतां बीजं शक्तिर्गुणमयीत्वजा । परमात्मा तथा बुद्धिर्वायुः कुंडलिनीति च चतुर्विधे बीजशक्ती सामान्यं त्रितयं त्विदमिति । मंत्रतंत्रप्रकाशेपि । चतुर्विधे बीजशक्ति सर्वमंत्रेषु चिंतयेत् । त्रितयं तत्र सामान्यं तदिदानीं निरूप्यते । ईश्वरो जगतां बीजमाद्यंत्रह्मतदुच्यते । तस्य माया समाख्याता शक्तिर्गुणमयीतुसा।स एव भगवान्देवो बुद्धिसाचोद्वितीयकं । बीजमत्रसमाख्यातं बुद्धिः शक्तिरुदाहृता । उदानश्चित्समायुक्तस्तृतीयं बीजमुच्यते । शक्तिः कुंडलिनीतत्र सामान्यं त्रितयं त्विदं । ज्ञातव्यं सर्वमंत्रेषु बीजशक्ती ततो निजे इति । अंध्विति लिंगं । प्राग्वदिति । चतुर्थोक्तप्रकारेण जातियुक्तानि । अं कं खं गं घं ङं आं हृदयाय नम इत्यादि । संप्रदायविदस्त्वप्यथांगानिमन्यंते । ॐ ह्रां वदऋग्वेदहृत् । ॐ ह्रीं वदयजुर्वेदशिरः ॐ ह्रूं वाक्सामवेदशिखा । ॐ ह्रैं वादिनि अथर्व वेद वर्म । ॐ ह्रौं स्वाहा षडंगं नेत्रं । ॐ ह्रः समस्तमंत्रमुच्चार्यपुराण न्याय मीमासा धर्मशास्त्रे तिहास कल्प गाथा नाराशंसीरित्यस्त्रं । तदुक्तं । सारस्वतमते । यमनेत्रधरा वन्हियुगलार्घमनोः क्रमात् । ह्रामाद्यैश्च व वेदाद्यैरंगानि परिकल्पयेदिति । पद्मपादा-

न्मूर्तिं मूलेन कल्पयेत् ॥ ६६ ॥ आदावंगानि संपूज्य पश्चाच्छक्तीरिमा यजेत् ॥ योगासत्या च विमला ज्ञाना बुद्धिः स्मृतिः पुनः ॥ ६७ ॥ मेधा प्रज्ञा च पत्रेषु मुद्रापुस्तकधारिणी ॥ दलाग्रेषु समभ्यर्च्यार्ब्राह्म्याद्यास्ता यथाविधि ॥ ६८ ॥ लोकपाला बहिः पूज्यास्तेषामस्त्राणि तद्बहिः ॥ एवं संपूजयेन्मन्त्री जपहोमादितत्परः॥६९॥ब्रह्मचर्येरतशुद्धः शुद्धदंतनखादिकः ॥ संस्मरन्सर्ववनिताः सततं देवताधिया ॥ ७० ॥ कवित्वं लभते धीमान् मासैद्वादशभिर्ध्रुवम् ॥ कृत्वा तन्मंत्रितं तोयं सहस्रं प्रत्यहं पिबेत् ॥ ७१ ॥ महाकविर्भवेन्मंत्री वत्सरेण नसंशयः॥ उरोमात्रे जलेस्थित्वा ध्यायेन्मार्तंडमण्डले ॥ ७२॥ स्थितां देवीं प्रतिदिनं त्रिसहस्रं जपेन्मनुं ॥ लभते मण्डलात्सिद्धिं वाचामप्रतिमांभुवि ॥ ७३ ॥ पलाशबिल्वकुसुमैर्जुहुयान्मधुरोक्षितैः ॥ समिद्भिर्वातदुत्थाभिर्यशः प्राप्नोति वाक्पते ॥ ७४ ॥ होमोयं सर्वसौभाग्यलक्ष्मीवश्यप्रदो भवेत् ॥ राजवृक्षसमुद्भूतैः प्रसूनैर्मधुराप्लुतैः ॥ ७५ ॥ तत्समिद्भिश्च जुहुयात्कवित्वमतुलं लभेत्॥ एवं दशाक्षरी प्रोक्ता सिद्धये वाचमिच्छतां ॥ ७६ ॥ हृदयांते भगवतिपदशब्दयुगं पुनः ॥ वाग्देविवन्हिजायांतं वाग्भवाद्यं समुद्धरेत्॥७७॥ मनुषोडशवर्णाढ्यवागैश्वर्यफलप्रदम् ॥ मनोः षाड्भिःपदैः कुर्यात्षडंगानिसजातिभिः ॥ ७८ ॥ शुभ्रां स्व-

---

चार्यास्तु मातृकांगांते वदहृदयाय नम इत्यादि ऊचुः ॥ ६४ ॥ तरुणेति तरुणश्चकलं बालखंडं करकमलेत्युपमितसमासः दक्षे लेखनी । वामे पुस्तकमित्यायुधध्यानं सुधीरित्यनेनावाहनादिश्लोके षु स्त्रीलिंगयोगउक्तः । पीठमंत्रमुद्धरति । वर्णाब्जेनेति हसौः वाग्वादिनीयोगपीठायनम इति प्रयोगः॥ ६७ ॥ पश्चाच्छक्तीरिति । पश्चादितिचतुर्थावरणेतेनादावंगावृत्तिः कर्णिकायां द्वितीयास्वरद्वंद्वाष्टकेनतृतीयाअष्टवर्गैः तुर्ये योगादिशक्तिभिः दक्षिणादित इतियावत् । तासां ध्यानमुक्तमीशानशिवेन । सपुस्तकजपस्रजो विमलहारमत्युज्वलाः शशांकसदृशप्रभाः प्रतिदलस्थिताः शक्तयः। चतुर्थवृत्तिगायजेत्कथितदक्षिणाशादिका इति । आचार्यास्तु । मातृकोक्तविधिनाच्चरांबुजे इति । मुख्यशाममुद्रा यथाविधीति पूर्वपटलोक्तध्यानाः वह्निश्चतुरस्रे धीमान्तन्मंत्रितं तोयं पीत्वा द्वादशभिर्मासैः ध्रुवं कवित्वं लभत इत्यन्वयः । धीमानित्यनेन सप्तवाराभिमंत्रणं हस्तेन निधानं सप्तवारपानं च सूचितं । पाने पूर्वोक्तध्यानमनुसंधेयं । मंडलादित्येकोनपंचाशद्दिवसैरित्यर्थः सर्वसौभाग्यलक्ष्मीवश्यप्रद इति । अत्र सौभाग्यवश्ययोर्बालादित्वं लक्ष्म्यै श्रीबीजादित्वमेवं । पापविमुक्त्यै नृसिंहबीजादित्वमपिज्ञेयमिति पद्मपादाचार्याः राजवृक्षः श्योनाकः कल्पाद्यंत्रमुच्यते। वाग्बीजगर्भनरमालिखपंक्तियंत्रपत्रेषु मंत्रलिपयोलिपिभिः परीतं । आदिचकावधिभिरिष्टफलप्रदं तद्यंत्रं भवेत् करधृतं कवितारकचेति । मंत्रांतरमुद्धरतिहृदयेति । हृदयांते नमोते भगवति स्वरूपं । अत्र नमः शब्दविसर्गस्थरोत्वे गुणे च ओकारइति ज्ञेयं । वदशब्दयुगं वदवदवाग्दे विस्वरूपमिति वदेति शेषः कीदृक्मनुर्वन्हिजायास्वाहा अंते यस्य वाग्भव वाग्बीजं एतदाद्य यस्य । अत्र हसयोगोपीति केचित् । वैपरीत्यमित्यन्ये । वागैश्वर्यफलप्रदमित्यनेन विनियोगं वदता श्रीबीजादित्वमपिसूचितं अत्र बीजशक्ती पूर्वोक्ते ज्ञेये । ऋष्यादिकमपि पूर्वोक्तमेव । षड्भिः पदैरिति । बीजमाद्यं पदं च वदवदे-

च्छावलिप्रमाल्यवसनांशीतांशुखण्डोज्ज्वलांव्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्तांबुजैः ॥ बिभ्राणां कमलासनां कुचनतां वाग्देवतां सुस्मिताम् वंदे वाग्विभवप्रदां त्रिनयनां सौभाग्यसंपत्करीम् ॥ ७९॥ हविष्याशी जपेत्सम्यक् वसुलक्षमनन्यधीः ॥ दशांशं जुहुयादंते तिलैराज्यपरिप्लुतैः ॥ ८० ॥ मातृकोक्ते यजेत्पीठेदेवीं प्रागीरिते क्रमात् ॥ पिबेत्तन्मंत्रितं तोयं प्रातःकाले दिनेदिने ॥ ८१ ॥ विद्वान्वत्सरतो मन्त्री भवेन्नास्ति विचारणा ॥ अभिषिंचेज्जलैर्जप्तैरात्मानं स्नानकर्मणि ॥८२॥ तर्पयेत्तां जलैःशुद्धैरतिमेधामवाप्नुयात् ॥ पुष्पगन्धादिकं जप्तं सर्वं तद्धारयेत्सुधीः ॥ ८३ ॥ सभायां पूज्यते सद्भिर्वादे च विजयी भवेत् ॥ तारो मायाधरो बिंदुः शक्तिस्तारं सरस्वती ॥ ८४॥ ङेतोनत्यंतिको मन्त्रः प्रोक्त एकादशाक्षरः ॥ ब्रह्मरंध्रेभ्रुवोर्मध्ये नवरंध्रेषु च क्रमात् ॥८५ ॥ मन्त्रवर्णान्न्यसेन्मंत्री वाग्भवेनांगकल्पना ॥ वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुंदप्रभां चंद्रार्धांकितमस्तकां निजकरैः संबिभ्रतीमादरात् ॥ वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुंगस्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥ ८६ ॥ जपेद्द्वादशलक्षाणि तत्सहस्रं सितांबुजैः ॥ नागचंपककुष्पैर्वा जुहुयात्साधकोत्तमः ॥ ८७ ॥ मातृकोक्ते यजेत्पीठे वक्ष्यमाणक्रमेण तां ॥ वर्णाब्जेनासनं कुर्यान्मूर्तिमूलेन कल्पयेत् ॥८८॥ देव्या दक्षिणतः पूज्या संस्कृता वाङ्मयी तनुः ॥ प्राकृता वामतः पूज्यावाङ्मयी सर्वसिद्धिदा ॥८९॥ इष्ट्वापूर्ववदंगानि प्रजाद्याः पूजयेत्ततः प्रज्ञा मेधाश्रुतिःशक्तिः स्मृतिर्वागीश्वरी मतिः ॥ ९० ॥ स्वस्तिश्चेति समाख्याता ब्राह्मयद्या

---

ति तुर्यं । अन्येतु वदवदेति पदमादौ ॥ ७९ ॥ वाग्बीजयोगमाह । शुभ्रमितिव्याख्यामिति व्याख्यानमुद्रा । तल्लक्षणं यथा श्लिष्टाग्रेंगुष्ठतर्जन्यौ प्रसार्यान्याःप्रदर्शयेत् । प्रयोज्याभिमुखं सैषा मुद्राव्याख्यानसंज्ञितेति । अक्षगुणं मालां विद्यां पुस्तकं दक्षोर्ध्वतो वामाद्यूर्ध्वपर्यंतमायुधध्यानं कमलासनामिति श्वेतकमलस्थां ॥ ८० ॥ सम्यगिति वक्ष्यमाणपुरश्चरणनियम उक्तः वसुलक्षमष्टलक्षं अनन्यधीर्मंत्रार्थदत्तमनाः । तदुक्तं । जपतु मंत्रमनन्यः सार्थसंस्मृतियथाविधीति । वागीरितेति । दशाक्षर्युक्तमार्गेणपिबेदिति पूर्वोक्तमनुसंधेयं । पुष्पगंधा दिकमित्यत्र कामादित्वं ज्ञेयं । तज्जप्तमितिसप्तवारं । अभिषिंचेदित्यादि । अवाप्रप्नुयादित्यंतमेकः प्रयोगःहंसवागीश्वरीमंत्रमुद्धरति । तार इति तारःप्रणवः माया भुवनेश्वरीअधरः ऐंबिंदुश्च तेन वाग्भवं । सरस्वतीङेतासरस्वत्यैनत्यंतिको नमोंतः अत्र वाग्भवे हसयोगमाहुःकेचित्परे सहयोगमिच्छंति । वाग्भवे बीजशक्तिः अन्ये प्रणवं बीजमाहुः ऋषिः पूर्वोक्तस्त्रिष्टुप्छंदः । हंसवागीश्वरीदेवता । नवरंध्रेषु कर्णनेत्रनासाद्वयमुखलिंगगुदेष्विति । मंत्री क्रमादित्यनेनोक्तं । वाग्भवेनेतितारमायासंपुटेनेति परमगुरवः अन्येतु वाग्भवादीन षट्दीर्घयुक्तमायाबीजेनेत्याहुः ॥ ८६ ॥ वाणीमिति । क्वचिन्मुद्रामिति पाठः । यदा विद्यामिति पाठस्तदाऽयुधध्यानं पूर्ववत् द्वितीयपाठे दक्षोर्ध्वादि अक्षस्रक मुद्रे अन्यत्रान्ये साधकोत्तम इत्यनेन जपाव्यवधानेन नियमस्थ एवहोमं कुर्यादित्युक्तं । वर्णाब्जेनेति । ह्सौ हं सवागीश्वरीयोगपीठाय नम इति प्रयोगः पूज्या संस्कृतेति । एतयोर्ध्यानमुक्तं । सारस्वतमते । दक्षिणे संस्कृता पूज्या योग-

स्तदनंतरं ॥ लोकेशानर्चयेद्भूयस्तदस्त्राणि च तद्बहिः ॥ ९१ ॥ इति सम्पूजयेद्देवीं साक्षाद्वाक्वल्लभो भवेत् ॥ दशाक्षरीसमुक्तानि कर्माण्यत्रापि साधकः ॥ ९२ ॥ वाचस्पतेमृतेभूयः प्लुवःप्लुरितिकीर्तयेत् ॥ वागाद्यो ऋषिभिः प्रोक्तो रुद्रसंख्याक्षरो मनुः ॥ ९३ ॥ कुर्यादंगानि विधिवद्वागाद्यैः पञ्चभिः पदैः॥ आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं बिभ्राणा तरुणेंदुबद्धमुकुटा मुक्तेंदुकुंदप्रभा ॥ भालोन्मीलितलोचना कुचभराक्रांता भवद्भूतये भूयाद्वागाधिदेवतामुनिगणैरासेव्यमानानिशं ॥९४॥ रुद्रलक्षंजपेन्मंत्रंद शांशं जुहुयाद्घृतैः ॥ मातृकाकल्पिते पीठे पूजयेत्तां यथाविधि ॥ ९५ ॥ पलाशकुसुमैर्हुत्वा परां सिद्धिमवाप्नुयात् ॥ कदंबकुसुमैस्तद्वत्फलैः श्रीवृक्षसम्भवैः ॥ ९६ ॥ अचिराच्छ्रियमाप्नोति वाचां कुंदसमुद्भवैः ॥ नंद्यावर्तप्रसूनैर्वाहुत्वा वाग्वल्लभो भवेत् ॥ ९७ ॥ ब्राह्मीरसे वचाकल्के कपिलाज्यं पिबेज्जपन् ॥ पिबेद्दिनादौ तं नित्यं सर्वशास्त्रार्थविद्भवेत् ॥ ९८ ॥ अनया विद्यया जप्तब्राह्मीपत्रप्रभक्षणात् ॥ न विस्मरति मेधावी श्रुत्वा वेदागमान्पुनः ॥ ९९ ॥ बहुना किमियं विद्या जपतां कामदो मणिः ॥ तोयस्थं शयनं विष्णोः सकेवलचतुर्मुखः ॥१००॥ बिं-

---

मुद्राकरद्वया । सततं निः सरच्छब्दवदनान्या च वामत इति पूर्ववदिति । तुर्योक्तरीत्याकेसरेषु वाग्वल्लभ इत्यनेन विनियोग उक्तः ॥ ९३ ॥ मन्त्रान्तरमुद्धरति । वाचेति । वागाद्योवाग्भवाद्यः एकादशाक्षरइत्युक्तेः।मृते परे पूर्वेण सन्धिर्नमन्त्रे । तदुक्तं नारायणीये । वाक्कूर्मः पार्श्वयुक् शुक्लं ते केशांते मृते प्लुवः। प्लुरन्तादशवर्णो यं विद्या मुख्या सरस्वतीति । ऐं बीजं प्लुं शक्तिः पूर्वोक्तमृष्यादिकं कुर्यात् । तत्र वाग्भवेन हृत् । अन्यैश्चतुर्भिः पदैश्चत्वार्यंगानि । विधिवदिति । अनेन समस्तेनास्त्रमुक्तं भवति । ननु पंचभिः पदैः कुर्यादङ्गानि इत्युक्तेरत्र पंचांगमेवास्तीतिचेत् । नैतत्सारं यतः । कुर्यादङ्गानीति विधिना षडङ्गमेव प्राप्तं तत्कथनाकांक्षायां पंचभिः पदैरित्युक्तिः । वागाद्यैरिति । क्रमार्थं पदैरित्येतावत्युच्यमानेऽत्र षट्शतानी कथमिति । संदेह एव स्यात् । तत्र गोपनेन व्यस्तसमस्तं बोधयितुम् । विधिवदित्युक्तिः पंचभिरित्यनेन प्रधानबाधायोगात् च किंच यत्र तथैवेष्टम् तत्र तथैव विधास्यति । मन्त्रस्य पंचांगमिति कल्पयेदित्यादिना ॥ ९४ ॥ कमले इति । सितं दक्षाधस्तादमाधःपर्यंतमायुधध्यानम् ॥ ९५॥ रुद्रलक्षमेकादशलक्षं यथापुरेत्येकादशाक्षर्युक्तमार्गेण । तद्वदिति । वाक्सिद्धिमाप्नुयादित्यर्थः अचिराद्वाचां श्रियं वाक्संपदं प्राप्नोतीति संबंधः नंद्यावर्त्तो गंधतगरः वेति कुन्दसमुद्भवैरित्यनेन सहविकल्पः ॥ ९८ ॥ ब्राह्मीरसइति । अत्रापि स्वरसपाक इति कृत्वा घृतस्याष्टमांशं स्वकल्कं घृतचतुर्गुणो ब्राह्मीरसः अन्यत् पूर्ववत् । वचाकल्क इतिक्वचित्पाठः जपन् पचेदिति संबंधः अनया विद्यया जप्तं सप्तवारमितिशेषः नित्यं दिनादौ पिबेदिति त्रिवर्षं पंचवर्षं वा अनया विद्ययेत्यादिसर्वं ब्राह्मीपत्रेपि योजनीयम् । सर्वेत्यादिमेधावीत्यादिउभयमुभयस्य फलं समयप्रमाणभेदेन । तदुक्तंनारायणीये । ब्राह्मीरसस्य कपिलाज्ययुतं प्रभाते जप्तं तयापिबति यस्त्वलुकं त्रिवर्षम् । एकोदितं सखलु धारयतिचिरुक्तं पंचाब्दतो मुखधृतं नतु विस्मरेत्तत् । तत्पत्रवादनमपि स्मृतमेवमिति ॥ १०० ॥ कामदोमणिरिति । अनेनैतत्सूचितम् । एतज्जप्तं सु-

द्यर्घीशयुतो वन्हिर्बिन्दुसर्घोंबुमान् भृगुः ॥ उक्तानि त्रीणि बीजानि सद्भिः सारस्वतार्थिना ॥ १ ॥ अंगानि कल्पयद्बीजैर्द्विरुक्तैर्जातिसंयुतैः ।२।मुक्ताहारावदातां शिरसि शशिकलालंकृतां बाहुभिः स्वैर्व्याख्यां वर्णाक्षमालां मणिमयकलशंपुस्तकं चोद्वहंती ॥ आपीनोत्तुंगवक्षोरुहभरविनमन्मध्यदेशामधीशां वाचामीडे चिराय त्रिभुवननमितां पुंडरीके निषण्णाम् ।३। त्रिलक्षं प्रजपेन्मन्त्रं जुहुयात्तद्दशांशतः ॥ पायसेनाज्यसिक्तेन संस्कृते हव्यवाहने ॥ ४ वागीशीं पूजयेत्पीठे विधिनामातृकोदिते ॥ प्राक्प्रस्तुतेन मार्गेण प्रत्यहं साधकोत्तमः ॥ ५ ॥ व्याघातकुसुमैर्हुत्वा वाक्सिद्धिमतुलां लभेत्॥ जातीपुष्पैः सिताम्भोजैःसिक्तैःश्चन्दनवारिणा॥ ६ ॥ नंद्यावर्तैः शुभैः कुंदैर्हुत्वा वाक्सिद्धिमाप्नुयात् ॥ जपन् बीजत्रयं मन्त्री सभायां जयमाप्नुयात् ॥ ७ ॥ सितां वचां वा ब्राह्मीं वा जप्त्वा खादेद्दिनागमे ॥ मेधां कामानवाप्नोति साधकोनात्र संशयः॥८॥एवमुक्तेषुमन्त्रेषु दीक्षितो यतमानसः ॥ एवं यो भजते भक्त्या सभवेद्भुक्तिमुक्तिभाक् ॥ ९ ॥ सुसितैर्गंधकुसुमैः पूजासारस्वते विधौ ॥ दूर्वां बीजांकुरं पुष्पं राजवृक्षसमुद्भवं ॥ १० ॥ उत्पलानि प्रशस्तानिसिंदुवारां कुराणिच ॥ भजन्सारस्वतीं नित्यं एतानि परिवर्जयेत् ॥ ११ ॥ आम्नातं गृंजनं बिल्वं कलं जलशुनं तथा ॥ तैलं

---

वीरजमपास्यति नेत्ररोगमिति । मूत्राशोतिर्थिलक्षं जप्त्वा योंकोष्णसर्पिषा जुहुयात् । अष्टसहस्र वेति संभूतं भव्यं भविष्यच्चेत्यादिकम् । मन्त्रान्तरमुद्धरति तोयस्थमिति । विष्णोःशयनमनन्तआकारः तोयस्थं वकारस्थन्तेनवाचतुर्मुखः खकारं सकेवलः स्वररहितः तेनवाक्त्रयमिवमन्त्रांश इतिकेचित् । तदुक्तं नारायणीये । खड्गीशोयः प्रांशुकः सान्तवेधाः कर्णान्तस्थोयः सदण्डीभुजङ्गः । साभोदन्तोबिंदुमान्योभृगुः स्युर्वागीशोर्थ्याक्षोणिबीजान्यमूनीति । तट्टीकाकारेणवागिति । मन्त्रांश उक्तः । अन्येचतुर्मुखः कंसकेवलबिंदुमात्रंतेनवांएवंसबिंदुकस्यबीजत्वमुपपद्यत इति तेवदन्ति । सम्प्रदायविदस्तु । पूर्वोद्धृतंयद्वाक्पदन्तन्निचितंवाग्भवं बीजमित्याहुः । एवं बीजत्वमप्युपपन्नं सारस्वतं भवति । अन्येतुप्रकारान्तरेण वाग्भवबीजोद्धारं कुर्वन्ति । विष्णोः स्तोयस्थं शयनमाकारः कशब्देन शिरस्तेन अकारः ईतिस्वरूपम् । कीदृक्शयनम् सकं केसहितम् । वलनं वलःसमेलनं तस्मिन्जाते चतुर्मुखः कः तेनशिरः । ततो बिंदुरिति । अर्धीशऊँवन्हीरेफः सद्यः ओकारः अंबुवकारः भृगुःसः सारस्वतार्थिना मित्यनेन विनियोग उक्तः आद्यं बीजम् । अंत्यंशक्तिः पूर्वोक्तमृष्यादिकम् । व्याख्यानमुद्रा पूर्वोक्ता दत्तोर्ध्वमावोर्ध्वपर्यन्तम् । आयुधध्यानं विधिनेति । वक्ष्यमाण श्वेतगंधपुष्पादिना । प्राक्प्रस्तुतेनेति । एकादशाक्षरयुक्त मार्गेण साधकोत्तमः सरस्वत्युपासकसमयस्थ इत्यर्थः । व्याघातोराजवृक्षः आरग्वधो दीर्घफलो व्याघातस्चतुरंगुलइतिकोशः॥१०६॥नंद्यावर्तैःगंधतगरैःशुभैः सुगंधिभिरिति।कुन्दविशेषणं काममत्यर्थम्।दीक्षित इति।ग्रन्थ कृदुक्त प्रकारेणेत्यर्थः॥१०८॥ सारस्वतसमयानाह । सुसितैरिति । बीजांकुरं यवांकुरम् । सिंदुवारोनिर्गुण्डी एतानि वक्ष्यमाणानिभोजने परिवर्जयेत् इति संबंधः आम्रातं अवार इति कान्यकुब्ज भाषायाम् । गृञ्जनंगाजर इति प्रसिद्धम् । कलंजं कृष्णबीजः फलविशेषः कलिंगडा इति गुर्जरभाषायां खर्बूजा इति गौडभाषाया

पलाडुं पिण्याकं शार्ङ्गाष्टमपि भोजने ॥ १२ ॥ सर्वपर्युषितं त्याज्यं सदा सारस्वतार्थिना ॥ नाचरेन्निशितांबूलंस्त्रियंगच्छेद्दिवानच ॥ १३ ॥ नसंध्ययोः स्वपेज्जातुमाशुचिः किंचिदुच्चरेत् ॥ प्रदोषेषु भवेन्मौनी दिग्वस्त्रां न विलोकयेत् ॥ १४ ॥ नपुष्पित स्त्रियं गच्छेन्नानिंदेद्वामलोचनां ॥ नमृषात्वचनं ब्रूयान्नाक्रमेत्पुस्तकं सुधीः ॥ १५ ॥ अक्षराढ्याणि पत्राणि नोपेक्षेत नलंधयेत् ॥ चतुर्दश्यष्टमी पर्वप्रतिपद्ग्रहणेषु च ॥ १६ ॥ संक्रमेषु च सर्वेषु विद्यांनैव पठेद्द्विजः ॥ व्याख्यानेसंत्यजेन्निद्रामालस्यं जृंभणं बुधः ॥ १७ ॥ क्रोधं निष्ठीवनं तद्वन्नीचांगस्पर्शनं तथा ॥ मनुष्यसर्पमार्जारमंडूकनकुलादयः ॥ १८ ॥ अंतरायदिगच्छेयुस्तदाव्याख्यां परित्यजेत्॥निशासु दीपध्वंसेषु पाठं सद्यः परित्यजेत्॥१९॥ ज्ञात्वादोषानिमान्सम्यक्भक्तया योभारतीं यजेत् ॥ वाचांसिद्धिमवाप्नोति वाचस्पतिरिवापरः ॥२०॥श्रीं ह्रीं ॥ इतिश्रीशारदातिलकेसरस्वत्याः सप्तमः पटलः ॥ ७ ॥ ओं ॥ अथ वक्ष्ये श्रियो मन्त्रान् श्रीसौभाग्यफलप्रदान् ॥ यस्याः कटाक्षमात्रेण त्रैलोक्यमपिवर्द्धते ॥ १ ॥ वांतं वन्हिसमारूढं वामनेत्रेंदुसंयुतम् ॥ बीजमेतत् श्रियः प्रोक्तं चिंतामणिरिवापरः ॥ २ ॥ ऋषिर्भृगुर्निचृच्छंदो देवता श्रीः समीरिता ॥ षड्दीर्घयुक्तबीजेन कुर्यादंगानि षट्क्रमात् ॥ ३ ॥ कांत्या कांचनसन्निभांहिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ॥ बिभ्राणांवरमब्जयुग्ममभयं हस्तैः किरीटोज्वलां क्षौमाबद्धनितंबबिंबलसितां वंदे रविंदास्थितां ॥ ४॥

---

रोड इति कान्यकुब्जभाषायां तैलं प्रत्यक्षम् । व्यञ्जनाद्यसंपृक्तम् । शार्ङ्गाष्टं सिंघाड इति कान्यकुब्जभाषायां सांगुष्ट मित्यपपाठः सांगुष्टभोजनस्याविहितत्वात् । यदाह।दानं प्रतिग्रहो होमो भोजनं बलिरेव च । सांगुष्ठेन सदाकार्यमसुरेभ्योन्यथा भवेत् इति । सर्वं पर्य्युषितं घृतपक्वमपि । नचरेन्निशि तांबूलमित्यस्यायमर्थः रात्रौ मुखे तांबूलं धृत्वा नस्वपेदिति । स्मृतिरपि । तांबूलं वदनात्यजेत् इति।दिग्वस्त्रां नग्नां स्वोयामपि।नीचांगानि नाभ्यधोवर्त्तीनि आदिशब्दात्पश्वादयः ॥१२०॥ ॥ इति शारदातिलकटोकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां भूतलिपिमन्त्रकथनं नाम सप्तमः पटलः॥७॥श्रीगणेशाय नमः । अथ प्रकारपंचके केनचित्प्रकारेण मन्त्राणां वक्तव्यत्वे प्राप्ते चशक्तिमन्त्राणां प्रकृतत्वात् शक्तिमन्त्रादित्वेनैव वक्तुमिच्छन् । ब्रह्मशक्तिवाचकान् सरस्वतीमन्त्रानुक्त्वा विष्णुशक्तिवाचकान् लक्ष्मीमन्त्रान् वक्तुमुपक्रमते । अथेति । श्रीसौभाग्येति विनियोगोक्तिः त्रैलोक्यमिति । लक्षणयात्रैलोक्यनिवासिजना उच्यन्ते । यद्विष्णुपुराणं । सश्लाघ्यः सगुणी धन्यः स कुलीनः स बुद्धिमान् । स शूरः स च विक्रान्तो यस्त्वया देविवीक्षितइति । मन्त्रमुद्धरति । वांतं इति । वांतं शः वन्ही रेफः वामनेत्रं ईकारः इंदुः बिंदुः चिन्ता रत्नमिवेत्यनेनैतदुक्तं भवति । प्रणवादित्वं वा । वागादित्वं वा कामादित्वं वा तद्योगे तत्तद्देवतानामुपसर्जनत्वं च । यथा प्रणवादित्वे परमात्मस्वरूपिणी श्रीर्देवता एवं शक्त्यादित्वे शक्तिस्वरूपिणी श्रीर्देवता इत्यादि शकारीबीजम् । ईकारः शक्तिः षट्दीर्घैति क्लीबरहितैः नेत्राभ्यांवौषट् इति पंचमांगे प्रयोगः तेन यत्रयत्र नेत्रद्वयं तत्र तत्रायं प्रयोगो ज्ञेयः तन्त्रान्तरे पंचाङ्गान्युक्तानि महाश्रियै महाविद्युत्प्रभे स्वाहा हृत् । श्रिये-

भानुलक्षं जपेन्मंत्रं दीक्षितो विजितेंद्रियः॥ श्रियमभ्यर्चयन्नित्यं सुगंधिकुसुमादिभिः ॥ ५॥ तत्सहस्रं प्रजुहुयात्कलशैर्मधुरोक्षितैः ॥ जपांतेजुहुयान्मंत्री तिलैर्वामधुराप्लुतैः ॥ ६ ॥ बैल्वैः फलैर्वाजुहुयात्त्रिभिर्वा साधकोत्तमः ॥ अत्र सम्यग्यजेत्पीठं नवशक्तिसमन्वितम् ॥७॥ विभूतिरुन्नातिःकांतिः सृष्टिः कीर्तिश्चसन्नातिः॥ पुष्टिरुत्कृष्टिऋद्धिश्च संप्रोक्ता नवशक्तयः ॥८॥ अत्रावाह्य यजेद्देवीं परिवारसमन्वितां ॥ बीजाढ्यमासनंदत्वा मूर्तिं मूलेन कल्पयेत् ॥ ९ ॥ यजेत्पूर्ववदंगानि दिग्दलेष्वर्चयेत्ततः ॥ वासुदेवं संकर्षणंच प्रद्युम्नमनिरुद्धकम्॥१०॥ हिमपीततमालेंद्रनीलाभान्पीतवाससः ॥ शंखचक्रगदापद्मं धारिणस्तान् चतुर्भुजान् ॥ ११ ॥ विदिग्दलेषु पत्रेषु दमकादीन्यजेद्गजान् ॥ दमकं सलिलं चैव गुग्गुलं च कुरुंडकम् ॥१२॥ जपेच्छंखनिधिं देव्या दक्षिणे दयितान्वितां ॥ मुक्तामाणिक्यसंकाशौ किंचित्स्मितमुखांबुजौ॥अन्योन्यालिंगनपरौ शंखपंकजधारिणौ॥वित्नसद्रत्नवर्षाभ्यांशंखाभ्या परिलांच्छितौ१४ तुंदिलं कंबुकनिधिं वसुधारां घनस्तनीं ॥ वामतः पंकजानिधिं प्रिययासहितं यजेत् ॥१५॥ सिंदूराभौ भुजाश्लिष्टौ रक्तपद्मोत्पलान्वितौ ॥ निःसरद्रत्नधाराभ्यां पद्माभ्यां मूर्ध्निलांछितौ ॥ १६ ॥ तुंदिलं पंकजानिधिं तन्वीं वसुमतीमिव ॥ दलाग्रेषु यजेदेतान्बलाकाद्याः समंततः ॥ १७ ॥ बलाकी विमलाचैव कमला नवमालिका ॥ विभीपिकामालिका च शांककरी वसुमालिका ॥ १८ ॥ पंकजद्वयधारिण्यो मुक्ताहारसमप्रभाः ॥ लोकेशान् पूजयेदंते वज्राद्यस्त्राणि तद्बहिः ॥ १९ ॥ इत्थं यो भजते देवींविधिना साधकोत्तमः ॥ धनधान्यसमृद्धिः स्याच्छ्रियमाप्नोत्यनिंदितां ॥ २० ॥ वक्षः प्रमाणे सलिले स्थित्वा मन्त्रमिमं जपेत् ॥

---

विजये स्वाहा शिरः गौरि महाबले बंध २ स्वाहा शिखा । धृतिस्वाहा वर्ममहाकाये पद्महस्ते हुंफडिति। कल्यांतरेतु श्रियै स्वाहा हृत्। श्रीं फट शिरः श्रीं नमः शिखा श्रियै प्रसीद नमोवर्म श्रीं फट् अस्त्रमिति। पंचांगं । उक्तंच नारायणीये । अस्यांगानि द्विधोक्तानि तयोरेकं समाश्रयेत् इति। क्रमादित्यनेन शक्त्यादियोगेन दीर्घप्रयोगः प्रणवादित्वे तद्योग इति सूचितम् । कांत्येति। हिमगिरीति उज्वलं श्वेत्यं च अरविंदेति श्वेतम्। इदं सर्वं श्रीमन्त्रे ज्ञेयम्। वामाधस्ताद्दृत्वाधस्तनं यावदायुधध्यानम्। तदुक्तं नारायणीये। चतुर्भुजां सुवर्णाभां सपद्मोर्ध्वभुजद्वयाम् । दक्षिणाभयहस्तां तां वामहस्तवरप्रदामिति। अत्र ध्यानानन्तरं लक्ष्मीमुद्रा दर्शनीया।वक्रमुद्रां तथा बध्वा मध्यमे द्वे प्रसार्यच। कनिष्ठिके तथानीय तदग्रे गुष्टकौ क्षिपेत्। लक्ष्मीमुद्रा परा ह्येषा,सर्वसंपत्प्रदायिकेति इयं सर्वलक्ष्मीमंत्रसाधारणीति ज्ञेयम्॥४॥भानुलक्षं मंत्रीत्यनेन नारायणाष्टाक्षरस्य शेषतया दशांशजप उक्तः अतएव वक्ष्यति। विष्णुभक्तो दृढव्रत इति । जपांत इत्यनेन जपाव्यवधानेन तन्नियमस्थेन होमः कार्य इत्युक्तं भवति। त्रिभिर्वेति । समुच्चितश्चतुर्थः पक्षः तत्राप्येकैकेन द्रव्येण सहस्रचतुष्कं होतव्यं। अथ च त्रिभिः साधकोत्तमो जुहुयादित्यनेन कमलवासिनी महालक्ष्मी श्रीसूक्तैः सकृत्सकृद्धुत्वा पश्चान्मूलेन होतव्यमित्युक्तं भवति । साधकोत्तम इति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते। साधकोत्तमोत्र सम्यगित्यनेनैतत्सूचितं भवति। श्रीपूजायां मण्डूकादि-

त्रिलक्षं संयतो मन्त्री देवीं ध्यात्वार्कमण्डले ॥ २१ ॥ सभवेदल्पकालेन रमायावसतिः स्थिरः ॥ विष्णुगेहस्थविल्वस्य मूलमास्थायमन्त्ववित् ॥ २२ ॥ त्रिलक्षं प्रजपेन्मंत्रं वांच्छितं लभते धनम् ॥ अशोकवन्हौ जुहुयात्तंडुलैराज्यलोलितैः ॥ २३ ॥ वशयत्यचिरादेव त्रैलोक्यमपिमंत्रवित् ॥ जुहुयात्तंडुलैः शुद्धैरर्काग्नौ नियुतं वशी ॥ २४ ॥ राज्यश्रियमवाप्नोतिराजपुत्रो महीयसीं ॥ जुहुयात्खादिरे वन्हौ तंडुलैर्मधुरोक्षितैः ॥ २५ ॥ राजा वश्यो भवेच्छीघ्रं महालक्ष्मीश्च वर्द्धते ॥ बिल्वच्छायामधिवसन् बिल्वमिश्रह विष्यभुक् ॥ २६ ॥ संवत्सरद्वयं हुत्वा तत्फलैरथवांबुजैः ॥ साधकेंद्रो महालक्ष्मीं चक्षुषा पश्यति ध्रुवं ॥ २७ ॥ हविषा घृतासिक्तेन पायसेन ससर्पिषा ॥ हुत्वा श्रियमवाप्नोति नियुतं मंत्रवित्तमः ॥ २८ ॥

---

परतत्त्वांतं चतुर्थपटलोक्तरीत्याऽभ्यर्च्य श्रीबीजाद्यानवपीठशक्तयः प्रागादिदिक्षु मध्ये च पूज्याः अत्रेत्यष्टपत्रे श्रोबीजकर्णिके। तदुक्तंपद्मपादाचार्यैःरुचिराष्टपत्रमथवारिरुहमिति । पद्मपादाचार्यैर्व्याख्यातम्। श्रीबीजयोगः कर्णिकायां रुचिरत्वमिति संहितायामपि । अष्टपत्रं लिखेद्यंत्रं बहिर्भूबिंबभूषितम्। मध्येबीजं विनिक्षिप्येति। पीठमंत्रमुद्धरति। बीजाद्यमिति । श्रीं सर्वशक्तिकमलासनाय नम इति अयं पीठमंत्रः सर्वश्रीमंत्रसाधारण इति ज्ञेयम्। पद्मपादाचार्यैस्तु श्रीं श्रीदेव्यासनाय नमः श्रीं श्रीदेवीमूर्त्तये नम इतिपीठमूर्त्तिमंत्रावुक्ता । अत्र पद्मं श्वेतं ध्येयम् । तदुक्तं प्रयोगसारे। संकल्पांभोरुहं शुभ्रं कर्णिकायां यजेच्छ्रियमिति । पुरोवदति चतुर्थपटलोक्तरीत्या केसरेषु वासुदेवादीनामायुधध्यानम्। नारायणमंत्रे मदुक्तमनुसंधेयम् । विदिग्गतेष्विति कल्प्यदिगपेक्षया। यत्तुनारायणीये। अग्नेयादिषु पत्रेषु गुग्गुलुश्च कुरंटकः दमकः सलिलश्चेति हस्तिनो रजतप्रभाःहेमकुम्भधरा ध्येया इति तत्र प्रसिद्धा ग्नेयदिशमंगीकृत्येत्यवधेयम् । देव्या दक्षिणे वामत इति कर्णिकायाः। मुक्तामाणिक्येति । क्रमेण शंखनिधिवसुधारयोर्वर्णौ शंखपंकजधारिणावित्युभयत्र। एवमग्रेपि । आयुधध्यानमेषां दद्यादि कंबुकंशंखनिधिम् । वसुधारमिति । शंखनिधिशक्तिनाम। घनस्तनीमित्यंतं पूर्वं ध्यानम्। पंकजनिधिंपद्मनिधिं वसुमतीमिति । पंकजनिधिशक्तिनाम। अपिशब्दाद्यं घनस्तनीमित्यपि। एतदंतं द्वितीयावरणमूर्त्तीः चतुष्कनिधियुगैरपरेत्युक्तः बलाकीमिति आसां ध्यानं नारायणीयेबलाकी वामनां श्यामां श्वेतपंकजधारिणींऊर्ध्ववाहुद्वयांध्यायेत् श्रीदूतीं द्वारिपूर्वतःउर्ध्वीकृतेन हस्तेन रक्तपंकजधारिणीम्श्वेतांगीं दक्षिणद्वारि चिंतयेद्वनमालिकां। हरितांदोर्द्वयेनोर्ध्वमुद्वहन्तीं सितांबुजम्ध्यायेद्विभीषिकांनाम श्रीदूतीं द्वारिपश्चिमेतथाब्जमालाधृक् ध्येया चौद्राभान्यत्रशांकरीति।प्रयोगसारेविमलाकमला वाथ मालिका नवमालिका बाह्ये ।विदिक्षु संपूज्या दूतीरेता इति।अत्र तु कमला नवमालिकयोर्व्यत्यासः कल्पान्तरत्वेन समाधयःविधिना साधकोत्तम इत्यनेनावाहनादिश्लोकेषु स्त्रीलिंगयोग उक्तः संयतो मंत्रीत्यनेन श्रीं रत्नगर्भायै नम इति मंत्रस्य शतांशेनजपः सूचितःध्यात्वार्कमंडलेत्यत्रा भयवरदाभ्यां निधिपात्ररत्नकुंभधराभ्यां रक्ता ध्येयेति ज्ञेयं।तदुक्तं स्तनमात्रे जले तिष्ठन् रविमंडलपीठगां।नवपावक संकाशां श्रियं माणिक्यभूषणांनिधिपात्रमहारत्नपूर्णकुंभकरद्वयां त्रिलक्षजापी संचित्यनचिरात्स्याद्ध-

मधुरोक्तारुणांभोजैर्जुहुयाल्लक्षमादरात् ॥ नमुंचति रमा तस्य वंशमाभूतसंप्लवम् ॥ २९ ॥ वाग्भवं वनिता विष्णोर्मायामकरकेतनः॥चतुर्बीजात्मको मन्त्रश्चतुर्वर्गफलप्रदः ॥ ३० ॥ अंगानि कुर्याद्दीर्घाढ्यरमाबीजेन मन्त्रवित् ॥ माणिक्यप्रतिमप्रभा हिमनिभैस्तुंगैश्चतुर्भिर्गजैर्हस्ताग्राहितरत्नकुंभसलिलैरासिच्यमानां मुदा ॥ हस्ताब्जैर्वरदानमंबुजयुगाभीतिर्दधानां हरेः कांतां कांक्षितपारिजातलतिकां वंदे सरोजासनां ॥ ३१ ॥ भानुलक्षं हविष्याशी जपेदंते सरोरुहैः ॥ जुहुयादरुणैः फुल्लैः तत्सहस्रं जितेन्द्रियः ॥ ३२ ॥ रमायाः कल्पिते पीठे तद्विधानेन पूजयेत् ॥ कुर्य्यात्प्रयोगांस्तत्रस्थान्मनुना तेन साधकः ॥ ३३ ॥ निधिभिः सेव्यते नित्यं मूर्तिमद्भिरुपासितैः ॥ दीर्घा यादिर्विसर्गांतो ब्रह्मा भानुर्वसुंधरा ॥३४॥ वांते सिन्यै प्रियावन्हेर्मनुप्रोक्तो दशाक्षरः ॥ ऋषिर्दक्षो विराट्छंदो देवता श्रीः समीरिता ॥ ३५ ॥ देव्यै हृदयमाख्यातं पद्मिन्यै शिरईरितं॥विष्णुपत्न्यै शिखाप्रोक्ता वरदायै तनुच्छदम् ॥३६॥ अस्त्रं कमलरूपायै नमोंताः प्रणवादिकाः ॥ अंगमंत्राः समुद्दिष्टा ध्यायेद्देवीमनन्यधीः ॥३७॥

---

नेश्वर इति। अशोकवन्हाविति।अशोककाष्टसमिद्धेग्नावित्यर्थः।जुहुयादिति।नियुतमिति संबध्यते।मंत्रविदित्यनेनात्र प्रयोगेकामादित्वं सूचितं।शुद्धैरित्यवकरंदूरीकृत्य प्रक्षाल्यशोषितैरित्यर्थः।आज्यलोलितैरित्यत्रापि योज्यं अर्काग्नावर्ककाष्टसमिद्धेग्नावित्यर्थः नियुतं लक्षं। तथाचश्रुतिः। एका च सहस्रं चार्बुदं च समुद्रं च मध्यश्चांतश्च परार्द्धश्चेति त्रिकांडेऽपि कोट्याशतादिसंख्यान्या वा लक्षानियुतं चतदिति। जुहुयाल्लक्षमिति संबध्यते। खादिर इति। खदिरकाष्टेधिने शीघ्रमित्यनेनात्रापि कामयोगः सूचितः हुत्वेत्यष्टोत्तरं सहस्रं तत्फलैर्बैल्वैः अंबुजैरिति तदभावे हविषेति चरुणा मधुरेति। तत्र ध्यानविशेषस्तंत्रांतरे। दधतीं मातु लिंगंच निधिपात्रं सरोरुहैः। रक्तां सुरतरोर्मूले संस्थितां शोभनां श्रियं। अलंकृतां महारत्नैर्ध्यात्वारक्तांबरान्वितां। जुहोति लक्षं स्वाहक्तैः सरोजैरिंदिरामय इति। आभूतसंप्लवमाकल्पं ॥ २९ ॥ मंत्रांतरमुद्धरति। वाग्भवमिति। विष्णोर्वनिता श्रीं बीजं मकरकेतनः कामबीजं चतुर्वर्गफलावह इत्यनेन विनियोगं वदति तदुक्तं भवतिधर्मार्थंवाग्भवादित्वं अर्थार्थं लक्ष्मीबीजादित्वं मोक्षार्थं मायाबीजादित्वमिति। पूर्वोक्ता ऋष्याद्याः द्वितीयंबीजंतृतीयं शक्तिः अंगानीति दीर्घाद्यं षट्दीर्घयुक्तं यद्रमाबीजं श्रीबीजं तेनेत्यर्थः हस्ताब्जैरिति। उपमितसमासः। वरदानमित्येकं आयुधध्यानं पूर्ववत्। मंत्रांतरमाह। प्रणवोत्थकलासु दीर्घानकारशक्तिः यादिर्मः सविसर्गांतः सविसर्ग इति मकारविशेषणं। ब्रह्माकः भानुर्मकारःअत्र आत्मारविः स्मृत इत्युक्तेः यथा महाकालो मकारमूर्त्तिः महाकालशब्दवाच्यं विषं च तद्दक्षिणनासापुटगतं। तेनादित्योमः। तदुक्तं। रविं पिंगलायां चरत्येष तस्माद्विषं दक्षिणेभागउक्तं मुनींद्रैरिति तेन यत्रक्वचिदपि विषशब्देन मकारोगृह्यते तदपि व्याख्यातं।वसुंधरा लः वास्वरूपं सिन्धेस्वरूपं वह्नेः प्रिया स्वाहा। अस्मिन्नपि मंत्रे प्रणवशक्ति वाक्कामादित्वमितिपद्मपादाचार्याः। पूर्ववत्तद्देवतानामुपसर्जनत्वं च श्रींबीजं स्वाहा शक्तिः ॥ ३५ ॥ पंचांगमंत्रानाह। देव्यैइति। ॐ देव्यै नमः हृदयाय नमइत्यादि प्रयोगः पंचांगत्वान्नेत्राभावः ॥ ३७ ॥ आसीनेति। दामं वरं आयुधध्यानंतुपूर्व-

ध्यानम् ॥ आसीना सरसीरुहे स्मितमुखी हस्तांबुजैर्बिभ्रती दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा ॥ मुक्तादामविराजमानपृथुलोत्तुंगस्तनोद्भासिनी पायाद्वः कमलाकटाक्षविभवैरानंदयंतीहरिम् ॥३८॥ दशलक्षंजपेन्मन्त्रंमन्त्रविद्विजितेन्द्रियः॥दशांशं जुहुयान्मन्त्रान्मधुराक्तैः सरोरुहैः ॥ ३९ ॥ श्रीपीठे पूजयेद्देवीं अंगानि प्रथमं यजेत् ॥ बलाकाद्यास्ततः पूज्या लोकेशास्त्रवृतीरपि ॥ ४० ॥ इति सम्पूजयेद्देवीं सम्पदामालयो भवेत् ॥ समुद्रगायां सारीति कण्ठगात्रे जले स्थितः ॥ ४१ ॥ त्रिलक्षं प्रजपेन्मंत्री साक्षाद्वैश्रवणो भवेत् ॥ आराध्योत्तरनक्षत्रे देवीं स्रक्चन्दनादिभिः ॥ ४२ ॥ नन्द्यावर्तभवैः पुष्पैः सहस्रं जुहुयात्ततः ॥ पौर्णमास्यां फलैर्बैल्वैर्जुहुयान्मधुराप्लुतैः ॥ ४३ ॥ पञ्चम्यां विंशदंभोजैः शुक्रवारे सुगंधिभिः॥अन्यैर्वाविशदैः पुष्पैः प्रतिमासंविशालधीः ॥ ४४ ॥ सभवेदब्दमात्रेण सर्वदा संपदां निधिः ॥ वाग्भवं शंभुवनिता रमा मकरकेतनः॥ तार्तीयं हि जगत्पार्श्वोवीन्हबीजसमुज्वलः ॥ ४५ ॥ अर्धीशाद्योभृगुस्त्यैत्द्वत् मन्त्रो यंद्वादशाक्षरः ॥ महालक्ष्म्याः समुदिष्टः ताराद्यः सर्वसिद्धिदः ॥ ४६ ॥ ऋषिर्ब्रह्मा समुदिष्टः छन्दो गायत्रमीरितम् ॥ देवता जगतामादिर्महालक्ष्मीः समीरिता ॥ ४७ ॥ हस्तौ संशोध्य मन्त्रेण तारादित्द्दयांतिकम् ॥ बीजानां पञ्चकंन्यस्येदंगुलीषु यथाक्रमम् ॥४८॥ मन्त्रशेषं न्यसेन्मन्त्री तलयोरुभयोरपि॥मूर्धादि चरणं यावत् मंत्रेण व्यापकंन्यसेत्॥४९॥मूर्धादि वक्षौ गुह्याग्रौपञ्चबीजातिविन्यसेत्।शेषान्न्यसेत्सप्तवर्णानत्द्दयेसप्तधातुषु॥५०॥ अंगानि पञ्चभिर्बीजैरस्त्रं शिष्टाक्षरैर्भवेत्॥ज्ञानैश्वर्या दिभिर्युक्तैश्चतुर्थ्यन्तैः सजातिभिः ॥ ५१ ॥ ज्ञानैश्वर्यशक्ती च बलवीर्ये सतेजसी । ज्ञानैश्वर्यादयः प्रोक्ताः षट्क्रमादङ्गदेवताः ॥ ५२ ॥ एवं न्यस्तशरीरोसौ स्मरेदुद्यानमुत्तमम् । चंपकाशोकपुंनागपाटलैरुपशोभितम् ॥ ५३ ॥ लवंगमालतीबिल्वदेवदारुनमेरुभिः । मन्दारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ॥ ५४ ॥ चन्दनैः कर्णिकारैश्च मातुलिंगैश्च वंजुलैः दाडिमीलकुचां कोलैः पूगै कुरवकैरपि ॥ ५५ ॥ कदली कुन्दमन्दारनालिकेरैरलंकृतैः। अन्यैः सुगन्धिपुष्पाद्यैर्वृक्षसंघैश्च मण्डितम् ॥ ५६ ॥ मालती मल्लिका जाती केतकी शतपत्रकैः । पारन्ती तुलसी नन्द्यावर्तैर्दमनकैरपि ॥ ५७ ॥ सर्वर्तुकुसुमोपेतैर्नमद्भिरुपशोभितम्। मन्दमारुतसंभिन्नकुसुमामोदिदिङ्मुखम् ॥ ५८ ॥ तस्य मध्ये सदोत्फुल्लैः कुमुदोत्पलपंकजैः। सौग-

---

वत् मंत्रविदित्यनेन नारायणाष्टाक्षरस्य शेषतया दशांशजपः दशांशेन रत्नगर्भजपोपि सूचितः मधुरं त्रिमधुरं संपदामिति अनेन विनियोगोक्तिः समुद्रगायामिति। साक्षादिति शेषः वैश्रवणः कुबेरः आराध्येत्यादि संपदांनिधिरित्येकः प्रयोगः उत्तरानक्षत्र इति। उत्तरात्रयमपि ज्ञेयं। आराध्येति। सहस्रमिति च सर्वत्र संबध्यते। मधुरालुलितैस्त्रिमधुरार्द्रैरिति। अन्यैर्वेति वा शब्दार्थः समुच्चये। एकत्रोभयसंन्निपाते पृथगुभयहोमो न तंत्रं भिन्नद्रव्यत्वात् भिन्ननिमित्तत्वाच्च । मंत्रांतरमाह। वाग्भवमिति। शंभु वनिता माया बीजं॥ तार्त्तीयं बालायाः भर्व्यावार्कचिंद्रे पहीनं भेरव्याद्वति वदंति। अयमेव सांप्रदायिकः पक्ष जगत्स्वरूपं। पार्श्वः पकारः वन्हिबीजसमुज्वलः रेफ

न्धिकैश्च कल्हारैर्नवैः कुवलयैरपि ॥ ५९ ॥ हंससारसकारंडभ्रमरैश्चक्रनामाभिः ॥ अन्यैः कलकलारावैर्विहगैरुपशोभितम्॥६०॥महासरासि तन्मध्ये पुलिनेतिमनोहरे॥ परितः परिजाताद्यंमण्डपंमाणिकुट्टिमम् ॥ ६१ ॥ उद्यदादित्यसंकाशंभास्वरं शशिशीतलम् ॥ चतुर्द्वारसमायुक्तहैमप्राकारशोभितम् ॥ ६२ ॥ रत्नोपक्लृप्तिसंशोभि कपाटाष्टकसंयुतम् ॥ नवरत्नसमाक्लृप्तं तुंगगोपुरतोरणम् ॥ ६३ ॥ हेमदण्डिसमालम्बि ध्वजावालिपरिष्कृतम् ॥ नवरत्नसमाबद्धस्तंभराजिविरा जितम्॥६४॥ सहस्रदीपसंयुक्तदीपदण्डविराजितम् ॥ तप्तहाटकसंक्लृप्तवातायनमनोहरम्॥६५॥ नानावर्णांशुकोद्बद्धसुवर्णशतकोटिभिः॥किंकिणीमाल्लिकायुक्त पताकाभिरलंकृतम् ॥ ६६ ॥ जातरूपमयैरत्नविचित्रैरतिविस्तृतैः माणिक्यरत्नैर्वैदूर्यैस्वर्णमालावलीयुतैः ॥ ६७ ॥ अंतरांतरसम्बद्धरत्नैर्दृष्टिमनोहरैः ॥ विचित्रैश्चित्रवर्णैश्च वितानैरुपशोभितम् ॥ ६८ ॥ सर्वरत्नसमायुक्तं हेमकुट्टिमपुज्वलम् ॥ केतकीमालतीजातीचंपकोत्पलकेसरैः ॥ मल्लिकातुलसीजातीनंद्यावर्तकदम्बकैः ॥ एतैरन्यैश्च कुसुमैरलंकृतमहीतलम् ॥ ७० ॥ अम्बुकाश्मीरकस्तूरीमृगनाभितमालकैः ॥ चंदनागरुकर्पूरैरामोदितदिगंतरम् ॥७१ ॥ एवं संचित्य मनसा मण्डपं सुमनोहरम् ॥ तन्मध्ये भावयेन्मन्त्री पारिजातं मनोहरम् ॥ ७२ ॥ तस्याधस्तात्स्मरेन्मन्त्री रत्नसिंहासनं शुभम् ॥ तस्मिन्संचिंतयेद्देवीं महालक्ष्मीं मनोरमां ॥ ७३ ॥ बालार्कद्युतिमिंदुखण्डविलसत्कोटीरहारोज्वलां रत्नाकल्पविभूषितां कुचनतां शालैः करैर्मंजरीं ॥ पद्मे कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सस्मितां फुल्लांभोजविलोचनत्रययुतां ध्यायेत्परां देवतां ॥ ७४ ॥ सिंजन्मंजीरसंशोभिपदांभोजविराजितां ॥ नवरत्नगणाकीर्णकांचीदामाविभूषितां ॥ ७५ ॥ मुक्तामाणिक्यवैदूर्यसंबद्धोदरबंधनां ॥ विभ्राजमानां मध्येन वलित्रितयशोभितां ॥ ७६ ॥ जान्हवीसरिदावर्तशोभिनाभिविभूषितां ॥ पाटीरपंक कर्पूरकुंकुमालंकृतस्तनीम् ॥ ७७ ॥ वारिवाहविनिर्मुक्तमुक्तादामगरीयसीं ॥ वहंतीमुत्तरासंगं दुकूलपरिकल्पितां ॥ ७८ ॥ तप्तकांचनसन्नद्धवैदूर्यांगदभूषणां ॥ प-

---

युक्तः तेनप्रत्यर्घोंश उ। तेनाद्यो भृगुः सकारस्तेनस्। त्वे स्वरूपं हृन्नमः ताराद्यः त्रयोदशाक्षर इति शेषः सर्वसिद्धिद इत्यनेन विनियोग उक्तः प्रणवो बीजं तार्तीयं शक्तिः। हस्तभावनामाह । हस्तौ संशोध्येति। हस्तयोर्मूलमंत्रं व्यापकत्वेन विन्यसेदित्यर्थः मंत्रेणेति। मूलमंत्रेणताराद्दिहृदयांतिकमिति मंत्रविशेषणं यथाक्रममंगुलीष्विति। अंगुष्टाद्यासु मूर्द्धादिष्वित्यत्रापि न्यासे ताराद्दिहृदयांतिकमिति संबध्यते। अंगानीत्यत्रापि॥ ज्ञानैश्वर्यादिभिर्युक्तैरिति। व्यधिकरणे तृतीये। चतुर्थ्यंतैर्ज्ञानैश्वर्यादिभिर्युक्तैरितिबीजैः शिष्टाक्षरैरित्युभयत्र विशेषणं। अंगानीति नेत्रांतानि। ऐं ज्ञानाय हृदयायनमः श्रीं ऐश्वर्याय शिरसे स्वाहा इत्यादि प्रयोगः केचनसंप्रदायादात्मने शब्दमध्याहुः तन्मते ए ज्ञानात्मने हृदयाय नम इत्यादि प्रयोगः। नमेरुरुद्राक्षः तस्य महासरसि तन्मध्येपुलिने मनसा। मंडपं संचिंत्य तन्मध्ये पारिजातं भावयेत् इति संबंधः नानावर्णांशुकेनेति। पताकाविशेषणं। जातरूपमयैरित्यादि वितानैरित्यस्यविशेषणं। अथ च पृथिव्यनंतरं क्षीरसिंधुं द्वीपं उद्यानं

अरागस्फुरद्वर्णकंकणाढ्यकरांबुजां ॥ ७९ ॥ माणिक्यशकलाबद्धमुद्रिकाभिरलंकृतां ॥ तप्तहाटकसंक्लृप्तमालग्रैवेयशोभितां ॥ ८० ॥ विचित्रविविधाकल्पकंबुसंकाशकंधरां ॥ उद्यद्दिनकराकारमणिताटंकमण्डितां ॥ ८१ ॥ रत्नांकितलसत्स्वर्णकर्णपूरोपशोभितां ॥ जपाविद्रुमलावण्यललिताधरपल्लवं ॥ ८२ ॥ दाडिमीफलबीजाभदंतपंक्तिविभूषिताम् ॥ कलंककार्श्यनिर्मुक्तशरच्चंद्रनिभाननां ॥ ८३ ॥ पुंडरीकदलाकारनयनत्रयसुंदरीं ॥ भ्रूलताजितकंदर्प करकार्मुकाविभ्रमां ॥ ८४ ॥ विलसत्तिलपुष्पश्रीविजयोद्यतनासिकां ॥ ललाटकांतिविभवविजितार्द्धसुधाकरां ॥ ८५ ॥ सांद्रसौरभसंपन्नकस्तूरीतिलकांकितां ॥ मत्तालिमालाविलसदलकाढ्यमुखांबुजां ॥ ८६ ॥ पारिजातप्रसूनश्रीवाहिधम्मिल्लबंधनां ॥ अनर्घ्यरत्नघटितमुकुटांकितमस्तकां ॥ ८७ ॥ सर्वलावण्यवसतिं भवनं विभ्रमश्रियः ॥ तेजसां जन्मभूमिं तां महालक्ष्मीं मनोहरां ॥ ८८ ॥ एवं संचिंत्य यो देवीं हविष्याशी जितेंद्रियः ॥ भानुलक्षं जपेन्मंत्रं दशांशं जुहुयाद्घृतैः ॥ ८९ ॥ जुहुयाच्छ्रीफलैः पद्मैः प्रत्येकमयुतं ततः ॥ तर्पयेत्सलिलैः शुद्धैः सुगंधिरयुतद्वयम् ॥ ९० ॥ श्रीबीजस्योदिते पीठे महालक्ष्मीं प्रपूजयेत् ॥ श्रीबीजेनासनं दद्यान्मूर्तिं मूलेन कल्पयेत् ॥ ९१ ॥ पूजयेद्दक्षिणे पार्श्वे देव्याः शंकरनंदनम् ॥ अन्यतः पुष्पधन्वानं पुष्पांजलिकरं यजेत् ॥ ९२ ॥ अंगानि पूर्वमुक्तेषु स्थानेषु विधिवद्यजेत् उमाद्याः पत्रमध्यस्थाः शक्तीरष्टौ यजेत्क्रमात्॥९३॥अथोमाश्रीसरस्वत्यौ दुर्गाधरणिसंयुता ॥ गायत्री देव्युषा चैव पद्महस्ताः सुभूषणाः॥९४॥जन्हुसूर्यसुते पूज्ये पादप्रक्षालनोद्यते॥शंखपद्मनिधी पूज्यौपार्श्वयोर्धृतचामरौ॥९५॥धृतातपत्रंवरुणंपूजयेत्पश्चिमेततः॥संपूज्य राशीन्परितो यजेदथनवग्रहान्॥९६॥अर्चयेद्दिग्गजान् दिक्षु चतुर्दंतविभूषितान्॥ ऐरावतः पुंडरीको वामानः कुमुदोंजनः ॥ ९७ ॥ पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ अभ्यर्चयेदथेंद्रादीन् तदस्त्राणि बहिर्यजेत् ॥ ९८ ॥ आगमोक्तेन विधिना सुगंधैः सुमनोहरैः ॥ पूजयेद्गंधपुष्पाद्यैर्देवीमन्वहमादरात् ॥ ९९ ॥ दूर्वाभिराज्यसिक्ताभिर्जुहुयादायुषे नरः ॥ दशरात्रं समिद्धेग्नौ अष्टोत्तरसहस्रकम् ॥ १०० ॥ गुडूचीराज्यसंसिक्तां जुहुयात्सप्तवासरम् ॥ अष्टोत्तरसहस्रं यः सजीवेच्छरदां शतम् ॥ १ ॥ हुत्वातिलान् घृताभ्यक्तान्दीर्घमायुरवाप्नुयात् ॥ आरभ्यार्कदिने मंत्री दशरात्रं दिनेदिने॥२॥ आज्याक्तार्कसमिद्धोमादारोग्यं लभते ध्रुवं ॥ कंठमात्रोदके स्थित्वा ध्यात्वा देवीं दिवाकरे ॥ ३ ॥ ऊर्ध्वबाहुर्दशशतं अष्टोतरमिमं हुनेत् ॥ आरोग्यं लभते सद्यो वांच्छितान्यपि मन्त्रावित्॥४॥ शालीभिर्जुह्वतो नित्यमष्टोतरसहस्रकम् ॥ अचिरादेव महती लक्ष्मीः संजायते ध्रुवं ॥ ५ ॥ प्रसूनैर्जुहुयान्मंत्री लक्ष्मीव-

---

महासरः नलिनं मंडपं पारिजातं रत्नसिंहासनं पूजयेत्। ग्रैवं समानं। कुट्टिममिति। कुट्टिमोस्त्रीनिबद्धाभूरितिकोशः। वासाअररूषः अंबुसुगंधिद्रव्यं। कुमकुमादृति कान्यकुब्जभाषायां कस्तूरी मृगस्यनाभिरिति विग्रहः एवं संचिंत्य मनसामंडपमिति। पूर्वमंडपमित्युक्तं तस्यैवानुवादः तन्मध्ये पूज्यस्य विशेषणैर्व्यवहितत्वेन संबंधस्य बुद्धिस्थत्वात्। कोटीरो मुकुटः आयुधध्यानं तु पूर्ववत्। पा-

ल्लीसमुद्भवैः ॥ नंद्यावर्तसमुत्थैश्च सिद्धार्थैश्च घृतप्लुतैः ॥ ६ ॥ महतीं श्रियमाप्नोति मान्यते सर्वजंतुभिः ॥ मरीचै र्जीरकोन्मिश्रैर्नारिकेलिरजाप्लुतैः ॥ ७ ॥ सगुडैराज्यसंपक्वैरपूपैराज्यलोलितैः ॥ जुहुयात्पायसाहारो मन्त्रविद्विजितेंद्रियः॥८॥अष्टोत्तरशतं नित्यं मण्डलाद्धनदोभवेत् ॥ हविषागुडमिश्रेण जुहुयादर्थवान् भवेत् ॥ ९ ॥ जपापुष्पाणिजुहुयादष्टोत्तरसहस्रकम् ॥ गृहीत्वा प्रजपेद्भस्मनागवल्लीसमन्वितम् ॥ १० ॥ तिलकं तनुयात्तेन सर्ववश्यकरं भवेत् ॥ ब्रह्मवृक्षसमित्पुष्पैर्ब्राह्मणान्वशयेद्वशी ॥ ११ ॥ जातीपुष्पैश्चराजानं वैश्यान् रक्तोत्पलैः शुभैः ॥ शूद्रान्नीलोत्पलैर्हुत्वा वशयेन्मंत्रविन्नरः ॥ १२ ॥ पुष्पैर्मधूकजैर्हुत्वा वशमानयति स्त्रियः ॥ कृत्वा नवपदात्मानं मण्डलं यन्त्रभूषितम् ॥ १३ ॥ अभिषेकं प्रकुर्वीत विधिना सर्वसिद्धये ॥ कलशान्स्थापयेत्तेषु पदेषु शुभलक्षणान् ॥ १४ ॥ चंदनालिप्तसर्वांगान् दूर्वाक्षतसमन्वितान ॥ दुकूलवेष्टितानेतान्पूरयेत्तीर्थवारिणा ॥ १५ ॥ नवरत्नसमाबद्धं कर्षकांचनकल्पितम् ॥ मध्यकुंभेक्षिपेत्पद्मं यन्त्राढ्यं देशिकोत्तमः ॥ १६ ॥ चंदनोशीरकर्पूरजातीकंकोलकुंकुमम् ॥ कुष्ठागरुतमालैलायुतं संपिष्यभागतः ॥ १७ ॥ विलोड्य सर्वकुंभेषु रत्नान्यपि विनिक्षिपेत् ॥ लक्ष्मी दूर्वा सदाभद्रा सहदेवी मधुव्रता॥१८॥ मुशली शक्रवल्लीच क्रांताऽपामार्गपत्रकान् ॥ प्रियंगुमुद्गगोधूमव्रीहींश्च सतिलान्यवान् ॥ १९ ॥ शालितंडुलमाषांश्च प्रक्षाल्यैतेषु निक्षिपेत् ॥ धात्रीलकुचबिल्वानां कदलीनालिकेरयोः ॥ २० ॥ फलान्यपिविनिक्षिप्यपुष्पाण्येतानि निक्षिपेत् ॥ पद्मं सौगंधिकं जातिं मल्लिकां बकुलं तथा ॥ २१ ॥ पञ्चकाशोकपुन्नागतुलसीकेतकोद्भवं ॥ पल्लवानि वटाश्वत्थप्लक्षोदुंबरशाखिनां ॥ २२ ॥ ब्रह्मकूर्चं विनिक्षिप्य चषकैः सफलान्वितैः ॥ पिधाय कुंभवक्त्राणि क्षौमैराच्छादयेत्ततः ॥ २३ ॥ आवाह्य मध्यकलशेमहालक्ष्मीं प्रपूजयेत् ॥ यजेदुमाद्याः शिष्टेषु कलशेष्वष्टसु क्रमात् ॥ २४ ॥ गन्धैर्मनोहरैः पुष्पैर्धूपदीपसमन्वितैः ॥ निवेद्य भक्ष्यभोज्यानि तान्स्पृष्ट्वा प्रजपेन्मनुं ॥ २५ ॥ त्रिसहस्रं जपस्यांते साध्यमानीय

---

टीरचंदनं। ग्रैवेयं कंठभूषा कंबुः शंखः मत्तालिमालेवविलसंतः येऽलंकाइतिविग्रहः घृतैरेव दशांशहोमः अयुतद्वयहोम इत्यधिकः पीठे अष्टदलद्वादशदलचतुरस्रचतुर्द्वाररूपे शंकरनंदनंगणेशं स्कंदमित्यपरे। पुष्पांजलिकरं इत्युभयध्यानं। पूर्वमुक्तेषु तुर्योक्तेषु विधिवदिति। शिरआद्यंगेषु नमोयी उक्ताः अथवा यथान्यासमात्मनेपदसहितानीत्युक्तं पद्मे हस्तयोर्यस्याः सा पद्महस्तापश्चादष्टानां पद्महस्ताशब्दानामेकशेषेबहुवचनं ज्ञेयं। जह्नु इत्यारभ्यपश्चिम इत्यंतं त्ततोयावरणं संपूज्येति द्वादशदले राशीनिति। तद्वर्णाआचार्यैरुक्ताः चापनीरजपुक्कन्याः पीतास्तुरुभवास्त्वमी वणिक्मकरमेषाह्वकुलीरोरक्तरौचिषः। चरावशिष्टाश्चत्वारः स्थिराश्चेतः पृथङ्मता इति। ततन्नामानुरूपं स्वरूपं ज्ञेयं इदं च तुर्यावरणं। अथ परितो यजेन्नवग्रहानिति। तद्वर्णास्तत्स्वरूपं च चंद्रमंत्रे वक्ष्यति। दिग्गजानिति श्वेतान्। दिक्ष्विति। स्वस्वदिक्षु अष्टोत्तरसहस्रकमिति। इयमपि प्रत्यहं हुत्वेत्यष्टोत्तरसहस्रमिदमुत्तरप्रयोगेपि। अर्कदिनमादित्यवासरः जुहु यादित्यष्टोत्तरं सहस्रं लक्ष्मीवल्ली तु तांबूला-

संयतम् ॥ संस्थाप्य स्थंडिले पीठं तस्मिंस्तंविनिवेशयेत् ॥ २६ ॥ रम्यैरावरणैर्वस्त्रैरलंकृत्य तमादरात् ॥ सुमंगलीभिर्नारीभिः क्षिप्तपुष्पाक्षतान्वितम् ॥ २७॥ अर्चितानां द्विजातीनामाशीर्वादपुरःसरम्॥नदत्सु पंचवाद्येषु मुहूर्ते शोभने सुधीः॥२८॥ मध्यस्थं कुंभमुत्सृज्य महालक्ष्मीमनुस्मरन् ॥ अभिषिंचेत्क्रमादन्यैः कलशैरपि देशिकः ॥ २९ ॥ करेणास्य शिरस्पृष्ट्वा प्रयुंजीताशिषं गुरुः ॥ भद्रमस्तु शिवंचास्तु महालक्ष्मीः प्रसीदतु ॥ ३० ॥ रक्षंतु त्वा सदा देवाः संपदः संतु सर्वदा ॥ अथोत्थायाभिषिक्तः सन् वाससी परिधाय च ॥ ३१ ॥ यथाविधि समाचम्य दण्डवत्प्रणमेद्गुरुः ॥ वस्त्राभरणैर्धान्यैर्धनैर्गोमहिषादिभिः ॥ ३२ ॥ दासीदासैश्च विधिवत्तोषयेद्देवताधिया ॥ ब्राह्मणान्भोजयेत्पश्चाद्दीनांधकृपणैः सह ॥ ३३॥ महांतमुत्सवं कुर्याद्भवने बंधुभिः सह ॥ तदा कृतार्थमात्मानंमन्यते मनुजोत्तमः ॥ ३४ ॥ अभिषिक्तो नरपतिः परान् विजयते चिरात् ॥ पदेच्छुः पदमाप्नोतिराजपुत्रो न संशयः॥ ३५ ॥ अभिषिक्ता सती वंध्या सूते पुत्रं महामतिं ॥ महारोगेषु जातेषु कृत्याद्रोहेषु देशिकः ॥ ३६ ॥ भूतेषु दुर्निमित्तादौ विदध्यादभिषेचनम् ॥ सर्वसंपत्करं पुंसां सर्वसौभाग्यसिद्धिदं ॥ ३७ ॥ सर्वरोगप्रशमनं सर्वापद्विनिवारणम् ॥ गर्भरक्षाकरं स्त्रीणां दीर्घायुर्जनकं परम् ॥ ३८ ॥ प्रसूतानामपि स्त्रीणां सूतिकागाररक्षकम् ॥ प्रनष्टपुष्पगर्भाणां पुष्पगर्भाभिरक्षणम् ॥ ३९ ॥ आसन्नशत्रुभीतानां नाशनं च महीभृतां ॥ अभिषेकमिमं प्राहुरागमा-

---

कारपत्रा रक्तमध्यबिंदुःश्वेतपुष्पा वाशब्दः समुच्चये । मंडलादेकोनपंचाशद्दिनैः धनदः कुबेरः प्रजपेदित्यष्टोत्तरशतमित्यादि । भस्मेति । हुतजपाभस्म ब्रह्मवृक्षः पलाशः ब्रह्मवैपलाश इतिश्रुतेः अभिषेकमाह । कृत्वेति । नवपदात्मानं तृतीयोक्तनवनाभ यं त्रभूषितं वक्ष्यमाणयंत्रं तन्मध्यपद्मकर्णिकायां लिखेदित्यर्थः विधिनेति । उद्दिष्टं विधिमाह । कलशानित्यादिना कर्षकांचननिर्मितं षष्ठ्याधिकशतरक्तिकापरिमितसुवर्णनिर्मितं । यंत्राढ्यं यंत्रयुक्तं तेन यंत्रपद्ममित्यर्थः जातीजातीफलं भागत इति । समविभागतः रत्नानि मातृकापटलोक्तानि नवसर्वकुंभेषु इति । अत्रापिना संबध्यते लक्ष्मीः पूर्वोक्तलक्षणा १ दूर्वा २ सदा भद्रा मुस्ता ३ सहदेवी ४ मधुव्रता भृंगराजः ५ मुसली मुसलीकंदः ६ शक्रवल्ली इंद्रवारुणी ७ क्रांता विष्णुक्रांता ८ अपामार्गपत्रं ९ एतानि प्रक्षाल्य एतेषु नवकुंभेषु प्रत्येकं निक्षिपेदित्यग्रिमेणान्वयः प्रियंगुः कंगुः निक्षिपेदिति प्रत्येकं । फलान्यपीति । पल्लवानीति च सर्वकुंभमुखेषु ब्रह्मकूर्चं दीक्षापटलोक्तं तान्स्पृष्ट्वेति । कुशादिना युगपत् सुमंगलाभिश्चिरंटीभिरित्यर्थः । आशिषमेवाह । भद्रमस्त्विति ॥ १३८ ॥ यंत्रमेवाह । वेदादीति । पद्मं पद्मरूपं यंत्रं लिखेदिति । सम्बन्धः किंविशिष्टं वेदादिः प्रणवः तत्र स्थं साध्यनामसाध्यसाधककर्मनामयत तत्कर्णिकायामिति ज्ञेयं किंजल्केष्विति । वक्ष्यमाणत्वात् । पुनः कीदृक् किंजल्केषु केसरस्थानेषु युगशो द्विशः : श्रीशक्तिमारान्वितं आद्ये किंजल्के श्रीशक्ति परे मारश्रियौ । तत्परे शक्तिमारौ इतिक्रमेणेति सम्प्रदायविदः तेन बीजत्रयस्याष्टावृत्तयः पुनः कीदृक् दिनेशपत्रेषु द्वादशपत्रेषु विलसन्तिमन्वाक्षराणि यत्र । पुनः किंविशिष्टं तद्वहिः व्यञ्जनकेसरं व्यञ्जनानि ककारा-

र्थविशारदाः॥ ४०॥ वेदादिस्थितसाध्यनामयुगशः श्रीशक्तिमारान्वितं किंजल्केषु दिनेशपत्रविलसन्मन्त्राक्षरं तद्बहिः॥ पद्मं व्यंजनके सरं स्वरलसत्पत्राष्टयुग्मं धराबिंबाभ्यां वषडेतयात्वारितया यन्त्रं लिखेद्वेष्टितम्॥ ४१॥ भूपुरद्वयकोणेषु ह्क्षौ लख्यौ पुनः पुनः॥ महालक्ष्मीयन्त्रमिदं सर्वैश्वर्यफलप्रदम्॥ ४२॥ सर्वदुःखप्रशमनं सर्वापद्विनिवारणं॥ बहुना किमिहोक्तेन परमस्मान्नविद्यते॥ ४३॥ शंभुपत्नी श्रियारुद्धा कमौ भगवती मही॥ ब्रह्मादित्यौ धरादीर्घा लक्षादि भगवान् मरुत्॥ ४४॥ प्रसीदयुगलं भूयः श्रीरुद्धा भुवनेश्वरी॥ महालक्ष्मिनमोंतः स्यात्प्रणवादिरयंमनुः॥ ४५॥ सप्तविंशत्यक्षराद्यः प्रोक्तः सर्वसमृद्धिदः॥ कमले हृदयं प्रोक्तं शिरः स्यात्कमलालये॥ ४६॥ शिखा प्रसीद तेनैव कवचं चतुरक्षरैः॥ अस्त्रमेतैः पदैः कुर्यात्त्रिबीजपुटितैः पृथक्॥ ४७॥ सिंदूरारुणकांतिमब्जवसतिं सौंदर्यवारां निधिंकोटीरांगदहारकुंडलकटीसूत्रादिभिर्भूषितां॥ हस्तांब्जैर्वसुपत्रमब्जयुगलादर्शौवहंतीं परामावीतां परिचारिकाभिरनिशं ध्यायेत्प्रियां शार्ङ्गिणः॥ ४८॥

---

दीनि केसरेषु यत्र तत्। केसराणां द्वित्वात् व्यञ्जनद्वयमेकैकस्मिन्केसरस्थाने लेखनीयमित्यर्थः पुनः कीदृक् स्वरैर्लसद्युक्तं यत्राष्टयुग्मं षोडशयन्त्रं यस्मिन्तत्। धराबिंबाभ्यां परस्परव्यतिभिन्नाभ्यां वेष्टितं त्वरितया सहेति सम्बन्धः इदं चोपरिष्टात् प्रभृति तेन त्वरितया संवेष्ट्य पश्चाद्भूगृहाभ्यां वेष्टयेत्। अत्र परस्परव्यतिभिन्नत्वमर्थलभ्यम्। यतुउपर्य्युपरि चतुरस्रकोणे एकेनैव चतुरस्रेण साक्षादन्त्यवेष्टनम्। अन्येन तु चतुरस्रस्यैव वेष्टनं नमन्त्रस्य परंपरया यन्त्रवेष्टनत्वमिति चेन्न व्यतिभिन्नत्वे तु उभयोरपि साक्षादेव यन्त्रवेष्टितत्वसम्भवात्। कीदृश्या त्वरितया वषडन्तया तत्र फट्कारस्थाने वषट्कार इति साम्प्रदायिकाः अन्येतु वषट्कारमधिकमाहुः हृक्षावित्यष्टधाहृत्तौ॥ १४१॥ मन्त्रान्तरमाह। शंभ्विति। शंभुपत्नी मायाबीजं श्रियारुद्धा श्रीबीजपुटिता। एकाक्षरत्वाद्रोधः संपुटे पर्यवस्यति। कमौ ककारमकारौ भग एकारस्तद्युक्तः महीलः तेन लेनांगरलिपी भगाकारत्वात्। एकारस्य स भग शब्दवाच्यः ब्रह्मादित्यौ ककारमकारौ धरा लकारः दीर्घादीर्घयुक्ता तत्र प्रथमातिक्रमे कारणाभावादाकारयुक्ता तेन लाक्षादिर्लः मूर्द्धन्य इत्यर्थः मरुद्यकारः भगवानेकारयुक्तः तेन येइति महालक्ष्मीति स्वरूपं इदं पदं केचन चतुर्थ्यन्तमिच्छन्ति। एभिस्तु यकारस्यकीलकत्वात् तथोद्धृतम्। अन्येतु द्विरुक्त्यादौ भेदमुद्धृत्याष्टाविंशतिवर्णमाहुः सर्वसमृद्धिदइति विनियोगोक्तिः श्रीं बीजं मायाशक्तिः कमलवासिनीचास्याऋष्यादयः।तेनैवेति। प्रसीदेत्यनेन चतुरक्षरैरेवेति। महालक्ष्मीपदेन त्रिबीजपुटितैरिति मन्त्रादिस्थप्रणवव्यतिरिक्तैस्त्रिबीजैः पृथक्प्रत्येकं कुर्यादंगानीतिशेषः तत्र प्रयोगो यथा। श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं हृदयाय नम इत्यादि। आयुधध्यानं। दक्षाधस्तादावामाधः पर्यन्तं। अङ्गावृत्तेर्बहिः केसरेषु तेन कर्णिकायामङ्गपूजा अतएव दलमूलेषु संपूज्येत्युक्तिः पत्रमध्येष्विति। दिक्पत्रमध्येषु दमकादिकानिति विदिक् पत्रमध्येषु तदग्रेषु येसाधकोत्तमा उपासते इति सम्बन्धः साधकोत्तमा इत्यनेनैतदुक्तं भवति। सत्यवादित्वादिलक्ष्म्युपासकसमयनिष्ठा इति। तयेतिसमया। देवी सहदेवी मधुव्रता भृङ्गराजः सदाभद्रा मुस्ता अंजलिप्रिया अंजलिनी हाथाजोडीतिकान्यकुब्जभाषायाम्। हरिचन्दनं पीतचन्दनम्। मालूरं

लक्षं जपेत्फलैर्बैल्वैर्जुहुयान्मधुरोक्षितैः॥ दशांशसंस्कृते वन्हौ प्राक्प्रोक्तेनैव वर्त्मना ॥ ४९ ॥ श्रीबीजोक्ते यजेत्पीठे वक्ष्यमाणक्रमेणतां ॥ अंगावृत्तेर्बहिः पूज्या मूर्तयः श्रीधरादयः ॥५०॥ श्रीधराख्यं हृषीकेशं वैकुंठं विश्वरूपकं॥ वासुदेवं संकर्षणं च प्रद्युम्नमनिरुद्धकम्॥ ५१॥ दलमूलेषु संपूज्य पत्रमध्येषु संयजेत्॥ भारतींपार्वतीं चांद्रीं शचीं च दमकादिकान्॥५२॥द-

---

बिल्वं केसरी नागकेसरः निशाहरिद्रा श्रीसूक्तं पञ्चदशर्चं बह्वृचानां प्रसिद्धतरम् । तद्विधानं यथा- श्राद्यायाः श्रीऋषिः प्रोक्तस्तत आनन्दकर्दमौ । चिक्लीतश्चेन्दिरापुत्रौ मुनयः संप्रकीर्त्तिताः चतुर्द्द- शानां छन्दः स्यादनुष्टुप्तिसृणां पुनः । चतुर्थ्यां बृहतीपञ्चषष्ठयोस्त्रिष्टुबीरिता । सप्तमादितु चाष्टाना मनुष्टुप्परिकीर्त्तितम् । प्रस्तारपंक्तिरंत्याया श्रग्नीदेवी प्रकीर्त्तिता । आद्यन्तबीजशक्तीस्ताविनि- योगो धनाप्तये । मूर्द्धाक्षिकर्णघ्राणेषु मुखग्रीवाकरद्वये । स्तननाभिलिङ्गपायूरुजानुजंघापदे न्यसेत् । हिरण्मयी च चन्द्रा च रजताद्यास्रजातथा।सुवर्णाद्यास्रजाचैव हिरण्यस्रजा च पञ्चमी। हिरण्यवर्णा एताभिर्नमोंताभिरसथांगकं ।रक्ताब्जसंस्थां पद्माक्षीं विचित्रानेकभूषणां।अरुणाब्जरजःपुञ्जवर्णासद्व- स्त्रशेखराम् । अब्जयुग्मवराभीतीधारयन्ती निजैर्भुजैः । देवीं त्रैलोक्यजननीमेवं ध्यायेत्तु देशिकः।शु- क्लप्रतिपदाद्येकादश्यंतं प्रजपेन्मनुम् । अर्कसाहस्रमेधैस्तुबिल्वैः पद्मै र्घृतेन च । पायसेन त्रिमध्व- क्तैर्द्दशांशं जुहुयात्ततः । पुरोदितेन विधिना श्रीपीठे पूजयेच्छ्रियम् । मूर्त्तिं मूलेन सङ्कल्प्य उपचा- रांस्तु षोडश । मन्त्रैस्तु पञ्चदशभिर्व्यस्तैः कुर्यात्समस्तकैः । तत आवरणार्चायां केसरेष्वंगपूजनम् । पद्मा च वर्णपद्मा च पद्मस्थार्द्रातुरीयका । तर्पयन्ती च तृप्ता च ज्वलन्ती सप्तमी तथा । स्वर्णप्रका- शाष्टमीस्यादेताः पत्रेषु संयजेत् । लोकेशानायुधैः सार्द्धमेवं पूजासमीरिता इति । अथ सर्वश्रीम- न्त्रान्ते मन्त्रान्तरोक्तं श्रीयंत्रं लिख्यते । अथातः संप्रवक्ष्यामि श्रियो यंत्रं शृणु प्रिये । सर्वसिद्धिप्रदं यंत्रं सर्वसंमोहनं परं।तेजस्करंपुष्टिकरं श्रीकरं च यशस्करम् । अमृतत्वप्रदं नृणां सर्वाभीष्टफलप्रदम्। शत्रूणां नाशनं चैव मंत्रिणां वर्द्धनं परं । स्वसेनाहरणं चैव परसेनापसारणं । अथर्वणादिभिर्मंत्रैः श- त्रुभिः पीडिते सदा । रक्षणं परमंत्राणां छेदनं च महेश्वरि । धारणाच्चायुरारोग्यं श्रीसौभाग्यधन- प्रदम् । अष्टपत्रं महापद्मं कर्णिकाकेसरैर्युतम् । श्रीबीजं नामसंयुक्तं कर्णिकायां समालिखेत् । अ- युतं वारुणं बिंदुभूषितं प्राग्दले लिखेत् । अकारयुतं सबिंदुकं हल्माद्यं वकारमित्यर्थः एवं च वं इति भवति । वैष्णवं बिंदुमद्वीजं तस्य दक्षिणदिग्दले । अमिति भवति । नांतं यान्तसमायुक्तं स- बिंदुंवारुणे दले । तान्तःपकारःयांतो रेफः एवं च प्रं इति भवति । विष्णुं बिंदुसमायुक्तं सौमेवै दि- ग्दले लिखेत् । अमित्यर्थः जांतं वन्हिसमायुक्तं बिंदुमद्वन्हिदिग्दले । जांतो झकारः वन्हिरेफः एवं झमिति भवति वांतं विष्णुसमायुक्तं बिंदुमन्नैरृतेदले वांतः शकारः विष्णुरकारः एवं शं इति भ- वति । ब्रह्मणोद्वादशं बीजं पंचमस्वरसंयुतं बिंदुमादसमायुक्तं विलिखेत् पावने दले । ब्रह्माकस्त- स्मात् द्वादशो वर्णः ठकारः पञ्चमस्वरः उकारः एवंठुमिति भवति । वर्गाद्यं शांतसंयुक्तं एकादशस- मन्वितम् । बिंदुनादसमायुक्तं न्यसेदीशानदिग्दले । वर्गाद्यः ककारः शांतः ष एकादश एकारः क्षेमिति भवति । तद्वाह्ये परितो मन्त्री श्रीबीजं प्रथमावृत्तौ द्वितीयं कामबीजेन शक्तिबीजं तृ-

लाद्धिष्वर्चयेद्वाणान् महालक्ष्म्याः क्रमादमून् ॥ अनुरागं च संवादं विजयंवल्लभं मदम् ॥ ५३ ॥ हर्षं बलं चतेजश्च लोकनाथाननंतरम् ॥ तदा युधानि तद्वाह्ये पूजयेत्साधकोतमः ॥ ५४ ॥ अनेन विधिनादेवीं महालक्ष्मीमुपासते ॥ येतेषु निवसेल्लक्ष्मीरस्मरंतीनिजालयम्॥ ५५ ॥ उत्पलैर्जुहुयाल्लक्षं चंदनांभसिलोलितैः ॥ शत्रूणां लभते राज्यं विना युद्धेन पार्थिवः ५६ ॥ जपन् राजसभां गछेत्संभाव्येत तया नरः ॥ दूर्वा देवी महालक्ष्मीर्विष्णुक्रांता मधुवृता ॥ ५७ ॥ मुसली शक्रवल्ली च सदाभद्रांजलिप्रिया ॥ हरिचंदनकर्पूरचंदनाकोलरोचनाः ॥ ५८ ॥ मालूरकेसरौ कुष्टं सर्वं पिष्ट्वा निशारसैः ॥ अष्टोत्तरसहस्रं तु जपित्वा तिलकाक्रियां ॥ ५९॥ कुर्वतो मंत्रिणः सर्वे वशा स्तिष्ठंत्यहर्निशम्॥श्रियेमन्त्रं भजेन्मन्त्रीश्रीसूक्तान्यपि संयजेत् ॥ ६० ॥ भूयसीं श्रियमाकांक्षन् सत्यवादी भवेत्सदा ॥ प्रत्यगाशामुखो श्नीयात्स्थितपूर्वमियं वदेत् ॥ ६१ ॥ पूजये द्गंधपुष्पाद्यैरात्मानंनियतः शुचिः ॥ शयीत शुद्धशय्यायां तरुण्यासह नान्यथा ॥ ६२ ॥ नग्नोनावतरेदंभस्तैलाभ्यक्तोन भक्षयेत् ॥ हरिद्रां न मुखेलिंपेन्नस्वपेदशुचिः क्वचित् ॥ ६३ ॥ न वृथा विलिखेद्भूमिं न बिल्वं द्रोणमंबुजम् ॥ धारयेन्मूर्द्धिनवाद्याल्लैाणंतेलं च केवलम् ॥ ६४ ॥ मलिनो न भवेज्जातु कुत्सितान्नं न भक्षयेत् ॥ द्रोणपंकजबिल्वानि पद्भ्यां जातु न लंघयेत् ॥ ६५ ॥ सहदेवींमिंद्रवल्लीं श्रीवल्लीं विष्णुवल्लभां ॥ कन्यांबुजप्रवालं च धारयेन्मूर्धिनसर्वदा ॥ ६६ ॥ इत्याचारपरो नित्यं विष्णुभक्तो दृढव्रतः ॥ श्रियमाप्नोति महतीं देवानामपि दुर्लभां ॥ ६७ ॥ इ-

---

तीयके ततो भूर्ज्जहमालिख्य प्राङ्मुखः सुप्रसन्नधीः गुरुं संपूज्य यत्नेन वस्त्रधान्यधनादिभिः गन्धपुष्पचताद्यैश्च यंत्रं संपूजयेत्प्रिये । सहस्रं च जपं कृत्वा सर्वसिद्धिकरं प्रिये । रौप्ये पत्रेथ लोहे वाभूर्ज्जे वा लिख्य धारयेत् । बिंदुयुक्तेन लांतेन वेष्टयित्वा निरन्तरम् । पुनरष्टदलं पद्मं श्रीं ह्रीं प्रतिदलं लिखेत् । महामायां त्रिकोणाभ्यां वेष्टयित्वा बहिस्ततः ।इदं धारयतो नित्यं वर्द्धते श्रीर्नसंशय इति । कमलोपासकस्यधर्मानाह । भूयसीमिति । प्रत्यगाशामुखः पश्चिमास्यः तरुण्येति । नचवृद्धया उक्तंच । वृद्धातु कुरुते ज्वरमिति । पञ्चपञ्चाशद्वर्षोपरि स्त्रीणांवृद्धता । नान्यथा इत्यनेन एतदुक्तं भवति । यदाहुः । दुष्टां कष्टा न्ववायांकलहकलुषितां मार्गदुष्टामनिष्टा मन्यासक्तामसक्तामति विपुलकृशांगीमतिह्रस्वदीर्घां।रोगार्त्तां भोगलोलां प्रतिपुरुषचलां राजकांतामकांता काकाचीमिकवाराग्रहकुसमयुतां न स्पृशेदिन्दरार्थो इति । द्रोणंगूमाइति कान्यकुब्जभाषायां श्रीदेवी श्रीलताविष्णुवल्लभा विष्णुक्रांता । कन्याघृतकुमारी । इत्याचारेति । तन्त्रान्तरोक्ताचारग्रहणम् । तदुक्तं नारायणीये । नजिघ्रेन्नाक्रमेच्चाब्जं तद्बीजं नच भक्षयेत् । नस्याम्नलिष्टा नछिद्यात् बिल्वं भूमौ शयीतन । लवणामलकं वर्ज्यं नागादित्यतिथौ क्रमात् । पञ्चम्यामुत्तरे च स्त्रीवर्ज्याप्रत्यङ्मुखो शने बिल्वैर्न्मार्ज्जयेद्दंतान् त्रिसंध्यं प्रणमेच्चतान् । प्रातर्भक्ष्यास्तिलास्तेन धार्यालक्ष्मी च भक्षयेत् । धारयेन्मूर्ध्नि तत्पुष्पमुत्तरे मधुरान्नभुक्।पायसं बिल्वबीजं च भक्षयेत्शुक्लपर्वणीति ।प्रयोगसारेपि । धान्यगो गुरु हुताश नारायणां न स्वपेदुपरिनाप्यनुवंशं नोत्तरापरशिरा नच नग्नो नार्द्रपाणि च-

तिश्री शारदातिलके अष्टमः पटलः ॥ श्रीः ॥ अथ वक्ष्ये जगद्धात्रीमधुना भुवनेश्वरीं ॥ ब्रह्मादयोपि यां ज्ञात्वा लेभिरे श्रियमूर्जितां ॥ १ ॥ लकुलीशोग्निमारूढो वामनेत्रार्द्धचंद्रवान् ॥ बीजं तस्याः समाख्यातं सेवितं सिद्धिकांक्षिभिः ॥ २ ॥ ऋषिः शक्तिर्भवेच्छंदो गायत्री देवता मनोः ॥ कथिता सुरसंघेन सेविता भुवनेश्वरी ॥ ३ ॥ षट्दीर्घयुक्तं बीजेन कुर्यादंगानि षट्क्रमात् ॥ संहारसृष्टिमार्गेण मातृकान्यस्तविग्रहः ॥ ४ ॥ मंत्रन्यासं ततः कुर्यादेवताभावसिद्धये ॥ हृल्लेखामूर्द्ध्निवदने गगनं हृदयांबुजे ॥ ५ ॥ रक्तां करालिकां गुह्ये महाछुम्मां पदद्वये ॥ ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु च ॥ ६ ॥ सद्यादिह्रस्वबीजाढ्यान्यस्तव्या भूतसप्रभा ॥ अंगानि विन्यसेत्पश्चाज्जातियुक्तानि षट्क्रमात् ॥ ७ ॥ ब्र-

---

रणश्रियमिच्छन्। नाभ्यंज्यादपितैलमेवरजनी नैवानुलिंपेन्मुखे इति ॥ १६५ ॥ इति शारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां श्रीमन्त्रनिरूपणं नाम अष्टमः पटलः ॥८॥

श्रीगणेशाय नमः। एवं सरस्वती श्रीमन्त्रानुक्त्वा तदन्तर्गतत्वात् एतदन्तरं भुवनेशी मन्त्रान् वक्तुमारभते। अथेति। यां ज्ञात्वेत्यनेनास्यास्तावत्तरा नानापि भेदाः सूचिताः तत्र वाक्पुटत्वं श्रीपुटत्वं श्रीकामपुटतत्वं कामश्रीपुटितत्वं ग्रन्थकार एव वक्ष्यति एवं कामपुटितत्व श्रीवाक्पुटीतत्वम्। वाक्कामपुटितत्वम्। कामवाक्पुटितत्वमिति चत्वारोभेदाः स्वयमूहनीयाः । तदुक्तं। कामाद्यन्ता प्रभवति यदा सर्वकामेश्वरी सा साद्यन्तश्रीः सुतधनफला वाक्प्रदा वाग्भवेन । एवं व्यस्तैर्विरचितपुटां कामधुक् सा हि शक्तिरिति। अन्यचापि। संपुटीकृत्य वा मन्त्री कामबीजेन सुन्दरी। अभ्यासान्नियताहारस्त्रैलोक्यं वशमानयेत् इति। पद्मपादाचार्यैः । प्रणवपुटितत्वं बीजचतुष्टयं पुटितत्वमिति भेदद्वयमन्यदप्युक्तं श्रियमूर्जितामिति विनियोगसूचनम् ॥ १ ॥ मन्त्रमुद्धरति लकुलीशइति। लकुलीशोहः अग्नी रः वामनेत्र ई। अर्द्धचन्द्रो बिंदुः एवं च मिलित्वा बीजमेकम् । सिद्धिकांक्षिभिः सेवितमित्यनेनास्यकेवलस्यापि सकलपुरुषार्थसाधनता सूचिता । तथाच भुवनेश्वरीपारिजाते। मत्समः पुरुषो नास्ति त्वत्समानास्तिचाङ्गना। मायाबीजसमो। मन्त्रो न भूतो न भविष्यति। शक्तिरिति। वसिष्ठपुत्रः। तदुक्तं संहितायाम् । ऋषिः शक्तिर्वशिष्ठस्य सुत इति । हं बीजं ई शक्तिः। तदुक्तं दशपटल्यां हं बीजमीशक्तिरस्यहष्टार्थे विनियोजनमिति । षट्दीर्घेति। अत्र तु षडङ्गमन्त्रोद्धारमात्रः कृतः। न्यासं वक्ष्यति न्यासावसरे। संहारसृष्टिमार्गेणेति । अल्पाच्तरत्वात् । सृष्टिशब्दस्य पूर्वनिपातः कर्त्तव्यः सच नकृतस्तेन संहारन्यासं कृत्वा सृष्टिन्यासं कुर्यात्। तदुक्तं संहितायां। अकाराद्यर्णपर्यन्तां विपरीतक्रमेण तु । गुरूपदेशविधिना मातृकां प्रथमं न्यसेत्। संहारमातृकान्यासो ब्रह्मनन्दरसोज्वल इति। आचार्या अपि । संहृत्य चोत्पाद्य-शरीरमेवमिति पदद्वये इति। एकदैव एकहस्तेनेतिज्ञेयं अन्यथा मन्त्रावृत्तिप्रसङ्गात् ॥ ६ ॥ सद्यादीति। सद्य ऊकारस्तदादयः । पंचह्रस्वाः अनेन विलोमप्रकारेण नपुंसकव्यतिरिक्ता गृह्यन्ते ओ ए उ इ अ सद्यादि ह्रस्वा यस्मिन् एवं भूतं यद्बीजं तदाद्या इति सम्प्रदाय विदः । तेन ह्रों ह्रें ह्रुं ह्रिं ह्रं इति बीजानि भवन्ति गूढार्थदीपिकाकारस्तु ऊ ऐ लृ ऋ उ इमान् पञ्चह्रस्वानुक्तवान्।

**ब्राणं विन्यसेद्भाले गायत्र्या सहसंयुतम् ॥ सावित्र्या संयुतं विष्णुं कपोले दक्षिणे न्यसेत् ॥ ८ ॥ वागीश्वर्या समायुक्तंवामगंडे महेश्वरम् ॥ श्रिया धनपतिं न्यस्येत् वामकर्णाग्रके पुनः ॥ ९॥ रत्यास्मरमुखे न्यस्य पुष्ट्या गणपतिं न्यसेत् ॥ सव्यकर्णोपरि निधी कर्णगंडांतरालयोः ॥ १० ॥ न्यस्तव्यौ वदने मूलं भूयश्चेतास्तनौ न्यसेत् ॥ कण्ठमूले स्तनद्वंद्वे वामांसे त्हदयांबुजे ॥ ११ ॥ सव्यांसे पार्श्वयुगले नाभिदेशे च देशिकः ॥ भालांसपार्श्वजठरपार्श्वांसापरके त्हदि ॥ १२ ॥ ब्रह्माण्याद्यास्ततोन्यस्या विधिना प्रोक्तलक्षणाः ॥ मूलेन व्यापकं देहे न्यस्य देवीं विचिंतयेत् ॥ १३ ॥ उद्यद्दीनद्युतिमिंदुकिरीटां तुंगकुचां नयनत्रययुक्तां ॥ स्मेरमुखीं वरदांकुशपाशाभीतिकरां प्रभजेत् भुवनेशीं ॥ १४ ॥ प्रजपेन्मन्त्र-**

---

तत्र सर्वत्राग्रेपि सम्प्रदायानुसारेण सद्यादिग्रहणे नपुंसकव्यतिरिक्तानामेवग्रहणात् केचन स्वरमात्रं बीजत्वेनाहुः तदपि न बीजशब्दोपादानवैयर्थ्यात् । उक्तंच दशपटल्यां सद्योष्टश्रुतिनेत्राद्यैर्वियां संभेद्य मन्त्रवित्। हल्लेखादीन्प्रविन्यस्येदिति ।भूतसप्रभा इति । पृथिव्यादिक्रमेणेत्यर्थः तेन हल्लेखा पोता गगना विशदा रक्ता रक्ता महोच्छुष्मा कृष्णा करालिका स्त्रहेति। अङ्गानीति पूर्वोक्तैः सजातिभिरंगमन्त्रैरित्यर्थः अतएव पश्चादिति। तदुक्तमाचार्यैः। हल्लेखाख्यां गगनं रक्तां च करालिकां महोच्छुष्माम्।मूर्द्धनि वदने हृदये गुह्ये पादयोस्तदंगैश्चेति ॥७॥ योनिन्यासमाह। ब्रह्माणमिति ! तत्र हां ह्रीं क्रूं इति गायत्र्यादीनां बीजानि हं हिं हुमिति ब्रह्मादीनाम्। अन्येषां स्वस्वबीजानि निध्योराद्यक्षरं बीजमितिज्ञेयम्। तत्र प्रयोगः । हां गायत्रीसहिताय हं ब्रह्मणे नम इत्यादि शक्तीनामादित्वं पूजायां स्फुटीभविष्यति । वामकर्णाग्रके वामकर्णोपरिशास्त्रे दृक्षवद्व्यवहारात्। सव्यकर्णोपरि दक्षकर्णोपरिवामस्य पूर्वमुक्तेः निधी श्रीपटलोक्तस्वरूपौ सशक्तिकौ कर्णगण्डान्तरालयोरिति। दक्षवामयोः मूलं मूलमन्त्रं वदन इति तदेकदेशश्चिबुकं लक्षयति । एतानिति। ब्रह्मादीन्मूलान्तान्। अयमेव साम्प्रदायिकः पाठः केचन एतां तनौ न्यसेदितिपठन्ति तन्मते एतां भुवनेशीं कण्ठादिस्थानेषु नवसु न्यसेत् । स्तनद्वन्द्वे दक्षवामे सव्यां सन्दक्षिणांसे । यद्यपि वामं शरीरं सव्यं स्यादितिकोशः तथाप्यत्र सव्यशब्देन दक्षिण एव गृह्यते । वामस्य पूर्वं पृथगुक्तेः। तथाचशैवागमे। विन्यसेत्सव्यवामयोरिति बहुषु स्थलेषु व्यवहारः सव्यं दक्षिणवामयोरितिकोशान्तरं च। पार्श्वयुगले दक्षवामे देशिक इत्यनेन सबीजत्वमुक्तम् । भालांसेति मातृकान्यासस्थानम्। अंसपार्श्वे वामगते। पार्श्वांसौ दक्षिणौ । अपरकं ककुत् यद्यप्यपरगलशब्दे न ककुदुच्यते। तथाप्यत्र भीमो भीमसेन इति वत्प्रयोगः ।तदुक्तं। अलिकांसपार्श्वकुक्षिषु पार्श्वांसापरगलहृत्सु चक्रमशः। ब्रह्मण्याद्या विधिवत् न्यस्तव्या मातरोत्तमन्त्रितमैरिति ॥ १२ ॥ विधिनेति। सबीजाद्याः प्रोक्तलक्षणाः मातृकापटलोक्तध्यानाः व्यापकमिति कराभ्यां मस्तकाद्यापादांगुष्ठम् ॥ १३ ॥ उद्यदिति। इनः सूर्यः रक्तपद्मस्थामित्यपि आयुधध्यानम्। वामाधो हस्ते वरं दक्षिणोर्ध्वे कुशं वामोदूर्ध्वे पाशं दक्षाधोभयमिति सम्प्रदायविदः। तदुक्तं महासंमोहने। दक्षिणेनांकुशं दद्याद्वामे पाशं प्रदापयेत्। वरदं वामतो दद्यादभयं दक्षिणे कर इति ॥ १४ ॥ पूजयेदिति ।मन्त्रार्थानुसन्धान-

विन्मन्त्रं द्वात्रिंशल्लक्षमानतः ॥ त्रिस्वादूक्तैः प्रजुहुयादष्टद्रव्यैर्दशांशतः ॥ १५ ॥ दद्यादर्घ्यं दिनेशाय तत्र संचिंत्य पार्वतीम् ॥ पद्ममष्टदलं बाह्ये वृत्तं षोडशभिर्दलैः ॥ १६ ॥ विलिखेत्कर्णिकामध्ये षट्कोणमतिसुंदरम् ॥ ततः संपूजयेत्पीठं नवशक्तिसमन्वितम् ॥ १७ ॥ जया-

---

पूर्वकं हरिहरात्मकप्रकृतिपुरुषाकारेणावस्थिता वाग्माद्याशक्तिः प्रतिपादकोयं मन्त्रः अतएव भुवनेशीति नाम। तदुक्तं। हरित्वाच्च हरत्वाच्च पुंप्रकृत्योस्तुयुक्तयोः।श्लिष्टोच्चारितमेवेदं शब्दतद्रूपमीरितमिति। संहितायांतु। व्योमबीजे महेशानी कैलासादिप्रतिष्ठितम्। वन्हिबीजात्सुवर्णादि निष्पन्नं बहुधा प्रिये। तेनायं वर्त्तते लोके भूमण्डलसमाश्रितः। तुर्यस्वरेण पाताले शेषरूपेण धार्यते। महाभूमण्डलं तस्मात् पातालस्यापि नायिकाम्। अतएव महेशानी भुवनाधीश्वरी प्रिये। हकारे व्योमतुर्येण स्वरेणानिलसंभवः। विकारे सति रेफेण साक्षाद्वन्हिस्वरूपिणी। वन्हेर्वीर्यंवसुन्धेयं तस्माद्रेफवसुन्धरा। अतएव महेशानी रलयोः समता भवेत्। बिंदुवंशमृता देवी प्लावयन्ती जगत्त्रयम्। द्रवरूपाभवेत्तस्मात् द्रवन्तीचार्द्धमात्रया। अतएव महेशानी भुवनेशीतिकथ्यत इति। मन्त्रविदित्यनेनसकलोयोगः मोक्षार्थं प्रणवयोगोपि सूचितः यद्वा तन्त्रान्तरोक्तं पुरश्चरणं यथा। एकलिंगे शिवागारे दक्षिणामूर्त्तिमाश्रितः। बद्धपद्मासने भस्मस्नायी च कुशविष्टरः। कृष्णाष्टमीं समारभ्य यावत्स्यात्तच्चतुर्दशी। नित्यमिष्ट्वा शिवं शक्तिं जपेन्मन्त्रं सहस्रकम्। दधिक्षौद्रघृताभ्यक्ता व्याघातसमिधंहुनेत्। ततः साग्रं सहस्रं च ध्यायेत्सर्वेश्वरीमुमातिति। त्रिःस्वादुयुक्तैः स्निग्धमधुरोपितैः। तदुक्तं प्रयोगसारे। पयोमधुघृतं चेति समन्विमधुरंस्मृतमिति। अन्ये पयःस्थाने शर्करामाहुः। जपाद्दशांशं जुहुयादष्टद्रव्यैर्गुडक्षौद्रघृतावसिक्तैरिति। तट्टीकाकरैर्गुडः शर्करेति व्याख्यातं अष्टद्रव्यैरिति मातृकापटलोक्तैः॥ १५॥ दद्यादिति मूलेन तत्रेति सूर्यमण्डले इयंसौरी शक्तिरिति कृत्वा अत्रार्घ्यदानप्राधान्यादत्रोक्तः परन्तु सर्वमन्त्रेषु तत्तन्मन्त्रदेवतां सूर्यमण्डले संचिन्त्य सूर्यायार्घ्यः कर्त्तव्य इतिज्ञेयम्। तन्मया सन्ध्याकथनावसरे उक्तं अत्र ध्यानान्तरं आयुधपुस्तकज्ञानयोनिबीजमुद्राः प्रदर्शयेत्। यदाहुः। एवं शक्तिं परां ध्यात्वा सम्यक् मुद्राः प्रदर्शयेत्। पाशांकुशाभयाभीष्टपुस्तकज्ञानयोनयः इति। तत्र पाशमुद्रालक्षणं यथा। वाममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनीम्। संयोज्यांगुष्ठकाग्राभ्यां तर्जन्यग्रे स्वके क्षिपेत्। एषावापाशमुद्रेति विद्वद्भिः परिकीर्त्तितेति। शेषमुद्रालक्षणानि मया पूर्वमुक्तानि बीजमुद्रागुरुमुखात् ज्ञेया। अत्र स्वपूजा साधनप्रोक्षणमंत्रोयं ज्ञेयः। प्रणवो वाग्भो माया श्रीबीजं परमामृतं। रूपे भगवति प्रोक्ता चन्द्रमण्डलवासिनी। चन्द्रामृतेन पूरयेहितयं द्रव्यमित्यपि। इदं पवित्रयद्वन्द्वं श्रीमायावाक्द्विठस्ततः। तेनामृतेन सम्प्रोक्ष्य दात्मानं साधनानिचेति॥१६॥पूजायन्त्रमाह।पद्ममिति। षट्कोणमिति।उर्ध्वाधोग्रत्रिकोणे परस्परभेदिते। अतिसुन्दरमित्यनेन यथा समं भवति तथा कर्त्तव्यमित्युक्तं भवति। तत्र त्रिकोणादीनां समत्वे प्रकार उच्यते।हित्वा वृत्तप्राग्गुणांघ्रि तिर्यगन्त्यौतु पार्श्वयोः।वस्राः।षट्स्वन्यतोप्येवं द्वादशारा उदीर्यापि समं प्राचीसूत्रं कृत्वा तन्मध्यमालंब्ययथेप्सितं वृत्तं कृत्वा तत्र प्राचीसूत्रं चतुर्द्धा विभजेत्। एकस्मादन्यात्तुर्यांशं संत्यज्य एकं तिर्यक्सूत्रं पातयेत्। पार्श्वयोः सूत्रद्वयदानात् त्र्यस्रं एवमन्यतोपि

रुया विजया पश्चादाजिता चापराजिती ॥ नित्या विलासिनी दोग्ध्री अघोरा मंगना न-
व॥१८॥बीजाद्यमासनं दत्वा मूर्तौ मूलेनपूजयेत्॥तस्यां संपूजयेद्देवीमावाह्यावरणैः सह॥१९॥
मध्यप्राग्याम्यसौम्येषु पश्चिमेषु यथाक्रमात्॥ हृल्लेखाद्याः समभ्यर्च्याः पञ्चभूतसमप्र-
भाः॥ २०॥ वरपाशांकुशाभीतिधारिण्योमितभूषणाः॥ स्थानेषु पूर्वमुक्तेषु पूजयेदंगदेव-
ताः॥२१॥षट्कोणेषु यजेन्मन्त्री पश्चान्मिथुनदेवताः॥ इंद्रकोणे लसद्दंडकुंडिकाक्षगुणाभयाम्॥
२२॥ गायत्रीं पूजयेन्मन्त्री ब्रह्माणमपि तादृशम्॥ रक्षःकोणे चक्रशंखगदापंकजधारिणीं॥
२३॥ सावित्रीं पीतवसनांयजेद्विष्णुं च तादृशम्॥ वायुकोणे परश्वक्षमालाभयवरान्वितां

---

कृते षडस्रम्। एवमुदक्दक्षिणतः कृते द्वादशास्रमित्यर्थः। वृत्तप्रमाणमाचार्यैरुक्तं। षडंगुलप्रमाणेन वर्त्तुलन्तत्तुरालिखेत्। षडंगुलावकाशेन तद्बहिश्च प्रवर्त्तयेत्। वर्त्तुलं तावता भूय तद्बहिश्च तृतीय-कम्। मध्यवर्त्तुलमध्येतु हृल्लेखाबीजमालिखेत्। द्वितीयवर्त्तुलाश्लिष्टमीषत्श्लिष्टषडस्रकम्। पुटितं मण्डलं वन्हेरस्य यत्मध्यवर्त्तुलं इन्द्राग्निरक्षोवरुणवाय्वीशाशास्वकंलिखेदिति अत्रोपरि वृत्तद्वयमपि षड्कोणमसत्वानयनायैवेति ज्ञेयम्। अन्यशक्तिमन्त्रपूजायन्त्रेतथोक्तेः चतुर्द्वारमित्यपि तस्य सा-धारणत्वादत्रनोक्तिः॥ १७॥ ततइति। नित्यजपानन्तरमित्यर्थः। अन्तर्यागानन्तरं तस्य कृतत्वात् पीठमन्त्रमुद्धरति। बीजाद्यमिति तत्र प्रयोगः। मूलबीजमुच्चार्य सर्वशक्तिकमलासनाय नम इति प्रयोगः तदुक्तं सर्वशक्तिपदम्प्रोच्य ङेतं च कमलासनम्। नम इत्यासनं पूज्य तत्तद्बीजादिकं शिवे इति। अयंपीठमन्त्रः सर्वभुवनेशी मन्त्रसाधारण इति ज्ञेयम्। अस्याः पद्मं रक्तं ध्येयम्। तदुक्तं प्रयोगसारे। रक्तांभोजंसमाधाय रत्नसिंहासनोपरि। तत्रावाह्य हृदा देवीमिति तेनैवेति मध्यादि एता यथाक्रमं समभ्यर्च्याइत्यन्वयः अदिशब्दार्थमाह। प्रागिति॥ २०॥ हृल्लेखाद्या इति। यथा-न्यस्ता। आसामायुधध्यानं देवीवत्। पूर्वमुक्तेषु चतुर्थपटलोक्तेषु आग्नेयादिषु तानि आग्नेया-दीनि कर्णिकान्तस्थानीति ज्ञेयं अङ्गानि केसरेष्विति यद्वक्ष्यमाणं ग्रन्थकृता सामान्योक्तस्यानुवादः कृतः अयमाशयः अङ्गानि केसरेष्विति अन्यत्र इहतु कर्णिकायामिवपूजेति। तदुक्तमाचार्यैः। हृल्ले-खाद्यास्तदनु च पूर्ववदंमानि पूजनीयानीति। केचित्तु उभयत्र षडंगन्यासस्थलद्वयेप्यंगपूजनमि-त्याहुः। तच्च प्रपञ्चसारादिविरुद्धं प्रथमम्मूर्द्धाग्रत्रिकोणेषु प्रादक्षिण्येन पश्चादीशानान्तां पूजा अभि दधदधराग्रत्रिकोणकोणेषु प्रादक्षिण्येन पूजामाह। षट्कोणेष्विति अतएवेत्युक्तिः वामोर्ध्वादि आद्ये दक्षोदूर्ध्वाद्यपरे इत्यायुधध्यानं गायत्र्यां दक्षवामयोरूर्द्ध्वयोराद्ये अधस्थयोः परे इति सा-वित्र्यां वामोदूर्ध्वात्। वामाधस्तनं यावत। सरस्वत्यां रत्नकुम्भो वामेन्योदक्षे। दक्षिणाधस्ताद्वा-माधः पर्य्यन्तं वदने वामदक्षयोरूर्ध्वयोरंकुशपाशौ कान्तावरांगस्पृगधोवामेन माध्वीत्यादिर्दक्षि-णाधइति। विघ्नराजे पुष्करं करिहस्ताग्रे उद्दामेत्यादिशक्ति ध्यानं धृतरक्तोत्पलमिति दक्षिणे। अन्येति वामेन कर्णिकायामिति। पद्मकर्णिकायां इति। यथान्यस्ता एता इति अनन्तरं वक्ष्यमा-णानंगकुसुमायाः आसां ध्यानं देवीवत् ज्ञेयं खेटकं फरीइति कान्यकुब्जभाषायाम्। श्यामा इत्यंतं पूर्वशक्तिध्यानं पूजाश्चेति चकारोभिन्नक्रमः। मातर इत्येतदनन्तरं दृष्टव्या मातर

॥ २४ ॥ यजेत्सरस्वतीमित्थं रुद्रं तादृशलक्षणम् ॥ वह्निकोणेयजेद्रत्नकुंभं मणिकरण्डकम् ॥ २५॥कराभ्यां बिभ्रतंपीतं तुंदिलं धननायकम्॥आलिंग्य सव्यहस्तेन वामेनांबुजधारिणीम्॥ २६ ॥ धनदांकसमारूढां महालक्ष्मीं प्रपूजयेत् ॥ वारुणे मदनं बाणं पाशांकुशशरासनम् ॥ २७ ॥ धारयंतं जपारक्तं पूजयेद्रत्नभूषणाम् ॥ सव्येन पतिमाश्लिष्य वामेनोत्पलधारिणीम्॥ २८ ॥ पाणिनारमणांकस्थां रतिं सम्यक् समर्चयेत् ॥ ऐशाने पूजयेत्सम्यक् विघ्नराजं प्रियान्वितम् ॥ २९ ॥ सृणिपाशधरं कांतां वरांगस्पृक्करांगुलिं ॥ माध्वी पूर्णकपालाढ्य विघ्नराजं दिगंबरम्॥ ३०॥ पुष्करे विलसद्रत्नस्फुरच्चषकधारिणम् ॥ सिंदूरसदृशाकारामुद्दामदविभ्रमां ॥ ३१ ॥ धृतरक्तोत्पलामन्यपाणिना तु ध्वजस्पृशम् ॥ आश्लिष्टकांतामरुणां पुष्टिमेर्चेद्दिगंबरां ॥ ३२ ॥ कर्णिकायां निधी पूज्यौ षट्कोणोभयपार्श्वयोः ॥ अंगानि केसरेष्वेताः पश्चात्पत्रेषु पूजयेत् ॥ ३३ ॥ अनंगकुसुमापश्चादनंगकुसमापरा ॥ अनंगमदनापश्चादनंगमदनातुरा ॥ ३४ ॥ भुवनपाला गगनवेगा चैव ततःपरम् ॥ शशिरेखाथगगनरेखा चैवाष्टशक्तयः ॥ ३५ ॥ पाशांकुशवराभीतिधारिण्योरुणविग्रहाः ॥ ततः षोडशपत्रेषु कराली विकराल्युमा ॥ ३६ ॥ सरस्वती श्रीदुर्गोषा लक्ष्मीश्रुत्यौस्मृतिर्धृतिः॥श्रद्धा मेधा मतिःकांतिरार्याः षोडशशक्तयः ॥ ३७ ॥ खड्गखेटकधारिण्यः श्यामाः पूज्याश्च मातरः ॥ पश्चाद्बहिस्त तमभ्यर्च्याः शक्तयः परिवारिकाः ॥ ३८ ॥ प्रथमानंगरूपास्यादनंगमदना ततः ॥ मदनातुरा भुवनवेगा भुवनपालिका ॥ ३९ ॥ स्यात्सर्वाशिशिरानंगवेदनाऽ नंगमेख-

---

चकारात् वक्ष्यमाणशक्तयश्च तेन मातरो यथान्यस्ताः पश्चाद्बहिः पूज्याः पश्चाद्बहिः परिचारिका अथ दिक्षु एताद्विभुजाः वामहस्तेरक्तोत्पलं परहस्ते चषकादि।तदुक्तं प्रयोगसारे।रक्तारक्तोज्वलाकल्या रक्तांतायतलोचनाः।रक्तोत्पलकरा ध्येयाः सुन्दराः परिचारिका इति अत्र सर्वत्र तर्पणादीनाम न्येषामप्यङ्गानां सत्वात् । यत्ध्यानपूजाजपहोमानेवाह तेनैषां नित्यकर्त्तव्यत्वं सूचितम् । तदुक्तं पिङ्गलामते। नाध्यातो नार्चितो मन्त्रः सुसिद्धोपि प्रसीदति । नाजप्तः सिद्धिदानेचकुर्नाहुतः फलदो भवेत्। पूजां ध्यानं जपं होमं तस्मात्कर्मचतुष्टयम्।प्रत्यहं साधकः कुर्यात् स्वयंचेत्सिद्धिमिच्छति । जपश्रान्तः शिवं ध्यायेत् ध्यानश्रान्तः पुनर्जपेत् । जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् । इति षट्कोणेषु यजेन्मन्त्रीत्यतएतदन्तं मन्त्रीति कर्तृपदमनुवर्त्तते तेन चैतन्मन्त्रं समयाचारत्वेनैव सूचितम्। यदाहुः। योगीशीसिद्धिमन्विच्छन् सद्व्रतानि समाचरेत्। नाद्यादनर्चयन् देवीं नैवस्यान्मलिनाकृतिः। नासत्यं प्रवदेत् किञ्चिन्नोपेयाद्विधवां क्वचित् । धारयेत्सर्वतो रम्यं रक्तालंकारमन्वहं। कन्यां रक्तदिने रक्तां यजे द्देवीमनुस्मरन्। अशुद्धो विचरेन्नै व विविक्ते शयने स्वपन्। ननिंदयेत्स्त्रियं जातु विशेषेण तु कन्यकामिति । देवीमित्थं प्रपूजयेदित्यनेनैतदुक्तं भवति। आवरणेषु षोडशशक्त्यनन्तरं द्वात्रिंशच्छक्तयस्तदनन्तरं।चतुःषष्टिशक्तयोर्च्या इति ताश्च भूतलिपिमन्त्रे उक्ताः ज्ञेयाः। तत्फलमेवाह। पूज्यते सकलैर्देवैरिति किंपुनर्मनुजोत्तमैरित्यनेनैतदुक्तम् । स्तोत्रमध्ये यदनङ्गकुसुमाद्यष्टशक्त्यावरणं तदन्तस्य फलम्। मनुजेति । ततो यत्षोडशशक्त्यावरणं तदे

ला ॥ चषकं तालवृंतंच तांबूलं छत्रमुज्ज्वलम् ॥ ४० ॥ चामरेचांशुकं पुष्पं बिभ्राणा करपंकजैः ॥ सर्वाभरणसंदीप्तान्लोकपालान्बहिर्यजेत् ॥ ४१ ॥ वज्रादीन्यपित द्बाह्ये देवीमित्थं प्रपूजयेत् ॥ पूज्यते सकलैर्देवैः किंपुनर्मनुजोत्तमैः ॥ ४२ ॥ मन्त्री त्रिमधुरोपेतैर्हुत्वाश्वत्थसमिद्वरैः॥ब्राह्मणान्वशयेच्छीघ्रं पार्थिवान्पद्महोमतः ॥ ४३ ॥ पालाशपुष्पैस्तत्पत्नीर्मंत्रिणं कुमुदैरपि ॥ पञ्चविंशतिसंजप्तैर्जलैः स्नानं दिनेदिने ॥ ४४ ॥ आत्मानमभिषिंचेद्यः सर्वसौभाग्यवान् भवेत् ॥ पञ्चविंशतिसंजप्तं जलं प्रातः पिबेन्नरः ॥ ४५ ॥ अवाप्य महतीं प्रज्ञां कवीनामग्रणीर्भवेत् ॥ कर्पूरागरुसंयुक्तं कुंकुमंसाधुसाधितम् ॥ ४६ ॥ गृहीत्वातिलकंकुर्याद्राजवश्यमनुत्तमम् ॥ शालिपिष्टमयीं कृत्वा पुत्तलीं मधुरान्वितां ॥ ४७ ॥ जप्तां प्रतिष्ठितप्राणां भक्षयेद्रविवासरे ॥ वशं नयति राजानं नारी वानरमेव वा ॥ ४८ ॥ कण्ठमात्रोदके स्थित्वा वीक्ष्यतोयगतं रविं ॥ त्रिसहस्रं जपेन्मन्त्रमिष्टां कन्यां लभेन्नरः ॥४९ ॥ अन्नं तन्मंत्रितं मन्त्री भुंजीत श्रीप्रसिद्धये ॥ लिखितां भस्मनामायां ससाध्यां फलकादिषु ॥ ५० ॥ तत्काले दर्शयेद्यंत्रं सुखं सूयेत गर्भिणी ॥ ५१ ॥ शक्तंचतस्थितसाध्यकर्मभवने वन्हेर्वृतं शक्तिभिर्बाह्ये कोणगते युतं हरिहरैर्वर्णैः कपोलार्पितैः पश्चात्तैः पुनरीयुतैर्लिपिभिरप्यावीतमिष्टार्थदं यंत्रं भूपुरमध्यगं त्रिगुणितं सौभाग्यसंपत्प्रदं ॥ ५२ ॥ बीजांतस्थितसाध्यनामशरसौमायारमायन्मथैर्वीतं वन्हिपुरद्वये रसपुटेष्वाख्याढ्यबीजत्रयं ॥ सात्मानात्म-

---

तस्य फलं तदुत्तमैरिति। तदुक्तं महासंमोहने । चतुर्भिर्वात्रिभिर्वापि द्वयेनैकेन वापुनः। सर्वैरावरणै रेवं भोगार्थी विस्तरं यजेत् इति । तथा गर्भावरणंबाह्यानां मध्ये तेषां प्रपूजनमिति तत्रैव ते नास्याः सप्तावरणद्यारभ्य एकादशावरणान्ता पूजेति सूचितं एवं पञ्चावरणा षडावरणापीत्यपि मन्त्रीत्यनेनैतदुक्तं भवति। सिद्धःप्रसिद्धस्तेजस्वी त्यागी योगी जितेन्द्रियः। सर्वज्ञः सुभगः श्रीमान्निराधिः प्रियदर्शनः। चौरादिव्यालवेतालगुह्यकव्यन्तरान्तरैः। न भयं जायते तस्य सिद्धमन्त्रस्य देहिनः ग्रामे वा नगरे वापि सभायां राजसन्निधौ । प्रसिद्धः पूज्यते सद्भिर्लभते वाञ्छितं हितमिति श्री घ्रमित्यनेनायुतहोम इत्युक्तम्। यत्प्रयोगसारे। वश्यायाश्वत्थराजीवतिलव्रीहैर्यथाक्रमात्। जुहुयाद्ब्राह्मणादीनां तथैवायुतसंख्ययेति। साधुसाधितमित्यष्टोत्तरसहस्रंजप्तं पुत्तलीमिति द्वादशांगुलायामां रचयेदिति। दक्षिणपादांगुष्टादिवामपादांगुष्टांतं स्त्रियास्तु वैपरीत्यं। भस्मनेति । योगभस्मना चतुस्र इति ज्ञेयम्। पुत्रसम्भावनायां पलाशभस्मेत्यपि क्षितार्थद्योतनिकायाम्। तदुक्तं नारायणीये। भस्मना लिखितां हृल्लेखां शक्रवेश्मनीति ॥ ५१ ॥ त्रिगुणितं यन्त्रमाह। शक्त्यन्तरिति। एवं भूतं त्रिगुणितं यंत्रं सौभाग्यसंपत्प्रदमित्यन्वयः। कीदृक् तत्। वन्हेर्भवने ऊर्द्ध्वाग्रे त्रिकोणे श क्त्यन्तः शक्तिबीजमध्यस्थितानि साध्येति साधकोपलक्षकम्। साध्यसाधककर्माणि यत्र तत् । तत्र प्रयोगः देवतास्य यज्ञदत्तं वशं कुरु कुरु इति। तदुक्तं रामपूर्वतापिनीये। लिखेत्साध्यं द्वितीयान्तं षष्ठ्यन्तं साधकं तथा। कुरुद्वयं च तत्पार्श्वे इति। तत्र बीजरेफभागे साध्यनाम चतुर्थस्वरभागे साधकनाम तयोर्मध्ये साधकांशे कर्म्म लिखेत्। तदुक्तं संहितायां । तत् शक्तिरेफभागे तु साध्यना

कर्मी शिखहरिहरैरावद्धगंडबहिःषड्बीजैरनुबद्धसंधिलिपिभिर्वीतं गृहाभ्यां भुवः ॥ ९३ ॥ चिंतामणिनृसिंहाभ्यां लसत्कोणामिदं लिखेत्॥यंत्रं षड्गुणितं दिव्यं वहतां सर्वसिद्धिदम् ॥ ९४ ॥ बीजं व्यात्युतिभिन्नवृत्ते गृहयुगद्वंद्वे वसोः कोणगं दौर्गं बीजमनंतरं लिपियुगैराबद्धगं-

---

मात्तरं लिखेत्। तुरीयस्वरभागे तु साधस्य वशं कुरु। साध्यस्योपरि संस्पृष्टं विलिखेत्सर्वसिद्धय इति आचार्याश्च मध्यवर्त्तुलसंस्थायाः हृल्लेखायाः कपोलयोः। अधरे साध्यनामार्णं साधकस्योत्तरेलिखेत्। अनन्तराग्निश्रियोः कर्मसाकधकांशे समालिखेत् इति। अनेनावश्यं वृत्तान्तः शक्तिं लिखेदित्यप्यु-क्तम्। अन्यत्रापि। ठकारवेष्टिता कृत्वेति। बाह्ये त्रिकोणाग्रभागेषु शक्तिभिरिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवस्यति। तेन त्रिभिः शक्तिबीजैर्वृतं आवरणं च गण्डद्वयलिखितहरि हरवर्णबहिर्भागे। तदुक्तं। कोणाग्रेषु परं लिखेत् इति। आचार्याश्च शक्त्याविदःसाध्यामिन्द्रानिलनि-ऋतिगबीजानुविपुरेग्नेरिति। तत्रावरणमित्थम्। एकैकस्यरेफाग्रेणतत्तद्बीजं प्रदक्षिणीकृत्यान्य स्याधो नीत्वा तदीकाराग्रं वध्नीदिति तदुक्तं संहितायां। स्थानत्रयेपि बन्धस्तु कथ्यते सिद्धिदायकः। तद्बीजत्रयरेफाग्रं प्रादक्षिण्येन वेष्टयेत्।अधस्त्रितयं चास्य मायाग्रेण च वेष्टयेत्।अन्योन्यकलनारम्यः शक्तिबन्ध उदाहृत इति। कोणगतेषु तत्रिकोणान्तः कोणेषु ई लिखेत्। तदुक्तं। त्रिकोणस्यान्तरालेषु वामनेत्रं सबिंदुकमिति कपोलार्पितैर्हरिहरैर्वर्णैरुपलक्षितम्।कपोलयोस्त्रिकोणपार्श्वयोर्हरि इत्येकत्र हर इत्यपरत्र च केचन क्लि क्र इत्याहुः तत्र मानाभावात्।तथा च संहितायां। प्रत्येककोणपार्श्वेषु हर्यर्णौ च हराक्षराविति।पश्चात्ततदन्तरं तैर्हरिहरैः ई युतैस्तैन हरि ई हरइत्यक्षरैरावीतम्। तदुक्तं संहितायां। पुनरेतत् द्वयोर्मध्ये तुर्यं चैव सबिंदुकम्। इत्यर्णैर्वेष्टयेद्बाह्ये वृत्तं कुर्याद्बहिस्तत इति। गौरीतन्त्रेपि। हरिबीजं हरानादीन् चान्तवर्णांश्च बाह्यत इति। आचार्यश्च मध्ये समायैरिति। पद्मपादाचार्यास्तु प्रत्येकमीं योगमाहुः हरिं ईं हर ईं इति लिपिभिरकारादि क्षकारान्तैरपि शब्दः सर्वसमुच्चये आवीतं वेष्टितं भूपुरमध्यगं तद्बहिर्भूपुरं लिखेदित्यर्थः आचार्यैस्तु इदमेवाष्टदलयुक्तं पूजायन्त्रम-प्युक्तं षट्गुणितं यन्त्रमाह। बीजान्तरिति। इदंषट्गुणितं यंत्रं लिखेदिति सम्बन्धः कीदृक्यंत्रं वन्हिपुरद्वये परस्परव्यतिभिन्ने त्रिकोणद्वयेतच्चैवमुक्तपरिमाणं वृत्तं कृत्वा प्राक्प्रत्यक्सूत्रमास्फाल्य तदग्रयोः सूत्रमवष्टभ्यवृत्तार्द्धपरिमाणेन सूत्रेणमत्स्यद्वयं कुर्यात्। एवं कृते मत्स्यचतुष्कं निष्पद्यते। पूर्वमत्स्यद्वये पश्चिममत्स्य द्वये च दक्षिणोत्तरगं सूत्रद्वयमास्फाल्यप्राक्सूत्रस्यप्रागग्रे सूत्रादिंनिधाय पश्चिमत्स्यद्वयोदरयोः तिर्यक् सूत्रद्वयमास्फालयेत्। पुनः प्राक्सूत्रस्य पश्चिमाग्रे सूत्रादिं निधाय पूर्वदिङ्मत्स्यद्वयोदरयोः तिर्यक्सूत्रद्वयमास्फालयेत्। प्राक्सूत्रंवृत्तंचमार्जयेत्। एवङ्कृतेसंपुटितंव-न्हिपुरद्वयंजायते। तत्रबीजंशक्तिबीजंतदन्तस्थितंसाध्यनामयत्रतत्तथासाध्यसाधककर्मनामलिखनं तु पूर्ववदेव शरशः पञ्चधा। तत्र षट्कोणाभ्यन्तर एवं पञ्चभिर्मायाबीजैरेकं तदन्तराल एव पञ्चभि श्रीबीजैर्द्वितीयं वेष्टनं तदन्तरालं एवं पञ्चभिः कामबीजैस्तृतीयं वेष्टनं एवं पञ्चदशबीजैरेकं वेष्टनं पर्यवसन्नं भवति। तदुक्तं। पद्मपादाचार्यैः। तत्र मायाबीजेन पञ्चधा हृत्तेनैकावृत्तिः पुनस्तदंतराल एव श्रीबीजेन तथैव तदन्तराले मारबीजेनेति। तदुक्तं। पुटितं वन्हिमालिख्य मध्ये शक्तिं नियो-

डं लिखेत् ॥ गायत्र्यारविशक्तिवह्निविवरं त्रिष्टुब्वृतं तत्ततो वीतं मातृकयाक्षरानुरयुगे सर्तिसहचिंतामणिं ॥ ९५ ॥ यंत्रं दिनेशगुणितं प्रोक्तं रक्षाप्रसिद्धिदं ॥ सर्वसौभाग्यजननं सर्वशत्रुनिवारणम् ॥ ९६॥ लिखेत्सरोजं रसपत्रयुक्तं माध्ये दलेष्वप्यभिलिख्य मायां॥स्वरावृ-

---

जयेत्। ठकारवेष्टनं कृत्वा बहिः शक्तिं तु पञ्चधा। विलिख्य तद्बहिस्तद्वत् श्रीबीजंकामराजकमिति आचार्या अपि। हरमायाः पञ्चकृत्वः स्युर्बहिर्गर्भैवर्त्तुलं। तद्बहिःशरमायाश्च कमलायाश्च तद्बहिरिति अतोत्र वृत्तान्तरे च शक्तिबीजं विलिख्य पश्चाद्बीजत्रयवेष्टनं रसपुटेषु षट्सु कोणेषु आख्याद्य बीजत्रयं अत्र आख्याशब्देन साध्यसाधककार्म्मनामान्युच्यन्ते । बीजत्रयं पूर्वकृतं शक्तिश्रीमान्मथम् । तदुक्तं। वन्हेः कोणत्रये श्रीमत्यत्रीये त्रितयं लिखेत् । शक्तिश्रीकामबीजानां सदण्डं साधकार्णवत् इति । लिखेदिति। द्विरावृत्त्या साच सात्मामात्मकशब्दादेव लभ्यते । तत्र सात्मकं सबिंदु अनात्मपर्युदासेन सविसर्गं तत्रैवं लेखनक्रमः ईकारगते तु ऊर्ध्वभागकोणत्रये साधकनामवन्ति सबिंदूनि त्रीणि बीजानि लिखेत् । ततःप्रादक्षिण्येन रेफगते अधोभागकोणत्रये साध्यनामकर्मवन्ति सविसर्गाणि लिखेत्। तदुक्तं । वन्ह्येः कोणेषु षट्सु च ऊर्ध्वभागे सबिंदूनि त्रीणि बीजानि संल्लिखेत्। साधकाख्यायुतान्येवमधोभागे तु तान्यपि। सविसर्गाणि कर्मवन्ति च संलिखेत् इति। ईं शिखं कोणान्तराग्रप्रदेशे ईमिति लिखेत्। हरिहरैरावद्वगण्डं गण्डशब्देश षट्कोणकोणपार्श्वद्वयमुच्यते तेन पूर्ववत् हरिहरान्वर्णान् लिखेत् । बहिः षट्कोणाग्रेषु षड्भिर्मायाबीजैरनुबद्धसन्धिः। तत्र बद्धसन्धोत्येतावताप्यर्थप्राप्तौ यदनुबद्धसन्धीति वदति । तेनैकान्तरितसन्धिबन्धोविवक्षितो ग्रन्थकृतः। तदाहुराचार्याः। एकैकान्तरितांस्तांस्तु संबंध्युरितरेतरम् । शिखाभिरान्तराभिस्तु बाह्याः बाह्याभिरान्तरा इति ।संहितायामपि। पूर्ववच्छक्तिबन्धस्तु कार्योत्रैकान्तरत्वत इति। अन्यत्रापि मन्त्रमुक्तावल्यादौ। एकैकान्तरितबद्धसन्धित्वमेवोक्तम्। युक्तिश्चात्र एकान्तरितबन्धे स्वस्वत्रिकोणगबीजबन्धो भवति। तत्रप्रकारः । स्वस्वरेफेण तद्बीजं प्रदक्षिणीकृत्यान्यस्याधो नीत्वा एकान्तरितबीजस ईकाराग्रेण बध्नीयात्। सम्प्रदायविदश्चैवं मन्यन्ते । अन्येतु सन्धौ बीजलिखनमाहुः। तदुक्तं। षट्सु कोणान्तरालेषु हृल्लेखाषट्कमालिखेत् इति । इदमुत्तरयन्त्रेपि लिपिभिरिति। सामान्योक्तिक्रमेण व्युत्क्रमेण च वेष्टनम्। यदाहुराचार्याः। वर्णाः क्रमगताः शुभाः तद्बहिः प्रतिलोमाश्चेति। संहितायामपि । अनुलोमेन तद्वृत्तमध्ये पञ्चाशदक्षरा । तद्वृत्तबाह्यतस्तद्वत् विलोमेन च मातृकेति। भुवो गृहाभ्यां परस्परभेदितदिक्विदिक्कोणाभ्यां वेष्टयेत्। तदुमाचार्यैः। ततो विदर्भितं भूमेर्मण्डलद्वयमालिखेदिति चिन्तामणिनृसिंहाभ्यामिति । ईशानादिलेखनक्रमः तेन दिक्कोणे नृसिंहबीजं विदिक्कोणे चिन्तामणिबीजं शेवम्। तदुक्तं । मही दिक् च नृसिंहाणां चिन्ता रक्षाश्रितालिकमिति। विशेषश्चायमुक्तोदक्षिणामूर्त्तिसंहितायाम् । ततः कोणेषु सन्धिषु विलिख्यशूलानिति। आचार्याश्च बहिः षोडशशूलांकमिति ॥ ५५ ॥ अथद्वादशगुणितं यन्त्रमाह। बीजमिति। वसोरग्नेः गृहयुगं षट्कोणं तद्वन्द्वे द्वादशकोणे क्वचिद्गुहमुखद्वन्द्वे इति पाठः। अत्र गुहः स्कन्दः तस्य मुखानि षट् तद्वन्द्वे द्वादशकोणे तत्र पूर्वोक्तप्रकारेण षट्कोणे कृते तत्रोत्पन्नयो-

तं यन्त्रमिदं वधूनां पुत्रप्रदं भूमिगृहांतरस्थं ॥ ५७ ॥ षट्कोणमध्ये प्रविलिख्य शक्तिं कोणेषु-तामेव विलिख्य भूयः ॥ ससाध्यगर्भं वसुधापुरस्थं यंत्रं भवेद्वश्यकरं नराणां ॥ ५८ ॥ वा-

---

मत्स्ययोर्द्दक्षिणोदग्गतं सूत्रमास्फाल्य तदग्रयोः सूत्रमवष्टभ्य वृत्तार्द्धपरिमाणेन सूत्रेण मत्स्यचतुष्टयं दद्यात्। तत्र दक्षमत्स्यद्वये उत्तरमत्स्यद्वये च पूर्वप्रत्यग्गतं सूत्रद्वयमास्फाल्य दक्षोत्तरसूत्रस्याग्रे सूत्रादिं निधाय उत्तरमत्स्योदरयोस्तिर्यक् सूत्रद्वयमास्फालयेत्। पुनर्दक्षोत्तरसूत्रस्य द्वितीयाग्रे सूत्रादिं विधाय दक्षमत्स्यद्वयोदरयोस्तिर्यक् सूत्रद्वयमास्फालयेत्। दक्षोत्तरसूत्रं मार्जयेत्। एवं द्वादशकोणे कृते बीजं शक्तिबीजं साध्यसाधककर्मसहितं पूर्ववदालिख्य सप्तव्याहृतिभिर्विलोमाभिरावीतं कुर्यात्। यत्संहितायां वेष्टयेत्प्रतिलोमतः सप्तव्याहृतिभिर्मन्त्रीति। आचार्यास्त्र शक्तिं प्रवेष्टयेच्च प्रतिलोमव्याहृतिभि रन्तस्थामिति पद्मपादाचार्यैर्व्याख्यातं सप्तव्याहृतिभिरिति। कोणमिति । द्वादशसु कोणेषु दुरिति दुर्गाबीजमालिख्य अन्तरे कोणान्तराग्रभागे दूं इति लिखेत्। तदुक्तं संहितायाम्। दुरात्मकं द्वादशारे सबिंदुं तुर्यमेव चेति। आचार्यास्त्र कोणान्तर्दुबीजकमिति। तथा रविकोणेषु दुरन्तां मायां विलिखेदथान्तर्बिंदुमतीमिति। नारायणीये च। अंतस्तद्बीजं शिवसर्गवामिति। अपेक्षितार्थद्योतनिकायामृष्यादिसमुक्तम्। काश्यप ऋषिः गायत्रीछन्दः दुर्गादेवता। अष्टपत्रे कमले दूर्वाश्यामां त्रिनेत्रां शूलबाणखड्गचक्रशङ्खखेटधनुः कपालानि दक्षिणाधः क्रमेण धारयन्तीं ध्यायेत्। दशांशं तिलैर्होमः पूजादिकं वनदुर्गावत् ज्ञेयम्। गायत्र्याः प्रसिद्धायाः लिपियुगैरक्षरयुगैः रावद्वगणं प्रत्येकं कोणपार्श्वयोर्विलोमतः गायत्र्यक्षरस्य द्वितीयं लिखेदित्यर्थः। णिर्यामिति पृथक्करणेन चतुर्विंशतिरक्षराणि। इयादिपूरण इति पिङ्गलसूत्रात्। यत्संहितायां द्वन्द्वशोविलिखेद्वर्णान्। गायत्र्यास्तु विलोमत इति आचार्या अपि। गायत्रीं प्रतिलोमतः प्रविलिखेत् अग्नेः कपोलमिति । गायत्रीं द्वाविंशे वक्ष्यति रविशक्तिभिः कोणाग्रबहिस्थापित द्वादशशक्तिबीजैः बद्धविवरं अत्रापि पूर्ववदेकान्तरितत्वेन बन्धनम्। यत्संहितायां । पूर्ववच्छक्तिबन्धस्तु कुर्याद्द्वादशधा प्रिये। एकैकान्तरितं रम्यमिति। आचार्यास्त्र। एकैकान्तरितास्ताः परस्परं शक्तयस्त्र संबंध्युरिति । त्रिष्टुप्वृत्तं त्रिष्टुभाजातवेदस इति। प्रतिलोमेन वेष्टितम्। तदुक्तं । तद्बहिः कोणपार्श्वेषु विलोमाग्ने यसनमनुमिति। त्रिष्टुभं द्वाविंशे वक्ष्यति। मातृकया अकारादिक्षान्तया विलोमया च वीतम्। तदुक्तं संहितायां। अनुलोमां विलोमां च मातृकां वेष्टयेद्बहिरिति। आचार्या अपि । वर्णान् प्रानुगतांश्चेति। पूर्ववत्परस्परव्यतिभेदिधरापुरयुग्मं लिखेत् । सत्सिंहचिन्तामणिरिति पूर्वादि तेन दिक्कोणे नृसिंहबीजं विदिक्कोणे शैवं चिन्तामणिबीजम्। इदं दिनेश गुणितं द्वादशगुणितम् । अस्य पूर्वयन्त्रापेक्षया फलादिद्वैगुण्यं ज्ञेयम् ॥ ५६ ॥ यन्त्रान्तरमाह लिखेदिति। रसपत्राणिषट्पत्राणि। तदुक्तं। मायामिति। ससाध्यां सप्तसु स्थानेषु स्वरावृत्तं अकारादिविसर्गपर्यन्तैः स्वरैरावृतम् । नारायणीयेतु। अत्र चतुरस्रं नोक्तं मध्येषट्पत्रपद्मस्य लिखेद्देवीं दलेषु च। स्वरावृत्तमिदं यंत्रं धारयेत्पुत्रकामिनीति॥ ५७॥ यन्त्रान्तरमाह। षडिति । ससाध्यगर्भमिति सप्तसु स्थानेषु॥ ५८॥ मन्त्रातरमुद्धरति। वाग्भवमिति। वाग्भवं द्वादशस्वरः सबिंदुः शंभुवनिताशक्तिबीजं त्रिवर्गेति विनि-

ग्भवं शंभुवनितारमाबीजत्रयात्मकम् ॥ मन्त्रं समुद्धरेन्मंत्री त्रिवर्गफलसाधनम् ॥ ५९॥ पद्दीर्घभाजा मध्येन वाग्भवाद्येन कल्पयेत् ॥ षडंगानि मनोरस्य जातियुक्तानि मन्त्रवित् ॥ ६० ॥ कुर्यात्पूर्वोदितान्न्यासान् तथैवात्रापि साधकः ॥ ध्यानम् ॥ सिंदूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्॥ पाणिभ्यां मणिपूर्णरत्नचषकं रत्नोत्पलं बिभ्रतीं सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत्परामंबिकाम्॥६१॥रविलक्षं जपेन्मन्त्रं पायसैर्मधुरप्लुतैः ॥ दशांशं जुहुयान्मन्त्री पीठे प्रागीरिते यजेत् ॥ ६२ ॥ देवीं प्रागुक्तमार्गेण गंधाद्यैरतिशोभनैः ॥ हुत्वा पलाशकुसुमैर्वाक्श्रियं महतीं व्रजेत् ॥ ६३ ॥ ब्राह्मीघृतं पिबेज्जप्तं कवित्वं वत्सराद्भवेत् ॥ सिद्धार्थान् लवणोपेतान् हुत्वा मन्त्रीवशं नयेत् ॥ ६४ ॥ नरनारीनरपतीन् नात्रकार्या विचारणा ॥ चतुरंगुलजैः पुष्पैः चन्दनांभः समुक्षितैः ॥ ६५ ॥ हुत्वा वशीकरोत्याशुत्रैलोक्यमपि साधकः ॥ जुहुयादरुणांभोजैरयुतं मधुरप्लुतैः ॥ ६६ ॥ राज्यश्रियमवाप्नोति सतिलैस्तंडुलैस्तथा ॥ प्रागुक्तान्यपि कर्माणि मंत्रेणानेन साधयेत् ॥ ६७ ॥ वाग्बीजपुटिता माया विधेयं त्र्यक्षरीमता ॥ मध्येनदीर्घयुक्तेनवाक्पुटेन प्रकल्पयेत् ॥ ६८ ॥ अंगानि जातियुक्तानि क्रमेण मंत्रवित्तमः ॥ यथा पुरा समुद्दिष्टान् न्यासान्कुर्वीत मन्त्रवित् ॥६९॥ श्यामांगीं शशिशेखरां निजकरैर्दानं च रक्तोत्पलं रत्नाढ्यं चषकं वरम्भयहरं संबिभ्रती शाश्वतीं ॥ मुक्ताहारलसत्पयोधरनतां नेत्रत्रयोल्लासिनीं वंदेहं सुरपूजितां हरवधूं रक्तारविंदस्थितां ॥ ७० ॥ तत्वलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः॥पलाशपुष्पैः स्वाद्वक्तैः पुष्पैर्वाराजवृक्षजैः ॥ ७१ ॥ हृल्लेखाविहिते पीठे पूजयेत्परमेश्वरीं ॥ मध्यादिपुजयेन्मन्त्रीत्हृल्लेखाद्याः पुरोदिताः ॥ ७२ ॥ मिथुनानि यजेन्मन्त्री

---

योगोक्तिः। आद्यं बीजं मध्यं शक्तिः। ऋषिच्छन्दसीपूर्वोक्ते। अतएव पाशादिमन्त्रे ऋष्याद्याः पूर्वमुक्ता इति। प्रत्याहारक्रमेणोक्तम् ॥ ५८ ॥ षट्दीर्घेति। ऐं ह्रां हृत् ऐं ह्रींशिर इत्यादि प्रयोगः मन्त्रविदित्युत्तरेण सम्बध्यते। गन्धाद्यैरिति चतुर्थोक्तिः अतिशोभनैरिति। आवरणांगदेवताभ्यो विविक्तीकृतैरित्यर्थः॥ ६२ ॥ रविलक्षं १२ लक्षं प्रागीरिते भुवनेशीप्रोक्ते तेन साधको मन्त्रविदित्यनेन हृल्लेखादिबीजादौ वाग्भवादित्वमन्ते लक्ष्म्यन्तत्वं वदने मूलमित्यत्रेमं मन्त्रमित्युक्तं मौलिर्मुकुटः शेखरः शिरोभूषणं रत्नपूर्णोघटः रत्नघटः रक्तपद्मस्थामित्यपि ॥ ६३ ॥ ब्राह्मीघृतमिति। अत्र घृता चतुर्गुणे ब्राह्मीरसे घृतं पचेत्। उक्तंच अकल्कोपि भवेत्स्नेहो यः साध्यः केवले द्रवे इति। अन्यन्मातृकापटलोक्तमनुसन्धेयम्। सिद्धार्था गौरसर्षपाः चतुरंगुलो राजवृक्षः ॥ ६७ ॥ मन्त्रान्तरमाह। वागिति। बीजशक्तिः ऋषिश्छन्दश्च पूर्ववत्। मध्येनेति मायाबीजेन। दीर्घयुक्तेन षट्दीर्घयुक्तेन। प्रयोगस्तु। ऐं ह्रां ऐं हृत् ऐं ह्रीं ऐं शिर इत्यादि मन्त्रविदित्यनेन हृल्लेखादिबीजादौ वाक्पुटत्वमुक्तम्। मूलमितीमं मन्त्रम् ॥ ६८ ॥ श्यामांगीमित्यादि दानं वरः भयहरमभयं परमुत्कृष्टं चषकविशेषणम्। रक्तपद्मस्थामित्यायुधध्यानं पूर्ववत् ॥ ७० ॥ तत्वलक्षं २४ चतुर्विंशतिलक्षम्। स्वाद्वक्तैस्त्रिमधुराप्लुतैः ॥ ७१ ॥ हृल्लेखाविहिते भुवनेशीप्रोक्ते। तदुक्तं भुवनेश्वरीपारिजाते। मायाबी

षट्कोणेषु यथा पुरा ॥ अंगपूजाकेसरेषु पूज्याः पत्रेषु मातरः ॥ ७३ ॥ भैरवांकसमारूढाः स्मेरवक्त्रामदालसाः ॥ असितांगोरुरुश्चंडः क्रोधउन्मतभैरवः ॥ ७४ ॥ कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ॥ शूलं कपालं प्रेतं च बिभ्राणा क्षुद्रंदुदुभिः ॥ ७५ ॥ गणत्वगंबराभीमाः कुटिलालकशोभिताः॥दीर्घाद्यामातरः प्रोक्ताःहृस्वाद्या भैरवास्मृताः ॥ ७६ ॥ पूज्याःषोडश-पत्रेषु करालयाद्याः पुरोहिताः ॥ तद्बाह्येनंगरूपाद्याः लोकेशास्त्राणितद्बहिः ॥ ७७ ॥ एवमाराधयेद्देवीं शास्त्रोक्तेनैव वर्त्मना ॥ वशं नयति राजानं वनिताश्च मदालसाः ॥ ७८ ॥ अन्नमाज्येन जुहुयाल्लभते वसुवांच्छितम् ॥ सुगंधैः कुसुमैर्हुत्वा श्रियमाप्नोति वांच्छितां॥७९॥ यन्त्रेणानेन संजप्तमश्नीयादन्नमन्वहं ॥ भवेदरोगी नियतं दीर्घमायुरवाप्नुयात् ॥ ८०॥ अनंतो बिंदुसंयुक्तो मायाब्रह्माग्नितारवान् ॥ पाशादित्र्यक्षरो मन्त्रः सर्ववश्यफलप्रदः॥८१॥ ऋष्याद्याः पूर्वमुक्ताः स्युर्बीजेनांगक्रिया मता ॥ वरांकुशौ पाशमभीतिमुद्रां करैर्वहंतीं कलशासनस्थां ॥ बालार्ककोटिप्रतिमां त्रिनेत्रां भजेयमाद्यां भुवनेश्वरीं ताम् ॥ ८२ ॥ हविष्यभुक् जपेन्मन्त्रं तत्वलक्षं जितेन्द्रियः ॥ तत्सहस्रं प्रजुहुयाज्जपांते मन्त्रवित्तमः ॥ ८३ ॥ दधिक्षौद्रघृताक्ताभिः समिद्भिःक्षीरभूरुहां ॥ तत्संख्यया तिलैः शुद्धैः पयोक्तैर्जुहुयात्ततः॥८४॥ त्हल्लेखाद्या यजेदादौ कर्णिकायां यथाविधि ॥ अंगानि केसरेषु स्युः पत्रस्थामातरः क्रमात् ॥ ८५ ॥ इन्द्रादयः पुनः पूज्यास्तेषामस्त्राणि तद्बहिः ॥ एवं संपूजयेद्देवीं साक्षाद्वैश्रवणो भवेत् ॥ ८६ ॥ दृश्यते सकलैर्लोकैस्तेजसा भास्करोपमः ॥ अनेनाधिष्ठितं गेहं निशि-

---

जमिदं प्रोक्तं भुवनत्रयमत्तरम्। हृल्लेखे पञ्चयोगिशीति। पुरोदिते इति । स्वस्वबीजसंयुक्ताः यथा पुरेति स्वस्वशक्त्यादिकानि सध्यानानि भैरवांकेत्यादिना ध्यानविशेष उक्तः अन्यन्मातृकापटलोक्तमनुसंधेयम्। क्षुद्रद्वन्दुं भिर्डमरुः भैरवायुधध्यानं तु दक्षोर्ध्वादिक्रमाधःपर्यन्तम् । दीर्घाः आकाराद्याः अष्टौ तदाद्यामातरः अष्टौ यथाक्रमम्। अन्यन्ब्राह्मादिकं पूर्वोक्तमनुसंधेयम्। एवं ह्रस्वाद्या इत्यत्रापि। अत्र ए ओ अं इति पारिभाषिकह्रस्वानामपिग्रहणम्। प्रयोगस्तु । अं असितांगभैरवांकस्थायै आं ब्रां ब्राह्म्यै नम इत्यादि ॥ ८० ॥ मन्त्रान्तरमाह। अनन्त इति। अनन्त आकारः विंदुसंयुक्तस्तेन आं। ब्रह्मा मकारः अग्नी रेफः तारः प्रणवः ताभ्यां युक्तस्तेन क्रों । प्रथमबीजस्यपाश इति नाम अन्तस्यांकुश इति । यदाहुराचार्याः । बिंदनिकाप्रतिष्ठा सन्दिष्टापाशबीजमिति मुनिभिः निजभूर्द्दहनाध्यायानि शशधरखण्डान्वितोंकुशोभवतीति। अतएवपाशादि अत्तरो मन्त्र इति सर्ववश्येति विनियोगोक्तिः बीजशक्ती पूर्ववत् । बीजेनेति मायाबीजेन षट्दीर्घयुक्तेन पाशांकुशपुटिनेति परमगुरवः। प्रयोगस्तु आं ह्रां क्रों हृत् इत्यादि पाशांकुशपुटितबीजाद्यानां हृल्लेखाद्यानां न्यासोपि कर्त्तव्यः ॥ ८१ ॥ वरेति अभीतिमुद्रामभयं कमलासनस्थां रक्तकमलासनस्थाम् । आयुधध्यानं पूर्ववत् ॥८२॥ तत्वलक्षं चतुर्विंशतिलक्षम्। तदुक्तमाचार्यैः। जपेच्चतुर्विंशतिलक्षमेनं सुयंतितो मन्त्रवरं यथावदिति। हविष्यभुक् जितेन्द्रिय इति पुरश्चरणधर्म्माणामुपलक्षणम्। तत्सहस्रं चतुर्विंशतिसहस्रं प्रत्येकं षट्सहस्रमित्याह क्वचित् षट्सहस्रमित्येवपाठः। तदुक्तमाचार्यैः। पयोद्रुमाणां च

दीपशिखाकुलम् ॥ ८७ ॥ दृश्यते प्राणिभिः सर्वैर्मंत्रस्यास्य प्रभावतः ॥ सर्षपैर्लोणसंमिश्रैरा-
ज्याक्तैर्जुहुयान्निशि ॥ ८८ ॥ राजानं वशयेत्सद्यस्तत्पत्नीमपि साधकः ॥ अन्नवानन्नहोमे-
न श्रीमान्पद्महुतात्भवेत् ॥ ८९ ॥ राजवृक्षसमुद्भूतैः पुष्पैर्हुत्वा कविर्भवेत् ॥ अरोगी तिल-
होमेन घृतेनायुरवाप्नुयात् ॥ ९० ॥ प्राक्प्रोक्तान्यपि कर्माणि साधयेत्साधकोत्तमः ॥ आ-
लिख्याष्टदिगर्गलान्युदरगं पाशादिकं त्र्यक्षरं कोष्ठेष्वंगमनूनपरेषु विलिखेदष्टार्णमन्त्रद्वयम् ॥
अच्पूर्वापरषट्कयुग्लयवरान् व्योमासनानर्गलेष्वालिख्येन्द्रजलाधिपादिगुणशः पंक्तिद्वयं त-
त्परम् ॥ ९१ ॥ कोष्ठेष्वष्टयुगार्णमात्मसहितां युग्मस्वरांतर्गतां मायां केसरादिग्दलेषु विलि-

---

समित्सहस्रं षट्कं दधिक्षौद्रघृतावसिक्तामिति । जपान्ते इति जपाव्यवधानेन नियमस्य एवेत्यर्थः ।
मन्त्रवित्तम इत्यनेन होमे स्वहान्तता सूचिता क्षौद्रं मधु क्षीरं भूरुहामिति । अश्वत्थोदुंबरप्लक्षव-
टानां तत्संख्ययाश्चतुर्विंशतिसहस्रसंख्यया हृल्लेखाविहिते भुवनेशीप्रोक्ते तत्पीठशक्त्योऽत्रापि पीठे
पूज्यइत्यर्थः । नवशक्तिसमन्वितेत्यनेन पोठमन्त्रस्यान्यत्वं तेन पीठमन्त्रे बीजत्रययोग इत्युक्तं अत्र
षट्कोणकर्णिकं अष्टदलं पद्मं षोडशदलं नास्ति । तत्र पूजाया अनुक्तत्वात् । यथाविधीति बीज-
द्वयपुटितबीजाद्या इत्युक्तम् । मातर इति भैरवांकास्तथाः रज्यत इतिकर्मप्रत्यये न देवानुग्रह उक्तः
साक्षाद्वैश्रवणः कुबेरोपमः । वशयेदिति । तत्र जपप्रकार उक्तः तन्त्रान्तरे क्लींकाराद्यन्तयोर्नाम आं
क्रों च विनियोजयेत् इति ॥ ८१ ॥ ८२ ॥ घटार्गलं यन्त्रमाह । आलिख्येति । अत्राष्टानामर्गलानां
साम्यानयनाय प्रकार उच्यते । कर्णार्द्धमित्या मध्याद्दिसूत्रांकास्तत्द्वयेद्वये चतुरस्रान्तरे सूत्रैः परि-
ध्येधनमिच्छया। वास्तुमण्डलोक्तरीत्या । एकं चतुरस्रं प्रागुत्तरसूत्रोपेतं कृत्वा तत्र कोणसूत्रार्द्धमानेन
चतुर्दिक्षु मध्यात्प्रागुदक्सूत्रे अङ्कयेत् । द्वयोर्द्वयोरंकयोः सूत्रदानाद्दिग्गतकोणं पूर्वव्यतिभेदि चतुर-
स्रान्तरं जायते । ततोऽष्टपरिधीना मिच्छयावर्द्धनं कृत्वा अर्गलाकारं कुर्यात् सर्वत्र दिक्कर्णगुणा
मार्ज्याःएवमष्टौ दिर्गलान्यालिख्य मध्ये वृत्तं कृत्वा तत्र पाशादि त्र्यक्षरमालिख्य चतुरस्रद्वयान्तः
सन्धिषु वृत्तं कृत्वा तदष्टकोष्ठेषु पूजाप्रकारेण आग्नेयादिविदिक्कोष्ठेषु हृच्छिरः शिखाकवचाणूना-
लिख्य मध्ये अग्रभागे नेत्रं दिक्कोष्ठेष्वस्त्रमालिखेत् । तदुक्तं षष्टकोणेषु विलिखेत् षडंगानि,यथाक्रमं।
अग्नीशासुर वायव्यकोणेषु मनुवित्तमः । कवचान्तानि संलिख्य,मध्ये नेत्रं लिखेद्बुधः । चतुर्दिग-
न्तकोणेषु चतुर्वास्त्रं लिखेत् प्रिये इति । तदुपर्यष्टकोष्ठेषु पाशाद्यष्टाक्षरमत्रादिलिखित्वा पुनश्च
बाह्यसंधिषु वृत्तं कृत्वा तदुत्पन्नेष्वष्टसु कोष्टेषु कामित्यष्टाक्षरमालिख्यवर्द्धिताष्टपरिधिसंधिषु वृत्तं
कृत्वा तदुत्पन्नेषु षोडशकोष्टेषु अष्टयुगार्णं शाक्तं षोडशाक्षरं विलिखेदित्यनेन पूर्वेणान्वय इति ।
केचन अन्ये चतुस्र द्वयान्तर्वहिःसंधिषु वृत्तद्वयमकारयित्वा वर्द्धिताष्टपरिसंधिवृत्ताद्बहिर्वृत्तं कार-
यन्ति । तत्र कोष्टेष्वष्टयुगार्णं विलिखेदित्याहुः । अन्येतु । चतुरस्रबाह्यसंधीनामुपरिवृत्तमेकं वर्द्धि-
ताष्टपरिधिसंधिषु च द्वितीयं वृत्तं कारयन्ति । तत्पक्षत्रयमप्यसंबद्धं श्रौतस्य क्रमस्य बाधितत्वात्
कर्णिकावृत्तलग्नाधोमुखत्रिकोणाकाराष्टकोष्ठानां शून्यत्वात् च । किंच पूर्वपक्षे वृत्तत्रयकल्पनम-
न्यपक्षयोर्वृत्तद्वयकल्पनं चाप्रामाणिकम् । यावता विना न निर्वाहस्तावदेव कल्पनामर्हति । ना-

खेन्मूलं त्रिपंक्तिः क्रमात् । त्रिःपाशांकुशवेष्टितं । लिपिभिरावीतं क्रमाद्युत्क्रमात् । पद्म-
स्थेन घटेन पङ्कजमुखेनावेष्टितं तद्बहिः ॥ ९२ ॥ घटार्गलमिदं यंत्रं मन्त्रिणां प्राणभृन्मतम्।
पाशश्रीशक्तिकन्दर्पकामशक्तीदिरांकुशाः ॥९३॥ प्रथमोष्टाक्षरो मन्त्रः ततः कामिनिरंजिनि।

---

धिकमत एकमेववृत्तं कल्पनीयं उपरिवृत्तस्य तु पद्मकर्णिकात्वेन सर्वैरेवांगीकरणात् । अतो वक्ष्य-
माणसाम्प्रदायिकार्थानुसरणमेव श्रेयः तत्परं अच्पूर्वंत्यालिख्य कोष्टेष्वष्टयुगार्णमालिख्य केसरगां
मायां विलिखेदिति संबंधः अचां स्वराणां नपुंसकव्यतिरिक्तानां नपुंसकव्यतिरिक्तत्वं पूर्वापरषट्क-
शब्देन प्राप्यते । पूर्वषट्कं अ आ इ ई उ ऊ अपरषट्कं ए ऐ ओ औ अं अः एतद्युक्तान्लयवरान्
व्योम्नआसनास्थितिर्येषु ते व्योमासनास्तानिति बहुव्रीहिः कार्यः स्यादास्यात्वासनास्थितिरिति-
कोशः । अर्गलेषु इन्द्रजलाधिपादि पूर्वपश्चिमादि गुणशः अक्षरत्रितयक्रमेण पंक्तिद्वयाल्लिखेत्
इमानि सर्वाणि सबिंदूनि । तत्र लेखनप्रकारः।पूर्वार्गलायां वह्नितरेखासंधिकतद्वृत्तमारभ्योत्तरतः
क्लं क्लां क्लिं इत्यर्गलांतमा लिख्य पुनर्दक्षिणतोर्गलाग्रमारभ्य ह्वौं ह्वुं ह्वूं इति वृत्तान्तमालिखेत्।
एवं प्रादक्षिण्यं भवति । तदुक्तं संहितायां।शक्रेरजलवन्ह्याख्यं बिंदुव्योमान्वितं कुरु । तद्बीजस्वरसं-
युक्तं ऋ ॠ ऌ ॡ विवर्जितम् । एकं द्वादशधा तत्र चतुर्बाकुब सुन्दरि । वृत्तादिवसुकोणान्तं
लिखेद्वृतांतकं प्रिये । आद्यं प्रिये । आद्यं त्रिकं पूर्वमुख्ये लिखेदुत्तरतः प्रिये । द्वि-
तीयं पूर्वमुख्यं तु लिखेदक्षिणतः सुधीरिति । पश्चिमार्गलायां दक्षिणतो वृत्तमारभ्य ह्वं ह्वैं ह्वौं इ-
त्यर्गलांतमालिख्य पुनरुत्तरतोर्गालाग्रभारभ्य ह्रौं ह्वं ह्वः इति वृत्तांतमातर्मलिखेत्। तदुक्तं। तृतीयं
पश्चिमे भागे तथा दक्षिणतो लिखेत्। चतुर्थमार्गले भंगोतद्वत्पश्चिमे तूत्तरांतत इति । एवमाग्ने-
यार्गलायां पूर्वतः पूर्ववत् ह्यं ह्यां ह्यिं इत्यालिख्य पश्चिमतः पूर्ववत् ह्यौं ह्युं ह्यूं इति लिखेत् । त-
दुक्तं। भुवं हित्वार्कबीजानां तत्र वायुं नियोजयेत्। अग्न्यर्गलायां त्रितयमाद्यं पूर्वत आलिखेत्।
तथा पश्चिमतोप्यन्यत् त्रिकं संविलिखेत्प्रिये इति एवं वायव्यर्गलायां पश्चिमतः पूर्ववत् ह्यें ह्यैं ह्यौं
इत्यालिख्य पूर्वतः पूर्ववत् ह्यौं ह्यं ह्य इति लिखेत् । तदुक्तं । मारुतार्गलके तद्वत् लिखेत्पश्चिम-
तस्त्रिकं। पूर्वतोपि च देवेशीति । एवं याम्यार्गलायां पूर्ववत्। ह्वं ह्वां ह्विं इत्यालिख्य पश्चिमतः पू-
र्ववत् ह्वौं ह्वुं ह्वूं इति लिखेत्। तदुक्तं। वायुं हित्वार्कबीजानां वरुणं तत्र निक्षिपेत्। याम्ये त्रिकं
पूर्वतस्तु द्वितीयं पश्चिमांतमिति । एवं उत्तरार्गलायां पश्चिमतः पूर्ववत् । ह्वें ह्वैं ह्वौं इत्यालिख्य
पूर्वतः पूर्ववत् ह्वौं ह्वं ह्वः इति लिखेत्। तदुक्तं। तथोत्तरार्गलायां तु त्रिकं पश्चिमतो लिखेत् । च-
तुर्थं पूर्वतो देवीति एवं कन्यार्गलायां दक्षिणतः पूर्ववत् क्रं क्रां क्रीं इत्यालिख्योत्तरतः पूर्ववत् ।
क्रौं क्रुं क्रूं इतिलिखेत्। तदुक्तं। नीरं हित्वार्कबीजानां रेफं तत्र विनिक्षिपेत्। लिखेद्रक्षोर्गालायां
तु त्रिकमाद्यं त्रिकं परम्। दक्षिणोत्तरतो मन्त्रीति एवं शैवार्गालायांमुत्तरतः पूर्ववत्। क्रें क्रैं क्रौं
इत्यालिख्य दक्षिणतः पूर्ववत्। क्रौं क्रं क्र इति लिखेत्। तदुक्तं। क्रमाच्छैवार्गले पुनः आदावुत्तरतो
देवी पश्चादक्षिणमार्गत इति। पद्मपादाचार्यास्तु । चतुरस्रद्वयात्मकमष्टकोणं लिखित्वा कोणाष्ट-
गतरेखाद्वयमृजुप्रसारयेत्। यथा रेखाद्वयं मध्ये परस्परं लग्नं क्षुद्रदुंदुभ्याकारं भवति । तथा। प्र-

स्वाहांतोष्टाक्षरः सद्भिरपरः परिकीर्त्तितः ॥ ९४ ॥ ह्रीं गौरिरुद्रदयिते योगेश्वरि सवर्मफट्।
द्विठान्तः षोडशार्णोयं मन्त्रः सद्भिरुदीरितः ॥ ९५ ॥ लिखित्वा भूर्जपत्रादौ यन्त्रमेतद्यथा-

---

सार्यं दुन्दुभिमध्योभयभागयोः वृत्तद्वयं विधाय बहिर्वृत्तस्याष्टदुन्दुभ्यग्ररेखाद्वयादारभ्य अर्गलसमग्राण्यष्टदलानि विरच वृत्तत्रयाद्बहिर्व्यबुजपुटितं घटं रचयेद्ददिति यन्त्रशरीरस्य निर्माणस्य प्रकारः चतुरस्रसंबंकादष्टकोष्टेष्वंगानि तदनंतरकोष्टेषु पाशाद्यष्टाचरं तदन्तरकोष्टेषु कामिन्याद्यष्टाचरं अर्गलेषु अचपूर्वेति तदनंतरालकोष्टद्वंद्वेषु दुंदुभ्याकारेषु षोडशाचरं लिखेत् । इतिमंत्रलेखनस्य एवं श्रौतः क्रमोप्यनुग्रहीतो भवति अयं च पचः साम्प्रदायिकः । तदुक्तं दक्षिणामूर्त्तिसंहितायां । ततो भूबिंबयुगलं संपुटीकृत्य योजयेत् । अष्टकोणं यथा देवि जायते हृद्मनोहरम् । अष्टदिक्षु तदग्राभ्यां रेखे आक्रम्य मांत्रिकः रेखाभ्यामर्गलाकारं विदध्याद्देवि सुन्दरम् । एकेनैव तु मानेन रचयेदर्गलाष्टकं । वृत्तं तदग्रे चन्द्रस्य बिंबवद्रचयेद्बुधः । पुनरंतः समाकृष्य पूर्ववद्वृत्तमुत्तमम् । विलिख्यसाधकेन्द्रस्तु वसुकोष्टयुगं क्रमात् । व्यक्तं यथाभवेद्देवि कोणानां च वसुद्वयं । अर्गलानि च रम्याणि यथासम्यक् भवंति हि इति । ततस्तदुपरि अष्टदलपद्मपत्रेषु केसरमां मायां चतुर्थसरोमायाशब्दवाच्यः तथाच निघंटुक मातृकायां ईशमूर्त्तिर्वामनेत्रं शेषरः कौटिलस्तथा । वाग्मी शुद्धश्च जिह्वाख्यो मायाविष्णुः प्रकाशित् इति । आत्मा आत्ममंत्र हंस इतिताभ्यां सहितां उभयपार्श्वयुतां अकाराद्याक्षाराद्यंतर्गलां लिखेत् । तेनायमर्थः प्रतिकेसरं अं ह्रं सः ई हंसः आमिति सप्ताचराणि लिखेत् । तदुक्तं । हंसः पदं वामनेत्रं बिंदुबिंदुपरिभूषितं पुनर्हंसः पदं चैतत्पश्चार्णं मनुमालिखेत् । स्वरं इन्द्रोदरगतं सप्तार्णं चाष्टधा भवेत् । इति । आचार्याश्च । पद्मस्य केसरेषु च युगस्वरात्मान्वितां मायाभिति । पद्मपादाचार्यास्तु । अं हं ईं सः आं एवमादयः केसरेषु लेख्या इत्याहुः दलेषु त्रिपंक्ति क्रमात् । मूलं लिखेत् । तत्र पंक्तिद्वयं तिर्य्यग्विलिख्य तदुपर्येकां पंक्तिं लिखेदितिसाम्प्रदायविदः अन्येतु अधोधः पंक्तित्रयलेखनं वदंति । त्रिरिति तत्रैका पाशांकुशाभ्यां द्वितीयाक्रमालिपिभिस्तृतीयांत्रिकं व्युत्क्रमलिपिभिरित्यर्थः ।तदुक्तं पाशाकुशाभ्यां तद्बाह्ये वृत्ताकारेण वेष्टयेत् । अनुलोमप्रकारेण मातृकावेष्टनं प्रिये तथैव प्रतिलोमेन मातृकावेष्टनं लिखेदिति । आचार्याश्च । पाशांकुशबीजाभ्यां प्रवेष्टयेत् बाह्यतश्च नलिनस्य । अनुलोमविलोमगतैः प्रवेष्टयेदक्षरैश्च तद्बाह्ये इति पद्मस्थेनतूर्द्ध्वमुखाब्जकर्णिकास्थेन घटेन पङ्कजमुखेन अधोमुखपङ्कजवदनेनवीतं प्रावृतमुपदारूपम् । अष्टार्णमन्त्रमाह । पाशेति । पाशं आं कन्दर्पः कामबीजं ईंदिरा श्रीबीजं अंकुशः क्रों अयमपि स्वतन्त्रो मन्त्रः अस्य ऋष्यादिकं यथा ऋष्याद्या अजगायत्रशक्रयःसमुदीरिताः। षट्दीर्घमाप्यांगानि सर्वैरष्टांगमिष्यते । आनन्दरूपिणीं देवीपाशांकुशधनुःशरान् । बिभ्रतीं दोर्भिररुणां कुचार्त्तांहृदि भावयेत् । अष्टलक्षं जपेत्साज्यैर्द्दशांशं जुहुयात्तिलैः । शाक्ते पीठे यजेद्देवीं । हृल्लेखाद्याभिरंगकैः । मातृभिर्लोकनाथैश्च वज्राद्यैः पंचमावृतिः । स्त्रीवश्याकर्षणादौ तु विनियोगउदाहृत इति । द्वितीयमष्टाचरमुद्धरति । तत्तद्दिति । अयमपि स्वतंत्रो मंत्रः अस्यऋष्यादिकं यथाऋषिःसमोहनश्छंदो निचृच्चोक्तास्य;देवता । सर्वसंमोहिनोचांगं द्विरावृत्तपदैर्भवेत् । श्यामांगीं व-

विधि। धारयेद्वामबाहौ वा कण्ठे वा निजमूर्द्धनि ॥ ९६ ॥ वशयेत्कलशान्मर्त्यान् विशेषेण महीपतिम्। नीलपट्टे विलिख्यैत द्गुटिकीकृत्य तत्पुनः ॥ ९७॥ साध्यप्रतिकृतौ सिक्थनिर्मितायां हृदि न्यसेत्। पात्रे त्रिमधुरापूर्णे निक्षिप्यैनां विधानतः ॥ ९८ ॥ सम्पूज्यगन्धपुष्पाद्यैर्बलिं निक्षिप्य रात्रिषु। मूलमन्त्रं जपेन्मन्त्री नित्यमष्टसहस्रकम् ॥ ९९ ॥ सप्ताहाद्वांच्छितां नारीमाहरेत्स्मरविह्वलाम्। भूर्जपत्रे विलिख्यैतत् गुटिकीकृत्य तत्पुनः ॥ १०० ॥ लाक्षया ताम्ररजतकांचनैर्वेष्टयेत्क्रमाम्। तत्कुम्भे न्यस्य सम्पूज्य यथावद्भुवनेश्वरीम् ॥१॥ संस्पृश्य तज्जपेन्मन्त्री दिवाकरसहस्रकम्। अभिषिच्य प्रियं साध्यं बध्नीयाद्यन्त्रमाशि-

---

नकीं दोर्भ्यां वादयंतीं सुभूषणां। चंद्रावतंसां विविधगानैर्मोहयंतीं जगत्। पूर्वमेवातयुद्दंद्वं दशांशं जुहुयात्ततः। मधूकजैस्त्रितध्वक्तैः सर्वं मोहयते जगत्। पूजामातंगिनी पीठे इत्यद्यास्तु त्रिकोणके पंचकोणे पंचबाणाः केसरेष्वंगपूजनं। अनंगकुसुमाद्यास्तु पत्रेष्वग्रे च मातरः। लोकपालैश्चवज्राद्यैः समावृत्तिरियंमतेति। नारायणीयेतु। लाक्षया लिखितं वामहस्तेऽष्टदलपंकजे। वश्यं स्यात्तद्भितं मंत्रं पूर्ववत् क्रिययापि च भूर्ज्जे लिखित्वा चाष्टारे धारयेद्वाथ वश्यकृत्। मंत्रं विविक्तकुड्यादाविमं संलिख्य साधकः। पश्यन्त्येव जपेन्मौनी तूर्णमायातिकाचितेति ॥ ८५ ॥ षोडशाचरमुद्धरेति। ह्रीँमिति। वर्म हुं अयमपि स्वतंत्रो मंत्रः अस्यऋष्यादिकं यथा। ऋषिस्त्वजः समुद्दिष्टश्छंदोनुष्टुप्चदेवता। गौरी चंडकात्यायनी वश्यसंपत्प्रदायिका षट्दीर्घमायया कुर्य्यात्षडंगानि मनोरथ। हेमाभां बिभ्रती दोर्भिदर्प्पणांजन साधनं।पाशांकुशौ सर्वभूषां तां गौरीं सर्वदा भजे॥एकलचं जपेन्मंत्रं तद्दशांशं हुनेत्घृतैः।धर्म्मादिकल्पिते पीठे पीठशक्तीरिमा यजेत्। प्रभा माना च वाग्वागीश्वरीस्यात् ज्वालिनी परा। वामा ज्येष्टा च गुह्यशक्तिश्च ता नव। क्रस्वत्रयक्लीबवर्जस्वराढ्यं भृगुणान्विता। गौं गौरि मूर्त्तयेहृच पीठमंत्रश्च कल्पिते। एवं पीठे यजेद्देवीं चंदनाद्यैर्मनोहरैः। सुभगायै च विद्मांते ह्रें ते स्यात्काममालि चान्ते स्याद्धीमहि तन्नो च गौरीस्यात्तु प्रचोदयात्। गायत्र्यानया सर्वानुपचारान्प्रकल्पयेत्। अंगानि पूर्वमभ्यर्च्य सुभगाद्यास्ततो यजेत्। भृगुः सांवुः सहितुर्यषष्टाकेंदुस्तदादिकाः।सुभगा ललिता चान्या कामिनी काममालिनी।दिक्ष्वन्यत्राप्यायुधानि लोकपालैस्तदायुधैः। वामाचरानामनिशया वामोरो विलिखेन्निशि। आच्छादयन्वामदोष्णा तन्मना प्रजयेन्मनुं। शतं सहस्रं लोलाची मानयेत्काममोहितां। नारायणीयेतु। न वश्ये दक्षिणं बिंदुरिति विशेषः एतन्मंत्रेण संजप्तं गंधपुष्पजलादि च। दत्तं संसेवितं सर्वजनता वश्यकारकं। चंडकात्यायनी विद्या त्रिषु लोकेषु दुर्लभेति। यथाविधिलिखित्वेत्यनेन पुष्यार्क्कादौ कृतोपवासादिरित्युक्तं। पुष्यार्कस्याष्टमे भागे इत्युक्तः नीलपट्टे विलिख्यैतदिति। अनामारक्तादिभिः। तदुक्तं लिखेदनामारक्तेन लाचेंद्रियमलैः सहेति। सिक्तं मधूच्छिष्टंविधानतःसंपूज्येति हस्तमात्रखातां रक्तैगंधादिभिरित्यर्थः। उक्तंच नारायणीये। कांजिका धोनिधाप्यैनां रक्तपुष्पैः समर्चयेदिति। बलिमितिपायसादिना। त्र्यचरेणैव निक्षिप्येदिति। दत्वा मूलमंत्रं त्र्यर्णं आकर्षे दिति प्रकारांतरेण वा।तदुक्तं नारायणीये। तापयेत्पुत्तलीं चाग्नौयथासा न विलीयते इति। ताम्रेति। पूर्वोक्तप्रमा-

खम् ॥ २ ॥ कान्तिं पुष्टिं धरारोग्ययशांसि लभते नरः । भित्तौ विलिख्य तद्यन्त्रं पूजयेन्नित्यमादरात् ॥ ३ ॥ भूतप्रेतपिशाचास्तं न वीक्षितुमपि क्षमाः । तद्विलिख्य शिरस्त्राणे साधितं धारयेद्भटः ॥ ४ ॥ युद्धे रिपून् बहून्हत्वा जयमाप्नोति पार्थिवः ॥ वज्रांकिते वह्निपुरद्वये तां पाशांकुशाद्यामुदरस्थसाध्यम् । मध्येथकोणेष्वथ बाह्यवृत्ते पुनः पुनस्तां विलिखेत्समंतात् ॥ ५ ॥ भूर्जे लिखितमेतत्स्यात्सर्ववश्यकरं नृणाम् । आरोग्यैश्वर्यजननं युद्धेषु विजयप्रदम् ॥ ६ ॥ लिखेत्सरोजे स्वरकेसराढ्ये वर्गाष्टपत्रे वसुधापुरस्थे । पाशांकुशाभ्यां गुणशः प्रबद्धां मायां लिखेन्मध्यगतां ससाध्याम् ॥७॥ सर्वोत्तममिदं यन्त्रं धारितं कुरुते नृणाम् । आरोग्यैश्वर्यसौभाग्यविजयादीननारतम्॥८॥इति श्रीशारदातिलके भुवनेश्वर्यामन्त्रकथनंनाम नवमःपटलः॥ ततोभिधास्ये त्वरितां त्वरितं फलदायिनीम् । तारो मायावर्मबीजमृद्धिरीशस्वरान्विता॥१॥ कूर्मस्तदन्त्यो भगवान्क्ष्स्त्रीदीर्घतनुच्छदं । संवर्तो भगवान्मायाफडन्तो द्वादशाक्षरः ॥ २ ॥ मुनिरर्जुनमाख्यातो विराट्छन्दः समीरितः। त्वरिता देवता प्रोक्ता पुरुषार्थफलप्रदा॥ ३ ॥

---

वैः यथावदिति । चात्वर्युक्तमार्गेणतंकुंभं मंत्रमिति कर्णिकाख्यं दिवाकरेति । द्वादश भित्तौ विलिखेदिति । गैरिकया । तदुक्तं । गैरिकया लिखेद्यंत्रं गृहभित्तौ वरानने । ग्रहाणां चैव सर्वेषां द्विषतां चैव नाशनं । विलिख्य पूज्यते यत्र सर्वे मूढाः सुमोहिताः । भवंति वशगास्तस्य नपुनर्यांति विक्रियां । शत्रवो दुर्जयादुष्टाः सर्वेतेतस्य किंकराः । न तस्य जायते दुष्टा हिंसको न च बाधकः । ग्रहयक्षपिशाचाश्च भूतवेतालदंष्ट्रिण इति । यंत्रांतरमाह । वज्रेति । वह्निपुरद्वये परस्परव्यतिभिन्ने षट्कोणे वज्रांकिते स्वस्तिकस्थाने वह्निपुरद्वये मध्ये इति । व्यधिकरणसप्तम्यौ । तां मायां तदितिशयाक्षरं ॥ १०८ ॥ यंत्रांतरमाह । पाशांकुशाभ्यां प्रबद्धा मायां गुणशस्त्रिशो लिखेदिति संबंधः प्रबद्धां लेखकदोषवशात् । अत्र पद्येलिखेदितिपदस्य पुनरुक्तिः भूर्जे सरोजइति क्वचित्पाठः । यदालिखेदित्येव पाठः । तदा लिखेत्सरोजं स्वरकेसराद्यं वर्गाष्टपत्रं वसुधापुरस्थमितिपठनीयं । अन्ये लिखेदित्येव पठित्वालिखेद्यंत्रमिति शेषः । तत् कीदृगित्यपेक्षायां सरोजे मायां लिखेदिति वदंति ॥ इति शारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायांपदार्थादर्शाभिख्यायां भुवनेश्वरीमंत्रकथनंनाम नवमः पटलः ॥९॥ श्रीगणेशाय नमः । एवं भुवनेश्वरीमंत्रानुक्त्वा अपाशादि मंत्रस्य नित्यामंत्रत्वात् प्रसंगादन्यात्वरितानित्यादि मंत्रान् वक्तुमुपक्रमते । तत इति । त्वरितफलदायिनीमिति त्वरिता शब्दव्युत्पत्तिर्दर्शिता तदुक्तं । भक्तियुतानांत्वरया सिद्धिकरीचेति मंत्रिणां सततं । देव्यास्त्वरिताख्या ख्यात् त्वरितंच्वेलग्रहादिहरणतयेति मंत्रमुद्धरति । तारइति । तारःप्रणवः मायाशक्तिबीजंवर्मबीजंहुंऋद्धिः कलान्यासे खः ईशस्वर एकादशस्वर एतेनान्वितः तेन खे कूर्मः क्षकारस्तदंतः छः भगवानेकारयुक्तस्तेन छे क्षः स्त्रीस्वरूपं अत्र चकारः सविसर्गो ज्ञेयः साठंतमालयमित्युक्तेः दीर्घतनुच्छदं हूं संवर्त्तः क्षः भगवानेकारयुक्तः तेन क्षे अस्यास्तद्देव्याः शापोस्तीति प्रसिद्धिः के च न क्षे इति वर्णं कीलकं मंन्यंते तदर्थं चक्षेकारं पूर्वमुच्चार्य :ह्रूंकारमुच्चारयति दक्षिणामूर्त्तिसंहितायां तु कवचं स्त्रीमिमे बीजकीलके तु प्रकीर्त्तिते इति । के चेन पूर्वं ह्रूं कारं

मायाविवर्जितान्वर्णान्मूर्ध्नि भालेगले हृदि । नाभिगुह्योरुयुग्मेषु जानुजंघापदेषु च ॥ ४ ॥
विन्यस्य व्यापकं कुर्यात्समस्तेनैव साधकः । कूर्माद्यैः सप्तभिर्वर्णैः पूर्वपूर्व विवर्जितैः ॥ ५ ॥
द्वाभ्यां द्वाभ्यां षडङ्गानि कल्पयेत्साधकोत्तमः । श्यामाबर्हिकलापशेखरयुतामाबद्धपर्णांशुकाम्
गुञ्जाहारलसत्पयोधरभरामष्टाहियान् बिभ्रतीम्। ताटङ्काङ्गदमेखलागुणरणन्मञ्जीरतां प्राप्तिता
न्कैरातीवरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे ॥७॥ लक्षं संजप्य मन्त्रज्ञो मनुमेनं जितेन्द्रियः।
दशांशं जुहुयाद्बिल्वैर्मधुराक्तैःसमिद्वरैः ॥ ८ ॥ हृल्लेखाकल्पिते पीठे नवशक्तिसमन्विते ।
पूजयेत्त्वरितां देवीं वक्ष्यमाणविधानतः ॥ ९॥ संवर्तको विन्दुयुतः कवचं सकलं वियत् ।
वज्रदेहं पुरुद्वन्द्वं सम्भाष्यहिंगुलद्वयम् ॥ १० ॥ गर्जयुग्मं विपत्सेन्दुवर्मां त्योदीर्घबिन्दुमान् ।
पञ्चाननायंहृदयपीठमन्त्रः प्रकीर्तितः ॥ ११ ॥ दद्यादासनमेतेन मूर्तिं मूलेन कल्पयेत् ।
अङ्गैःप्रणान्तां गायत्रीं केसरेष्वर्चयेत् क्रमात् ॥१२॥ दलेषु पूजयेदेताः श्रीबीजाद्याःसुभूषिताः।
हुङ्कारीं खेचरीं चण्डां छेदनीं क्षेपणीं स्त्रियम्॥ १३॥ हूङ्कारीं क्षेमकारीं च लोकेशांबरभूषिताः।
फट्कारीमग्रतो बाह्ये कोदण्डशरधारिणीम् ॥१४॥ द्वारस्यपार्श्वयोः पूज्ये हैमवेत्रकरांबुजे ।
जयाख्या विजयाख्या च किङ्कराय पदं ततः॥१५॥ रक्षरक्षपदस्थान्ते त्वरिताज्ञा स्थिरोभव।
वर्मास्त्रान्तेत मनुना किङ्करं तं बहिर्यजेत् ॥ १६ ॥ लगुडं बिभ्रतं कृष्णं कृष्णबर्बरमूर्द्धजम् ।
आरण्यैररुणैः पुष्पैरतिमुक्तैः सुगन्धिभिः ॥ १७ ॥ पूजयेद्धूपदीपाद्यैर्नृत्यगीतैर्मनोरमैः ।

---

पश्चात् चेकारमिति महतो आचार्याणां विप्रतिपत्तिस्तत्र यथा वृक्षादीनां क्वचिद्ग्रंथयो भवंति त-
थैव मंत्राणामपि स्वभावादेव कीलाख्याद्ग्रंथयो भवंति तेनकालविलंबामिथ्यादयो दोषा भवंति।
स च अक्षरविशेषग एव जायते। तत्र केषु चित्मंत्रेषु तदक्षरमुद्धृत्य शास्त्रीयेण केन चिदक्षरेण प-
रिपूर्णजपं कुर्वंति केषु चित्तदनुद्धृत्यैव वा क्षरांतरप्रक्षेपेण जपं कुर्वंति। केषु चित्कीलाख्यो विद्यमानो
पिदोषावहो न यथा वृक्षादिषु विद्यमाना अपि ग्रंथयः केषु चिदेव दोषावहाः केषु चित्तुगुणायै
व भवति यथा चंदनस्य त्वयः श्रेष्टा ग्रंथिकर्पटकोटरा इति। यदाहुः दुष्टोगुः कीलको ज्ञातः सि-
द्धेस्तु प्रतिबंधकः।अदुष्टः कीलको ज्ञातः स्यात्सुसिद्धिप्रदायक इति। अत्र तु तत्कीलकदोषापहारा-
य मायाद्वयसहितो मंत्र उद्धृतः। तदुक्तमाचार्यैः तारांतेस्वादावपि मायाबीजं प्रयोजयेत् मंत्री तेन
हि वांछितसिद्धिः भूयादचिरेण मंत्रविदामति।नारायणीयेपि।फट्ताराद्यंतयोर्ह्रींव्या युक्तं तत्सर्वसि-
द्धिदमिति।प्रणवो बीजं मायाशक्तिः हुं बीजमिति। पद्मपादाचार्याः पुरुषार्थेति विनियोगोक्तिः॥३॥
अक्षरन्यासमाह। मायेति। अनेन दशवर्णानामेव न्यासः तत ऊरुयुग्मादिस्थानद्वयेपि एकैकाक्ष-
रन्यासः पदेष्विति पादयोः साधक इत्यनेन। व्यापकमायासहितो च्चारणमुक्तं। षडंगमाह कूर्माद्यै-
रिति। कूर्मश्चकारस्तस्याद्याः खे बहुवचनं आद्यर्थे तेने खेप्रभृतिभिः सप्तभि वर्णैःअत्र कूर्माद्यैः सप्त-
भिर्वर्णैरिति।प्रधानेन पूर्वक्रियान्वये प्रकाराकांक्षायामरुणाधिक न्यायेन द्वाभ्यामित्यस्य याष्टिकोन्वयः
तेन खे च इति हृत्। च छे शिरः छेत्वः शिखेत्यादि तदुक्तं नारायणीये। दशाक्षरं मंत्रमुद्धृत्य नव-
मांतं तृतीयादिपदस्यावर्णसप्तकम्। तेनांगानि द्विवर्णानि कर्त्तव्यान्युपदे शतइति केचित्तु कूर्मश्चका-

रः स आद्यो येषां तैः सप्तभिर्वर्णैरिति व्याचक्षते नमते मायाविवर्जितानिति पद मनुहृत्य यथा-विभक्तिविपरिणामेन विवर्जितैरिति कृत्वा प्रकृते योजनीयं तेन चकारादिफडंतैः षडंगं । तदुक्तं-कादिमते। दशाक्षरं मंत्रमुद्धृत्यविद्या चतुर्थवर्णादि सप्तभिर्वर्णैस्त्वथ । कुर्यादंगानि युग्मार्णैः षट्क्रमेण करांगयोरिति संहितायां च। च छे युगंहृच्छिरस्तु छेचो युग्मं शिखा ततः चः च्चोयुगं च कवचं चो ह्वमात्मयुगं तथा ङ् चे नेत्रे तु विन्यस्य चे फडस्त्रं प्रकीर्त्तितमिति। एतत्पक्षद्वयमपि गुरुसंप्रदायानुसारेण बोद्धव्यं। साधकोत्तम इत्यनेन ह्रीमिति कुंडलिनीबीजस्य षट्दीर्घयुक्त मायाबीजस्य च अंगमंत्रस्य अंगमंत्रेषु योगः सूचितःअत एव नारायणीये उपदेशत इत्युक्तिः ध्यानमाह। श्यामामिति कलापो बर्हः इदं वलयादीनामुपलक्षकं। तदुक्तं नारायणीये मायूरवलयापिच्छमौलिः किसलयांशुकासिंहासनस्थामायूरच्छत्रबर्हध्वजान्विता इति। ताटंकादीन् प्रापिता नष्टाहिपान् बिभ्रतीं। तत्रानंतकुंडलिकौ ताटंकतांगतौ वासुकीशंखपालौ अंगदतांगतौ तक्षकमहापद्मौ मेखलतांगतौ। कर्कोटकपद्मनागौ नूपुरतांगतौध्येयौ तदुक्तं नारायणीये। विप्रा हिकुंडलाराजनागकेयूरसंयुता वैश्यनागकटीबद्धाह्रषलोनागनूपुरेति। येषां ध्यान मुक्तं। अनंतकुलिकौ विप्रौ वन्हिवर्णावुदाहृतौ प्रत्येकं तु सहस्रेणफणानां समलंकृतौ वासुकिः शंखपालश्च क्षत्रियौ पीतवर्णकौ प्रत्येकं तु फणासप्तशतसंख्याविराजितौ।तक्षकश्च महापद्मो वैश्यावेतावश्री स्मृतौ नीलवर्णौफणापं च शतयुक्तोत्तमांगकौ। पद्मकर्कोटकौ शुद्रौ फणात्रिशतकौ सिताविति।आयुधध्यानंवामदक्षिणयोरिति संप्रदायविदः मंत्रज्ञइत्यनेन ॐह्रींनमोनित्येस्वाहेति मंत्रस्य दशांशजपः शिवपञ्चाक्षरस्य किङ्करमंत्रस्य। ॐह्रींनमोभगवतेशवराय महाकिरातरूपाय कङ्कालधराय हूंफट्स्वाहेत्यस्य च शतांशजपः हृल्लेखाकल्पिते भुवनेशीप्रोक्ते तत्पीठशक्तयोचापिपूज्या इत्यर्थः। नवशक्तिसमन्वित इत्यनेन पीठमंत्रस्यान्यत्वं सूचयति। अत्र पीठमष्टदलमेव षोडशदलपूज्यदेवतानामनुक्तत्वात्। तदुक्तं संहितायां। अष्टपत्रं लिखेत्पद्मं बहिर्भूबिंबमालिखेत् । प्रत्येकं वसुपत्रेषु कवचं चाष्टधा लिखेत् । मध्ये तु भुवनेशानीं वेष्टयेन्मातृकां बहिः सर्वरक्षाकरं नाम चक्रमे तदुदाहृतम् । अत्रावाह्य पुनर्देवीमुपचारैः समर्चयेत् इति। आचार्याश्च। अष्टहरिविष्टतसिंहासने सामावाह्य सरसिजे देवीमिति ॥ ८ ॥ आसनमन्त्रमुद्धरति संवर्त्तक इति । बिंदुयुतः संवर्त्तकः क्षंकवचं हुं सकलं स च बिंदुकलाशब्देनार्द्धेंदुः तेतबिंदुःवाचकत्वं वियत्हंवज्रदेहपुरुगुरुस्वरूपं क्षिमाभाष्येति सम्बन्धः बिंदुः सबिंदुवियत् हं वर्म हुं अंत्यः क्षः दीर्घ आकारः बिंदुः तद्वान् तेन क्षां हृदयं नमः। आवरणपूजामाह अंगैरिति। क्रमादित्यवादिषट्सु केसरेषु षडङ्गानि संपूज्य कौवेरैशानयोः प्रणीता गायत्री च पूजयेत् इति सम्प्रदायविदः। तदुक्तमाचार्यैः। अंगैः सह प्रणीतां गायत्रीं पूजयेद्दिशं क्रमतइति। पद्मपादाचार्यैरप्येवमेव व्याख्यातम्। अन्यत्रापि। अष्टसिंहासने पूज्यादलेपूर्वादिके क्रमात् । अङ्गप्रणीतां गायत्रीमिति। तोतलामतेपि । यजेत्तत्राष्टपत्रेषु पूर्वाशाद्यंगदेवताः सौम्ये प्रणीतामैशे च गायत्रीमभिपूजयेत्। मत्स्यदेवप्रकाशिकाकारादीनामिदमेव सम्मतम् । दलेष्विति । एता वक्ष्यमाणामन्त्रार्णशक्तयः सुभूषिता इत्यस्य व्याख्यानम्। लोकेशैति । भूषणशब्दो वर्णवाहनोपलक्षणं तेनेन्द्रादीनामिव तासां वर्णायुधभूषणवाहनानीत्यर्थः। उक्तं च तोतलामते । इन्द्रादिलोकपालानां वर्णवाहयुधैः समा इतिश्रुत इति देव्याः केचनात्र लोकपालतदायुधपूजां न कारयन्ति शक्तीनामेव

एवं सिद्धमनुर्मन्त्री नारीनरनरेश्वरैः ॥ १८ ॥ मोऽन्यत वत्सरादर्वाक् लक्ष्म्याजितधनेश्वरः।
योनिकुण्डं प्रकल्प्यात्र कुर्याद्धोमं निजेच्छया १९ मल्लिकाकुसुमैर्हुत्वा वशयेदखिलं जगत् ।
कृत्याद्रोहादिशमनं पलाशकुसुमैर्हुतिम् ॥ २० ॥ इक्षुखण्डैः शुभैर्हुत्वा महतींश्रियमाप्नुयात् ।
दीर्घमायुरवाप्नोति दूर्वाहोमेन साधकः॥२१॥धान्यैः प्रक्षालितैर्हुत्वा श्रियमिष्टां समाप्नुयात्।
यवैर्धान्यसमृद्धिः स्याद्गोधूमैरिष्टसिद्धयः ॥२२॥ तण्डुलैरक्षयासिद्धिः स्याद्वृद्धिर्महतीतिलैः।
मन्त्री नीलोत्पलैर्हुत्वा नृपपत्नीं वशं नयेत् ॥२३॥ प्रबुद्धैः पङ्कजैर्हुत्वा वशं नयति मेदिनिम् ।
अशोकैः पुत्रमाप्नोति मधुकैरिष्टमाप्नुयात् ॥ २४॥ फलैर्जम्बुभवैर्हुत्वा लभते धनमीप्सितम् ।
पुष्पैः पाटलिसम्भूतैरिष्टामाप्नोति सुन्दरीम्॥२५॥पुष्पैर्बकुलसम्भूतैः कीर्तिः स्यादनपायिनी।
दीर्घमायुर्भवेदाम्रैश्चम्पकैःकाञ्चनं भवेत् ॥ २६ ॥ कुर्वीत सर्षपैर्होमं शत्रोर्नाशकरं सुधीः ।
पत्रैर्बकुलजैर्हुत्वा शीघ्रमुन्मादयेदरीन् ॥ २७ ॥ शाल्मलीपत्रहोमेन सपत्नान्नाशयेद्ध्रुवम् ।
कोद्रवैः खण्डनैस्तद्वन्निर्बैर्विद्वषयेन्मिथः ॥ २८ ॥ माषहोमेन मूकः स्यादुन्मत्ताक्षैर्भवेदरिः ।
अयुतं होमसंख्यास्याज्जपस्तावान्प्रकीर्तितः॥२९॥स्नानं तन्मन्त्रितैस्तोयैःसर्वव्याधिहरं स्मृतम्।
तज्जप्तंचुलुकं तोयं मुखेक्षिप्तं विषापहम् ॥३०॥ आतापभेषजं दद्यान्मन्त्रेणानेन मन्त्रितम् ।
संभवेद्व्याधिनिर्मुक्तो मन्त्रस्यास्य प्रभावतः॥३१॥त्रिलोही मुद्रिकानेन मनुना साधु साधिता।
कृत्या द्रोहादिशमनी सर्वव्याधिविनाशिनी॥३२॥सर्वसम्पत्प्रदा नित्यं सर्ववश्यकरी मता ।

---

तद्रूपत्वादिति। अन्ये योषिद्रूपान्पूजयंति तदुक्तं तोतलामते योषिद्भूतान् तद्बाह्यावरणे यजेत् इति। अन्ये तु दलाग्रेषु भैरवांकस्थामातरः पूज्या इत्याहुः उक्तं चतोतलामते।तद्बाह्ये भैरवानष्टौ पीठमातृसमन्वितान् इति द्वारस्य पार्श्वयोः द्वारबाह्यपार्श्वयोः द्वारबाह्ये स्थिते इत्युक्तेः एते अपि द्विभुजे देवतासमानवर्णे च । उक्तं च शक्ती तत्सदृशे इति । किङ्करमन्त्रमुद्धरति किङ्करायेति। वर्महुं । अस्त्रं फट्किङ्करो नामदेव्याः प्रेष्यभूतो भूतविशेषः सोपि द्विभुज एव। तद्ध्विभांगे वर्वरमूर्द्धजमुद्धुषितकेशंकुटिलकेशमिति यावत् तोतलातन्त्रे विशेषः प्रेतासनगतं द्वारबाह्यदेशे बिभीषणमिति। त्वरितामन्त्रजापोत्वरितागायत्रीं जपेत् । यदाहुः त्वरितादेविशब्दाते विद्महे तूर्णं मुच्चरेत्। विद्याधीमहि च प्रोक्ता तन्नो देवी प्रचोदयात् । गायत्री त्वरितायास्तु जपात्सान्निध्यकारिणीति। निजेच्छयेति अनेनेत्येतदुक्तं वक्ष्यमाणप्रयोगेषु कार्यगौरवलाघवात् । सहस्रं वक्ष्यमाणायुतसंख्या त्रियुता वाहोमस्य जपस्यापि तावतीति। तदुक्तं। हुतसंख्या साहस्री त्रियुता वाप्ययुतांतिकी भवति । यावत्संख्योहोमस्तावज्जप्यश्च मन्त्रिणामत्र इति । अन्यत्रापि हुतसंख्या च साष्टस्री सहस्रत्रियुतावधि लाघवं गौरवं कार्ये विचार्यनिपुणश्चरेत् इति । एतद्धोमदशांशेन पञ्चाक्षरकिङ्कराभ्यामपिहोमः सर्वप्रयोगेष्विति ज्ञेयम्। वशयेदित्यत्र कामादित्वम् । कृत्याद्रोहादीत्यत्रनृसिंहादित्वं महती समृद्धिमिति शक्त्यादित्वम् । दीर्घमायुरवाप्नोतीति । मृत्युञ्जयादित्वं साधक इत्यनेन त्रिः कृत्यपुरश्चर्य इत्युक्तम्। प्रक्षालितैरिति तिलान्तानां विशेषणम् । श्रियमिष्टामिति। श्रीयोगोपि। पुत्रमाप्नोतीति। कामयोगः। मेदिनीमिति। मेदिनीस्थालोका लक्ष्यन्ते बहुत्वं

यद्यद्वांछतिमन्त्रज्ञस्तत्तदेतेन साध्यते ॥ ३३ ॥ मध्ये सरोजे दशपत्रयुक्ते मायां लिखेद्वां-
छितसाध्यगर्भां । तारादिवर्णान्दशमन्त्रसंस्थान् षट्कोणबीजं वसुधापुरस्थम् ॥ ३४ ॥
कृत्याद्रोहादिशमनं व्यालचौरभयापहम्॥३४॥विधृतं त्वरितायन्त्रं विशेषाद्विजयप्रदम् ॥३५॥
तारे हुं विलिखेत्सरोजकुहरे साध्याभिधानान्वितं मन्त्रार्णान्वसुसंख्यकान्वसुदलष्वालिख्य-
तद्बाह्यतः॥शक्त्या त्रिः परिवेष्टितं घटगतं पद्मस्थमब्जाननं यन्त्रं वश्यकरं ग्रहादिभयहृल्ल-
क्ष्मीप्रदं कीर्तितम् ॥३६॥ कोष्ठानां शतमेकाविंशातियुतं कृत्वा ध्रुवं मध्यतः साध्याढ्यं त्वरि-
ताशिवादिविलिखेन्मायां विना मन्त्रवित् । रेखाग्रेषु लसत्त्रिशूलमत्सकृत्संजप्य संपातितम् ॥
यन्त्रं क्ष्वेडमहाभिचारशमनं वश्यावहं श्रीप्रदम् ॥ ३७ ॥ एकाशीतिपदेषु टांतविवरे साध्यं

---

व्यंग्यम् । द्रष्टां सुन्दरीमिति । बालायोगः । कीर्त्तिः स्वादित्यजपायोगी ज्ञेयः अनपायिनी अविन-
श्वरा लभेरात्मनेपदित्वात् । कथं लभेदिति । लभत इति लभः पचाद्यच् लभ इवाचरेदिति । आ-
चारे नाम धातोः क्विप् सनाद्यन्ता इति धातुत्वं ततः परस्मैपदं ङिति समाधिः क्वचिल्लभेदित्येव
पाठः । आस्त्रैरिति । अत्र पुष्पैरित्यनुषज्यते । उत्सादयेदिति । वायुबीजादित्वम्। सपत्नान् शत्रून्
काण्डनैस्तुषकणैस्तद्वन्नाशयेदित्यर्थः निंबैः निंबफलैः अक्षैर्विभीतकफलैः विषापहमिति । गरुडबी-
जयोगः मंत्रविदित्यनेन नृसिंहबीजयोगः साधुसाधिता । एतन्मन्त्रं जप्त्वा कृतसम्पाता च अत्रापे-
क्षितार्थद्योतनिकाकारेण लोहानां प्रत्येकं समभागा उक्ताः यद्यद्वांछेति मंत्रज्ञ इत्यनेन प्रणवयोगे
भुक्तिं करोवाग्योगे धर्मज्ञानकरी शक्तियोगे सर्वकरीमूलम् । भानुसंख्यान्द्विजान्नित्यं भोजयेन्म-
धुरान्वितम् । सर्वपापविनिर्मुक्तः सर्वरोगविवर्ज्जितः । कृत्याद्रोहग्रहान् रोगान् जित्वा दीर्घं स
जीवति सूचितम् ॥ ३२ ॥ यंत्रमाह । मध्येसरोजे इति व्यधिकरणे सप्तम्यौ वांछितं वश्यादिसाध्यश्च
तद्गर्भाम् । तारादीनिति । मायाव्यतिरिक्तान् । विशेषाद्विजयप्रदमित्यनेन । मायायां दुर्गाबीजे
साध्यलेखनमिति सूचितम् ॥ ३३ ॥ यन्त्रान्तरमाह । तार इति । सरोजकुहरे अष्टदलकर्णिका-
याम् । मंत्रार्णानिति । मायाद्वयतारवर्मरहितान् तेषामन्यत्र विनियोगात् । अब्जाननमिति ।
घटमुखमेवं तद्वत्वेन यंत्रे उपचरितम् । कीर्त्तिदमिति । अजयायां साध्यनामेति ज्ञेयम् ॥ ३५ ॥
यन्त्रान्तरमाह । कोष्टानामिति । पूर्वापरायतद्वादशरेखाभिः शतमेकविंशतियुतं कोष्टानि जा-
यन्ते । मध्यत इति सप्तम्यर्थे तसिः तत्र शिवादि ईशानादि प्रदक्षिण क्रमेण द्वादशावृत्तिमंत्रं
लिखेत् । अत्रक्ष्वेलशमने गरुडबीजे साध्यलिखनं महाभिचारशमने नृसिंहबीजे । वश्ये कामबीजे
श्रियै श्रीबीजे सर्वार्थशक्ताविल्यादि ज्ञेयं साम्प्रदायिकास्त्वन्यथा व्याचक्षते । ध्रुवंमध्यतः शिवादि
विलिखेत् । अत्र पंचम्यर्थे तसिः आदि शब्देनाग्नेयनैर्ऋतवायव्यानि तेनायमर्थः मध्ये प्रणवं वि-
लिख्य तत ईशगतपंचसु कोणकोष्टेषु पंचप्रणवाल्लिखेत् । एवमाग्नेयादिपंचसु कोणकोष्टेष्वपि ।
मायां विना साध्याढ्यं यथा स्यात्तथा त्वरितामंत्रविद्विलिखेदिति । अत्र मंत्रविच्छब्देन लेखन-
क्रमः सूचितः । साध्याढ्यमित्यनेन ध्रुवं प्रति कोष्टं चैकैकवर्णक्रमेण साध्यलिखनमध्यध्रुवे सर्वक-
र्मसाध्यलिखनमित्यर्थः अत्राक्षरलेखनक्रमः तत्रेशानतारपंचके आद्यस्य प्रणवस्य पूर्वदिग्गतपदच-

लिखेन्मध्यतः पश्चाच्छक्तिषु दिग्गतासु लिपिंशो जूंसः शिखांतं लिखेत् ॥ शिष्टष्वीशनिशाचरादिविलिखेल्लक्ष्मीमनुं पंक्तिशः ॥ शस्त्राविर्वषडंतया त्वरितया वीतं चतुर्दिक्ष्वपि ॥ ३८॥ लांतैः प्रवीतं कमलासनेन घटेन वीतं कयलासनेन।संसाधितं चक्रमनुग्रहाख्यं दद्याद्यथावत्कनकादिबद्धम् ॥ ३९ ॥ कृत्यापमृत्युरोगादीक्ष्वेडभूतमहाग्रहान् ॥ जीवेद्वर्षशतं पुत्रैः पौत्रै-

---

तुष्के हुमादिक्षेन्तवर्णचतुष्कं विलिख्य तद्दक्षिणकोष्टे च: आलिख्य ततपश्चात्पदचतुष्के शेष वर्णचतुष्कं मध्यप्रणवान्तं लिखेदित्येकावृत्तिः ततोद्वितीयतारस्य पूर्वपदत्रये हुं खे चेति विलिख्य पूर्वलिखितानुवाचनेन द्वितीया । एवं तृतीयतारपूर्वपदद्वये हुं खे विलिख्य पूर्वलिखितोपजीवनेन तृतीया । एवं चतुर्थतारपूर्वपदे हुमालिख्य पूर्वलिखितोपन्यासेन चतुर्थी पुनः पञ्चमं प्रणवमारभ्य पूर्वलिखितवाचनेनैव पञ्चम्यावृत्तिः एतमेव प्रणवपञ्चकमारभ्य पूर्ववदावृत्तिपञ्चकं एवमेकस्मिन् दशावृत्तयः एवमाग्नेयादिकोणत्रयेपि तथाचाचार्यवचने अनुविलिखेद्देति छेदं कृत्वा वाशब्दः समुच्चये । दशावृत्तिलिखेदिति व्याख्यातम् । नारायणीये । भूर्ज्जे सकारकपुटे जवशूलदीप्ते कोणेषु तारमुदरे विहितस्य नाम्नः । फलद्वयादिशासु च यथा लिखिता तथैषा नामार्णयुक् प्रति पुटं हरति ग्रहार्त्तिमिति। कारकेति १२१ जवेति ४८ अन्यत्स्पष्टं तन्त्रान्तरोक्तम्। यन्त्रान्तररेखाः पूर्वापराद्वादशगिरिसंमिता दक्षिणोदक् कृत्वा साध्यं मध्यस्थकोष्टे ष्वग्यसुरपतिदिक्कोष्टकेषु ध्रुवः स्यात् पश्चात्तेष्वस्त्रमन्यामनुभवलिपयः शेषकोष्टेषु लेख्याबाधन्ते यन्त्रयुक्तं न नरमथसुराः किं पुर्मानवौघा इति । यन्त्रान्तरमाह । एकेति । दशपूर्वापरायता दशदक्षिणोत्तरायता रेखाविलिखेदेवं एकाशीतिकोष्टानि जायन्ते तत्र मध्यकोष्टगतं ठं विलिख्य तन्मध्ये साध्यं लिखेत् । साध्यमित्युपलक्षणं साधकादीनामपि दिग्गतानुपंक्तिष्विति मध्यकोष्ठात्पूर्वापरदक्षिणोत्तरचतुःकोष्टात्मकचतुःपंक्तिषु जूंसः स्वरूपंशिखान्तं वषडन्तेन जूंसः वषट् इति लिपिशः एकैकाक्षरक्रमेण लिखेत् लक्ष्मीमनं वक्ष्यमाणम्। श्रोसित्यादिकं शस्त्रं फट् तस्मिन्नाविर्भवति यत् वषट् तदन्ते यस्याः सा तया त्वरितया मन्त्रेण चतुर्दिक्षु दिशिदिशि एकैकावृत्या वेष्टयेत्। तदुक्तं । दिक्दिक्संस्थामस्त्रपदादिर्वषडन्तामिति । अन्यत्रापि । वषडन्ता बहिःशीघ्रा दिक्षु ठं कलशं वन्हिरिति । अत्र केचन अन्यथा व्याचक्षते। अस्त्रं च आविर्भवदधिकं वषट् यत्रेति । तेन फट्कारंसमुच्चार्य वषट्कारमुच्चारयेदिति । तदयुक्तं तन्त्रान्तरविरोधात् । तदुक्तं। त्वरितावषडन्ता स्यात्फट्कारपरिवर्जितेति । अत्र वेष्टने अग्रे च मायासहितो मन्त्रः लांतैर्वकारैः प्रकर्षेण वीतमिति मालाकारेणेत्यर्थः । तदुक्तमाचार्यैः मेदोमालां वेष्टितबिम्बमिति। दध्यात् धारयेत् यथावदित्युक्तप्रमाणे कनकादीत्यादिशब्देन रजतताम्रे तन्त्रान्तरे स्य फलमुक्तं यमेन तु धृतं यंत्रं ब्रह्मणा विष्णुना पुरा । बुधेन भैरवेणापि हेरंबेन गुहेन च सर्वेते वशमायान्ति विद्यायाश्च प्रभावतः । त्रिलोके यानि दुःखानिकृत्रिमाकृत्रिमाण्यपि क्षीयन्ते तान्यसंदेहो विद्याराज्ञीप्रभावतः कुड्ये समे खटिकया भवने लिखित्वा संपूजयेत्परमनुग्रहचक्रमेतत्। सर्वो नरो भवति तत्र कुटुंबवर्गः सर्वात्मना वशयतीह मनुष्यलोकमिति ।यन्त्रान्तरमाह। लिखेदिति । प्रागपरदक्षिणोत्तरायतानवरेखा विलिख्य चतुःषष्टिपदं कुर्यात्। कन्यादिनैर्ऋत्यादि-

लक्ष्म्या च नंदति ॥४३॥ श्री सामाया यामा सा श्री सानो याजेनेया नोसा॥ माया ली ला लाली यामा याझे लाली लीला ज्ञेया ॥ ४४ ॥ लिखेचतुः षष्टिपदेषु विद्वानीशादिकान्यादिरमामनुं तम् ॥ बाह्ये यथावत्वरिताभिवीतं लांतैश्च वीतं वरकांचनस्थं ॥ ४५ ॥ देशेषु रेवानगरे गृहे वा विनिः क्षिपेच्चक्रमिदं यथावत् ॥ तत्र ध्रुवं गोमहिषाभिवृद्धिः सम्यक् प्रजासस्यसमृद्धयः स्युः ॥ ४६ ॥ कवचं भगवांश्चंडो मेरुः सर्गसमन्वितः ॥ त्रिकंटकी समाख्याता विद्या वर्णत्रयात्मिका ॥ ४७ ॥ द्विरुक्तैर्मंत्रवर्णैः स्यादंगक्लृप्तिरितीरिता ॥ नीला नाभेरुस्तादरुणरुचिरधः कंठदेशात्सिता स्या द्वक्रैर्दंष्ट्राकरालैरुदरपरिगतैर्भीषणांगीचतुर्भिः ॥ दीपौ कंबुरथांगं करसरसिरुहैर्धारयंती जटांतः स्फुर्जच्छीतांशुखंडा भवतु भयहरा देवता वह्निनेत्रा ॥ ४९ ॥ त्रिलक्षं प्रजपेदेनमाज्येनांते दशांशतः ॥ हुत्वा प्राक् प्रोक्तमार्गेण पूजयेत्तां त्रिकंटकीं ॥ ५० ॥ त्रिशूलमुद्रां पाणिभ्यां बध्वात्मानं त्रिकं-

---

रमामनुश्च सेत्यादि यथावदिति वषडन्तया चतुर्दिक्ष्वपि। अत्र मध्यगन्तचतुर्षु कोष्ठेषु वकारमालिख्य तन्मध्ये साध्यसाधककर्मनामानि लिखेत्। यथावद्विनिक्षिपेदिति। हस्तमात्रप्रमाणे क्षिप्तं पूजितमित्युक्तम्। मन्त्रान्तरमाह। कवचमिति । कवचं हुं चण्डः खः भगवानिकार युक्तः तेन खे मेरुः घः अत्र अकारादिलान्तानां पचाशद्दर्णानां अक्षरमालात्वान्मेरुस्थानीयः क्षकारो मेरुशब्दवाच्यः सर्गसमन्वितो विसर्ग इदमेवपूर्वमन्त्रे प्ययं विसर्गइति द्योतयति। तदुक्तंनारायणीये । यन्त्रो तला-पाश्च दशाक्षरायाबीजं द्वितीयंसहतोयषष्ठं, त्रिकण्टकीनामतदासु सिध्येदिति। आद्यं बीजं मन्त्यं शक्तिः। नीलेति। आस्यात्सितेत्यन्वयः दंष्ट्राकरालैरुदरपरिगतैश्चतुर्भिर्वक्त्रै भीषणांगीति सम्बन्धः उदरपरिगतैरिति । उदरचतुःपार्श्वे कंबुः शङ्खः आयुधध्यानमूर्द्धयोर्द्द्वयोराद्यं तदधस्तनयोरन्त्य इति। त्रिशूलमुद्रामिति । सा तु कनिष्ठांगुष्ठसंयोगात् शेषाणां तु प्रसारणात् इति । एतन्मन्त्रस्यान्त्याक्षरद्वयं छे युक्तं मन्त्रोविषहा त्रिकण्टकी ज्ञेया। तदुक्तं नारायणीये । तस्याः त्रिपञ्चमपुटो विषहाचषष्ठ इति। ऋष्यादिसर्वं पूर्वेण समानं त्रितयस्य। मन्त्रान्तरमाह। चेद्दति वक्ष्येति । विनियोगोक्तिः आद्यबीजं मध्यं शक्तिः वीप्सितैर्द्विरुक्तैः त्रिनियुतं त्रिलक्षम्। नित्यामन्त्रमाह । तारइति। वाक् वाग्भवम्। अनन्तरवक्ष्यमाणनित्यामन्त्रोक्तछन्दर्ष्यादिज्ञेयम्। प्रणवोबीजं स्वाहा शक्तिः श्रियै श्रीबीजादित्वं रोगशमनादौ दुर्गाबीजादित्वम् । दुःखदौर्भाग्यशमने कामबीजादित्वं जराजरापमृत्युशमने मृत्युञ्जयादित्वम्। मदद्रवे इत्यतः पूर्वं साध्यनामप्रयोगोपि । एवं वक्ष्यमाणमन्त्रयोरपि ज्ञेयम्। वाचं विनेत्युभयत्र सम्बध्यते तेन त्रयोदशभिरक्षरैरुक्तरीत्या पञ्चाङ्गानि कृत्वा शिष्टं समस्तेनास्त्रमित्यर्थः। अथानन्तरमित्यनेन वाग्भवेन पुनरङ्गानिकुर्यात् इति । तदुक्तंनारायणीये। रात्रिक्रूरांशसंख्यैः स्ववर्णैः खे न च वाग्विनान्यस्यांगषट्कं वाचैव पुनश्चाङ्गानि विन्यसेदिति॥५०॥ द्विपमिति । सुराधिमध्यस्थं त्रिकोणं द्वीपं स्मृत्वा तस्मिन्द्वीपे माणिक्यमण्डपे रत्नसिंहासने पद्मे देवीं चिन्तयेदित्यन्वयः व्यधिकरणसप्तम्यः उभयत्र त्रिकोणमित्यधोमुखं सुराब्धीत्यनेनैतदुक्तं पृथिव्यनन्तरं सुराब्धिस्त्रिकोणं द्वीपं माणिक्यमण्डपं,रत्नसिंहासनं पीठं न्यासेन्यस्येदिति । शेषं स-

टकीं ध्यायन्स्पृष्ट्वा जपेद्ग्रस्तंसद्यस्तं मुंचति ग्रहः ॥ ५१ ॥ क्षेरुद्राक्षी त्रिवर्णेयं विद्या वश्यत्रिकंटकी ॥ मन्त्रार्णैर्वीप्सितैः कुर्यादंगषट्कं यथा पुरा ॥ ५२ ॥ पूर्वोक्तां देवतां ध्यायन्मंत्रं त्रि त्रिनियुतं जपेत् ॥ दशांशं सर्पिषा हुत्वा वशयेद्वनितां नरान् ॥ ५३ ॥ तारो माया वाग्भवांते नित्यक्लिन्ने मदद्रवे ॥ वाङ्मायावन्हिजायांतो मन्त्रः पञ्चदशाक्षरः ॥ ५४ ॥ द्वाभ्यां द्वाभ्यां पुनर्द्वाभ्यांद्वाभ्यां पञ्चभिरक्षरैः ॥ वाचं विनासमस्तेनाप्यंगषट्कमथाचरेत् ॥ ५५ ॥ द्वीपं त्रिकोण विपुलं सुरद्रुममनोहरंकूजत्कोकिलनादाढ्यमंदं मारुतसेवितम्॥५६॥ भृंगपुष्पलताकीर्णमुद्यच्चंद्रदिवाकरम् ॥ स्मृत्वासुराब्धिमध्यस्थं तस्मिन्माणिक्यमण्डपे ॥ ५७॥ रत्नसिंहासने न्यस्ते त्रिकोणोज्ज्वलकर्णिके ॥ पद्मे संचिंतयेद्देवीं साक्षात्त्रैलोक्यमोहिनीं ॥ ५८ ॥ नित्यां भजेद्बालशशांकचूडां पाशांकुशौ कल्पलतां कपालम् ॥ हस्तैर्वहंतीमरुणां त्रिनेत्रामास्फालयंतीं करवल्लकीं तां ॥ ५९ ॥ त्रिलक्षं प्रजपेन्मंत्रमाज्येन जुहुयात्ततः ॥ दशांशं पूजयेत्पीठं चतुः शक्तिसमन्वितम् ॥ ६० ॥ आपूर्वां द्रा विणीवामां शंभुकोणेसमर्चयेत्॥ आल्हादकारिणीं ज्येष्ठामोंकाराद्यां हुताशने ॥ ६१ ॥ पूजयेत्क्षोभिणीं रौद्रीं उकाराद्यां निशाचरे ॥ वायौ यजेद्गुह्यशक्तिं वाग्भवाद्यां विचक्षणः ॥ ६२ ॥ मायाद्यमासनं दत्वा मूर्तिं मूलेन कल्पयेत् ॥ अत्र संपूजयेद्देवीं वक्ष्यमाणक्रमेण तु ॥६३॥ अंगार्चनं केसरेषु दलेष्वेताः समर्चयेत् ॥ आद्यानित्या सुभद्रान्या मंगलानरवीरिणी ॥ ६४ ॥ सुभगा दुर्भगा भूयः सप्तमी स्यान्मनोन्मनी ॥ अष्टमीरुद्ररूपा च वीणावादनतत्परा ॥ ६५ ॥ रक्ता मनोरमा दूत्यः सुवेषा मदमंथराः ॥ आद्यंतयुग्मरहिताः स्वराः क्लीबविवर्जिताः ॥ ६६ ॥ बिंद्वंता ज-

---

मानं इदमग्रिममन्त्रेपि ज्ञेयम्।त्रैलोक्यमोहिनीमित्यनेन विनियोगोक्तिः करवल्लकीमास्फालयन्तीमित्यनेन षट्करेत्युक्तं भवति। आयुधध्यानं तु पूर्ववत् । चतुःशक्तिसमन्वितमिति । पीठशक्तयस्तत्र: तत्र द्राविणीमित्यादीनि तु वामाज्येष्टारौद्रीणां विशेषणानी । अत्र शक्तित्रयमीशादिकोणेषु विन्यस्य तुर्यां मध्येन्यसेदित्यर्थः। तदुक्तं नारायणीये। कोणेष्वीशादिमध्ये च तत्र शक्तीः न्यसेदिमाः इति। मध्ये यजेद्गुह्यशक्तिमिति पाठः वायाविति पाठो ज्ञानेनोपस्कृतो मन्तव्यः। मायाद्यमिति। भुवनेशीबीजमुच्चार्य सर्वशक्तीत्यादिना पीठपूजेत्युक्तम्। आद्येति। नित्या आद्या प्रथमा आदीति स्वराणां माद्यन्ते ये युग्मे क्लीबाश्च तद्रहिता अन्ये अष्टौ बिंदुयुतास्तासां मन्त्राः अनङ्गेत्यादीनां पञ्चानामष्टदलो परितः पूजा। आयुधध्यानम्। दत्ताधस्ताद्वामाधः पर्य्यन्तम् । अपराङ्गनिषङ्गाग्राः पृष्ठस्थतूणीराः मान्मथं कामबीजं व्योमसर्गाढ्यं हकारविसर्गयुक्तम्। क्लीवेति। क्लीबचतुष्टयं ऊष्टद्वयं एऐएतन्निर्मुक्तापदेशस्वरास्तदाढास्तद्युक्तश्च तुराननः जकारस्तेन जं जां जिं जीं जुं जूं जों जौं जं जः इति मन्त्राः क्रमादिति। पूर्ववान्वेति। लोके शास्त्राण्यनुक्तानि अपि पूजनीयानि चतुर्थपटले सामान्यत उक्तेः। मन्त्रान्तरमाह। वागिति । मदौ मकारदकारौ क्लीं बीजं स्वाहेति शक्तिः वाचेति वाग्भवेन षट्दीर्घकामयुक्तेनेनि परमगुरवः। अर्द्धेन्दिति । सृणिरंकुशः पूर्णेति सुरा पूर्णं आयुधध्यानं पूर्ववत् । निजेष्टदामितिविनियोगोक्तिः शक्तिपीठ इति । शक्तिपीठोक्तनवशक्तयोऽत्र

मनवस्तासामनंगस्मरमन्मथाः ॥ कामोमारश्च पञ्चेषु पाशांकुशधनुर्भृतः ॥ ६७ ॥ अपरांगनिषंगाढ्या रक्ताः पूज्याः सुभूषणाः ॥ मान्मथं व्योमसर्गाद्यं तेषां बीजमुदाहृतम्॥ ६८॥ रतिः स्याद्विरतिः प्रीतिर्विप्रीतिर्मतिदुर्मती॥धृतिश्च विधृतिस्तुष्टिर्वितुष्टिश्च दश स्मृताः॥६९॥ रक्ता वीणा कराढ्ये द्वे कामानां पार्श्वयोः स्थिताः। सर्वाभरणसंपन्नाः पूज्याः स्मेरमुखांबुजाः ॥ ७० ॥ क्लीबौ षष्ठद्वयनिर्मुक्तस्वराढ्यश्चतुराननः ॥ बिंदुमान्बीजमेतासां क्रमाल्लोकेश्वरान्बहिः ॥७१॥ एवं संपूजयेद्देवीं देवानामपिदुर्लभां ॥ परमैश्वर्य्यमाप्नोति प्रार्थ्यते वनिताजनैः ॥ ७२ ॥ वाग्भवं मान्मथं बीजं नित्यक्लिन्ने मदे पुनः । द्रवे वन्हिवधूर्मंत्रो द्वादशार्णोयमीरितः ॥७३॥ ऋषिः संमोहनच्छन्दो निवृन्नित्या च देवता। वाचा कृत्वा षडंगानि नित्यां ध्यायेन्निजेष्टदाम् ॥ ७४ ॥ अर्धेन्दुमौलिमरुणाममराभिवन्द्यामंभोजपाशसृणिपूर्णकपालहस्ताम् । रक्तांगरागवसनाभरणां त्रिनेत्रां ध्यायेच्छिवस्य वनितांमदविह्वलांगीं ॥७५॥ चतुर्लक्षं जपित्वांते मधुराक्तैर्मधूकजैः। कुसुमैरयुतं हुत्वा तोषयेद्गुरुमात्मनः॥ ७६ ॥ शक्तिपीठे यजेद्देवीं वक्ष्यमाणेन वर्त्मना । अङ्गान्यर्च्चेद्यथापूर्वं ततः शक्तीरिमांयजेत् ॥ ७७ ॥ नित्या निरंजना क्लिन्ना क्लेदिनी मदनातुरा। मदद्रवा द्राविणी च द्रविणेत्यष्टशक्तयः॥७८॥ नीलोत्पलकपालाढ्यकरा रक्तांबुजेक्षणाः। लोकपालान्यजेदन्त्ये वाहनायुधसंयुतान् ॥७९॥ सिद्धमन्त्रं जपेन्मन्त्री सहस्रं शयनस्थितः । यां विचिन्त्य स्त्रियं रात्रौ सा समा याति तत्क्षणात् ॥ ७९ ॥ वाङ्मायानन्तरं नित्यक्लिन्ने भूयोमदद्रवे । द्विठान्तो रविसंख्यार्णो मनुर्वश्यप्रदायकः ॥ ८१ ॥ अंगिराः स्यादृषिस्त्रिष्टुप्छन्दोमुनिभिरीरितम् । वज्रप्रस्तारिणी प्रोक्तादेवताभीष्टदायिनी ॥ ८२ ॥ वाग्भवेनषडंगानि विदध्यान्मन्त्रविन्नरः ॥ वज्रप्रस्तारिणीं ध्यायेत्समाहितमना ततः ॥ ८३ ॥ रक्ताब्धौ रक्तपोतेरविदलकमलाभ्यंतरे सन्निषण्णां रक्तांगीं रक्तमौलिस्फुरितशशिकलां स्मेरवक्त्रां त्रिनेत्रां ॥ बीजापूरेषु पाशांकुशमदनधनुःसत्कपालानि हस्तैर्बिभ्राणामानतांगीं स्तनयुगलभरादंबिकामाश्रयामः ॥ ८४ ॥ मन्त्री मन्त्रं-

---

पूज्या इत्यर्थः। यथापूर्वमिति। तुर्योक्तरीत्या। वज्रप्रस्तारिणीमन्त्रमाह। वागिति। वाक् वाग्भवं अन्ये एवं योजयन्ति । मायानन्तरं क्लिन्ने भूयः पश्चाद्वाक् । ततो नित्येति अविभक्तिको निर्देशः ततो मदद्रवे ठः बिंदुद्वितः बिंदुद्वयं विसर्गः सर्गः शक्तिरित्युक्तेर्भुवनेशीबीजं रविसंख्यार्णं द्वादशाक्षर इत्युक्तेर्वाग्भवान्तरं मंकुशबीजम्। एतेनैव मुक्तं भवति। प्रथमतो माया ततः क्लिन्ने ततो वाग्भवांकुशौ ततो नित्यमद द्रवे ततो मायाबीजम्। तदुक्तमाचार्यैः । स्मरदीर्घधराकाग्न्यो दीर्घेत्यक्षे लदद्रलांत्यशिवाः अभितः शक्तिनिरुद्धोद्वादशवर्णोयमीरितो मन्त्र इति । नारायणीयेपि । क्लिन्ने वागंकुशौ नित्यशब्दः कालस्व दद्रवे। वज्रेशीशक्तिरुद्देषेति । अन्ये वाग्भवरहितं मायाद्यमेकादशाक्षरमाहुः। तदुक्तं नारायणीये। नतो साद्वित्वचौ क्लिन्ने कालोन्निस्व द्रवे शिर इति।आचार्याश्च। निद्वयोरन्तरात्यक्लिन्ने मदाश्व द्रवे शिरः मायादिक् इति। मन्त्रद्वयमपि साम्प्रदायिकमेव । वक्ष्यमाणविधिस्त्रयाणां समान एव । प्रथममंत्रे वाग्बीजं स्वाहा शक्तिः द्वितीयमंत्रे वाग्बीजं माया-

जपेल्लक्षं जपान्ते जुहुयात्ततः ॥ अयुतं राजवृक्षोत्थैर्घृतसिक्तैः समिद्वरैः ॥ ८५ ॥ शक्तिपीठे यजेद्देवीमरुणैः कुसुमादिभिः ॥ अंगानिकेसरेषु स्युरर्चनीया दलेष्विमाः ॥ ८६ ॥ हृल्लेखा क्लेदिनी क्लिन्ना क्षोभिणी मदनातुरा ॥ निरंजना रागवती सप्तमी मदनावती ॥८७॥ मेखला द्राविणी पश्चाद्वेगवत्यपरास्मृता ॥ कपालोत्पलधारिण्यः शक्तयो रक्तविग्रहाः॥८८॥ मातरो दिग्विदिक्ष्वर्च्याः पुनः पूज्यादिगीश्वराः ॥ भजेन्मन्त्री मनुं नित्यं अर्चनादिभिराद-रात् ॥ ८९॥ दारिद्र्यरोगनिर्मुक्तः स जीवेच्छरदांशतम्॥ अस्मिन्मन्त्रेरतोमन्त्री वशयेदखिलं जगत् ॥ ९० ॥ नित्यं मंत्रबुधः कुर्यान्मुखलालसमन्वहम् ॥ अंजनं तिलकं पुष्पंधारयेन्मन्त्रितं सुधीः ॥ ९१ ॥ तांबूलं मंत्रितं भक्ष्येन्मंत्रीस स्याज्जगत्प्रियः ॥ श्रीमायामदनैः प्रोक्तो मंत्रो बीजत्रयात्मकः ॥ ९२ ॥ ऋषिः संमोहनः छंदोगा यत्रीदेवतामनोः ॥ त्रिपुटाख्या द्विरुक्तैस्तैर्वीजैरंगानि षट्क्रमात् ॥ ९३ ॥ पारिजातवनेरम्ये मंडपे मणिकुट्टिमे ॥ रत्नसिंहासने सौम्ये पद्मे षट्कोणशोभिते ॥ ९४ ॥ अधस्तात्कल्पवृक्षस्य निषण्णां देवतां स्मरेत् ॥ चापंपाशांबुजसरसिजान्यंकुशं पुष्पवाणान् बिभ्राणां तां करसरसिजैरत्नमौलिंत्रिनेत्रां ॥ हेमाब्जाभां कुचभरनतां रत्नमंजीरकांचीग्रैवेयाद्यैर्विलसिततनुंभावयेच्छक्तिमाद्यां ॥ ९५ ॥ चामरादर्शतांबूलकरंडकसमुद्गकान् ॥ वहंतीभिः कुचार्ताभिर्दूतीभिः परिवारितां ॥ ९६ ॥ करुणामृतवर्षिण्या पश्यंतीसाधकं दृशा ॥ भानुलक्षं जपेद्देनंमनुंतावत्सहस्रकम्॥९७॥ बिल्वारग्वधसंभूतैर्मधुराक्तैः समिद्वरैः ॥ जयापुष्पैश्च जुहुयात्तोषयेद्वसुनागुरुं ॥ ९८ ॥ हृल्लेखा-

---

शक्तिः तृतीये मायाबीजं स्वाहा शक्तिः वश्येति। अभीष्टदेति च विनियोगोक्तिः। वाग्भवेनेति। षट्दीर्घमायुक्तेनेति परमगुरवः। द्वितीयमंत्रेति। द्वाभ्यां वाचैकेन द्वाभ्यां द्वाभ्यां तथा पुनर्द्वाभ्यां मंत्राक्षरैर्विदध्यात् अंगविधिं जातिसंयुतैर्मंत्रीति। अस्मिन्पक्षे वाग्भवेन शिर इति शेषः एवं षडंगानीति। श्लोकयोजनामंत्रवित्तम इत्यनेन तंत्रांतरोक्तान्यंगानिसूचितानि। आह्लादिनीहृत् क्लिन्ने शिरः क्लेदिनिशिखानित्येवर्ममदने चं द्रवेऽस्त्र मिति तानिरक्ताब्धिरित्यमने तदुक्तं भवति। पृथिव्यनंतररत्नसमुद्रं रत्नपोतं पीठन्यासेन्यसेदिति शेषं समानं। इषुर्बाणः मदनधनुरिक्षुचापं। आयुधध्यानं। वामोर्द्धतः पाशचापकपाला निदक्षोर्द्धतः अंकुशशरबीजपूराणि। केचन द्वितीयमंत्रे बीजपूरस्थानेदाडिममाहुः स्तनभरस्य भरणमाधिक्यं तस्मादानतांगी आदिशब्देन रक्तगंधः स्वयमप्येताट्टशवेष एव तदुक्तं। शक्तिपीठे पूज्या देवी कुसुमानुलेपनैररुणैः स्वयमप्यलंकृतांग इति। तृतीयेङ्गानि ध्यानं च। यथा वर्णद्वंद्वैस्सांगविधिः स्मृतः पूर्वोक्तरूपामभयपाशकपालिनीमिति। सन्मिद्वरैः श्रेष्टसमिद्भिः आवरणपूजामाह। अंगानीति। केसरेषुयान्यंगानि सामान्यउक्तानि तानिस्युः त्रिकोणोपरि कर्णिकायामिति शेषः ध्यानस्यनारायणीये तथोक्तेःरक्तसिंधुचरत्पोतमासपत्राब्जयोनिगेति तदुक्तं च। अंगैः शक्तिभिराभिराशधिपैः क्रमात्पूज्येति तंत्रांतरेपि त्रिकोणषट्कोणद्वादशदलं पीठमुक्ता। अंगानिपूजयेदादौ त्रिकोणस्थास्तु पूजयेत्। इच्छाज्ञानक्रियासंज्ञाः षट्कोणेष्वर्चये त्ततः डाकिन्याद्याः द्वादशसुच्छन्नखाद्याः समर्चयेदिति। स्मरो द्वादश पुस्तकेषु विंदु-

विहिते पीठे पूजयेत्तां विधानतः ॥ आग्नेयादिषट्कोणेषु लक्ष्म्याद्याः परिपूजयेत् ॥ ९९ ॥ लक्ष्मीं हेमप्रभां तन्वीं सवराब्जयुगाभयां ॥ चक्रशंखगदांभोजधरे हेमनिभं हरिं ॥ १०० ॥ पाशांकुशाभयाभीष्टधरां गौरीं जपारुणां ॥ मृगटंकाभयाभीष्टधरं स्वर्णनिभं हरम् ॥ १ ॥ नीलोत्पलकरां सौम्यां रतिं कांचनसन्निभां ॥ धृतपाशांकुशेष्वासपुष्पेषु मरुणं स्मरम् ॥ २ ॥ पूर्ववन्निधियुग्मं तद्यजेदुभयपार्श्वयोः ॥ बहिरंगानि संपूज्य पूज्याः पत्रेषु मातरः ॥३॥ लोकेशान्वनितारूपानर्चयेत्सौम्यविग्रहान ॥ इत्थं यःपूजयेद्देवीनित्यं भक्तिसमन्वितः ॥ ४ ॥ संप्राप्य कवितां दिव्यां प्राप्यलक्ष्मीमनंतरां ॥ सौभाग्यमतुलं लब्ध्वाविहरेत्सुचिरं भुवि ॥५॥ पाशांकुशपुटाशक्तिर्झिंटीशोगगनं सदृक् ॥ परमेश्वरिशब्दांते द्विठांतः प्रणवादिकः ॥ ६ ॥ अश्वारूढामनुः प्रोक्तस्त्रयोदशभिरक्षरैः ॥द्वाभ्यामेकेन चैकेन द्वाभ्यां पंचभिरक्षरैः॥७॥द्वाभ्यामंगानि षट्कुर्यात्ततो देवीं विचिंतयेत् ॥ रक्तामश्वाधिरूढां शशधरशकलाबद्धमौलिं त्रिनेत्रां पाशेनाबध्यसाध्यां स्मरशरविवशां दक्षिणेनानयन्तीं॥हस्तेनान्येनवेत्रं वरकनकमयं धारयंतीं मनोज्ञां देवीं ध्यायेदजस्रां कुचभरनमितांदिव्याहाराभिरामां॥८॥बाणलक्षं जपेन्मन्त्रमाज्येनांते जितेन्द्रियः ॥ दशांशं जुहुयाद्देवीं शक्तिपीठे समर्चयेत् ॥९॥ पाशादित्र्यक्षरोक्तेन विधानेन समाहितः ॥ आज्याढ्यान्नाहुतान्मंत्री लभते वांच्छितं फलम् ॥ १० ॥ लवणैर्मधुसंसिक्तैर्होमेन वशयेन्नृपान् ॥ तेनैव विधिनामंत्री वशयेद्वनितामपि ॥११ ॥ आलिख्यकोष्ठानि वि-

---

द्वयस्य रेखात्मकतालेखकदोषवशात्। उक्तं च नारायणीये । मेखलाद्राविणी वेगवती कामस्य ताः स्मृता इति। आचार्या अपि सस्मरा द्वादशैतेति। अत एव शक्तय इत्युक्तिः। अन्यथा ध्यानमात्रमेव वदेत् तेन शक्तीनामिदं ध्यानं स्मरस्तु प्रसिद्धध्यान इति भावः रक्तविग्रहाः अरुणदेहाः मातरो दिग्विदिक्ष्विति द्वादशदलाद्वहिः स्थानमात्रनिर्देशः तेन पुरोभागादिप्रादक्षिण्येन चतुरस्रांतराष्टदिक्षु तत्र पूजनं। दिगीश्वराइति। तदस्त्रोपलक्षकं। तृतीये तु आवरणपूजा अंगैः पूर्वं मंत्रोक्ताष्टशक्तिभिर्लोकपालैस्तदस्त्रैश्च दीक्षितः प्रजपेल्लक्षं मनुर्येन हुनेत्ततः मधूकपुष्पैः स्वादुक्तैरयुतं हविषाथवेति। त्रैपुटमंत्रमाह। श्रीतिसम्मोहनइत्युपलक्षणं भृगुशक्तिसंमोहनाक्षरय इति ज्ञेयं। आद्यबीजं द्वितीयं शक्तिपारिजातेति पारिजातवने मंडपे कल्पवृक्षस्याधस्तान्मणिकुट्टिमे रत्नसिंहासने पद्मे निषण्णां देवतां स्मरेदित्यन्वयः व्यधिकरण्यः सप्तम्यः पद्मे चतुःपत्रे अमृतपत्रे च। तत्र षट्कोणकर्णिकायां चतुः पत्रमन्यत् तत्कर्णिकं। उक्तं च नारायणीये। यजेदेनां चतुः पत्रे षट्कोणस्थांबुजे च तामिति। अथ चैतदुक्तं भवति। अनंतानंतरं सुवर्णभूमिपारिजातवनं रत्नमंडपं मणिकुट्टिमं रत्नसिंहासनं पूजयेत् शेषं समानं नवकनकभासुरोर्वीविरचितमणिकुट्टिमे सकल्पतराविल्याचार्योक्तः चापमितीक्षु चापं आयुधध्यानं वामाधस्तात् दक्षाधः पर्यंतं । तदुक्तमाचार्यैः ध्यायेद्धृताब्जयुगपाशवरांकुशेक्षुचापां सपुष्पविशिखां नवहेमवर्णामिति । ताबूलकरंडकमित्येकं समुद्गकः संपुटकः गंधादिस्थापनपात्रं। दूतीभिरिति घृणिनी सूर्या आदित्या प्रभावतीति। चतस्रः सौम्यादिचतुर्दलस्था। एता अपि द्विभुजाः। दक्षिणहस्ते चामरादिवामहस्तेऽभयम्। तदुक्तम्। निरा-

कारसंख्यान्यतश्चतुष्के प्रणवं ससाध्यं ॥ अन्येष्वपि द्वादशमत्रवर्णालिलखेदिदं यंत्रमशेषवश्यं ॥ १२ ॥ मायात्तद्भगवत्यंते माहेश्वरिपदं वदेत् ॥ अन्नपूर्णे ठयुगलं मनुः सप्तदशाक्षरः ॥ १३ ॥ अंगानि मायया कुर्यात्ततोदेवीं विचिंतयेत् ॥ रक्तां विचित्रवसनां नवचंद्रचूडामन्नप्रदाननिरतां स्तनभारनम्रां ॥ नृत्यंतमिंदुशकलाभरणं त्रिलोक्यत्दृष्टां भजेद्भगवतीं भवदुःखहंत्रीं ॥ १४ ॥ यथाविधि जपेन्मंत्रं वसुयुग्मसहस्रकम् ॥ साज्येनान्नेन जुहुयात् तद्दशांशमनंतरम् ॥ १५ ॥ शक्तिपीठे यजेद्देवीं मंगलोकेश्वरायुधैः ॥ प्रातरेनं जपेन्मंत्रं नित्यमष्टोत्तरंशतम्॥१६॥ एतस्यान्नसमृद्धिः स्याच्छ्रिया सहमहीयसी॥ माया पद्मावतिपदं ततः पावकवल्लभा ॥ १७ ॥ सप्तार्णो मनुराख्यातः सर्ववश्यप्रदायकः ॥ अंगानि मायया कुर्याद्ध्यायेत् त्रैलोक्यमोहिनीं ॥१८॥ पद्मासनस्थां करपंकजाभ्यां रक्तोत्पले संदधतीं त्रिनेत्रां॥ आबिभ्रतीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं भजामि ॥ १९ ॥ पक्षलक्षंजपेन्मंत्रं दशांशं

---

युधे करे प्रोक्तो वरः साधारणः सदा । अभयंचेति । नारायणीये तु कृतांजलित्वमुक्तम् । तद्दूतीश्च कृता कृतांजलीः । सौम्यादिघृणिनी सूर्यादित्यां च प्रभावतीमितिभानुलचंद्रादशलचं । आरग्वधोराजवृच्चःविधानत इत्यनेन तत्रांतरोक्तं यंत्रे बीजलिखनं सूचितं ।तदुक्तं संहितायां । षट्कोण पूर्वमालिख्य मध्ये विद्यांलिखेत्सुधीः।वीप्सयातां तु षट्कोणे कोणेषु क्रमतो लिखेत्।बाह्ये वसुदलं कुर्याद्दीर्घस्वरविभूषितं चतुरस्रं । चतुर्द्वारभूषितं मंडलं लिखेत् इति । टंकः परशुःइष्वासो धनुःआयुधध्यानं स्वस्वप्रकारेणानुसंधेयं । पूर्ववदिति । सशक्तिकध्यानं । उभयपार्श्वयोः षट्कोणपार्श्वयोः एतदंतमावरणं । बहिरिति । षट्कोणादष्टदलकेसरेषुसौम्यविग्रहानित्यनेन उत्तुंगयौवनोन्मत्तां देव्याराधनगर्विता इति । तंत्रांतरोक्तमुक्तं भवति कवितामित्यत्र वाग्भवादित्वं प्राप्य लक्ष्मीमिती श्रीबीजादित्वं तदुक्तं नारायणीये । श्री कामशक्तिबीजात्मा श्रीकरो वश्यकृन्मनुरिति सौभाग्यमिति कामादित्वं मायामध्यत्वं मायांतत्वे तु त्रिपुरामंत्रांतर्भावः एवमुभयशक्त्यादित्वे यशस्करं ज्ञेयं । यद्बीजादिको मंत्रस्तदादिकान्यंगान्यपि कुर्यात्॥१००॥अश्वारूढामंत्रमाह पाशेति । पाश आं अंकुशः क्रों शक्तिर्मायाबीजं तेन पाशादित्रयक्षरः त्रयोदशभिरक्षरैरि इत्युक्तौ राद्यंतयोः पाशाभ्यां पुटितत्वं न गृह्यतइति ज्ञेयं । झिंडीशः एगगनंहः सष्टगिकारसहितं तेन हि सांप्रदायिका । अस्य द्विरुक्तिंरागादित्वं च वदंति । अन्ये तु अव्धितः शरतो बाणतःऋक्यादान् त्रीन् पठित्वा अंते ह्रिठांकुशमायापाशप्रणवा इति । यदयक्षचद्वचहद्ददागाभिसूर्य सर्वत दिं द्रने व शे इति ऋक्।अस्य ब्रह्मा ऋषिः विराट् छंदः प्रणवो बीजं स्वाहाशक्तिः अन्यपूर्वोद्धृतामिवदशाक्षरी मन्यंते। मूर्द्धालिकाक्षिनासाग्रवक्त्रकंठेषु चक्रमात् । हृन्नाभिध्वजमूलांघ्रिष्वक्षराणि प्रविन्यसेत् इति । त्रयोदशाक्षरन्यासो यथा मूर्द्धालिकाक्ष्णोकर्णाक्षिनासाग्रास्यंगुलेषुच । हृन्नाभिध्वजमूलांघ्रिष्वक्षराणि प्रविन्यसेत् ईति । षट्दीर्घमायमादशाक्षर्या षडंगं ग्रंथोक्तषडंगेष्वपि षट्दीर्घमायायोगमाहुः सांप्रदायिकाः । दशाक्षर्या ध्यानं अरुणामरुणाब्जस्थामरुणांबरभूषणाम् । चतुर्भुजां त्रिनेत्रां च प्रसन्नवदनां शिवां। खड्गंचर्मचयष्टिंचदधानांदक्षवामयोः।अधस्ताद्वै मवेत्तस्याशत्पास्तस्योर्ध्वतस्थितः।कंठेबध्वाथ पाशेनसा-

जुहुयाद्घृतैः। शक्तिपीठे यजेद्देवीमंगाद्यावरणैः सह ॥२०॥ किंजल्केष्वंगपूजा स्यात्पूज्याः पत्रेषु मातरः। लोकपाला बहिः पूज्या स्तदस्त्राणि ततो बहिः ॥ २१ ॥ इत्थं यो भजते मंत्रं जपहोमार्चनादिभिः । सुभगः सर्वनारीणां भवेत्काम इवापरः ॥ २२ ॥ षडस्रमध्ये प्रविलिख्य शक्तिं कोणेषु शिष्टानि षडक्षराणि। तद्वाह्यतोमातृकयाभिवीतं पद्मावतीयंत्रमिदं प्रशस्तम् ॥ २३ ॥ तारं शिरसि विन्यस्य रेवीं संचिन्त्य भारतीम्। शक्तिबीजं न्यसेद्भाले संस्मृत्य भुवनेश्वरीम् ॥ २४ ॥ अमसौ नेत्रयोर्न्यस्येत् ध्यात्वा सूर्यं हुताशनम्। मुखे वृत्तेन विन्यस्येद्दान्तं चन्द्रमनुस्मरन् ॥ २५ ॥ जिह्वायां विन्यसेद्बीजं रमायास्तां विचिन्तयन् ।

---

ध्यं त्वत्समाहूतं। बद्धांजलिकरं व्योम्नि भ्रमंतं पातितं पदे। आकर्षयंतीं ध्यायेत्तामिति॥१०३॥त्रयोदशा-चार्यध्यानमाह रक्तामिति अश्वेति। रक्तोऽश्वः स्मरशरविवशां साध्यां पाशेनावध्यकंठेइति ज्ञेयं। कंठे बध्वाथ पाशेनेति उक्तेः अन्येन वामेन हस्तेनानयंतीं। पुनः किं विशिष्टां दक्षिणेन वेत्रंधारयंतीं तदुक्तं अश्वारूढा कराग्रे नवकनकमयींवेत्रयष्टिंदधाना दक्षेन्येनानयंतीति। बाणलक्षं पंचलक्षं। दशाचार्यास्तु। हविष्याशी जपेद्वर्णलक्षं होमं दशांशतः। विटप्यात्तु पलाशैर्वा जपापुष्पैश्च वा प्रिये। कुसुंभकुसुमैर्वाज्यैरन्यैर्वारक्तपुष्पकैरिति पूजातु पंचपत्राब्जयुगलं षट्कोणाष्टदलाब्जयुक् चतुरस्रद्वयंद्वारद्वयायुक्तमिति प्रिये। चक्रं विधाय तां देवीमावाह्यात्र प्रपूजयेत्। अंगैर्वाणैश्च शब्दाद्यैराकर्षण्यतिकैः परं। श्रोत्रादिभिश्च बुध्यंतैराकर्षण्यंतिमैः परं। प्राणात्मशक्तिचैतन्यं मनोहंकारभावकान्।शरीरं चाष्टपत्रेष्वाकर्षणीपदपश्चिमान्।ब्राह्म्याद्या लोकपालाश्च तदस्त्राणि च तद्बहिरिति।यंत्रं च त्रिकोणषट्कोणवृत्तं यंत्रं कृत्वा सवृत्तकं। तन्मध्ये विलिखेत्पूर्वं विद्याद्यंच ततः परं। वर्णत्रयं त्रिकोणेषु षट्कोणेषु षडक्षरान्। तद्वाह्यवृत्तवीथ्या तु मातृकां वेष्टयेत्क्रमात्। एवं मध्ये प्रविन्यासाद्दशयंत्राणि कल्पयेत्। जपपूजनसंपातैर्वश्यकृष्टिवसुश्रियः।भूरत्नकीर्तिसौभाग्यनिधिकां तीश्च साधयेत् इति।१०६॥यंत्रमाह आलिख्येति। त्रिकाराः षोडशलिखेदिति।अग्रादिप्रादक्षिण्येन।अंनपूर्णामंत्रमाह। मयेति ह्रनमः अत्र नमः शब्दसकारस्य रोत्वे गुणे च उकार इति ज्ञेयं वयुगलं स्वाहा। अत्र सप्तदशाक्षर इत्युक्तेः रि अ इत्यत्र न यणादेशः केचनास्य प्रणवादित्वमाहुः ब्रह्माऋषिः अनुष्टुपछंदः मायाबीजं स्वाहाशक्तिः। माययेति। षट्दीर्घयुक्तया अन्नप्रदाननिरतामिति विनियोगोक्तिः इंदुशकलाभरणं शिवं। यथा विधीतिपुरश्चरणोक्तमार्गेण वसुयुग्मसहस्रं षोडशसह॥१११॥सुंपद्मावतीमंत्रमाह।मायेति।सर्ववश्येति विनियोगोक्तिःत्रैलोक्यमोहिनीमित्यपि। ब्रह्माऋषिः गायत्रीछंदःमायाबीजं स्वाहाशक्ति अत्रापि माययेति पूर्ववत् यच्च लक्षंलक्षद्वयं॥११८॥अमठन्यासमाह।तारमिति अम सौ अं बिंदुः अः विसर्गःमुखवृत्तेन मुखवृत्त इत्यर्थः क्वचिन्मुखे वृत्तेनेति-पाठः वृत्तेन वृत्तरूपेण मुखे न्यसेदिति टांतं ठकारं तद्गजेंद्रधिया लक्ष्मीगजेंद्रबुध्या विचिंत्येत्युक्तेः तत् प्रकरणे तत्ध्यानमनुसंधेयं। तत्र तर्जन्यनामिकाकनिष्ठाः समाकुंच्ययुक्ताभ्यांमध्यमांगुष्ठाभ्यांगजशुंडाकाराभ्यामयं न्यासः कर्त्तव्य इत्युपदेशः सांप्रदायिकानां गजेंद्रध्यानं यथा। तारकुंदेंदुधवलौ गलगंडमदोत्कटौ। लसत्पुष्करशोभाढ्यौ स्फुरद्दंतौ गजौ भजे इति। कीर्त्तिश्रीत्यनेनास्यस्वा-

स्वाहार्णौ गण्डयोर्न्यस्येत्तद्गजेन्द्रधिया सुधीः ॥ २६ ॥ अमठं न्यासमाख्यातं कुर्वन्प्रतिदिनं नरः। कीर्तिश्रीकान्तिमेधानां वल्लभो भवति ध्रुवम् ॥ २७ ॥ इति श्रीशारदातिलके दशमः पटलः ॥ १० ॥ ततो दुर्गामनुं वक्ष्ये दृष्टादृष्टफलप्रदम् । माया त्रिःकर्ण बिन्द्वाढ्यो भूयो सौ सर्गवान्भवेत् ॥ १ ॥ पञ्चान्तकः प्रतिष्ठावान्मारुतो भौतिकासनः। तारादिहृदयांतोयं मन्त्रो वस्वक्षरात्मकः ॥२॥ ऋषिश्च नारदश्छन्दो गायत्रं देवतामनोः। दुर्गा समीरिता सद्भिर्दुरितापन्निवारिणी ॥ ३ ॥ नमस्कारवियुक्तेन मूलमन्त्रेण साधकः॥ ह्रामाद्यैः सह कुर्वीत षडंगानि यथाविधि ॥ ४ ॥ सिंहस्था शशिशेखरामरकतप्रख्यैश्चतुर्भिर्भुजैः शंखं चक्रधनुः शरांश्च दधती नेत्रैस्त्रिभिः शोभिता ॥ आमुक्तांगदहारकंकणरणत्कांचीरणन्नूपुरा-दुर्गा दुर्गतिहारिणी भवतु वो रत्नोल्लसत्कुंडला ॥ ५ ॥ वसुलक्षं जपेन्मन्त्रं तिलैर्मधुरलोलितैः ॥ पयोंधसावाजुहुयात्तत्सहस्त्रं जितेंद्रियः ॥ ६ ॥ पीठमित्थं यजेत्सम्यक् नवशक्तिसमन्वितम् ॥ प्रभा माया जयासूक्ष्मा विशुद्धा नंदिनी पुनः ॥ ७ ॥ सुप्रभा विजया सर्व-

---

तंत्रमुक्तं। तत्र प्रयोगः। ॐ सरस्वत्यै नमः क्लीं उमायै नमः अं सूर्यमंडलाय अः वन्हिमंडलाय वंसोममंडलाय श्रीं श्रियै स्वां दंतिने। हां दंतिने। अस्यछंदऋष्यादिकं यथा।अमठश्री मंत्रस्य।लक्ष्मीनारायणऋषिः। बृहतीच्छंदः। अमठश्रीर्देवता। क्लीं बीजं श्रीं शक्तिः। सर्ववश्यार्थे विनीयोगः। ॐ श्रीं हृत्। श्रीकरि शिरः धनकरी शिखा धान्यकरी वर्म। ऋद्धिकरी नेत्रं। पुष्टिकरि अस्त्रं॥ १२७॥ इतिशारदातिलकटीकायासत्सं प्रदायव्याख्यायांपदार्थादर्शाभिख्यायांत्वरितामंत्रकथनंनाम दशमः पटलः ॥ १० ॥ श्रीगणेशायनमः ॥ एवं नित्यामंत्रानुक्त्वा द्वादशगुह्यिते दुर्गाबीजस्योक्तत्वात् दुर्गामंत्रांन्वक्तुं प्रक्रमते। ततइति। मंत्रमुद्धरति मायेति माया शक्तिबीजं। अत्रिर्दकारः कर्णउकारः बिंदुरनुस्वार एतदाद्यइत्यनेन दुं भूयोसौ दुकारः सर्गवान् विसर्गयुक्तः अनेन एतादृशमपिबीजमिति सूचितम्। एतदर्थमेव सर्गवानित्युक्तिः मंत्रेतु रेफ एव।उपसर्गस्य तादृग्रूपत्वात्।पंचांतको गकारम्। प्रतिष्ठावानाकारयुक्तः तेन गा इति मारुतो यकारम्। भौतिक ऐकारस्तदासनस्ते नयैः। तदुक्तं। तार माया स्वबीजानि दुर्गायैहृदयांतिक इति साम्प्रदायिकाः मायाबीजानन्तरं कामबीजम।दुः दुं बीजं माया शक्तिः दुरितेत्यादिना विनियोगोक्तिः नमस्कारेतिमूलमन्त्रेण नमस्कारवियुक्तेन ह्रामाद्यैःह्रांह्रींमित्याद्यैः सहषडंगानि कुर्वीतेति सम्बन्धः। प्रयोगस्तु। ॐ ह्रीं दुं दुर्गायै ह्रां हृदयाय नमः। ॐ ह्रीं दुं दुर्गायै शिरसे स्वाहा इत्यादि। तदुक्तं। तारो माया च दुर्गायै ह्रीं ङाद्यन्तांगकल्पना इति। अत्र चकारेण दुर्गाबीजस्य समुच्चय इति तट्टीकाकारैर्व्याख्यातम्। यथाविधीति। शक्तिषडङ्गमुद्रासूचनं॥८॥सिंहस्थेति। आयुधध्यानं वामाद्यूर्द्धयोराद्ये अधस्थयोःपरे। आमुक्ताधृता अंगदादयो ययेति विग्रहः दुर्गतिः दुष्टागतिर्दारिद्र्यं च। सर्वदुर्गामंत्रेषु ध्यानानंतरमियं मुद्रा दर्शनीया। मुष्टिं बध्वा कराभ्यां तु वामस्योपरिदक्षिणं। कृत्व शिरसि संपूज्यादुर्गामुद्रेयमीरिता इति। आयुधमुद्रादर्शनं च वसुलक्षमष्टलक्षं। पयोंधसा पायसेन। तत्सहस्रमष्टसहस्रं। इत्थं वक्ष्यमाणप्रकारेण सर्वसिद्धिदेति शक्तिनाम। आसां ध्यानमन्यत्रोक्तं। आदिस्वरैर्बिंदुयु-

सिद्धिदा नवशक्तयः ॥ अग्निभर्हस्वत्रयक्लीवरहितैः पूजयेदिमाः ॥ ८ ॥ प्रणवानंतरं वज्रनखदंष्ट्रायुधाय च ॥ महासिंहायवर्मास्त्रं नतिः सिंहमनुर्मतः ॥९॥ दद्यादासनमेतेनमूर्तिं मूलेन कल्पयेत् ॥ तस्यां संपूजयन्मूर्तौ देवीमावाह्य मन्त्रवित् ॥ १० ॥ अंगावृतिं पुराभ्यर्च्य शक्तीः पत्रेषु पूजयेत् ॥ जया च विजया कीर्तिः प्रीतिः पश्चात्प्रभा पुनः॥११ ॥ श्रद्धा मेधा श्रुतिः प्रोक्ता स्वना माद्यक्षरादिकाः ॥ पत्राग्रेष्वर्चयेदष्टावायुधानि यथाक्रमात् ॥ १२ ॥ चक्रशंखगदाखड्गपाशांकुशशरान्धनुः ॥ लोकेश्वरांस्ततो बाह्ये तेषामस्त्राण्यनंतरम् ॥ १३॥ इत्थं जयादिभिर्मंत्री मन्त्रे सिद्धे विधानवित् ॥ कुर्यात्प्रयोगानेतेन मनुना स्वमनीषितान् ॥ १४ ॥ प्रतिष्ठाप्य विधानेन कलशान्नवशोभनान् ॥ रत्नहेमादिसंयुक्तान्पदेषुनवसु स्थितान् ॥ १५ ॥ मध्यस्थे पूजयेद्देवीमितरेषुजयादिकाः ॥ संपूज्य गंधपुष्पाद्यैरभिषिंचेन्नराधिपम् ॥ १६ ॥ राजाविजयते शत्रून्साधकोविजयश्रियम् । प्राप्नोति रोगी दीर्घायुः सर्वव्याधिविवर्जितः ॥ वंध्याभिषिक्ता विधिना लभते तनयं वरम् ॥ मन्त्रेणानेन संजप्तमाज्यक्षुद्रज्वरापहम् ॥ १८ ॥ गर्भिणीनां विशेषेण जप्तं भस्मादिकं तथा ॥ मध्येतारे बीजमंतस्थसाध्यं पत्रेष्वष्टौ मन्त्रवर्णान्विलिख्य ॥ १९ ॥ त्रिष्टुप्वीतं वेष्टितं मातृकार्णैर्यंत्रं दौर्गंभूपुरस्थं विदध्यात् ॥ क्षुद्रभूतमहारोगचौरसर्पनिवारणम् ॥ २० ॥ विजयश्रीप्रदं पुंसां गर्भिणी-

---

तैरेकाराद्यैः षडक्षरैः।एताः सार्द्धं जपापुष्परक्तवर्णासिताननाः । चापबाणांजलिकरा शुक्लमाल्यानुलेपनाः । आत्मत्रयांते संपूज्यादलमध्येष्वनुक्रमादिति । अग्निरिति । ह्रस्वत्रयं ष इ उक्लीबाश्च । तद्रहितैरभिस्वरैर्नवज्भिरित्यर्थः प्रयोगस्तु । आं प्रभायै नम इत्यादि ॥ ८ ॥ सिंहमंत्रमाह । प्रणवेति । प्रणवानंतरं प्रणवमुच्चार्यवज्रनखदंष्ट्रायुधायेति । स्वरूपमाह । सिंहायइति । स्वरूपं वर्महुंअस्त्रं फट् । नतिर्नमः पदं । अभ्यर्च्येति । तुर्योक्तरीत्या । जयेति । आसां ध्यानमुक्तमन्यत्र । आजन्मरक्तप्रख्याः सर्वाश्चशशिभूषणाः । दधत्यः सायकं हस्तैः शूलकार्मुकतर्ज्जनीः । जपाद्याः पूजनीयास्युर्ज्जमित्याद्यर्णसंयुता इति । विधानवित्प्रयोगान् कुर्वीतेति अनेनैतदुक्तं भवति । श्रीबीजादिः श्रियै मृत्युंजयादिर्दीर्घायुषि । नृसिंहबीजादि वैरिजये । सर्वपुटितत्वे सर्वकामावाप्तिः कामादित्वे पुत्रावाप्तिरिति एतद्बीजयोगः शक्त्यनंतरं ज्ञेयः प्रतिष्ठाप्यविधानेनेति मातृकापटलोक्तविधिना हेमादीत्यादिशब्देन शाक्तं गंधाष्टकं पदेषु नवसु इति नवनाभमंडलस्थेति शेषः । गंधपुष्पाद्यैरित्याद्यशब्दान्धधूपदीपनैवेद्यानि संपूज्येत्युपलक्षणं । तत्र संपातयुक्ताः जप्तास्वेतिज्ञेयं । यदाहुः कषायसलिलैः कुंभानभिपूर्ययथाविधि । त्रिसहस्रं जपेन्मंत्रं घृतसंपातसंयुतं । तैश्चाभिषिक्ताः शुद्धात्मापूर्वेद्युः समुपोषितः । जयेच्छत्रून् क्षणाद्राजा प्राप्नोति विजयं श्रियं । रोगी तु ग्रहपीडाभ्यांमुच्यते व्याधिभिस्तथेति । आज्यं भक्षितमिति शेषः भस्मादिकं घृतमितिशेषः । आदिशब्दादुगंधपुष्पादि तथेति । क्षुद्रग्रहापहमित्यर्थः। यंत्रमाह । मध्यइति मध्येतारे इतिव्यधिकरणे सप्तम्यौ मध्येकर्णिकायां तारे प्रणवे बीजं दौर्गामंतस्थितसाध्यं मध्यस्थितसाधकनामकर्मसहितं विलिखेदिति संबंधः त्रिष्टुपूजातवेदाः सुद्दाविशेवच्चरते ॥ २० ॥ महिषमर्द्दिनीमंत्रमाह । भ्रांतमिति । भ्रांतं

नां सुखप्रदम् ॥ भांतं विपत्सनयनं श्वेतो मर्दिनि ठद्वयम् ॥ २१ ॥ अष्टाक्षरीयमाख्याता विद्या महिषमर्द्दिनी ॥ महिषहिंसिके हुंफट्तद्धृदयं परिकीर्तितम् ॥ २२ ॥ महिषशत्रो शा- र्ङ्गी हुंफट्शिरोंगं समुदात्हृतम् ॥ माहिषं भीषयद्वंद्वं हुंफडंतः शिखामनुः ॥ २३ ॥ महिषं ह- नुयुग्मांते देवि हुंफट्तनुच्छदं ॥महि षांते सूदिनी हुंफडंतमस्त्रमीरितम्॥२४॥ मन्त्रैरेतैर्जातियु- क्तैः पंचांगानि प्रकल्पयेत् ॥ गारुडोपलसन्निभां मणिमौलिकुंढलमांडितां नौमि भालविलो- चनां महिषोत्तमांगनिषेदुषीं ॥ चक्रशंखकृपाणखेटकबाणकार्मुकशूलकांस्तर्ज्जनीमपिबिभ्रतीं- निजबाहुभिः शशिशेखरां ॥ २६ ॥ अष्टलक्षं जपेन्मंत्रं तत्सहस्रं तिलैः शुभैः ॥ हुत्वा प्रा- गीरीते पीठे यजेन्माहिषमर्दिनीं ॥ २७ ॥ संपूज्यांगानि पत्रेषु दुर्गाख्यां वरवर्णिनीं ॥ आ र्याह्वयां तृतीयां च चतुर्थीं कनकप्रभां ॥ २८ ॥ पंचमीं कृतिकासंज्ञां षष्ठीमप्यभयप्रदां ॥ कन्यां सुरूपां प्रभजेन्मत्रीदीर्घस्वरैः क्रमात् ॥ २९ ॥ यजेदग्रेष्वायुधानि चक्रशंखासिखेट- कान् ॥ बाणं बाणासनं शूलं कपालं यादिभिः क्रमात् ॥ ३० ॥ लोकपालाः पुनः पूज्या- स्तदस्त्राणि ततः परं ॥ वशयेत्तिलहोमेन नरान्नरपतीनपि ॥३१॥ सिद्धार्थैर्जुहुयान्मंत्री रो- गान्मुच्येत तत्क्षणात् ॥ पद्मैर्हुत्वा जयेच्छत्रून्दूर्वाभिःशांतिमाप्नुयात् ॥ ३२ ॥ पलाशकुसु- मैः पुष्टिर्धान्यैर्धान्यश्रियं व्रजेत् ॥ काकपक्षैः कृतोहोमो द्वेषं वितनुते नृणां ॥ ३३ ॥ मरीच

---

मकारवियत् हकारः सनयनमिकारसहितस्तेन महिश्वेतःषमर्द्दिनिस्वसूपंठद्वयं स्वाहा। उक्तं हि नारायणीये। विषं हिमज्जाकालाग्निरतिनिष्ठोनि ठद्वयमिति। मं बीजं स्वाहाशक्तिः अस्य शाक वत्सो नामऋषिः। प्रकृतिश्छंदः। अन्ये मार्कंडेयमृषिमाहुः। शिखावर्म्मणो मंत्रेपि महिषशब्दो द्वितीयांतो ज्ञेयः ॥ २४ ॥ ध्यानं। गारुडेति। गारुडोपलः गारुडोद्गारमणिः आयुधानि दक्षाद्यूर्ध्व योराद्ये तदधोधस्तयोः परेपरे। तर्ज्जनीमिति। तर्ज्जनीमुद्रां। तल्लक्षणं यथा। तर्ज्जन्येकाकिनी तू र्ध्वाशेषाः संमिलितास्त्वधः। मुद्रेयं तर्ज्जनी प्रोक्ता वक्तुश्रोत्रोस्त्वभीतिदेति। तदुक्तमीशानसंहिता याम्।ध्यायेच्छ्यामां महादुर्गांसर्वाभरणभूषितां। जटामुकुटशोभाढ्यां स्फुरच्चंद्रकलान्वितां। पीतां बरधरां देवीं पीनोन्नतकुचद्वयां।चक्रशंखलसद्धस्तां तदधः खड्गखेटकौ। बाणचापौ च तदधःसशूलां तर्जनीमध इति। प्रागीरिति अव्यवहिते दौर्गे पीठे। संपूज्यांगानीति। केसरेष्विति शेषः पत्रेष्वि त्यग्रिमेण संबध्यते। दीर्घस्वरैरिति। क्लीबद्वयांत्यरहितैरितिशेषः।दीर्घशब्देन पारिभाषिकग्रहणांते न आई ऊ ए ऐ ओ औ अं एभिरष्टभिरित्यर्थः। नारायणीये पूर्व पटले अनंतसार्घियोन्यादित्युक्तो त्तरपटले आद्यैः स्वरैः क्रमादित्युक्तं। एदभिप्रायेणैवापेक्षितार्थद्योतनिकायांव्याख्यातं आद्यैः आ ई ऊ ए ऐ ओ औ अं इति स्वरैरिति। अग्रेषु। पत्राग्रेषु पादिभिरिति। हांतैरित्यर्थः। वशयेदि ति। कामबीजादित्वं। मंत्रीत्यनेन मृत्युंजयादित्वं सूचितं। जयेदिति। स्वबीजादि। शांतिमिति। नृसिंहादित्वं। तार्त्तीयादित्वं। धान्यश्रियमिति। श्रीबीजादित्वं। मरीचेति। मरीचशब्दोदीर्घ मध्योप्यस्ति। तथाच शब्दभेदप्रकाशे। मीचं मरिचं तथेति। मरणमिति स्वबीजादित्वं ॥ ३३ ॥ जपदुर्गांनंत्रमाहतारइति। तारः प्रणवः दुर्गे युगं दुर्गे रक्षरेफः। अंत्यं चः ठांतं णः सलोचनं इका

होमान्मरणंरिपुराप्नोति सर्वथा ॥ क्षुद्रादिचोरभूताद्यान्ध्यात्वादेवीं विनाशयेत् ॥ ३४ ॥ तारो दुर्गेयुगं रक्तमंत्यं द्वांतं सलोचनं ॥ द्विठांता जयदुर्गेयं विद्या वेद्या दशाक्षरी ॥३५॥ तारादिदुर्गे त्दृदयं दुर्गे शिर उदात्दृतम् ॥ दुर्गायै स्याच्छिखावर्मभूतरक्षाणिकीर्तितम् ॥३६॥ तारादिदुर्गे युगलं रक्षिण्यस्त्रं समीरितम् ॥ कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेंदुरेखां शंखं चक्रं कृपाणं त्रिशिखमपिकरैरुद्वहंतीं त्रिनेत्रां । सिंहस्कंधारूढां त्रिभुवनमखिलं तेजसापूरयंतीं ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥ ३८ ॥ बाणलक्षं जपेन्मन्त्रं घृतेन जुहुयात्ततः । दशांशं संस्कृते वन्हौ ब्राह्मणानपिभोजयेत् ॥ ३९ ॥ अष्टाक्षरोदिते पीठे पूजयेत्पूर्ववत्सुधीः ॥ मंत्रं जपन् विशेद्युद्धे शत्रून्हन्याद्विशेषतः ॥४०॥ प्रजपेद्व्यवहारादौ तत्रापि विजयी भवेत् ॥ अर्चयेदस्त्रशस्त्राणि जयार्थीविद्ययानया ॥ ४१॥ ज्वलज्वलपदांतेस्याच्छूलिनीति पदं वदेत् ॥ दुष्टग्रहुमस्त्रांते वन्हिजायावधिर्मनुः ॥ ४२ ॥

---

रसहितमित्युभयविशेषणं । तेन चिणि । द्विठांतास्वाहान्ता: । तदुक्तं नारायणीये । तारं दुर्गेद्वयं वह्निरत्यंठांतं सद्दक्शिर इति । अपेक्षितार्थद्योतनिकायां व्याख्यातं । सदृगित्युभयविशेषणं । तेनचिणीति । मार्कंडेयो मुनिर्बृहतीछंदः । प्रणवोबीजं स्वाहा शक्तिः । तारादीति । वर्मांतं संबध्यते ॥ ३६ ॥ कालेति । त्रिशिखं त्रिशूलं । आयुधध्यानमष्टाक्षरीवत् । सिद्धीति विनियोगोक्तिः । बाणलक्षंपंचलक्षं ब्राह्मणानपि भोजयेदित्यनेन पुरश्चरणे ये दशप्रकारास्तेसूचिताः । तदुक्तं । जपो होम स्तर्पणं च स्वाभिषेकोघ्यमर्वणम् । सूर्यार्घ्यं जलपानं स्यात्प्रणामं देवपूजनम् । ब्राह्मणानाम् भोजनं च पूवपूर्वदशांशत इति । इदं सर्वमन्त्रपुरश्चरणे ज्ञेयम् । केचन प्रकारपञ्चकमेवाहुः । जपो होमस्तर्पणं च पूजाब्राह्मणभोजनमिति । सर्वत्र जपादिभिरित्यादिशब्दार्थोयमेवज्ञेयः । अष्टाक्षरीदिते दुर्गाष्टाक्षरोदिते । अत्रापि प्रयोगे प्रणवानन्तरं स्वबीजादिप्रक्षेपइति ज्ञेयम् । अस्त्रं बाणादिशस्त्रं खड्गादि ॥४१॥ शूलिनिदुर्गामन्त्रमाह । ज्वलेति । अत्र भूतानि पञ्च । इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि दश तेषां सङ्कलनेन पञ्चदशसंख्या भवन्ति । नत्वङ्कानां वामतो गतिरिति क्रमेण मन्त्राक्षरगणना विधेया । तथासति पञ्चोत्तरशताक्षरसंख्या भवति । भूतेन्द्रियाक्षरैः पञ्चदशाक्षरैः कुं बीजं स्वाहाशक्तिः । ग्रहेत्यादिग्रहाणामष्टादशानां क्षुद्राणां स्तम्भविद्वेषाकर्षणादोच्चाटनभ्रममारणव्याधीनामादिशब्दात्भूतप्रेतडाकिन्यादीनाम्।विनाशन इत्यनेन विनियोगंवदताप्रणवशक्तिनृसिंहदुर्गाबीजपुटितत्वं वषडन्तत्वमपि सूचितम् । हृद्दृदङ्गमन्त्रः एवं शीर्षेपि । तच्छिखेति । तस्य मन्त्रस्य शिखमन्त्र इत्यर्थः । युद्धपूर्वप्रिये युद्धप्रिये । देवेत्यादिमहायोगेश्वरि पर्यन्तं अस्त्रमितिशेषः । वर्म्मासुरान्ते मर्द्दिनि युद्धपूर्वप्रिये पुनः । त्रासय द्वितयं चास्त्रमितिपाठः । पञ्चागमनवः क्रमात्प्रत्येकं शूलिन्याद्या हुंफडन्ताः स्मृता इति सम्बन्धः । प्रयोगस्तुशूलिनि दुर्गे हुंफट्हृदयाय नम इत्यादि साम्प्रदायिकास्तु पूर्वपूर्वानुविद्धत्वमङ्गानां वदन्ति तेन शूलिनि दुर्गे वरदे हुंफट्शिरसे स्वाहा इत्यादि प्रयोगः । अन्येतु कामनाविशेषेन्यथ्यांगान्याहुः । दुर्गेहृदयमाख्यातं वरदे तच्छिरः शिखः । विंध्यवासिनि वर्मस्यादसुरान्ते तु मर्द्दिनि । युद्धप्रिये युतं चास्त्रं त्रासद्वितयं भवेत् । एषा-

भूतेन्द्रियाक्षरः प्रोक्तो ग्रहक्षुद्रारिनाशकः ॥ऋषिर्दीर्घतमाः प्रोक्तः ककुप्छंद उदाहृतः ॥४३॥ शूलिनी देवता प्रोक्ता समस्तसुरवंदिता दुर्गेहृद्वरदे शीर्षे विंध्यवासिनि तच्छिखा ॥४४॥ असुरांते मर्दिनी स्याद्युध्यपूर्वे प्रिये पुनः ॥ त्रासयद्वितयं वर्म देवसिद्धसुपूजिते ॥ ४५ ॥-दिनी स्याद्रक्षयुगं महायोगेश्वरि क्रमात् ॥ शूलिन्याद्या हुंफडंताः पंचांगमनवः स्मृताः॥४६॥ अध्यारूढामृगेंद्रं सजलजलधरश्यामलां हस्तपद्मैः शूलं बाणं कृपाणामरिजलजगदाचापपाशान्वहंतीं ॥ चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरसिना खेटकान् बिभ्रतीभिः कन्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि ॥ ४७ ॥ मनुमेनं जपेन्मन्त्री वर्णलक्षं विचक्षणः ॥ सर्षिपान्नेन होमस्तु तद्दशांशमितो भवेत् ॥ ४८॥ प्रागुक्ते पूजयेत्पीठेवक्ष्यमाणेन वर्त्मना ॥ विधाय पूजामंगानां पूज्याः पत्रेषु शक्तयः ॥ ४९ ॥ दुर्गाद्या वरदाविंध्यवासिन्यसुरमार्दिनी ॥ युद्धप्रियापंचमीस्याद्देवसिद्धसुपूजिता ॥ ५० ॥ सप्तमी नंदिनी प्रोक्ता महायोगेश्वरीपरा ॥ दलाग्रेषु तदस्त्राणिशंखचक्रमासिपुनः ॥ ५१ ॥ गदेषुचापशूलानि पाशंपश्चाद्दिशाधिपान् ॥ इत्थं जपादिभिः सिद्धः कुर्यात्कर्मनिजेप्सितम् ॥ ५२ ॥ अष्टोत्तरसहस्रं यस्तिलैस्त्रिमधुराप्लुतैः ॥ नित्यं प्रजुहुयात्तस्य शक्तिः स्यादतिमानुषी ॥ ५४ ॥ अष्टोत्तरशतं नित्यं सर्पिषा जुहुयान्नरः ॥ वांछितं वत्सरादर्वाक् प्राप्नुयान्महतीं श्रियम् ॥ ५४ ॥ दूर्वाहोमो भवेन्नृणां सर्ववांच्छितसिद्धिदः॥ छुरिकाद्यानि शस्त्राणि जप्तानि मनुनामुना ।५५। संपाताज्यविलिप्तानि वितरंति जयाश्रियम् ॥ अश्वत्थार्कसमिद्भिर्वा तिलैर्वामधुरोक्षितैः ॥

---

मादौ शूलिनीति परन्तागादिकं वदेत्। अवसाने तु सर्वेषां देवसिद्धसुपूजिते । नन्दिनि रक्षयुग्मं च महायोगेश्वरीमपि। वर्मास्त्रबीजे चामूनि ग्रहरक्षाकराणिहि । पञ्चाशदाहृतिन्यासाज्ज्वरस्तीव्रोपि नश्यती। तत्र प्रयोगः। ॐशूलिनी दुर्गे देवसिद्धसुपूजिते । नन्दिनि रक्षरक्ष महायोगेश्वरि हुंफडित्यादि। एतदभिप्रायेणैवाचार्यैः। वर्मचासुरमर्द्दिन्यायुद्धपूर्वाप्रयेतथा । त्रासयद्वितयं चास्त्रमिति पठित्वा देवेत्यादिपठित्वा अङ्गकर्म्मे वरचाक्तप्रोक्तं ग्रहनिवारणमिति पठितम् । अत्रापि मल्लिखितपाठे सर्वंसमंजसं।क्रमादित्यनेन साम्प्रदायिकानुसारिपूर्वपूर्वानुविद्धत्वमपि सूचितमेव॥४६॥ अध्यारूढामिति। मृगेन्द्रं सिंहम्। अराणि विद्यन्ते यत्र तत्। अरिचक्रं जलजः शंखः । आचार्योक्त। बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशान्करब्जैरिति॥ ग्रंथकृच्च पूजावसरे दलाग्रेषु तदस्त्राणि चक्रं शंखमसिं पुनरिति। शंखपूजामेववक्ष्यति । चतसृभिरिति । जयाविजयाभद्रा शूलकात्यायिन्याख्याभिरित्यर्थः। असितेति सहार्थेतृतीया। तद्धोमाभावेपि । हस्तायुधेतिवद्दक्षिणाहस्तादारभ्याधः पर्यंतमायुधध्यानं। वर्णलक्षं। मन्त्रवर्णपरिमितलक्षम्। विचक्षण इति । पुरश्चरणे येनियमास्तज्ज्ञइत्यर्थः। प्रागुक्ते दुर्गाष्टाक्षरोक्ते। विधायेतिकर्तव्यतिशेषः। परेत्यष्टमी। आसां ध्यानमुक्तमन्यत्र। अंबुदाभाधनुर्बाणकरादुर्गादिका यजेदिति। त्रिमधुराप्लुतैः। पयोमधुघृतप्लुतैः। पयःस्थाने शर्करेति। क्वचित्। शक्तिः स्यादतिमानुषीति । वत्सरादर्वागितिशेषः। तदुक्तं। अप्रतिहतास्यशक्तिर्भूयात्प्रागेववत्सरत इति॥ ५५ ॥ दूर्वाहोम इति। अष्टोत्तरशतमित्येतिशेषः।

५६ ॥ होमो वशयति क्षिप्रमीप्सितान्मन्त्रिणोनरान् ॥ उद्यदायुधहस्तां तां देवीं कालघन-प्रभां ॥ ५७ ॥ ध्यात्वात्मानं जपेन्मन्त्रं स्पृष्ट्वार्तं मुंचतिग्रहः ॥ सर्पाखुवृश्चिकादीनां विष-माशुविनश्यति ॥ ५८ ॥ मनुनानेन विधिवन्मन्त्रविद्देवताधिया ॥ मन्त्रेणानेन संजप्तान्बा णानादायसाधकः ॥ ५९ ॥ विमुंचत्प्रतिसेनायां सा द्रुतं विद्रुता भवेत् ॥ शूलपाशधरां दे-वीं ध्यात्वात्मानमनाकुलः ॥ प्रविशेद्युद्धदेशं यो जित्वा याति स निर्व्रणः ॥ जुहुयातिल-सिद्धार्थैर्लक्षमेकं यथाविधि ॥ ६१ ॥ नामयुक्तं जपेन्मन्त्रं यस्यासौमृत्युमेष्यति ॥ गुटिका

---

तदुक्तं। दूर्वपात्रिकयुजेप्सितं लभेत्सम्यगष्टशतसंख्ययाहुतादिति । छुरिकाद्यानीत्यादिशब्देन कृ-पाणनखराद्यानि ग्राह्याणि। संपाताज्यविलिप्तानि पश्चादमुना मनुना जप्तानीति सम्बन्धः। संपा-तार्थं होमः पञ्चसहस्रोजप्तानीति। दशसाहस्रं । तदुक्तं । खड्गे तीक्ष्णे समावाह्य गन्धाद्यैरभि-पूज्यताम्। आज्येन जुहुयात्पञ्चसहस्रं प्रोक्तमार्गतः । संपाताज्यविलिप्तोसौ प्रजप्तोमनुनामुना । पंक्तिसंख्यासहस्रेण शक्तो मन्त्रविशेषवित्। तत्खड्गहस्तो योद्धास्याद्रिपुसेनाविमर्दक इति । अत्र खड्ग इत्यायुधोपलक्षणम्। छुरिकाकृपाणनखरा इत्याचार्योक्तेः। अश्वत्थेति । होमसंख्याद्वादश-सहस्रं ज्ञेयम्। तदुक्तं। आर्कैर्मन्त्री त्रिमधुकरयुतैरर्कसाहस्रमिधमैराश्वत्थैर्वा त्वतिविशदचेता-स्तिलैर्वा जुहोतीति। क्षिप्रमित्यनेनैतदुक्तं भवति । रक्तवर्णां पाशांकुशधनुर्बाणधरां देवीं ध्यात्वा पाशेन साध्यस्य बन्धोंकुशेनाकर्षणमिति। मन्त्रिण इति षष्ठी। नरानितिर्लिंगमविवक्षितम् । उ-द्यदिति। एवं भूतदेवीरूपमात्मानं ध्यात्वा आर्तं स्पृष्ट्वा मंत्रं जपेदिति सम्बन्धः ॥५८॥ मुञ्चतिग्रह इति। आवेश्य सन्त्याजित इति शेषः। अविश्यलक्षणमिवेत्युक्तेः। ग्रह इति वचनमविवक्षितम् । ते-नाष्टादशग्रहा इत्यर्थः। आवेशनप्रकारस्तु। सम्प्रोक्तलक्षणैः सम्यग्विज्ञायाष्टादशग्रहान्।ग्रस्तमूर्ध्नि-विचिन्त्यैतान् द्विभुजान् स्रस्तलोचनान् । ज्वालामयैर्मन्त्रजापी मानयेच्चलुकोदकैः । आविष्टान् क्षणमात्रेणत्याजयेदखिलान् ग्रहानिति। सन्त्याजनप्रकारस्त । आत्मरोगिणोर्मध्ये उक्तरूपां दुर्गा-ध्यात्वा कनिष्ठादित्रयमंगुष्ठेनावष्टभ्य दृढमुष्टिं कृत्वा तर्जनीं दक्षिणकर्णपार्श्वे प्रसार्यातिद्रुतं चक्र-वभ्रामयेदित्यनया चक्रमुद्रयामोचयेदिति। तदुक्तं।अन्तराथ पुनरात्मरोगिणोरम्बिकामपि निजायु-धाकुलाम्। संविचिन्त्य जपतोरिमुद्रया विद्रवंत्यवशविग्रहा ग्रहा इति। सर्पेति। आदिशब्देन खा-दीनां ग्रहणम्। मन्त्रवद्विधिवद्देवताधिया । आत्मन इति शेषः॥ ५८॥ अनेन मनुना विषं ना-शयेदिति सम्बन्धः विधिवद्देवताबुद्धिस्तु ध्यानविशेषेण। तदुक्तं । अहिमूषिकवृश्चिकादिजं वा बहु-यात्कुक्कुरलूतिकोद्भवं वा। विषमाशु विनाशयेन्नराणां प्रतिपत्त्यैवच विन्ध्यवासिनीति । ध्यानवि-शेषस्त्वन्यत्रोक्तः।शरच्छशांकसंकाशां स्मितवक्त्रांबुजोज्ज्वलाम् । चक्रशंखसुधाकुम्भयुग्महस्तांबुजां शु-भाम्। मुधञ्च विषमेतेन सिञ्चन्तीं सितभूषणाम् । अमृतार्द्रामिमां दुर्गां ध्यायन् हन्याद्विषं नर इति। सञ्जप्तान्बाणानिति। बाणाग्रे तां देवीं ध्यात्वेति ज्ञेयम् । तदुक्तं। आधाय बाणे निशिते च देवीं क्षेमंकरीं मन्त्रमिमंजपित्वेति ॥ ६१ ॥ प्रविशेदिति। मंत्रंजपन्निति शेषः। तदुक्तं। आत्मान-मायां प्रतिपद्य शूलपाशान्विता वैरिबलं प्रविश्य । मंत्रं जपन्नाशु परायुधानि गृह्णाति मुष्णाति

गोमयोप्तन्नांहुत्वाष्टशतसंख्यया ॥ ६२ ॥ सप्ताहात्कुरुते मन्त्री विद्वेषं स्निग्धयोर्मिथः ॥ गृहीत्वा गोमयं व्योम्नि त्रिसहस्रं जपेत्ततः ॥ ६३ ॥ गमिष्यतां द्वारदेशे निखातं स्तंभनं भवेत् ॥ बहुनोक्तेन किंसर्वं साधयेन्मनुनामुना ॥ ६४ ॥ उत्तिष्ठपदमाभाष्य पुरुषिस्यात्पदं ततः ॥ पितामहः सनेत्रेंदुः स्वापिषि स्याद्भयं च मे ॥ ६५ ॥ समुपस्थितमुच्चार्य यदि शक्यमनंतरम् ॥ अशक्यं वा पुनस्तन्मे वदेद्भगवतिं ततः ॥ ६६ ॥ शमयाग्निवधूसप्तत्रिंशद्वर्णात्मकोमनुः ॥ ऋषिरारण्यकश्छंदो मत्यनुष्टुबुदाहृतम् ॥ ६७ ॥ देवता नवदुर्गा स्यात्सर्वदुर्गविमोचनी ॥ पादाष्टसंधिषु गुदलिङ्गाधोरोदरेषु च ॥ ६८ ॥ पार्श्वहृत्स्तनकंठेषु पुनर्बाह्वष्टसंधिषु ॥ मुखनासाकपोलाक्षिकर्णभ्रूमध्यमूर्द्धसु ॥ ६९ ॥ मन्त्राक्षराणि विन्यस्येद्देवताभावसिद्धये ॥ षड्भिश्चतुर्भिरष्टाभिरष्टाभिः षड्भिरिन्द्रियैः ॥ ७० ॥ मन्त्रार्णैरंगक्लृप्तिः स्याज्जातियुक्तैर्यथाक्रमम् ॥ सौवर्णाबुजमध्यगां त्रिनयनां सौदामिनीसन्निभां चक्रं शंखवरा-

---

च बोधमेषामिति। निर्वर्णत्वं होमजननेनायुधग्रहणादितिज्ञेयम्। तन्त्रान्तरेषु। श्यामवर्णा महाकाया ज्वलद्वह्निविलोचना। पाशं डमरुकं शूलं चूर्णं होममसंज्ञितम्। हस्तैश्चतुर्भिर्बिभ्राणा नागेन्द्रैः समलंकृता। अतिदीर्घैर्महाकेशैराकीर्णैः परितश्चमूम्। आच्छादयन्तीकृष्णाभैरट्टहासपरायणा। ध्याता दुर्गाचिरेणैव मोहयेच्छत्रुवाहिनीमिति। यथाविधिनाममन्त्रयुक्तं जपन् जुहुयादिति सम्बन्धः। यथाविधीति। पल्लवप्रकारेण जपेद्धोमे स्वाहादावित्यर्थः तदुक्तं। पल्लवे साध्यनामादौ भवेन्मन्त्रपदक्रमः। मारणेचैतदुद्दिष्टमिति। उक्तं च गौतमेन। ससर्वजनमन्त्रेषु तत्र नामानि योजयेत्। होमे स्वाहापदात्पूर्वं मन्त्रान्ते जपकर्मणीति। अष्टशतेत्यष्टोत्तरशतम्। विद्वेषमित्यत्र वियोगमित्यपि। द्विष्टौ मिथो वियोगिनौ भवत इत्युक्तेः। ध्यानविशेषोप्यत्र। दधती मुशलं शूलं गरकुम्भद्वयं करैः। कृष्णा दिगम्बरा ध्येया मूर्त्तिविद्वेषकारिणीति। गोमयमित्यानडुहमित्युपदेशात्। व्योम्नि गोमयं गृहीत्वेति। भूमिस्पृग्गोमयं नग्राह्यमित्यर्थः। तदुक्तं। अस्पृष्टकुं गोमयमतरिक्षे इति ॥ ६५ ॥ वनदुर्गामन्त्रमाह। उत्तिष्ठेति। ततः पुरुषि पदंस्यादित्यन्वयः। पितामहः ककारः सनेत्रेंदुः इकारबिंदुसहितः। तेन किमिति। भयं चमेइति चकारो न मन्त्रमध्ये। यदिशक्यमशक्यञ्चेति। अमन्त्रमिवस्वरूपम्। भगवतिमिति। शब्दकर्मणि द्वितीया मन्त्रेतु संबुद्धिः। अत्र वातन्मे अक्षराणि कीलकानि। हुं दुर्गे इत्यकीलकानि। तदुक्तमीशानसंहितायां। गुणबीजं समुद्धृत्य उत्तिष्ठेति पदं ततः। पुरुषीति समुद्धृत्य ब्रह्माणं सूक्ष्मसंयुतम्। सबिंदुकं समुच्चार्य स्वपिषीति पदं वदेत्। भयं मे चसमाभाष्य तथा च समुपस्थितम्। यदिशक्यमिति प्रोच्यअशक्यं समुदीर्यच। वर्मबीजं समुद्धृत्य दुर्गेभगवतीति च। शमयेति समुद्धृत्य तथा स्वाहा पदं वदेत्। एवमेषा महादेवी निष्कीला सर्वसिद्धिदा। गुणान्ते भुवनेशानीं दुर्गाबीजं नियोजयेत्। वर्मणीति स्वकंबीजमुक्त्वा चान्ते विलोमतः। पूर्वोक्तबीजत्रितयं योजयेत्क्रौंचदारणा। तदा प्रदीपिता विद्या निष्कीलासर्वसिद्धिदेति। उकारो बीजं। स्वाहाशक्तिः। दुरितिबीजमिति। पद्मपादाचार्याः। सर्वेत्यादिविनियोगोक्तिः। अक्षरन्यासमाह।पदेति। पादसन्धयः प्रत्येकं चत्वारः अत्र पार्श्वस्तननासाकपोलाक्षिकर्णानां स्थानद्वयं ग्राह्यं।

भयानि दधतीमिंदोः कला विभ्रतीं ॥ ग्रैवेयांगदहारकुण्डलधरामाखण्डलाद्यैस्तुतां ध्याये- द्विंध्यनिवासिनीं शशिमुखीं पार्श्वस्थपंचाननाम् ॥ ७१ ॥ एवं ध्यात्वा जपेल्लक्षचतुष्कं त- द्दशांशतः ॥ जुहुयाद्धविषा मन्त्री शालिभिः सर्पिषांतिलैः ॥ ७२ ॥ प्रागीरिते पजेत्पीठे दे- वीमंगादिभिः सह ॥ अंगपूजा यथापूर्वं दलमूलेष्विमा यजेत् ॥ ७३ ॥ आर्या दुर्गा च भ- द्राख्या भद्रकाली ततोंबिका ॥ क्षेमान्या वेदगर्भाख्या क्षेमंकर्य्यष्टशक्तयः ॥ ७४ ॥ अस्त्रा- णि पत्रमध्येषु शंखचक्रासिभेटकान्॥शाणकोदंडशूलानिकपालांतावि पूजयेत्॥७५॥ब्राह्म्याद्याः स्युर्दलाग्रेषु लोकपालास्ततः परं ॥ सिद्धमन्त्रप्रयोगेषु देवीमित्थं विचिंतयेत् ॥ ७६ ॥ का- लपावकसन्निभां कलितार्द्धचंद्रशिरोरुहां भालनेत्रविभूषणां भयदायिसिंहनिषेदुषीं ॥ चक्र- शंखकृपाणखेटकचापबाणकरोटिकां शूलवाहिभुजाभजे विजिताखिलासुरसैनिकां॥७७॥प्रा- तः स्नानरतो नित्यमष्टोत्तरसहस्रकं ॥ जपेत्तस्याशु सिद्ध्यति धनधान्यादिसंपदः ॥ ७८ ॥ अनेनैव विधानेनग्रहक्षुद्ररिपूंजयेत् ॥ नाभिमात्रोदके स्थित्वा देवीमर्कगतां स्मरेत् ॥ ७९ ॥ जपेदष्टोत्तरशतं लभेत महतीं श्रियम् ॥ अयुतं वटवृक्षोत्थैः सशृंगैरर्चितेनले ॥ ८० ॥ हो- मं समिद्भिः कुर्यान्नाशयत्यापदां कुलम् ॥ घोराभिचारान्भूतादीन् शमयेद्विधिनामुना ॥ ८१ ॥

---

इन्द्रियैः पञ्चभिः। यथाक्रममित्यनेनैतदुक्तं। प्रत्येकं दुर्गायैरक्षरक्षेत्येतदंतैरङ्गमिति। तदुक्त मीशा- नसंहितायां। ऋतुवेदाद्दिवस्वङ्गभूत संख्यान्तरान्वितैः। दुर्गायै रक्षरक्षेति। युक्तैरङ्गान्यथाचरे- दिति ॥ ७२ ॥ आयुधध्यानं दक्षायूर्ध्वयोराद्ये तदधस्तनयोरंत्ये। अन्ये तु दक्षोर्ध्वादिदक्षाधस्तनं यावत् ॥ ७३ ॥ तद्दशांशत इति। अयुतचतुष्टयम्। तत्र चत्वारि द्रव्याणि एकैकेनैकमयुतमित्यर्थः। हविषा पायसेन। शालिभिर्हैमन्तिकैः। सर्पिषा घृतेन तिलैश्चेति चतुर्भिः। यथापूर्वमिति। आग्ने- यादिकोणेषु पुरतो दिक्षु चेति। एतच्च पूजनं कर्णिकान्तः केसरेष्वग्रे शक्तिपूजाया उपदिष्टत्वा- दिति। अष्टशक्तयइति। आसां ध्यानमन्यत्रोक्तम्। आर्यादिशक्तयः खेटखड्गचापधनुर्द्धराः। अहि- भिर्भूषितांग्यस्ताः पूजनीया भयानका इति। ततः परमिति। वज्रादिपूजोक्ता। प्रयोगेष्विति। बहुवनाच्छांत्यादौ नृसिंहबीजादिपुटितत्वं युद्धमारणयोः षोडशभुजाध्यानम्। सांबु मेघश्यामत्वं महिषोतमांगस्थत्वं च। रक्षायामष्टभुजत्वं दूर्वाश्यामलत्वं महिषोत्तमांगस्थत्वं वा ध्येयमित्युक्तम्। तदुक्तमाचार्यैः। चक्रदरखड्गखेटकशरकार्मुकशूलसंज्ञककपालैः। ऋष्टिमुशलकुन्तनन्दकवलयग- दाभिण्डिपालशक्त्याख्यैः। उद्यद्विकतिभुजाद्यामाहिषके सजलजलसंकाशा। अरिशंखकृपाणखे- टबाणान्सधनुः शूलकतर्जनीर्दधाना। भवतां महिषोत्तमांगसंस्था नवदूर्वासदृशी श्रियैस्तुदुर्गेति। अन्यत्रापि। ज्वलदग्निनिभां सिंहस्कंधारूढां भयावहाम्। ध्यायेत् षोडशबाहुं तां सम्यक्वैरि विमर्द्दने। श्यामलांगोमष्टबाहुं महिषासुरसंस्थिताम्। आयुः सिध्यै चिन्तयेत्तामिति ॥ ७७ ॥ का- लपावकः। प्रलयाग्निः। करोटिका कपालं। आयुधानि। दक्षैरूर्ध्वतः चक्रखड्गशरशूलानि। वामैरूर्ध्वतः शंखखेटकधनुःकपालानि ध्येयानि। इदं ध्यानं रक्षार्थमितिज्ञेयम् ॥ ८० ॥ अनेनैवेति। तत्र विधानं। प्रातःस्नानादिकं जपस्त्वयुतम्। तदुक्तं। सौम्ये कर्मफलावाप्त्यै सहस्रं प्रजपेन्मनुम्।

अभीष्टसिध्यै जुहुयादर्कैर्मैत्री समिद्वरैः ॥ सहस्रमर्कवारादिदिवसान्दश संयतः ॥ ८३ ॥ शरान् शुद्धान्समादाय शकलान्मनुनामुना ॥ जुहुयादेधिते वन्हौ सप्तवारमतंद्रितः ॥ ८४ ॥ साधयेदखिलं शश्वदभीष्टं मन्त्रवित्तमः ॥ कुमुदैर्वशयेद्विप्रान्नृपतीन्यज्ञहोमतः ॥ ८५ ॥ तत्पत्नीरुत्पलैः फुल्लैर्वैश्यां कल्हारहोमतः॥शूद्रान् लवणहोमेन जातीपुष्पैः सभां पुनः ॥८६॥ व्रीहिभिर्जुहुयान्नित्यं वत्सराद्व्रीहिमान्भवेत् । दूर्वाहोमेनदीर्घायुर्मधुना रत्नवान्भवेत् ॥ ८७ ॥ अन्नैरन्नसमृद्धिः स्यादाज्येन लभते धनम्॥गोदुग्धेन गवां वृद्धिमाप्नुयान्नात्र संशयः॥८८॥ ज्वरे ग्रहे गरेसर्पे तर्जन्या संस्पृशञ्जपेत् ॥ स्पृष्ट्वा शूलकरां देवीं तत्क्षणादेवतान्हरेत्॥८९॥ गर्भितं साध्यनामार्णैः पत्रैर्मनुमिमं लिखेत् ॥ कुलालमृत्कृतायां च प्रतिमायांन्हृदि न्यसेत् ॥ ९० ॥ कृतप्राणप्रतिष्ठां तांपूजितां कुसुमादिभिः ॥ निधायाग्रे जपेन्मन्त्र मष्टोत्तरसहस्रकम् ॥ ९१ ॥ संध्यासु पक्षमात्रेण वशमायाति वांछितः ॥ अभ्यर्च्य देवीमनले तीक्ष्णतैलेन मन्त्रवित् ॥ ९२ ॥ हुत्वायुतं निधायाग्रे तीक्ष्णां स्त्रिंशच्छरां पुनः॥तेषु संपातयेद्भूपः स्पृष्ट्वा

---

उच्चाटनादिक्षुद्रेषु विशेषात्तत्तथायुतमिति । अत्र मंत्रे भयशब्दात्पूर्वं ग्रहपदादिदानं ज्ञेयम् । ग्रहभयं क्षुद्रभयं रिपुभयम् । एवमग्रेपि चौरभयमित्यादि । क्षुद्रशब्दार्थ उक्तोनारायणीये । स्तम्भोविद्वेषणोच्चाटावुत्सादो भ्रममारणे । व्याधिश्चेति स्मृतं क्षुद्रमिति । नाभिमात्रोदक इति । नद्यादौ देवीस्मरन्निति । तंत्रान्तरोक्तध्यानं । यदाहुः। शंखारिनिधिपात्रेष्टकरां रक्तां स्वलंकृताम् । भानुबिंबसरोजस्थां दुर्गामेतां स्फुरत्प्रभां । अष्टोत्तरशतं नद्यां नाभिमात्रे जले स्थितः । संयतः प्रजपेन्मन्त्रमचिराच्छीप्रसिद्धय इति । मन्हतींश्रियमिति । श्रीबीजादित्वमपि ज्ञेयम् । अर्चिते अनले सशृंगैः साग्रभागैर्वटवृक्षोत्थैः समिद्वरैरयुतं होमं कुर्यादितिसम्बन्धः । काननोद्भवैस्तिलैर्जर्त्तिलैः ॥ ८३ ॥ मन्त्रोति । सूर्यचतुरक्षरादित्वं सूचितम् ॥ ८४ ॥ सहस्रमितिप्रत्यहम् । सारानिति । खादिरान् ॥ ८५ ॥ अन्तन्द्रित इति । त्रिदिनमित्यप्युक्तं भवति।तदुक्तं । शुद्धैः खदिरसारैस्त्रिदिनं वा सप्तरात्रकं वापोति।अखिलमिति।सौम्यं क्रूरं च।तत्र विशेषस्तंत्रान्तरे । नवकुंभनिभांदेवीं शूलं डमरुकंभुजेः।शरं चापं सौधकुम्भयुगलं दधतीं पराम् । ध्यात्वा दुर्गां महाकायां भीषणास्यां सुभूषिताम् । आज्येन जुहुयान्मध्ये मध्येपौष्टिककर्मणि । यदि क्षुद्रविधौ त्वेवेलरसपूर्णघटद्वयम्। दधतीं चिन्तयेद्देवीं षड्भुजां प्रोक्तलक्षणाम् । विलोममनुना विद्वन् शकलैर्घृतसंयुतैः । सार्गैर्दशशतैर्जुहुयात्पश्चिमाशामुखःसुधीरिति । मन्त्रवित्तम इत्यनेनात्रापि सूर्यचतुरक्षरादित्वं सूचितम् । तर्ज्जन्येति । वामया तान् ज्वरादीन् । दर्भितमिति । तत्प्रकारस्तयोर्विंशे वक्ष्यते । पत्र इतिभूर्ज्जं । कुलालमृदिति । कुम्भकारस्य पात्रघटनसमये करलग्नमृत्तिका तया कृतायां प्रतिमायां द्वादशांगुलायां हृदि । तदिति । लिखितमंत्रं पत्रं न्यसेत् । निधायाग्र इति । पीठादेरुपरि स्वपादतलाधः सन्ध्यास्विति । पञ्चदशदिनसायंकालसन्ध्यास्वित्यर्थः । वशमायातिवांछित इतिक्वचित्पाठः । अर्च्येति । वन्यकुसुमचन्दनैः । तीक्ष्णतैलेनेति । कटुतैलेन राजिकातैलेनेति केचित् । हुत्वे तिसंबंधः । मन्त्रविदित्यनेनैतदुक्तं भवति । स्वस्तिकादौ दुकूलादिवृत्तं पीठं संस्थाप्य तत्र शरान्निधाय तेषु दे-

तानियुतं जपेत् ॥ ९३ ॥ वेधयेत्परसेनायां क्षणादष्टौ दिशो दश ॥ प्राप्नुयान्नष्टसंज्ञासा पलायनपरायणा ॥ ९४ ॥ जपिता सितगुंजाना कुडवं कुलिकोदये ॥ विकिरेच्छत्रुसेनायां गूढः सन्नापणादिषु ॥ ९५ ॥ ज्वरमारी महारोगैः पीडितासैन्यनायकैः ॥ परस्परविरोधं न-नश्येद्गच्छेन्म्रियेत सा ॥ ९६ ॥ सेनायां स्तंभनं मन्त्री कारस्करसमुद्भवैः ॥ पुष्पैः सहस्रं जुहुयात्तत्पत्रैस्तांनिवर्तयेत्॥९७॥अङ्गारवारे कुलिके जप्त्वाभस्माचितोद्भवम् ॥ विनि क्षिपेद्रिपोर्मूर्ध्नि विद्विष्टो देशतो व्रजेत् ॥ ९८ ॥ मरुन्निपातितैः पत्रैः कारस्करसमुद्भवैः ॥ तस्य पादरजोयुक्तैर्होमादुच्चाटयेदरीन् ॥ ९९ ॥ कारस्करमयीं कृत्वा प्रतिमां च सुशोभनां ॥

---

वीमावाह्य संपूज्य ततस्त्रिकोणकुण्डे ऽग्निमाधाय तत्रापि देवीमभ्यर्च्य हुनेदिति । तदुक्तं । पीठे स्वस्तिकमध्यस्थे मायाचक्रगते पिवा । विधिवत् पूजयेत्सूक्ष्मदुकूलादिसमावृते । निधाय निशितान् स्वर्णपुंखास्त्रिं शच्छिलीमुखान् । कात्यायनीं समावाह्य गन्धाद्यैः प्रवरैर्यजेत् । त्रिकोणकुण्डे पूर्वोक्तक्रमोत्पन्नविभावसौ । आवाह्य षोडशभुजां तामिष्ट्वा चन्दनादिभिः सिद्धार्थतैलं जुहुयात् सहस्रमथवायुतम् । नियुतं तत्र लब्धेन संपातेन विलेपयेत् । उद्वास्य देवीं तत्रैव हुतसंख्यं जपेदिति। रक्तेनतन्तुना पुंखसविधेवेष्टयेद्दृढम् । तेषु विद्धेषु दक्षेण धन्विना वैरिवाहिनीम्। विनष्टसंज्ञाशक्रेण पालिताप्यनुधावतीति । नियुतं लक्षम् ॥ ९४ ॥ वेधयेदिति । एतादृशं क्रूरकर्मप्रतिलोममन्त्रेणेति पद्मपादाचार्याः । स्वबीजाद्येतानुलोमेन वा । कुडवमिति । पलचतुष्टयम् । कुडवं चतु । पलंस्यादित्युक्तेः कुलिकोदये विकिरेदिति । कुलिकस्यकालविशेषस्योदये । तल्लक्षणं ज्योतिषरत्नमालायां। मन्व १४ र्क १२ दि १० ग्वसव ८ तुर्द्वेद४ पक्षै २ रर्कान्मुहूर्त्तैः कुलिका भवन्ति । दिवानिरेकैरथ यामिनीष्विति । सैन्यनायकः परस्परविरोधेन पीडितेत्येव । पूर्वहेतोर्नश्येत् द्वितीयहेतोर्गच्छेदिति निवृत्यगच्छेदित्यर्थः । समुच्चयेन तृतीयम् । मन्त्रीति पृथिवीबीजादित्वं सूचितम् । ध्यानविशेषश्च । पीतां पाशागदाशूलसायोमुष्टिलसद्भुजाम् । क्रूरास्यां देवतामूर्त्तिं ध्यायेत्स्तम्भनकर्मणीति ॥ कारस्कर इति । विषन्तिदुकः कुचिला इति कान्यकुब्जभाषायाम् । तत्पत्रैस्तांनिवर्त्तयेदिति । कारस्कारसहस्रपत्रहोमेन सेनानिवर्त्तनं कुर्यादित्यर्थ ॥ ९८ ॥ अंगारेति । भौमे तत्र च दशमो मुहूर्त्तः कुलिको भवति तस्मिन्समये रिपोर्मूर्द्धि भस्मनिक्षिपेदितिसंबन्धः । जप्त्वेत्यष्टोत्तरशतमित्यादि। अष्टोत्तरशतं जप्तं यच्छिरसि प्रक्षिपेच्चिताभस्मेत्युक्तेः।विनिक्षिपेदिति। देवीं ध्यायन् । तत्र ध्यानविशेषस्तंत्रान्तरे । कृष्णां करालवदनां भुजगैरभिमण्डिताम् । मारीचूर्णादिदहनशूलराजद्भुजाकुलाम् । दिगंबरां महादुर्गां चिन्तयेद्द्वेषणादिषु । उत्सादभ्रमणोच्चाटकृत्यक्षाधावनोद्यतामिति । तस्यपादरजोयुक्तैरिति । तस्य वैरिणः पादरजोवामपादरज इति परमगुरवः उच्चाटयेदिति । वायुबीजादि ज्ञेयम्।१००॥प्रतिमामिति । षण्णवत्यंगुलाम् । यदाहुः। मारणे दारुरूपां तां द्वादशांगुलसंमिताम् । षण्णवत्यंगुलां वापि कुर्यात्सप्तांगुलैः क्रमात् । होमार्थं कल्पितायास्तु तस्याः प्रोक्तो विधिः परः । वश्याकर्षणयोः प्रोक्तांतांकुर्याद्द्वादशांगुलैरिति । जप्तामष्टोत्तरशताहुत्या । छेदयन्नित्यष्टोत्तरसहस्रम् । अंगश इति । दक्षिणांगुष्ठादिवामांगुष्ठान्तम् । श्मशाने

जप्तां प्रतिष्ठितप्राणां छेदयेदंगशः पुनः ॥ १०० ॥ काकोलकवसा युक्ता मष्टोत्तरसहस्रकं॥ कृष्णे पक्षे चतुर्दश्यांश्मशाने हव्यवाहन ॥ १ जुहुयान्म्रियतेरातिरेवमेव दिनत्रयात् ॥ उन्मत्तसमिधेर्होमान्मृताः स्युः शत्रवः क्षणात् ॥ २ ॥ उलूककाकयोः पक्षैः स्ववसारक्तसंयुतैः ॥ जुहुयान्निशि कांतारे शत्रुः कालातिथिर्भवेत् ॥ ३ ॥ शत्रोः प्रतिकृतिं मन्त्री प्रतिष्ठितसमीरणां ॥ विशोषकविलिप्तांगामत्युष्ण निक्षिपेज्जले ॥ ४ ॥ ज्वराक्रांतो भवेच्छीघ्रं दुग्धसेकाच्छमनयेत् ॥ तर्जनी त्रिशिखं दोर्भ्यांधारयंती भयंकरीं ॥ ५ ॥ रक्तां ध्यात्वा रवेर्बिंबे प्रजपेदयुतं मनुं॥मारयेदचिरादेवरिपून्बंधुसमान्वितान् ॥६॥ खड्गखेटकसंक्रुद्धांसन्नद्धांभानुमण्डले ॥ ध्यात्वा मन्त्रं जपेन्मंत्री नाशयेदचिरादरीन् ॥ ७ ॥ चापबाणधरां भीमां सिंहस्थांज्वलनोपमां ॥ सृजंतीं बाणनिवहान्धावन्तीं तादृशंरिपुं ॥ ८ ॥ ध्यात्वा जपेन्मनुमिमयुतं तोयमध्यगः ॥ रिपुं च परसेनां च द्रुतमुच्चाटयेद्ध्रुवम् ॥ ९॥ आनित्यकसमिद्धोमान्मुच्यते रोगशोकतः ॥ पुष्पैस्तदर्यैर्वशयेन्मधुराक्तैर्मतंगजान् ॥ १० ॥ रक्षायै पञ्चगव्येन लिंपेज्जप्तेन दंतिनः ॥ गव्याज्यतिलसिद्धार्थैरानित्यकसमिद्वरैः ॥ ११ ॥ दुग्धान्नपञ्चगव्याभ्यां तंडुले-

---

हव्यवाहन इतिव्यधिकरणे सप्तम्यौ । एवमेवेति । तदुक्तं । द्रुमकुड्यनिपातेन निर्वाते नारिखड्गतः। सलिले पावके सर्प्यदंष्ट्रान्मत्तद्विपादभटात् । यत्तराक्षसगंधर्वपिशाचब्रह्मराक्षसैः । अन्यैर्वा कारणैः क्षिप्रं नाशमेति रिपुर्ध्रुवमिति । दिनत्रयादिति । चतुर्दशीत्रयादित्यर्थः । त्रिचतुर्दशी प्रयोगादर्वाङ्म्रियते रिपुर्नसंदेहइत्युक्तेः । मारणे ध्यानविशेषोपि तत्रान्तरे । कालमेघनिभां दुर्गां दंष्ट्रशूकविभूषिताम् । निशितं दधती खड्गं निजदक्षिणपाणिना । सव्येन पाणिना साध्यं केशे संग्रह्यकर्षन्तीम् । सिंहस्कंधस्थितां ध्यायेन्मंत्री मारणकर्मणीति । अन्योपि विशेषः। शान्तिके पौष्टिके वपिवश्ये स्तम्भनकर्मणि । जपेत्स्वमंत्ररक्षायै मंत्रमष्टोत्तरं शतं । उच्चाटने मादने च द्वेषणे मोहने भ्रमे । मारणे च जपेन्मंत्री मनुं तद्वत्सहस्रकमिति । उन्मत्तेत्यत्र ध्यानविशेषः । शतभंगाद्वयं चूर्णं कपालं गरपूरितम् । दधाना शाबरी दुर्गा ध्येया मादनकर्मणीति ॥ १०२ ॥ उन्मत्तइति । धत्तूरः । पत्रैरितिपक्षैः । स्ववसा रक्तं । उलूककाकवसा रक्तं । कान्तारइति वने । शत्रोः प्रतिकृतिमिति । यदिशत्रोर्जन्मनक्षत्रं ज्ञायते तदा तन्नक्षत्रवृक्षकाष्ठमयीम् । तदज्ञाने कारस्करमयीं द्वादशांगुलाम् । नक्षत्रवृक्षाद्वाविंशे वक्ष्यन्ते । प्रतिष्ठित समीरणामिति । कृतप्राणप्रतिष्ठाम् । षुषणमिति मरिचम् । मरिचं श्यामलं प्रोक्तं वल्लीजं गोषणं स्मृतमिति ॥ १०४ ॥ रुद्रप्रतीकारमाह । दुग्धेति ॥ १०५ ॥ तर्ज्जनीमिति । तर्ज्जनीमुद्रां प्रागुक्ताम् । त्रिशिखमिति । त्रिशूलं । सन्नद्धां । कृतसन्नाहां । भानुमण्डले ॥ १०७ ॥ ध्यात्वा पूर्ववदयुतं मंत्रं जपयेदितिसम्बन्धः । मन्त्रीति । वेलाकालादिज्ञः ॥ १०८ ॥ तादृशमिति । धावन्तम् । तोयमध्यग इति । जान्वधोभागपर्यन्तम् । कारस्करमयीं कृत्वेति । । उलूककाकयोः पत्रैरितितर्ज्जनीं त्रिशिखं दोर्भ्यामिति । खड्गखेटकसन्नद्धामिति । द्रुतमुच्चाटयेद्ध्रुवमित्यादिक्रूरकर्मवेलाकालकलातिथिनक्षत्ररिक्तास्तस्य ग्रहचारोष्टवर्गप्रतिलोम्यं पाताकादियोगांश्च ज्ञात्वा तत्समये कृत शीघ्रसिद्धिदं भवति । तत्र वेलानामचन्द्रोदय-

नघृतेन च ॥ एतैः पृथक्पृथक्द्रव्यैरष्टोत्तरसहस्रकम् ॥ १२ ॥ जुहुयाद्दिनशो विप्रान्भोजयेन्मधुरादिभिः ॥ गुरवेदाक्षिणां दद्याद्वस्त्राभरणसंयुतां ॥ १३ ॥ मातंगाश्चतुरंगाश्च वर्द्धंते विधिनामुना ॥ सर्वव्याधिविनिर्मुक्ताः क्षुद्रपीडाविवर्जिताः ॥ १४ ॥ कारयेद्ब्रह्मवृक्षेण शिल्पनायुधपञ्चकम् ॥ शंखखड्गरथांगानि शार्ङ्गं कौमोदकीं क्रमात् ॥ १५ ॥ पञ्चगव्येषु निःक्षिप्य तानि स्पृष्ट्वामनुं जपेत् ॥ सम्यक् पञ्चसहस्राणि तेषु संपातयेत्पुनः ॥ १६ ॥ तावदाज्येन जुहुयान्मन्त्रैः स्वैः पूजयेत्क्रमात् ॥ उद्धृत्य पञ्चगव्येभ्यः पूर्ववत्प्रजपेन्मनुं ॥ १७ ॥

---

मारभ्य पञ्चदशघटिकापर्यन्तं समुद्रस्य क्षोभो भवति साचन्द्रवेला। तदा क्रूरकर्माणि न कुर्यात्। तदनन्तरम्। पुनः पञ्चदशघटिकापर्यन्तं वेलानास्ति तदा क्रूरकर्म कुर्यात्। पुनस्ततदनन्तरं पञ्चदशघटिकापर्यंतं वेला। पुनस्तावत्कालं सा नास्ति। कालस्तु कुलिकः स्थविरो योगस्तारावैनाशिकी कुजः। अष्टमो राशिरित्याद्यास्ताराः स्युः क्षुद्रकर्मणीति। कलानाम चन्द्रकला सा शुक्ले वर्धते कृष्णेक्षयति तदष्टमीमारभ्यामावास्यापर्यंतं कुर्यात्। तिथिरिक्ताः प्रसिद्धाः नक्षत्ररिक्ताविषनाड्यः। अन्यत्रतु। आयुर्दायं रिपोर्ज्ञात्वा लग्नोक्तर्चानुगुण्यतः। तदात्मिकग्रहाणां च स्थितिमष्टकवर्गकम्। त्रयाणामानुकूल्येन कुर्यात्तदभिचारकम्। अन्यथा क्रूरकर्माणि कुर्वाणं नाशयंति हि। तान्येव कर्माणि ततस्तत्रयप्रातिकूल्यतः। विदध्यादन्यथाशक्त्या नैष्फल्यं चात्मनाशनम्। रिपोरष्टमलग्ने च कालेत्वष्टमराशिगे। स्थाने कुर्यादनिष्टानि तद्दिनाशाय साधकः। पातालयोगनीचाख्ये विषयोगे चमृत्युजि। नाशयोगदिने जन्ममृत्यौ क्रकचयोगके। चण्डोशचण्डायुधके महाखले च काणके। रक्तस्थूणे कण्टकाख्ये स्थूणेपञ्चादिसंज्ञके। कुर्यात्प्रयोगान्प्रत्यर्थि भङ्गाय निधनाय च। निग्रहाय निरोधेऽप्येवं कुर्यात्सिद्धिमवाप्नुयादिति। अष्टमोराशिश्चक्रमंत्रे वक्ष्यते। अन्येयोगाः ज्योतिःशास्त्रतो ज्ञेयाः। आनित्यकमिति कान्यकुब्जभाषायाम्। एरण्डिइति। गव्याज्यमित्येकम्। एतैरित्यष्टभिर्द्रव्यैः। दिनशः प्रत्यहम्। पृथक्जुहुयादितिक्रमेण प्रथमदिने प्रथमद्रव्येण द्वितीये द्वितीयेनेति ज्ञेयम्। दिनश इति। विप्रान् भोजयेदित्यत्राप्यन्वेति ॥ ११५ ॥ कारयेदिति। तालप्रमाणं। ब्रह्मवृक्षेणेति। पलाशेन द्विजभूमिस्थेन सफलेनेति ज्ञेयम्। शिल्पिनेति। निपुणतरेणेतिशेषः। तदुक्तमाचार्यैः। साधशिल्पविदेति। रथांगं चक्रं। शार्ङ्गं धनुः। कौमोदकीं गदां। क्रमादित्यस्यायमर्थः। महांत पलाशं दिक्षु अङ्कयित्वा छित्वा क्रकचेन पञ्चधा निर्भिद्य मध्यभागेन शंखं पूर्वादिचतुर्दिग्भागैः खड्गादीनि कारयेदिति। तदुक्तमाचार्यैः। द्विजभूरुहं महांतं छित्वा निर्भिद्य पञ्चधाभूयः। आशाक्रमेण पञ्चायुधा इति ॥ ११६ ॥ पञ्चगव्येषु निक्षिप्येति। पलाशस्यैव पात्रं कृत्वा तन्मध्ये पञ्चगव्यं विनिक्षिप्य तत्र तानि निक्षिप्येत्यर्थः। मनुं मूलमंत्रं। पञ्चसहस्राणीति। समुदायेन सम्यगिति प्रत्येकं सहस्रजपः। तेषु आयुधेषु सम्यक्संपातयन् तावत्पञ्चसहस्रेण। जुहुयात्सम्यगिति। प्रत्यायुधमेकैकसहस्ररीत्या मन्त्रैः स्वैरिति। सप्तदशे वक्ष्यमाणैः पूजयेदिति। प्राणप्रतिष्ठापूर्वं पात्रएव। क्रमादिति। मध्यस्थशंखप्रभृतीत्यर्थः। पूर्ववदिति। पुनस्तानि स्पृशन् तावत्संख्यम्। ईशानसंहितायां तु। द्विजभूम्यां स्थितं छित्वा फलाढ्यं विप्रभूरुहम्।

अवटान्पंचनिखनेद्दिक्षु मध्यादिषु क्रमात् ॥ अवटेष्वेषु पूर्णेषुपञ्चगव्येन साधकः ॥ १८ ॥ आयुधानि प्रजप्तानि पञ्चघोषपुरः सरं ॥ विन्यसेत्तेषु मध्यादिपूजां कुर्याद्यथापुरा ॥१९॥ वालुकाभिः समापूर्य मृद्भिः कुर्यात्समस्थलम् ॥ बलिंचविकिरेत्तत्रतेषां मंत्रैर्यथाक्रमम् ॥२०॥ दिक्पतिभ्यो बलिं दत्वा ब्राह्मणान्भोजयेत्ततः ॥ दीनांधकृपणादींश्च तोषयेद्भोजनादिभिः ॥ २१ ॥ गुरवे दक्षिणां दद्यादात्मवित्तानुसारतः ॥ यत्रैवं विहितारक्षादेशे वा नगरे पुरे ॥ २२ ॥ ग्रामेगेहेथवा तत्र वर्द्धते संपदः सदा ॥ अश्मपानादयो दोषा भूतप्रेतादिसंयुताः ॥ २३ ॥ अभिचारकृताः कृत्यारिपुचौरादुपद्रवाः ॥ नेक्ष्यंते तांदिशं भीतास्तर्जिता देवताज्ञया ॥ २४ ॥ पद्मंभानुदलान्वितंप्रविलिखेतत्कर्णिकायां पुनस्तारं शक्तिगबीजसाध्यसहितंतत्केसरेषु क्रमात् ॥ मर्दिन्यामनुसंभवान् युगलशोवर्णान्पुनः पत्रगान्मन्त्रार्णान्गुणशो विधाय विलिखेद्दत्यं तदंत्येदले ॥ २५ ॥ मातृकावर्णसंवीतं भूपुरद्वयमध्यगं ॥ यंत्रंविंध्यनिवासिन्याः प्रोक्तं सर्वसमृद्धिदम् ॥ २६ ॥ रक्षाकरं विशेषेण क्षुद्रभूतादिनाशनम् ॥ राज्यदं भ्रष्टराज्यानां वश्यदं वश्यमिच्छतां ॥ २७ ॥ सुतार्थिनीनां सुतदं रोगिणां रोगशांतिदम् ॥ बहुना किमिहोक्तेन यन्त्रं तत्कामदोमणिः ॥ २८ ॥ इति शारदातिलके एकादशः पटलः ॥ अज्ञानातिमिरध्वांसि संसारार्णवतारकम् ॥ आनंदबीजमवतादतर्क्यं त्रैपुरं महः ॥ १ ॥ अथ

---

मूलाग्रस्तोनं निर्भिद्य पञ्चधासर्वतः समं। मध्याद्यंशैः क्रमाच्छंखं नंदकं चक्रमेवच । शार्ङ्गं कौमोदकीं तालप्रमाणं परिकल्पयेत्। स पंचगव्ये तत्पात्रे निक्षिपेत्तं निधाय च। स्वस्तिके सम्यगभ्यर्च्य जपेत्पंचसहस्रकम् । घृतेन तावच्छ्रुत्वाज्यसंपातेन यथाविधि । आलिप्य तावद्व्योपि जपेन्मन्त्रमिदं सुधीः। खातावटान् हस्तमानान्मध्ये पूर्वादिदिक्षु च। तत्र पीठं समभ्यर्च्य मूलमन्त्रेण विन्यसेत्। तानि शंखे महादुर्गामावाह्यास्मिन्स्थितां यजेत्। तत्तदायुधमूर्तीश्च दिग्भासूदितलक्षणाः । अस्त्रमंत्रेण परितः प्राकारं परिकल्पयेदिति ॥ ११८ ॥ अवटानिति । हस्तमानान् । साधकइत्यनेन मूलमुच्चरन् विन्यसेदित्युक्तम्। प्रजप्तानीत्यनुवादः। यथापुरेति । स्वस्वमंत्रैः । यथाक्रममिति मध्यादि ॥ १२४ ॥ यन्त्रमाह। पद्ममिति। भानुदलान्वितं द्वादशदलान्वितं पद्मं लिखेत् । तत्कर्णिकायां शक्तिगं मायाबीजगं यद्बीजं दौर्गं सविसर्गं तत्र यत्साध्यं तेन स हितं तारं लिखेत् । एतेन द्वादशदलपद्मकर्णिकायां प्रणवं विलिख्य तत्र मायाबीजं तत्र दौर्गं बीजं तत्र साध्यं लिखेदित्युक्तं भवति ॥ १२५ ॥ मर्दिन्या इति। महिषमर्दिन्याः । युगलश इत्यनेन महिषमर्दिनीमंत्रस्यावृत्तिश्चयमुक्तम्। मंत्रार्णान्मूलमंत्रार्णान्। गुणशस्त्रिसः।अन्त्यमेकमक्षरमन्त्ये द्वादशे लिखेत्॥१२८॥इति श्रीशारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायामेकादशः पटलः ॥११॥ एवं दुर्गामन्त्रानुक्त्वा मातृका पटले तार्तीयस्योद्दिष्टत्वाद्भैरवीमंत्रं वक्तुमुपक्रमते । अज्ञानेति । त्रिपुराशब्दव्युत्पत्तिरुक्तान्यत्र।। त्रिमूर्त्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैवदेव्याः।लये त्रिलोक्या अपि पूरणत्वात्प्रायोंबिकायास्त्रिपुरेति नामेति। सिद्धेश्वरीमतेतु । ब्रह्मविष्णुमहेशानैस्त्रिदेवैरर्चिता पुरा। त्रिपुरेति। तदा नाम कथितं दैवतैः पुरेति। अतिगोपितामित्यनेनैतदुक्तं भवति । मयापि

वक्ष्येपरां विद्यां त्रिपुरामतिगोपितां ॥ यां ज्ञात्वा सिद्धसंघानामधिपो जायते नरः ॥ १ ॥ वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः॥ वियत्तदादि केन्द्राग्नि स्थितं वामाक्षिबिन्दुमत् ३ ॥ आकाशभृगुवन्हिस्थो मनुः सर्गेन्दुखण्डवान् ॥ वागभवं प्रथमं बीजं कामबीजं द्वितीयकम् ॥ ४ ॥ तृतीयं कामराजाख्यं त्रिभिर्बीजैरितीरिता ॥ पञ्चकूटात्मिका विद्या वेद्या त्रिपुरभैरवी ॥ ५ ॥ ऋषिः स्याद्दक्षिणामूर्तिश्छंदः पङ्क्तिः समीरितः ॥ देवतादेशिकैरुक्ता देवी त्रिपुरभैरवी ॥६॥नाभेराचरणं न्यस्येद्वाग्भवंमन्त्रवित्पुनः ॥ हृदयान्नाभिपर्यन्तं कामबीजं प्रविन्यसेत् ॥ ७ ॥ शिरसोहृत्प्रदेशांतं तार्तीयं विन्यसेत्ततः ॥ आद्यं द्वितीयं करयोस्तार्तीय-

---

गुप्तमेवस्वरूपमुद्धृतमिति । अन्यथा विद्यां वक्ष्ये इति प्रतिज्ञायविद्यावेद्येत्युपसंहारः अथ च मंत्र उद्धृत इदमसंगतं स्यात् । यतः शक्त्याद्या तु भवेद्विद्या शिवाद्यो मंत्र उच्यत इत्युक्तेः । तदुक्तं । एषा सा शांभवी विद्या गुप्ता कुलवधूरिव । कर्णात्कर्णोपदेशेन संचरत्यवनीतल इति । सिद्धीत्यादिविनियोगोक्तिः ॥ २ ॥ मंत्रमुद्धरति । वियदिति । वियत् हः भृगुः सः हुताशो रेफः तत्तिष्ठत्यत्र सः सुपिस्थः बाहुलकादधिकरणे कः । भौतिक ऐ बिंदुरनुस्वारः इत्याद्यं कूटं । वियत् हः तदादि सः क स्वरूपं इन्द्रो लः अग्नीरः एतेस्थिता यत्रेत्यादितागन्यादिः । वामाक्षि ई बिंदुरनुस्वार इति द्वितीयं कूटं ॥ ३ ॥ आकाशो हः भृगुः सः वन्ही रेफः मनुरौ सर्गो विसर्गः इन्दुखण्डः अनुस्वारः इति तृतीयं कूटं । आद्यन्तयो रेफः कीलकम् । तदुक्तमाचार्यैर्भैरवीस्तवे । आद्यं तृतीयमनलोर्ज्जितमेव बीजं कूटं द्वितीयमनलेन विराजमानमिति ।एषां प्रत्येकं नामान्याह। वाग्भवमिति॥४॥ पंचकूटात्मिकेति । हसकलरेति पंचव्यंजनसंयोगात्पंचकूटात्मकत्वं रेफरहितत्वेन चतुष्कूटत्वं । रेफोपरिनादयोगे षट्कूटत्वं ज्ञेयम् । अस्यास्त्रिंशत्प्रस्तारभेदा ग्रन्थगौरवभयान्नोक्ताः ते तन्त्रान्तरात् द्रष्टव्याः । आद्यं बीजं मध्यं शक्तिः अंत्यं वा शक्तिः । व्यस्तबीजध्यानफलमुच्यते सारस्वतमतात् । नवकुन्दनिभां देवीं मुक्ताजालविभूषणाम् । मुद्राकपालविद्याक्षमालाराजन्महाभुजां । वाग्भवं यो महेशानि लक्षं जपति संयतः । कविता जायते तस्य नानावृत्तार्थशोभना । रक्तां सुरतरोर्मूले विलसन्मणिपीठगां । सृणिपाशकपालेषु मातुलिङ्गधनुःकरां । रत्नैरलंकृतां पुष्पैर्मदाघूर्णितलोचनं । हेलाविलाससंपन्नां नवयौवनसुन्दरीं । देवीं ध्यात्वा जपेल्लक्षं यो बीजं मध्यमं वशी । त्रैलोक्यं क्षोभयेदाशु पुरावत्सिद्धिभाग्सौ । अक्षमालसुधाकुम्भमुद्रापुस्तकधारिणीं । नवकुन्देन्दुसङ्काशां राजन्मौक्तिकभूषणाम् । शक्तिं संविन्मयीं ध्यात्वा बीजं सारस्वतं वशी । योजपेज्जायते तस्य कविता भुविसंमतेति । तंत्रान्तरे च । विद्याकामो वाग्भवाख्यं शुक्लवस्त्रानुलेपनः । मौक्तिकाभरणो भूमिगृहे जप्यात्रिलक्षकम् । गद्यपद्यान्युद्गिरंतीं स्वं वाणीमितिभावयन् । पलाशैरेव जुहुयात्पुष्पैस्त्रिमधुराप्लुतैः । स जायते कविश्रेष्टः सुन्दरीणां च वल्लभः । त्रिलोकी वश्यकामस्तु कामराजं द्वितीयकं । कस्तूरीकुंकुमामोदमधरारुणभूषणः । रक्तक्षौमांबरधरो जपेल्लक्षत्रयं सुधीः । नेत्रांचलैर्मदालोलैर्वशेविदधती जगत् । अम्बिकेति स्वकं रूपं ध्यायन् हृष्टेन चेतसा । जुहुयान्मालतीपुष्पैः शीतकर्परसंप्लुतैः । जगन्ति तस्य वश्यानि भवन्ति बहुनार्चकिं । वाग्विलासमधिगन्तु-

मुभयोर्न्यसेत् ॥ ८ ॥ मूर्ध्न्याधारे हृदि न्यस्येद्भूयोबीजत्रयं क्रमात् ॥ नवयोन्यात्मकं न्यासं कुर्याद्बीजैस्त्रिभिः पुनः ॥ ९ ॥ कर्णयोश्चिबुके भूयः शंखयोर्वदने पुनः ॥ नेत्रयोर्नसिविन्यस्येदंसयोर्जठरे पुनः ॥ १० ॥ ततः कूर्परयोः कुक्षौ जानुनोर्ध्वजमूर्द्धनि ॥ पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ॥ ११ ॥ स्तनयोः कंठदेशे च रत्यादिमथ विन्यसेत् ॥ मूले रतिहृदि प्रीतिंभ्रुवोर्मध्ये मनोभवां ॥ १२ ॥ बालाबीजैस्त्रिभिर्न्यसेत्स्थानेष्वेषु विलोमतः ॥ अमृतेशो च योगेशो विश्वयोनिं क्रमादिमाः ॥ १३ ॥ विलोमबीजैर्विन्यस्येन्मूर्तिन्यासमथाचरेत् ॥ स्वस्वबीजादिकं पूर्वं मूर्ध्नीशानमनोभवं ॥ १४ ॥ न्यसेद्वक्त्रे तत्पुरुषं मकरध्वजमा-

---

मना यो बीजमंत्यमपि पुष्करलचं । संजपेद्विमलभूषणवस्त्रो सौभवेत्कविवरोमितकीर्त्तिः । मालतीमुकुलजैर्दलहलैश्चन्दनांभसि घनैर्निमज्जितैः । श्रीकरीकुसुमकैर्हुतक्रिया सैव चाशु कविताकरी मतेति । अत्र ग्रन्थकृतातिगुप्ततरत्वाद्बोजत्रयस्य दीपन्युद्धारो न कृतः । तेन च विनोयं विद्या न सिद्धिदा । अतस्तदुद्धारः सिद्धेश्वरीतंत्राल्लिख्यते । वागीश्वर्यास्तु मंत्रे हुतवहदयिताख्यानगं वाग्भवाख्यं क्लिन्नेक्लेदिन्ययिस्या दिह तदनु महाक्षोभमित्येव योज्यं । तस्मात्कुर्वित्यसौचेन्मनुरयमुदितोरुद्रवर्णस्तदन्तस्तारान्मोच्चं तदंते कुरुपदसहितं स्याच्च संमोहनाख्यं । बीजानां दीपनानि स्युरिह हिमनगोयैःसुदीप्तःसदैव त्रिबीजो मंत्रराजो भवति जपविधौ सर्वसंपत्तिकारी । विद्यानां पारगामी युवतिजनमनःक्षोभकारी विहारी मंत्री स्यात्सर्वसंपन्नरपतिसदृशोमुक्तबाधश्चिरायुर्रिति । चैतनीश्चाह्लादन्युद्धारः प्रथमश्लोकव्याख्यानोक्तोनुसन्धेयः । उत्तरषट्केतु । आदिमेन तु सा लुप्ता मध्यमेन तु कीलिता । अन्तिमेन तु सा छिन्ना तेन विद्या न सिध्यति । आदिमादिंमनादिं च मध्यमध्यममध्यमम् । अन्त्यमन्त्यमनन्त्यं च त्रिपुरा शीघ्रसिद्धिदा । आदिमध्ये तु मध्यादावन्त्यमध्येतु संस्थिती । पुरःक्षोभाय जप्तव्यं विधिनानेन साधकैरिति । अन्यत्रतु । आद्यं बीजं मध्यममध्यमादावन्त्यं चान्त्ये योजयित्वा जपेद्यः । त्रैलोक्यान्तः पातिनोभूतसंघा वश्यास्तस्यैश्वर्यभाजो भवेयुः । आद्यं कृत्वा चावसानेंत्यबीजं मध्ये मध्यं चादिमे साधकेन्द्रः । कुर्यान्नित्यं योजपेन्मंत्रमेनं जीवन्मुक्तः सोश्नुते दिव्यसिद्धिमिति । करयोरिति । वामदक्षिणयोः । तदुक्तं । हस्ततले च सव्ये । दक्षाह्वये द्वितीय इति । नवयोन्यात्मकइति । यदुक्तं तमेवाह । कर्णेति । त्रित्रिस्थानैरेकैकायोनिः । अत्र वामांगादिन्यास इतिकेचित् । अतएव पूजायां वामकोण इत्याद्युक्तिः । शंखयोरिति । ललाटपार्श्वोच्चप्रदेशयोः । त्रिकांड्यामपि । शंखोनिधौ । ललाटास्थीति । नसीति नासिकायां । पिठरे उदरे । उच्चाकारत्वात्तस्य । कुचावित्यनेननैकव्याख्योन्याकरतासिद्धये नाभिभागो लक्ष्यः । तदुक्तं । कौर्परयोर्नाभिमण्डले न्यसेदिति । क्वचिन्नाभावितिपाठः । ध्वजो लिङ्गम् ॥ ११ ॥ रत्यादीतियदुक्तं तदेवाह । मूलइति । विलोमतस्त्रिभिर्बालाबीजैर्विन्यसेदितिसम्बन्धः । स्थानेष्वेष्विति उत्तरत्र सम्बध्यते । तत्र विलोमत्वं नामेदं रतेर्वाग्भवं प्रीतेरंत्यं मनोभवायामध्यमिति । यदाहुः । कामस्य कामबीजं रतिबीजं वाग्भवं समुद्दिष्टम् । संमोहनाख्यमंत्यं प्रीतेर्बीजं तथाप्रोक्तमिति । एष्विति । पूर्वोक्तस्थानेषु विलोमबालाबीजैः सह अमृते श्याद्या न्यसेदित्यन्वयः । अत्रापि विलोमत्वं पूर्ववदेव ॥ १३ ॥ स्वस्वबीजादिकमिति । मूर्त्तीनां वक्ष्यमाणानि बीजानि मनोभवादीनां क्रमेण वनिताचतुर्थवा-

त्मावित् ॥ हृदयघोरकुमारादि कंदर्पतदनंतरं ॥ १५ ॥ गुह्यदेशे प्रविन्यस्येद्वामदेवादिमन्मथं ॥ सद्योजातं कामदेवंपादयोर्विन्यसेत्ततः ॥१६॥ ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु तान् ॥ प्रविन्यसेद्यथापूर्वं भृगुर्व्योमाग्निसंस्थितः ॥ १७ ॥ सद्यादि पञ्चह्रस्वस्थो बीजमेषां प्रकीर्तितम् ॥ षड्दीर्घयुक्तेनाद्येन बीजेनाङ्गक्रिया मता ॥ १८ ॥ पञ्चबाणांस्ततोन्यस्येन्मन्त्री त्रैलोक्यमोहनान् ॥ द्रामाद्यांद्राविणीं मूर्ध्नि द्रीङ्गाद्यां क्षोभिणीं पदे ॥ १९ ॥ क्लीं वशीकरिणीं वक्त्रे गुह्ये ब्लूंबीजपूर्विकाम् ॥ आकर्षिणीं हृदि पुनः सर्गान्तभृगुसंयुतम् ॥२० ॥ संमोहनींक्रमादेवं बाणन्यासोयमीरितः ॥ भालम्रूमध्यवदनकंठिकाकंठहृत्सु च २१ ॥ नाभ्यधिष्ठानयोः पञ्च ताराद्याः सुभगादिकाः ॥ न्यस्तव्या विधिनादेव्यो मंत्रिणा सुभगाभगा ॥ २२ ॥ भगसर्पिण्यथ परा भगमालिन्यनन्तरम् ॥ अनंगानंगकुसुमा भूयश्चानंगमेखला ॥ ३३ ॥ अनंगमदना सर्वा मदविभ्रममंथरा ॥ प्रधानदेवतावर्णभूषणाद्यैरलंकृता॥२४॥ अक्षस्रक्पुस्तकाभीतिवरदाढ्यकरांबुजा ॥ वाक्कामंब्लूंपुनस्त्रींसस्ताराः पंचोदितास्त्वमी ॥ २५ ॥ न्यासं कुर्याद्भूषणाख्यं ततः साधकसमतःन्यसेच्छिरसि भालम्रूकर्णाक्षियुगले नसि ॥ २६ ॥ गण्डयोरोष्ठयोर्दंतपंक्त्योरास्येन्यसेत्स्वरान् ॥ चिबुकेथ गले कण्ठे पार्श्वयोस्तनयुग्मके ॥ २७ ॥ दोर्मूलयोः कूर्परयोः पाण्योस्तत्पृष्ठदेशतः ॥ नाभौ गुह्ये पुनश्चोर्वोर्जानुनोर्जंघयोस्तुतः ॥ २८ ॥ स्फिचोः पत्तलयोः पश्चाच्चरणांगुष्ठयोर्द्वयोः ॥ कादिरांतान्यसेद्वर्णान् स्थानेष्वेषु समाहितः ॥ २९ ॥ कांच्यांग्रैवेयकेपश्चात्कटके त्हृदि गुह्यके ॥ कर्णकुंडल-

---

णवाग्भवकाममायाबीजानि ज्ञेयानि । उभयत्रादिशब्दस्तत्पूर्वत्वमात्रं बोधयतिनैकपद्यम् । तेनायं प्रयोगः । ह्स्रौं ईशानाय स्त्रीं मनोभवाय नम इत्यादि॥१६॥यथापूर्वमिति । स्वस्वबीजादिकमितिच यदुक्तं तानि बीजान्युद्धरति । भृगुरिति । भृगुः;सः व्योमहः अग्नी रेफःताभ्यां सम्यक्युत इति । उर्ध्वाधोभागे क्रमेण । सद्यादिपञ्चक्रस्वांविलोमेन ऊ ए उ इ अ॥१८ ॥षडिति । षड्दीर्घयुक्तेन बीजेन मध्यबीजेन । आद्येन बीजेन मन्त्राद्येन सम्प्रदायात् । शाक्ताद्येनेत्यपि ज्ञेयम् ह्स्रांःहृसकलक्रीं ह्स्रीं हृतक्रींस्रौशिरः ह्रूं ह्स्रूं शिखा क्रैं ह्स्रैं वर्म्म५क्रौं ह्स्रौं नेत्रं५क्रिः ह्स्रः अस्त्रम् ॥ १८ ॥ द्रामाद्यामिति । अत्र सर्वत्राचार्येण मस्थाने ङःपठितः अन्यत्र तु द्रां द्रीं क्लीं ब्लूं स आदिका बाणा इति । अन्यत्रापि । अत्रीशो मुखवृत्तवह्निसहितस्त्वाद्यं सदण्डस्त्रिमूर्त्याक्रान्ताननवृत्तमेवखलुतद्बीजं द्वितीयं भवेत् । मुखान्तस्थितं देवराजाधिरूढं सवामेक्षणं वक्रपूर्वेण युक्तम् । भपूर्वं सवृत्तारिषष्ठस्वरार्द्धचन्द्रेशंवतुर्यं कपूर्वेण युक्तमिति । हृदीत्युत्तरत्र सम्बध्यते । सर्गान्तो भृगुः सः । लम्बिकेति । मुखमध्ये स्थानविशेषः क्वचित्कर्णिकेति पाठस्तदाकर्णिकाकर्णभूषणं इति त्रिकांडी । विधिनेति । चतुर्थी नमोन्तत्वं । मन्त्रिणेत्यनेन समुच्चितपूर्वाइत्युक्तंभवति ॥ २४ ॥ तारामेवाह । वागिति । वाग्भवंकामः कामबीजं । अन्यत्स्वरूपं । भूषणाख्यमिति । भूषणरूपैर्वर्णैर्न्यासोभूषणन्यासः । तमेवाह । ततः साधकसत्तमोन्यसेदिति । मातृकावर्णानिति । शेषः साधकसत्तम इत्यनेन वर्णानं सबिंदुत्वं तत्तत्स्थाने भूषणरूपत्वेन ध्यानं चोक्तं ।न्यासस्थानान्येवाह। शिरसीति।

योमौलौ वलशान् पक्षसान् शहौ ॥ ३० ॥ अष्टाविमान्प्रविन्यस्येदेवं देशिकसत्तमः ॥ एवं न्यस्तशरीरोसौ ध्यायेत्त्रिपुरभैरवीं ॥ ३१ ॥ उद्यद्भानुसहस्रकांतिमरुणक्षौमां शिरोमालिनीं रक्तालिप्तपयोधरां जपवटींविद्यामभीतिं वरम् ॥ हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविंदश्रियंदेवीं बद्धहिमांशुरत्नमुकुटां वंदेरविंदस्थितां ॥ ३२ ॥ दीक्षां प्राप्य जपेन्मन्त्रं तत्वलक्षं जितेंद्रियः ॥ पुष्पैर्भानुसहस्राणि जुहुयाद्ब्रह्मवृक्षजैः ॥३३॥ त्रिमधक्तैः प्रसूनैर्वा करवीरसमुद्भवैः ॥ पद्मं वसुदलोपेतं नवयोन्याढ्यकर्णिकम् ॥ ३४ ॥ इच्छादिशक्तिभिर्युक्तं भैरव्याः पीठमर्चयेत् ॥ इच्छाज्ञानाक्रियापश्चात्कामिनी कामदायिनी ॥ ३५ ॥ रती रतिप्रिया नंदा नवमीस्यान्मनोन्मनी ॥ वरदाभयधारिण्यः संप्रोक्ता नवशक्तयः ॥ ३६ ॥ वाग्भवंलोहितोरायैश्रीकंठलोहितोनलः॥दीर्घवान्यैपरायश्चादपरायै हसौःपुनः॥३७॥सदाशिवमहाप्रेतङेंतं प-

---

कण्ठस्तन्मणिर्गजस्तदधोभागः अत्रकर्णादिषु द्वि द्वि वर्णन्यासः भ्रूस्थाने एकं पार्श्वयोरेकम् । तत्पृष्ठदेशे एकमिति सम्प्रदायविदः। स्फिक् शब्देनोच्चत्वसाम्यादूरुफौ लक्ष्येते । कटके मूर्द्धन्योलः। हृदि तालव्यः शः कर्णकुण्डलयोर्मूर्द्धन्यदंत्याविति विवेक इति देशिकसत्तम इत्येतेनोक्तम्॥ ३०॥ उद्यदिति। शिरसां मुण्डानां मालायस्यां सा तामितिविग्रहः। रक्तेति रक्तचन्दनं। आयुधध्यानं दद्याद्यूर्ध्वयोराद्ये तदधस्थयोरंत्ये। दक्षोर्ध्वांतोदक्षाधः पर्यन्तमिति केचित्। अत्रध्यानान्तरं बाणवीजपूर्वकं पञ्चमुद्रागुरुवक्त्रगम्यादर्शयेत्। दीक्षांप्राप्येति। शक्तिदीक्षां प्राप्येत्यर्थः । सा च शक्तितन्त्रात्सिद्धेश्वरी मतादितो ज्ञेया। तत्वभानुशब्दयोः सरूपाणामित्येकशेषः । तत्वलक्षं षड्त्रिंशल्लक्षं होमस्तु षड्त्रिंशत्सहस्रं पलाशकुसुमैः इयं चतुःकूटस्य संख्या। त्रिमधक्तैः। पयोमधुघृतयुक्तैः। केचित् पयःस्थाने शर्करामाहुः। इदमुभयत्रसंबध्यते। तत्वलक्षं चतुर्विंशतिलक्षम्। होमस्तु चतुर्विंशतिसहस्रं करवीरैः इयं संख्या पञ्चकूटस्य तत्वलक्षं द्वादशलक्षं तत्रान्तरे द्वादशतत्वानामप्युपदिष्टत्वात्। तदुक्तं प्रयोगसारे। अतो द्वादशतत्वानि वदंत्येके विपश्चित इति । तन्मते प्रसूनैर्वेति वाशब्दः समुच्चये मिलित्वोभयैर्द्वादशसहस्रं होमः इयं चसंख्या षट्कस्येति ज्ञेयम्। तदुक्तमाचार्यैः। दीक्षां प्राप्य विशिष्टलक्षणयुतः सत्सम्प्रदायाद्गुरोर्लब्ध्वा मन्त्रममुं जपेत्सुनियतस्तत्वार्कलक्षावधि। स्वादूक्तैश्च नवैः पलाशकुसुमैः सम्यक्समिद्धेनले मन्त्री भानुसहस्रकं प्रतिहुनेदश्वारिसूतैरपीति। तत्र तत्वानिषट्त्रिंशच्चतुर्विंशतिःअर्कं द्वादश।भांतानिति भानवःषट्त्रिंशत्तत्वानि चतुर्विंशतितत्वानि द्वादशादित्याश्चेतिपद्मपादाचार्य्यैर्व्याख्यातं। अत्रापि भानुशब्दार्थोयमेव ज्ञेयः पूजायंत्रमाह। नवयोन्याढ्यकर्णिकं पद्ममस्याः पूजायंत्रमिति शेषः तदुद्धार उच्यते। द्वितीयादिद्विद्विभागे योनी संध्येधनाग्निना।भित्वाध्यंशगुणा न्वृत्तान्बहिः पद्मं सभूगृहं।अस्यार्थः।यथेच्छप्रमाणंवृत्तं कृत्वातत्प्राक्सूत्रं चतुर्धा विभज्य तत्रैकं भाग ऊर्द्धतस्त्यक्त्वा द्वितीयं भागमारभ्यतृतीयभागांतं अधराग्रं त्र्यस्रं कृत्वा ततो मध्यादारभ्य चतुर्थांतं द्वितीयमधराग्रं त्र्यस्रं कृत्वा तदुभयसंधिभेदि प्रथमभागमारभ्यऊर्ध्वग्रं तृतीयांतपर्यंतं त्र्यस्रं कुर्यादिति। तदुक्तं। वह्नेःपुरद्वितयवामवयोनिमध्यसंबद्धवह्निवरुणेशसमाश्रितास्त्रीति। वरदाभयधारिण्य इति स्मरणमात्रं चतुर्थपटलएवसध्यानस्योक्तत्वात्॥३६॥पीठमंत्र-

द्यासनंनगः॥अनेन मनुना दद्यादासनं श्रीगुरुक्रमम्॥३८॥प्राङ्मध्ययोन्यन्तराले पूजयेत्कल्पयेत्पुनः ॥ पंचाभिः प्रणवैर्मूर्ति तस्यामावाह्य देवताम् ॥ ३९ ॥ पूजयेदागमोक्तेनविधानेन समाहितः ॥ तारवाक्शक्तिकमलाहसखफ्रेंहसौस्मृतः ॥४०॥ ामकोणे यजेद्देव्यारतिमिंदुसमप्रभां ॥ रतिं पाशधरां सौम्यां मदविभ्रमविह्वलां ॥ ४१ ॥ प्रीतिं दक्षिणकोणस्थां तप्तकांचनसन्निभां ॥ अंकुशंप्रणतिं दोर्भ्यां धारयंतीं समर्चयेत् ॥ ४१ ॥ अग्रे मनोभवां रक्तं रक्तपुष्पाद्यलंकृतां ॥ इक्षुकार्मुकपुष्पेषून्धारयंतीं शुचिस्मितां ॥ ४२ ॥ अंगान्यभ्यर्चयेत्पश्चाद्यथापूर्वं विधानवित् ॥ दिक्ष्वग्रे च निजैर्मंत्रैः पूजयेद्बाणदेवताः ॥ ४३ ॥ हस्ताब्जैर्धृतपुष्पेषु प्रणामाभूतसप्रभा ॥ अष्टयोनिष्वष्टशक्तीः पूजयेत्सुभगादिकाः ॥ ४४ ॥ मातरो भैरवाकस्था मदविभ्रमविह्वलाः ॥ अष्टपत्रेषु संपूज्या यथावत्कुसुमादिभिः ॥ ४५ ॥ लोकपालांस्ततोदिक्षुतेषामस्त्राणि तद्बहिः ॥ पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वैनां परदेवतां ॥ ४५ ॥ यो भजेदुक्तमार्गेण सभवेत्संपदां पदं ॥ एवं सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः ॥४७॥ जुहुयादरुणांभोजैरदोषैर्मधुराप्लुतैः ॥ लक्षसंख्यं तदर्द्धं वा प्रत्यहं भोजयेद्द्विजान् ॥ ४८ ॥ वनिता युवती रम्याः पूजयेद्देवताधिया ॥ होमांते धनधान्याद्यैस्तोषयेद्गुरुमात्मनः ॥ ४९ ॥ एवं कृतेजगद्वश्यो रमाया भवनं भवेत् ॥ रक्तोत्पलैस्त्रिमध्वक्तैररुणैर्वाहयारिजैः ॥ पुष्पैः पयोत्थैः

---

मुद्धरति। वागिति।वाग्भवं वालाद्यबीजं।लोहितः परायैस्वरूपं।श्रीकंठःअकारःअनलोरः दीर्घवानाकारयुक्तः तेनरा इति यै परा इति स्वरूपं। अपरायै स्वरूपम्। परा अपरायै इत्यत्रतु संधिः ह्सौ इति पिंडं सदाशिवमहाप्रेतांतं स्वरूपं प्रेतमिति द्वितीयाशब्दकर्मणिङेंतं चतुर्थ्येकवचनांतं पद्मासनं तेन पद्मासनाय॥ ३८॥ प्राङ्मध्ययोन्यंतराले श्रीगुरुक्रमं पूजयेदिति संबंधः। श्रीगुरुक्रमस्त्रिविधः। दिव्यौघःसिद्धौघो मानवौघश्चेति।तत्रपरप्रकाशानंद परमशिवानंद।कामेश्वर्यानन्द कामानंदामृतानंदा दिव्यौघः। ईशान तत्पुरुषाघोरवामसदानंदाः सिद्धौघः। मानवौघस्तु स्वस्वगुरुसंप्रदायाज्ज्ञेयः। पीठस्योत्तरभागे गुरुपंक्तिं पूजयेत्। इति सामान्यविधेरपवादो प्राङ्मध्ययोन्यंतराल इति॥३९॥आगमोक्तेनेत्युत्तरषट्कप्रोक्तेन आगमशब्दव्युत्पत्तिरुक्ता तंत्रांतरे। आगतं शिववक्त्रात्तु गतं तु गिरिजामुखे। मतं च वासुदेवस्य तस्मादागम उच्यत इति। अत एव समाहितःसावधान इत्युक्तिः पञ्चभिःप्रणवैरिति। यदुक्तं तानेवाह। तारादिति। वाग्भवं शक्तिर्मायाबीजं कमला श्रीबीजं। अन्यत्पिंडद्वयं रतिप्रीत्योद्वयोनि एकहस्तेस्त्रं। द्वितीये नमस्कारः॥ ४३ ॥ यथापूर्वमिति। आग्नेयादिषु केसरेषु मध्ययोन्यंतरे चतुर्दिक्षु च। विधानविदित्यनेन मध्ययोनिवाह्यदेशइत्युक्तं॥ ४४ ॥ हस्ताब्जैरिति। सव्यहस्ते बाणः अन्यहस्ते नमस्कारः। तदुक्तं। द्राविण्याद्याः क्रमशः सर्वाः सर्वाभरणशोभिताः समदाः। सव्यकरकलितबाणाः शेषकरैः कृतनमस्कारा इति। भूतसप्रभा इति। पृथिव्यादिवर्णतुल्यवर्णा इत्यर्थः सुभगादिका इति यथान्यस्ताः॥ ४५ ॥ मातरइति। चंडिकांताः। तदुक्तमाचार्यैः। मातृगणं सचंडिकांतंदलेष्वपियजेदसितांगकाद्यैरिति। यथावदित्यनेन दीर्घाद्या मातरो ह्रस्वाद्या भैरवा इत्युक्तं। संपदां पदमित्यनेनास्याः संप-

सघृतैर्होमो विश्वं वशं नयेत् ॥ वाक्सिद्धिं लभते मंत्री पलाशकुसुमैर्हुतात् ॥ ५१ ॥ कर्पूरागुरुसंयुक्तं गुग्गुलुं जुहुयात्सुधीः ॥ ज्ञानं दिव्यमवाप्नोति तेनैव सभवेत्कविः ॥ ५२ ॥ क्षीराक्तैरमृताखंडैर्होमः सर्वापमृत्युजित् ॥ दूर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयम् ॥ ५३ ॥ गिरिकर्णीभवैः पुष्पैर्ब्राह्मणान्वशयेद्धुतात् ॥ कल्हारैः पार्थिवान् पुष्पैस्तद्वधूः कर्णिकारजैः ॥ ५४ ॥ मल्लिकाकुसुमैर्हुत्वा राजपुत्रान्वशंनयेत् ॥ कोरंटकुसुमैर्वैश्यान्वृषलान्पाटलोद्भवैः ५५ अनुलोमविलोमांतःस्थितसाध्याह्वयान्वितम् ॥ मन्त्रमुच्चार्य्यजुहुयान्मन्त्रीमधुरलोलितैः ॥ ९६ ॥ सर्षपैर्लवणमिश्रैर्वशयेत्पार्थिवान् क्षणात्॥अनेनैव विधानेनतत्पत्नीस्तत्सुतानपि॥५७॥ जातीबिल्वफलैः पुष्पैर्मधुरत्रयलोलितैः ॥ नरनारीनरपतीन् होमतो वशयेद्ध्रुवम् ॥ ५८ ॥ मालतीबकुलोद्भूतैः पुष्पैश्चंदनलोलितैः ॥ जुहुयात्कवितांमन्त्रीलभतेवत्सरांतरे ॥ ५९ ॥ मधुरत्रयसंयुक्तैः फलैर्बिल्वसमुद्भवैः ॥ जुहुयाद्वशयेल्लोकं श्रियमाप्नोति वांछितां ॥ ६० ॥ पाटलैः कुमुदैः कुंदैरुत्पलैर्नागचंपकैः ॥ नंद्यावर्तैर्विकसितैः कृतमालैर्जुहोतियः ॥ ६१ ॥ जायते वत्सरादर्वाक्श्रिया विजितपार्थिवः ॥ साज्यमन्नं प्रजुहुयाद्भवेदन्नसमृद्धिमान् ॥ ६२ ॥ कस्तूरीकुंकुमोपेतं कर्पूरं जुहुयाद्वशी ॥ कंदर्पादधिकं सद्यः सौंदर्यमधिगच्छति ॥ ६३ ॥ लाजान्प्रजुहुयान्मन्त्री दधिक्षीरमधुप्लुतान् ॥ विजित्यरोगानखिलान्सजीवेच्छरदांशतम् ॥ ६४॥ पादद्वयं मलयजं पादं कुंकुमकेसरं ॥ पादं गोरोचनायाश्च तानि पिष्ट्वाहिमांबुना ॥ ६५॥ विदध्यात्तिलकं भूयो यान्पश्येद्यैर्विलोक्यते ॥ यान्स्पृशेत्स्पृश्यते यैर्वा वश्याः स्युस्तस्य तेचिरात् ॥ ६३ ॥ कर्पूरकापिचोराणि समभागानि कल्पयेत् ॥ चतुर्भागाजटामांसी तावती रोचना मता ॥ ६७ ॥ कुंकुमंसप्तभागंस्याद्दिग्भागंचदनंमतम् ॥ अगरुर्नवभागः स्यादिति भागक्रमेणच ॥ ६८ ॥ हेमोद्भिःकन्यकापिष्टमेतत्सर्वं सुसाधितम् । आदायतिलकंभालेकुर्याद्भूमिपतीन्नराम् ॥ ६० ॥ वनितांमदगर्वाढ्यां मदोन्मत्तन्मतंगजान्। सिंहव्याघ्रान्महासर्पान्भूतवेतालरक्षसान् ॥ ७०॥ दर्शनादेव वशयेत्तिलकं धारयन्नरः ॥ मध्वाढ्यं नवयोनिषु

---

स्वदेत्यपि नामेति सूचितं भवति ॥ ५० ॥ जगंति वश्यानि यस्येति बहुव्रीहिः।रमायाभवनभवेदिति। तत्र ध्यानविशेषः। मातुलिंगलिपिपात्रपंकजैः शोभमानकरपंकजां शिवां। संविचिंत्य खलु पौष्टिकक्रियां कुर्वतीं भवति भूतिरंजसेति। हयारिजैरिति। करवीरजैः सघृतैः ॥ ५१ ॥ पयोन्नैर्वेति दुग्धतोयः पक्वः। वशंनयेदिति। ध्यानविशेषो यथा। पाशांकुशोद्यतकरामरुणां प्रसन्नां माणिक्यवज्रहरितैरपि भूषितांगीं। मूर्त्तिं विचिंत्य विदधीत पुरोक्तमार्गाद्वश्यक्रियां च नयनांजनकानि मंत्रीति। भवेत्कविरिति। ध्यानविशेषः संविच्छास्त्रे। सारस्वतमयामूर्त्तिमादिमूर्त्तिसमन्वितां। यः स्मरेद्वादशांते स्यात्सोचिराद्वाक्पतिर्भवेदिति। अमृता गुडूची। अपमृत्युजिदिति। ध्यानविशेषो गौतमीनोक्तः। कुर्याच्छान्तिककर्माणिशुक्लवर्णां विचिंत्य तां। वराभयसुधाकुम्भपुस्तकायुधपाणिनीमिति। गिरिकर्णी अपराजिता पटुलवणम्। नंद्यावर्तैर्गंधतगरैः। कृतमालैः। राजवृक्षजैः पाटलैरित्यादिनांविकसितैरिति विशेषणात्। पुष्पैरिति लभ्यते। हिमांभसा नीहारोदकेन। कपिरक्तचन्दनं।

प्रविलिखेद्बीजानि वर्णांस्त्रिशो गायत्र्याः पुनरष्टपत्रान्विवरेष्वालिख्य लिप्या वृतम् ॥ भूर्बिबद्वितयेन मन्मथयुजा कोणेषु संवेष्टितं यंत्रं त्रैपुरमीरितं त्रिभुवनप्रक्षोभकं श्रीप्रदम् ॥ ७१ ॥ अस्मिन्यंत्रे समावाह्य सम्यक् संपूज्य देवताम्॥होमेन कृतसंपातं लाक्षालोहत्रयावृतम् ॥ विधृतं बाहुनायंत्रं युद्धेषु विजयावहम् ॥ वादेवाग्विजयं कुर्यात्कवित्वं पुष्कलं दिशेत्॥७३॥आयुरारोग्यमित्राणि पुत्रान्पौत्रान्विवर्द्धयेत् ॥ कामषट्कोणमध्येलिखतु पुनरिमं षट्सु कोणेषु पश्चात्पत्रेषुद्व्यष्टसंख्येष्वमुमथ पुरतो व्योमबीजेनवीतम्॥क्षोणीबिंबांतरस्थंभुजदललिखितंरोचनाकुंकुमाभ्यां प्रोक्तं सौभाग्यसंपन्निरुपमकवितावाकीर्तिदं यंत्रमेतत्॥७५॥वन्हेर्गेहयुगांतरस्थमदने मायां लिखेद्वाग्भवम् ॥ षट्कोणेष्वथ संधिषु प्रविलिखेत् ह्रुंकारमावेष्टयेत्॥ स्त्रीं बीजेन समीरितं त्रिभुवनप्रक्षोभकंत्रैपुरं यंत्रं पंचमनोभवात्मकमिदं सौन्दर्यसंपत्करम् ॥ ७६ ॥ अधरो बिंदुमानाद्यो ब्रह्मेंद्रस्थः शशीयुतः ॥ द्वितीयं भृगुसर्गाढ्यो मनुस्तार्तीयमीरितम् ॥ ७७ ॥ एषा बालेति विख्याता त्रैलोक्यवशकारिणी ॥ जयपूजादिकं सर्वमस्याः पूर्ववदाचरेत् ॥ ७८ ॥ मान्मथं त्रिपुरा देवि विद्महे पदमीरयेत्॥ उक्त्वा कामेश्वरि पदं प्रवदेद्धीमही ततः ॥ ७९ ॥ तदंते प्रवदेद्भूयस्तन्नः क्लिन्ने प्रचोदयात् ॥ गायत्र्येषा समाख्याता त्रैपुरी सर्वसि-

---

चोरं कचूरं। सटोति यावत्।दिग्भागं।दशभागम्कन्यया पिष्टमिति।कृष्णचतुर्दशीरात्रौ श्मशानेसम्प्रदायेन पिष्टम् । सुसाधितमिति । एतन्मंत्रजप्तम् ॥ ७१ ॥ यन्त्रमाह । मध्येति । प्रविलिखेत्प्रादक्षिण्येन एवं त्रिरावृत्तिर्भवति । गायत्र्यास्त्रिपुरागायत्र्याः लिप्या मातृकया ॥ ७२ ॥ भूर्बिंबद्वितयेन । परस्परव्यतिभिन्नेन । मन्मथबीजं भैरव्या एव ॥ ७४ ॥ ७५ ॥ यन्त्रान्तरमाह । कामेमिति । कामं भैरवीमध्यबीजं । इमं कामं । द्व्यष्टसंख्येषु षोडशसंख्येषु । अमुं कामं । व्योमबीजं हं । भुजदलं । भूर्जपत्रं ॥ ७६ ॥ ७७ ॥ यन्त्रान्तरमाह । वन्हेरिति । मदने प्रसिद्धे । वाग्भवं प्रसिद्धम् । संधिष्विति । कोणानभितो वृत्तमध्ये । स्त्रीबीजेनेत्येकत्वं विवक्षितम् । सर्वं स्त्रीबीजमध्ये लिखेदित्यर्थः । तदुक्तं । मनोभवस्य सकले कुक्षौ तदेतत्क्षिपेदिति । पञ्चमनोभवात्ममिति । पञ्चभिः कामबीजैर्यंत्रस्योद्धृतत्वात् । पञ्चकाममन्त्रा यथा । कपञ्चमं शुचिनयनान्तसंयुतं सवामदृक्पवनगुणान्वितः करः । रविस्वरो हरिहयविष्णुषष्ठवद्वनन्ततस्तरउपरान्वितो भृगुः।तेषां शिरःसु विदधीत बुधोर्धचन्द्रानेवं मया निगदिताः खलु पञ्चकामा इति । कं जलं वः तत्पञ्चमो हः शुची रेफः नयनान्त ईतेन मायाबीजं । वामदृगीकारः पवनात्सकाराद्गुणस्तृतीयो लः तदन्वितः करः ककारस्तेन कामबीजं । रविस्वर ऐ । हरिहरो लः विष्णुरकारस्तस्मात्षष्ठ ऊकारस्तद्युक्तं वनं वकारस्तेन ब्लूं । तत्स्वरूपं । उः परोयस्मात्तेन ई तद्युक्तो भृगुः सकारस्तेन स्त्री । सर्वे सानुस्वाराः । बालाबीजैस्त्रिभिरित्युद्दिष्टम् । बालामन्त्रमुद्धरति । अधरइति । अधरोबिंदुमानैर्ब्रह्माककारः इन्द्रोलः शशी बिंदुः ई स्वरूपं । तेन क्लीं । भृगुः सः सर्गो विसर्गस्तेनाढ्योमनुरौतेन सौः इति । अन्यत्र सबिंदुरुक्तः । तदुक्तं ।सनत्कुमारे। अष्टमस्य तृतीयं तु चतुर्दशसमन्वितं । दण्डकुण्डलमेतद्धिसारस्वतमुदाहृतमिति । अस्या विद्यायाः शाप इति । तदुद्धारो यथा । देव्या शप्ता येन विद्येयमाद्या पूर्वं तेन प्राणहीनाऽभवत्सा । शिवश-

द्धिदा ॥ ८० ॥ स्तुत्यानया त्वां त्रिपुरे स्तोष्येभीष्टफलाप्तये ॥ यया वज्रां तितां लक्ष्मीं मनुजाः सुरापूजितां ॥ ८१ ॥ ब्रह्मादयस्तुतिपदैरपि सूक्ष्मरूपांजानंति नैव जगदादिमनादिमूर्तिं॥ तस्माद्वयं कुचनतां नवकुंकुमाभां स्थूलां स्तमः सकलवाङ्मायमातृभूताम्॥८२॥सद्यः समुद्यतसहस्रदिवाकराभां विद्याक्षसूत्रवरदाभयचिन्हहस्तां॥ नेत्रोत्पलैस्त्रिभिरलंकृतेपद्मवक्त्रां त्वां तारहाररुचिरां त्रिपुरे भजामः॥सिंदूरपुंजरुचिरं कुचभारनम्रं जन्मांतरेषु कृतपुण्यफलैकगम्यं ॥ अन्योन्यभेदकलहाकुलमानभेदैर्जानंति किं जडधियस्तवरूपमंब ॥ ८३ ॥ स्थूलां वदंति मुनयः श्रुतयो गृणंति सूक्ष्मां वदंति वचसामधिवासमन्ये ॥ त्वां मूलमाहुरपरे जगतां भवानि मन्यामहे वयमपारकृपांबुराशिं ॥ चंद्रावतंसकलितां शरदिंदुशुभ्रां पंचाशदक्षरमयीं हृदि भावयंति ॥ त्वां पुस्तकं जपवटीममृताढ्यकुंभंव्याख्यां च हस्तकमलैर्दधतीं त्रिनेत्रां ॥ ८४ ॥ शंभुस्त्वमद्रितनया कलितार्द्धभागो विष्णुस्त्वमंबकमलापरिबद्धदेहः ॥ पद्मोद्भवस्त्वमसि वागधिवासभूमिस्तेषां क्रियाश्च जगति त्रिपुरे त्वमेव ॥ आश्रित्य वाग्भवभवांश्चतुरः

---

शिवीजमतएव शंभुना निहितं तयोरुपरि पूर्वबीजयोः । अकुलं कुलोपरि च मध्यमाधरे दहनं ततः प्रभृति सोर्ज्जिताभवदिति । पूर्ववदित्युक्तत्वात् । प्रथमबीजस्य वाग्भवमिति नाम । मध्यस्य कामबीजमिति । तृतीयस्य शाक्तमिति । एतत्प्रसिध्यैव पूर्वमग्रेपि वाग्भवकामशब्देनोभयोर्व्यवहार इतिज्ञेयम् । अतएवांशतः अत्रोद्धारः व्यस्ताव्यस्तजपध्यानादिपूर्वोक्तमत्राप्यनुसन्धेयम् । अन्त्यं सबिंदुबीजं मध्यं शक्तिः । तदुक्तं । अमुष्य मन्त्रस्य रदान्तयुक्तं बीजं सदंडं लकुलीशपूर्वं । शक्तिस्तु सा खंडलकर्णपूर्वं सहार्द्धजैर्वा त्वकमाननान्तमिति । अन्यैस्त्वेतन्मध्यमबीजस्य नित्यामन्त्रत्वमप्युक्तम् । यदाहुः । नित्या भूत्वा जपेत्कामबीजमिष्टार्थसिद्धये । पञ्चकृत्वाद्यबीजेन विन्यसेन्मुखपञ्चके । षड्दीर्घेण षडङ्गानि कृत्वानित्यां निजेष्टदां । मंदरांभोधिमध्यस्थरत्नपङ्कजमध्यगाम् । सुरूपां कुंकुमप्रख्यामाकुञ्चितशिरोरुहां । चतुर्भुजां महादेवीं पाशांकुशधरां शिवाम् । वामेतरकरासक्तकपालापूरितासवाम् । वामहस्तसमासक्तकपालासवदायिनीम् । आत्माभेदेन तां ध्यात्वा मंत्रं लक्षं शनैर्जपेत् । मधूकपुष्पैर्जुहुयाद्दशांशं मन्त्रसिद्धये । नित्यक्लिन्नोक्तमार्गेण पूजां कुर्यादतन्द्रितः । राजानं राजपत्नीं च वशीकर्त्तुं य इच्छति । स तस्योरः समारुह्य मनसा तन्मयो जपेत् । यन्नामसहितं कृत्वा नित्यां विद्यां जपेन्नरः । तामाकर्षयते नित्यं वशीकुर्याच्च भूपतिम् । अनया मातृकां देवीं ग्रथित्वा नियुतं जपेत् । त्रैलोक्यमखिलं तस्य वशेतिष्ठति दासवत् । न्यस्तमत्रांगुलीं बध्वा क्षोभिणीं नामपुष्कलाम् । क्षोभिणी मुष्टिः । शय्यागतं स्मरन्नित्यमिष्टामाकर्षकृज्जपेदिति । गायत्रीसुद्धरति । मान्मथमिति । प्रसिद्धं मान्मथम् । अन्यत्स्वरूपम् ॥ ८३ ॥ त्रिपुरास्तुतिमारभते । स्तुत्येति ।यया स्तुत्या । तारउज्ज्वलो यो हारस्तेन रुचिरां॥मुक्ताशुद्धौचतारस्यादित्यमरः । अन्योन्यं परस्परं यो भेदकलहस्तेनाकुलानि यानि मानानि प्रमाणानि तद्भेदैस्तद्विशेषैः वाग्भवबीजेनाकारसाम्या त्रिकोणमाधारमण्डलमुच्यते तत्र भवान् तदुत्पन्नान् । तत्र यद्यपि पराया एवोत्पत्तिस्तथापि अन्यासामपि तत्स्थूलरूपत्वात्तथोक्तिः यद्वा वाग्भवं कुण्डलिनी तद्भवांस्तदुत्पन्नान् शक्तिः

परादीन्भावान्परेषु विहितार्थमुदीरयंती ॥ कण्ठादिभिश्च करणैः परदेवतां त्वां संविन्मयीं त्वहदि कदापि न विस्मरामि ॥ ८५ ॥ आकुंच्य वायुमवजित्य च वैरिषट्कमालोक्यनिश्चलधिया निजनासिकाग्रं ॥ ध्यायंति मूर्ध्नि कलितेंदुकलावतंसं तद्रूपमंबकृतिनस्तरुणार्कबिंबं ॥ त्वं प्राप्य मन्मथरिपोर्वपुरर्द्धभागं सृष्टिं करोषि जगतामिति वेदवादः सत्यंतदद्रितनये जगदेकमातर्नोचेदशेषजगतः स्थितिरेव न स्यात् ॥ ८६ ॥ पूजां विधाय कुसुमैःसुरदपानां पीठे तवात्र कनकाचलगव्हरेषु ॥ गायंति सिद्धवनिताः सहाकिन्नरीभिरास्वादितासवरसारुणनेत्रपद्मा ॥ ८७ ॥ विद्युद्विलासवपुषः श्रियमावहंतीं यांतीं स्ववासभवनाच्छिवराजधानीं ॥ सौषुम्णमार्गकमलानि विकाशयंतीं देवींभजे त्वहदि परामृतसिक्तगात्रीं ॥८८॥ आनंदजन्मभवनं भवनं श्रुतीनां चैतन्यमात्रतनुमंबसमाश्रयामि ॥ ब्रह्मेशविष्णुभिरभिष्टुतपादपद्मो सौभाग्यजन्मवसातिं त्रिपुरे यथावत् ॥ ८९ ॥ शब्दार्थभावि भुवनं सृजतींदुरूपा यातद्बिभर्ति पुनरर्कतनुः स्वशक्त्या॥वन्ह्यात्मिका हरति तत्सकलं युगांते तां शारदांमनसि जातु नविस्मरामि॥९०॥नारायणीति नरकार्णवतारिणीति गौरीतिखेदशमनीति सरस्वतीति ॥ ज्ञानप्रदेति नयनत्रयभूषितेति त्वामद्रिराजतनये विबुधावदंति ॥ ९१ ॥ ये स्तुवंति जगन्मातः श्लोकैर्द्वादशभिः क्रमात् ॥ त्वामनुप्राप्यवाक्सिद्धिं प्राप्नुयुस्ते परांगतिम् ॥ ९२ ॥ वाङ्माया कमलास्तारंनमोंते भगवत्यथ ॥ श्रीमातंगेश्वरि वदेत्सर्वजनमनोहरि ॥ ९३ ॥ सर्वादि सुखराज्यंते सर्वादिमुखरंजिनि ॥ सर्वराजवशं पश्चात्करि सर्वपदं वदेत् ॥ ९४ ॥ स्त्रीपुरुषवशं ब्रह्मानेत्रमग्न्यासनं पुनः ॥ सर्वदुष्टमृगवशंकरि सर्वभूगुस्तव ॥ ९५ ॥ शंकरिस्यात्सर्वलोकममुकं शिवयुग्मविः ॥ वशमानयजायाग्रैरष्टाशीत्यक्षरोमनुः ॥ ९६ ॥ न्यासान्मन्त्री तनौ कुर्याद्वक्ष्यमाणान्यथाक्रमम् ॥ शिरो ललाटभ्रूमध्ये तालुकंठगलोरसि ॥ ९७ ॥ अनाहते भुजद्वंद्वे जठरे नाभिमंडले ॥ स्वाधिष्ठाने गुह्यदेशे पादयोर्दक्षिणान्ययोः ॥ ९८ ॥

---

कुण्डलिनीति यानिगदिता आईमसंज्ञेत्युक्तेः । एवं भूतांश्चतुरःपरादीन् परापश्यन्तीमध्यमावैखरीरूपान्भावान् पदेषु स्थानेषु आधारनाभिकंठमुखेषु क्रमादाश्रित्यकण्ठादिभिः करणैर्विहितार्थमीप्सितार्थं। उदीरयन्ती वायुं प्राणापानरूपम् । वैरिषट्कं । कामक्रोधलोभमोहमदमत्सररूपम ॥ ८२ ॥ मन्मथरिपोः। पुरुषस्य ब्रह्मणोवार्द्धभागं सन्निधिं तत्सत्यं वेदवादत्वात् । विपक्षेप्रतिकूलंतर्कमाह। नोचेदिति। त्वदधिष्टानाभावादितिभावः । स्ववासभवनान्मूलाधारात्। शिवराजधानीं सहस्रदलकमलम्। सुषुम्णायां भवं सौषुम्णं तदेवमाद्यं येषां तानि। क्वचित्सौषुम्णसद्मकमलानीति पाठःकमलान्याधारादीनि सहस्रान्तानि। आनन्दजन्मभवनं श्रुतीनां भवनमिति व्यस्तं रूपकद्वयम्। शब्दार्थयोर्भावः सत्ता यत्र तत् । शारं कर्म्मफलं द्यतिखंडयतीति शारदाचिच्छक्तिः ॥ ९८ ॥ द्वादशभिरिति। सद्य इत्यादिभिः स्मरामीत्यंतैः। आद्यपद्यद्वयस्य सुखरूपबन्धरूपत्वाक्षेपयोरपि स्वरूपंफलनिर्द्देशात्। अथच द्वादशभिरिति पदेन कोशभेदाद्युमणिमालानामकः प्रबंधउक्तः। तल्लक्षणसुक्तं भामहेन । अथ द्युमणिमालास्यात्पद्यैर्द्वादशभिः समैः॥ प्रत्येकं

मूलाधारे गुदे न्यस्येत्पदान्यष्टादशक्रमात् ॥ गुणैकद्विचतुः षड्भिर्वसुषट्पर्वताष्टभिः ॥९९॥ दशपंक्त्यष्टवेदाग्निचंद्रयुग्मगुणाक्षिभिः ॥ पदक्लृप्तिरियं प्रोक्ता मन्त्रवर्णैर्यथाक्रमम् ॥१००॥ रत्याद्या मूलहृदयभ्रूमध्येषु विचक्षणः॥ वाक्शक्तिलक्ष्मीबीजाद्यामन्यतङ्ग्यत्याः प्रविन्यसेत् ॥ १ ॥ शिरोवदनहृद्गुह्यपादेषु विधिना न्यसेत् ॥ हृल्लेखां गगनां रक्तांभूयो मन्त्री करालिकां ॥ २ ॥ महोच्छुष्मा स्वनामादिवर्णबीजपुरःसराः ॥ मातंङ्ग्यंताः षडंगानि ततः कुर्वीत साधकः ॥ ३ ॥ वर्णैश्चतुर्भिर्विंशत्याहृत्त्रयोदशभिः शिरः ॥ शिखाष्टादशभिः प्रोक्ता वम तावद्भिरक्षरैः ॥ ४ ॥ स्यात्त्रयोदशभिर्नेत्रं द्वाभ्यामस्त्रं समीरितम् ॥ विभक्तैमूलमन्त्रा

---

नायकोत्कर्षप्रकाशनपरायणैः । मुखबंधे श्लोकयुग्मं तथाशेषे द्वयं मतम् । कृता द्युमणिमालेयं कीर्त्तिवृद्धिमतीन्नृणामिति ॥ ९९ ॥ राजमातंगिनीमन्त्रद्वुद्धरति । वागिति । वाग्वाग्वं मायाशक्तिबीजम् । कमला श्रीबीजं तारः प्रणवः नमोंते नम इत्यस्यान्ते ब्रह्मा कः नेत्रमिकारः अग्न्यासनं रिभृगुः सः त्वचस्वरूपं । रविर्मकारः शिवयुगेकारः तेन मे । दक्षिणामूर्त्तिर्ऋषिर्गायत्रीच्छन्दः मायाबीजं स्वाहाशक्तिः । कंठस्तन्मणिर्गलस्तदधोभागः ॥ १०४ ॥ अनाहते । हृदये । गुह्ये देशे लिंगे । दक्षिणान्ययोरिति सार्वत्रिकोपि क्रमः क्वचिद्दृत्तव्य इत्यत्रोक्तः॥पदविभागमाह । गुणेति । गुणास्त्रयः पर्वताः सप्तपंक्तिर्दशवेदाश्चत्वारः अग्नयस्त्रयः चन्द्र एकः अक्षि द्वयं । रत्याद्या इत्यादिशब्देन प्रीतिमनोभवे । विचक्षण इति । समुचितबीजाद्या इत्युक्तम् । मातंग्यंता इति । प्रत्येकं । ऐ क्लीं श्रीं रत्यै मातंग्यै नम इत्यादि प्रयोगः । एवमग्रेपि । विधिवदिति । पञ्चमुखेष्वपि न्यसेदित्युक्तम् । स्वनाम्नां ये आदिवर्णास्तान्येव बीजानि तत्पुरः सरास्तदाद्या इति । पूर्वोक्तबीजापवादःमातंग्यन्ता इत्यस्यपश्चात्तनेन सम्बन्धः।ततःसाधकःविभक्तैर्मूलमन्त्रार्णैःषडंगानि कुर्वीतेति संबंधः । साधक इत्यनेन ज्ञानैश्वर्यादियोगः सूचितः ११० विभागमाह।वर्णैरिति १११ ११२ ११३ स्वनामिति । स्वनामादौ बीजाद्याः पूर्वोक्तद्रामादिबीजादिकाः मातंग्यन्तान्यसेदिति संबंधः । शुभलक्षणा इत्यन्वर्थाभिधानात् इत्यर्थः । ततो मातंग्यन्तान् मन्मथान्यसेदिति संबंधः । वदनांसयोरिति वामांसादारभ्यन्यासः ११४ बीजत्रयादिकानिति।मन्त्राद्यबीजत्रयाद्यान्समीरिताएता मातंग्यन्ताः तनौ एतेषु पूर्वोक्तस्थानेषु न्यसेदिति संबंधः १२८ मूले मूलाधारे । अधिष्ठाने लिङ्गमूले।मणिपूरके नाभौ।मातंगीपदशेखरामातंग्यन्ता एता मन्त्रिणा तनौ विन्यस्तव्या इतिसंबंधः १२१ पूर्वमितिष्ठेयम्।मातंगीपदं पश्चिमवान्तिमं यासां ताः॥एषु पूर्वोक्तस्थानेषु मातंग्यन्तानसितांगादिभैरवान्नवमोक्तान्विन्यसेदिति सम्बन्धः १२४ भ्रुवोर्मध्यइत्यारभ्य शिवान्तसूर्ध्वादिस्थानान्निज्ञातव्यानिमातंग्यन्ताइमाःप्रविन्यसेदिति सम्बन्धः१२७क्रियाशक्तिमित्येका दृष्टिसंज्ञामित्येका सुन्दरानन्दामित्येका एतावक्ष्यमाणाः । यथावद्देशिकोत्तमइत्यनेन बीजत्रयादिकान्मन्त्रीत्यादौ एता बीजत्रयादिका इत्यन्ते मध्ये च मन्त्रविन्मन्त्रिणा मन्त्रविन्मन्त्रीति चोक्तत्वान्मध्ये यादेवतास्तासामपि बीजत्रयादित्वं ज्ञेयमित्युक्तम् । आदिशब्दार्थमाह।मातङ्गीमिति । मद्यदाद्यन्तां मद्यमातङ्गीं १३० तेनैवेति मूलेन । ध्यायेयमिति । चूलिका केशबन्धः । शङ्खत्रयं शङ्खताटङ्कम् । चित्रकं तिलकम् । तथा च

**नैर्वाणन्यासमथाचरेत् ॥ मूर्द्धपादास्यगुह्येषु त्वद्दंभोजे प्रविन्यसेत् ॥ द्राविणीं शोषिणीं भूयो बंधनीं मोहनीं पुनः ॥ ६ ॥ आकर्षणीं स्वनामादिबीजाद्या शुभलक्षणाः॥ मातङ्ग्यंत्या स्ततो न्यस्येन्मन्मथान्वदनांसयोः ॥ ७ ॥ पार्श्वकव्योर्नाभिदेशे कटिपार्श्वांसके पुनः ॥ बीजत्रयादिकान्मन्त्री मन्मथं मकरध्वजम् ॥ ८ ॥ मदनं पुष्पधन्वानं पंचमं कुसुमायुधम्॥ षष्ठंकंदर्पनामानं मनोभवरतिप्रियौ ॥ ९ ॥ मातङ्ग्यंतांस्ततोन्यस्येत्स्थानेष्वेतेषु मन्त्रवित् ॥ प्रथमानंगकुसुमा**

---

त्रिकांद्याम्। तमालपत्रतिलकचित्रकाणि विशेषकमिति । अत्र ध्यानान्तरं वीणायोनिमुद्रे दर्शयेत् १३४ त्रिकोणकर्णिकमिति योनिकर्णिकम्।पूर्ववदिति।यथा न्यस्ताः वामकोणादि। एवमग्रेपि। यथान्यासमेव पूजा सा। यथा पूर्वमिति। तुर्य्योक्तस्थानेषु। विधानविदिति कर्णिकायां दिक्ष्विति दिक्केसरेषु। पुनरन्तरम्। वल्लकी वीणा। बहिरष्टदलेषु दलमूलेषु। अपरांगे । पृष्टभागे निषंगतूणीरस्तेनाद्याः। पुष्पास्त्रं पुष्पबाणः प्रोक्तलक्षणाः। षष्टपटलोक्तध्यानाः। आग्नेयकोण इति। इयं पूजा सर्वशक्तिमन्त्रसाधारणीति ज्ञेयम्। अत एव सर्वशक्तिमन्त्राणामन्ते उक्ता। मल्लिकेति । त्रितयेपुष्पैरिति ज्ञेयं फलैरित्यग्रे वक्ष्यमाणत्वात् १५१ बन्धूकपुष्पैरिति।पुष्पपदोपादानात्।बकुलादित्रयमपि पुष्पम्। कदंबैरित्यपि पुष्पैः। सर्वमिति। अन्यगुणानवरुद्धं पूर्वोक्तं मग्रिमं च । चन्दनेति। शक्तिगन्धाष्टकं तेन आदिशब्देन जटामांसीकचूररक्तचन्दनानि। वशयेदिति । अष्टद्रव्यहोमसमुदायफलम्। एतानीति कर्पूरकपिचौराणि समभागानीति पूर्वमन्त्रप्रयोगोक्तभागक्लृप्तानीत्यर्थः । तिलकमिति। कन्यया हिमोदकेन कृष्णचतुर्दश्यां निशिपिष्टेनैतन्मन्त्रजप्तेन कृतम्। निबन्तैलान्वितैरिति तत्तैलाकृष्टिप्रकारो यथा । बीजानि जलपिष्टानि कांस्यपात्रे खरातपे। स्थापयेतस्यतत्तैलं निःसरत्येव नान्यथेति १५९ पराञ्च्छन्मातङ्गीस्तुतिमारभते।देवतामिति।रत्नमालेति। प्रबन्धनाम तद्योगात्स्तुतिनामापि। तल्लक्षणमुक्तं भामहेन। नेतृप्रसिद्धनामांकं श्लोकयुग्मं शुभावहम्।कुर्य्यादाद्यन्तयोस्तस्य शिखाबन्धं समाधिना । सुभङ्गिः शोभनाष्टान्तांवाचमिति पाठान्तरं सा स्यात् रत्नमाला नवाधिका। मालायां नवरत्नादौ रचितायामिति क्रमात् । भवन्त्येकादशांश्लोकाःपण्डितप्रमुदाकरा इति । नवचन्द्रमौलेर्देवींपट्टराज्ञीमिति । सम्बन्धः । अकृत्रिमाणां वचसां विगुंफा वेदाः। पदात्पदं पदेपदे इत्यर्थः। कृतार्थयन्तीं स्वगमनेनेति शेषः। धिनोतु प्रीणयतु कदाचिल्लक्षचरा कदाचिदलक्षचरमिति। तडिल्लताकान्तं अलब्धभूषंनिश्चितस्य वपुषा करणात्खञ्चेत् शरीरस्थितिः कथमित्याह। चिरेणानुमेयं न प्रत्यक्षदृश्यमिति भावः १६९ कान्त्या।देहकान्त्या।नीलोत्पलानां श्रियमाहरन्तीः कटाक्षैः कमलाकराणां श्रियमाहरन्तीति सम्बन्धः। मातङ्गकन्यामिति । मातङ्गपुत्रीरूपामित्यर्थः।बिंबाधर एव न्यस्तललामभूषाविशेषस्तेनरम्यम्। इति श्रीशारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां यदाथादर्शाभिख्यायां द्वादशः पटलः ॥ १२ ॥ मुख्ये पुष्पाञ्जलिंकृत्वा गणेशाद्यर्चनं भवेदित्युक्तेः शक्तिमन्त्रानुक्त्वा क्रमप्राप्तगणपति मन्त्रान् वक्तुमुपक्रमते । अथेति । सर्वार्थसिद्धिदानिति विनियोगोक्तिः। गणपतिबीजमुद्धरति।पश्चांतकमिति। पश्चान्तकोगकारः शशी विंदुस्तद्युतम् । अथ च शशी विसर्गस्तद्युतः सर्गः शक्तिर्निशाकरइत्युक्तेः गोपनायैवमुद्धारः।इदं द्वयं

भूयो न्यानंगमेखला॥ १०॥ अनंगमदना तद्वदनंगमदनतुरा॥ अनंगमदनवेगाभूयश्चानागसंभवा ॥ ११ ॥ सप्तम्यनंगभुवनपालिनी स्यादथाष्टमी ॥ अनंगशशिरेखा न्या मातं ङ्ग्यंताः समीरिताः ॥ १२ ॥ विन्यस्तव्या स्ततोमूलेऽष्ठाने मणिपूरके ॥ त्द्त्कंठास्ये भ्रुवोर्मध्ये मस्तके मंत्रिणा ततः ॥ १३ ॥ आद्ये लक्ष्मीसरस्वत्यौरतिः प्रीतिश्चकात्तिका ॥ शांतिः पुष्टिः पुनस्तु

---

उतरगार्ग्योक्तं पूजाप्रयोगादिकमुभयोः समानम्। के चनश्रीकारयुतमाहु। तदुक्तं प्रयोगसारे। बीजमिंदुमदीयुक्तं कल्पतीयं तथैवचेति । नारायणीये तु । खान्तं सान्तविषं सबिंदुसकलं बिंद्वीयुतं केवलं पञ्चै तानि पृथक् फलं विदधते बीजानि विघ्नेशितुरिति। आचार्यैस्तु। प्रणवादिरुद्धृतः चतुर्थीयोविलोमेन तारादिबिंदुसंयुतः वैघ्नोमन्त्रोऽल्पदन्तोऽर्चा विधौ होमे द्विठान्तकः गणकः स्याहृषिश्छन्दो निचृद्विघ्नेशस्यदेवता। बीजेन दीर्घयुक्तेन दण्डिनाङ्गक्रियामतेति । गकारोबीजं बिंदुःशक्तिः अन्यत्र सर्गः शक्तिः॥२॥षडङ्गमाह। षडिति प्रयोगसारे पञ्चाङ्गमप्युक्तम्।आदौ गणं जयायोल्का स्वाहा हृदयमुच्यते। एकदंष्ट्राय सम्भाष्य हुंफड्विद्याच्छिरस्ततः। शिखाग्यचलशब्दादिकर्णिनत्यन्ततोनमः। कवचं गजवक्त्राय नमोनम इतीरितम्। महोदराय चण्डाय हुंफडित्यस्त्रमिष्यते। एतान्यङ्गानि विन्यस्येत्यञ्चोक्तानि मनीषिभिः। सप्रांशुना वा बीजेन षडंगान्यपियोजयेदिति । आयुधध्यानं तु ऊर्ध्वस्थवामदक्षयोरंकुशपाशौ। अधःस्थयोःस्वदन्तवरदे सर्वोपि गणपतिरेकदन्तोध्येयः । सदन्तो दक्षिणपार्श्वे। द्वितीयस्य ध्यानं यथा । ध्यायेत्स्वैक्येन देवं बृहदुदरतनं तं चतुर्बाहुमेकं दंतं पाशांकुशाढ्यं गजमुखमरुणं दन्तभक्षेर दधानमिति।पुष्करं च दक्षहस्तस्थितभक्ष्योपरि श्रीकारयुक्तबीजे तु ध्यानम्। रक्ताक्षमालापरशुं च दंतं भक्षंग्र च दोर्भिः परितो दधानम्। हेमप्रभं च त्रिदशं गजास्यं लम्बोदरं चैकरदं नमामि। अत्रापि पुष्करं पूर्ववज्ज्ञेयम्। इदमेव मायाबीजाद्यं यदा तदा ध्यानम्। अमृताम्भोधिमध्ये तु वारिजे कुंकुमप्रभे । ऋतुसंख्यदलोपेते चिन्तयेद्गणनायकम् । पाशांकुशधरं देवं जपाकुसुमसन्निभम्। वामपार्श्वगतं देवीं माालिङ्गन्तं सुलोचनम् । सुवर्णचषकं शुभ्रं मधुनापूरितं सदा । पिवंतां वामहस्तेन योगिनीं मदमोहिताम् । रक्तवर्णां महादेवीमालिङ्गतीं सुमध्यमाम्। वाहुनैकेन। विघ्नेशं मत्तं रक्तविलोचनम् । तद्रूपां श्चिन्तयेद्विद्वान् गणान्पूर्वादितः क्रमादिति। अत्रध्यानानन्तरमियं मुद्रा प्रदर्शनीया। मुखात्प्रलंबितं । हस्तं कत्वा संकुचितांगुलिङ्गम्। मध्यात्तर्ज्जनिर्गताग्रांगुष्टं चाधःस्थमध्यम। कुर्यान्मुद्रा गणेशस्य प्रोक्तेयं सर्वसिद्धिदेति। यद्वा । तर्ज्जनीमध्यमासंधिनिर्गतांगुष्टमुष्टिका। अधोमुखीदीर्घरूपा मध्यमा विघ्नमुद्रिकेति। यद्वा । कुञ्चिताग्रस्य हस्तस्य मूले नासानियोगतः गणेश्वरी भवेन्मुद्रेति । इयं सर्वगणपतिमन्त्रसाधारणीति ज्ञेयम्॥४॥ वेदलक्षं चतुर्लक्षं। दशांशमिति। तत्र होमो ष्टभिर्द्रव्यैर्वक्ष्यमाणैःअष्टमष्टमयुतमेकैकेन द्रव्येण होतव्यम् । केचित्तु अष्टद्रव्यमिलनमाहुः। तन्न। आहुतिप्रमाणसन्देहापातात् । मूले च प्रत्येकं पृथक्क्रियान्वयाच्च। विशिष्टस्य द्रव्यान्तरत्वेनाष्टद्रव्यहोमकरणासम्भवाच्च। तदुक्तं भट्टाचार्यैः। नैव व्रीहिभिरिष्टंस्याद्यवैर्न च यथाश्रुतेः। मिश्रैरिज्येत चेदिति। तथा मिश्राणां विध्यदर्शनार्दिति च। नन्वेवं त्रिमधुरमेलनमपि न कार्यमितिचेत्। मैवं । सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतमिति

षिर्मातंगपिदशेखराः ॥ १४ ॥ मूलमन्त्रं प्रविन्यस्येन्निजमूर्द्धनि मन्त्रवित् ॥ आधारदेशे धिष्ठाने नाभौ पश्चादनाहते ॥ १५ ॥ कंठवक्त्रे भ्रुवोर्मध्यमस्तके विन्यसेत्क्रमात् ॥ ब्राह्मयाद्याः पूर्वमुद्दिष्टा मातंगीपदपश्चिमाः ॥ १६ ॥ एषु स्थानेषु विन्यस्येदसितांगादिभैरवान् ॥ मातङ्ग्यतान्यसेन्मन्त्री मूलमन्त्रं स्वमूर्द्धनि ॥ १७ ॥ आधारदेशेधिष्ठानेनाभौ पश्चादनाहते ॥ कंठदेशे भ्रुवोर्मध्ये बिंदौ भूयः कलापदे ॥ १८ निरोधिकायामर्द्धेंदौ नादनादांतयोः पुनः ॥ उन्मन्यांविषुवक्त्रे च ध्रुवमण्डलके शिवे ॥ १९ ॥ मातङ्ग्यंताः प्रविन्यस्येद्वामां ज्येष्ठामतः परम् ॥ रौद्रीं प्रशांतिं श्रद्धाख्यां पुनर्माहेश्वरीमथ ॥ २० ॥ क्रियां शक्तिं सुलक्ष्मीं च सृष्टि-

---

वचनात्तन्मेलनस्य पशुपुरोडाशाद्यवदानानामुपस्तारप्रत्युपस्तारांख्यमेलनवदविरोधात् । तदुक्तं । गणेश्वरविमर्शिन्याम् । अष्टद्रव्यैस्त्रिमध्वक्तैर्जुहुयाच्च पृथक् पृथगिति । पृथुकैश्चिपिटकैः शुद्धैरित्यनेनावकरं दूरीकृत्य प्रक्षाल्य शोषितैरित्युक्तम् । एषु मन्त्रेषु गायत्र्या प्रोक्षणादिकं कुर्यात् । गायत्री यथा । एकदंष्ट्राय विद्महे वक्रतुण्डाय धीमहि । तन्नो विघ्नः प्रचोदयादिति । तीव्रेति । आसां ध्यानं यथा । पाशांकुशांजलिकरा नवकुंकुमसंनिभाः॥तीव्राद्याः पूजनीयाः स्युः शक्तयो मणिभूषणा इति ॥८॥ विभोरिति । पीठमन्त्रादौ स्वबीजाद्यत्वमुक्तम् । प्रथमं पूजयेदिति । अत्र प्रथममित्यंगाद्यपेक्षया प्राथम्यं यतश्चतुर्थपटले अङ्गादिलोकपालान्तं पूजयेदिति सामान्यत उक्तम् । तदपवादायाच प्रथममित्युक्तिः तद्व्याख्यानावसरे अत एव मयोक्तं ग्रन्थकृता इदं वचनं सम्भवाभिप्रायेणोक्तमिति ॥९॥ यथापूर्वं चतुर्थोक्तरीत्या॥११॥विधिवदिति।गणपतिबीजादि।इत्थं समर्चयेदिति। मन्त्रयस्य पूजा समानेव। तदुक्तमीशानशिवेन। पञ्चान्तकं बिंदुयुतं सनादं बीजं गणेशस्य वदन्त्यथान्ये । ऊकारबिन्द्वन्तमुदीरयन्ति तुल्यस्तयोः स्याद्विधिरेष उक्त इति । मायाबीजादौ तु षड्दले आमोदादीन्पूजयेदितिविशेषः। तर्प्पणप्रयोगाश्च सर्वमन्त्राणां साधारणा एव। तर्प्पणे तु सर्वेषामयंविशेषः। क्रोडन् हेममहोदयाद्रिशिखरे स्थित्वा वतीर्णः सुधा सोपानेषु समेत्य रुक्मकलितेष्वब्जादिभिश्चंग्र बहु। भुक्त्वा प्रीतमना यथा पुरमसौ संपूजितो विघ्नराट् कुर्यादित्युषसि स्मृतसःसकलान्कामांस्तथा तर्पित इति। तर्पयेदिति। गं गणेशं तर्प्पयामीतिप्रयोगः। क्रमाच्चतुःशतमिति । प्रतितिथिं द्रव्यचतुष्टयेन तावान् होमः। वश्या इति। तत्र विशेषः प्रयोगसारनारायणीययोः।साध्यं पाशांकुशाभ्यामिष्टविधिवदुपानीय तस्योपरिस्थो वश्याकांक्षी जपेत्तं स यदि विधिरयं हन्ति रुद्रस्य रोषमिति । सतिलैरिति। अत्रापि शुक्लप्रतिपदमारभ्य चतुर्थ्यन्तं चतुःशतं होमः। लाजैरिति॥१७॥अत्रापि शुक्लप्रतिपदमारभ्य चतुर्थ्यन्तं चतुःशतहोमः तमेव प्रतिपदमारभ्य सप्तमीपर्यन्तमिति विशेषः तदुक्तम्। मधुरत्रयसिक्ताभिर्लाजाभिःसप्तवासरमिति॥१८॥अनेन विधिनेति।एतादृशेषु स्त्रीणामप्यधिकार इति सूचितम्। चतुर्दिनमिति। प्रतिपदमारभ्य चतुर्थीपर्यन्तम्। संवादः संवननम्। जपेदिति । ग्रहणादिमोचान्तम्। मदो गजमदः। अनुलोमेनेति । बीजयोर्मध्ये साधककर्मनामानि नवनीते लिखेत्। अनुलोमविलोमेजत्यनेन बीजकयोः पुटितत्वमात्रमुक्तम्।नवनीत इति।नूतने बीजवेष्टितमित्यपि ज्ञेयम्। तदुक्तमाचार्यैः। नवनीतेन वै लेख्यादनुलोमविलोमगम् । उदरस्थितसाध्याख्यं तद्बीजं त-

संज्ञा च मोहिनी ॥ प्रथमा श्वासिनी विद्युल्लता चिच्छक्तिमप्यथ ॥ २१ ॥ ततश्च सुंदरानन्दो नंदबुद्धिमिमाः क्रमात्॥ शिरोभालदृदाधारेष्वेता बीजत्रयादिकाः॥२२ ॥मातङ्ग्यंताः प्रविन्यस्येद्यथावद्देशिकोत्तमः॥मातंगीमहदाद्यां तां महालक्ष्मीपदादिकां ॥ सिद्धलक्ष्मीपदाद्यांतां मूलमाधारमंडले ॥ न्यस्यत्तेनैव कुर्वीत व्यापकं देशिकोत्तमः ॥ २४ ॥ एवं न्यस्तशरीरोऽसौ चिन्तयेदात्मदेवताम्॥ध्यायेयं रत्नपीठे शुककलपठितं शृण्वतीं श्यामलांगीं न्यस्तैकांघ्रिं सरोजे शशिशकलधरान्वल्लकीं वादयंतीम्॥कल्हाराबद्धमालां नियमितविलसच्चोलिकां रक्तवस्त्रां मातङ्गीं शंखपत्रां मधुमदविवशां चित्रकोद्भासिभालाम् ॥ २५ ॥ अयुतं प्रजपेन्मन्त्री तद्दशांशंमधूकजैः ॥ पुष्पैस्त्रिमधुरोपेतैर्जुहुयान्मन्त्रसिद्धये ॥ २६ ॥ त्रि-

---

सूत्रवेष्टितमिति। नवनीत इत्युपलक्षणमपूपादेरपि । कार्योयंविधिरपूपे चेति नारायणीये उक्तेः । समभ्यर्चेति। साध्यगणेशो भूयो मन्त्रमष्टोत्तरशतमिति मूलमन्त्रं प्रजप्येत्यन्वेति । तन्नवनीतं भक्षयेदिति सम्बन्धः। सप्तवासरमिति। प्रतिपदादिसप्तमीपर्यन्तमित्यर्थः । तन्त्रान्तरोक्तं यन्त्रत्रयमुच्यते। अष्टारं पद्ममालिख्य कर्णिकोपरितस्य च। गौरीं बिंदुसमायुक्तां नाम्ना सार्द्धं समालिखेत्। प्रागादिदलमूलेषु मूर्त्तिबीजान्यथालिखेत्। कोणपत्रेषु चाग्नोशनिर्ऋत्यनिलसौम्यतः । क्रमादङ्गाद्यवर्णांश्च ततः पत्राग्रकेषु च। मातृशक्त्यादिवर्णांश्च ततः पद्मस्य बाह्यतः । स्वदिक्षुलोकपालानामाद्यर्णानि समालिखेत्। बहिः षोडशपत्राढ्यं तत्पत्रेषु स्वरांल्लिखेत् । शिष्टं मातृकयावेष्ट्य पाशेनैवांकुशेन च। तस्मिन्नावाह्य देवेशं विघ्नं यन्त्रे समर्चयेत् । क्षौमादिसूत्रे सम्बध्य गले यो मूर्ध्नि धारयेत्। तस्य हस्तगता लक्ष्मीर्वाणी जिह्वागता सदा। मेधा मनोगता कीर्त्तिर्वर्द्धमाना सदा दिशीति। पद्ममित्यष्टदलं। अष्टारमिति। तदुपरि कर्णिकोपरि कर्णिकामध्ये गौरी गकारः मूर्त्तिबीजानीति क्षिप्रप्रसादनोक्ताष्टभूर्त्याद्यक्षराणि । अंगेति पञ्चाङ्गपक्षे पञ्चमं सौम्ये।मातर एव शक्तयस्तन्नामाद्यर्णान् । स्वदिक्ष्विति।स्वस्वदिक्ष्वष्टारे । शिष्टंमातृकपाककारादिकयात । तथा षट्कोणं प्रविलिख्य तस्य जठरे विद्याद्यपञ्चान्तकम् । नाम्ना भूर्ज्जतरुत्वचि प्रविलिखेद्गोरोचनादूर्वया। एकारान्वितकालवर्णमथ युक् दन्तेन गान्तं ततः । शक्राणां शिरसा वहन्नपि विधिह्नीर्घश्च पश्चाद्रसः । माया वायुसखस्य मन्त्रवरमालिख्याथकोणेषु तद्बाह्ये पाशमथांकुशं प्रविलिखेद्भूमण्डलं बाह्यतः। यंत्रंगन्धमनोहरैश्वकुसुमैरभ्यर्च्य विघ्नेश्वरं यो धत्ते शिरसि क्षणेन विपुलां लक्ष्मीं लभेन्मानव इति। मेघोल्काय स्वाहेतिमन्त्रः। तथा। बीजेन रन्ध्रहनयुग्मगबीजवीतं कोणे गमालिख्य कलावसुके सरोजे । गायत्रिवर्णदलके प्यथकादिवीतं भूवीजयुक्क्षितिगृहे खिलदं हि यन्त्रमिति। महागणपतिमन्त्रमुद्धरति। श्रीति।भूबीजमग्रे वक्ष्यमाणम्। वरदमिति । शब्दकर्मणि द्वितोयामन्त्रे तु संबुद्धिः।सर्वजनमिति मन्त्रेपि द्वितीयान्तम् । अत्र के चनयकारं कीलकं मन्यमाना गणपतिपदं संबुध्यन्तमाहुः। अन्ये श्रीमहागणपतिपदं संबुध्यंतं वशंपदद्वित्वमप्याहुः । इदं ग्रन्थकारस्यापि संमतमेव।यतो द्वात्रिंशद्भे दगुणितेत्यत्रगणेशितुर्महामन्त्रमित्युक्तत्वात्। अन्ये विघ्नं चतुर्थ्यायुतमित्याचार्यपद्ये विघ्नशब्दोमहागणपतिपदोपलक्षकइत्याहुः। एव मिहापि गणपतिशब्दः

कोणकार्णिकपद्ममष्टयंत्रं प्रकल्पयेत् ॥ अष्टपत्रावृतं बाह्ये वृतं षोडशभिर्दलैः ॥ २७ ॥ चतुरस्रं समायुक्तं कांत्या दृष्टिमनोहरं ॥ एतस्मिन्पूजयेत्पीठे नवशक्तीः क्रमादिमाः ॥२८ ॥ विभूतिरुन्नतिःकान्तिःसृष्टिःकीर्तिश्च सन्नतिः॥व्युष्टिरुत्कृष्टिऋद्धिश्चमातंगी पदपश्चिमाः॥ २९॥ सर्वांते शक्तिकमलासनायनम इत्यथ ॥ वाक्शक्तिलक्ष्मीबीजाद्योमनुरासनसंज्ञकः ॥३० ॥ मूलेन मूर्तिसंकल्प्य तस्यामावाह्य देवतां ॥ अर्चयेद्विधिनानेन वक्ष्यमाणेन मन्त्रवित् ॥ ३१॥

---

यथागुरूपदेशं च निर्णयः। पद्मपादाचार्यैस्तु। दीक्षितो मन्त्रीत्यनेन चतुर्थीं परित्यज्य संबुद्धिस्वीकार इत्युक्तम्। मन्त्रदेवप्रकाशिकाकारादिभिरपि संबुध्यन्तस्यैव बोद्धृतत्वात्। गं बीजं स्वाहा शक्तिः। तदुक्तं। षष्ठं बीजां तजौ शक्तिरिति। षडंगमाह। षड्बीजस्येति।यथाविधीति। तत्तज्जातियुतानि शेषषडंगमुद्राभिरिति च विधानविदित्यनेनायंप्रयोगः सूचितः ॐ गांहृत्।श्रींगीं शिरः क्लीं गूं शिखा क्लीं गैं वर्म ग्लौं गौ नेत्रं गं गः अस्त्रं एष पक्षः साम्प्रदायिकः के चित्तु । प्रणवादिबीजपञ्चकमुच्चार्य गामित्यादिप्रयोगेण षडंगक्लृप्तिं वदंति। अपरे षड्बिजानं। प्राक्गामादीन्याहुः। नवरत्नमयं द्वीपमित्यादेरयमर्थः पृथिव्यनंतरमिक्षुसमुद्रं नवरत्नमयं द्वीपं नवरत्नमयं पारिजातमिति न्यसेत्। शेषं समानं। नवरत्नमयद्वीपादुत्पत्तेः पारिजातस्यापि नवरत्नमयत्वं। अन्ये तु माणिक्यमूलं वैडूर्यांकुरं इंद्रनीलशाखं प्रवालपल्लवं मरकतछंदगोमेदशृंगमौक्तिककोरकं वज्रपुष्पं पद्मरागफलमित्याहुः गणेश्वरविमर्शिन्यामपि मणिवज्रप्रवालाख्यफलप्रसवपल्लवैरित्यादि। पीठे रचितइति। व्यधिकरधिकरणे सप्तम्यौ षट्कोणांतः स्थत्रिकोणस्थमिति अत्राधोमुखं त्रिकोणं ग्राह्यं। इदं च मातृकापद्मकर्णिकायामिति ज्ञेयं। हस्तीति हस्तीन्द्रो गजश्रेष्ठः। पद्मकरया वामहस्ते पद्मं दक्षिणालिंगनं। धनुरिक्षुधनुः त्रिशिखं त्रिशूलं। वामाधस्ताद्दक्षिणाधः पर्यंतमायुधध्यानं कनककलशस्तु। शुंडाग्रे तदुक्तं। वामोर्ध्वादिक्रमेण। चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विजव्रीह्यग्रोत्पलयाश्रयं कजकरं शुंडाग्रजाग्रछटमिति। महागणपतिस्तवेपि वामदक्षयोरूर्ध्वादिक्रमेण। चक्राब्जशूलपाशानिक्षूत्पलगुडकलममंजरिकाः दाडिमरदभणिकुंभानाबिभ्रतमाश्रये महागणपमिति। द्राविडास्त्वन्यथा व्याचक्षते। अधोवामदक्षयोराद्ये तदूर्ध्वयोर्मध्ये। तदूर्ध्वयोरुपांत्ये। तदूर्ध्वयोरंत्ये इति। उक्तं च गणेश्वरविमर्शिन्यां।दक्षाधः करमारभ्य वामाधः स्थकरांतिकं। गदाशूलाब्जकह्लारविषाणं दक्षिणैः करैः। शाल्यग्रपाशचक्रेक्षुचापसद्बीजपूरकं । वामैर्दधानं मंजीरविलसच्चरणांबुजं। लीलया रत्नकलशं पुष्कराग्रे निधाय चेति। अन्ये तु प्रथमध्यान एव बीजपूरव्यत्ययमिच्छंति अन्ये तु तद्रसयोरेव व्यत्यस्तत्वमिच्छंति। तेनवामदक्षयोरदवीजपूरौ प्रतिभातः। मंत्रांति। दशांशंपुष्टिमंत्रजप उक्तः सगुरुमुखादवगंतव्यः। प्राक्प्रोक्तेनेति चतुः शतं चत्वारिंशदारमित्यर्थः प्रागुक्ते पीठेइति । पूर्वमंत्रोक्तः पीठशक्तयः पीठमंत्रश्चात्रापि ज्ञेयमित्यर्थः। पूजयेदितित्रिकोण इति शेषः। विधिनेति वक्ष्यमाणेन पूजायंत्रं तु ध्यानावसर एवोक्तं पंचमिथुनपूजामाह त्रिकोणेति टंकः परशुःउत्पलयुक्तौ हस्तौ ताभ्यामाढ्या। अस्त्रं बाणः पोत्रिणं वराहं। वह्निकोणतः पुरः कल्पितपूर्वदिगपेक्षया यो वह्निकोणस्तत्रेत्यर्थः एवमीशकोण इत्यत्रापि। एवं पश्चिमनैरृतवायुकोणेष्वपि ज्ञेयं तदुक्तमा

रत्याद्यास्त्रिषु कोणेषु पूजयेत्पूर्ववत्सधीः॥ ह्रल्लेखाद्याः पञ्च पूज्या मध्ये दिक्षु च मन्त्रिणा ॥ ३२ ॥ पाशांकुशाभयाभीष्टधारिण्यो भूतयः प्रभाः॥ अंगानि पूजयेत्पश्चाद्यथापिधि विधानवित्॥ ३३ ॥ बाणानभ्यर्चयेद्दिक्षु पञ्चमं पुरतो यजेत्॥ दलमध्येषुसंपूज्या अनंगकुसुमादयः ॥ ३४ ॥ पाशांकुशाभयाभीष्टधारिण्योरुणाविग्रहाः ॥ पत्राग्रेषु पुनः पूज्या लक्ष्म्याद्या वल्लकीकराः ॥ ३५ ॥ बहिरष्टदले पूज्या मन्मथाद्यामहाद्भुताः ॥ अपरांगानिषंगाढ्याः पुष्पास्त्रेक्षुधनुर्द्धराः ॥ ३६ ॥ पत्रस्था मातरः पूज्या ब्राह्मयाद्याः प्रोक्तलक्षणाः ॥ तदग्रेष्वर्चयेद्विद्वानसितांगादिभैरवान्॥ ३७ ॥ पुनः षोडशपत्रेषु पूज्याः षोडशशक्तयः ॥ वामाद्याः कलवीणाभिर्गायंत्यः श्यामविग्रहाः ॥ ३८ ॥ चतुरस्रे चतुर्दिक्षु चतस्रः पूजयेत्पुनः ॥ मातङ्ग्याद्या मदोन्मत्ता वीणाललितपाणयः ॥ ३९ ॥ आग्नेयकोणे विघ्नेशं दुर्गां नैर्ऋताचरे यजेत्॥ वायव्ये बटुकं पश्चादैशान्ये क्षेत्रपं यजेत्॥४०॥ लोकपाला बहिः पूज्या-

---

चार्यः। अग्नावामोदः प्रमोदसुमुखौ च तमभितो स्ति युगे। पृष्ठे च दुर्मुखाख्यस्तमभितो हि विघ्नकर्त्तारावविति विघ्नाइति पूर्वेण संबध्यते पूर्वोदीरितेत्यष्टमपटले एतदंतद्वितीयाहृत्तिः। पद्महोमेन भूपालानित्यादेर्मंत्रीवशं नयेत्यादिना संबंधः मंत्रीत्यनेन सर्वपदस्थाने साध्यमामेत्युक्तं समिद्वरैरिति। अग्रे यि त्रिषु संबध्यते हृष्टीति। अत्र स्वबीजानंतरममृतबीजं ज्ञेयं। चतुरांहृत्तितर्प्पणप्रकारमाह प्रत्येकमिति। आदौ मूलेन चतुर्वारं प्रतर्प्पयेत्। प्रत्येकमित्यस्यायमर्थः या यादेवता तर्प्पणीया तत्रादौ मूलेन च तर्वारं तर्पणं कर्त्तव्यं। स्वबीजाद्या इति। स्वबीजाद्याः प्रियान्विताः।प्रत्येकं चतुर्वारं तर्प्पयेदिति संबंधः स्वबीजाद्यानिति गणपतिबीजाद्यान्। तथा चतुर्वारं स्वप्रियान्विताविति वसुधारा वसुमतीसहितौ। तद्यथामूलमंत्रेण महागणपतिं तर्पयामीति चतुवारं संतर्प्य श्रीं श्रीं श्रीपतिं तर्पयामिति चतुर्वारं संतर्पयेत् अत्र लक्ष्मीशब्देन पंचम क्रममिथुनंसंग्रहोतं पूजाक्रमपिवक्षया तदुक्तमाचार्यस्तवे। पंचकारणभेदेन यस्मान्मिथुनपंचकं। करोति पंचकृत्यानि तदाद्यं मिथुनं भज इति अन्यत्रापि। प्रथमं पूजयेद्देवं ततो मिथुनपंचकमिति अन्यत्रापि न्यासावसरे शिरोवक्त्रहृदंभोजगुह्यपत्स्वपि पंचकं। मिथुनानां न्यसेत्स्वीयैर्बीजैःस्वैर्नामभिः पृथगिति एवं त्रयोदश देवतानां तर्पणानि भवंति त्रयोदशवारं मूलतर्पणानि । सर्वांते मूलेन चतुर्वारं तर्पणं एवमष्टोत्तरशतं तर्पणानि भवंति अयं कनिष्टः प्रकारः पद्मपादाचार्यैः कनिष्टप्रकारे चतुर्विंशत्यधिकैकशततर्पणान्युक्तानि तद्यथा मूलं ४ महागणपं ४ मूलं ४ पुष्टिं ४ पंचमिथुनानि ४० आमोदादि ६४ मूलं ४ एवमितिमध्यमप्रकारस्तु प्रियान्विता इति व्यस्ततर्पणेन तत्र व्यस्तत्वं मूले प्रियान्विताशक्तियुक्तानित्युक्तेर्लभ्यते।तद्यथा। मूलं चतुर्वारं संतर्प्य श्रीं श्रीपतिसहितां श्रियं तर्पयामीति चतुर्वारं पुनः श्रीं श्रीपहितं श्रीयतिं तर्पयामीति चतुर्वारं तर्पयेत् एवंषड्विंशतिदेवतातर्प्पणानि षड्विंशतिवारं मूलतर्पणानि च अंते मूलेन चतुर्वारं तर्पणं सर्वादौ च मूलेन स्वतंत्रतया चतुर्वारं तर्पणं एवं षोडशोत्तरा द्विशतीतर्प्पणानां भवतिउत्तमप्रकारस्तु प्रत्येकमादौ वक्ष्यमाणतर्पणानामितिशेषः चतुर्वारं तर्पयेदादावंते चेत्यर्थः मूलेन प्रत्यर्पणामित्यर्थः मूलमंत्रस्या

वज्राद्यैरायुधैः सह॥ मन्त्रेस्मिन्साधिते मन्त्रीसाधयेदिष्टमात्मनः॥४१॥ मल्लिकाजातिपुन्नागैर्हो-
माज्ञोगालयो भवेत् ॥ फलैर्बिल्वसमुद्भूतैस्तत्पत्रैर्वाहुताद्भवेत् ॥ ४२ ॥ राजपुत्रस्य राज्या-
प्तिः पंकजैः श्रियमाप्नुयात् ॥ उत्पलैर्वशयेद्विश्वं लक्ष्मीपुष्पैस्तथानरः ॥ ४३ ॥ बंधूकपुष्पैर्ब-
कुलैर्जपोत्थैः किंशुकोद्भवैः ॥ वश्यायजुहुयान्मन्त्री मधुना सर्वसिद्धये ॥४४॥ लवणैर्मधुरोपे-
तैर्हुत्वा कर्षति सुंदरीं ॥ वंजुलस्य समिद्धोमो वृष्टिं वितनुते चिरात् ॥ ४५ ॥ क्षीराक्तैरमृ-
ताखंडैर्होमो नाशयति ज्वरम् ॥ दूर्वाभिरायुराप्नोति कदंबैर्वश्यमाप्नुयात् ॥ ४६ ॥ अन्न-
वानन्नहोमेन तंडुलैर्धनवान्भवेत् ॥ सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतम् ॥ ४७ ॥ नंद्याव-
र्तभवैः पुष्पैर्होमोवाक्सिद्धिदायकः॥ निंबप्रसूनैर्जुहुयादीप्सितां श्रियमश्नुते ॥४८॥ पलाश-
कुसुमैर्होमा त्तेजस्वीजायते नरः ॥ चंदनागरुकर्पूररोचनाकुंकुमादिभिः ॥ ४९ ॥ वश्यायजु-
हुयान्मन्त्रीव शयेदखिलं जगत् ॥ एतानि जप्त्वा तिलकं कुर्याल्लोकप्रियो भवेत् ॥५० ॥
निर्गुंडीमूलहोमेन निगडान्मुच्यतेनरः ॥ निंबतैलान्वितैर्लोणैर्होमः शत्रुविनाशनः ॥५१॥
हरिद्राचूर्णसंमिश्रैर्लवणैःस्तंभयेत्परान् ॥ रसवद्भिः फलैःपक्वैः पुष्पैरपिमलान्वितैः ॥ ५२ ॥
हुत्वा सम्यगवाप्नोति साधकः सर्वमीप्सितम्॥देवतां जगतामाद्यांमातंगीमिष्टदायिनीं॥५३॥
अवाप्तेमिष्टां तां वांच भूषयेद्रत्नमालया ॥ आराध्यमातश्चरणांबुजं ते ब्रह्मादयोपिस्तुति-
कीर्तिमायुः ॥ ५४ ॥ अन्ये परं वाग्विभवं मुनींद्राः परां श्रियं भक्तिभरेणचान्ये ॥ नमामि
देवीं नवचंद्रमौलिं मातंगिनींचंद्रकलावतंसां ॥ ५५ ॥ आम्नायवाग्भिः प्रतिपादितार्थं प्र-
बोधयंतीं शुकमादरेण ॥ विनम्रदेवासुरमौलिरत्नैर्नीराजितंते चरणारविंदम् ॥ ५६ ॥ भजं-
ति ये देवि महीपतीनां व्रजंति ते संपदमादरेण ॥ मातंगलीलागमने भवत्याःसिंजानमंजीर-
मिषाद्भजंते ॥ ५६ ॥ मातस्त्वदीयचरणारविंदमकृत्रिमाणां वचसां निगुंफाः ॥ पदात्पदं-
सिंजितनूपुराभ्यां कृतार्थयंतीं पदवीं पदाभ्याम् ॥ ५७ ॥ आस्फालयतीं कलवल्लकींतां
मातंगिनी मद्धृदयंधिनोतु ॥ नीलांशुकाबद्धनितंबबिंबांतालीदलेनार्पितकर्णभूषाम् ॥ ५८ ॥
माध्वीमदाघूर्णितनेत्रपद्मां घनस्तनीं शंभुवधूं नमामि ॥ तडिल्लताकांतमनर्घ्यभूषं चिरेण ल-
क्ष्यं नवलोमराज्या ॥ ५८॥ स्मरामि भक्त्याजगतामधीशं वलित्रयांकंतव मध्यबिंबम् ॥ नी
लोत्पलानांश्रियमावहंतींकांत्या कटाक्षैः कमलाकराणाम् ॥ ६० ॥ कदम्बमालांचितकेश-
पाशांमातंगकन्यां हृदिभावयामः॥ध्यायेयमारक्तकपोलकांतंविम्बाधरन्यस्तललामरम्यम्॥६१॥
आलोलनीलालकमायताक्षं मन्दस्मितं ते वदनं महेशि । स्तुत्यानयाशङ्करधर्मपत्नीं मात-
ङ्गिनीं वागधिदेवतां ताम् ॥ ६२ ॥ स्तुवन्ति ये भक्तियुता मनुष्याः परां श्रियं नित्यमु-
पाश्रयन्ति ॥ ६३ ॥ इति श्रीशारदातिलके द्वादशः पटलः ॥ १२ ॥ अथ

---

चराणि प्रत्येकं तर्पयेत्। तद्यथा । आदौमूलम् ४ प्रथमाक्षरम् ४ पुनर्मूलम्४ एवमष्टाविंशति-
वर्णतर्पणानि अष्टाविंशतिवारं मूलतर्पणानि च अंते चतुर्वारं मूलेन एवं द्विशती अष्टाविंशत्यधिका
तर्पणानां ततो मध्यमप्रकारवदेवद्विशती षोडशोत्तरा । एवं चतुश्चत्वारिंशदधिकं चतुःशतं तर्प्य-

थअवक्ष्ये गणपतेर्मंत्रान्सर्वार्थसिद्धिदान्। यांल्लब्ध्वा मानवा नित्यं साधयंति मनोरथान्॥१॥ पंचांतकं शशिधरं बीजंगणपतेर्विदुः। गणकः स्यान्मुनिश्छंदो निवृद्विघ्नोस्य देवता॥२॥ षड्दीर्घभाजाबी जेन कुर्यादंगक्रियांमनोः। सिंदूराभं त्रिनेत्रं पृथुतरजतरं हस्तपद्मैर्दधानं दंतं पाशांकुशेष्टान्गुरुकर विलसद्बीजपूराभिरामं॥३॥बालेंदुद्योतिमौलिं करयतिवदनंदान पूरार्द्रगंड भोगींद्राबद्धभूषं भजतगणपतिं रक्तवस्त्रांगरागं॥४॥ वेदलक्षं जपेन्मंत्रं दशांशं जुहुयात्ततः। मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः॥५॥नारिकेरैस्तिलैशुद्धैः सुपक्वैः कदलीफलैः। अष्टद्रव्याणि विघ्नस्य कथितानि मनीषिभिः॥६॥ तीव्रादिशक्तिभिर्युक्ते पीठे विघ्नेश्वरं यजेत्। तीव्राख्या ज्वालिनी नंदा भोगदा कामरूपिणी॥७॥ उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी। सर्वादिशक्ति कमलासनाय हृदयावधिः॥८॥ पीठमंत्रोयमेतेन प्रदद्यादासनंविभोः। मूलेन मूर्त्तिसंकल्प्य तस्यां विघ्नेश्वरं यजेत्। कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान्॥९॥ गणाधिपं गणेशानं तृतीयं गणनायकं। गणक्रीडं पीतगौर रक्तनीलरुचः क्रमात्॥१०॥ सर्वान्नागेंद्रभूषाद्यान्भक्ष्यलक्षितपुष्करान्। यथा पूर्वं ततोभ्यर्च्येत्केमरेष्वंगदेवताः॥११॥ पत्रमध्येषु विधिवद्वक्रतुंडादिकान्यजेत्। वक्रतुंडमेकदंष्ट्रं महोदरगजाननौ॥१२॥ लंबोदराख्यं विकटं विघ्नराजमनंतरं। धूम्रवर्णं दलाग्रेषु ब्राह्म्याद्याः पूजयेत्ततः॥१३॥ लोकपालांस्तदस्त्राणि देवमित्थं समर्चयेत्। सिद्धमंत्रः प्रकुर्वीत प्रयोगान्कल्पचोदितान्॥१४॥ तर्पयेत्सलिलैः शुद्धैर्दिनशो गणनायकं। चतुश्चत्वारिंशदाद्यं चतुः शतमतंद्रितः॥१५॥ प्राप्नुयात् मंडलादर्वागभीष्टमधिकं नरः। नारिकेलैःकृतोहोमश्चतुर्थ्यां श्रीप्रदो भवेत्॥१६॥ शुक्लपक्षप्रतिपदमारभ्यदिनशः सुधीः चतुर्थ्यंतं नारिकेल सक्तुलाजातिलैः क्रमात्॥१७॥ चतुः शतं प्रजुहुयाद्वश्याः स्युःसर्वजंतवः सतिलैस्तंडुलैर्होमो लक्ष्मीवश्यप्रदो भवेत्। लाजैस्त्रिमधुरोपेतैर्होमः कन्यां प्रयच्छति॥१८॥ अनेन विधिना कन्या वरमाप्नोति वांछितं। आज्याक्तहविषा होमः साधयेदीप्सितं नृणां। दध्नाविलोलिलैर्लोणैर्होमो निशि चतुर्दिनं। संवादं कुरुते तद्वद्वश्यं वितनुते सदा। श्वेतार्कभवमूलेन रक्तचंदनदारुणा॥ इभभग्नेन निंबेन दंति दंतेन वा कृतं। विघ्नेश्वरं समभ्यर्च्य शीतां शुग्रहणे जपेत्॥ स्पृष्ट्वा मंत्री निराहारस्तंशिखायां समुद्वहन्। युद्धेषुव्यवहारादौविजयश्रियमाप्नुयात्॥ मंत्रेणानेनसंजप्तारोचनामदसंयुता। तिलकक्रिययासर्वान्तिशंनयतिमानवान्। अनुलोमविलोमस्थर्बाजेनाम समालिखेत्॥ नवनीते समभ्यर्च्य स्पृष्ट्वा प्राणमनुञ्जपेत्। अष्टोत्तरशतं भूयो मूलमंत्रं प्रजप्यतत्॥ भक्षयेन्मौनमास्थाय यामिन्यां सप्तवासरं॥ सवश्यो जायते शीघ्रं साधकस्य न संशयः॥ श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं वदेत्।

---

णानि भवन्ति। तदुक्तं गणेश्वरविमर्शिन्यां। सर्वाभीष्टप्रदं वक्ष्ये चतुराहुतितर्पणम्। एकान्ते विजने रम्ये सर्वोपद्रववर्जिते। कृतस्नानादिको मन्त्री पूर्ववन्न्याससंयुतः। तडागमध्ये संचिंत्य पुष्पितं नलिनीवनं॥तस्य मध्ये महापद्मं तरुणादित्यसंनिभं समुन्नतं सुगन्धाढ्यं रमणीयं मनोहरं

ङें तं गण पतिं पश्चाद्वराते वरदं पठेत्। उक्त्वा सर्वजनमेतं वशमानय तद्वयं ॥ अष्टाविंशत्यक्षरोयंताराद्योमनुरीरितः। गणकः स्यादृषिश्छंदो गायत्री निचृदन्विता ॥ महागणपतिः प्रोक्तो देवता देववंदिता। षड्बीजस्थस्वबीजेन दीर्घभाजा प्रकल्पयेत् ॥ षडंगानि मनोरस्य यथाविधि विधानवित् ॥ नवरत्नमयं द्वीपं स्मरेदिक्षुरसां बुधौ। तद्वीचिधौतपर्यंतं मंदमारुतसेवितं। मंदारपारिजातादि कल्पवृक्षलताकुलं ॥ उद्भूतरत्नच्छाभिररुणीकृतभूतलं। उद्यद्दिनकरेंदुभ्यामुद्भासित दिगं तरं ॥ तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत्। ऋतुभिः सेवितं षड्भि रनिशं प्रीतिवर्द्धनैः। तस्याधस्तान्महापीठे रचिते मातृकांबुजे ॥ षट्कोणांतत्रिकोणस्थं महागणपतिंस्मरेत्॥हस्तीन्द्राननमिंदुचूडमरुणच्छायंत्रिनेत्रं रसादाश्लिष्टं प्रियया सपद्मकरया स्वांकस्थया संततं। बीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशान्हस्तैर्वहंतं भजे ॥ गंडपालीगलद्दानपूरलालसमानसान्। द्विरेफान्कर्णतालाभ्यां वारयंतं मुहुर्मुहुः। कराग्रधृतमाणिक्य कुंभवक्त्रविनिः सृतैः। रत्नवर्षैः प्रीणयंतं साधकान्मदविह्वलं ॥ माणिक्यमुकुटोपेतं रत्नाभरणभूषितं। ध्यायन्मंत्रं जपेन्मंत्री चतुर्लक्षं समाहितः। चतुः सहस्रसंयुक्तं चत्वारिंशत्सहस्रकं॥ दशांशं जुहुयाद्द्रव्यैरष्टभिर्मोदकादिभिः। तर्पयेद्दिनशो नित्यं प्रागुक्ते नैव वर्त्मना ॥ प्रागुक्ते पूजयेत्पीठे विधिना गणनायकं। त्रिकोणबाह्ये पूर्वादि चतुर्दिक्षु समर्चयेत् ॥ अग्रस्थ बिल्ववृक्षाधः श्रियं श्रिपतिमर्चयेत्। पद्मयुग्मधरापद्मा शंखचक्रधरो हरिः। दक्षिणे वटवृक्षाधो गौरींगौरीपतिं यजेत् ॥ पाशांकुशधरागौरी टंकशूलधरो हरः। पश्चिमे पिप्पलस्याधो रतिंरतिपतिं यजेत्। रतिरुत्पलहस्ताढ्याकोदंडास्त्रधरः स्मरः। सौम्ये प्रियंगुवृक्षाधो महींयोत्रिणमर्चयेत्॥ शुकव्रीह्यग्रहस्ता भूर्गदाचक्रधरःपतिः। देवाग्रे पूजयेल्लक्ष्मी सहितं गोपनायकं ॥ षट्सुको णेषु संपूज्याआमोदाद्याः प्रियान्विताः। आमोदं सिद्धिसहितंग्नकोणे समर्चयेत्। समृद्ध्यायुतमभ्यर्च्य प्रमोदं वह्निकोणतः। समुखं कांतिसंयुक्तमीशकोणे समर्चयेत्॥दुर्मुखं मदनावत्यायजेद्वरुणकोणके। विघ्नं मदद्रवायुक्तं कोणनैशाचरे यजेत्॥वायव्ये विघ्नहर्त्तारं द्राविण्यासहितं यजेत्।

---

सद्योविकसितं ध्यायेन्मन्त्री पूर्वोक्तमन्त्रवित्। शुद्धं रजतसोपानपंक्त्यातरविमण्डलात्। विनिर्गत्यावरुह्याथ कर्णिकामध्यसंस्थितम्। इति ध्यात्वा सावरणं महागणपतिं सुधीः। प्रवरैर्गन्धकुसुमैः समभ्यर्च्याथ पूर्ववत्। निधाय पुष्करमुखं साधकेन्द्रस्य मूर्द्धनि। वर्षन्तं रत्नधाराभिर्ध्यात्वा देवस्य मूर्द्धनि। चन्द्रचन्दनकाश्मीरकस्तूरीलोलितैर्जलैः। प्रथमं मूलमन्त्रेण चतुर्वारं प्रतर्प्य चा मिथुनानि च षड्विप्रान् शंखपद्मनिधी अपि। स्वस्वबीजादिकैर्मन्त्रो स्वाहान्तैश्च चतुस्ततः। मूलमंत्रं चतुर्वारं पूर्वकं तर्प्पयेत्पृथक्। संभूयाष्टोत्तरशतं कनिष्टः स्यादयं क्रमः।अथवा मूलमन्त्राद्यैर्व्यस्तैरेतैश्च पूर्ववत्। मंत्रैर्वातर्प्य येद्विद्वानर्चनोक्तप्रकारतः।मध्यक्रमोयं संभूय द्विशतं षोडशोत्तरम्।अथवा मूलमंत्रेण चतुर्वारं प्रतर्प्य च। पूर्वमंत्राद्यैरेभिः स्वाहान्तैश्च चतुश्चतुः। मूलमंत्रं चतुर्वारपूर्वकं सम्प्रतर्प्य च। मिथुनादींस्ततः पश्चात्पूर्ववत्सम्प्रतर्पयेत्। भवेत्संभूय स चतुश्चत्वारिंशच्चतुःशतम्। एवंज्येष्ठक्रमः

पाशांकुशाभयाभीष्टधारिणोरुणविग्रहाः।गंडभित्तिमलद्दानपूरधौतमुखांबुजा।।विघ्नास्तत्प्रमदाः सर्वा तदाघूर्णितलोचनाः। एकहस्तधृतां भोजा इतरा लिंगितप्रियाः। षट्कोणपार्श्वयोः पुज्यौ शंखपद्मनिधी क्रमात् ॥ निजप्रियाभ्यां सहितौ पूर्वोदीरितलक्षणौ। केसरेष्वंगपूजा याद्दराह्मयाद्याः पत्रमध्यगाः। बहिर्लोकेश्वराःपूज्या वज्रादीनि ततःपरं।।इत्थं जयादिभिः सिद्धः प्रयोगान्स्वमनीषितान्। साधये दष्टभिर्द्रव्यैरन्यैर्वाकल्पचोदितैः। पद्महोमेन भूपालीस्तत्पलीरुत्पलैः शुभैः। मंत्रिणः कुमुदैः फुल्लैर्विप्रान् पिप्पलसंभवैः। समिद्वरैर्नरपतीनुदुंबरसमुद्भवैः। प्लक्षैर्वैश्यान्वटोद्भूतैः शूद्रान्मंत्री वशं नयेत् ॥ मधुना स्वर्णलाभः स्याद्गोदुग्धेन लभेत

---

प्रोक्तो बुधैरागमपारगैः। एवं सन्तोष्य तत्पश्चात्पूर्ववत्सोपचारकैः।सर्वाभीष्टं च सम्प्रार्थ्य प्रणम्योद्वासयेत्सुधीः। य एवं तर्पयेन्नित्यं मण्डलात्सफलं लभेत्। अनावृष्ट्या भये घोरे राजचौराद्युपद्रवे। महाज्वरे विवादे च महादारिद्र्यसंकटे। विवाहादिषु कार्येषु सर्वेषु च विशेषतः। एवं वै तर्पणं कुर्यान्मानवेन्द्रः प्रसन्नधीः।महागणेश्वरः प्रीतो महासंपत्करी भवेदिति ।अन्ये तु लक्ष्मीशब्देन शक्तिमत्प्राधान्यमिति वदन्ति । मंत्रोद्दे शक्रमो विवक्षितः तन्मते प्रथमं विंशतिवारं ततोष्टाविंशतिमंत्राक्षरैः तावत्कृत्वो मूलेन एतदन्तं चतुर्वारं मूलेन ततश्चतुर्विंशतिदेवतातर्प्पणानि तावत्कृत्वो मूलतर्प्पणानि तदन्ते मूलेन चतुर्वारम्। एवं चतुःशतचतुश्चत्वारिंशत्तर्प्पणानि भवन्ति। तदुक्तं रहस्यपटले मूलनारायणीये। विंशत्संख्यं तर्पयित्वा तु पूर्वं मांत्रैर्वर्णैर्वेदवारं द्विठान्तैः । मध्येमध्ये तर्पयेद्विघ्नराजं लक्ष्म्यादीनां तर्प्पणं चैवमेवेति। अन्यत्रापि । प्रथमं विंशतिवारं मिथुनानां विघ्नषट्शक्तीनाम्। प्रत्येकं निधिशक्त्योश्चतुरावृत्या च मूलेन मूलात्मकवर्णानामेवंसंतर्प्पिते च निश्चितधिया। स चतुश्चत्वारिंशच्चतुःशतं संख्यया भवेदेवमिति । ये तु महागणपतिशब्दं संबुध्यन्तमाहुः त एकोनत्रिंशदक्षरतर्पणं तावत्कृत्वो मूलेन षड्विंशतिमिथुनतर्पणं तावत्कृत्वो मूलोन्ते मूलेन चतुर्वारमितिसंख्यापूर्त्तिमाहुः ये तु गणपतिपदं संबुध्यन्तमाहुः ते मूल ४ महागण: ४ मू ४ पुष्टिं ४ ततो क्षरतर्प्पणां तावन्मूलेन पूर्ववन्मिथुनादितर्प्पणमंते मूलेनेति संख्यापूर्त्तिमाहुःत्रिंशदक्षरे तु अक्षरमूलतर्प्पणानि अन्ते ४ मूले ४ मूलेनेति २४४ ततो मिथुनाष्टकेनान्तेमूलेनेति ६८ तत आमोदादीनामन्ते मूलेनेति १३२ एवं संख्यापूर्त्तिर्ज्ञेया ।ये तु श्रीमहागणपतिशब्दं संबुध्यन्तं वशंशब्दस्य च द्वित्वमाहुः ते द्वात्रिंशदशरं तर्पणं तावत्कृत्वो मूलेन बीजपूराद्येकादशभिः ८८ मिथुनचतुष्टयषड्विघ्ननिधिद्वयेन कनिष्ठोक्तप्रकारेण तावत्कृत्वो मूलेनान्ते च चतुर्वारं मूलेनेत्याहुः । बीजापूरादिमंत्रास्तु बीजापूरंगदाचेक्षुकार्मुकं च त्रिशूलयुक्। चक्राब्जपाशोत्पलानि कलमाग्र्यं विषाणयुक्। रत्नाम्बरत्नकलशो ह्रदन्ताः प्रणवादिकाः गंबीजाः पद्मश्रीबीजाद्यादिकाः पुनः षड्बीजा द्योन्तिमश्चैते वक्ष्यमाणपदादिकाः यथाक्रमं महाविद्यायुधानां मनवः स्मृताः मंत्रफलं बीजपूरादयः । पञ्चविलोमेनगंबीजाद्यानि गंग्लौं ह्रीं श्रीबीजानि आदौ येषां तथा पुनरत्यादयः पञ्चक्रमेण श्रीबीजाद्यः श्रीमित्यादि पञ्चबीजादिकाः अन्तिमोरत्नकलशः प्रणवादिषड्बीजाद्यइत्यर्थः। शक्तिसप्राणत्रिगुणः कालचक्रलयक्षपी च। व्यासिरक्तिभूस्वरूपं विद्याचैत्नोक्यमात्मने युक्तमिति।पञ्च-

गाः आज्यहोमेन हर्तांश्रियमाप्नोति मानवः। दध्ना सर्वसमृद्धिः स्यादन्नैरन्नपतिर्भवेत्। वृष्टिकामः प्रजुहुयाद्धेतसानां समिद्वरैः। कुसुंभकुसुमैर्हुत्वा वासांसि लभते चिरात् ॥ प्रत्येकमादौ मूलेन चतुर्वारं प्रतर्पयेत्। श्रीशक्तिरतिभूलक्ष्मीः स्वबीजाद्या प्रियान्विताः। आमोदादीन् स्वबीजाद्यान् शक्तियुक्तांश्चतर्पयेत् ॥ चतुश्चतुःपृथक्मंत्री शंखपद्मनिधी तथा। नामादिबीजसहितौ तर्पयेत् स्वप्रियान्वितौ तर्पणेनामुनास्वीयमिष्टमाप्नोति मंडलात् ॥ स्मृतिस्थं मांसमौबिंदुयुक्तं भूबीजमीरितं। बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं दिक्षुलक्ष्मीं मायाकंदर्पभूमीस्तदनुरसपुटेष्वालिखेद्बीजषट्कं। तत्संधिष्वंगमंत्रान्वसुदलकमले मूलमंत्रस्य वर्णान् शिष्टान्पत्रेषु विद्वान्विलिखतुगुणशश्चांत्यमंत्येपलाशे ॥ आवीतं लिपिभिः क्रमोत्क्रमवशान्पाशांकुशाभ्यामपि क्ष्मागेहद्वितयेन वेष्टितमिदं यंत्रं गणाधीशितुः। लाक्षाकुंकुमरोचनामृगमदैर्भूर्जैर्वरेहेम्नि वा संलिख्याभिवहल्लभेत सकलैः संप्रार्थनीयां श्रियं। उक्तं महागणपतेर्विधानं सुरपूजितं। सर्वसिद्धिकरं पुंसां समस्त पुरुषार्थदं। मायाविरिपदद्वंद्वं ततो गणपतिं वदेत् खड्गीशपावकौ पश्चाद्वरदांते वदेत्पुनः सर्वलोकं मे पदांते वशमानय ठद्वयं। षड्विंशत्यक्षरोमंत्रो भजतां सुरपादपः। गणकः स्यादृषिश्छंदो गायत्रं देवतामनोः। विरिविघ्नेश्वरः प्रोक्तो भजतां सुरपादपः ॥ अंतः करणवेदेषु भूतपंचविलोचनैः ॥ एवं विभक्तैर्मंत्राणैर्मायाद्यैरंगक-

---

पादाचार्यास्त्वन्यथा चतुरावृत्तितर्पणमाहुः। तद्यथा। दशधाभिन्नेन मूलमंत्रेण बीजपूराद्येकादशभिर्महागणपतिक्षिप्रप्रसादनतदुक्तविघ्नाद्यष्टनामयुतेन। गणपतयइत्यस्मात्पूर्वं मूलमंत्रेण चतुर्विंशतिदेवताश्च एवं पञ्चपञ्चाशद्देवतातर्पणानि तावन्ति मूलेन अन्ते चतुर्वारं मूलेनेति चतुःशतं चतुश्चत्वारिंशत्। प्रयोगसारेतु। अष्टाविंशतिरक्षराणि दशभिर्युक्तं चतुर्भिः पदैः पश्चात्यच्च रमादिकांश्च गणपान् षट्द्वौ निधी तर्पयेत्। प्रत्येकं मनुना मुना च चतुरावृत्त्या विभोर्मस्तके ध्यात्वा रत्नमयं महागणपतिंभक्तप्रसन्नं सुधीरिति। भूबीजमुद्धरति। स्मृतीति। मांसं लकारः स्मृतिस्थं गकारस्थं औ रूपं बिंदुश्चएतद्युक्तः। यंत्रमाह। बीजमिति। वसुदलकमलेऽष्टदलकमले षट्कोणमध्ये स्फुरदनलपुरे लसत्त्रिकोणे तारगं प्रणवस्थं बीजं गणपतिबीजं गमितिलिखेदित्यन्वयः दिक्षु त्रिकोणाद्बहिः अग्न्यादितिज्ञेयम्। रसपुटेषु षट्सु कोणेषु बीजषट्कं मंत्राद्यं अग्न्यादि तस्य षट्कोणस्य सन्धिषु अंगमंत्रान्महागणपतेः षडंगमंत्रान्पत्रेषु मंत्रस्य द्वाविंशतिवर्णान् शिष्टान् गुणशस्त्रिशः अन्त्यं वर्णमष्टमे दल एकमेव लिखेत्। ततः क्रमोत्क्रमलिपिभिर्वेष्टयेत्ततः पाशांकुशाभ्यां वेष्टयेत्। पद्मपादाचार्यैस्तु। अष्टपदान्यष्टपत्रे विलिख्य तद्बहिर्वृत्तत्रये मातृकापाशांकुशार्णान्विलिख्य वह्निभूपुरद्वये पाशमायाबीजे लिखेदित्युक्तम्। लाक्षालक्तकरसः। कुंकुमं काश्मीरजम्। रोचना गोरोचना। मृगमदः कस्तूरी। विरिगणपतिमंत्रमाह। मायेति। खड्गीशो वः पावको रेफः ह्रूं खा बीजं स्वाहा शक्तिः के चन वरेत्यादिपञ्चाक्षराणि लोकमिति च हित्वा एकोनविंशत्यक्षरमाहुः। अस्य निवृच्छन्दः अन्यत्पूर्ववत्। के चन लोकपदे जनपदं पठन्ति। अन्ये विरीत्यादौ महागणपतिबीजषट्कं प्रयोजयन्ति। षडंगमाह। न्तरिति। अन्तःकरणानि चत्वारि वेदाश्चत्वार इषवः पञ्चभू-

ल्पना । महागणपतेः प्रोक्ते स्थाने मंत्री विचिंतयेत् ॥ सिंदूराभनिभाननं त्रिनयनं हस्तेषु पाशांकुशौ बिभ्राणं मधुमत्कपालमनिशं साद्धेंदुमौलिं भजेत् । पुष्ट्याश्लिष्टतनुध्वजाग्रकरया पद्मोल्लसद्धस्तया तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करं ॥ चतुर्लक्षं जपेन्मंत्रं तद्दशांशं हुतक्रिया । प्राक्प्रोक्तैरष्टभिद्रव्यैस्त्रिमध्वक्तैः समीरिता ॥ पूर्वोक्ते पूजयेत्पीठे तीव्रादिनवशक्तिके । मूलेन मूर्तिं संकल्प्य तत्रावाह्यार्चयेद्विभुं ॥ मिथुनावृत्तिराद्यास्यादामोदाद्यैर्दिगंघरैः । द्वितीयांगैस्तृतीयास्याच्चतुर्थी मातृभिः स्मृता ॥ पंचमी लोकपालैः स्याषष्ठीवज्रादिभिः स्मृता ॥ इतिसिद्धमनुर्मंत्री प्रफुल्लैः सरसीरुहैः । जुहुयाद्दशगाः सर्वे तंडुलैस्तिलमिश्रितैः हुत्वा श्रियमवाप्नोति मोदकैरायलोलितैः॥हुत्वा विजयमाप्नोति पार्थिवोयुद्धभूमिषु ॥ मधुत्रयेण हवनं वशं नयति पार्थिवान् ॥ भक्ष्यभोज्यादिकं सर्वं हुत्वाभीष्टानिसाधयेत् ॥ श-

---

तानि पञ्च लोचने द्वे द्वितीयस्य षट्पदैः षडंगम् । तृतीयस्य महागणपतिमंत्रवत् । पुष्करं । करिहस्ताग्रं ध्याने तु दक्षे पाशः वामे अंकुशः अधो दक्षे मधु मत्कापालं अधो वामस्त्रिया योन्याहित। तदुक्तिपुरपि चतुर्भुजा तत्र दक्षवामयोः पद्मं पद्मोल्लसद्धस्तयेत्यत्र पद्माभ्यां उल्लसन्तौ हस्तौ यस्याः सा तयेति विग्रहः अधो दक्षिणेन प्रियस्याश्लेषः अधो वामेन तध्वजाग्रस्पृगिति । सम्प्रदायविदः । कश्चित्तु पुष्टि द्विहस्तामेवाह । एकहस्ते पद्मं द्वितीयहस्तोध्वजाग्रस्पृगिति तन्मते आश्लेषो नाम निकटत्वं न तु हस्तेनालिंगनमिति । द्वितीयमंत्रेपि इद मेवध्यानम् । तृतीयमंत्रे तु बीजपूरगदे,शरासनमरिं मालां च दक्षैः करैर्वामैर्बाणसपाशकोत्पलरदाम् रत्नाढ्यकुंभं दधत् सिन्दूरारुणविग्रहस्त्रिनयनो योन्यस्तशुण्डो गणः सल्लिंगाहितपाणिसंबुजकरां पुष्टिं वहन् वोऽवतात्। पूजादिकं त्रयाणां समानम् । पूर्वोक्तइति । महागणपतिपूजायंत्रे । तीव्रादिनवशक्तिक इत्यनेन पीठमंत्रस्य मायादित्व मुक्तम् । मधुरत्रयेण पयोमधुघृतेन । भक्ष्यभोज्यादिकमिति । भक्ष्यं लड्डुकादि भोज्यमन्नादि । आदिशब्देन लेह्यचोष्यादिकं गृह्यते तत्र लेह्यं रसादि । तल्लक्षणं सूपशास्त्रे अर्द्धाढकं सुदृढपर्युषितस्य दध्नः खंडस्य षोडश पलानि,शशिप्रभस्य । सर्पिः पलं मधुपलं मरिचं द्विकर्षं शुण्ठीपलार्द्धमपि चार्द्धपलं चतुर्णां स्निग्धे पटे ललनया मृदुपाणिघृष्टा कर्पूरपूरसुरभीघृतभांडसंस्था । एषा वृकोदरकृता सरसारसाला या स्वादिता भगवता मधुसूदनेनेति । चतुर्णां त्वगेलामवकेसराणां अर्द्धपलमिति मिलित्वा । तन्त्रान्तरोक्तमस्य यंत्रं लिख्यते । वक्ष्ये महासिद्धिकरं हि यंत्रं भूर्जस्य पत्रे पशुरोचनाक्तैः दूर्वांकुरैर्भूगृहयुग्मशक्तौ संलिख्य साध्यं विरिसंपुटं त्र। कोणेषु मंत्रं श्रुतिशो वशिष्टं तेनापि नाम्ना प्यथ वेष्टयित्वा । संलिख्य यंत्रं च गणाधिराजमावाह्य चाभ्यर्च्य च गन्धपुष्पैः संजप्य तद्धारणतस्त्वनित्यं वशं प्रयात्यस्य जगत्समस्तमिति । प्रथममंत्रे श्रुतिश इति त्रिशः अंत्यकोणे द्वयम् । द्वितीयमंत्रे श्रुतिः कर्णस्तेन द्विश इत्यर्थः । तदुक्तं । वकारेफावपि लोचनाद्यौ पुनस्तथोद्धृत्य गणात्पतीति सर्वं समुच्चार्य च मे वशः स्यात् । मकारमायुक्तमतो नयेति शब्दाच्छिरः स्यादिति । तृतीयमंत्रे श्रुतिशश्चतुर्द्धा अत्र मध्यगतशक्तिस्तु मन्त्रबाह्या अन्त्ये दले एकमक्षरं लिखेत् । शक्तिगणपतिमन्त्रमाह । शक्तीति । निजं बीजं गं डेंतमित्यस्य पश्चा-

क्षिरुद्धनिजंबीजं महागणपतिं वदेत्॥ इतमग्निवधूः प्रोक्तो मन्त्रो यंद्वादशाक्षरः॥ गणकः स्यादृषिश्छन्दो गायत्रीनिवृदादिका॥ उदिता देवता तन्त्र नाम्ना शक्तिगणाधिपः॥ व्यस्तैः समस्तैर्मन्त्रस्य पदैरंगानि कल्पयेत् ॥ मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं हस्तैः स्वैर्यैर्दधतमरविंदांकुशौ रत्नकुम्भं। अंकस्थायाः सरसिजरुचः स्वध्वजालंविपाणेर्दव्यायोनाविनिहतकरं रत्नमौलिं भजामः॥ लक्षमेकं जपेन्मन्त्रं मधूकैस्तद्दशांशतः॥ जुहुयादर्चिते वन्हौ दिनशो देवमर्चयेत्॥ प्राक्प्रोक्ते पूजयेत्पाठे प्रागुक्तेनैव वर्त्मना॥ हुत्वेक्षुखण्डैर्मतिमान् राज्यश्रियमवाप्नुयात्॥ नालिकेरफलैस्तद्वद्रंभापक्वफलैस्ततः। वशयत्यखिलं लोकं पृथुकैः शर्करान्वितैः। वशं नयति राजानं सक्तुभिर्ब्राह्मणान् शुनैः। घृतहोमेन धनवान् जायते नात्र संशयः। शक्त्यरुद्धनिजंबीजं वशमानयठद्वयम्॥ ताराद्यो मनुराख्यातो रुद्रसंख्याक्षरान्वितैः। ऋष्याद्याः पूर्वमुक्ताः स्युरंगं मयन्त्रादैर्भवेत्॥ तृकेनाद्यौलिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यामथांतरम्॥ समस्तेनास्त्रमाख्यातं अंगक्लृप्तिरियं मता॥ हस्तैर्विभूतमिक्षुदण्डवरदौ पाशांकुशौ पुष्करस्पृष्टस्वप्रमदात्वरांगमनयाश्लिष्टं ध्वजाग्रस्पृशा॥ श्यामांग्याविधृताब्जयात्रिनयनं चन्द्रार्द्धचूडं जपारक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं विभुम्॥ लक्षत्रयं जपेन्मन्त्रमिक्षुखण्डैर्दशांशतः॥ अपूपैराज्ययुक्तैर्वा जुहुयान्मन्त्रसिद्धये॥ स्वगुरुं धनधान्याद्यैः प्रीणयेत्प्रीतमानसः। पूजापूर्ववदादिष्टा ततः काम्यानि साधयेत्॥ हुत्वापूपैस्त्रिमध्वक्तैर्वशयेद्भुवि पार्थिवान्॥ चतुर्थ्यां नालिकेरेण महतीं श्रियमश्नुते॥ लवणैर्मधुसंयुक्तैर्वशयेद्वनिताजनम्॥ संवर्त्तको नेत्रयुतः पार्श्वो वह्न्यासनस्थितः। प्रसादनायहत्मन्त्रः स्वबीजाद्यो दशाक्षरः। गणको मुनिरस्य स्याद्विराट्छन्द उदाहृतम्॥ क्षिप्रप्रसादनो विघ्नो देवतास्य समीरिता॥ दीर्घयुक्तेन बीजेन षडंगानि प्रकल्पयेत्॥ पाशांकुशौ कल्पलतां विषाणं दधत्स्वशुण्डाहितबीजपूरः। रक्तस्त्रिनेत्रस्तरुणेंदुमौलिर्हारोज्ज्वलोद्धस्तिमुखोऽवताद्वः। लक्षं जपेज्जयस्यांते जुहुयाद्युतं तिलैः। मधुरत्रितये द्रव्यैरथवाष्टाभिरीरितैः॥ एका-

---

त्तनेन सम्बन्धः गं बीजं स्वाहा शक्तिः। यंचम व्यस्तैरिति। मंत्रस्य पञ्चभिः पदैः पंचाङ्गानि सर्वेण षष्ठम्। ध्याने तु ऊर्ध्वयोर्द्दक्षवामयोराद्ये अधो दक्षे रत्नकुम्भः अधो वामो देवीयोनिस्थः शुंडादण्डस्तु रत्नकुम्भोपरीतिमभ्यादयः सरसिजेन दक्षहस्तस्थितेन रुक् यस्याः सा तथा। तद्वामो ध्वजाग्रस्पृक्। प्रागुक्तेनेत्यव्यवहितेन। मन्त्रान्तरमाह शक्त्येति। रुद्रेत्येकादशगं बीजं स्वाहा शक्तिः। पूर्वमित्यव्यवहितम्। पदाद्येवाह। एकैतेनेति। ध्याने तु वामाधस्ताद्वामोर्ध्वपर्यन्तं देवीध्यानं विघ्नगणपतिध्यानोक्तं ज्ञेयम्। पूर्ववदिति विघ्नगणपतिवदित्यर्थः। क्षिप्रप्रसादमंत्रमाह संवर्त्तः क्षः नेत्रमिकारस्तद्युतः। पार्श्वः पकारो वह्न्यासने रेफासनः। स्वबीजाद्योगमिति बीजाद्यः श्रीबीजाद्य इति केचित्। गं बीजं आयेति शक्तिः। दीर्घयुक्तेन बीजेनेति। आदिबीजेन। विषाणं दन्तम्। आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्त्ये वामोर्ध्वादिवामाधस्तनं यावत्। इत्येके। समधुत्रितयैः। पयोमधुघृतसहितैरिति। लविशेषणम्। तदुक्तमाचार्यैः। अथतिलैरयुतत्रिमधुरसिक्तैर्जुहुयादिति। मधुरत्रितयैरितिपाठे मधुरस्य त्रितयं येष्विति बहुव्रीहिणा नेयम्। लोष्टशब्देन अ-

क्षरोद्दितेपीठे वक्ष्यमाणेन वर्त्मना ॥ पूजयेधपुष्पाद्यैर्धूपदीपैर्गजाननम् ॥ अंगानि पूर्वमभ्यर्च्य विघ्नानष्टौ यजेत्ततः। विघ्नंविनायकं शूरं वीरं वरदसंज्ञकम् ॥ इभवक्त्रं चैकदंतं लंबोदरमनंतरम् ॥ पत्राग्रेष्वर्चयेत्पश्चाद्ब्राह्म्याद्यस्तदनंतरम् ॥ लोकपालास्तदस्त्राणिविघ्नपूजा समीरिता ॥ आज्यान्नैर्जुहुयान्नित्यमन्नवान्वत्सराद्भवेत् ॥ पायसान्नेनमहतीं श्रियमाप्नोति मानवः। आज्यहोमेन वशयेत्प्राणिनः सकलान्सुधीः॥नारिकेलफलंपक्वं कोष्ठचर्मसमन्वितम् ॥ जुहुयात्प्रत्यहं मन्त्री मण्डलात्सिद्धिमाप्नुयात् ॥ जुहुयादष्टभिर्द्रव्यैर्मधुरत्रयसंयुतैः।वशयेत्पार्थिवान्सर्वान् तत्पलीर्विधिनामुना ॥ दिनादिषु चतुश्चत्वारिंशद्वारैः शुभोदकैः। तर्पयेद्विघ्नराजस्य मस्तकेश्रीप्रसिद्धये ॥ पाशांकुशौ कल्पलतांस्वदंतं करैर्वहंतं कनकाद्रिकांतम् ॥ सोपानपंक्त्या दिननाथबिंबादायांतमंभोजगतं विचिंत्य।प्रागुक्तमन्त्रसंप्रोक्तान्प्रयोगान्मनुनामुनांतरस्मिन्नथवा प्रोक्तान् कुर्यान्मन्त्री विधानवित् ॥ पंचांतको विंदुयुतो वामकर्णविभूषितः तारादिर्हृदयांतोयं हेरंबमनुरीरितः।चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः। षड्दीर्घभाजाबीजेन षडंगानि समाचरेत्। मुक्ताकांचननीलकुन्दघुसृणछायैस्त्रिनेत्रान्वितै र्नागास्यै र्हरिवाहनं शशि-

---

न्तर्वर्त्तिनारिकेलोपरिभागस्तदुपरिभागस्त्वग्लक्षणश्चर्मशब्दवाच्यः अष्टधानारिकेलमित्यस्यापवादः। विधिना मुनेत्यष्टद्रव्यहोमेन। शुभोदकैरिति। नागतं विचिन्त्य प्रागुक्तमंत्रसम्प्रोक्तान्प्रयोगान्मनुना मनोत्तैरस्मिन्नथवा प्रोक्तान् कुर्यान्मंत्री विधानवित्। अमृतरूपैर्जलैरित्यर्थः। तर्प्पणे तु ध्यानविशेषमाह। पाशेति। सोपानपंक्त्या राजतया। दिननाथबिंबात्सूर्यमण्डलात्। आयान्तं जले इति शेषः। अम्भोजगतं जलस्थकल्पिताम्भोजगतं गणपतिं साध्यमूर्द्ध्नि पुष्करं दत्वा स्थितं विचिन्त्य। एवं ध्यानं कृत्वेत्यर्थः विघ्नराजस्य मस्तके श्रीप्रसिद्धये शुभोदकैस्तर्प्पयेदिति सम्बन्धः। तदुक्तं। विंवाद् बुदवत्समेत्य सवितुः सोपानकैराजतैस्तोयं तोयजविष्टरैर्ध्वतलतादन्तं सपाशांकुशम्। नासां साध्यनृके निधाय सुधयातद्रंध्रनिर्यातया सिञ्चन्तं पुनरन्वहं गणपतिं स्मृत्वा मृतैस्तर्पयेदिति। अथयंत्रद्वयम्। नामषट्कोणके बीजमध्ये लिखेद्वेष्टयित्वा मुना थांगमस्त्रिष्वतः अष्टपत्रे स्वरान्केसरे युग्मशः क्षयादिवर्णान्विहीनान्। लिखाद्यादिकेन। अग्रनोलिख्य गायत्रिवर्णांस्त्रिशो बाह्यतः कादिभिर्वेष्टयित्वा वह्निभूपुरद्वन्द्वके भूमिबीजं लिखेद्यन्त्रमेतन्मतं सिद्धिसंपत्प्रदमिति। अथातो महायंत्रराजं प्रवक्ष्ये पशोः संसिक्तदूर्वांकुरेण लिखेत्पञ्चपत्रे दशारं सरोजं गणेशस्य बीजं तु तारोदरे तु। ततस्तस्य मध्ये तुरचेति नाम्ना दशैतेषु मन्त्राश्च मंत्रं लिखेत्। ततो बाह्यतः पाशवर्णांकुशार्णौ लिखित्वा बहिः शक्रबिंबद्वयं तत्। लिखित्वा तथा तं गणेशानमस्मिन्समभ्यर्च्य गन्धादिभिः पुष्पजातैः भुजे कंठदेशे वहेत्सर्वरक्षा ततो मंगलं नान्यदस्तीह किञ्चिदिति। उक्तं च। क्षिप्रप्रसादनः पूर्वो महागणपतिः परम्। विघ्नोविनायको वीरः शूरो वरद एव च। इभदन्तश्चैकदंष्ट्रस्तथाहस्तिमुखः स्मृतः। ङेता नमोन्ता मंत्राः स्युरेतैस्तर्पणहोमतः। साधयेदीप्सितं मंत्रीति- तत्कल्पान्मत्रमितिमूलं युग्मशः पञ्चपत्रेयंत्रम्। हेरंबमनुमाह। पञ्चान्तकइति। पञ्चान्तको गः बामकर्ण ऊकारः। गणकऋषिर्गायत्रीछन्दः गकारो बीजं बिंदुः शक्तिः। बीजमिति। एतन्मंत्रोक्तम्।

धरं हेरंबमर्कप्रभम् ॥ दन्तं दानमभीतिमोदककरदं टंकंशिरोक्षात्मिकां मालां मुद्गरमंकुशं त्रिशिखकं दोर्भिर्दधानं भजे ॥ लक्षत्रयं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः। तीव्रादिपूजिते पीठे देवं हेरंबमर्चयेत् ॥ प्रणवः कवचद्वंद्वं महासिंहाय गं ततः। हेरंबेति पदं। पश्चादासनाय हृदन्वितः अयमासनमन्त्रस्यात्प्रदद्यादमुनासनं ॥ तारादिविघ्नबीजेन मूर्त्तिं तस्य प्रकल्पयेत् ॥ आवाह्यपूजयेतस्यामंगावरणसंयुतम् ॥ बाह्ये लोकेश्वराः पूज्या वज्रादीनि ततः परम् ॥ एवमभ्यर्चयेन्नित्यं साधयेत्स्वमनीशितां। मोदकैर्जुहुयात्पष्ठ्यामष्टम्यांक्शरैस्तथा ॥ चतुर्दशीदिने पूजैर्जुहयाद्वांछिताप्तये ॥ एभिर्द्रव्यैः प्रजुहुयान्मंत्रीपर्वदिनेष्वपि ॥ साधयेत्सकलान्कामाननैव साधकः॥ अंभोजं प्रथमं लिखेद्वसुदलं मध्यस्थबीजांतरे साध्याख्यांबहिरंगमंत्रविलसत्किंजल्कसंशोभितं ॥ यत्राणामुदरे विभज्य मुनिशो मालामनुं शेषितान्षड्वर्णाश्चरमेदले परिवृतं शक्त्या ठकारेण च। रोचनामदकाश्मीरैर्भूर्जपत्रे विलिख्य तत्। वेष्टितं श्वेतसूत्रेण लोहैस्त्रिभिरपि क्रमात्। धारयेद्बाहुनायंत्रं सर्वान्कामानवाप्नुयात्। शक्त्यंकुशध्रुवांतेस्यात्स्वबीजं हृदयं ततः। सर्वविघ्नाधिपंयांते ङेतं सर्वार्थसिद्धिदं। प्रवदेत्सर्वदुःखप्रशमनायपदं ततः। एह्येहिभगवन्सर्वंखादयस्तंभय द्वयं। भुवनेशींस्वबीजंगांनतिः पावकवल्लभा॥ पुनरंकुशमायांतं पंचपंचाशदक्षरः॥ मालामंत्रेणममुना प्रयोगान् साधयेत्सुधीः॥ तारंखङ्गीश्वरः कूर्मो निस्वरोणांतईरितः। भुवनेतिः

---

सुक्तेति। घुसृणं कुंकुमम्। उर्ध्वादिमुक्तादिवर्णाः नागस्यैर्हस्तिमुखैरुपलचितम्। हरिः सिंहः टंकं परशुं। त्रिशिखं त्रिशूलं क्वचिदंकुशं च त्रिशिखमिति पाठस्तत्र क्रेवाष्टासंयुता व्यस्तेत्यनेन चकारस्य लघुता अतीव्रप्रयत्नोच्चारणेन तेन नच्छन्दोभंगः आयुधध्यानं। दक्षवामयोदधस्थयोर्वराभये तदूर्ध्वोर्ध्वस्थयोरन्यान्ये एव मन्त्रम्। क्वचिदूरमित्यत्र कुम्भमिति पाठः तदा कुम्भः शुंडाग्रे मोदकमिति पाठे तु मोदकोपरि शुंडादंड इति ज्ञेयम्। केचिन्मुद्गरमित्यत्र पन्नगमिति पठन्ति। तदुक्तं। वंदेदोर्भिर्दधानं जपवलयभुजे सांकुशे मोदकाभीटंकानुद्यत्कपालं भुजगवररदान्स्वर्णकुम्भाग्रतुंडं सिंहस्थं पञ्चवक्त्रं त्रिनयनमरुणं दिव्यवस्त्रोरुभूषं हेरंबाख्यं महान्तं गणपतिमखिलस्वार्थदं प्रार्थये हमिति। तीव्रादिपूजित इत्यनेन पीठमंत्रस्यान्यत्वं सूचयति। तमेवाह। प्रणव इति। कवचद्वंद्वं हुंहुङ्कारमिति स्वरूपम्। तारादीति। नमो रहितेन मूलमंत्रेणेत्यर्थः। षष्ठ्यामित्युभयत्र पक्षे। एवमग्रेपि। क्रमरैर्मिश्रैस्तिलतंदुलैरेभिर्मोदकक्षराणूपैः। पर्वदिने पूर्णिमामावास्ययोः धारणयंत्रमाह। अम्भोजमिति। मध्ये ष्टदलकर्णिकायां स्वबीजान्तरे एतन्मन्त्रबीजमध्ये साध्याख्यां साधककर्मसहितामितिज्ञेयम्। बहिरिति कर्णिकायाः अंगमंत्रेति। पूजावदग्रे नेत्रम्। मुनिशः सप्तधा। मालामनुं वक्ष्यमाणम्। चरमे ष्टमे। शक्त्या शकारेण चेत्यावृत्तिद्वयम्। मदो गजमदः। त्रिभिर्लोहैः। षष्ठपटलोक्तैः। क्रमादिति। ताम्ररजतसुवर्णैः। मालामन्त्रमाह। शक्तीतिस्वबीजं मन्त्रस्यबीजम्। भुवनेशीस्वबीजं भुवनेश्याःस्वस्य च बीजं ह्रींगंम्। गामिति। स्वरूपम्। पंचपंचाशदक्षर इत्युक्तेः शमनाय एह्येहीति न संधिः। अमुना प्रयोगान्साधयेदित्यनेनास्य स्वातंत्र्येणमन्त्रत्वमप्युक्तम्। तद्विधानं यथाः अस्य अमितं छंदः हेरंबगणपतिवत्सर्वं ज्ञेयम्। सुब्रह्मण्यमंत्रमाह। तारमिति।

सप्तवर्णः सुब्रह्मण्यात्मकोमनुः। वह्निबीजेन षड्दीर्घयुक्तंनागक्रियामता। सिंदूरारुणकांतिमिंदुवदनं केयूरहारादिभिर्दिव्यैराभरणैर्विभूषिततनुं स्वर्गस्यसौख्यप्रदं। अंभोजाभयशक्तिकुक्कुटधरं रक्तांगरागांशुकं सुब्रह्मण्यमुपास्महेप्रणमतां भीतिप्रणाशोद्यतं। लक्षमेकं जपेन्मंत्रं साज्येन हविषा ततः। दशांशं जुहुयादंते ब्राह्मणानपि भोजयेत्। धर्म्मादि कल्पितेपीठे वह्निमंडलपश्चिमे। पूजयेद्विधिनादेवमुपचारैर्यथोदितैः। केसरेष्वंगपूजास्यात्पत्रमध्यगतानिमान्। जयंताव्यमग्निवेश्यं कृत्तिका पुत्रसंज्ञकं। अनंतरं भूतपतिं सेनान्यं गुहसंज्ञकं। हेमशूलं विशालाक्षं शक्तिशूलकरान् यजेत्। दिग्दलाग्रेषु पूर्वादि देवंसेनापतिं पुनः। विद्यां मेधां ततो वज्रं कोणस्थान् शक्तिकुक्कुटौ। मयूरं द्वीपमभ्यर्चेद्बाह्येलोकेश्वरात्पुनः। अस्त्राणि तेषामंतेस्युः सुब्राह्मण्यार्चनेरिता। स्वादुभिर्भक्ष्यभोज्याद्यैः षष्ठ्यांसंप्रीणयेद्विभुं। पूजयेद्देवताबुद्ध्या कुमाराब्रह्मचारिणि। संतानं विजयंवीर्यं रक्षामायुः श्रियं यशः। प्रदद्यात्साधकस्याशु सुब्रह्मण्यः सुरार्चितः। जयतर्पणपूजादौ विघ्नेशं सर्वसिद्धिदं। प्रीणयेदनयात्यास्तु प्राप्तये सर्वसंपदां। उंकारमाद्यं प्रवदंति संतोवाचः श्रुतीनामपियं गृणंति। गजाननं देवगणानतांघ्रिं भजेहमर्द्धेंदुकृतावतंसं॥१॥ पादारविंदार्चनतत्पराणां संसारदावानलभंगदक्षं। निरंतरंनिर्गतदानतोयैस्तंनौमिविघ्नेश्वरमंबुदाभम्॥२॥ कृतांगरागं नवकुंकुमेन मत्तालिमालांमदपंकलग्नां। निवारयंतं निजकर्णतालैः कोविस्मरेत्पुत्रमनंगशत्रोः ॥ ३ ॥ शंभोर्जटाजूटनिवासिगंगा जलंसमादायकरांबुजेन। लीलाभिरागाच्छिवमर्चयंतं गजाननं भक्तियुता भजंति ॥ ४ ॥ कुमारभुक्तौ पुनरात्महेतोःपयोधरो पर्वतराजपुत्र्याः प्रक्षालयंतं करसीकरेण मौग्ध्येन तं नागमुखं भजामि ॥ ५ ॥ त्वया

---

खड्गीशो वः कूर्मश्चकारः। निस्वरः स्वरहीनो व्यञ्जनमिति यावत्। णांतस्थः भुवे स्वरूपं अत्र संधौ तकारे दकार इति ज्ञेयम्। तदुक्तं। प्रयोगसारे। वचड्भुवे नमो मंत्रः सुब्रह्मण्याधिदैवत इति। नारायणीये तु। सारं वचन्नाभिजले शिवयोनिपुं तेजम इति। अग्निगायत्र्यौ ऋषिछन्दसी। प्रणवो बीजं वकारः शक्तिः। के चन प्रणवपुटितमाहुः। अन्ये तु मायाद्यमाहुः। तदुक्तंप्रयोगसारे। प्रशस्तः प्रणवाद्यन्तः शक्तिपूर्वं परे जगुरिति। वह्निबीजेनेति रेफेणः। ध्यानं तु दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरंत्ये सुब्रह्मण्य इति कार्त्तिकेयनाम। तदुक्तं हयशीर्षपंचरात्रे। अभयं वामहस्ते स्यादम्भोजं दक्षिणेकरे। कुक्कुटं वामहस्ते तु शक्तिं दक्षिणतो न्यसेत्। चतुर्भुजः समाख्यातएकवक्त्रोगुनिजस्त्वयमिति। वह्निमंडलपश्चिम इति। अनेन चतुर्थपटलोक्तवह्निमण्डलान्तमेव पूजा पीठशक्तिपीठपूजानास्ति। अन्यथा वह्निमण्डलपश्चिम इति न वदेत्। चतुर्थपटल एवोक्तत्वात्। विधिनेत्युक्तं विधिमाह। केसरेष्विति। तस्य नैवेद्यदानं धूर्त्तसेनाय। गणेशस्तुतिमारभते। उंकारमिति। अपिभिन्नक्रमः सन्तः यं श्रुतीनामाद्यं उंकारं वाचोप्याद्यं गृणन्ति शब्दब्रह्मस्वरूपमिति यावत्। करांबुजेन शुण्डाग्रेण। आरात्समीपे। मौग्ध्येनेति। देवीस्तनौ सदानुक्षिप्ताविति भावः भो गजास्य कालात्मना त्वया हस्तमुद्धृत्य ये सीकाराः पुष्कररंध्रमुक्ताः पुष्करं करिहस्ताग्र इति नामलिंगानुशासने। ते तारा विचरन्तीति गम्योत्प्रेक्षा शीकरा न भवन्ति तारा इत्युत्प्रेक्षा इत्यर्थः स्तुवन्तीति

समुद्धृत्य गजास्यहस्तं ये सीकराः पुष्कररंध्रमुक्ताः । व्योमांगणे ते विचरंति ताराः कलात्मना मौक्तिकतुल्यभासः ॥ ६ ॥ क्रीडारते वारिनिधौ गजास्ये वेलामतिक्रामति वारिपूरे। कल्पावसानं परिचिंत्यदेवाः कैलासनाथं स्तुतिभिः स्तुवंति ॥ ७ ॥ नागानने नागकृतोत्तरीये क्रीडारते देवकुमारसंघैः ॥ त्वयि क्षणं कालगतिं विहाय तौ प्रापतुः कंदुकतामिनेंदू ॥ ८ ॥ मदोल्लसत्यं च मुखैरजस्रमध्यापयंतं सकलागमार्थान् । देवानृषीन् भक्तजनैकमित्रं हेरंबमर्कारुणमाश्रयामि ॥ ९ ॥ पादांबुजाभ्यां कृतार्थयंतं कृपया धरित्रीं । अकारणं कारणमाप्तवाचां तं नागवक्त्रं न जहाति चेतः ॥ १० ॥ येनार्पितं सत्यवती सुताय पुराणमालिख्य विषाणकोट्या । तं चंद्रमौलेस्तनयंतपोभिरवाप्यमानंदघनं भजामि ॥ ११ ॥ पदं स्तुतीनामपदं श्रुतीनां लीलावतारं परमष्टमूर्त्तेः । नागात्मको वा पुरषात्मको वेत्यभेद्यमाद्यं भज विघ्नराजं ॥१२॥ पाशांकुशौ भग्नरदंत्वभीष्टं करैर्दधानं कररंध्रमुक्तैः। मुक्ताफलाभैः पृथुसीकरौघैः सिंचंतमंगं शिवयोर्भजामि ॥ १३ ॥ अभेदमेकंगजमेकदंतंचैत्यन्यरूपंजगदादिबीजम् ॥ ब्रह्मेतियंब्रह्मविदोवदंतितंशंभुसूनुंशरणंभजामि ॥ १४ ॥स्वांकस्थितायानिजवल्लभायामुखांबुजालोकनलोलनेत्रं ॥ स्मेराननास्यंमदवैभवेनरुद्धंभजेविश्वविमोहनंतं॥ १५ ॥ ये पूर्वमाराध्यगजाननंत्वांशास्त्राणिसर्वाणिपठंतितेषां । त्वत्तोनचान्यत्प्रतिपाद्यमेतैस्तदास्तिचेत्सर्वमसत्यकल्पं ॥ १६ ॥ हिरण्यगर्भंजगदीशितारंकपिंपुराणंरविमंडलस्थं । गजाननंयंप्रविशंतिसंतस्तत्कालयोगैस्तमहंप्रपद्ये ॥ १७ ॥ वेदांतगीतंपुरुषंभजेहमात्मानमानंदघनंहृदिस्थं । गजाननंयन्महसाजनानामहांधकारोविलयंप्रयाति ॥ १८ ॥ शंभोः समालोक्यजटाकलापेशशांकखंडंनिजपुष्करेण । स्वभग्नदंतंप्रविचिंत्यमौग्ध्यादाक्रष्टुकामः श्रियमातनोतु ॥ १९ ॥ विघ्नार्गलानांविनिपातनार्थंयंनारिकेलैः कदलीफलाद्यैः ॥ प्रभावयंतोमदवारणास्यं-प्रापुर्नराभष्टिमहंभजेतम् ॥ २० ॥ यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यंगजराजवक्त्रम् ॥ स्तुत्यानयायोविधिनास्तुवंतितेसर्वलक्ष्मीनिधयोभवंति ॥ २१ ॥ इतिश्रीशारदातिलकेत्रयोदशः

---

अन्यकृतः कल्पावसाने न्यस्य स्तुत्यसंगतिरित्यलङ्कारःवस्तुतस्तु अनन्यविनारणीयत्वेन तत्स्तुतिः । नागकृतोत्तरीये सर्पोत्तरीये त्वयिक्रीडारत इति सम्बंधः । कालगतिं कालयावरश्यं त्यक्त्वा । वाभनाभ्यां मुखच्छन्दाद्यपेक्षया ऋस्वता । एतेनास्य ऋस्वावेवांघ्रिध्येयाविति सूचितम् । आप्तवाचां वेदानां कारणं प्रवर्त्तयितारम् । पुराणं भारताख्यम् । पदं स्थानमपदमगोचरम् । शिवयोः पित्रोः अनेकमिच्छया । एवं तत्वतो ये पठन्ति तेषां पुरुषाणां त्वत्तोन्यत्प्रतिपाद्यं ज्ञेयं नास्ति । चकारात्तेषां शास्त्राणादपि त्वत्तो न्यत्प्रतिपाद्यं नास्तीत्यर्थः । यतः सर्वेषु शास्त्रेष्वात्मनः प्रतिपादितत्वात् एतैः शास्त्रैः त्वदन्यत्प्रतिपाद्यते चेत्तत्सर्वमसत्यकल्पं तानि शास्त्राण्येव न भवन्तीत्यर्थः । बौद्धशास्त्रादिवत् । तत्कालयोगैरिति हिरण्यगर्भाद्यवतारौं गणेशएवैकोली लीलया भवति बरमात्मरूपत्वादित्यर्थः । तदेवरूपभाह । वेदांतगीतमिति । मौग्ध्यादिति । लीलया तस्य कदाचिदपि ज्ञानभ्रंशाभावात् । विघ्नेत्यादिना भक्तवात्सल्यमुक्तम् । नर इति बहुवचनम् । इति श्रीशारदा-

पटलः ॥ २३ ॥ अथोच्यते चन्द्रमसोमनुःसर्वसमृद्धिदः । खड्गीशस्थो भृगुर्बिंदुमनुस्वरसमन्वितः। सोमाय तद्दयांतोयं मन्त्रः प्रोक्तः षडक्षरः॥ ऋषिरुक्तो भृगुः छन्दःपंक्तिः सोमोस्यदेवता ॥ दीर्घभाजा स्वबीजेन मनोरंगक्रियामता ॥ कर्पूरस्फटिकावदातमनिशं पूर्णेंदुबिंबाननं मुक्तादामविभूषितेन व पुषा निर्मूलयंतं तमः॥ हस्ताभ्यां कुमुदं वरं च दधतं नीलालकोद्भासितं स्वस्यांकस्थमृगोदिताश्रयगुणं सोमं सुधाब्धिं भजे ॥ रसलक्षं जपेन्मन्त्रं साधको विजितेंद्रियः। षट्सहस्रं प्रजुहुयात्पायसेन ससर्पिषा ॥ सोमांते पूजिते पीठे पूजयेद्रोहिणीपतिं ॥

---

तिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां त्रयोदशः पटलः ॥ १३ ॥ अथ क्रमप्राप्तान्सौरमंत्रान्वक्तुकामस्तस्य तेजस्त्रयात्मकत्वादाद्यंतयोः सोमाग्न्योर्मंत्रान् वदंस्तत्र चाद्यक्रमुपक्रमते अथेति। सर्वसमृद्धिदइति विनियोगोक्तिः। मंत्रमुद्धरति खड्गीशेति । खड्गीशो वः तत्स्थो भृगुः सः मनुस्वरश्च तुर्दशस्वर औ बिंदुश्च तद्युक्तः तेनस्वौं। प्रयोगसारेतु। सवौबिंद्वादिसोमाय नमो मंत्रः प्रकीर्तित इति। क्वचिद्बिंदुमानो स्वर इति पाठः। नारायणीयेच।आचार्यैश्च सौमित्युद्धृतं। अन्ये तु इदं मृत्युंजयबीजं।एतदाद्यो ग्रंथकृता नुद्धृत इति वदंति। स्वौं बीजं। आयेति शक्तिः। पद्मपादाचार्य्यैमेति। शक्तिरुद्धृताः अन्यत्र तु। ऋषिरत्रिर्विराट्छंदो बीजमाद्यमुदाहृतं। नमः शक्तिरिति। प्रणवप्रासादसंपुट इति केचेन। श्रीकामःश्रीपुटःकार्यइत्यपरे।स्वबीजेनेति।मंत्राद्यबीजेन स्व इति बीजेन वा। ध्यानमाह कर्पूरेति। दक्षिणवामाभ्यां कुमुदवरे। क्वचिद्धनमितिपाठः।धनं निधिपात्रं।अंकस्थमृगात् उदित उत्पन्नः आश्रीयगुणो नीलिमायत्र।तेनांको पि ध्येयइत्यर्थः।तदुक्तं।भवतु भवदभीष्टद्योतितांकः शशांक इति।अथवा स्वस्यांकस्थमृगेणोदित आश्रयगुणः सेवनीयगुणो येन कलंकित्वाय वादे सत्यप्यत्यागात्। सुधाब्धिं अमृतस्वरूपं रसलक्षं षड्लक्षं साक सत्तम इत्यनेन विद्यामंत्रस्य दशांशजप उक्तः।प्रयोगे पितज्जपः।तत्र धनलाभे श्रीयोगःकवित्वे वाग्भवयोगःसुखादौ प्रणवयोग इति पद्मपादाचार्याः।सोमांतमिति।चतुर्थपटले तस्मिन् सूर्येंदुपावकानिति।अग्निमंडलांता पूजोक्ता।अत्र तु सूर्याग्निमंडले संपूज्य अंते सोममंडलं पूजनीयम्।कश्चितुसोमान्तमितिवह्निमण्डले पूजानकर्त्तव्येत्याह। तत्र असांप्रदायिकत्वात् मंत्रदेवप्रकाशिकादिबहुग्रंथविरोधाच्च।पीठक्रमो तु सौमांतमिति। प्रपंचसारपद्मव्याख्याने पद्मपादाचार्यैः पीठार्चने सूर्यवह्निमंडलार्चनं कृत्वा ततः सोममंडलमभ्यर्च्य तत्र भगवंतमावाहयेदित्युक्तं पूजिते पीठ इति। पीठनवशक्तिपुजापूर्वकंपीठमंत्रेणेति शेषः। ताश्च पीठमंत्रो पि तंत्रांतरोक्तो ज्ञेयाः। तद्यथा। अमृतातारका ज्योत्स्ना विमला व्यापिनी तथा। चित्रा च कृत्तिका कांतिः श्रवणा नव शक्तयः अमृतांते कलात्मने संवित्पीठाय तेनम इति। पद्मपादाचार्यैरन्याः पीठशक्तय उक्ताः।राका कुमुद्वती नंदा सुधा संजीवनी क्षमा ।आप्यायनी चंद्रिका च ह्लादिनी नव शक्तयः। गुर्वादिक्रमतो मंत्री नत्यंताः पूजयेदिमा इति कलेति शक्तिनाभ। कलामीश इत्युक्तः। कश्चित्कराली तिशक्तिनाम कराली च क्रमादिमा इत्युक्तः । हारसमप्रभाः श्वेता इत्यर्थः। आदित्येति मंगलः अंगारकः मंदः शनैश्वरः वाक्पतिर्बृहस्पतिः। तत्र चतुर्दिक्षु आदित्यादयः अग्निकोणादिषु भौमादयः पूज्या इति ज्ञेयं। यदाहुः पूर्वदक्षिणपश्चा-

अंगानिकेसरेष्वस्युस्तद्दिव्यःपत्रमध्यगाः। रोहिणी कृत्तिका भूयोरेवती भरणी पुनः ॥ रात्रि-दार्द्रा ततो ज्योतिः कलाहारसमप्रभाः। सितमाल्यांबरधरा मुक्ताहारविभूषणाः। पयोधर-भराक्रांता रचितांजलयःशुभाः ॥ वल्लभासक्तमनसो मदविभ्रमंथराः ॥ समभ्यर्च्याः सरो-जाक्ष्यश्चंद्रबिंबनिभाननाः ॥ आदित्यमंगलबुधमंन्दवाक्पतिराहवः। शुक्रकेतुयुताः पूज्या द लाग्रेषु ग्रहा इमे ॥ स्वस्ववर्णांबरोपेताः स्वनामाद्यर्णबीजकाः। रक्तारुणश्वेतनीलपीतधूम्रसि-तासिताः ॥ वामोरुन्यस्ततद्धस्तादक्षिणेन धृता भयाः। अंबुजाद्यकरोभानुर्दंष्ट्राभीममुखः श-निः। राहुर्विकृतवक्त्रःस्यात्केतुः स्याद्विहितांजलिः ॥ लोकपालास्ततः पूज्यावज्राद्यस्त्रैःसह क्र-मात् ॥ एवंसिद्धमनुर्मंत्री संपदां वसति र्भवेत् ॥ हृत्पुण्डरीकमध्यस्थं तारहारविभूषितम् ॥ तारापतिं स्मरन्मन्त्री त्रिसहस्रं मनुं जपेत् ॥ राज्यैश्वर्यं दरिद्रोपि प्राप्नुयाद्वत्सरांतरे ॥ पू-र्वोक्तसंख्यं प्रजपेत् शशिनं मूर्ध्नि चिंतयन् ॥ रोगापमृत्युदुःखानि जित्वा वर्षशतं वसेत् ॥ ब्रह्मचर्यरतः शुद्धश्चतुर्लक्षमिमं जपेत्। निधानं भूगतं सद्यः प्राप्नुयाद्यत्नवर्जितः। जितेंद्रियो जपेन्मन्त्रं पौर्णमास्यां विशेषतः ॥ भवेत्सौभाग्यनिलयः संपदामपरोनिधिः। घोरान् ज्वरान् शिरोरोगानभिचारानुपद्रवान्। विषाणामपि संघातं नाशयेन्मनुनामुना ॥ पूर्णमास्यां निरा-हारो दद्यादर्घ्यंविधूदये ॥ प्राक्प्रत्यगायतं कुर्याद्भूतले मण्डलत्रयं। निषण्णः पश्चिमे मन्त्री म

---

त्यसौम्ययवाग्नकौ क्रमात्। रविश्चांद्रिर्गुरुः शुक्रः संपूज्याः साधकैरमी। आग्नेयादिषुकोणेषुभौम-मद छिकेतव इति। स्वनाम्नां आद्यर्णाः आद्यचराणि सबिंदूनि येषां ते। एतेन ग्रहाणां मंत्राः सू-चिताः। ग्रहयज्ञं गत्वेन तत्र सूर्यमंत्रं वक्ष्यति। अन्येषां समानामंगारकाय नमइत्यादयो ज्ञेयाः अत्राग्रे च पूजायामपि अयमेव प्रयोगो नुसंधेयः। वामौर्विति सूर्यकेतू हित्वा। अन्येषां ध्यानं। सूर्यस्तु पद्मकरः केतुस्तु विहितांजलिरित्युक्तेः। तदुक्तं महाकपिलपंचरात्रे। आदित्यो द्विभुजः प्रो-क्तो युवा लक्षणलक्षितः हस्तयोः पंकजे तस्य कार्ये स्कंधमिते शुभे। केतोस्तु। खड्गदीपधरं कृ-ष्णमथ वा विहितांजलिमिति। प्रयोगसारे पि। पूर्वार्द्धकायः पिंगभ्रूरक्तनेत्रः कृतांजलिरिति। तारउज्ज्वलो हारो मुक्ताहारः तारापतिमिति। नायिकासहितं। पूर्वोक्तसंख्यमिति। त्रिसहस्रं-युक्त इत्यनेन त्रिषवणस्नायी पयोहारश्चेत्युक्तं। यत्प्रयोगसारे। कृत्वा त्रिषवणस्नानं क्षीराहारो नि-रंतरः। जपेच्चत्वारि लक्षाणि विधानं लभते ध्रुवमिति। मंडलत्रयमिति। गोमयादिना। अन्यस्मि-न् पौरस्त्ये सौममर्चयित्वेति पीठादिन्यासं विधायात्मयागं कृत्वा बहिः पीठे पंकजान्विते अर्च-यित्वेत्यर्थः। उक्तंच। आसीनः पश्चिमे मध्यसंस्थे द्रव्याणि विन्यसेत्। आत्मानं सकलीकृत्याभ्यर्च्या चांतः सुरेश्वरः। पूर्वस्मिपंकजोपेते मंडले सोममर्चयेदिति। सुधीरित्यनेनैतदुक्तं भवति। विलो-मं मंत्रं जपन् पूरणं कर्पूरादीनां कुमुदादीनां च पुष्पाणां तत्र निक्षेप इति। यदाहुः। संस्थाप्य राजतं तत्र चषकं परिपूरयेत्। विलोमं प्रजपन्मंत्रं गव्य तपयसा सुधीः। क्षिपेच्च तत्र कर्पूरशीत-लकाश्मीरकाक्षतान्। कुशग्रंथियवांश्चैव पुष्पाण्येतानि चादरात्। कुमुदेदीपरस्वर्णकेतकीनवम-ल्लिकाः। चंपकानि यथालाभं शतपत्राणि च क्षिपेत्। आवाहयेच्चंद्रबिंबान्निजाद्धाहृदयादिभुं। ए-

ण्डले विहितासने ॥ मध्यस्थे स्थापयेत्पश्चात् पूजाद्रव्याण्यशेषतः ॥ अन्यस्मिन्मण्डले सोम मर्चयित्वांबुजान्विते ॥ राजतं चषकं तत्र स्थापयेत् पुरतः सुधीः ॥ गोदुग्धेन समापूर्य स्पृष्ट्वातं प्रजपेन्मनुं ॥ अष्टोत्तरशतं पश्चाद्विद्यामन्त्रेण देशिकः ॥ दद्यादर्घं शशांकाय सर्वकार्यार्थसिद्धये॥अनेन विधिना कुर्यात्प्रतिमासमतंद्रितः।षण्मासाभ्यंतरे सिद्धिं साधकेंद्रःसमश्नुते। श्रियमत्पूर्जितान्पुत्रान् सौभाग्यंपुंष्कलयशः।कन्यामिष्टामवाप्नोति कन्यायांवरनाप्नुयात् ।बहुना किमिहोक्तेन सर्वंदद्यान्निशापतिः।विद्येविद्यामालिनिस्याच्चंद्रिण्यंते ततो भवेत् । पुनश्चंद्रमुखि स्वाहाविद्यामंत्रउदाहृतः।तारोघृणिर्भगुःपश्चाद्वामकर्णविभूषितः। वह्न्यासनोमरुच्छेषःसनेत्रोत्रि

---

वं खमावाह्य गंधपुष्पाद्यैरर्चयेद्विधुमिति । निराहारोर्घंदद्यादित्युक्तत्वादर्घदानादनंतरं रात्रौ भोजनमनिषिद्धं । कन्यापीत्यनेनै वमादिषु स्त्रिया अप्यधिकार इत्युक्तं भवति विद्यामंत्र उदाहृत इत्यनेनैतदुक्तं । नवाक्षराद्य एष एव कन्याप्रदानसमर्थ इति। नवाक्षराणि तु । रक्षयुग्मं गजौ प्रोक्ता कर्णिनि स्यान्नवाक्षरमिति। नारायणीये नवाक्षरादिविद्यामंत्रमुद्धृतः। हिनामांतरितं यंत्रं पत्रेलिख्यतदासनः। जपेद्वादशसाहस्रं येतदेकदिनेन यः। ज्येष्टामाराध्य शक्रर्षे कन्यातस्याशुदीयते इति। अथतंत्रांतरोक्तं यंत्रमुच्यते। चंद्रं चंद्रकलाभिरन्वितशशांकेनामतारोदरे षड्पत्रे परितो विलिख्य च भगुद्दं तेन विन्द्वं चितः। सोमायेति पदं नमः पदयुतं चालिख्य तद्बाह्यतः। कादिक्षांनगतं समर्च्य विधिना कण्ठांगले मस्तके जप्तं वज्रमिदक्षणेन गरलप्रध्वंसितत्पुष्टिदमिति । सूर्यमंत्रमाह तारइति। घृणिरीतिरूपं भृगुः सः वामकर्ण उतेन विभूषितस्तेनस्रू। मरुद्यकारो वह्नेरेफस्यासनः तेनयः शेषः अनंत आश्चिर्दः सनेत्र इकारयुक्तस्तेनदि। त्यपश्चिभ इति मंत्रविशेषणंत्य इत्यंमक्षरमित्यर्थः। पश्चिम इत्यनेन ओमंतोपि भवतीति सूचितं। अभिमतप्रद इत्यनेन विनियोगोक्तिः। अयंमंत्रः साक्षाच्छ्रुतिपठित इति शूद्रादेरत्र नाधिकारः तदुक्तंतैत्तरीयशाखायां । नारायणोयोपनिषदि। घृणिरिति द्वे अक्षरे सूर्य इति त्रीणि आदित्य इति । त्रीणि एतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तं य एवंवेद श्रिया है वाभिषिच्यत इति। के चन ओमंतमाहुः। अन्ये श्रीकामहृल्लेखापुटितं मह्यं लक्ष्मीं प्रयच्छेत्यनेन पल्लवितमाहुः। रं बीजं यं शक्तिः के चन शक्तिबीजाद्यं ओमंतमाहुस् तन्मते प्रणवो बीजं माया शक्तिः : तदुक्तं। श्रीबोजांतः संप्रदाये मूलमंत्रस्तु मानुशः। अयं ओकामहृल्लेखा संपुटों तेप्रयच्छमे। लक्ष्मीमित्यं पल्लवितः शंकराचार्यसंमतः। हृल्लेखापूर्वकोंत श्रीविश्वरूपमते स्थित इति द्विठः स्वाहा। ईरिता उक्ताः सत्यायेत्यादयोगमंत्राः पृथक् प्रत्येकमेतदंताज्ञेयाः । तत्रप्रयोगः। सत्याय तेजो ज्वालामणिहुंफट् स्वाहा। हृदयाय नम इत्यादि। अन्ये तु सत्यायेत्यादिचतुर्थी अविवक्षितेत्याहुः। तेन सत्यतेजोज्वालामणिहुंफट्स्वाहा। हृदयायनम इत्यादिप्रयोगः : एष एव सांप्रदायिकः अपेक्षितार्थद्योतनिकाकारादिभिर्लिखितत्वात् अत एवप्रपंचसारटीकाकारैःब्रह्मेत्यत्राकारश्रुतिश्चतुर्थी निवारणायेतिव्याख्यातं । पुनरित्यनेनांष्टांगो पिसूचितं सूत्रमंत्रषडक्षराणि षडंगस्थाने षु षडंगवद्विन्यस्य उदरपृष्टयोर्नभीतयोर्वर्णद्वयं न्यसेदिष्टांगं सद्यादोति। ओकारादिविपरीतनपुंसकवर्ज्जितपारिभाषिकपंचह्रस्वैः सह यथाक्र-

स्त्यश्मिः। अष्टाक्षरोमनुःप्रोक्तोभानोरभिमतःप्रभः देवनागोमनुप्राक्तोगायत्रीछंदईरितं। आदित्यो देवताप्रोक्तोदृष्टादृष्टफलप्रदः सत्यायहृदयंप्रोक्तंब्रह्मणेशिरईरितं। विष्णवेस्याछिखावर्मरुद्रायप रिकीर्तितं। अग्नये नेत्रमाख्यातंशर्वायास्त्रमुदीरितं।तेजोज्वालामणिंअफट्स्वाहांताःपृथगीरिताः अंगमंत्रान्पुनर्न्यस्येत्पंचमूर्त्तिर्यथाक्रमात्। आदित्यं विन्यसेन्मूर्न्द्धरविंमुखगतं न्यसेत्। हृदये भानुनामानं भास्करं गुह्यदेशतः। सूर्यंचरणयोर्न्मस्येत हस्तैः सद्यादि पंचभिः। प्रधानमूर्तिप्र तिमा सर्वाभरणभूषिताः। मूर्द्धास्यकंठहृदयं कुक्षिनाभिध्वजांघ्रिषु। मंत्रवर्णान्न्यसेदष्टौ प्रत्ये कं प्रणवादिकान। एवंन्यस्तशरीरोसौ चिंतयेत्तेजसांनिधिं। रक्ताब्जयुग्मा भयदानहस्तं केयुरहारांगदभूषणाढ्यं। माणिक्यमौलिंदिननाथमीडे बंधूककांतिं विलसत्त्रिनेत्रं। वसुलक्षं जपेन्मंत्रं समिद्भिः क्षीरसाखिनां। तत्सहस्रं प्रजुहुयात् क्षीराक्ताभिर्जितेंद्रियः। पीठस्यलक्षेः प्रथमंदिक्षुमध्ये च संयजेत्। प्रभूतं विमलंसारं समाराध्यमनंतरं। परमादिसुखंपीठं स्वबिंबां तं प्रकल्पयेत्। दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला पुनः। अमोघा विद्युता सर्वतोमुखी पीठशक्तयः। दीप्तदीपशिखाकारा बीजान्यासां विदुः क्रमात्। अक्लीवहस्वत्रियस्वरान बिंद्व

---

मं पंचमूर्त्तीर्न्यसेदितिसंबंधः ॐ आदित्यायनमः एं रवये नमःत्युक्तं ॐ भानवे नमःइंभास्कराय नमः अंसूर्याय नम इति प्रयोगः।यथाक्रमं इत्यनेनऊर्ध्वादितिसुखेष्वपि न्यसेदिप्रत्येकमिति। तेन ॐॐ- नमोभूर्न्नीति प्रयोगः। एवंन्यस्तेन नवग्रहन्यासोपि सूचितः स उक्तो मया प्राक्। दानं वरं आयुध- ध्यानं। वामाद्यूर्ध्वयोरक्ताब्जे तदधस्तनयोरन्ये। अत्र ध्यानानंतरं कमलबिंबमुद्रे प्रदर्शनीये कमला- कृतिमुद्रा तु सौरमुद्रेयमीरितेत्युक्तेः प्रयोगसारेपि। दर्शयेदग्रतस्त्वब्जबिंबमुद्रे यथोदिते इति। तत्राब्जमुद्रालक्षणं यथा करौतुसंमुखौकृत्वा संहतावुन्नतांगुली। तलांतमिलितांगुष्ठौ कुर्यादेषा- ब्जमुद्रिकेति। नारायणीये बिंबमुद्रालक्षणं पद्माकारौ करौ कृत्वाअविश्लिष्टे तु मध्यमे। अंगुल्यौ धारयेत्तस्मिं बिंबमुद्रेति सोच्यत इति। एते सर्वसौरमंत्रसाधारणे इति ज्ञेयं। वसुलक्षमष्टलक्षं। अत्र विशेषः प्रयोगसारे। रांक्तवरधरोरक्तगंधमाल्याचिंतः सदा। घृतक्षीरसमायुक्तगुडभक्ताशनोनि- शि भैक्षाहारोथवावीतसंगः संतोषवान्सदा। मंत्रमावर्त्तयेन्नित्यमाराधनपरायण इति। अन्यः पुर- श्चरणसामान्यविधिर्वक्ष्यमाणएवानुसंधेयः। तत्सहस्रमष्टसहस्रं। पीठस्यलक्षेः प्रथमभिति। मंडू कादिवेदिकांतं संपूज्य धर्मादेः प्राक् परमसुखांतान्पंच संपूज्य पश्चाद्धर्मादिपूजेति केचन। अन्ये- तु धर्मादिस्थाने प्रभूतादिकान्संपूज्य मध्येफलकरूपेण परमसुखं पूजयेत्।धर्माधर्मादिपूजानास्ती त्याहुः एतदेव सांप्रदायिकं। उक्तंचनारायणीये।पीठाग्नीन्कल्पयेदेतान्न्द्रदामध्येविदिक्षुचेति। एत त्सर्वसूर्यमंत्रसाधारणं। दिक्षुविदिसामान्यत उक्तेरचाग्नेयादिकोणाएव गृह्यंते। विदिक्मध्ये। षु संयजेदिति पाठः यदाहुराचार्याः प्रयजेदथप्रभूतां विमलां साराह्वयां समाराध्यां।परमसुखाम- न्तादिष्वस्त्रिषु मध्ये च पीठशक्तेः प्रागिति। प्रयोगसारेपि। ईशानांतं च मध्येपि विदिक्ष्वेतान् प्रपूजयेदिति। स्वबिंबांतमिति। सोमाग्निमंडले संपूज्य सूर्यमंडलं पूजनीयमित्यर्थः दीप्तेत्यासां ध्यानं। तदुक्तं प्रयोगसारे दीप्तदीपशिखाकाराध्येयाः स्युर्नवशक्तय इति। अक्लीवेति। ह्रस्वचितयं

भिसंयुतान्। वदेत्पदं चतुर्थ्यंतं ब्रह्मविष्णुशिवात्मकं। सौराय योगपीठाय नमः पदमनंतरं पीठमंत्रोयमाख्यातो दिनेशस्य जगत्पते। तारादि खं खखोल्काय मनुना मूर्तिकल्पना। सा

---

अइउऋऌक्लीबक्लखत्रयपदाभ्यां नत्रासहसंबंधः अग्नोरेफः रांरींरूंरैंइत्यादिनवबीजानि। अन्येतु। क्लखत्रयंअइअं इत्याहुः तदुक्तं महाकपिलपंचरात्रे। आद्योप्रांत्यं तृतीयं च त्यक्त्वा चैव नपुंसकं। भेदयेत्त्रधायांतं स्वरैरेभिर्यथाक्रमं।बिंदुयुक्तानि बीजानि शक्तानामुद्धृतानि वै इति।अन्यथाकारैकारविसर्गान्हित्वा नवबीजानीति तदुक्तंप्रयोगसारनारायणीययोः आद्यमंत्यं तृतीयं च त्यक्त्वा पि च नपुंसकानिति पीठमंत्र इति। सर्वसूर्यमंत्रसाधारण इति ज्ञेयं। तारादीति खखोल्कायेति स्वरूपं। तदुक्तं महाकपिलपंचरात्रेयाष्टमं बिंदुना युक्तं कद्वितीयं तथैवच तदेवकेवलं भूय षोभिन्नं सविलोमकं। सविलोमाच्चतुर्थं तुयत्तृतीयो परिस्थितं अक्षरं तर्द्वद्वितीयेन स्वरेणैव प्रभेदितं। वानुलोमाच्चतुर्थं तु केवलं तदनंतरं। समासादुधृतो वत्स मूर्तिमंत्रः षडक्षर इति। अन्येषामपि सूर्यमंत्राणा मूर्तिमंत्र इति ज्ञेयं तत्राकाशबीजादि रुद्धृत इति विशेषः। अथवात्रैवं व्याख्येयं। तार स्वआदिशब्देन प्रथमोत्पन्नत्वात्। आकाशस्तस्य बिंदुः संप्रदायादिति। अथवा खमिति तंत्रेण द्वयमुपात्तं एकेनाकाशबीजमन्येन स्वरूपं। प्रयोगसारेपि। सूर्यकांताक्षरे प्रोक्ता बिंदुभूषितमस्तके इति। नारायणीये। स्वकांतौ दंडिनौ चंडो मज्जादशनसंयुता। मांसं दीर्घाजवद्वायुरंते तस्यापि क्वद्विदुः एतच्च साधयेत्कामानभिषेकजपादिनेति। ब्रह्मांतो दंतिनी मज्जा णां तां तां कायठद्वयमिति। निर्बीजोपि तत्रैवोक्तःअबलकारतकारौ वेदिकपीडभेदेनेति। उभावपि सांप्रदायिकौ निर्बीजो मूर्तिकल्पनायां सबीजो जपादाविति ज्ञेयं अयं स्वतंत्रोपि मंत्रः। अस्यर्ष्यादि यथाऋषिसूक्ष्मकआख्यातो जगतीछंद ईरितं। देवः सूर्यो बीजशक्तीकांतमज्जासहृत्स्मृते। सूक्ष्मरूपायाग्निवधूः स्वाहांतः सूक्ष्मतेजसे। सूक्ष्मकरायाग्निवधूः सूक्ष्मबलाय ठद्वयं सूक्ष्मकायाय सहुंफट्जातियुक्ताः समीरिताः पंचांगमंत्रा मंत्रार्णैः षडंगं वा प्रकल्पयेत्। रक्तपद्मद्वयं हस्ते बिभ्राण वरदाभये। बंधूकाभं त्रिनेत्रं च रविं ध्यायेत्सुपूजितं। लक्षमेकं जपेन्मंत्रं क्षीराहारोजितेंद्रियः जुहुयात्तद्दशांशेन बिल्वाश्वत्थसमिद्वरैः सूर्यपीठेष्टाक्षरवत्पूजा। वक्ष्यमाणार्घदानं च खेचरीसिद्धिश्च फलं ज्ञेयं। उक्तं च नारायणीये। अनेन बहुभिः प्राप्ताः खेचरत्वादिसिद्धय इति। मूर्तिकल्पनेति। मूलमंत्रमुच्चार्य पश्चादिममुच्चार्य मूर्तिकल्पनेति पद्मपादाचार्याः अंगानि पूजयेदिति कर्णिकायां। तदुक्तं नारायणीये। वह्निरक्षो मारुते शदिक्षु पूज्या हृदादयः स्वमंत्रैः कर्णिकांतस्थादिक्षु वस्त्रं पुरतश्चाष्टगिति। आदावित्यनेन केसरेष्वष्टांगपूजा सूचिता। आदित्याद्या इति न्यासोक्तबीजसहिताः अत्र केचनादित्यादिमूर्त्तयस्तत्त इति सामाना धिकरण्यं कृत्वा सूर्यं न पूजयंति। तदसत्। उद्दिष्टपंचकमध्ये एकत्यागे कारणाभावात् मुख्यतया कर्णिकायां सपूजित इति चेत्। पंचसु कः पूजितः कोनेति नियामकाभावात्। पूर्वत्र परत्र च यत्र यत्र पंचकमुक्तं। तत्र त्यागस्यादृष्टचरत्वाच्च। तेन पद्मपादाचार्योक्तरीत्या। आदित्यमध्ये संपूज्यरव्यादयोदिक् चतुष्के पूज्याः चतस्र इति शक्तिविशेषणत्वेन योज्यंपुरते ऽरुणमर्पयेदित्युक्तेः कल्पितदिगपेक्षया तदीशदलमपि सं-

क्षिणं सर्वलोकानां तस्यामावाह्य पूजयेत्। अंगानि पूजयेदादौ दिक्पत्रेष्वर्कभूभयः। आदित्याद्याश्चतस्रोऽर्च्याः शक्तयः कोणपत्रगाः। स्वस्वनामादिवर्णाः स्युस्तासां बीजान्मनुः क्रमात्। उषा प्रज्ञा प्रभासंध्याशक्तयः परिकीर्तिताः। पत्राग्र संस्था ब्राह्मयाद्या पुरतोऽरुणमर्चयेत्। चँद्रादीनर्चयेपश्चाद्ग्रहानष्टौ ततो बहिः। इंद्रादींश्च तदस्त्राणि यथा पूर्वं समर्चयेत्। एवं संपूज्य विधिवद्भास्करं भक्तवत्सलं। दद्यादर्घं प्रतिदिनं वारे वा तस्य चोदिते। प्रभाते मंडलं कृत्वा पूर्ववत्पीठ मर्चयेम्। पात्रं ताम्रमयं प्रस्थतोयग्राहि मनोहरं। निधाय तत्र मनुना पूरयेतच्छुभोदकैः। कुंकुमं रोचनाराजीरक्तचंदनवैणवान्। करवीरजपाशालिकुशश्यामाकतंदुलान्। निक्षिपेत्सलिले तस्मिन्नैक्यं संचिंत्य भानुना। सांगमभ्यर्चयेत्तस्मिन् भास्करं प्रोक्तलक्षणं। गंधपुष्पादिनैवेद्यैर्यथाविधि विधानवित्। तत्पिधाय जपेन्मंत्रं सम्यगष्टोत्तरं शतं। पुनः संपूज्य गंधाद्यैर्जानुभ्यामवनिं गतः। आमस्तकं तदुद्धृत्य व्योम्नि सावरणे रवौ। दृष्टिं

---

सुखदलमिति। तेन महालक्ष्मीस्थानेऽरुणः पूज्यः मातृभिररुणांताभिरित्याचार्योक्तेः पद्मपदाचार्यास्तु मातृः संपूज्य पुरतोऽरुणमर्चयेदित्यूचुः अतएव नारायणीये पूर्वपत्रे ऽरुणस्थथेत्युक्तं। चंद्रादीनिती। स्वबीजाद्यान् चंद्रः सोमतः तत्र पूर्वादिषु चंद्रबुधगुरुशुक्रान् आग्नेयादिषु भौममंदराहुकेतूनिति ज्ञेयं। प्रयोगस्तु पूर्वोक्तोनुसंधेयः अतएव नारायणीये। पूर्वादि दिक्षु संपूज्याश्चंद्रज्ञगुरुभार्गवाः आग्नेयादिषु कोणेषु कुजमंदा हि केतव इति। विधिवदित्यनेन सूर्यपरिषद्गो नम इति बहिःपारिषदान् पूजयेदित्युक्तं। ग्रहैः सुरैश्चापि सूर्यपरिषद्भिरित्युक्तेः प्रभाते अर्चयेदिति संबंधः मंडलमिति वृत्तं। कृत्वेति। रक्तचंदनेन। तदुक्तं प्रयोगसारे। रक्तचंदनगंधेन कृत्वा वृत्तं सुशोभनं। मंडलमिति। प्रस्थतोयग्राहीति। प्रस्थप्रमाणमुक्तं श्रीधराचार्यैः कुडवस्तु पलः स्यात्प्रस्थः कुडवैश्चतुर्भिः स्यादिति। मनुना विलोमपठितेनेति विशेषः यदाहुः प्रजपन्मनुं प्रतिगतक्रमतः प्रतिपूरयेत्सुविमलैःसलिलैरिति। शुभोदकैरिति। आदित्यमंडलान्निस्सरदमृतधारारूपत्वेन ध्यातैरित्यर्थः राजी आसुरी रक्तं रक्तचंदनं। चंदनं ख्यातं वैणवं वेणुबीजानि करवीरं रक्तकरवीरपुष्पमिति। परमगुरवः जपा रक्तजपा कुशं कुशाग्रं तंदुला अक्षताः। निक्षिपेदिति। यथालाभं क्वचित्तिला अपि तदुक्तमाचार्यैः गोरोचनासृतिलवैणवराजिरक्तशीताख्यशालिकरवीरजपाकुशाग्रान्। श्यामाकतंदुलयुतांश्च यथा प्रलाभान् संयोज्य भक्तिभरतोर्घविधि विधिय इति। ऐक्यं संकल्प्येति। स्वात्मन इति शेषः स्वैक्यं संभावयन्समाहितधीः दृष्ट्वा दिनेशमित्युक्तेः तस्मिन्पात्रे। सांगमिति। षडंगाष्टांगसहितमष्टांगेनाभिसंपूज्येति। प्रयोगसारे उक्तेः प्रोक्तलक्षणं। पूर्वोक्तध्यानं। आदिशब्दात्धूपदीपौ। यथा। विधीत्यनेनैतदुक्तं भवति। सावरणमिति। व्योम्नि सूर्यमंडलेपि स्थितमावरणसहितं देवं विलोक्य मनसासंपूज्येति च। उक्तं च। दृष्ट्वा दिनेशमथ पीठगतं तथैव व्योमस्थितं परिवृतावरणं विलोक्येति। विधानवित्तत्पिधायेति संबंधः विधानविदित्यनेनैतदुक्तंभवतिसोमात्मनाभावितामृतवाजयुतेनवामोपष्ठध्वेनस्वदक्षिणहस्तेनेति सम्यगिति। प्राणायामत्रयं षडंगन्यासं विधायेत्युक्तं। पुनः संपूज्य। जलमिति शेषः। अर्घंदद्यादिति। तत्र प्रकारः मूलांते भगवते रवये अर्घ्यं कल्पयामि नम इत्युच्चार्य-

निधाय स्वैक्येन मूलमंत्र धिया जपन् । दद्यादर्घं दिनेशाय प्रसन्नेनांतरात्मना । कृत्वा पुष्पांजलिं भूयो जपेदष्टोत्तरं शतं । यादवर्घ्यामृतं भानुः समादत्ते निजैः करैः । तेन तृप्तो दिनमणिर्दद्यादस्मै मनो रथान् । अर्घदानामिदं पुंसामायुरारोग्यवर्द्धनं । धनधान्यपशुक्षेत्रपुत्रमित्रकलत्रदं । तेजोवीर्ययशः कांतिविद्याविभवभाग्यदं । आकाशमग्निर्दीर्घेंदु संयुक्तं भुवनेश्वरी सर्गान्वितोभृगुर्भानो स्त्र्यक्षरो मनुरीरितः।आधारादि पदाग्रांतं कंठादाधारकावधि। मूर्द्धादि कंठपर्यंतं क्रमाद्बीजत्रयं न्यसेत् । षट् दीर्घस्वरयुक्तेन मध्येनांग क्रियामता । रक्तांबुजासनमशेषगुणेकसिंधुं भानुं समस्तजगतामधिपं भजामि । पद्मद्वयाभयवरान् दधतं कराब्जैर्माणिक्यमौलिमरुणांगरुचिं त्रिनेत्रं । भानुलक्षं जपेन्मंत्रमत्राज्येन दशांशतः। तिलैर्वा मधुरासिक्तैर्जुहुयाद्द्विजितेंद्रियः।पूर्वोक्तेपूजयेत्पीठे विधानेनामुना रविं । प्रथमावृत्तिरंगैः स्यात् पराचंद्रादिभिर्ग्रहैः । तृतीया लोकपालैः स्याच्चतुर्थीस्यात्तदायुधैः।इति संपूज्य निर्माल्यं तेजश्चंद्राय

---

ति । प्रसन्नेनांतरात्मनेति भक्त्या दद्यादित्युक्तं । प्रयोजनतिलकमंत्रमाह । आकाशेति आकाशोहः अग्नीरेफःदीर्घआइंदुर्बिंदुः एतद्युतः तेनह्रामितिविसर्गान्वितो विसर्गयुक्तः भृगुःसःऋष्यादियथा । मनोरस्यभवेद्ब्रह्मा मुनिरुक्तोथवा भृगुः।छंदोपि खलुगायत्री देवतातीक्ष्णदीधितिरिति।आद्यं बीजंद्वितीया शक्तिः प्रणवादिरिति चिकेत् प्रयोगविशेषसारे परमात्मादिर्वेति पद्मपादाचार्याः अंगानीतिनेत्रां तानीतिज्ञेयं अग्रे वक्ष्यमाणत्वादत्रनोक्तं । तदुक्तं । प्रयोगसारे अंगुष्ठादिकनिष्टांतमंगुलीषु यथा क्रमात्।न्यस्त्वाविनेत्रमंगानिनेत्रं हस्ततलेन्यसेदिति । नारायणीयेपि । न्यस्यांगुलीषुपंचांनंलोचनतलयोर्न्यसेदिति । तथान्यस्त्वानेत्रांतमंगानितथैवात्मनि संयत इति । प्रयोगसारे । नारायणीये चान्यान्यंगान्युक्तानि । कल्टतोयविलोमेन बीजहृदयमुच्यते । अर्कशिरश्चतुर्थ्यंतः कथ्यते भूर्भुवः स्वरे । ज्वालिनीति शिखागीताहुंवर्मसमुदाहृतं । द्वितीयस्वरसंभिन्न शचतुर्थं सबिंदुकं नेत्रं स्वरांतमारूढंयांतमस्त्रमितिक्रमादिति । नारायणीये तु । प्रयोजनादितिलकः साष्टंगगांतः स्मृतोमनुरिति । न्यासेक्रमसंग्रहे विशेषः हस्तयोः स्तलपृष्ठे च न्यस्यमंत्राक्षरत्रयं । पदांतराधिवक्त्रेषु । तथा ससग्रहामपि । मुखे बहौच पदयो रुदरेवक्षसि क्रमात् । मूर्द्धादिपंचस्थानेषुह्रस्वाद्याश्चविन्यसेत् इति । मूर्ति पंचकनवग्रहन्यास इति पद्मपादाचार्याश्च । आयुधध्यामं पूर्ववत् । भानुलक्षं द्वादशलक्षं । अंगैरिति तत्रांगध्यानं यथा । भास्वत्सरोजहस्तानिवरदान्यपि । अंगानिदिव्यरूपाणि ध्येयानि बलवंति च । दंष्ट्राकरालमस्त्रं तु विद्युत्पुंजसमप्रभमिति । प्रयोगसरे नारायणीयेपि । रक्ताद्धृदयः सौम्यावरदाः पद्मधारिणः विद्युत्पुंजनिभंत्वस्त्रमुग्रदंष्टंभयावहमिति । पराचंद्रादिभिर्ग्रहैरिति अत्र स्वस्वनामादिवर्णादित्वमनुसंधेयं। स्वनामाद्यक्षरैर्बिंदुभूषितैरन्वितंपजेदिति प्रयोगसारउक्तेः तत्रायं विशेषः चंद्रबुधगुरुशुक्रैः आग्नेयादिस्थितैर्भौममंदराहुकेतुभिःतदुक्तमाचार्यैः प्रागादि दिशासंस्थाः शशिबुधगुरुभार्गवाःक्रमेण स्युः आग्नेयादिष्वसृिषुधरणिजमंदाहिकेतवः पूज्या इति । प्रयोगसारेपि । सोममैंद्रे बुधंयाम्ये पश्चिमेतु बृहस्पतिं । सौम्ये शुक्रंतथाग्नेय्यामगारकमथासुरे । शनैश्चरं ततोराहुं वायव्यां केतुमीश्वर इति । तेजश्चंद्रोर्कगणः प्रयोगसारे प्रयोगविशे

दीयतां । अर्घं प्रागीरितं दद्याज्ज्ञानवे संयतेंद्रियः। सोपि रत्नं धनं धान्यं पुत्रापौत्रान्पशूंस्त था । वस्त्राणि भूषणादीनि दद्यादस्मै न संशयः । आकाशमग्निपवन संप्रांतार्घीशबिंदुमत् । मार्त्तण्डभैरवं नाम बीजमेतदुदाहृतं। पुटितं बिंबबीजेनसर्वकामफलप्रदं । ठांतं दहननेत्रेंदु सहितं तदुदीरितं । पंचह्रस्वाद्यबीजेन पंचमूर्त्तिं प्रविन्यसेत् । मध्यमादिकनिष्ठांतमंगुलीषु क्रमादिकाः सूर्याख्यो भास्करो भानुस्ततो रवि दिवाकरो । शिरोवदनहृद्गुह्य पाददेशे तु ताः पुनः । दीर्घयुक्तेन बीजेन नेत्रांतांगानि विन्यसेत् । व्यापकं मूलबीजेन कुर्वीत तदनं तरं । हेमांभोजप्रवालं प्रतिमनिजरुचिं चारुखट्वांगपद्मे चक्रं शक्तिं च पाशं सृणिमति रुचि

---

षउक्तः स्वजनमदिननक्षत्रे ग्रहणे वा स्वजन्मभे । ग्रहाणामपिवैषम्ये भये वा प्रत्युपस्थिते दृष्ट्वा-दिवाकरंदेवंग्रहैः सार्द्धं यथोदितं । मूलेन सवितुर्बीजै रन्येषां च पुरोदितैः प्रत्येकं जुहुयात्तेषां ग्र हाणां तद्दिशि क्रमात् । एकत्र वाथवा वह्निकार्यं कृत्वा विधानतः समित्सर्पिश्चरुघृतैः क्रमादष्टो त्तरंशतं प्रतिग्याहुतिसंयुक्तं प्रत्येकं स्मरणान्वितं । अर्कः पलाशापामार्गवश्वत्थोदुंबरौ तथा । ख दिरश्च शमीदूर्वा दर्भाश्च समिधः क्रमात् । पूर्णाहुतिं ततो दद्यात्तेषां प्रत्येकमंततः कृतेनाने न यत्नेनमहास्तुष्यंति भाविताः। सर्वरोगाः प्रणश्यंति संग्रामेषुजयं लभेत् अभिचारादयोदोषाः शांतिं-यांति न संशय इति । मार्त्तंडभैरवबीजमाह । आकाशमिति आकाशंहः अग्नीरेफः पवनोयः स-द्यांतश्री अर्घीशउबिंदुः एतद्युक्तः अत्र स्वरद्वयमपिगुरूपदेशतो यथा संप्रदायमुच्चारणीयं । ब्रह्माक्ष षिनिंहुक्षंदः हंबीजंबिंदुः शक्तिःटांतमिति । टांतं ठःदहनोरेफः नेत्रमिःइंदुबिंदुःएतद्युक्तेन द्विमिति सर्वमामफलप्रदमित्यनेनैतत् संगृहीतं । यदुक्तं नारायणीये । आरोग्यमायुःश्रीर्विद्याकांतिः पुष्टिर्द्वनं यशः सौभाग्यं शक्तिरैश्वर्यं रक्षामेधावचोद्युतिः सिध्यंत्येवं विधाः कामा मंत्रस्यास्यप्रभावत इति पंचति । सद्यांतपंचह्रस्वाद्यमित्यर्थः मूर्त्तिःसद्यासानिका इति नारायणीय इत्युक्तः मध्यमादीति म ध्यमातर्ज्न्यंगुष्ठानामाकनिष्ठास्वित्यर्थः मध्यमाद्यनुजांतत इति नारायलीय उक्तः बीजेनेति । मा र्तंडभैरवेण । पूर्वत्रापिदीर्घयुक्तेन षडदीर्घयुक्तेन नेत्रांगानीति । हृदयशिरः शिखाकवचाग्नि वि न्यस्यास्त्रमपि विन्यस्य पश्चान्नेत्रं विन्यसनीयमिति संप्रदाय विदः केचित्तु नेत्रांतानीति पंचांगा न्येव नेत्रांतानिन्यसनीयानिपंचांगानि मनोर्यस्यनेत्रं तस्य न विद्यत इति अस्यापवादमाहुसूः तदसं प्रदायिकं । अंगानि कुर्याद्दीर्घाक्षरमाबीजेनमंत्रविदिति श्रीपटले मध्येन दीर्घयुक्तेन प्राक्पुटेन प्र कल्पयेत् । अंगानि जातियुक्तानि क्रमेण मनुवित्तम इति भुवनेशीपटले । एवमन्यत्रापि यत्र यत्र दीर्घवचनं तत्र षण्णां दीर्घाणां ग्रहणात् अत्र संकोचे कारणाभावात् नेत्रांतांगानीति वचनेन संको च इतिचेतदपिन । सांप्रदयिकव्याख्यानुसारेणाप्युपपत्तेः किंचनेत्रं तस्य विवर्ज्जयेदिति साक्षाद्वि हितस्य नेत्रांगस्य सामान्यभूतेनान्यथाप्युपपद्यमानेन नेत्रांतांगानीति वचनेन बाधोपि न कर्त्तुं श-क्यते।अन्यच्चाग्रे अंगपूजा यथा पूर्वमितिवदतादिक्षुवक्षपूजोक्तैवानेत्रमात्रे विशेष उक्तः अग्रे पुरुषोत्त-ममंत्रे पि नेत्रांतांगान्युक्तानि।तत्र च षडंगमंत्रानेत्रांताएवोक्तताषडंगमंत्राःसंदिष्टानेत्राःतास्त्रवेदि भिरित्यंतेन । पूर्वोक्तमंत्रे लिखितप्रयोगसारवचनाच्चाअस्मिन्मंत्रे च नारायणीयेप्रांशवोंगानि षडिति

रामक्षमालां कपालं हस्तां भोजैर्दधानं त्रिनयनविलसद्वेदवक्त्राभिरामं मार्त्तंडं वल्लभार्द्धं कणिमयमुकुटं हारदीप्तं भजामः॥लक्षत्रयं जपेन्मंत्री बीजं बिंब पुटीकृतं दशांशक मलैः फुल्लैर्जुहुयान्मधुरोक्षितैः॥पीठे दीप्तादिभिर्युक्ते कर्णिकायामुषादिकाः पूर्वादिदिक्षु संपूज्य मूर्तिमूलेन कल्पयेत्। अवाह्यपूजयेद्देवं वक्ष्यमाणविधानतः सूर्यादींश्चतुरोदिक्षु विदिक्ष्वन्यं समर्चयेत्। अंगपूजा यथा पूर्वं नेत्रमीशानदिग्गतं। ग्रहानष्टौ ततो बाह्ये लोकपालास्ततः परम्। अर्घप्रधानं प्रजपेन्मत्री मार्त्तंडभैरवं। इतिसिद्धमनुर्मंत्री साधयेदिष्टमात्मनः॥शाल्याज्यतिलबिल्वानां लक्षहोमाद्भवेन्निधिः॥राजवृक्षसमुद्भूतैः पुष्पैर्होमो रमाकरः। जपाकुसुमहोमेन वशबल्याचिरान्नृपान्। मातुलिंगफलैर्हुत्वा धनमिष्टं लभेत सः। इमं मंत्रं जपन्मर्त्यः कांतिं पुत्राबलं द्युतिं वित्तार्द्धि ममितां लक्ष्मीं सौभाग्यमपि साधयेत्। वियदर्द्धेंदुसहितं तदादिः सर्गसंयुतः अजपाख्यो मनुः प्रोक्तोव्यक्षरः सुरपादपः। ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छंद इरितं। देवता जगतामादिः संप्रोक्तो गिरिजापतिः हसाषड्दीर्घयुक्तेन कुर्यादंगक्रियां मनोः। उद्यद्भानुस्फुरिततडिदाकारमर्द्धां विकेशं पाशाभीतीवरदपरशू संदधानं कराग्रैः। दिव्याकल्पैर्नवमणिमयैः

---

तेन सांप्रदायिकव्याख्येव गरीयसीत्यलं। अत्रनेत्रांगोत्कर्षे तन्मंत्रोत्कर्षोपिज्ञेयः न्यायसिद्धत्वात्। ध्यानमाह। हेमिति प्रवालं च तेन रक्तमित्यर्थः तदुक्तं नारायणीये। सिंदूरारुणमीशानं वामार्घदपि तं र विमिति। सृणिरंकुशः तद्वक्त्रं चतुर्वक्त्रं। तदुक्तं नाराणीये। पाशांकुशधरं देवं साक्षमालं कपालिनं। खड्वांगाज्वारिशक्तीश्च दधानं चतुराननमिति। दक्षायूर्ध्वयोराद्ये रविं वा मांतमायुधानि ध्येयानि। त्रिनयनेत्यनेन द्वादशनेत्रत्वमुक्तं। अष्टबाहुं द्विषट्काक्षमिति नारायणीय उक्तः वल्लभार्द्धमितिवामे। दीप्तादिभिर्युक्ते पीठे सौर इत्यर्थः उषादिकाः। संपूज्येति पीठमंत्रात्पूर्वमतकर्णिकायामितिज्ञेयं। आसांबीजेपि विशेषोनारायणीये उक्तः यदाहु व्यसेदुषां प्रभां सध्यां प्रज्ञादिश्च जवकर्णिके दंडि दीर्घस्वनामादि वर्णैरावाहयेत्तत इति। न्यसेदित्यनेन पाठन्यासेप्ययं क्रम इत्युक्तं। पूजयेद्देवमिति। बिंबबीजपुठोक्ततेननमोन्त त्रबीजेन। यजेद्यथोपचारांतेबिंबेन हृदयेन चेत्युक्तः विदिक्ष्वन्यमिति पंचमं दिवाकरं। यथापूर्वमिति। चतुर्थोक्तरीत्या नेत्रमिति तेन ईशानदिशि अंगद्वयपूजनं यहानिति पूर्वमंत्रोक्तक्रमेण ततः परमिति वज्रादिभिः अर्घप्रधानमिति। पूर्वोक्तमर्घविधानमत्रापि कुर्यादित्यर्थः साधयेदिष्टमित्युक्ता तदेवाह शालीति। बिल्वेति। बिल्वफलानि तदुक्तं सर्पिर्व्रीहि तिलैर्बैल्वैः फलैर्लक्षं हुनेन्निधिरिति। लक्षहोमादिति। पंचविंशतिसहस्रमित्याप्रत्येकं भवेन्निधिरिति मंत्रिण इति शेषः लभेन्निधिमिति वा पाठः। अजपामंत्रमाह वियदिति। अग्नीषोमात्मकत्वादस्याचपटलदुक्तिः तयोराद्यंतयो रुक्तेर्वियत् हः अर्द्धेदु बिंदुः तदादिः सः सर्गोविसर्गः द्व्यक्षरः सुरपादप इत्यनेनैतदुक्तं भवति। जपकाले एवं ध्यायेदिति। तदुच्यते। मंत्रोच्चारणकाले मंत्रं सुषुम्णा रंध्रपूर्णं विश्वरूपं सदानंदात्मकं सर्वविषकं ब्रह्म ध्यात्वा तत्प्रभया विश्वसर्वांगमात्मानंअर्द्धनारीश्वररूपं षड्विंशकमोश्वरं चिंतयेत्। पिंगला रंध्रस्थसादिबीजं पंचविंशकं पुरुषीषजरूपं प्राणात्मना ध्यात्वा द्वितीयबीजमिडारंभ्रमध्यस्थ चतुर्विंशकप्रकृतिरूपमा

शोभितं विश्वमूलं सौम्याग्नेयं वपुरवतुवश्चंद्रचूडं त्रिनेत्रं। भानुलक्षं जपेन्मंत्रं पायसेन ससर्पिषा। दशांशं जुहुयात्सम्यक् ततः सिद्धो भवेन्मनुः। दीप्तादि पूजिते पीठे प्रागुक्ते पूजयेद्विभुं। मूर्त्तिं मूलेन संकल्प्य यजेदंगादिभिः सह। ऋतुं वसुं नरवरौ दिग्दलेषु विदिक्ष्वथ। अर्चयेद्दत्तजां गोजामज्वाख्यामद्रिजां पुनः। लोकेश्वरांस्तदस्त्राणि पूजयेद्देवमन्वहं। अर्घं च विधिवद्दद्यात्प्राक् प्रोक्तेनैव वर्त्मना। मंत्राद्यमातृकापद्म पूर्णकुंभं निधाय तं। पिधाय वामहस्तेन न्यस्तमंत्रेण संयतः। अष्टोत्तरशतं मंत्रं जपेत्तोयं सुधामयं। स्मृत्वा तेनाभिषिंचेद्यं समवेद्विगतामयः आयुरारोग्यविभवानामिताल्लभते नरः। अनेनैव विधानेन विषार्त्तो निर्विषो भवेत्। इंदुभ्यां विगलत्सुधाय रचितं मंत्रांत्यबीजं ततः प्रचर्येतत्परमामृताई शशिना संसिक्तमाद्यं स्मरन्।

---

त्मना चिंतयेत्। विश्वरूपान्मंत्रान् दीपाद्दीपांतरप्रभव निर्गच्छंतौ वामदक्षिणभागौ इडापिंगले परिपूर्णसुषुम्णाया स्त्रीपुरुषचिन्हितौ ततोध्यायेत्। हं बीजं सः शक्तिः इसीति। संयुक्तेन। सांप्रदायिका अन्यथा षडंगमाहुः सूर्यात्मने हृत्। सोमात्मने शिरः निरंजनात्मने शिखा। निराभासात्मने कवचं। अव्यक्तात्मने नेत्रं अननुसूक्ष्मः प्रचोदयात्मने अस्त्रं। ऋतुमित्याद्यैरेभिरिति केचित्। वामोर्ध्वादि दक्षिणोर्द्धांतमायुधध्यानं भानुलक्षं इदशालक्षं प्रागुक्ते पीठे मूर्तिं मूलेन संकल्प्य विभुं अंगादिभिः सह प्रयजेदिति अन्वयः आदिशब्दार्थमाह ऋतुमित्यादि मंत्रेति अजपाद्यक्षरार्थिके मातृकार्चा पद्मे। संयत इत्येननैतदुक्तंभवति। वामहस्ततले चंद्रमंडलं ध्यात्वा तन्मध्ये मंत्रं मंचिंत्यतेन हस्तेन तन्मुखं पिधायेति। स्मृत्वेति। पूर्वेणसंबध्यतेयमति लिंगमविवक्षितं। नारी नरो वा विधिनाभिषिक्त इत्युक्तेः इंदुभ्यामित्यंत्यबीजगाभ्यां विसर्गावयवविंदुभ्यां तत इत्यंतबीजात्। तत्र प्रकारः मनोरमप्रदेशे पद्मासने उपविश्य सुषुम्णाग्रस्थिताधोमुखसहस्रदलपद्मकर्णिकामध्ये विसर्गचंद्रमंडलद्वयरूपेण ध्यात्वा तस्यां चंद्रमंडलद्वया द्विगलितवहलसुधाधारया संसिच्य माममनाहतकमलकर्णिकागतं सकारं संचिंत्य सुषुम्णा रंध्रेण सकारनिर्गतसुधारसेनाभिषिंच्य मानं परिपूर्णसुधामयं मणिपूरस्थं बिंदुं ध्यात्वा ततः स्रवदमृतधारा परिपूर्णं मूलाधारस्थितं हकारं चिंतयित्वा ततो मृतरसपरिपूर्णं मंत्राक्षरामृतसंसिक्तमात्मानं परमानंदसंदोहनिमग्नमिव ध्यायेदिति अस्य जीवमंत्रस्य तंत्रां तरोक्तो विशेष उच्यते। ईश्वरउवाच। अजपा राधनंदेवि कथयामि तवान घेयस्य विज्ञानमात्रेण परंब्रह्माधिगच्छति हंसः पदंपरेशानि प्रत्यहं जपते नरः मोहांधोयो न जानाति मोक्षस्तस्य न विद्यते श्रीगुरोः कृपया देवि ज्ञायते जपते ततः तस्योच्छ्वासैस्तन्निश्वासैस्तदा बंधक्षयो भवेत् दुष्च्छासे चैव निश्वासे हंस इत्यक्षरद्वयं तस्मात्प्राणस्तुहंसाख्य आत्माकारे संस्थितः नाभिरुच्छासनिश्वासा हृदयाग्रे व्यवस्थिताः षष्टिश्वासैर्भवेत्प्राणः षट् प्राणा घटिकामता षष्टिर्नाड्या अहोरात्रं जपसंख्या जपा मनोः एकविंशति साहस्रं षट्शताधिकमीश्वरि प्रत्यहं जपते प्राणः स्वंदानंदमयीं परां उत्पत्तिर्जपआरंभो मृतिरस्य निवेदनं विनाजपेन देवेशि जपो भवति मंत्रिणः अजपेयं ततः प्रोक्ताभवपाशनिकृंतनी एवं जपं महेशानि प्रत्यहं विनिवेदयेत् गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि जीवात्मने क्रमेणैव तथा च परमात्मने षट्शतानि सहस्राणि षडेव च तथा

मंत्री मंत्रमिम जपेद्विषगदोन्मादाय मृत्युज्वरान् । जित्वा वर्षशतं विशिष्टविभवो जीवेत्सुखं बंधुभिः । व्याहृ तित्रयमग्निः स्याज्जातवेद इहावह । सर्वकर्माणि संभाष्य साधयाग्निप्रि यां ततः। ताराद्योयं मनुः प्रोक्तः पंचविंशतिवर्णवान् । ऋषिर्भृगु र्भवेच्छंदो गायत्रं देवता नलः विभक्तैः पंचभिः षड्भिश्चतुर्भि पंचभि स्त्रिभिः। द्वाभ्यामंगक्रियाप्रोक्ता वर्णैर्मूलमनोः क्रमात् । अंसासक्तसुवर्णमाल्यमरुणस्रक्चंदनालंकृतं ज्वाला पुंजजटाकलापविलसन्मौलिं सुशुक्लां

---

पुनः षट्सहस्राणि च पुनः सहस्रं च सहस्रकं पुनः सहस्रं गुरवे क्रमेण तु निवेदयेत् । आधारे स्वर्ण वर्णाभेवादिसांतानि संस्मरेत् द्रुतसौवर्णवर्णानि दलानि परमेश्वरि स्वाधिष्टाने विद्रुमाभेवादिलांता नि च स्मरेत् विद्युत्पुंजप्रभाभानि सुनीलमणिपूरके । डफांतानि महानीलप्रभानि च विचिंतयेत् पिंगवर्णे महावह्नि कर्णिकाभानि चिंतयेत् । कादिठांतानि यत्राणि चतुर्थेनाहते प्रिये विशुद्धौ धूमव र्णे तु रक्तवर्णान्स्वरान्स्मरेत् आज्ञायां विद्युदाभायां शुभ्रौ हक्षौ विचिंतयेत् कर्पूरद्युतिसंराजत्सह स्रदलनीरजे नादात्मकं ब्रह्मरंध्रं जानीहि परमेश्वरि एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि जपं निवेदयेदेन मन्त्रोराजभवं प्रिये अजपा नामगायत्री त्रिषु लोकेषु दुर्लभा अजपां जपतो नित्यं पुनर्ज न्म न विद्यते अजपा नाम गयत्री योगिनां मोक्षदायिनी । अस्याः संकल्पमात्रेण नरः पापैः प्रमु च्यते । अनया सदृशी विद्या अनया सदृशो जपः अनया सदृशं पुण्यं न भूतं न भविष्यतीति । अग्निमंत्रमाह । व्याहृतीति । अग्निरिति स्वरूपं विसर्गस्य संधौ रेफः अग्निप्रियास्वाहा प्रणवशक्ति पुटित इति केचित् । अोकामेः अोबीजादिर्जसव्यः प्रणवोबीजं स्वाहाशक्तिः व्याहृतित्रयं । ततो ग्निप्रियाताराद्योयं । मनुरित्यनेन सप्ताक्षरः समृध्यग्निमंत्रोपि सूचितः तदुक्तमाचार्यैः । वियतोदग्र मोविसर्गयुक्तो सुवसर्गौ भगुलांत षोडशाचः हुतभुग्दयिता भुवादिकोयं मनुरुक्तः स्वसमृद्धिदः क ग्नोरिति । अस्य प्रणवो बीजं स्वाहाशक्तिः एतन्मंत्रोक्तमेवर्ष्यादि । हिरुक्ताभिर्व्याहृतिभिः षडंगं ध्यानं तु शक्ति स्वस्तिकपाशान्सांकुशवरदाभयानि दधल्लिमुखः मुकुटादिविविधभूषोवताच्चिरं पा वकः प्रसन्नमुखः । जपेदिमं मनुन्मंतु लक्षमादराद्दशांशतः प्रतिजुहुत्ययोंधसा । ससर्पिषा सुसिततरै स्तु पाष्टिकैरिति । पूजा तु वक्ष्यमाणक्रमेणैवेति । अग्निरित्यादि स्वाहांतो पि पृथक् मंत्र इत्यपि सूचितं तदुक्तं । प्रयोगसारे । मंत्रोप्यग्निर्जातवेद इहावहसमन्वितः सर्वकर्माण्यतः साधय स्वाहेति क्रमोदित इति । अपेचितार्थद्योतनिकायामप्येतादृश उक्तः हिवेदवेदेषु वन्हिद्विवर्णैरंगकल्पनेति ऋष्यादि ध्यानपूजादिकं समानमेव । आयुधध्यानं वामाद्यूर्ध्वयोराद्ये तदधस्थयोरन्येएव मांतं । ध्यानांनंतरं सप्तजिह्वाख्यमुद्रां प्रदर्शयेत् ॥ तल्लक्षणं यथा । मणिबंधस्थितौ हस्तौ प्रसृतां गुलिकौ करौ ॥ कनिष्ठां गुष्टयुगले मिलित्वांतः प्रसारयेत् ॥ सप्तजिह्वाख्यमुद्रेयं वैश्वानरवशंकरीति ॥ इयं सर्वाग्निमंत्रसाधारणीति गुरोर्लब्धमनुर्मंत्रोऽयंचतुर्दश्यामुपोषितो जपेदित्यन्वयः चतुर्दश्यमिति चै- त्रकृष्णचतुर्दश्यां । तदुक्तं वत्सरादेश्चतुर्दश्यां पिनादावेव दीक्षितः मंत्रं द्वादशसाहस्रं जपेत्सम्यगुपो- षित इति । मधुरोत्तरैः शर्करादि मधुरद्रव्याधिकैः अपरं दिनमिति शुक्लप्रतिपदं । तदुक्तं परेद्युः प्रतिपद्येतैर्जुहुयादर्चिते नल इति । नारायणीये च । मन्वादिषु दिगंतेषु तिथिष्वष्टोत्तरं शतमि-

शुकं । शक्तिस्वस्तिकदर्भमुष्टिकजयस्रक्स्रुकाभीवरान्दोर्भिर्बिभ्रतमंचितत्रिनयनं रक्ताभमाग्निं भजे । गुरोर्लब्ध्वमनुर्मंत्री चतुर्दश्यामुपोषितः। जपेद्वादशसहस्राणि शुद्धाचारोजितेंद्रियः। अमावास्यादिने विप्रान् भोजयेन्मधुरोत्तरैः । भक्ष्यभोज्यैर्यथा शक्तिः दद्यात्तेभ्योत्र दक्षिणां । भुक्तास्वयं समानीय होमद्रव्याणि शोधयेत् । अपरं दिनामारभ्य होमं कुर्यादतंद्रितः क्रमाद्वटसमिद्व्रीहि तिलराजी हविर्घृतैः। प्रत्येकमष्टोत्तरशतं जुहुयाद्दिनशः सुधीः। दशाहमेवं निर्वर्त्य विधानेन विधानवित् । दत्वापूर्णाहुतिं सम्यगेकादश्यां द्विजोत्तमान् । संपूज्य तर्पयेद्विद्वैर्यथा विभवमादरात् । गुरवे दक्षिणां दद्यादरुणां गां पयस्विनीं । वांससि धनधान्यानि दत्वा संप्रीणयेत्पुनः। स्वमंडलांतं प्रयजेत्पीठं सनवशक्तिकं। पीता श्वेतारुणा कृष्णा धूम्रा तीव्रा स्फुलिंगिनी । रुचिरज्वालिनी प्रोक्ता कृशानो नवशक्तयः। स्वबीजेनासनं दद्यान्मूर्त्तिमूलेन कल्पयेत् । तत्र संपूजयेद्वह्निं विधिना प्रोक्तलक्षणं । अंगपूजां पुराकृत्वा मूर्त्तरष्टौदले ष्विमाः। जातवेदा सप्तजिह्वोहव्यवाहनसंज्ञकः। अश्वोदरजसंज्ञोन्यः पुनर्वैश्वानराव्हयःकौमारतेजाः स्याद्विश्वमुखोदेवमुखः परः। अर्चास्व स्तिकशक्तिभ्यां विराजितकरांबुजाः। लोकेशानर्चयेद्वाह्ये वज्राद्यायुधसंयुतान् ॥ इतिसंपूजयेन्नित्यं जपेत्साग्रं सहस्रकम् । जायते वत्सरादर्वाग्धनधान्यसमृद्धिमान् ॥ साज्यमन्नं प्रजुहुयाद्वत्सराल्लभते श्रियम् ॥ कुसुमैर्ब्रह्म वृक्षस्य दधिक्षौद्रघृत प्लुतैःकरवीरप्रसूनैर्वा मंडलात्स्यात्समृद्धिमान् ॥ षण्मासं कपिलाज्येन जुहुयाद्वत्सरांतरे ॥ तस्य संजायते लक्ष्मीः कीर्तिस्त्रैलोक्य वंदिता ॥ शालिभिर्जुहुयान्नित्यं विधिनाष्टोत्तरंशतम् ॥ व्रीहि गोमहिषाद्यैर्भवनंतस्य पूर्यते । तिलहोमेन महतीं लक्ष्मीमाप्नोति मानवः। पालाशाबिल्वखादिर शमी दुग्ध महीरुहम् ॥ विकंकतारग्वयोः समिद्भिः करवी-

---

ति क्रमात् वटेति षड्द्रव्याणि । नारायणीये तु सप्तद्रव्याण्युक्तानि । न्यग्रोधसमिधो व्रीहि तिलराजो घृतान्विताः सपायस घृतानित्यमिति । तथा तै र्द्रव्यैः सप्तभिः पृथगिति ॥ एवं विधानेन दशाहं निर्वर्त्य विधानविदेकादश्यां पूर्णाहुतिं हुत्वा द्विजोत्तमान्सम्यक्संपूज्य तर्पयेदित्युपचारैरित्युक्तं स्वमंडलांतं वह्निमंडलांतं स्ववीजेनेति रमित्यनेन रं वह्नियोगपीठाय नम इति आसनमंत्रः विधिनेति षोडशोपचरैः प्रोक्तलक्षणमुक्तध्यानं ॥ मूर्त्तीनां कथनमन्यमूर्तिनिवृत्त्यर्थं । प्रयोगसारनारायणीययोरन्यामूर्त्तय उक्ता ॥ अग्निर्वैश्वानरः पश्चात्परः प्रोक्तो हुताशनः हुतवर्त्मा जातवेदास्ततश्चापि हुतावहः भूयोदेवमुखः सप्त जिह्वश्चेत्यग्निमूर्त्तय इति ॥ एताभ्याहृति चयरहिते मंत्रे ज्ञेयाः जुहुयादिति षण्मासं विधिनाष्टोत्तरंशतमिति विधिनेति प्रतिप्रतियदं चेत्युक्तं नित्यं जुहुयात्प्रतिप्रतिपदं चेति विकल्पः एकेन नित्यमष्टोतरंशतमिति ॥ दुग्धभूरुहएकस्य यस्य चिदुग्रहणादरुणोत्पले रक्तकमले रक्तकुवलयैरित्यापि । यत्कोशश्च रक्तोत्पलं कोकनदं रक्ताब्जे रक्तसंध्यक इति ॥ अतः सप्तसमिधः सप्तपुष्पाणि एका दूर्वेति । पंचदश द्रव्याणि तत्र प्रतिपदादिपर्व पर्यंतं प्रत्यहमेकेकेनाष्टोत्तरशतं जुहुयात् । एवं प्रतिपक्षं यावत्षण्मासपूर्त्तिः अथ वा प्रतिपत्स्विति पक्षे एकेन एकैकेन तेन तस्मिन् दिवसे पंचदशभिर्द्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया जुहुयात् । तुर-

रजैः । प्रसूनैः कुमुदैः पद्मैः कल्हारैररुणोत्पलैः । जातीप्रसूनैर्दूर्वाभिर्नित्यमष्टोत्तरंशतम् ॥ एकेन जुहुयान्मन्त्री प्रतिपत्स्वथ वा सुधिः साधयेदखिलान्कामान् षण्मासान्नात्र संशयः उत्तिष्ठ पुरुषब्रूयाद्धरि पिंगलतत्परम् ॥ लोहिताक्षपदं देहि मेददाय पठयम् ॥ चतुर्विंशत्यक्षरात्मा-समृद्धिमनुरीरितः॥ऋष्यादयः पुराप्रोक्ताः षड्भूतकरणैस्त्रिभिः॥चतुर्भिर्युगले नार्णैर्मूलमन्त्रस-मुद्भवैः । विदधीत षडंगानि जातियुक्तानि मन्त्रवित् ॥ स्वर्णाश्वत्थविनिर्गतं हुतवहं सिंदूर-पुंजप्रभं ज्वालाभिर्निचितांगरोमानिचयं कांत्याजगन्मोहनम् ॥ अश्वाकारमनर्घरत्नविलस-द्भूषालसत्कन्धरं रत्नैरिन्द्रियनिर्गतै र्वसुमतीमाछेदयंतं स्मरेत् ॥ लक्षं मनुं जपेदेनं पयोन्नेन ससार्पिषा । दशांशं जुहुयाद्वन्हौ तुरगाग्निमनुस्मरन् ॥ पीठे प्रागीरिते भ्यर्च्यै दंस्तन्मूर्त्तिभिः सह ॥ अशायाल्लैस्तदीयास्त्रैरर्चयेद्धव्यवाहनम् ॥ प्रातः स्नानरतो मन्त्री सहस्रं योजयेन्मनुम्॥ जित्वा रोगान्सुखं जीवेत् श्रियावर्षशतं वरः॥त्दत्नप्रमाणे जले स्थित्वा भानुमालोकसंयतः चतुः सहस्रं प्रजपेन्नित्यं सम्वत्सरावधिः । अपमृत्युभयं रोग कृत्यादारिद्र्य संभवान् ॥ क्लेशान्निर्ज्जित्यतेजस्वी जीवेद्वर्षशतं पुनः ॥ कृत्तिकायां प्रतिपदि शालिहोमो धनप्रदः । द-ध्ना शमीद्भिर्वा प्रतिपत्सु भवेद्धनम् । इष्टावाप्तिर्भवेदाज्यैः पद्मैः ग्राममवाप्नुयात् । तिलै-र्ज्योतिष्मतीभूतैरिपुराज्यं जयेन्नृपः। अश्वत्थसमिधोमेषी घृताक्ताजुहुयान्नरः। कन्यामिष्टामवा-प्नोति सापि तं प्राप्नुयाद्धनम् । शुद्धाज्येन कृतो मोहो ज्वरनाशकरः। स्मृतः सप्ताहं जुहु-यान्मन्त्री बन्धूकः कुसुमैःशुभैः। साग्रसहस्रमचिरान्महतीश्रियमाप्नुयात् ॥ मातं क्षीरेण होमेन जीवेद्वर्षशतं नरः अष्टोत्तरशतं नित्यं हविषा मृगमुद्रया ॥ जुहुतो जायते लक्ष्मीर्द्धनधान्य-समृद्धिदा ॥ प्रतिमासं प्रतिपदि जुहुयादयुतं घृतैः। श्रीभवेन्महती तत्र षण्मासादनपायिनी । अरुणैरुणैरुत्पलैः फुल्लैर्मधूरत्रय संयुतैःजुहुयाद्वत्सरार्द्धंयः सभवोर्दिदिरापतिः । अरुणाब्जैस्त्रि-मध्यक्तैर्जुहुयादन्वहं सुधीः सहस्रं वत्सरार्द्धेन भवेद्भूमिपुरन्दरः वत्सरं जुहुतस्तुस्याल्लक्ष्मी-

---

गाग्नि मंत्रमाह । उत्तिष्ठेति । हृदयं स्वाहा ॥ समृद्धि मनुरित्य नेन विनियोगोक्तिः मंत्रस्य हलो बीजानि । स्वराः शक्तयः प्रणवो बीजं स्वाहा शक्ति रिति पद्मपादाचार्याः प्रणवाद्य इति केचित् ॥ नृसिंहबीजाद्य इत्यन्ये । लक्ष्मीबीजाद्य इत्यपरे । मृत्युंजयाद्य इत्यपिके च न । प्रयोगे देहिमे एतत् पूर्वं साध्ययोगोपि कार्यं। प्रयोगसारनारायणीययोर्लोहिताक्षमेपदद्वयातिरिक्तः प्रणवादिविं-शत्यक्षरएवोक्तनुः तदुक्तं । उत्तिष्ठपुरुषे त्युक्त्वा हरिपिंगलदेह्यथ॥ददापयेति तारादिः स्वाहांतो मंत्र ईरित इति ॥ चतुस्त्रीषु द्व्यद्वियुगैर्वर्णैस्त्रांगं पुरीदितमिति भूतैरिति पञ्चभिः करणैश्चतुर्भिः लक्षं मनुं कथेदिति तत्र प्रकारोपेक्षितार्थद्योतनिकायां कृत्तिका विशाखयोर्म्मध्ये अष्टमीचतुर्द्दशी वा यदि भवति तदावाभिजित्काले पुरश्चरणमारभ्य शमीरक्तचंदनकरवीरकाणामन्यतमेनाग्निप्रति-मामापाद्य मूलेनावाहनादि विसर्गांतं कर्म कुर्वन् त्रिषवणस्नायी त्रिसहस्रं त्रिशतं चतुस्त्रिंशद-धिकं नित्यं जप्त्वाभिधारितशमीसमिद्भिस्त्राष्टक् पायसेन वा तदष्टं जुहुयान्मासं गुरोश्च गामपि दद्यात्सिद्धो भवति उभयोः संध्ययोर्म्मध्याह्ने वा करवीरपुष्पैरर्चयेदिति प्रागीरित इत्यध्यर्वाह्नते

रिन्द्रेण वाञ्छिना। जुहुयादमृताखण्डैः पयोक्तैः सप्तवासरम्। त्रिसहस्रंप्रतिदिनन्मन्त्राविद्विजितेंद्रियः।कृत्याद्रोहज्वरोन्मादरोगान्‌जित्वानिरंतरम्। जीवेद्वर्षशतं भूत्वा तेजसा भास्करोपमः कखीर जपा बिल्वपलाश नृपभूरुहाँ। प्रसूनैः कुमुदैः फुल्लैः कुरण्टजाति सम्भवैः। पुष्पैर्हुत्वा त्रिमध्वक्तैर्मंत्री प्रतिपदं प्रति। आप्नुयान्महतीं लक्ष्मीं वत्सराद्वाञ्छिताधिकां। आदाय तन्दुलं प्रस्थ निर्मलं साधुशोधितम्॥ गोदुग्धेन हविः कृत्वा कवलं तेन कल्पयेत्॥ आज्याक्तं तत्समादायपूजिते हव्यवाहने॥ गन्धपुष्पादिभिः सम्यग्जपित्वाष्टोत्तरंशतम्॥ जुहुयात्प्रतिपत्स्वग्निं ध्यात्वा तुरगविग्रहम्॥ जायते वत्सरादर्वाग्लक्ष्मीस्त्रैलोक्यमोहिनी॥ मन्त्रेणानेन सञ्जप्तां वचांखादेद्दिनागमे॥ भारती निवसेत्तस्य मुखांभोजेति निश्चला॥ अष्टोत्तरशतं जप्तं जलं प्रातः पिबेन्नरः। जठराग्निर्जले तस्य घृतेनैव हुताशनः। कृत्वा नवपदात्मानं मण्डलं प्रागुदीरितम्॥ कलशान्नवकल्याणान्स्थापयेत्प्रोक्तवर्त्मना॥ क्षीरवृक्षत्वगुद्भूतैः क्वाथैस्तान्पूरयेत्क्रमान॥ वस्त्रादिभिरलंकृत्य नवरत्नानि निक्षिपेत्॥ मध्ये सम्पूजयेदग्निं मूर्तीरष्टौदिशं क्रमात्॥ कुम्भेषु गन्धपुष्पाद्यैर्धूपदीपैर्मनोरमैः। स्पृष्ट्वाजपेत्ततः कुम्भान् मन्त्रमष्टोत्तरंशतम्॥ अभिषिंचेततः साध्यं विनीतदक्षिणम्॥ ज्वरग्रहमहारोग दारिद्र्यादीन्विजित्यसः। जीवेद्वर्षशतं सम्यगभिषिक्तः श्रिया सह॥ इति श्रीशारदातिलके चतुर्दशः पठलः॥ १४॥ अथ वक्ष्ये महामन्त्रान्विष्णोः सर्वार्थसाधकान्॥ यस्य संस्मरणात् सन्तो भवाब्धेः पारमाश्रिताः। तारं नमः पदं ब्रयान्नरौ दीर्घसमन्वितौ॥ पवनोणाय मन्त्रो

---

तत्र कल्पतरुस्थाने स्वर्णाश्वत्थः पूजनीयः ध्याने तथोक्तेः मृगमुद्रयेति मृगमुद्रालक्षणं तु। मिलित्वा नामिकांगुष्टमध्यमाग्राणि योजयेत् शिष्टांगुल्युच्छ्रिते कुर्यान्मृगमुद्रेयमीरितेति॥ अमृता गुडूची नृपभू रुट्। राजवृक्षः। हुत्वेति प्रत्येकं एकेकशः शतमिति॥ आचार्योक्तेः गोदुग्धेनेति। रक्तवर्णगोदुग्धेन तदुक्तं प्रयोगसारे शाले यैस्तंदुलैः प्रस्थैः शोणगोक्षीरसाधितं पिंडं घृताक्तं तु जुहुयादाज्यमिश्रितमिति॥ सम्यक् जपित्वेति॥ लक्ष्मी बीजाद्यमित्युक्तं॥ कवलहोमानन्तरमष्टोत्तरं सहस्रं शतं वा घृतेन जुहुयादिति॥ अपेक्षितार्थद्योतनिकार आहस्म॥ नवपदात्मानं नवनाभं॥ प्रागितितृतीये॥ प्रोक्तवर्त्मना षष्टपटलोक्तरीत्या॥ इति श्री शारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां चतुर्दशः पटलः॥ १४॥ श्रीरामाय नमो नमः॥ श्रीराम॥ क्रमप्राप्तान्विष्णुमंत्रानाह अथेति सर्वार्थेति सकामं प्रति विनियोगोक्तिः मुमुक्षुंप्रत्याह यस्येति मंत्रमुद्धरति तारमिति नरौनकाररेफौ दीर्घशातेन समन्वितौ तेननारा इति। अत्र नमः शब्दस्वरोक्त्वे गुणे च उंकार इति ज्ञेयं। पवनोयः णायेति स्वरूपं वसुचराष्टाक्षरः तदुक्तं मंत्रतंत्रप्रकाशे॥ नाभसं पञ्चमे षष्टे स्थितं वर्णद्वयं क्रमात्॥ द्वितीयो मिश्रसंयुक्तस्तृतीयतः स्यात्तु पञ्चमः वह्निर्वायुस्ततः प्रोक्तौ सानंतौ त्रिचतुर्थकौ॥ चतुर्थं पञ्चमस्तद्वन्मैवांते वायुवर्णकं इति॥ प्रणवो बीजं आयेति शक्तिः। तदुक्तं मंत्रतंत्र प्रकाशे॥ ज्वलन्निभः श्रुतेरादिर्विंदमान्विष्णु रव्ययः बीजमष्टाक्षरस्य स्यात्ते नाष्टाक्षरता भवेत्॥ अथ पञ्चदशाद्वर्णान् केवलं व्याजनी कृतान्। उत्तरोमंत्रशे-

यं प्रोक्तो वस्वक्षरान्वितः । साध्यनारायणः प्रोक्तो मुनिश्छंद उदाहृतम् ॥ मन्त्रस्य देवी गायत्री देवताविष्णुरव्ययः । क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतः वीरोल्काय शिखा प्रोक्तामुल्काय कवचं स्मृतं ॥ सहस्रोल्कायास्त्रमुक्तमंगक्लृप्तिरियं मता ॥ भूयोवर्णैर्मनोःषड्भिः षडंगानि समाचरेत् ॥ अत्रशिष्टौ पुनर्वर्णौ विन्यसेत्कुक्षिपृष्ठयोः ॥ बद्धदिक् चक्रमंत्रेण मंत्रवर्णांस्तनौ न्यसेत् ॥ अधारे हृदये वक्त्रे दोःपन्मूले-

---

षस्तु शक्तिरित्यस्य कथ्यत इति ॥ साध्यनारायणो नामांतर्यामीति देशिकाः । तदुक्तं मंत्रतंत्रप्रकाशे ॥ अन्तर्यामी ऋषिः छन्दो गायत्रीति ॥ प्रत्तग्रर्णमृष्यादि यथा ॥ गौतमश्च भरद्वाजो विश्वामित्रऋषिस्तथा ॥ जमदग्निर्वसिष्टश्च कश्यपोत्रिश्च कुम्भजः । गायत्र्युष्णिगनुष्टुप्च बृहती पंक्तिरेव च । त्रिष्टुब्जगत्यौ च विराट् वसवोष्टौ च देवता इति ॥ पञ्चांगमंत्रोद्धारमाह । क्रुद्धोल्कायेत्यादि । चतुर्थ्यंतोद्धारेण सर्वेषां स्वाहांतता जातिः पूर्वमुक्ताः उक्तं मंत्रतंत्रप्रकाशे । उल्के:क्रुद्धमहावीरद्युसहस्रेति पूर्वके । एषां विभक्तियुक्तानां भवेदन्तेग्नि वल्लभेति ॥ अन्यत्रापि । क्रुद्धोल्कादि यदैर्वह्निजायांतैर्जाति संयुतै रिति अङ्ग क्लृप्तिरियं मतेत्यनेन पूर्वकरन्यासः सूचितः स यथा । कुर्य्यात्करयोर्विधिवत्सृष्ट्यादि न्यासमष्टमंत्रार्णैः दक्षिणतर्ज्जन्याद्यार्द्धाष्टः स्वाहामतर्ज्जनी यावत् । तर्ज्जन्युभ याद्येद्वस्थितिः कनिष्ठाद्वयांतिकाक्रमतः । सृष्टेर्विपरीतःस्यात्संहारोयं करे प्रोक्तः । अष्टांगं विन्यस्यस्थिति क्रमादङ्गपञ्चकं न्यसेदिति ॥ तत्र विशेषो नारायणीये ॥ कनिष्ठादितदन्तानामंगुलीनां त्रिपर्वसु । ज्येष्ठाग्रेण क्रमात्तारश्वानष्टाक्षरान् न्यसेदिति ॥ पञ्चांगमुक्त्वाष्टांगमाहभूय इति तत्र षडङ्गवदेवषडक्षराणिविन्यस्य,पांउदराय नमः यं पृष्ठाय नमः इति कुक्षिपृष्ठयोर्न्यसेत्तदुक्तं ॥ अष्टाक्षरेण व्यस्तेन कुर्य्याच्चाष्टांगकंसुधीः सहृच्छिरः शिखा वर्म नेत्रास्त्रोदरपृष्ठक इति॥ ईशानशिवेन तूक्तं । अस्यस्याद्धृदयन्तारः शिरोनार्णः शिखाचमो ॥ नावर्णः कवचं शस्त्रं रावर्णो नयनं परः । उदरं पृष्ठमंत्यौ च वर्णौ हि नमसायुताविति ॥ अन्यत्रापि ॥ हृदयशिरः पूर्वशिखा कवचास्त्रात् उदरपृष्ठसंभिन्नैरिति ॥ इदमेव सांप्रदायिकं ॥ बद्धदिगिति छोटिकां वादयन् चक्रमंत्रेणेति अग्रिमपटले वक्ष्यमाणेन रौं क्लींचक्रेण बध्नामि इत्यादिना चतुर्थपटले सामान्याच्च मंत्रेणा दिग्बंधउक्तः अत्र मंत्रविशेषकथनाय पुनर्वचनम् ॥ मंत्रवर्णांस्तनौन्यसेदित्यनेन सृष्टिस्थितिसंहारन्यासः सूचितः यदाहुः मूर्द्धन्यक्षेणारास्ये हृदिना भौगुह्यजानुपादेषु ॥ सृष्टिरियं निर्दिष्टा नाभ्यादि हृदन्तिका स्थितिस्तद्वत् । संहारःपादाद्यौ मूर्द्धांतः कथितएष सृष्ट्यादिरिति ॥ मंत्रतंत्रप्रकाशे तु ॥ नाभावारभ्यते यस्तुहृदये च समाप्यते । स्थितिन्यासः सविज्ञेयो दृष्टादृष्टफलप्रद इति ॥ इदमेवसांप्रदायिकं।तत्रैव विशेषःविन्यसेद्वर्णमेकैकंविद्वंतंप्रवुवर्ष्टातं।तत्रांगुलीभिर्न्यासःस्याच्छिरस्येकैव मध्यमा ॥ तर्ज्जनी मध्यमाभ्यां तु चक्षुषो न्यास इष्यते ॥ अंगुष्ठानामिकाभ्यां तु मुखे न्यासः प्रकीर्त्तितः हृदये ज्ञानमुद्रास्यादंगुष्टश्च कनिष्ठिका ॥ नाभौ प्रकीर्त्तिता गुह्ये अनंगुष्ठाः प्रकीर्त्तिताः सर्व्वाजानौ च पादे च पञ्चापि परिकीर्त्तिता इति ॥ एवं पञ्चांगेष्टंगाक्षरन्यासानुक्त्वादशावृत्तिमयं विभूतिपञ्जरन्यासमाह आधारेति अत्र प्रत्येकमक्षरं प्रणवपुटितं कृत्वान्यसेत् ॥ मंत्रतंत्र

षु नासिके ॥ कंठे नाभौ हृदि कुचे पार्श्वपृष्ठेषु तत्परं ॥ मूर्द्धास्य नेत्रश्रवणघ्राणेषु तदनंतरं ॥ दोःपादसंध्यंगुलिषु धातुप्राणेषु हृत्स्थले ॥ मूर्द्धे क्षणास्य हृत्कुक्षिसोरुजंघापदद्वयम् ॥ एकैकशोन्यसेद्वर्णान् गंडांसोरुपदेषु च ॥ चक्रशंखगदांभोजपदेष्ववहितो न्यसेत् ॥ अष्टार्णोष्टप्रकृत्यात्मा ज्ञेयोसौ चतुरात्मनां । संयोगात्सूरिभिः प्रोक्तो विशिष्टो द्वादशाक्षरः । अतस्तन्मंत्रवर्णाद्या द्वादशस्वरसंयुताः । द्वादशादित्य सहिता मूर्त्तिर्द्वादश विन्यसेत् ॥ केशवाद्याः क्रमादेह वक्ष्यमाणविधानतः ॥ ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः । अर्यम्ना

---

प्रकाशे तथोक्तःप्रत्यावृत्तिसंपूर्णेन व्यापकं च ॥ तथाच पद्मपादाचार्याः मंत्री मंत्रवर्णैरिति न्यासमंत्राणां प्रणवपुटितत्वं प्रतिपर्यायं व्यापकन्याससोक्तमिति पूर्वार्द्धेनैकावृत्तिः तत्र कः समासः द्वितीयार्द्धेन द्वितीया तृतीयार्द्धेन तुर्याद्यष्टमांतं पंच तत्र दक्षकरसंधिचतुष्टयांगुष्टवर्ज्जचतुरंगुलिष्ठेका ॥ अन्ये तु दक्षहस्तसन्धित्रय पञ्चांगुलिष्वित्यूचुः एवं वामकरे द्वितीयादक्षपादे तृतीया । वामपादे चतुर्थी ॥ अन्ये तु करद्वयसंधिष्ठकापादद्वयसन्धिष्ठन्याअंगुष्टद्वयवर्जकरांगुलिषु तृतीया ॥ एवं पादांगुलिषु चतुर्थीत्याहुः हृदय एव त्वगादिषु पञ्चमी ॥ पञ्चमार्द्धेन नवमीश्लोके दशमी तत्र गण्डांसोरुचरणेषु चतुरोवर्णान्विन्यस्य चक्रशंखगदापद्म शिष्टांश्चतुरो वर्णास्तदायुधमुद्रासहिता न्विन्यसेदित्यवहितपदेन सूचितमिति संप्रदायविदः तन्मुद्रालक्षणं तु वाममुष्टेरतरेंगुष्टेदक्षिणे सरलांगुलीः वामांगुष्टःस्पृशेदस्य योजितः सरलोदरः अन्योन्या भिमुखौ हस्तौ कृत्वा तु ग्रथितांगुलीः अंगुल्यौ जध्यमेभूयः संलग्ने सुप्रसारिते ॥ गदामुद्रेयमाख्याता भुक्तिमुक्तिकरी तथा ॥ चक्रपद्म मुद्रा लक्षणे प्रागुक्ते मूर्तिपञ्जरं वक्तुं तदुपोद्घातत्वेन द्वादशाष्टाक्षरयोरैक्यमाह अष्ठेतिअष्ट प्रकृतयः प्रथमपटलोक्ताः अष्टप्रकृतय इत्यनेनाष्टतत्वन्यासः सूचितःसद्विविधः संहारसृष्टिरूपः तत्र संहारे मंत्रोनुलोमः सृष्टौ मंत्रः प्रतिलोमः तत्वानि पृथिव्यप्तेजोवाय्वाकाशाहंकारमहत्प्रकृतिरूपाणि ॥ स्थानानि तु पादलिंगहृदयमुखमूर्द्धहृदयानि समस्तसर्वतनौ चैकं सृष्टौ तत्त्वानुलोम्य वक्षेयं । तत्र प्रयोगः उं नमः पराय पृथिव्यात्मने नमः पादयोः नं नमः पराय जलात्मने नमः लिंगइत्यादि संहारे मतः सृष्टौ प्रयोगः यं नमः पराय प्रकृत्यात्मने नमः सर्वशरीरे ! णां नमः पराय महदात्मने न मोहृदीत्यादि । तदुक्तं । चितिसलिलातपलवनव्योमाहंकृतिमहत्प्रकृत्याख्यैः व्युत्क्रमगदितैरेतैक्रमगतमंत्रार्णसंयुतैर्मंत्रीचरणांधुहृदयवक्त्रकहृदयव्यापकेषु विन्यसेत् ॥ संहारोयमुदितो विपरीतासृष्टिरस्य निर्द्दिष्टेति चतुरात्मनांतुर्योक्तानां ॥ अनेन विंदुनादशक्तिशांतरूपाणां आत्मादिचतुष्टयानां शरीरे व्यापकत्वेन न्यासः सूचितः प्रयोगश्च । उं विंदुरूपात्मने नमः उं नादरूपांतरात्मने नमःउं शक्तिरूपपरमात्मने नमःउं शांतिरूपज्ञानात्मने नम इति ॥ न्यासमेवाह॥ अत इति तन्मंत्रवर्णाद्याः द्वादशाक्षरमंत्रवर्णाद्याः द्वादशस्वराः नपुंसकचतुष्टकव्यतिरिक्तातैः संयुताः द्वादशादित्य सहिताः केशवाद्या द्वादश मूर्त्तीः देहे वक्ष्यमाणविधानतः क्रमात् विन्यसेदिति संबन्धः ॥ तत्र प्रयोगः उं अं केशवधात्रभ्यांनमः ललाटइत्यादि केचन धातृसहिताय केशवाय नम इति ॥ अन्ये तु केशवाय धात्रे नम इत्याहुः कुचावितिनैकटशाक्षाभिभागो लक्ष्यते ।

हृदि मंत्रेण माधवं कंठदेशत ॥ वरुणेन च गोविंदं पुनर्दक्षिणपार्श्वके ॥ अंशेनाविष्णुमंसस्थं भगेन मधुसूदनं ॥ गले त्रिवस्वतायुक्तं त्रिविक्रममनन्तरंभ वा वपार्श्वस्थामिंद्रेण वामनाख्यमथांसके ॥ पुष्ट्याश्रीधरनामानं गलै यर्ज्जन्यसंयुतं ॥ हृषीकेशाह्वयं पृष्टपद्मनाभं ततः परं ॥ त्वष्ट्रा दामोदरं पश्चाद्विष्टुनाककुदिन्यसेत् ॥ द्वादशार्णं महामंत्रं ततो मूर्द्धनि प्रविन्यसेत् ॥ पुनः किरीटमंत्रेण व्यापकं विन्यसेत्ततः ॥ ब्रूयात्किरीटकेयूरहारंमकरकुंड-

---

पर्यमृणेति ॥ पश्चात्तेन संबध्यते। कण्ठदेशत इत्यस्याग्रिमेण संबन्धः अंशुना विष्णुमितिपश्चात्तेनेन संबध्यते ॥ अंसस्थमिति ॥ दक्षिणां सस्थं ॥ गले ग्रीवा दक्षिणभागे ॥ दक्षिणपार्श्वत इत्यतो दक्षिणपदानुवृत्तेरुभयत्र ॥ अथांसक इत्यस्याग्रिमेण संवन्धः ॥ तत्रांसके वामांके ॥ गले ग्रीवा वामभोगे ॥ वामपार्श्वस्थमित्यतो वामय दानुवृत्तेरुभयत्र। दक्षिणपार्श्वं सतद्गले ॥ तथा वा मत्रय इति ॥ अन्यत्रोभयत्र गलस्थाने कर्णमाहुः हृषीकेशाह्वयमिति पूर्वेण संबध्यते ॥ त्वष्टेत्यपि ककुदीति पृष्टगतग्रीवाभागे ॥ तदुक्तं । स्वायंभुवे नारसिंहे ॥ केशवंविन्यसेत्तात्त्र मूर्द्धदेशेथ विष्णुना । नाभोनारायणं देवं विष्णु तेन समन्वितम् ॥ माधवं हृदि विन्यस्येत् मन्मथेन च संयुक्तं गले गोविन्दसंज्ञकं ॥ विष्णुं भूतस्वरेणाथ दक्षपार्श्वे विनायकं ॥ तदन्ते भाष्टतीयेन सूदनं मधुपूर्वकं ॥ बिन्दुना शिवयुक्तेन दक्षकर्णे त्रिविक्रमं ॥ वामनं श्रीधरं चैव हृषीकेशमतःपरवामेचैकारमोकारमौकारं बिंदुनासह । बिंदुना पद्मनाभं च पृष्टदेशे तदङ्गयुक् अंत्यं ककुदिदामेन द्वादशां गमिति स्मृतं ॥ द्वादशेमानिबीजानि नादबिंदुयुतानि च ॥ आदित्याद्वादशप्रोक्ताद्वादशाक्षरसंयुता इति ॥ अन्यत्रापि ॥ केशवादि युगषड्कमूर्त्तिसिर्धाद्यपूर्वमिहिरान्नमीतगान् ॥ द्वादशाक्षरभवाः स्वरैः क्लीबवर्णरहितैः पृथग् न्यसेदिति ॥ केशवादि मूर्त्तीनां मन्त्रोद्देशाक्षक्लीबरहितत्वं गम्यते महामंत्रमष्टाक्षरं तदुक्तंमंत्रतंत्रप्रकाशे ॥ अष्टाक्षरेण सहितं विन्यसेद्द्वादशाक्षरमिति ॥ मंत्रविन्मूर्द्ध्न्यष्टाक्षरेण सार्द्धमित्यर्थं इति पद्मयादाचार्याः ॥ किरीटमंत्रमुद्धरति ब्रूयादिति । हारमित्यादौ शब्दक्रमाणि द्वितोया। मन्त्रे तु संबुध्यंतानि सर्वाणि कुण्डलमिति। कुंडलालंकृतेति मन्त्रभागः तथापि पद्मपादाचार्याः मन्त्रविन्मकरांते कुण्डलमिति सकरकुण्डलालंकृत इति पदाध्याहारः सूचित इति। मन्त्रप्रकाशेपि। तारः किरीट केयूरहारांते मकरं पदम्। कुण्डलालंकृतेत्यंते चक्र शंख गदा पद्ममितिश्री भूमिसहितस्वात्मज्योतिर्द्वयमिति स्वरूपं न तुज्योतिः पदस्य द्विरुक्तिः तथाचाचार्याः श्रीभूमिसहितस्वात्मज्योतिर्द्वपपदंवदेदिति। आयुधध्यानं तु दक्षाधोवामोर्ध्वंदक्षोर्ध्वंवामाधः क्रमेण । तदुक्तं हयशीर्षपञ्चरात्रे । पंकदंदक्षिणे। यस्य पांचजन्यं तथोपरि । वामाधस्तु गदायस्य चक्रंचोर्ध्वे व्यवस्थितम् ॥ आदिमूर्त्तेस्तु भेदोयं केशवेन प्रकीर्त्यत इति केशवलक्षणमुक्त्वा ऽधरोत्तरभावेन कृतमेतत्तु यत्र वै नारायणाख्या सा विज्ञेयास्थापिता भुक्तिमुक्तिदेति ॥ मंत्रतंत्रप्रकाशेपि ॥ सव्यान्ययाणी प्रथमे तु पद्मं बिभ्राणबृजंन्तदनन्तरं च। आद्ये गदावामकरेथ चक्रं विराजयंतं भुवनानि भासेति ॥ श्यामविशेषाश्च तत्रैव। वामे विचिंत्या कमलायताक्षी हेमाभवर्णाकमला च देवी । विभूतिकामैन

कं ॥ चक्रशंखगदांभोजं हस्तं पीतांबरं धरम् ॥ श्रीवत्सांकितवक्षोंते स्थलशद्धमुदीरयेत् ॥ श्री भूमीसहितस्वाक्षमज्योतिर्द्वयमुदाहृतम् ॥ पश्चाद्दीप्तिकरायेति सहस्रादित्यतेजसे ॥ नमोंतः प्रणवाद्योयं किरीटमनुरीरितः । एवं न्यासन्तनौ कृत्वा ध्यायेन्नारायणं परम् ॥ उद्यत्कोटिदिवाकराभमनिशं शंखं गदां पंकजं चक्रं बिभ्रतमिंदिरावसुमती संशोभिपार्श्वद्वयं ॥ केयूरांगदहारकुण्डलधरं पीतांबरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसिलसच्छ्रीवत्सचिह्नं भजे ॥ विकारलक्षं प्रजपेन्मनुमेनं समाहितः । तद्दशांशं सरसिजैर्जुहुयान्मधुरप्लुतैः । पीठे संपूजयेद्देवं विमलादिसमन्विते ॥ विमलोत्कर्षिणीज्ञाना क्रियायोगा ततः परम् ॥ प्रह्वीसत्या तथेशानानुग्राहा नवमी तथा ॥ नमो भगवते ब्रूयाद्विष्णवे च पदं वदेत् ॥ सर्वभूतात्मने वासुदेवायेति वदेत्ततः सर्वात्मसंयोगपदाद्योगपद्मपदंपुनः । पीठात्मने हृदन्तोयं मंत्रस्तारादिरीरितः ॥ दत्वानेनासनं मंत्री मूर्त्तिं मूलेन कल्पयेत् ॥ आवाह्य पूजयेद्देवं सुगन्धि कुसुमादिभिः ॥ अंगान्यभ्यर्च्यमंत्रार्णान्केसरेषु समर्चयेत् ॥ दलेषु वासुदे-

---

सुरत्नहारप्रेम्णा स्रजन्तो नयने हरौ या । तदादेवं सुवर्णाभं चिन्तये द्द्रव्यभूषितम् ॥ चेद्धान्यसुवर्णानां प्राप्तये धरणीं स्मरेत् । देवीं दूर्वादलश्यामां दधानां शालिमञ्जरीं चिन्तयेद्भारतीं देवीं वीणापुस्तकधारिणीं दक्षिणे देवदेवस्य पूर्णचन्द्रनिभाननां । क्षीराब्धिफेन पुञ्जाभे वसानां श्वेतवाससी ॥ भारत्यासहितं विष्णुं ध्यायेद्देवं परात्परं देवदेवार्थसंवेदी जायते सर्ववित्तम इति । नारायणायेति ॥ प्रणवद्वयमध्यस्थो नमोंतश्च सबीजकः निर्बीजो मोक्षकृन्मंत्रो यथोक्त प्रणवादिक इति । अत्र ध्यानानन्तरं श्रीवत्सकौस्तुभवनमालायुधमुद्राः प्रदर्शयेत् ॥ तल्लक्षणानि तु ॥ अन्योन्यपृष्ठकरयोर्मध्यमानामिकांगुली ॥ अंगुष्ठेन तु बध्नीयात्कनिष्ठा मूलसंश्रिते ॥ तर्जन्यौ कारयेदेषामुद्राश्रीवत्ससंज्ञिका ॥ अनामापृष्ठसंलग्नादक्षिणस्य कनिष्ठिका ॥ कनिष्ठिकान्यावध्नीयादनामादक्षतर्ज्जनी ॥ गृहीत्वा दक्षिणांगुष्ठ मध्यमा नामिका त्रयम् ॥ उत्क्षिप्यित्वा तत्र वाम तर्ज्जनी मध्यमे न्यसेत् ॥ दक्षिणे मणिबन्धे च वामांगुष्ठं तु योजयेत् ॥ मुद्रेयं कौस्तुभस्योक्ता दर्शनीया प्रयत्नतः स्पृशेत्कंठादि पादांतं तर्जन्यांगुष्ठनिष्ठया॥करद्वयेन मालावन् मुद्रेयं वनमालिकेति॥आयुधमुद्रालक्षणं तत्रतत्रपूर्वमेवोक्तं विकारषोडशलक्षणमं॥दत्वानेनासनंमंत्रोत्यनेनैतदुक्तम्॥आत्मपूजायामासनंदत्वाप्रासनादि गन्धांतं कृत्वा किरीटमंत्रेण पुष्पांजलिपञ्चकं दद्यादिति॥तदुक्तमाचार्यैःविधिवत्किरीटमंत्रेण कुर्यात्पुष्पांजलिमपीति॥आदिशब्देनधूपदीपनैवेद्यानि अङ्गानीति कर्णिकांतश्चतुर्थपटलोक्त प्रकारेणांगानि संपूज्याग्न्यादिकेसरेषु क्रमाद ष्टांगभूतान्मंत्रा र्णानर्चयेत् ॥ ॐ नमः मं नम इत्यादि प्रयोगः बीजैः पूजास्याद्विभक्त्यावियुक्तैरित्युक्तः अत्रांगपूजावत्पूजानकार्य्या अष्टांगकं सुधीरिति न्यास एवाष्टांगविनियोगो ननु पूजायामिति विशेष इत्यर्थ इति पद्मपादाचार्यैरुक्तत्वात् ॥ अत एवात्र मंत्राणीनित्युक्तं नाष्टांगमिति ॥ मंत्रार्णध्यानमुक्तं महाकपिलपञ्चरात्रे । ॐकारं तु सदा ध्येयं ज्योतिर्माला समाकुलम् । नकारं मेघवर्णाभ मोकारं चिंतयेत्ततः भिन्नांजनसमाकारं तृतीयं बीजमुत्तमंनाकारं श्यामवर्णाभं सौम्यरूपं सुशोभनम् ॥ राकारं जलवर्णाभं

वाद्या मूर्त्तीः शक्तिसमन्विताः । वासुदेवं संकर्षणं प्रद्युम्नमनिरुद्धकम् ॥ हिमपीततमालेंद्रनीलाभापीतवाससः । शंखचक्रगदांभोज धरा एते चतुर्भुजाः । शांतिश्रियं सरस्वत्य रतिकोणदलेष्विमाः । श्वेतकांचनगोदुग्धदूर्वावर्णाः सुभूषिताः । एतानर्चेद्दलाग्रेषु शंखं चक्रं दलांबुजे ॥ कौस्तुभं मुसलं खड्गं वनमालां यथाक्रमं ॥ रक्ताछपीतकनक श्यामकृष्णासि पांडुरान् ॥ बहिरग्रे समभ्यर्च्चयेत् गरुडंकुंकुमप्रभं ।मुक्तामाणिक्यसंकाशो दक्षिणोत्तरतो निधी॥ ध्वजं वरुणदिग्भागे श्यामलं पूजयेत्ततः । अरुणं विघ्नमाग्नेये श्याममार्यं निशाचेरे ॥ श्यामां दुर्गां वायुकोणे सेनान्यं पीतमीश्वरे ॥ इन्द्रादीन्पूजयेत्पश्चाद्वज्राद्यायुधसंयुतान् ॥ इति संपूजयेद्विष्णुंप्रोक्तैरावरणैःसह । धर्मार्थकामान् लब्धांते विष्णोः सायुज्यमाप्नुयात् ॥ प्रणवो हृद्भगवते वासुदेवाय कीर्तितःप्रधानो वैष्णवे तंत्रे मंत्रोयं द्वादशक्षरः । ऋषि प्रजापति-

---

सम्यक् मन्दीप्ततेजसं धूम्रवर्णं सदा ध्येयं यकारं परमुत्तमम् । अनौ यस्य गुणाकारं णाकारं च विचिन्तयेत् ॥ यकारं यु ततो ध्येय पद्मराग समप्रभमिति दलेष्विति दलमध्येषु इदं सामान्यवचनं अग्रे कोणदलेषु ता इत्युक्तेर्मूर्त्तीनामग्न्यादि चतुर्दिग्दलमध्ये पूजेति ज्ञेयं ॥ आसां ध्यानमत्र मूलदेवतावत् ज्ञेयम् । एवमग्रिममंत्रेपि ॥ कोणदलेष्विति । आग्नेयादि कोणदलमध्ये तथा वद्ध्यादयः कोणाविदिक्वाचयोगत इत्युक्तेः हेतानिति : वक्ष्यमाणान्यायुधानि । हेतिशब्दःपुंल्लिंगोप्यस्ति;यथाक्रममित्युत्तरत्रसंबध्यते बहिरिति । अष्टदलाद्बहिः चतुरस्रांत इत्यर्थःनिधी शंखपद्मौ वरुणदिग्भागी देवता पृष्टदेशे धर्मार्थका मति । अथ श्री बीजादित्वे ज्ञेयं । तदुक्तं मन्त्रतन्त्रप्रकाशे । श्री बीजेन युतं मन्त्र तत्का मस्तन्मना जपेदिति । कामनायामपि विशेषः नारसिंहमिवात्मानं देवं ध्यात्वातिभैरवं । मन्त्र णस्वर्णयेच्छक्तं नाविजित्य निवर्त्तते । नारसिंहेन बीजेन मन्त्रंयोज्य तदा जयेत्! शतमष्टोत्तरं जपत्वावामहस्ताभिमन्त्रिताः पुनः पुनरपः सिचेत्सर्पदष्टोपि जीवति । गारुडेन तदा युक्तं पक्षार्णेनतदा जपेत् निर्विषी करण ध्यायेद्विष्णुं गरुडवाहनम् । अशोकफलके पत्नी मालिख्याशोकसंहती।अशोकपुष्पैराराध्यभगवंत तदग्रतः जुहुयात्तानि पुष्पाणि त्रिसंध्ये सप्तरात्रकं प्रत्यवो जायतेपत्नी वरमिष्टं प्रयच्छति।गाणपत्यसमायुक्तंजपेल्लक्षं पयो व्रतःमहा गणपति देवंप्रत्यक्षमिहपश्यति भारतीबीजसंयुक्तं षण्मासिकजपाच्च तामिति । तथा योजयेत्प्रणवंपूर्वं मंत्रे त्रैवर्णिकः पुमान् योषितश्च तथा शूद्राजपेयुः प्रणवं विना । आदावष्टाक्षरस्य स्यात्प्रणवः सार्वकामिकः आद्यावंते यदावंते यदाद्यो च चानहद्विस्तदाभवेत् । आदितः संहितां कुर्यादंततस्तु न संहितामिति । कल्पोक्तं यंत्रमुच्यते । अष्टयत्र च षट्कोणं रविसंख्यदलांबुजां दंत यत्र च तद्वाह्येवृत्त भूभिपुरं शुभं ॥ससाध्यं कर्णिकायां तु लिखेदाद्यक्षर सुधीः अष्टयंत्रेषु मूलार्णान्यंत्राग्रे श्रीकारं लिखेत् । षट्कोणे चक्रमंत्रार्णान् सूर्यारेद्वादशार्णा कदंत पत्र मंत्रराजं वृत्ते नृहरि बीजकं षण्मंत्रे रविसंयुक्तं साक्षाद्विष्णोश्च मंदिरं । आवाह्य मंत्रैराराध्य सूत्रैर्बध्वा दृढं वहन् । सर्वदातस्य वर्द्धंत धनारोग्यार्थ संपदः सायुज्यं सार्ष्टिसालोक्यं सारूप्यं वाथवांछितमिति । द्वादशाक्षरवासुदेवमन्त्रमाह । प्रणव इति हृभूमः अत्रापि भगवते परतः पूर्ववतसन्धिः । तदुक्तं मन्त्रतन्त्रप्रकाशे ।

इछन्दो गायत्री परिकीर्त्तिता ॥ देवतास्यमनोः प्रोक्ता वासुदेवो मनीषिभिः । तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ॥ चतुर्वर्णैः शिखाप्रोक्ता पञ्चार्णैः कवचं मतम् ॥ समस्तेन भवेदस्त्रमंगकल्पनमीरितम् ॥ मूर्द्धनिभाले दृशोरास्ये गले दोर्हृदयांबुजे ॥ कुक्षौ नाभौ ध्वजे जानु द्वयेपादद्वये तथा ॥ विष्णुं शारदचन्द्रकोटिसदृशं शंखं रथांगं गदा मम्भोजं दधतं सिताब्जनिलयं कान्त्याजगन्मोहनम् ॥ आबद्धांगदहारकुण्डलमहा मौलिं स्फुरत्कंकणं श्रीवत्सांकमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतं । वर्णलक्षं जपेन्मंत्रंदीक्षितोविजितें द्रियः । तत्सहस्रं प्रजुहुयात्तिलैराज्यपरिप्लुतैः । पीठे प्रागीरिते मूर्त्तिं मूल मंत्रेण कल्पयेत् ।पूजयेद्विधिनाने

---

अंत्यौ यो पंचमे षष्टे वक्त्राद्यौ क्रमतस्तुतौ । द्वितीयो मिश्रसंयुक्तस्तस्माद्भगवते पदं । सानंतं वारुणं बीजं जीवः स्याच्छिवसंयुतः । पञ्चमस्थो भगीरामो वा यांत द्वादशार्णकः । अंत्योपञ्चमे वर्ग अंत्योमः । षष्टे वर्गे त्योशः : समिश्रसंयुक्तःश्रंहुक्तः । वारुणं बीजंवः। सानंतं आयुतं तेन वा जीवः सशिवः उतेन युतः पञ्चमवर्गस्तस्य गामस्तृतीयोदः सचापयुतः । स्पष्टमन्यत् स्त्रीशूद्रयोर्वितारोयं सतारोयं द्विजन्मनामिति । ॐ बीजं नमः शक्तिः । तदुक्तं बीजंताः शक्तिर्नम इति अङ्गच मिरदीरितेत्यनेन द्वादशांगमपि कर्त्तव्यमित्युक्तं । तद्यथा । ॐ हृदयाय नम इत्यादि पञ्चांगन्यासस्थानेषु पञ्चांगवदेव विन्यस्य नेत्रयोर्नेत्राभ्यां वौषडिविन्यस्य तेजठराय नम इत्यादिषु षट्सु स्थानेषुन्यसेत् तदुक्तं । हृदादि नेत्रजठरपृष्टबाहूरुजानुषु । सपादेषु भनीरर्णैर्नमोतैर्द्वादशांगकर्मिति । पद्मपादाचार्यास्तु । पुरुषसत्याच्युतवासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणब्रह्मविष्णुनरसिंहवाराहमूर्तीनां द्वादशांगे योगमाहुः।अन्यत्रापि आदौ पुरुषः सत्याच्युतौ पुनर्वासुदेवपूर्वाः स्युः। नारायणयुगब्रह्माविष्णुनृसिंहौ तथा वराहश्चेति मूर्ध्नीतिमूध्नोन्यसेभन्त्रवर्णानिति शेषः।अयं सृष्टिन्यासः।अत्र स्थिति संहारावपि ज्ञेयौ।यदाहुः।हृदादिकांतावधीमंस्थिति न्यासं प्रचक्षते । पादादारभ्य शीर्षांतं न्यासंसंहारमूजिरे । सहृतेर्दोषसंहारः सृष्टेश्च सुतपुष्टयः स्थिते स्तुशांति विन्यासस्तस्मात्कार्यस्त्रिधा च स इति । अन्यत्र व्यवस्थाप्युक्ता । यदाहुः स्थितिन्यासो गृहस्थानामुद्दिष्टः सर्वसिद्धिदः । प्रथमाश्रमिणांन्यास उत्पत्तिः समुदाहृतः । यतीनां च वनस्थानां संहारः समुदाहृतः । विरक्तस्य गृहस्थस्य संहारोपि विधीयते । सपत्नीकवनस्थानां स्थितिन्यासो विधीयते । विद्यार्थिनासथैतेषां सृष्टातो पि विशिष्यत इति । अत्र सामान्यतो न्यसेदित्युक्तत्वादेषु द्वादशतत्वान्यपि न्यसेत् । तद्यथा । ॐनमः पराय जीवात्मने नमः मूर्ध्नीत्यादि । तत्त्वानि तु जीवंप्राणधियश्चित्तं हृत्पद्मं सूर्यमण्डलम् । चन्द्रमण्डलमग्नेश्च मण्डलंस्वकलान्वितम् । वासुदेवादपश्चेति तत्त्वानि द्वादशावदन् इति हयशीर्षपञ्चरात्रे । आयुधध्यानंतूर्ध्वादिदक्षयोश्चक्रपद्मे । एवं वामयोर्गदाशंखौ । तदुक्तं हयशीर्षपञ्चरात्रे । वासुदेवं तु कुर्वीत चतुर्बाहुं सुरेश्वरं दक्षिणोपरिचक्रं तु पद्मं चाधः प्रकल्पयेत् वामोपरिगदाकार्याशङ्खचाधः सुशोभनमिति । अत्रध्यानानतरं श्रीवत्सकौस्तुभवनमालाजलिमुद्राः प्रदर्शयेत् । अञ्जल्यांजलिमुद्रास्याद्वासुदेवाभिधा च सा इत्युक्तः । एता अग्रिमन्त्रेपि दर्शनीयाः । वर्णलक्षं द्वादशलक्षम् । दीक्षितो वैष्णवमार्गेणेत्यर्थः सा च दीक्षा वैष्णवतन्त्राच्छारददितो ज्ञेया । तत्स-

न वासुदेवं विधानवित्। प्रथमावृत्तिरंगैः स्यात् वासुदेवादिभिः परा। शांत्यादिशक्तिसहितैः पराद्वादशमूर्त्तिभिः। चतुर्थी सुरनाथाद्यैर्वज्राद्यैः पञ्चमी मता । एवंसंपूजितो विष्णुः प्रदद्यादिष्टमात्मनः। पायसेन घृताक्तेन मंत्रवर्णसहस्रकं।जुहुयान्मनसः शुद्ध्यैसमिद्भिः क्षीरभूरुहां। तत्संख्यया यथोक्ताभिः सर्वपापविमुक्तये। हृल्लेखाबीजयुगलं रमाबीजयुगंपुन. । लक्ष्म्यंते वासुदेवाय हृदन्तः प्रणवादिकः चतुर्दशाक्षरोमंत्रः प्रोक्तोयं सुरपादपः हृदयं शक्तिबीजाभ्यां रमाभ्यां शिर ईरितः। लक्ष्म्यै प्रोक्ताशिखावर्म वासुदेवाय कीर्त्तितः। नमसास्त्रं समुद्दिष्टं सर्वतारादि कल्पयेत् ॥ विद्युच्चन्द्रनिभंवपुः कमलजा वैकुण्ठयोरेकतां प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभिरालंकृतं ॥ विद्यापंकजदर्पणं मणिमयं कुम्भं सरोजं गदां शंखं चक्रममूनिबिभ्रदामितां दिश्याच्छ्रियं वः सदा ॥ वर्णलक्षंजपेदेनं तत्सहस्रं सरोरुहैः। होमंकुर्याद्विकशितैर्मधुरत्रयसंयुतैः । पूजास्याद्वैष्णवीपीठे द्वादशाक्षरवर्त्मना ॥ पायसेन कृतो होमो लक्ष्मीवंशप्रदायकः । मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ॥ तारो हृद्विष्णवेपश्चान् ङेंतः सुरपतिर्भवेत् ॥ महाबलाय ठद्वंद्वं मनुरष्टादशाक्षरः। ऋषिरिंदुर्विराट्छन्दो देवतादधिवामनः । हृदेकेन शिरोद्वाभ्यां शिखात्रिभिरुदीरिता ॥ कवचं पञ्चभिः प्रोक्तं नेत्रं तावद्भिरक्षरैः । द्वाभ्यामस्त्रमिति प्रोक्तः प्रकारोंगस्यसूरिभिः । मूर्द्धनिभालेदृशोर्युग्मे कर्णयुग्मोक्षेताळुषु ॥ कण्ठे बाहुद्वये पृष्टे हृदयोदरनाभिषु ॥ गुह्ये रुजानुयुग्मेषु जंघयोः पादयोर्न्यसेत् ॥ अष्टादशमनोर्वर्णान् पश्चादेनं विचिंतयेत् ॥ मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं भृंगाकारैरत्नकनिकरैः शोभिवक्त्रारविंद ॥ हस्ताब्जाभ्यां कनककलशं शुद्धतोयाभिपूर्णंदध्यन्नाद्यं कनकचषकं धारयन्तं भजामः । गुणलक्षं जपेन्मंत्रं तद्दशांशं घृतप्लुतैः । पायसान्नैः

---

यम् द्वादशसहस्रं । विधानविदित्यनेनोपचारोक्तागमश्लोकानामत्रावश्यकत्वं सूचितम् । द्वादशमूर्त्तिभिरिति केशवाद्यैः । एषां ध्यानंमूलदेवतावत् । लक्ष्मीवासुदेवमन्त्रमाह हृल्लेखेति । हृल्लेखाभुवनेशीबीजम् । यथाहृल्लेखाशब्देन भुवनेशीउच्यते । तथा प्रागेवदर्शितम् । रमा श्रीबीजंम् । लक्ष्मे लक्ष्मीपदांतइत्यर्थः हृदंतोनमोतः।प्रणवो बीजं माया शक्तिः विद्युदिति एकतामिति । देहार्धविभागेन। विद्यादीनि प्रथमानिर्दिष्टानिपश्चादमूनिबिभ्रदित्यन्वयः। वामेष्वाद्यचतुष्टयमूर्ध्वादि दक्षेष्वंत्यचतुष्टयमित्यायुधध्यानं। वर्णलक्षं चतुर्दशलक्षं। तत्सहस्र. चतुर्दशसहस्रं विकासितैरिति । पूजायां कुड्मलानामपिग्रहणादत्यत्र विकसितैरितिविशेषोक्तिः स्वयंविकसितस्यतुनिषिद्धत्वादेवनिवृत्तिः दधिवामनमन्त्रमाह तारइति हृन्नमः पदं । अत्रापि पूर्ववाहसर्गेण सह सन्धिर्ज्ञेयः। ङेतः सुरपतिः सुरपतये। ठद्वंद्वं स्वाहा। प्रणवश्रीबीजसंपुट इति केचित्। प्रणवोबीजं स्वाहाशक्तिः। तावद्भिरिति पञ्चभिः। प्रकारोंगस्यसूरिभिरित्यनेन सांप्रदायिका। अन्यथा षडङ्गमाहुरिति सूचितं तद्यथा प्रणवादिपञ्चभिः पदैः पञ्चांगानिकृत्वा सर्वेण षष्टमिति मूर्ध्नीत्यादिषु सर्वत्रएकैकवर्णन्यासः कर्णन्यासः कर्णयुग्मोष्टतालुष्वित्यपपाठः कर्णनासोष्टतालुष्विति पाठः। पश्चादिति पृष्टे। मन्त्रतन्त्रप्रकाशे तु मूर्द्धिदृक्श्रवणद्वंद्वे नासायां मुखमध्यतः कंठहृद्वायुग्मे च ना-

प्रजुहुयाद्ध्यर्घ्नं वा यथा विधिः। चन्द्रांतं कल्पिते पीठे प्रागुक्ते तं समर्चयेत् ॥ मूर्तिं मूलेन संकल्प्य वक्ष्यमाणविधानतः ॥ षडंगानि समभ्यर्च्य केसरेषु यथापुरा ॥ अभ्यर्च्य वासुदेवादीन् ध्वजादीनर्चयेत्ततः। केशवाद्यादलाग्रेषु सुरेंद्राद्दीननन्तरम् ॥ वज्रादीनि गजानष्टौ समावरणमीरितम्। विधानमेतद्देवस्य कीर्त्तितं सुरपूजितम् ॥ पायसाज्येन जुहुयात्सहस्रं श्रियमाप्नुयात्। धान्यहोमेन धान्याप्तिः शतपुष्पी समुद्भवैः। बीजैः सप्तहसंख्यातो होमो भयविनाशनः। दध्योदनेन शुद्धेन हुत्वा मुच्येत दुर्गतेः ॥ स्मृत्वा त्रैविक्रमं रूपं जपेन्मंत्रमनन्यधीः। मुक्तो वधाद्भवेत्सद्यो नात्र कार्याविचारणा ॥ पट्टसंपाद्यदेवेशं भित्तौ वा पूजयेत्सुधीः। सुगन्धिकुसुमैर्नित्यं महतीं श्रियमाप्नुयात् ॥ ससाध्यताराेज्वलकर्णिकाब्जमष्टाक्षरैरु

---

भौ पृष्ठे च गुह्यके [?]जान्वोश्च पादयोरर्णानिति। स्थानान्युक्तानि। पश्चादित्यनेन पदन्यासोपि सूचितः यदाहुः भ्रूमध्यगलहृन्नाभि लिंगाधारेषु विन्यसेदिति गुणलक्षं त्रिलक्षं। यथा विधीत्यग्रे सम्बध्यते चन्द्रातमिति। रविवह्निमण्डले संपूज्य अंते चन्द्रमण्डलं पूजयेदित्यर्थः अचचन्द्रमण्डलांता पूजा। तस्य तदासन्नत्वात्। तदुक्तं मन्त्रतन्त्रप्रकाशे। धर्मज्ञानमयेपीठे पूजयेच्चन्द्रमण्डलं इति। चन्द्रमण्डलमन्त्रोप्युद्धृतः। विष्णवे सहस्रसोमाय त्रैलोक्याप्यायनाय च। स्वाहांतस्तारहृत्पूर्वो मन्त्रेणैवार्चयेच्च तदिति। एतद्यथा विधिपदेन सूचितं प्रागुक्ते नारायणाष्टाक्षरोक्ते पीठे वक्ष्यमाणविधानतः तं समर्चयेदिति संबन्धः। यथापुरेति चतुर्थोक्तरीत्या। वासुदेवादीन् सशक्तिकान् पूर्ववत्। ध्वजादीनित्यष्टौ प्रसिद्धदिक्क्रमेण। तदुक्तं। ध्वजश्च वैनतेयश्च शंखपद्मौ दिशोगताः विघ्नार्यौ तथा दुर्गा विष्वक्सेनौ विदिगाता इति। तत्र ग्रंथकृतानारायणाष्टाक्षरे अग्रदक्षिणोत्तरपश्चिमादिपूजाकथनार्थं एते एव वैनतेयाद्याउपदिष्ठाः केशवाद्या द्वादशदलाग्रेषु अष्ठदलाद्बहिरित्यर्थः। गजानित्यष्टमोक्तान् स्वस्वदिक्षु। शतपुष्पीकान्यकुब्जभाषायां सौफइति प्रसिद्धा। दुर्गतः दारिद्र्यात्। यंत्रमाह। ससाध्येति। कर्णिकायां साध्यसाधककर्म्मसहितं प्रणवं लिखेत् अष्टाक्षरिति। नारायणाष्टाक्षरैः। शिष्टार्णैत्यनेनांत्यपञ्चवर्णचतुष्टयं लिखेदित्युक्तं। तद्बहिर्मातृकाक्षरैर्वेष्टितं विदध्यादितिसंबंधः। अस्यतन्त्रांतरोक्तं विधानमभिधीयते। अस्य तैलो मुनिश्छंदो जगत्यन्नप्रदोहरिः। देवता प्रणवाद्यैश्च पदैः सर्वेणचांगकम्। कर्प्पूरधवलं देवं निविष्टं सरसीरुहे। सुप्रसन्नं सुनेत्रं च चारुस्मितमनोहरम्। दण्डं चामृतकुण्डं च शरचंद्रसमप्रभम्। दधिभक्तं सोपदंशं वसुपात्रं च बिभ्रतम्। चिन्तयेज्जगदीशानं जगदार्त्तिहरं हरिम्। दीक्षां प्राप्य शुचिर्भूत्वा जपेद्दादशलक्षकम्। तदंते जुहुयाद्विद्वान्पायसेन दशांशकम्। पूजा तु वैष्णवे पीठे कर्त्तव्यामाधकोत्तमैः लिखेत्पद्मं सप्तदशदलं प्रणवमालिखेत्। कर्णिकायां ससाध्यंतं स्वरैरावेष्टयेत्क्रमात्। चतुस्त्रिंशत्केसरेषु कादिक्षांतांत्रवर्जितान्। दलेषु मंत्रवर्णांश्च ताराभ्यां वेष्टयेद्बहिः। श्रीबीजाभ्यांतद्बहिश्च यंत्रं सर्वफलप्रदं। अस्मिन्यंत्रे समावाह्य देवमंगानि पूर्ववत्। इष्ट्वा शक्तीश्चपत्रेषुलोके शास्त्राणि पूजयेत्। पूषाम्र मनसाप्रीतिर्ज्योतिः सौम्यामरीचिका। अंशुमालिन्यंगिरा च शशिनी चान्द्रिका तथा। अमोघा करुणा चैव छाया संपूर्णमण्डला। पुष्टिस्तथामृता सिद्धिः शक्तयः समुदीरिताइति इति अथ ब्रह्म-

ज्वलकशेराद्यम् ॥ मंत्राक्षरद्वंद्वयुताष्टपत्रं शिष्टार्णयुग्मो ल्लसितातपत्रम् ॥ द्वादशाक्षरसंवीतं तद्बहिर्मातृकाक्षरैः। विदध्याद्वैष्णवं यंत्रं सर्वसम्पत्प्रदायकम् ॥ उद्गिरत्यदमाभाष्य प्रणवोद्गीथशद्वतः। सर्ववागीश्वरेत्यन्ते प्रवदेदीश्वरेत्यथ ॥ सर्ववेदमयाचिंत्यपदांते सर्वमुच्चरेत् ॥ बोधयद्वितयांतोयं मंत्रस्तारादिरीरितः। ऋषिर्ब्रह्मास्यसन्दिष्टश्छंदोनुष्टुबुदाहृतम् ॥ देवतास्याद्धयग्रीवो वागैश्वर्यप्रदो विभुः।तारेण पादैर्मंत्रस्य पञ्चाङ्गानि प्रकल्पयेत्। शरछशांकप्रभमश्व वक्त्रं मुक्तामयैराभरणैरुपेतम्। रथाङ्गशङ्खाङ्कितबाहुयुग्मञ्जानुद्वयंन्यस्तकरम्भजामः ॥ वर्णलक्षं जपेन्मंत्रङ्कुन्दपुष्पैर्मधुप्लुतैः। दशांशं वैष्णवे वह्नौ जुहुयान्मंत्रसिद्धये। अष्टाक्षरोदिते पीठे हयग्रीवं प्रपूजयेत्। बीजनमूर्त्तिस ङ्कल्प्य बीजमुद्धित यथा ॥ वियद्भृगुस्थमर्घीशबिंदुमद्बीजमीरितम् ॥ केसरेषु चतुर्वेदांश्चतुर्दिक्षु समर्चयेत् ॥ विदिक्ष्वङ्गस्मृ-

---

या मलोक्तं यंत्रमुच्यते। वृत्ताकारमथोकृत्वा चन्द्रमण्डलमध्यतः सम्यक् च विलिखेत्तारं साध्यनामसमन्वितम्। वरुणार्णान्लिखित्वा च साग्निमाया सबिंदुकम्। दलैश्चसप्तदशभिः कृत्वा पद्मं सकर्णिकं। नादिन्यो मांतमन्त्रं वै पद्मस्थे वदलेषु च। कृत्वायन्त्रं महाभागसमालभ्य जपेन्मनुं। महारक्ष समाख्याता धारणाच्च श्रियावहमिति।नादिन्यो मांतमंत्र वै पद्मस्थैव दलेषु चाकृत्वायन्त्रं महाभागसमालभ्य जपेन्मनुं।महारचा समाख्याता धारणाच्च श्रियावहमिति।नारदकल्पोक्तं यंत्रांतरम्।दलैःषोडशभिर्युक्तं सतारं कर्णिकोज्वलम्। कलाकूटदलं बाह्येपद्ममष्टदलंलिखेत् तेष्वष्टाक्षरमालिख्य तदग्रे वृत्तमालिखेत्। अष्टादशदलं बाह्ये तेष्वष्टादशाक्षरम्। आलिख्यांते च भूगेहमष्टशूलसमन्वितम्। कोणेष्वक्षरमालिख्य वज्रादिषु यथाक्रमम्। शूलाक्षिरोगगुल्मादिगर्भस्फोटादिकानपि। विषादिकान्नरः सम्यक् मन्त्रो यन्त्रेण नाशयेदिति। अक्षरं ठकारम्। तन्त्रांतरोक्तमेतदुपासककर्त्तव्यमुच्यते। नाश्नीयात्तंडुलीशाकं तथा चौदुंबरं फलम्। आर्द्राणां नवकं चैव भक्षयेन कदाचन। पद्मपत्रे नभुंजीत तथाचार्कदलेष्वपि। तुषकार्पासबीजानि न स्पृशेच्चकदा च न। वल्मीकं गोमयं विप्रच्छायामपि तलं घयेत् देवाग्निगुरुपूजां च कुर्याद्भक्तिसमन्वित इति। हयग्रीवमंत्रमाह उद्गिरदिति। प्रणवोद्गीथेति स्वरूपं। सर्वमुच्चरेदिति। मंत्रेपि द्वितीयांतमेव। श्लोकादौ तारः मंत्रस्यहृज्ञबीजानि स्वराः शक्तयः। वागैश्वर्यप्रद इति विनियोगोक्तिः। अत्र ध्यानांतरमियं मुद्रादर्शनीयाः वामहस्ततले दक्षाङ्गुलीस्तस्वधोमुखीः। संरोप्य मध्यमांतस्यामुन्नम्याधो विकुंचयेत्। हयग्रीवप्रियामुद्रातन्मूर्त्तेरनुकारिणीति वर्णलक्षं हविर्भक्षचं वैष्णववह्नाविति। तत्र वैष्णवपीठमभ्यर्च्येत्यर्थः। हयग्रीवबीजमुद्धरति वियदिति। वियद्धः भृगुस्थं सकारस्थं। अर्घीशः ऊकारःबिंदुस्च तद्वत्। कल्पांतरे चतुर्दशस्वरयुक्तमुदाहृतम्। तदुक्तं शांकरकल्पे। शून्येशून्यसमायुक्तं जीवस्योपरि संस्थितम्। अनुग्रहयुतं कृत्वा वागीशं सर्वकामदमिति। केचिद्रद्रेण भूषितं कृत्वेति पठंति। एतद्बीजाद्योङे तहयग्रीवशब्दनत्यंतोष्टाक्षरोमन्त्रः। हंबीजं सौशक्तिः देवीगायत्रीछन्दः अन्यद्वक्ष्यमाणैकाक्षरविधानवत्सर्वं ज्ञेयं। एतावपि स्वतंत्रौ मन्त्रौ। विद्याकामेन वाक्पुटौ जप्यौ। बालातार्तीयसंपुटौ वा वश्यकामेन। कामराजसंपुटौ वाङ्बीजं संशक्तिः। त-

तिन्यायसर्वशास्त्राणि पूजयेत् ॥ अर्चयेन्पत्रमध्येषु विधानेनांगदेवताः। बाह्ये लोके श्वरास्तेषां वज्राद्यस्त्राणि संयजेत् ॥ एवं योभजते देवं साक्षाद्वागीश्वरोभवेत् ॥ बैल्वैफलैः कृतोहोमः श्रीकरः परिगीयते ॥ कुन्दपुष्पाणि जुहुयादिच्छन्वाक् श्रियमव्ययम् ॥ मनुनानेन सञ्जप्तं घृतं ब्राह्मीरसैः शृतम् ॥ कविता मावहेत्पुंसामनर्गलविजृम्भणां ॥ वचामनेसञ्जप्तां भक्षयेत्प्रातरन्वहम् ॥ सर्ववेदागमादीनां व्याख्याता जायते चिरात् ॥ मनोरस्यसमो नास्ति

---

इत्यादिकं यथा।ब्रह्मत्रिष्टुप् हयग्रीवाक्त्थाद्या:परिकीर्त्तिता: षड्दीर्घयुक्तमूलेन षडङ्ग विधिरीरित: धवलनलिमनिष्टं चीरगौरं करागै्र्जपवलयसरोजे पुस्तकाभीष्टदाने दधतममलवस्त्राकल्पजालाभिरामं तुरगवदनविष्णु नौमि देवारिजिष्णुं । वेदलच' जापित्वां ते तद्दशांशं हुनेद्घृतैः पुरोक्ते प्रयजेत्पीठे गायत्र्या वाह्य पूजयेत्। ङेतं वागीश्वरपदंविद्महे पदमुच्चरेत्हयग्रीवं च ङे तंस्याद्धीमहीति ततो वदेत् तन्नोहंस:पदांते च प्रवदेच्च प्रचोदयात् । प्रथमावृतिरगै: स्याद्द्वितीयाचाष्टभिर्हयै: प्रज्ञाह्वयस्तथा मेधा हय: स्मृतिह्रयस्तथा । विद्याहय: श्रीहयश्च वागीशी हय एव च । विद्याविलासमुहयो:हयांतो नादमर्दन:मेधादिभिस्तृतीयास्यात्तास्तु मेधासरस्वती।प्रज्ञा तृतीया विजया पंचमो चापराजिता । तुष्टि: पुष्टि:सप्तमीस्यात्क्रद्वाचैवाष्टमी मता। कल्पांतरे तु लक्ष्म्याद्यास्तास्तु लक्ष्मी: सरस्वती । रतिप्रीतीकीर्त्तिकांती तुष्टिस्तथाष्टमी ।चतुर्थी कुमुदाद्यैस्ते कुमुद: कुमुदाच्चकपुंडरीक:सर्वनेत्रो:वामन: शंकुकर्णक: सुमुख: सुप्रतिष्ट: स्याल्लोकपालैस्तुपंचमी।तदायुधैश्च षष्टीस्यादेवं पूजासमीरितेति । बीजं रेफसमायुक्तं हुंकारद्वयमध्यगं । यस्यनाम्ना जपेन्मंत्रं मारयेत्तं न संशय हुंकारद्वयमध्यस्थं:बीजराजंसुरेश्वरि विद्वेषजेज्जगत्सर्वंमासंजप्त्वा न संशय:लिखेद्रोचनया भूर्ज्जे मनत्वं वाहौ विधारयेत् महारक्षाभवेदेषा सर्वदोषविनाशिनीति । शांकरकल्पोक्ते यंत्रमुच्यते । प्रणवद्वयसंयुक्तमकारद्वयमध्यगं । वादिनाभलिखेद्बीजे भूर्ज्जपत्रे हरिद्रया । पत्राष्टके हयग्रीवाष्टाचरंस्वरकेसरे ।कादि चांतवृत्तं बाह्ये तबहिर्भूपुरं लिखेत् वाक्स्तंभनमितिप्रोक्तं शरावद्वयसंपुटे । वेष्टितं पीतसूत्रेण मूकत्वं कुरुते चिरादिति विदिच्चिति ।षडंगेभ्यो नम: स्मृतिभ्यो नम: प्रयोग: विधानेनेति चतुर्थोक्ताग्नेयादिस्थानेषु पत्रमध्येष्विति चतुर्थोक्तकेसरांगपूजापवाद: मनुनेति । अकल्पोपि भवत्स्तोहोय:साधयेत्केवलेद्रवेत्युक्तत्वात् ॥ घृताच्चतुर्गुणे ब्राह्मी रसे घृतंयजेत् ॥ घृतावशेषमुत्ताय्र्य तेन संजप्तं पिबेत् राममन्त्रमाह।अनंत इतिअनंत आकार:अग्न्यासनोरेफासन: सेंदु: सबिंदु:बीजमित्यनेनैकाक्षरोप्ययं मंत्र इति सूचितंतदुक्तं वह्निस्थं शयनं विष्णोरर्द्ध चन्द्रविभूषितम् । एकाक्षरो मनु: प्रक्तो मन्त्रराज: सुरद्रुम इति । अस्यर्षादिकं सर्वं वक्ष्यमाणमेव । एतदर्थ उक्त: स्कंदयामले निर्वाणखंडे । रेफोग्निरहभेवोक्तो विष्णु: सोमोम उच्यते । मध्यगस्त्वावयोर्ब्रह्म रविराकार उच्यते । ज्योतींषिकधली क्षत्यचीयाकाशो विभु:स्वयं । नादोभिधत्ते सन्मात्रं त्वमेव परमेश्वरमिति रामाय हृदित्यनेनायंपञ्चाक्षरोपि मन्त्र इत्युक्तं । यदाहु: सप्रतिष्टौ रमौ वायुहृत्यंचार्णो मनु: स्मृत: विश्वामित्रो मुनि: प्रोक्त: पंक्तिश्छंदोस्य देवता । रामभद्रो बीजशक्ती प्रथमार्णनतो क्रमात् । भ्रूमध्ये हृदिनाभ्यंधुपादयोर्विन्यसेन्मनुं । षडंगं पूर्ववद्यद्वापञ्चार्णैर्म्म मुनास्तकम् ।

ष्ठातैश्वर्य्यप्रदोमरः।अनंतोग्न्यासनः सेंदुबीजं रामाय हृन्मनुः। षडक्षरोयमादिष्टो भजतां कामदो मणिः। ब्रह्मप्रोक्तो मुनिश्छन्दो गायत्रं दवता मनोः। देशिकेंद्रैः समाख्यातो रामो-राक्षसमर्द्दनः। दीर्घभाजा स्वबीजेन कुर्यात्खड्गानि षट्क्रमात्। ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यंघ्रिषु पादयोः।षडक्षराणि विन्यस्येन्मंत्रस्य मनुवित्तमः॥ कालांभोधरकांतिकांतमनिशं वीरासनाध्यासितं। मुद्रां ज्ञानमयींदधानमपरं हस्तांबुजं जानुनि सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं पश्यंत मुकुटांगदादि विविधा कल्पोज्वलांगं भजे। वर्णलक्षं जपेन्मंत्रं तद्दशांशं सरोरुहैः।जुहुयादर्चिते वह्नौ ब्राह्मणान् भोजयेत्ततः। पूजयेद्वैष्णवे पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ श्रीसीतायै द्विठांतेन सीतां पार्श्वगतां यजेत् ॥ अग्रेपार्श्वद्वये शार्ङ्गशरानंगानि

मध्ये वनंकल्पतरोर्मूले पुष्पलताकुलम्। लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम्। अवेक्षमाणं जानक्या धृतव्यजनमीश्वरं जटाभारलसच्छीर्षश्यामंमुनिगणावृतम्: लक्ष्मणेन धृतच्छत्रमथवा पुष्पकोपरि। दशास्यमथनं प्राग्वत्ससुग्रीवविभीषणं। विजयार्थी विशेषेण वर्णलक्षं जपेन्मनुमिति मनुरिति। एवं भिलित्वा मंत्रः षडक्षर इत्यर्थः कामदो मणिश्चिंतामणिरित्यनेनास्यपिनियोगं वदता स्वबीजं विनापि बहुप्रकारं षड्वर्णत्वं बहुप्रकारं च सप्तवर्णत्वं सूचितम्: तदुक्तं स्कंदयामले निर्वाणखण्डे विश्वरूपस्यते मामविश्वे शब्दाहि वाचकाः तथापि मूलमन्त्रस्य विशेषां बीजमव्ययम्। मुक्तये प्रणवाद्योयं रमादिरपि भुक्तये। वाग्भवादिस्तु वाक् सिद्धैय मायादिरखिलेष्टदः अखिलोयं महाशक्तिर्मंत्रचिंतामणिर्विभो इति। अन्यत्र स्वकामशक्तिवाग्लक्ष्मी ताराद्यः पंचवर्णकः षडक्षरःषड्विधः स्याच्चतुर्वर्गफलप्रदः पश्चाशन्मातृकामंत्रवर्णप्रत्येकपूर्वकः लक्ष्मीवाक् मन्मथादिस्व तारादिः स्यादनेकधा। श्रीमायामन्मथैकैक बीजाद्यंत गतो मनुः चतुर्वर्णः स एव स्यात्षड्वर्णो वांछितप्रदः स्वाहांतो हुंतोहुं फडंतोवानत्यंतो वा भवेदयम्। ब्रह्मा सं मोहनः शक्तिर्द्दक्षिणा मूर्त्तिरेव च। अगस्त्यः श्रीशिवः प्रोक्ता मुनयोत्र क्रमादिमे छंदो गायत्रसंज्ञं च श्रीरामश्चैव देवता अथवा कामबीजादेर्विश्वामित्रो मुनिर्मनोः छंदो देव्यादि गायत्री रामभद्रो स्यदेवता। बीजशक्ति यथा पूर्वमिति। राक्षसमर्द्दन इति विशेषणं विनेयं रांबीजं नमःशक्तिः तदुक्तं शौनककल्पे। जागी याप्रथमं वर्णं बीजं शक्तिनतिं तथेति। केचन आयैति शक्तिमाहुः दीर्घभाजा षड्दीर्घभाजां स्वबीजेन मन्त्राद्यबीजेन क्रमादित्यनेन षड्वर्णैर्वा षडंगमित्युक्तं यदाहुः बीजैः षड्दीर्घयुक्तैर्वा मन्त्रार्णैर्वा षडंगकमिति अंधुगुह्यं मनुवित्तम इत्यनेनैतदुक्तं भवति पञ्चाक्षरे पादत्यागः सप्ताक्षरेषु ब्रह्मरंध्र मध्यकंठहृन्नाभिगुह्यपादेषु न्यासः द्व्यक्षरे ब्रह्मरं भ्रूहृदोस्त्र्यक्षरेगुह्यांतयोः चतुरक्षरे गुह्यपादांतयोरिति॥ ध्यानमाह। कालेतिवीरासनमंत्ये वक्ष्यति॥ ज्ञानमुद्रालक्षणं प्राक्। अपरं वामः राघवं पश्यंतीं पार्श्वगतांसीतांच भजे इति संबंधः अस्मिन्पाठे वक्ष्यमाणसीता मन्त्रस्यापि ध्यानमुक्तं भवति। क्वचित्पश्यंतमिति पाठः तदा सीतां पश्यंतं राघवं भजे इति संबंधः उक्तंच। वामांकारूढसीतामुखकमलमिलल्लोचनं नीरदाभमिति। आकल्पो भूषा। अत्र ध्यानानंतरं नारायणाष्टाक्षरोक्तां गरुडमुद्रां च दर्शयेत्। वर्णलक्षं षट्लक्षम्। अर्चिते वह्नाविति रामपीठं वह्नावावाह्य-

तद्बहिः हनूमन्तं ससुग्रीवं भरतं सं बिभीषणम् ॥ लक्ष्मणांगदशत्रुघ्नान् ज्ञानवंतं दलेष्वि-मान् ॥ वाचयन्तं हनूमन्तमग्रतो धृतपुस्तकम् ॥ यजेद्भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ ॥ धृतातपत्रं हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत् । धृष्टं जयन्तं सुराष्ट्रं राष्ट्रवर्द्धनम् ॥ अकोपं धर्मपालाख्यं सुमन्तं च दलाग्रतः । सर्वाभरणसंपन्नांल्लोकेशानर्चयेत्ततः । तदस्त्राणि ततो बाह्ये वज्रादीनि प्रपूजयेत् ॥ एवं पूजादिभिः सिद्धे मनौ कर्म्माणि साधयेत् ॥ जातीप्र-सूनैर्जुहुयाच्चन्दनांभः समुक्षितैः । राजवश्याय कमलैर्धनधान्यादि सम्पदे ॥ नीलोत्पलानां होमेन वशयेदखिलं जगत् ॥ विल्वप्रसूनैर्जुहुयादिंदिरा वाप्तये नरः । दूर्वाहोमेन दीर्घायुर्भ-वेन्मंत्री निरामयः॥ रक्तोत्पलहुतान्मंत्री धनमाप्नोति वांछितम् । मेधा कामेन होतव्यं प-लाशकुसुमैर्नवैः तज्जत्यमम्भःप्रपिबेत्कविर्भवति वत्सरात् ॥ तन्मंत्रिभुञ्जीत महदारोग्यमा-

---

त्यर्थः श्रींसीतायै स्वाहा इति । अयं स्वतंत्रोपि मंत्रः तदुक्तं । सीतामनुर्लोपि कथितः स्वतंत्रोऽपर-पिचेति । स्कंदयामले निर्वाणखंडेपि । ब्रह्मा गृणाति त्वच्छक्तिं देवीं वाचं त्वदाश्रये । विष्णुर्ध्या यतित्वामेवसुषुम्णां पारमेश्वरीम्। सीतामुपास्ते व्योमांतरीश्वरो बिंदुरूपिणीं । महादिवो नादम यो स्वातीतामुन्मनीं शिव इति । अस्यर्ष्यादिकमगस्त्यसंहितोक्तं यथा । जनकोस्य ऋषिः छंदो-गायत्रं देवतामनोः सीताभगवती प्रोक्ता श्रीबीजं शक्तिरंतजौ । दीर्घस्वरयुजाद्येन षडंगानि प्रक-ल्पयेत् ॥ पूजयेद्वैष्णवे पीठे ध्यायेद्राघवसंयुतां । सुवर्णाभांबुजकरांरामालोकनतत्परां । वर्णलक्षं जपे न्मंत्रमिष्टार्थान्साधयेत्तत इति अग्रेपार्श्वद्वय इति । व्यधिकरणे सप्तम्यौतेनाग्रे पुरतः पार्श्वद्वये वा-मदक्षिणपार्श्वयोःशार्ङ्गं शरानिति संबंधःअनेनैतावत्पर्यं मुख्यपूजेत्युक्तं उक्तंचापामपार्श्वेत्रिकोणस्य शा-र्ङ्गं दक्षिणकेशरान् । शं शार्ङ्गाय दमोस्त्वेवं शं शरेभ्यो नमोस्त्विति । पूजानुज्ञां ततो लब्ध्वा रश्मीनं-गान्यथो यजेत् इति पूजा यंत्रं तु तंत्रांतरोक्तं यथा । भूगृहाष्टकयचांतः षट्कोणमतिसुंदरमिति पत्रैव वक्ष्यमाणं धारणयंत्रं वा । तदुक्तं मगस्ति संहितायां ॥ षट्कोणादि धरण्यंतं पूर्ववद्विलिखे-दथ । तस्य मध्ये लिखेत्तारं षट्सु कोणेष्वपि क्रमात् । मूलमन्त्राक्षराण्येव संधिष्वंगं च मान्मथम् मायां गण्डेषु किंजल्के स्वराणां लेखनं मतम् । पत्रेषु पूर्ववन्माला मंत्रो लेख्यः क्रमेण हि । द्वया-क्षरेण संवेष्ट्य कादा नि व्यंजनानि च । दिग्विदिक्षु लिखेद्वाजे नरसिंहवराहयोः एतद्यंत्रां तरंचाव सांगावरणमर्चयेत् । सौवर्णे राजते भूर्ज्जे लिखित्वार्चनमारभेदिति अंगानि तद्बहिरिति । आग्नेयादि षट्कोणेषु । तदुक्तं द्रष्ट्वांगदेवताः षट्कोणेष्वग्निकोणादीति । अन्यत्रापि । षट्कोणे प्रथमावृत्तिः स्यादंगैरग्नितः क्रमादिति पश्चिमे देवपृष्टभागे । अत्र हनूमंतमित्यादि प्रथमुद्दिश्यपश्चाद्वाचयं तमित्यादिना यत्प्राधान्येन चतुर्णां सध्यानं पूज नमाह । तेनैषां चतुर्णां मंत्रा अपि प्रधानभूता इत्यपि सूचितम् ॥ यदगस्ति संहितायां । आंज-नेयमनुं वक्ष्ये भुक्तिमुक्त्यैकसाधनम् । प्रकाशितं शङ्करेण लोकानां हितकाम्यया । भूतप्रेतपि-शाचादि डाकिनी ब्रह्मराक्षसाः दृष्ट्वाथ प्रपलायन्ते मंत्रानुष्ठानतत्परम् । प्रधानस्थानभूतोयं मंत्रराजोह्यनुत्तमः पूर्वं नमःपदंचोक्त्वा ततो भगवते पदम् ॥ आंजने यपदं ङेंतं महाबलपदं

प्नुयात्। तारं मध्ये विलिखतुमनुं षट्सु कोणेषु सन्धिष्वगं मायां स्मरमपि लिखेत्कोणगं-

तथा॥ वह्निजायांत एवस्यात् मंत्री हनुमतः परः सर्वसिद्धिकरः प्रोक्तो मंत्रश्चाष्टादशाक्षरः। ऋषि-रोश्वरएत्र स्यादनुष्टुप्छन्द उच्यते॥ हनूमान् देवता प्रोक्तो ह्रं बीजं शक्तिरंतजौ हनुमत्प्रीणनं चैव फलमाद्यमुदाहृतम्॥ नमो भगवते चांजने यायांगुष्ठयोर्न्यसेत्॥ रुद्रमूर्त्तय इत्येवं तर्ज्जनीभ्या-मनन्तरम्॥ वायुसुता यापि तथा मध्यमाभ्यामपि स्फुटम्॥ अग्निगर्भाय च तथा नामि-काभ्यां प्रविन्यसेत्॥ रामदूताय च पुनः कनिष्ठाभ्यां विचक्षणः ब्रह्मास्त्रनिवारणाय चास्त्रमंत्रः समीरितः एवं षडङ्गं च मुनेकृत्वा न्यायेदनन्यधीः। स्फटिकाभं स्वर्णकांतिं द्विभुजं च कृतांजलिं। कुण्डलद्वयसंशोभिमुखांभोजं मुहुर्मुहुः अयुतं तुपुरश्चर्य्या रामस्याग्रे शिवस्यवा॥ पूजा तु वैष्ण-वे पोठे शैवे वा विदधोतवै॥ आवृतीभिर्विनानित्यं नक्ताशी निर्जितेंद्रिय इति॥ रेफपूर्वं समुद्धृ-त्य बिंदुंलक्ष्मणसंयुतं। ङेतोयं लक्ष्मणमनुर्नमसा च समन्वितः अगस्त्यऋषिरस्याथ गायत्रं छन्द उच्यते॥ लक्ष्मणोदेवता प्रोक्तो लंबीजं शक्तिरस्यहि॥ नमस्तु विनियोगो हि पुरुषार्थचतुष्टये। दीर्घभाजा स्वबीजेन षडङ्गानि प्रकल्पयेत्॥ द्विभुजं स्वर्णरुचिरं तनुं पद्मनिभेक्षणम्। धनुर्बाण-करं राम सेवासंसक्तमानसम्। पूजापि वैष्णवे पीठे सांगावरणवर्ज्जिते॥ समलक्षं पुरश्चर्य्या ततः सिद्धस्तु साधयेत्॥ भरतस्यैवमेवस्याच्छत्रुघ्नस्याप्ययं विधिः अङ्गत्वेनोदिताह्येते प्राधान्येनापि संमताः आदौ वाप्य न्ततो वापि पूजायां राघवस्य तु। एतेषामपि कर्त्तव्या पूजा भुक्तिफले-प्सुभिः प्राधान्येननु पृथक्त्वेनांगत्वे रामपोठके। लक्ष्मणस्तु सदापूज्यः प्रधान्येनैवं नित्यशः यथा-रामस्य पूजास्यत्तथा तस्यापि नित्यशः साफल्यं रामपूजायायदीच्छेन्नियतव्रतः तेन यत्नेन कर्त्तं-व्या लक्ष्मणस्यापि विस्मरात्॥ श्रीराममंत्रभेदास्तु बहवः सन्ति वै मुनेतत्साधकैः सदाकार्याः सौमित्रेरपि नित्यशः अष्टोत्तरसहस्रं वा शतं वा सुसमाहितः लक्ष्मणस्य मनुर्जप्यो मुमुक्षुभिरतं-द्रितम्॥ अजस्वा लक्ष्मणमनुं राममंत्रं जयन्ति ये। तज्जप्तस्य फलेनैव प्रयाति कुशला अपि॥ परिमित्रविधिः कोपि नैव कार्योभवेदिह॥ योजपेल्लक्ष्मणमनुं नित्यमेकांतमास्थितः मुच्यते सर्व-पापेभ्यः सकामानश्नुते खिलाम्॥ प्रयोगायैव मंत्रोयमुपदिष्टो हि शार्ङ्गिणा। संध्यांचोपास्य वि-धिवन्मूलमंत्रेण मंत्रवित्। त्रिकालं नियतो भूत्वा कृतनित्यविधिः स्वयम्। दीक्षयुतो यथान्या-यं गुर्वनुज्ञापुरःसरम्॥ मुच्यते सर्वपापेभ्यो याति विष्णोःपरं पदम्॥ ऐहि काननपेक्ष्यैवं निष्का-मो योर्चयेद्विभुम्: दीक्षां प्राप्य विधानेन गुरोर्विगनकल्मषात्॥ आचारादि रताद्दांता दृष्टह-स्याद्विजितेंद्रियात्॥ तदनुज्ञानुसारेण पुरश्चर्या यथाविधि॥ ससर्वान्पुण्यपापौघान् दग्धो निर्मल-मानसः पुनरावृत्ति रहितं शाश्वतं पदमाप्नुयात्॥ सकामो वांछितान्लब्ध्वा भुक्त्वा भोगान्यथे-प्सितान् जातिस्मरश्चिरं भूत्वा याति विष्णोःपरं पदम्॥ यथा श्रीराममंत्राणां प्रयोक्तुः पायसंभ-वः तथा नो लक्ष्मणमनोः किंतुयाति परांगतिम्॥ केचिन्मुक्त्यर्थमेव स्युः केचिद्दैहि कसाधना भुक्तिमुक्तिप्रदश्चायमेको विज्ञायते परमिति॥ धारणयंत्रमाह। तारमिति।मध्ये कर्णिकायां साध्य-साधककर्मसहितं प्रणवं प्रणवं लिखेत्॥ मनुं रामषडक्षरम्॥ सन्धिषु। षट्सन्धिषु। पंगं षडङ्ग-

डेषु पश्चात्। किञ्जल्केषु स्वरगणमथो यंत्र मध्येषु मालामन्त्रोत्थार्णान् गुहमुखमितानष्टमे पञ्चवर्णान्॥ दशाक्षरेण सम्वेष्ट्य कादिवर्णैश्च भूपुरे। दिग्विदिक्षु लिखेद्बीजे नरसिंवराहयोः॥ नमो भगवते ब्रूयाच्चतुर्थ्या रघुनन्दनम्॥ रक्षोघ्नविषदायांते मधुरादि समीरयेत्॥ प्रसन्नवदनायेति पश्चादमिततेजसे॥ बलाय पश्चाद्रामाय विष्णवे तदनन्तरम्॥ प्रणवादि नमोंतोयं मालामनुरिदीरितः॥ जानकीवल्लभायाथ भवेत्यावकवल्लभा ह्युमादिरेषः

मंत्रः। कोणगण्डेषु कोणकपोलेषु एकत्र मायांमपरत्रकामं लिखेत्॥ ततोष्टदलके सरस्थाने षोडशस्वरांल्लिखेत्। मालामंत्रो वक्ष्यमाणः सप्त चत्वारिंशदक्षरः। गुहमुखमितान् षट्परिमितान्॥ दशाक्षरेण वक्ष्यमाणेन कादि वर्णैः संवेष्ट्येति सम्बन्धः। भूपुरे दिग्विदिक्षुबीजे लिखेदिति संबंधः। नरसिंहबीजमग्रिमपटले वक्ष्यमाणं वराहबीजं वाराहमंत्रे वक्ष्यमाणम्॥ मालामंत्रमाह नम इति रघुनन्दनाद्यचतुर्थी रघुनन्दनाय प्रसन्नवदनाय अमिततेजसे इत्यत्र न संधिः सप्तचत्वारिंशदक्षराणि यंत्रे नियमितत्वात्॥ अयं मालामंत्रोपि स्वतंत्रः। तदृष्यादिकं यथा॥ मुनिः पितामहश्छन्दः स्यादनुष्टुप्च देवता॥राज्याभिषिक्तो रामोस्य बीजशक्ती तथापुरा॥ तारवाक्वामबीजैश्च संपुटं प्रजपेदमुम्॥ शिरस्याननवृत्ते च भ्रूमध्ये चिबुकेपि च। श्रोत्रयो प्राणयोश्चैव गण्डयोरोष्ठयोरपि॥ दन्तयोरास्यदेशे च दोःपत्संध्यग्रकेषु च। कण्ठे स्तने हृदि द्वंद्वे पार्श्वयोः पृष्ठदेशतः काधिष्ठाने गुह्ये वर्णान्प्रविन्यसेत्॥ सप्तत्सप्तदशषडुद्रसंख्यैः षडङ्गकम्॥ उद्भिन्ननीलशकलामलकांतिमब्जचापासि बाणकरमंबुजपत्रनेत्रम्॥ पीतांबरं स्मितसुधामधुरं मुरारिं संचिन्तयेन्मिथिलराजसुता सहायम्॥ जपेद्द्वादशलक्षं च ध्यात्वैवं विजितेंद्रियः। बैल्वैः फलैः प्रसूनैश्च पत्रैश्च मधुरत्रययुक्तेन पयोत्रेन सितांबुजैः होमं दशांशतः कुर्यात्तथा सर्वत्र तर्पणंप्राक्प्रोक्ते पूजयेत्पीठे मूर्त्तौ वा ह्यदेवतां॥ प्रथमांगावृतिः प्रोक्ता सप्तमीज्या समीरिता॥ लक्ष्मणो भरतश्चैव शत्रुघ्नश्च हनूमता। सुग्रीवः पञ्चमः प्रोक्तः षष्ठउक्तो विभीषणः अंगदः सप्तमः प्रोक्तो नीलोष्टम उदाहृतः नारदश्च वसिष्ठश्चवामदेवस्तृतीयकः जाबालो गौतमश्चापि भरद्वाजोथ कश्यपः वाल्मीकिश्चाष्टमः प्रोक्तो लक्ष्मीश्चापि सरस्वती॥ रतिप्रीतीकीर्त्तिकांतीतुष्टिपुष्टी इमाः क्रमात्॥ सृष्टिर्जयन्तविजयौ सिद्धार्थः कार्यसाधकः अशोकश्चैव पूर्वस्यां श्री वत्सश्च गदा तथा॥ पांचजन्यः कौस्तुभाख्यो वनमाला च दक्षिणे। उत्तरे चक्रपद्मे च शार्ङ्गबाणांश्च खड्गकाम्॥ पश्चिमे धर्मगरुडधर्मपालस्तु मंत्रकानिति दशाक्षरोपि स्वतंत्रो मंत्रःतदृष्यादिकं यथा दशाक्षरोयंमंत्रोस्य वसिष्ठः स्यादृषिर्विराट्। छन्दस्तु देवता रामः सीतापाणिपरिग्रही आद्यं बीजं द्विटःशक्तिः कामेनांगानि पूर्ववत्। शिरोललाटभ्रूमध्य तालुकण्ठेषु हृद्यपि। नाभ्यं भुजानुपादेषु दशार्णान्विन्यसेन्मनोः अयोध्यानगरे चित्रसर्वसौवर्णमण्डपे। मन्दारपुष्पैराबद्धवितानेतोरणांचिते। सिंहासने समारूढं पुष्पकोपरि राघवम्। रक्षोभिर्हरिभिर्मौलेर्दिव्ययानगतैः शुभैः। संस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम्। सीतालंकृतवामांकं लक्ष्मणेनोपसेवितम् श्यामं प्रसन्नवदनं सर्वाभरणभूषितम्॥ ध्यानांते च जपेन्मंत्रं वर्णलक्षं विचक्षणः दशांशं जुहुयाद्बैल्वैः फलैर्मधुरसंयुतैरिति। अस्य पूजाषड

कथितो राममन्त्रो दशाक्षरः ॥ जपादि साधितं यंत्रं स्वर्णपट्टादि कल्पितम् ॥ बाहुना विधृतं हन्त्यादिजय श्री पराक्रमात् ॥ गदितं राममंत्रस्य विधानं सुरपूजितम् ॥ तारो नमो भगवते वराहपदमीरयेत् ॥ रूपाय भूर्भुवः स्वः स्यात् यतये तदनन्तरम् ॥ स्यात् भूपतित्वं मे पदांते देह्यते च ददापय । वह्निजायावधिर्मंत्रः स्यान्त्रयस्त्रिंशक्षरः ॥ भार्गवो मुनिराख्यात श्छन्दोनुष्टुबुदाहृतम् ॥ देवतादिवराहोस्य मंत्रस्य कथितो बुधैः।एकदंष्ट्राय हृदयं व्योम्नोल्काय शिरं स्मृतम् ॥ शिखा तेजोधिपतये विश्वरूपाय चर्म च । महावराहायास्त्रंस्यात्पंचागमिति कल्पयेत् ॥ आपादाज्जानुदेशाद्वरकनकनिभं नाभिदेशा दधस्तान्मुक्ताभं कण्ठदेशात्तरुणरविनिभं मस्तकान्नीलभासम् ॥ ईडे हस्तैर्दधानं रथचरणदरौ खड्गखेटौ गदाख्यां शक्ति दानाभये च क्षिति धरणलसद्दंष्ट्रमाद्यं वराहम् ॥ लक्षमेकं जपेन्मंत्रं मधुराक्तैः सरोरुहैः।जुहुयात्तद्दशांशेन पीठे विष्णोःप्रपूजयेत् ॥ मूर्त्तिं मूलेन सङ्कल्प्य वक्ष्यमाणविधानतः। पूर्वादिषु चतुर्दिक्षु हृदाद्यंगानि पूजयेत् ॥ अस्त्रं कोणेष्वधश्चोर्द्ध्वचक्राद्यस्त्राणि तद्बहिः । चक्रं शंखमसिं खेटं गदां शक्तिं वराभये ॥ संपूज्य बाह्यलोकेशान् बहिरस्त्राणि संयजेत् ॥ ध्यानाद्देवो धनं दद्याज्जपात् दद्याद्वसुन्धरां ॥ प्रयच्छेज्जयपूजाद्यैर्धनधान्यमही श्रियः । रवौ सिंहगतेष्टम्यां शुक्लपक्षे सितां शिलां। पञ्चगव्येषु निक्षिप्यस्पृष्ट्वातमयुतं जपेत् ॥ उत्तराभिमुखोभूत्वा तां शिलां निखनेद्भुवि । शत्रुचौरमहाभूतैः कृतांबाधां प्रणाशयेत् ॥ भास्करवदेव ज्ञेया ॥ जपादीति आदिशब्देन पूजासंपातौ स्वर्णपट्टादि कल्पितमित्यादिशब्देन रक्ततास्रभूर्जपत्राणि तत्तल्लेख्य विशेषे कालविशेषोपि । यदगस्ति संहितायां । यावज्जीवं तु सौवर्णेरौप्ये विंशति वार्षिकं भूर्जे द्वादशवर्षाणि तदर्द्धं तास्रपत्रके ॥ एवं लेख्य विशेषेण यंत्रसिद्धिः प्रतिष्ठितेति ॥ इदं गदितम् ॥ विधानं राममंत्रस्य राम इति द्व्यक्षरस्य मंत्रस्य श्येर्ममित शेषः वह्निर्नारायणेनाढ्यो जठरः केवलोपि च । द्व्यक्षरो मंत्रराजोयं भुक्तिमुक्तिफलप्रदः एकाक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ॥ तारमायारमानंगवाक्स्वबीजैस्तु षड्विधः रो द्व्यक्षमंत्रराजः स्यात् नृर्वाभीष्टफलप्रदः द्व्यक्षरश्चंद्रभद्रांतोद्विविधश्चतुरक्षरः ऋष्यादिपूर्ववज्ज्ञेयमेतेषां तुविचक्षणैरिति एवं महाकपिलनारदहयशीर्षपञ्चरात्रस्कंदयामलवैष्णवतंत्रप्रोक्तमंत्रचतुष्टयमुक्त्वाराममन्त्रयंत्रे नरसिंहवराहयोरुद्दिष्टत्वा चा त्रनरसिंहे बहुवक्तव्यत्वादादौ वाराहमंत्रमुद्धरति तारमिति वह्निजायास्वाहा । हुंबीजं स्वाहाशक्तिः । तत्र संत्रार्थे विनियोगोक्तिः । ध्यानामाह। आपादमिति । रथचरणंचक्रं । दरः शंखः । गदां क्षितिः। पृथिवी तस्याधरणोमूलं तत्र लसंती दंष्ट्रा यस्य तं । दंष्ट्रालग्नभूमिमित्यर्थः । लक्षाद्यूर्ध्वयोराद्ये तदधोधस्थयोरन्योन्य इत्यायुधध्यानं । अत्र ध्यानानंतरमेवं मुद्राद्वयं दर्शनीयम् । तल्लक्षणं यथा । वामहस्तमथोत्तानं कृत्वा देवस्य चोपरि । नामयेदिति । संप्रोक्ता मुद्रावाराहसंज्ञितेति । दक्षहस्तं चोर्ध्वमुखं वामहस्तमधो मुखम् । अंगुल्यग्रं पुसंयुक्तंमुद्रावाराहसंज्ञितेति। विष्णोः पीठे वक्ष्यमाणविधानतः पूजयेद्वराहमिति शेषः । पूर्वदीति चतुर्थ्यांत्वाग्नेयादिस्थानापवादः । तद्बहिरिति पत्रमध्येषु । सिंहेति मेषचापयोरप्युपलक्षणम् । उक्तं च नारायणीये । शुक्लाष्टम्यां रवौ मेषसिंहचापगते खनेदिति सितांशिलामिति । फलाधिक्यं दशप-

नूदये भौमवारे साध्यक्षेत्रात्तिमाहरते्। मृत्तिकां सञ्जपन्मंत्री ताम्पुनर्विभजेत्त्रिधा ॥ चूल्ह्यामेकां समालिख्यपाकपात्रे तथापरम् ॥ गोदुग्धे परमं लोड्य शोधितांस्तंडुलान् क्षिपेत् ॥ संस्कृते ग्नौपचेत्सम्यक् चरुंमंत्री जपन्मनुम् ॥ अवतार्य चरुंपश्चादग्नौ देवं यथाविधि ॥ धूपदीपादि कैरिष्ट्वा पुनराज्यप्लुतं चरुम् ॥ जुहुयादेधिते वह्नौ यावदष्टोत्तरंशतम् ॥ एवं सप्तारवारेषु जुहुयात् क्षेत्रसिद्धये। प्रातःकाले भृगोर्वारे मृदं साध्यमहीतलात् ॥ आदाय हविरापाद्य पूर्ववज्जुहुयात् सुधीः। विरोधो नश्यति क्षेत्रे सहचौराद्युपक्रमैः। राजवृक्षसमुत्थाभिः समिद्भिर्मनुना मुना। त्रिसहस्रं प्रजुहुयात्तस्य स्युः सर्वसम्पदः। शालिभिर्जुहुयान्मंत्री नित्यमष्टोत्तरंशतम् ॥ समृद्धैर्द्धान्यसङ्घातैः शोभते तस्य मन्दिरम् ॥ तावदाज्येन जुहुयात्मण्डलात्स्वर्णमाप्नुयात् ॥ लाजैः कन्यामवाप्नोति मधुक्तैर्निजवांछितम्। मधुरत्रयसंयुक्तैर्जुहुयादुत्पलैः शुभैः। महतीं श्रियमाप्नोति मण्डलात्पूर्वसंख्यया ॥ मध्ये बीजं सतारं दहनपुरयुगे चक्रवर्णान् षडस्रिष्वालिख्यांगानि सन्धिष्वथकरणदलैरम्बुजं केसरेषु। अष्टार्णान्पत्रमध्ये लिखतुवसुमितान्मत्रवर्णांश्चतुर्थे शिष्टं पत्रे पुरस्ताद्वसुदलकमले केसरस्थस्वराढ्ये मंत्रार्णान् वेदसंख्यान् दलमनुविलिखेदंत्यमंत्येथ वाह्ये किञ्जल्कैः कादिवर्णैर्विकासितकमले षोडशारे यथा स्यात् ॥ मंत्रार्णान्युग्मशस्तच्चरमदलगतं शिष्टवर्णं लिखित्वा तारक्ष्मा कोलबीजस्तदनुपरिवृतं साध्यनामार्णमध्ये ॥ दर्भितैः साध्यनामार्णैर्मंत्रव-

---

लां विखयावादिस्यामिति पद्मपादाचार्याः। निखनेदिति। भूबीजसहितं वराहमंत्रं जपन्निति ज्ञेयम् तदुक्तमाचार्यैः उदग्वह्नौ मन्त्रीमनुजपरतःस्थापयतु तामिति। मंत्रीत्यनेन भूबीजसाहित्यमुक्तमितिपद्मपादाचार्याः निखननमभिजित्येव। चैत्रमध्येभिजित्काले इत्युक्तेः। साध्यचत्वाज्जिर्घांचितात्। संजपन्निति सर्वत्र संबध्यते। समाभूबीजयोग उक्तःसम्यक् संस्कृतेग्नौ चरुंपचेदिति संबंधः। तत्र सम्यगित्यनेन अष्टादशसंस्कारादि महागणपतिमन्त्रहोमांतमित्युक्तं भवति। मन्त्रीत्यनेन भूबीजयोगःहोमेपि तद्बीजयोगो ज्ञेयः। यथा विधीत्यनेनाग्नौ मण्डूकादि पुष्पांतं समभ्यर्च्येत्युक्तं। आदिशब्देन नैवेद्यग्रहणम्। पुनरनंतरं। आरोभौमः हविरापाद्येति चरुंकृत्वा। पूर्ववद्धविरापाद्यपूर्वत्र ज्जुहुयादित्यनेनभौमवारप्रयोगोक्तक्रमेणाष्टोत्तरशतमित्युक्तम्। नवैरित्यनेनान्यत्र पर्युषितग्रहणमपि अत्र तु नतथेत्युक्तंपूसंख्ययात्रिसहस्रमित्यादि यन्त्रमाह। मध्य इति। दहनपुरयुगे परस्परव्यतिभिन्ने षट्कोणे मध्ये व्यधिकरणे सप्तम्यौ। तत्र सतारं सप्रणवं साध्यसाध्यनामकर्मसहितं बीजं वक्ष्यमाणं वाराहं लिखेत्। अवतारश्चक्रमन्त्रस्थ इति ज्ञेयं। षडस्रिषु षट्कोणेषु वक्ष्यमाणप्रणवव्यतिरिक्तचक्रमन्त्रार्णान्। अंगानि संधिषु चक्रमन्त्रषडंगानीति संप्रदायविदः। रंध्रेष्वंगमनूनपीत्यस्य प्रपञ्चसारपद्यस्य व्याख्याने पद्मपादाचार्यैः चक्रमंत्रषडंगानीति व्याख्यातम्। करणदलैश्चतुर्दलैः अष्टार्णान्नारायणाष्टार्णान् एकैकस्मिन्केसरे वर्णद्वयक्रमेण मत्रवर्णान्वाराहमन्त्रार्णान् वसुमितानष्टमितान् चतुर्थपत्रे नव वर्णाःयथावदिति। अग्रपत्रादीति सर्वत्र संबध्यते। तारः प्रणवः क्ष्माभूबीजं महागणपतिपटले उद्धृतम्। कोलबीजं वक्ष्यमाणं वाराहबीजम्। एतैः किंविशिष्टैः

णैर्वृतम्बहिः ॥ भूबिम्बेनास्य कोणेषु भूबीजं साध्यसंयुतम् ॥ अष्टशूलेषु वाराहं भूबीजसहितं लिखेत्। सार्धीशबिंदुगगनं बीजं वाराहमीरितम् ॥ रोचनागरुकर्पूरलाक्षाकुङ्कुमचन्दनैः ॥ गोमयाम्भसिसम्पिष्टैर्लिखेद्यन्त्रं शुभे दिने ॥ लेखिन्याहेममय्याच सर्वकामप्रसिद्धये ॥ स्वर्णपट्टेलिखेद्यंत्रं राज्यश्रीसमवाप्तये ॥ ग्रामसिद्ध्यैच रजतजेताम्रपट्टेधनाप्तये॥ भूर्जपत्रे निजेष्टाप्तै क्षौमे भूसिद्धये लिखेत्॥जपपूजादिभिः सिद्धंयंत्रं कुर्यान्निजेप्सितं। ग्रामत्तपनराष्ट्रेषु यंत्रमेतत्सुसाधितम् ॥ निखनेच्छुभवारादौसांगन्दिक्षु समर्चयेत् ॥ क्षुद्रापमृत्युचौरादि भूतव्यालमहाभयैः ॥ नशक्यते परैर्द्रष्टुं तंदेशं देवता बलात् ॥ हृदयं भगवत्यैस्या-

---

साध्यनाम्नोक्षराणि मध्ये येषां तैर्वेष्टयेत् एतेन साध्यनामाक्षरपरिपुटितत्वं बीजानामुक्तं भवति। तदुक्तमाचार्यैः। तारमहीकोलार्णैः प्रवेष्टयेत्साध्यपरिपुटितैरिति। मन्त्रवर्णैर्दर्भितैः साध्यनामार्णैर्वृतमिति संबंधः। दर्भितलक्षणं त्रयोविंशे वक्ष्यति। तद्बाह्ये मनुवर्णैर्विदर्भिताभिश्च साध्यपदलिपिभिरित्याचार्योक्तेः। बहिर्भूबिंबेन वृतमिति संबंधः। अष्टशूलेष्विति वर्द्धिताष्टरेखाग्रकृतेषु। तत्र मध्यरेखाया दक्षेवाराहं वामे भूबीजं लिखेदिति संप्रदायः। वाराहबीजमुद्धरति । सार्धीशेति गगनंहः अर्धीश ऊकारः विंदुरेतद्युतम्। अयमपि स्वतंत्रो मन्त्रः। अस्यर्ष्यादिकं यथा। हयग्रीवऋषिः प्रोक्तश्छंदस्त्रिष्टुब देवता वरादीर्घयुक्खेन षडंगतनि च कल्पयेत्। ध्यानपूजादिकं सर्वमस्य वाराहमन्त्रवदिति। कल्पांतरे तु भूरित्युद्धृतम्। तदुक्तं। नाभिर्वामश्रवाः सर्गी तस्य बीजमिहोच्यते इति ॥ जपपूजादिभिरित्यादि शब्देन संपातः। तदुक्तं ॥ मंत्रं संजतमेतद्घृतकृतसंपातपातं करोतोति सुसाधितमितिजयपूजासंपातैः शुभवारादावित्यदिशब्दे नस्थिरराश्यादावितिग्रहणम्। सांगंदिक्षुसमर्चयेत्इत्यस्य अयमभिप्रायः। आत्मातवाराहरूपं ध्यात्वा तत्र यंत्रे वाराहमावाह्य संपूज्य पूजोक्तक्रमेण हृदयादीनिपूर्वादि चतुर्दिक्षु संपूज्य अस्त्रं दिक्षु ऊर्ध्वाधश्च पूजयेदिति। तदुक्तं। मंत्री समास्थाय वराहरूपं साध्यप्रदेशे निखनेच्चयंत्रं। स्थिराख्यराशावभिवाह्यकोलमंगानि दिक्षु क्षिपतां यथावदिति ॥ परमत्यर्थं। अस्याष्टाक्षरोपि मंत्रः प्रसंगेन प्रकाश्यते। अष्टाक्षरे महामन्त्रे शाखादिः प्रथमाक्षरम्। द्वितीयं व्याहृतिस्तस्माद्वाराहाय हृदं तत इति। अस्य ब्रह्माऋषिर्जगतीछंदः श्रीवाराहोदेवता भंबीजम्। ॐ शक्तिः। ध्यानं। कृष्णां गत्वातनीलवक्त्रनलिनं पद्मस्थितं स्वांकगं चोणीशक्तिसुखाहुभिरथो शंखं गदामंबुजम्। चक्रं विभ्रतमुग्रकांतिभनिशं देवं वराहं भजे भूलक्ष्मीरतिकांतिभिः परिवृतं चर्म्मासि संदीप्तिभिरिति। शेषं समानं। अस्य यंत्रद्वयमुच्यते चतुर्द्दले मध्यबीजे केसरेष्ठाक्षरं मनुं। दलेष्वग्रसमस्ताश्च समस्ताव्याहृतीर्लिखेत्। केसरेषुस्वरानष्टपत्रे नारायणं मनुं। दंतसंख्यदलेकादीन्पत्रेष्वानुष्टुभं मनु। हर्चेतिनाम्नापरितस्ततः पाशांकुशावृतम्॥स्मरणाद्धारणात्तस्य सर्वमिष्टफलं लभेदिति। तथा मध्ये बीजे तथाष्टारेतदीयाष्टाक्षरं लिखेत् ॥ बहिर्द्वत्रष्टारपद्मे तु मंत्रानुष्टुभमालिखेत् ॥ द्वंद्वरूपेण तच्चक्रं वाराहमिति विश्रुतं ॥ यद्यत्कामयते मंत्री सर्वमेतेन साधयेदिति। मन्त्रस्तु परजातमहारावराहांगावने धव ॥ वर्द्धते योन्वहं देवं वंदेहं वालिजाधवमिति ॥ वराहमन्त्रप्रसंगाद्धरणीमन्त्रमाहहृदयमिति ॥ हृदयं

द्वरण्यै तदनन्तरम् ॥ धरण्यं ते धरेद्वंद्वे द्विठांतोयं धृगादिकः । एकोनविंशत्पर्णाढ्यं धराहृदयमीरितम् ॥ वराहोस्य मुनिः प्रोक्तश्छन्दोनि वृद्दुदाहृतम् । देवता सर्वभूतानां प्रकृतिर्वसुधामता ॥ हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम् । त्रिभिःशिखा समुद्दिष्टा कवचं पंचभिर्मतम् ॥ द्वाभ्यां नेत्रं समाख्यातं द्वाभ्यामस्त्रमुनर्भवेत् ॥ मंत्रवर्णैः षडंगानि कुर्यादेव विधानवित् ॥ श्यामां विचित्रां शुकरत्नभूषणां पद्मासनां तुंगपयोधरोन्नतां॥इंदीवरेद्वे नवशालिमजरीं शुकं दधानां वसुधां भजामहे । लक्षमेकं जपेन्मंत्रं धराहृदयमादरात् ॥ ससर्पिषा पायसेन जुहुयात्तशांशतः तां । विष्णोः पूजयेत्पीठे वक्ष्यमाणविधानतः अंगानि पूजयेदादौ भूवह्निजलमारुतान् । दिक्पत्रेषु समभ्यच्यें कोणपत्रेषु तत्कलाः।आशापालाः पुनः पूज्या वज्राद्यस्त्रसमन्विताः। एवं सिद्धमनुर्मंत्री साधयेन् स्वमनोरथान् ॥ मधुरत्रयसंयुक्तैर्जुहुयादरुणोत्पलैः।सहस्र भूसमृद्धिः स्यात्तथा नीलोत्पलैः शुभैः । प्रियं गुपुष्पैर्मधक्तैर्धनधान्यमहीश्रियःमञ्जरीं शालिसम्भूतां मधुरत्रयलोलितां ॥ जुहुयात्साधिते वह्नौ मण्डलात् स्याद्धरापतिः । शुक्रवारे दिनमुखे गृहीत्वा साध्यभूदम् ॥ तामम्भसि विनिक्षिप्य शोधितेत्र चरुंपचेत् ॥ पयोघृताभ्यां सहितं जुहुयात्तं हुताशने ॥ षण्मासं शुक्रवारेषु हुत्वैवं प्राप्नुयान्महीं ॥ धरामेवं जपेन्मंत्री पशुरत्नधनादिभिः । धरायाः वल्लभः सत्स्यात्रात्र कार्याविचारणा॥इति श्रीशारदातिलके पञ्चदशः पटलः ॥ १५ ॥ अथाभिधास्ये विधिवन्नारसिंहं महानुजम् ॥ उग्रं वीरं वदेत्पूर्वं महाविष्णुमनन्तरम् ॥ १ ॥ ज्वलन्तं पदमाभाष्य सर्वतो मुखमीरयेत् ॥

---

नमः पदं । अत्रापि पूर्ववद्विसर्गेण सह संधिर्ज्ञेयः प्रणवो बीजंस्वाहा शक्तिः । विधानवित् इत्यनेन शाक्तषडंगसमुद्राभिरित्युक्तं । दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्ये इत्यायुधध्यानम् । विष्णोरिति । ग्लौं वसुंधरायोगपीठाय नम इति पीठमन्त्रः स्वमनोरथानित्यनेन पृथ्वीप्राप्तौ स्वबीजयोग.धनधान्यलाभे श्रीयोगः कीर्त्तौ शक्तियोगोन्यत्र वराहबीजयोगोपि सूचितः शुक्रवार इति । तामंभसीति वृतीयांशं दुग्धे वा । तत्रैकमंशं चुल्यामेकं पात्रे इति ज्ञेयम् । इति श्रीशारदातिलकटीकाया सत्संप्रदायकृतव्याख्यायां पञ्चदशः पटलः ॥ १५ ॥ नृसिंहमन्त्रराजमुद्धरति । उग्रमिति।मन्त्रे सर्वाणि द्वितीयांतानि ॥ श्लोकरूपोद्वात्रिंशदक्षरो मन्त्रः वैदिकत्वादस्य प्रणवादित्वं ज्ञेयं । तापनीये तथोक्तत्वात् । सांप्रदायिकास्तु सुरद्रुम इत्यनेन शक्तिबीजपुटितमेनमाहुः । अस्य हं बीजं ईं शक्तिः तथा च तापनीये । देवाहवै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिबीजं नो ब्रूहि भगव इति । सहोवाचप्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्यात् । य एतां मायां शक्तिं वेद सपाप्मानंतरति समृत्युं जयति सोमृतत्व च गच्छति महती श्रियमश्नुते मीमांसति ब्रह्मवादिनः ह्रस्वा वा दीर्घा वा प्लुता वेति । यदि ह्रस्वा भवति सर्वपाप्मानंतरति अमृतत्वं च गच्छति । यदि दीर्घ भवति महतीश्रियमाप्नोति त्यमृतत्व च गच्छति । यदिप्लुता भवत्यमृतत्वं च गच्छति । सर्वेषां वा एतद्भूतानामाकाशः सर्वनामानि भूतानि आकाशादेव जायन्ते आकाशादेवजाता जीवति । आकाशं प्रयंत्यभि-

नृसिंहं भीषणं भद्रं मृत्युमृत्युं वदेत्ततः ॥ २ ॥ नमाम्यहमयंमंत्रो मंत्रराजः सुरद्रुमः ॥ ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दोनुष्टुबुदाहृतम् ॥ देवता नरसिंहः स्यात्सुरासुरनमस्कृतः ॥ ३ ॥ चतुर्भिर्हृदयं वर्णैः शिरस्तावद्भिरीरितम् ॥ शिखाष्टाभिः समुद्दिष्टा षड्भिः कवचमीरितम् ॥ ४ ॥ तावद्भिर्नयनं प्रोक्तमस्त्रं स्यात्करणक्षरैः ॥ शिरोललाटनेत्रेषु मुखबाह्वंघ्रिसन्धिषु ॥ ५ ॥ साग्रेषु कुक्षौ हृदये गले पार्श्वद्वयं पुनः ॥ अपरांगे ककुदि च न्यसेद्वर्णान्यथा क्रमात् ॥ ६ ॥ माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं जानुन्यस्तकरांबुजं त्रिनय

---

संविशंति तस्माद्दाकाशं बीजंविद्यादिति। तावद्भिरिति चतुर्भिः। तावद्भिः। करणाक्षरैरिति चतुर्भिः। सांप्रदायिकास्त्वन्यथा। षडंगमाहुः तद्यथा। ह्रामाद्यैश्चतुर्भिः पादैरर्द्धद्वयसहितैरानंदात्मने प्रियात्मने ज्योतिरात्मने मायात्मनेज्वालात्मने ज्ञानात्मने क्रमादितदतैः षडंगानि। तापनीये तु पञ्चांगमेवोक्तं। तस्य हि पञ्चांगानि चत्वारः पादाश्चत्वार्यंगानि भवंति सप्रणवं सर्वं पञ्चमं भवतीति ॥ १ ॥ अक्षरन्यासमाहशिर इति। तत्र प्रणवयोर्मध्ये एकैकमक्षरं सविंदुकमुच्चार्य न्यसनीयं। यत्तापनीये उं मित्येतदक्षरमिदं सर्वं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवति। अक्षराणां न्यासमुपदिशंति। ब्रह्मवादिन इति ॥ ५ ॥ अपरांगे पृष्टे ककुदि। अपरगले ॥ अथ तंत्रांतरोक्तो नृसिंहसांनिध्यकरो न्यासोदशविधस्त्विह। प्रोच्यते तत्र पूर्णांयमंगुलीन्यास उच्यते। करांगुष्टाद्यंगुलीषु पृथगाद्यंतपर्वणोः सर्वांगुलौ न्यसेच्छिष्टं तलयोरक्षरद्वयं। ब्रह्मरंध्रललाटभ्रूमध्यदृशोप्यधः कपोले कर्णमूले च चिबुकोर्ध्वाधरोष्टकम् ॥ कंठोरोदक्षदोर्वामदोर्हृत् तनुषु नाभिकं दक्षान्यदोस्तलेकव्यां मेढ्रोर्वो जानुजंघयोः ॥ गुल्फे पादकरांगुल्यां सर्वसंधिषु रोमसु रक्तास्थिमज्जासु भनोर्वर्णाश्चत्रस्येद्विचक्षणः द्वात्रिंशत्पदे गुल्फजानुकटिनाभिषु हृत्स्थले। बाह्वोः कंठे तु चिबुके उष्टे गंडे प्रविन्यसेत् ॥ कर्णयोर्वदने नासा पुटे नेत्रे च मूर्द्धनि। पदानि तु मुखे केन चक्षुः श्रोत्रेषु विन्यसेत्। आस्ये च हृदये नाभौ कटिजानुपदेष्वपि। नासाट्टकर्णनाभीहृत्कदोः पत्सु प्रविन्यसेत् ॥ चतुर्वर्णान्मनोः पादान् कहृन्नाभिषु सर्वतः अर्द्धद्वयं न्यसेन्मूर्द्धन्याहृत्यादात्तदंगकं। उग्राद्युग्रादीनिनवपदानीह नमाम्यहम्। इत्यंतान्यासकप्राणदृक्कर्णेषु च यत्नमु। हृदिनाभौ च कट्यादि पादांतं नवसुन्यसेत्। वीराद्यान्यपि तान्येवयथा पूर्वं प्रविन्यसेत्। नृसिंहाद्यानि तान्येव पूर्ववद्विन्यसेत्सुधीरिति अत्र न्यासानंतरमेतामुद्राः प्रदर्शयेत्। जानुमध्यगतौ कृत्वा चिबुकोष्टौ समावुभौ। हस्तौ च भूमिसंलग्नौ कंपमानं पुनःपुनः। मुखं विजृंभितं कृत्वा लेलिहानां च जिह्विकां। एषा मुद्रानारसिंही-प्रधानेति प्रकीर्त्तिता वामस्यांगुष्टतो बध्वा कनिष्टामगुलीत्रयं। त्रिशूलवत्संदुखोर्ध्वं कुर्यान्मुद्रां नृसिंहमां। अंगुष्टाभ्यां च करयोस्तथा क्रम्य कनिष्टिके। अधोमुखाभिः श्लिष्टाभिः शेषाभिर्न्टह रेमंता। हस्तावः धोमुखौ कृत्वानाभिदेशे प्रसार्य्य च। तर्ज्जनीभ्यां नयेत्स्कंधौ प्रोक्तैषां चाख्यमुद्रिका। हस्तावूर्ध्वमुखौ कृत्वा तले संयोज्य मध्यमे। अनामायां तु वा मायां दक्षिणां तु विनिक्षिपेत्। तर्ज्जन्यौ पृष्टतो लग्ने अंगुष्ठौ तर्ज्जनीश्रितौ। वक्रमुद्राभवेदेषा नृहरेः संनिधौ मता। वक्रमुद्रांतथा कृत्वा तर्जनीभ्यांतुमध्यमे। पोडयेद्दंष्ट्रमुद्रेषा सर्वपापप्रणाशिनीति। एताःसर्वनृसिंहमन्त्रसाधारण्यइति

नं रक्तोल्लसद्भूषणम् । बाहुभ्यां धृतचक्रशंखमनिशं दंष्ट्राग्रवक्त्रोल्लसज्ज्वालाजिह्वमुदग्रके-शनिचयं वंदे नृसिंहं विभुम् ॥ ७ ॥ वर्णलक्षं जपेन्मंत्रं तत्सहस्रं घृतप्लुतैः । पायासान्नैः प्रजुहुयाद्विधिवत्पूजिते नले ॥ एवं कृतं भवेन्मंत्री सिद्धमंत्रः प्रतापवान् ॥ पूजाप्रागीरिते पीठे मूर्त्तिमूलेन कल्पयेत् ॥ पूजयेद्विधिवत्तस्यां दैत्यशत्रुमनन्यधीः । अंगान्यादौ समाराध्य दिग्दलेषु यजेत्पुनः। पक्षींद्रं शंकरं शेषयमब्जयोनिं यथा क्रमात् ॥ श्रियं धृतिं बुद्धिमन्यादिषु यजेत्ततः लोकपालाः समभ्यर्च्यास्तदस्त्राणि ततःपरम् ॥ इत्थं जयादिभिः सिद्धे मनौ काम्यानि साधयेत् ॥ उद्यत्कोटि रविप्रभं नरहरिंकोटी रहारोज्वलं दंष्ट्राभीममुखं लसन्न-खमुखैर्दीर्घैरनेकैर्भुजैः।निर्भिन्ना सुरनाथमग्निशशभृत्सूर्यात्मने त्रत्रयं विद्युत्पुञ्जसटाकला-पभयदं वह्निं वमं तं भजे ॥ सौम्ये सौम्यं स्मरेत्कार्य्ये क्रूर क्रूरमिमं भजेत् ॥ श्रीपुष्पैर्जु-हुयान्मंत्री बिल्वकाष्ठेधिते नले ॥ सहस्रं श्रियमाप्नोति यंत्रैर्वा बिल्वसंभवैः। प्रसूनैर्वा फलै-स्तद्वद्दूर्वाहोमादरोगतां ॥ मंत्रजप्तां वचां श्वेतां भक्षयेत्प्रातरन्वहम् ॥ वाक्सिद्धिं लभते मंत्री वाचस्पतिरिवापरः। सलिले देवमभ्यर्च्य गन्धपुष्पादिभिः शुभैः । दूर्वाभिस्तत्र जुहुया-न्नित्यमष्टोत्तरंशतम् ॥ उपसर्गा विनश्यन्ति क्षुद्रभूतज्वरादिभिः ॥ दुःस्वप्ने निशिसंजाते स्नात्वा मंत्रममुंजपेत् ॥ अनिद्रो मंत्रवित्पश्चात्सुस्वप्नस्तस्य जायते ॥ व्याघ्रचौरमृगादि-भ्या महारण्ये भयाकुले ॥ रक्षेन्मनुरयं जप्तो भयेष्वन्येषु मंत्रिणम् ॥ अनेन मंत्रितं भस्म विषग्रहमहाभयान् ॥ नाशयेदचिरादेव मंत्रस्यास्य प्रभावतः ॥ घोरे भिचारे सोन्मादे महो-त्पाते महाभये ॥ जपेन्मंत्रं स्मरेद्देवं दुःखान्मुक्तो भवेन्नरः। सिंहरूपं महाभीमं नखदंष्ट्रा-तिभीषणां ॥ स्मृत्वात्मान रिपुं पश्चाद्ध्यायेन्मृगशिशुं पुरः ॥ गृहीत्वा गलदेशे तं पुनर्दिक्ष

---

श्रेयं॥७॥वर्णलक्षमिति द्वात्रिंशल्लक्षं तत्सहस्रं द्वात्रिंशत्सहस्रं विधिवदि।तिदेवतापीठंतत्राभ्यर्च्येत्यर्थः प्रागीरिते इति नारायणाष्टाक्षरोक्ते विधिवदिति वक्ष्यमाणविधानेन किंचविधिवदित्वनेन ताप-नीयोक्तयंत्रे दशावरणानि पूजयेदित्युक्तं समाराध्येति तूर्याक्षरीत्यासौम्य इति एतदुपासना वि-षये। सौम्यं पूर्वोक्तध्यानं क्रूरे प्रयोगविषय इत्यर्थः क्रूरमनंतरोक्तं । तदुक्तमाचार्यैः । प्रतिपत्तिर-स्यचोक्ता प्रसन्नता क्रूरता विशेषेणद्विविधा प्रसन्नयास्यात्साधनपूजान्यया प्रयोगविधिरिति । श्री-तिलक्ष्मीलता तद्वदिति । श्रियमाप्नोतीत्यर्थः अरोगतामित्यत्राप्नोतीत्यनु षज्यते तत्रेति जलेउपस-र्गा उपद्रवाः तदुक्तमाचार्यैः दूर्व्वात्रिकैरष्टसहस्रसंख्यै राराध्य मंत्री जुहुयादथाप्सु । शांति-प्रयांत्येवतदोपसर्गा आपोहि शांता इति च श्रुतिः स्यात् । उत्पाते सति महतिह्युपद्रवाणां होमो-य भवति स शांतिदो नराणां । यद्वान्यन्निजभनसेप्सितं च कर्म तत्प्राप्नोत्यखिलनृणांप्रियश्च भूया-दिति । स्नात्वेति । दुःस्वप्नानंतरं तदैव । जपेदित्यष्टोत्तरशतं । सुस्वप्न इति।स एव दुः स्वप्न एवं सुस्व-प्नफलदो भवति । मृगाः सिंहाद्याः विषेत्यनेन सर्पादीनां विषं ग्रहा । अष्टादश महामयानित्यनेन ज्वरादयः संगृहीताः यदाहुः मूषिकलूलतावृश्चिकबहुपदाद्युत्थितं विषं शमयेत् । अष्टोत्तरशतज-पात्मनुरयमभिसन्चितं च भस्माद्यं । सशिरोच्चिकर्णहृद्गुलकुक्षिरुजाज्वरविसर्प्पिवमिहिक्काः ॥ म-

क्षिपन्हुनम् ॥ पुत्रमित्रकलत्राद्यैरुच्चाटोजायते रिपोः ॥ पूर्वंमृत्युपदे साध्यनामकृत्वा स्वयं हरिः ॥ निशितैर्नखदंष्ट्राग्रैः खाद्यमानं रिपुं स्मरेत् ॥ नित्यमष्टोत्तरशतं जपेन्मंत्रमतन्द्रितः॥ जायते मण्डलादर्वाक् शत्रुर्वैवस्वतःप्रियः॥ कुर्वीत यत्नं विधिवच्छत्रुसेनानिवारणे । बिभीतकाष्ठे ज्वालिते पावके रिपुमर्दनम् । विचिंत्य देवं नृहरिं सम्पूज्ये कुसुमादिभिः ॥ समूलतूलैर्जुहुयाच्छरैर्दशशतं पृथक् ॥ रिपुं खादन्निवजपेद्भिंदन्निव च तान् क्षिपेत् ॥ हुत्वा सप्तदिनं मंत्री सेनामिष्टां महीपतेः ॥ प्रस्थापयेच्छुभेलग्ने पराराज्यजयेच्छया ॥ तस्यापुरस्ता-

---

न्त्रोषधाभिचारिककृतान्विकारानय मनुः शमयेदिति । रिपुमित्यग्रिमेण संबध्यते । तंरिपुं क्षिपेदित्यन्वयः पुति पाठे आत्मानं पुरास्कृत्वेत्यन्वयः।पुरः इतिपाठे आत्मनःअग्रे इत्यर्थः।पूर्वमृत्युपदेति।मन्त्रे मृत्युमृत्युमिति मृत्यु पदद्वयमस्ति । तत्र पूर्वमृत्युपदं त्यक्त्वा तत्स्थाने साध्यनामप्रयोग इत्यर्थः स्वयं हरिरिति । आत्मानं नृसिंहरूपं ध्यात्वेत्यर्थः । यत्नं कुर्वीतेत्यादि अनर्थः स्यान्महीपते रित्यंतमेक एव प्रयोगः विधिवद्यत्नमेवाह । बिभीतेति।रिपुमर्दनमित्यनेन क्रूरध्यानं कर्त्तव्यमिति सूचितम् । पृथगिति।प्रत्यहं रिपुं खादन्निवजपेदित्यस्यायमर्थः होमसमये रिपुं खादन्निव नृसिंहोऽहमित्यात्मानं ध्यात्वाजपेन्मन्त्रमुच्चरेत् । ततोरीम् भिंदन्निव नृसिंहोऽहमिति आत्मानं ध्यात्वा तान् शरानग्नौ क्षिपेदिति । तदुक्तं । खादन्निवोच्चरेन्मनुमरीन्भिंदन्निव क्षिपेत्समिध इति । हुत्वा माष्टौ सते रिष्टां शुभे लग्ने प्रस्थापयेदिति संबंधः स्मृत्वा प्रयोगमिति । यावदायाति तावज्जपं पूर्वोक्तध्यानं चकुर्यादित्यर्थः । तदुक्तं । यावज्जितारिरेष्यतिनृपतिस्तावज्जपेत्स्मरेद्देवमिति । तंत्रान्तरोक्ता ध्यानभेदा लिख्यते । नरसिंहं महाभीमं कालानलसमप्रभम् ॥ आंत्रमालाधरं रौद्रं कण्ठहारेण शोभितम्।नागयज्ञोपवीतं च पञ्चाननसुशोभितम् । चन्द्रमौलिं नीलकंठं प्रतिवक्त्रं त्रिनेत्रकम् । भुजैः परिघसंकाशैर्दशभिस्समुपशोभितम् । अक्षसूत्रं गदापद्मं शंखं गोक्षीरसंनिभम् ॥ धनुश्च मुशलं चैव बिभ्राणं चक्रमुत्तमं ॥ खड्गं शूलं च बाणं च नृहरिं रुद्ररूपिणं । इंद्रगोपाभनीलभं चन्द्राभं स्वर्णसन्निभम् । पूर्वादि चोत्तरे पादऊर्ध्वास्यं सर्ववर्णकम् । एवमुग्रं हरिं ध्यायेत्सर्वव्याधि विमुक्तये । सर्वमृत्युहरं दिव्यं स्मरणात्सर्वसिद्धिदम् । ध्येयो यदामहत्कर्म तदा षोडशहस्तवान् ॥ नृसिंहः सर्वलोकेशः सर्वाभरणभूषितः द्वौ विदारणकर्माढ्यौ द्वौ चांत्रोद्धरणान्वितौ ॥ चक्रशंखधरौ द्वौ तु द्वौ च बाणधनुर्द्धरौ । खड्गखेटधरौ द्वौ च द्वौ गदापद्मधारिणौ।पाशांकुशधरौ द्वौद्वौ रिपोर्मुकुटार्पितौ॥इति षोडशदोर्दण्डमण्डितं नृहरिं विभुं ॥ ध्यायेन्नीरदनीलाभमुग्रकर्म्मण्यमन्यधीः । ध्येयो महत्तमे कार्ये दशद्वाविंशहस्तवान् । नृहरिः सर्वभूताढ्यः सर्वसिद्धिकरः प्रभुः दक्षिणे चक्रपद्मे च परशुं वाणमेव च ॥ हलं च मुसलं चैव मभयं चांकुशं तथा ॥ पट्टिशं भिण्डिपालं च खड्गमुद्गरतो मरान् ॥ वामभागे करैः शंखं खेटं पाशं च शूलकम् ॥ अग्निं च वरदं शक्तिं कुण्डिकां च ततः परम् ॥ कार्मुकं तर्जनीमुद्रांगदांडमरूसंयुतौ ॥ द्वाभ्यां कराभ्यां च रिपोर्जानुमस्तकयोनम् ॥ उर्ध्वीकृताभ्यां बाहुभ्याभांत्रमालाधरं हरिम् ॥ अधः स्थिताभ्यां बाहुभ्यां हिरण्यकविदारणम् ॥ प्रियं करं च भक्तानां दैत्यानां च भयङ्करम् ॥नृसिंहं संस्मरेदित्यं महा-

न्नृहरिं निघ्नन्तं रिपुमण्डलम् ॥ स्मृत्वा प्रयोगकुर्वीत यावदायाति सा पुनः ॥ विजित्य निखिलां छत्रून् सहवीरश्रियासुखम् । आगत्य विजयी राजा ग्रामक्षेत्रधनादिभिः ॥ प्रीणयेन्मंत्रिणं सम्यग्विभवैः प्रीतमानसः ॥ मंत्री यद्दिनसन्तुष्टोह्यनर्थः स्यान्महीपतेः ॥ बीजं साध्यसमन्वितं प्रविलिखेन्मध्येष्टपत्रेष्वथो मंत्रार्णान् श्रुतिशो विभज्य विलिखेत् लिप्याबहिर्वेष्टयेत् ॥ बाह्ये कोणगबीजवद्धवसुधा गेहद्वयेनावृतम् ॥ यंत्रं क्षुद्रविषग्रहामयारियुप्रध्वंसनं श्रीपदम् ॥ कृत्वा नवपदात्मानं मण्डलं यंत्रसंयुतम् ॥ अस्मिन् संस्थापयेन्मंत्री कलशान्नव शोभनान् ॥ कषायतोयसंम्पूर्णन् वस्त्ररत्नादि संयुतान ॥ मध्ये सम्पूजयेद्देवं नृसिंहं शांतविग्रहम् ॥ तार्क्ष्यादीन्पूजयेन्मंत्री पूर्वादिषु यथाक्रमम् ॥ इति संसाधितैस्तोयैरभिषिंचेत्प्रियं नरम् ॥ अभिचारगृहोन्मादाविनश्यत्यारिभिःसह ॥ अभिषिक्तस्तदा विप्रान् पूजयेद्देवता धिया ॥ यथावत्पूजयेत्पश्चाद्भक्त्या गुरुमवंचयन् ॥ राजाविजयमाप्नोति युद्धेषु

---

मृत्युभयापहम् ॥ अथोच्यते ध्यानमन्यन्मुखरोगहरं शुभम् ॥ स्वर्णाद्याभे सुपर्णे स्थितमभिसुमुखं कोटिपूर्णेंदुवर्णविद्युन्मालासटाभिस्त्रिशिखभमष्टशं पीतवस्त्रोरुभूषम् ॥ हस्तोद्यच्चक्रशंखा भयवरमखिलक्ष्वेलरोगादि मृत्यूचैर्ध्वानैर्ध्वंसयंतं मुरनुतमनिशं संस्मरेच्छ्रीनृसिंहमिति ॥ यंत्रमाह बीजमिति ॥ बीजं वक्ष्यमाणम् ॥ नारसिंहम् ॥ श्रुतिशश्चत्वारिचत्वारि लिप्यामातृकया कोणगं बीजं यंत्रं एवं भूतं बद्धं व्यतिभिन्नं यद्वसुधागेहद्वयं तेनवृतम् ॥ यंत्रसंयुतमिति नवनाभमध्यपद्मकर्णिकायां ॥ अस्मिन्नवनाभमण्डले ॥ कषायः क्षीरिदुमत्वचांरस एव तोयम् ॥ वस्त्ररत्नादीत्यादि शब्देन हेम ॥ शांतविग्रहमिति ॥ माणिक्येति प्रोक्तध्यानम् ॥ तार्क्ष्यादानिति पूर्वोक्तपक्षीन्द्रादीन् ॥ पूर्वादिषु अग्रादिषु ॥ देवता यथावद्गुरुं पूजयेदितिसम्बन्धः ॥ यथावदित्यनेन पाद्याद्युपचारोक्तिः ॥ यंत्रांतरमाह वीजांकमिति पूर्वापरायताः पञ्चरेखाः कुर्यात् ॥ दक्षिणोदगाता नव रेखाः कुर्यात् ॥ प्राग्रेखाग्रेषु पञ्चसु फणाकारता कार्या ॥ पश्चिमाग्रेषु पञ्चसु पुच्छाकारता कार्या ॥ तत्र प्रतिफणमेकैकं बीजं लिखेत् ॥ जपादीत्यादि शब्देन प्राणप्रतिष्टा पूजा ॥ तंत्रांतरस्थं यंत्रमुच्यते ॥ षोडशारं महाचक्रं लिखेद्भूर्जे प्रयत्नतः ॥ दलेषु मंत्रवर्णानि युग्मयुग्मक्रमाल्लिखेत् ॥ त्रैलोक्यमोहनं बीजं कर्णिकायां लिखेद्बुधः ॥ श्रीबीजेन संवेष्ट्य क्रोंकारेणावरुध्य च ॥ विवादे कलहे न्याये तथा राजकुलेजयो ॥ मेधाकरी वश्यकरी नरनारीवशङ्करी ॥ शिखायां धारयेद्वापी कण्ठे वा कटिसूत्रके ॥ सर्वत्र सुभगो लोके सर्वत्राप्रतिमो भवेत् ॥ चिंतामणिर्नामरक्षा स्वयं सिद्धेन नर्मिता ॥ पुनरन्यां प्रवक्ष्यामि रक्षां त्रैलोक्यमोहिनीं ॥ यस्याः सन्धारणादेव भवेयुः सर्वसंपदः ॥ श्वेतभूर्जे लिखेत्पद्मं द्वात्रिंशत्सिंहसयुतम् ॥ मध्ये सिद्धेश्वरं बीजं लिखेत्पूर्ववदेव तु ॥ श्रो बीजेन तु संवेष्ट्य वलयत्रयसंयुतम् ॥ पाशांकुशैश्च संवेष्टय पूजयेद्यंत्रमुत्तमम् ॥ त्रैलोक्यमोहनं नाम सर्वकामार्थसाधनम् ॥ चक्रराजं माहाराजसर्वचक्रेश्वरेश्वरम् ॥ धारणाज्जयमाप्नोति सत्यं सत्यं न संशय इति ॥ कृष्णं रुद्रं महाघोरं भीमं भीषणमुज्ज्वलम् ॥ करालं विकरालं च दैत्यांतं मधुसूदनं ॥ रक्ताक्षं पिङ्गलाक्षं च अञ्जनं दीप्ततेजसम् सुघोणं सुहनुं चैव विश्वाक्षं राक्षसांतकम् ॥

विधिनानुना ॥ बीजांकं फणयं चकं प्रविलिखेच्छेषस्य भोगे पुनर्द्वात्रिंशत्पदसंयुते परिलिखेन्मंत्राक्षराणि क्रमात् ॥ पुच्छेनामजपादि साधितमिदं होमेन सम्पातितं। भूतावस्मृतिदुःखरोगशमनं यंत्रं रिपुध्वंसनम् ॥ क्षकारो वह्निमा ढो मनुस्वरसमन्वितः ॥ बिन्दुना दलसम्मूर्द्धा बीजं नरहरेर्मतम् ॥ बीजं नमोभगवते नरसिंहाय तत्परम् ॥ स्याज्ज्वालामालिने पश्चाद्दीप्तदंष्ट्रायतत्परम् ॥ अग्निनेत्राय सर्वादि रक्षोघ्नाय पदं वदेत् ॥ सर्वभूतविनाशांतं नकारो दीर्घवान् मरुन् ॥ सर्वज्वरविनाशांति नापाणौदहयुक्रम् ॥ पचद्वयं रक्षयुग्मं हुं फट् स्वाहा ध्रुवादिकः। अष्टषष्ट्यक्षरैः प्रोक्ता ज्वालामाली महामनुः। हृत्त्रयोदशभिः प्रोक्तं शिरोदशभिरीरितम्। शिखैकादशभिः प्रोक्तावर्मा द्वादशभिर्मतं। वर्णैर्द्वादशभिर्नेत्रमस्त्रंस्यात्करणाक्षरैःएवमंगानि विन्यस्य चिंतयेन्मंत्रदेवतां ॥उज्ज्वलत्प्रलयानलाभमयुग्मनेत्रमनारतं भासुरं शिखिनः शिखाभिरुग्रदंष्ट्रमुखांबुजं रक्षसां भयदं विकीर्णसटाकलापविभीषणं शंखं चक्रकृपाणखेटकधारणं नृहरिं भजे लक्षमेकं जपेन्मंत्रं तद्दशांशसमाहितम् ॥ कपिला-

---

विशालं धूम्रकेशं च हयग्रीवं धनम् ॥ मेघनादं मेघवर्णं कुम्भकर्णं कृतांतकम् ॥ तीव्रतेजमग्निवर्णं महोग्रं विश्वभूषणम् ॥ विघ्नक्रमं महासेनं सिंहाद्वात्रिंशदोरिता इति ॥ नृसिंहबीजमुद्धरति चकार इति वह्निरेफः मनुस्वर औ ॥ अयपि स्वतंत्रो मंत्रः। अस्यर्ष्यादिकं यथा ॥ ऋषिरत्रिश्च गायत्रीछन्दः श्रीनृहरिः प्रभुः। देवता दीर्घयुग्बीजैनैवांगं परिकल्पयेत् ॥ ध्यानं पूर्ववदेवस्यादेकलक्षं जपेन्मनुम् ॥ तद्दशांशं हुनेत्सम्यक् घृताक्तैः पायसैः शुभैः। अर्घा होमादिकं सर्वमस्य पूर्ववदाचरेत् ॥ मंत्रराजवदेवास्य प्रयोगानपि साधयेत् ॥ हृल्लेखा संपुटं केचित्सङ्गिरन्ते मनुंत्वमुमिति ॥ तथा अष्टारं विलिखेत्पद्मं स्वर्णं लर्णिकयायुतम् ॥ मूलमंत्रं लिखेत्तत्र प्रणवेन समन्वितम् ॥ एकाक्षरं नारसिंहं नाम्ना चैव ससाधकम् ॥ जपेदष्टसहस्रं तु सूत्रेणावेष्ट्य तद्बहिः ॥ सुवर्णेन तु संवेष्ट्य रौप्येणावेष्टयेत्ततः ॥ ताम्रेण विष्टयेत्येवमाज्ञाच्छया च प्रयत्नतः ॥ पुनर्मंत्रेण संमंत्र्य ह्याग्निमुत्तारयेत्प्रिये ॥ कण्ठे भुजे शिखायांवा धारयेद्यंत्रमुत्तमम् ॥ नरनारीनरेंद्रास्य सर्वेस्युर्वशगा भुवि ॥ दुष्टास्तेनैव बाधते पिशाचोरगराक्षसाः ॥ चक्रराजप्रसादेन सर्वत्रजयमाप्नुयात् ॥ द्वादशारं महाचक्रं पूर्ववद्विलिखेत्सुधीः ॥ मात्रा द्वादशसम्भिन्नं दलेतल्लेखयेद्बुधः। मध्ये मंत्रं शक्तियुक्तं श्रीबीजेन तु वेष्टयेत् ॥ कालांतकं नाम चक्रं सुरा सुखशङ्करम् ॥ चक्रमुल्लेखयेत्भूर्जे सर्वशत्रुनिवारणम् ॥ यस्य धारणमात्रेण सर्वत्रविजयी भवेत् ॥ सश्लाघ्योथ भवेल्लोके यथा देवो नृकेसरीति ॥ ज्वालानृसिंहमंत्रमाह बीजमिति बीजं नारसिंहं। नकारोदीर्घवान् ना ॥ मरुद्यकारः। ब्रह्मा ऋषिः छन्दः ज्वालामाली नृसिंहो देवता क्षौं बीजं स्वाहा शक्तिः। करणाक्षरैश्चतुरक्षरैः। ननु मंत्रस्य सप्तषष्ट्यक्षरत्वमुक्तम् ॥ हृत्त्रयोदशभिरित्यादिनांगोक्तौ अष्टषष्ट्यक्षराणि लभ्यन्ते इति पूर्वापरविरोध इति चेत्सत्यम् तत्रांगकरणे पदविभेदेनैवांगकारणाद्दंष्ट्राय तत्रैव शिरोंगस्य समाप्तिः ॥ शिखात्वग्निनेत्रायेत्याद्येकादशभिः। मंत्रे तु दंष्ट्रायग्नीति सन्धिरेवेति न दोषः। रक्षसांभयदमिति विनियोगोक्तिर्ज्ञेया। सटाकलाप स्कन्धकेशसमूहम् ॥ जटाजटाकेस-

ज्येन जुहुयात् समिद्भिर्हव्यवाहने ॥ प्रागुक्ते पूजयेत्पीठे देवं संप्रोक्त वर्त्मना ॥ कुर्वीत मंत्र-
राजोक्तान् प्रयोगान्मनुनामुना ॥ विशेषात् क्षुद्रभूतारिनाशनोयं मनुः स्मृतः ॥ या शक्ति
नरहरिरंकुशो वर्म फट् मनुः।षडक्षरो नरहरिः कथितः सर्वकामदः। ऋषिर्ब्रह्मा समुद्दिष्टः
पंक्तिश्छन्द उदाहृतः। देवता नरसिंहस्य षड्बीजैरंगकल्पना ॥ कोपादालोलजिह्वं विवृत-
निजमुखं सोमसूर्याग्निनेत्रं पादादनाभिरक्तप्रभमुपरासितं भिन्नदैत्येंद्रगात्रं चक्रं शंखं स-
पाशां कुशकुलिशगदा दारुणान्युद्वहन्तम्। भीमं तीक्ष्णोग्रदंष्ट्रं मणिमयविविधा कल्पमीडे
नृसिंहम् ॥ ऋतुलक्षं जपेदेनं घृतेन जुहुयात्ततः। तत्सहस्रं समिद्भिरग्नौ तोषयेद्द्रविणैर्गुरुम् ॥
अर्चाप्रागीरिते पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ अङ्गवृत्तेर्बहिश्चक्रं शंखं पाशांकुशौ पुनः। वज्रं
कौमोदकीं खड्गखेटौ पत्रेषु पूजयेत् ॥ इन्द्राद्याने तदस्त्राणि पूजयेद्बाह्यतः सुधीः ॥ एवं
कृत्वा पुरश्चर्यां मंत्रेणानेन मंत्रवित्॥प्रयोगान् कल्पनिर्दिष्टान् कुर्यात् स्वस्य वा पर ॥ रक्तो-
त्पलैस्त्रिमध्वक्तैः सहस्रं जुहुयान्नरैः। नित्यं मासाद्भवेदिष्टं वत्सराद्धनधान्यवान् ॥ रक्तै-

---

रयोरिति काश्यः। वामाद्यूर्द्ध्वाद्वामाधस्तनं यावदायुधध्यानम् ॥ लक्ष्मीनृसिंहमंत्रमाह पाश इति
पाश आं शक्तिमायाबीजं नरहरिर्नृसिंहबीजम् ॥ अंकुशः क्रों वर्म हुंफट् स्वरूपम् ॥ क्ष्लौं बीजं
माया शक्तिः। सर्वकाम इत्यनेन विनियोग उक्तः। आयुधध्यानं तु दक्षाधूर्द्ध्वयोराद्ये तदधोधस्थ-
योरन्त्ये इति ॥ एवं क्रमेण चतुर्थाभ्यां दक्षवामाभ्यां धारणमुद्रा ॥ तल्लक्षणं तु । मिथः संस्पृ-
ष्टसंमुख्योंगुलयोरूर्ध्वधोग्रकाः स्वस्थानसरलांगुष्ठौ ॥ मुद्रेयं दारणा मतेति ॥ ईडे स्तुवे ईडस्तुता
विति धातुः ॥ ऋतुलक्षं षट्लक्षम् ॥ तत् सहस्रं षट्सहस्रम् ॥ एवं कृत्वा पुरश्चर्य्यामिति अत्र
सर्वमंत्राणां साधारणपुरश्चरणविधानमुच्यते ॥ तत्र पुरश्चरणशब्दार्थो वायवीयसंहितायां। साधनं
मूलमंत्रस्य पुरश्चरणीयत्वाद्विनियोगाख्यकर्मणां ॥ पुरतो विनियोगस्य चरणाद्वातथोदितमिति ॥
अगस्ति संहितायामपि ॥ अथ वक्ष्ये विधानानि पौरश्चरणिके विधौ। विना नयेन सिद्धः स्या-
न्मंत्रोवर्षशतैरपि ॥ तत्पुरश्चरणं नाम मंत्रसिद्ध्यर्थमात्मनः यथोक्तं नियमं कृत्वा स्वकल्पोक्तजपस्य
हि ॥ करणं द्विजयागांनं प्रोक्तं देशिकसत्तमैरिति ॥ मंत्रतंत्रप्रकाशे ॥ धर्मार्थकाममोक्षेषु शास्त्रमा-
र्गेण योजनम् ॥ सिद्धमंत्रस्य संप्रोक्तो विनियोगो विचक्षणैः । पुरश्चरणपूर्वोसौ विनियोगोतनोर्म-
तः। फलाय मंत्रसेवायाराजसेवा यथातथा ॥ चरणात्पूर्वमेवासौ पुरश्चरणमुच्यत इति ॥ यथासि-
तैकविधहैमन्तशाल्यन्नं स्वीयसञ्चितम् ॥ अशूद्रावहृतं यद्भ्यामनुत्तोल्पचयद्धतम् । दधिक्षीरं घृतं
गव्यं ऐक्षवं गुडवर्ज्जितम् ॥ तिलाश्चैव सिता मुद्गाः कन्दः केमुकवर्ज्जितः । नारिकेलफलं चैव
कदलं लवली तथा ॥ आम्रमामलकं चैव पनसं च हरीतकींव्रतांतरं प्रशस्तं च हविष्यं मन्यते
बुधः। अवेणानलभ्यं च यत्प्रशस्तं व्रतांतरे ॥ त्याज्यमेवात्र तत्सर्वं यदीच्छेत्सिद्धिमानः ।
क्षारं च लवणं मांसं गृञ्जनं कांस्यभोजनम् ॥ माषाढकी मसूरांश्च कोद्रवांश्चणकानपि ॥ तांबूलं
च द्विभुक्तं च दुःसंवासं प्रमत्तताम् ॥ श्रुतिस्मृतिविरुद्धं च जपंरात्रौ च वर्ज्जयेदिति ॥ तथा मनः
संहरणं शौचं मौनं मंत्रार्थचिन्तनम् ॥ अव्यग्रत्वमनिर्वेदो जयसंपत्तिहेतव इति ॥ यथा ॥ भूशय्या-

ब्रह्मचारित्वं मौनं चार्य्यानसूयिता। नित्यं त्रिषवणस्नानं चुद्रकर्मविवर्ज्जनम्॥ नित्यपूजा नित्यदानं देवता स्तुति कीर्त्तनम्॥ नैमितिकार्चनं चैव विश्वासो गुरुदेवयोः। जपनिष्ठाद्वादशैते धर्म्माः स्युर्मंत्रसिद्धिदा इति॥ इति॥ तथा॥ स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम्॥ जिह्म भाषणं परिवर्ज्जयेत्॥ सत्येरपिनभाषेतजपहोमार्चनादिषु॥ असद्भाषणभत्यर्थं वर्ज्जयेदन्यपूजनम्॥ वाङ्मनः कर्मभिर्नित्यं निस्पृहोवनितादिषु॥ वर्ज्जयेदगीतकांस्यादि श्रवणं नृत्यदर्शनम्॥ तांबूलं गन्धलेपं च पुष्पधारणमेव च॥ मैथुनं तत्कथालापं तद्गोष्ठीः परिवर्ज्जयेत्। कौटिल्यं चारमभ्यंगमनिवेदितभोजनम्॥ असङ्कल्पितकृत्यं च वर्ज्जयेन्मर्द्दनादिकम्॥ त्यजेदुष्णोदकस्नानं सुगन्धामलकादिकम् शिरोंगं पञ्चगव्येन पावयेद्बहिरन्तरम्॥ स्नायाच्च पञ्चगव्येन केवलामलकेन वा॥ शक्तौ त्रिषवणस्नानमन्यथा सकृदाचरेदिति॥ तथा॥ अपवित्रकरोनग्नः शिरसि प्रावृतोपिवा॥ प्रलपन्वा जपेद्यावत्तावन्निः फलमुच्यते॥ सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत्॥ प्रोक्ते पामरशब्देपि प्राणायामं सकृच्चरेत्॥ बहुप्रलापे चावश्यं न्यस्यांगानि ततोजपेत् चुतेप्येवं तथा स्पृश्य स्थानानां स्पर्शने तथेति॥ वायवीयसंहितायामपि॥ उष्णीषी कं चुकीनग्नो मुक्तकेशोंगनावृतः। अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित्॥ असंहृत्तौ करौ कृत्वा शिरसा प्रावृतोपि वा। व्याकुलचित्तो वा क्रुद्धो वांतःचुधान्वितः॥ अनासनः शयानोवा गच्छन्नुत्थित एव वा॥ रथ्यायामशिवस्थाने नजपेत्तिमिरांतरे॥ उपानद्रूढपादोवा यानशय्यागतस्तथा। प्रसार्य नजप्यादावुत्कटासन एव वा॥ पतितानामंत्यजानां दर्शने भाषिते श्रुते॥ चुते धीवायुगमने जृम्भणे जपमुत्सृजेत्॥ प्राप्तावाचम्यचैतेषां प्राणायामं षडङ्गकम्॥ कृत्वासम्यग्ज पेच्छेष्टं यद्वासूर्यादि दर्शनम्॥ मार्ज्जारं कुक्कुटं क्रौंचं श्वानं गृध्रं खरं कपिम्॥ दृष्ट्वाचम्य चरेत्कर्म स्पृष्ट्वास्नानं विधीयते॥ एवमादींश्च नियमान्पुरश्चरणकृच्चरेदिति। क्रोधं मदं चुतं चीणि निष्ठीवनविजृम्भणे॥ दर्शनं स्वस्य नीचानां वर्ज्जयेज्जपकर्म्मणि॥ आचामेत्संभवेतेषां स्मरेद्वामांवयासह। ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयममिति॥ एवमुक्तविधानेन विलम्बत्वरितं विना॥ उक्तसंख्या जपं कुर्य्यात्पुरश्चरणसिद्धये॥ देवतागुरुमंत्राणामैक्यं सम्भावयन्धिया॥ जपेदेकमनाः प्रातः कालान्मध्यं दिनावधि॥ जपोंगानां दशांशेन विधेयः सिद्धिमिच्छता॥ यत्संख्यायां समारब्धं तत्कर्त्तव्यमहर्न्निशम्॥ यदिन्यूनाधिकं कुर्य्याद्व्रतभ्रष्टोभवेन्नरः॥प्रजपेदुक्तसंख्यायाश्चतुर्गुणजपं कलाविति॥अन्यत्रापि॥कृते जपस्तुकल्पोक्तस्त्रेतायां द्विगुणोजपःद्वापारे त्रिगुणः प्रोक्तश्चतुर्गुणजपःकलाविति॥मंत्रतंत्रप्रकाशे नारायणाष्टाचरे॥ जपेन्निरन्तरं विद्वानष्टलचाण्यतन्द्रितः। मंत्रसिद्धिरियं प्रोक्ता युगेत्वाद्ये मनीषिभिः। द्वितीये द्विगुणा तस्मात्तृतीये त्रिगुणा तु सा। कलौ चतुर्गुणा प्रोक्ता मुनिभिर्नारदादिभिरिति॥ संख्यापूर्त्तौ निर्जेद्र्व्ये जपसंख्यादशांशतः। यथोक्तकुण्डे जुहुयाद्यथाविधिसमाहितः। अथवा प्रत्यहं जप्त्वा जुहुयात्तद्दशांशतः। ततो होमदशांशं तु जले संपूज्य देवतां॥ तर्पयामीति मंत्रांते प्रोक्ताद्भिर्भूर्द्धि तर्प्ययेत्॥स्नाभिषेकाघमर्षौच सूर्यार्घ्यं जलयानकम्॥प्रणाममंत्रतःकुर्यात्पूर्व्वं पूर्वदशांशतः। तदन्ते महतीं पूजां कुर्याद्ब्राह्मणभोजनम्॥ गुरुं मंतोषयेदेव मंत्राः सिध्यंति मंत्रिणः। इत्थं पुरश्चरणतः प्रसन्नादेवताभवेत्॥ दशांगोपासनं भक्त्या पुरश्चरणमुच्यते॥ जपोहोमस्तर्पणं च पूजा ब्रा-

ह्मणभोजनम् ॥ पूर्वपूर्वदशांशेन कुर्यात्त्वं चांगसंयुतम् ॥ यद्यदंगं विहीयेत तत्संख्याद्विगुणो जपः। कर्तव्यः सांगसिध्यर्थं तदशक्तेन भक्तित इति मंत्रतंत्रप्रकाशेपि ॥ असम्भवे च होमस्य होमात्स्याद्द्विगुणो जप इति ॥ अन्यत्रापि होमकर्मण्यशक्तानां विप्राणां द्विगुणोजपः । इतरेषां तु वर्णानां त्रिगुणादिः समीरित इति ॥ एकमंगं विहीयेत ततो नेष्टमवाप्नुयात् ॥ अङ्गहीनं भवेद्यद्यत्तत्तन्नेष्टार्थसाधकम् ॥ सर्वथा भोजयेद्विद्वान् कृतसांगत्वसिद्धये ॥ विप्राराधनमात्रेण व्यंगं सांगं भवेत्तदा॥न्यूनातिरिक्तं कर्माणि न फलन्ति मनोरथान् ॥ तान्येव पूर्णतां यांति समस्तानि कृतानि च। अतोयत्नेन विदुषो भोजयेत्सर्वकर्मसु ॥ यानि यान्यपि कर्माणि हीयन्ते द्विजभोजनैः । निरर्थकानि तानि स्युर्बीजान्यूषरगाणि चेति ॥ कुलप्रकाशतंत्रेपि ॥ संसारे दुःखभूयिष्ठे यदीच्छेत्सिद्धिमात्मनः । पञ्चांगोपासनेनैव मंत्रजापी सुखंव्रजेत् ॥ पूजा त्रैकालिकी नित्यं जपस्तर्पणमेवच ॥ होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ यद्यदंगं विहीयेत तत्संख्या द्विगुणं जपम् ॥ कुर्वीत त्रिचतुः पञ्च संख्यया साधकः प्रिये ॥ कुर्वीतसांगसिध्यर्थं तदशक्तेन भक्तितः ॥ एकमंगं विहीयेत मंत्रात्रेष्टमवाप्नुयात् ॥ अन्नैश्चतुर्विधैर्देवि पदार्थैः षड्रसान्वितैः । सुभोजितेषु विप्रेषु सर्वैर्हि सफलं भवेत् ॥ सम्यक् सिद्धैकमंत्रस्य पञ्चांगोपासनेन हि ॥ सर्वमंत्राश्च सिद्ध्यन्ति तत्प्रभावात्कुलेश्वरीति अन्यत्र विशेषः अशक्तानां होमे निगमरसनागेन्द्रगुणितो जपः कार्यश्चेति द्विजनृपविशामाहुरपरे ॥ स होमश्चैषां सम इह जपो होमरहितो य उक्तो वर्णानां सखलु विहितस्तत्त्वलद्गुणं यं वर्णमाश्रितो यः शूद्रः सच तत्र तत्तुल्यं विहितम्। विदधीत जपं विधिवच्छ्रद्धावान् भक्तिभारनम्रतनुरिति अथाचान्यप्रकारेण पुरश्चरणमुच्यते ॥ ग्रहणेकस्यचेन्दोर्वा शुचिः पूर्वमुपोषितः । नद्यां समुद्रगामिन्यां नाभिमात्रेजले स्थितः ॥ ग्रहणादि तु मोक्षांतं जयेन्मंत्रं समाहितः । अनन्तरं तद्दशांशक्रमाद्धोमादिकं चरेत् ॥ तदन्ते मंत्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ॥ ततश्च मंत्रसिद्धिः स्याद्देवता च प्रसीदति ॥ अथवा देवता रूपं गुरुं भक्त्या प्रतोषयेत् ॥ पुरश्चरणहीनोपि मंत्रः सिद्धेन्न संशयः। एवं साधितमंत्रस्तु काम्यकर्माण्यथाचरेदिति ॥ अन्यत्रापि उपदेशस्य सामर्थ्याच्छ्रीगुरोश्च प्रसादतः ॥ मंत्रप्रभावाद्भक्त्या च मंत्रसिद्धिः प्रजायते। सिद्धमंत्राद्गुरोर्लब्धो मंत्रः सिद्धिं च भावयेत् ॥ पूर्वजन्मकृताभ्यासान्मंत्रः शीघ्रेण सिद्धिद इति ॥ अन्यत्र तु त्रिकालं गन्धपुष्पाद्यैर्योर्च्यते देवतानिशि ॥ पुरश्चरणकृत्येन विनैवासौ प्रसीदतीति ॥ तथा वैशंपायनसंहितायां ॥ पुरश्चरणसम्पन्नो मंत्रो हि फलदायकः। किं होमैः किं जपैश्चैव किंमंत्रन्यासविस्तरैः रहस्यानां च मंत्राणां यदि नस्यात्पुरस्क्रिया ॥ पुरस्क्रिया तु मंत्राणां प्रधानं बीजमुच्यते। व्याधिग्रस्तो यथा देही सर्वकर्मसु न क्षमः ॥ पुरश्चरणहीनोयं तथा मंत्रोपि कीर्त्तितः। येषां जपे च होमे च संख्यानोक्तामनोषिभिः ॥ तेषामष्टसहस्राणि संख्योक्ता जपहोमयोः। यस्मिंश्च निगदेनैव मंत्रे संख्याभिधीयते ॥ तत्र सर्वत्र मंत्राणां संख्यात्वद्धिर्युगक्रमात् ॥ कल्पोक्ता चाकृते संख्या त्रेतायां द्विगुणा भवेत् ॥ द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ॥ अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते ॥ शाकं मूलं फलं भैक्ष्यं हविष्यं सक्तवोथवा ॥ अथवा क्षीरमात्रंस्यात्पुरश्चर्त्तुश्च हृत्तये ॥ न सेवेतस्त्रियं मांसं मधु वा मंत्रसाधकः। एतानि सेवमानस्य नसिध्यति पुरस्क्रिया ॥ स्त्रिय शूद्रं न

भाषेत पुरश्चरणकृन्नरः। जपं च प्रातरारभ्य कुर्यान्मध्यं दिनावधि॥ असत्यं नाभिभाषेत नेंद्रियाणि प्रलोभयेत्॥ नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलंघयेत्॥ दिवसातिक्रमात्पुंसो मंत्रसिद्धिर्भवेन्नहि॥ शक्तिहीनस्य यो मंत्रो न सिध्यति कदाचन। यावत्संख्यं जपेदह्नि पूर्वस्मिंस्तावदेवतु। दिनांतरेपि प्रजपेदन्यथा सिद्धिरोधकृत्॥ शिवस्य संन्निधाने च सूर्याग्न्योश्च गुरोरपि॥ दीपस्य ज्वलितस्यापि जपकर्म प्रशस्यते। शयनं कुशशय्यायां विन्यसेच्छुचिवस्त्रधृक्॥ तद्वासः क्षालयेन्नित्यमन्यथा विघ्नभाग्भवेत्॥ स्नानं त्रिषवणं प्रोक्तमशक्त्याद्विः सकृत्तुवा॥ अस्नातस्य फलं नास्ति नचातर्प्पयतः पितृन्॥ नाप्यतर्प्पयतो देवान्नासत्यमपि जल्पतः। नैकवासाजपेन्मंत्रं बहुवस्त्रावृतोपि वा। विपर्यासं न कुर्याच्च कदाचिदपि मोहतः। उपर्यधो बहिर्वस्त्रे पुरश्चरणकृद्बुधः। विनियोगपिधाने तु भवेदनियमः क्वचित्॥ पुरश्चरणकार्येषु वर्ज्जयेत्तं प्रयत्नतः। कृत्वा मंत्रजपं मंत्री पुरस्काराय संयतः। दशांशं जुहुयादग्नौ यथोक्तविधिना बुधः। यद्वाजपस्तुर्थांशं स्वाहांतं मंत्रमुच्चरन्॥ ततो होमदशांशं तु स्वाहांतं तर्प्पयेज्जलैः। तर्प्पणस्य दशांशेन नमोंतं मंत्रमुद्धरेत्॥ अभिषिञ्चेत्स्वमूर्द्धानं जलैः कुम्भाख्यमुद्रया॥ एवं विधविधानेन कृतमंत्रपुरस्क्रियः। विनिगोगसमारम्भं यथा भथमथाचरेत् इति गोपालमंत्रे विशेषस्तर्प्पणे तत्रैवोक्तः। इह गोपालमंत्राणां तर्पणं होमसंख्यया॥ समं ज्ञेयं तु सर्वेषामित्यागमविदो विदो विदुरिति॥ अन्यत्रापि॥ तर्प्पयेत्तावदन्येषां मनूनां हुतसंख्यया॥ तर्प्पणं विहितं नित्यमिति अथारब्धपुरश्चरणमध्ये सूतकादिकं चेन्नियतति तथापि संकल्पितस्यपुरश्चरणस्य समाप्तिरेव कर्त्तव्या। तथाच विष्णुः। व्रतप्रारंभश्च तत्रैवोक्तः। प्रारंभो वरणं यज्ञे संकल्पो व्रतजापयोः। नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेति। मंत्रप्रकाशे पुरश्चरणे सर्वनियमानुक्ता शक्तस्यैवैतत् सर्वमेतदशक्तः शक्तितो जपेत्। न दोषो मानसे जाप्ये सर्वदेशेपि सर्वदा। जपनिष्टो द्विजः श्रेष्टः सर्वयज्ञफलं लभेत्। सर्वेषामेव यज्ञानां जपयज्ञः प्रशस्यते। अहिंसया हि भूतानां जायतेसौ महाफलः। ज्ञानां जपयज्ञोहमित्याह भगवान् हरिः। जपेनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यत्र वाकुर्या न्मैत्रो ब्राह्मण उच्यते। इत्याहुर्मुनयः शांता जपसिद्धा अकिंचनाइति। पद्मनाभीयेपि। यावंतः कर्म्मयज्ञाः स्युः प्रदीप्तानि तपांसि च। सर्वे त जपयज्ञस्य कलां नार्हंति षोडशी। जपेन देवता नित्यं स्तूयमाना प्रसीदति। प्रसन्ना विपुलान् भोगान्दद्यान्मुक्तिं च शाश्वतीमिति। भृगुसंहितायापि। ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः। सर्वे ते जपयज्ञस्य कलांनार्हंति षोडशीमिति। नारायणीये तु। जपाशक्तस्य सर्वतः मूलमंत्राद्दशांशंस्यादंगादीनां जपादिकम्। जपात् सशक्तिर्मंत्रः स्यात्कामदा मन्त्रदेवतेति। जपलक्षणमुक्तं वायवीयसंहितायां। जपः स्यादक्षरावृत्तिः सउच्चो पांशुमानसः। य उच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः। मन्त्रमुच्चारयेद्वाचा जपयज्ञऽसवाचिकः। शनैरुच्चारयेन्मन्त्रमीषदोष्टौ प्रचालयेत्। किंचिच्छ्रवणयोग्यः स्यादुपांशुः सजपः स्मृतः धियायदक्षरश्रेणीं वर्णस्वरपदात्मिकां। उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः॥ उच्चैर्जपो विशिष्टःस्याद्यज्ञादेर्दशभिर्गुणैः। उपांशुःस्याच्छतगुणःसहस्रो मानसः स्मृत इति। भृगुसंहितायामपि। विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः। उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृत लति। अन्यत्र तु। न कंपयेच्छिरो ग्रीवां जिह्वामोष्टं न चालयेत्। मनसाचिंतितं बी

त्रिमधुरोपेतैः पद्मैर्भानुसहस्रकम् ॥ जुहुयान्महतीं लक्ष्मी मायुर्वश्यमवाप्नुयात् ॥ लाजांस्त्रि-मधुरोपेतान्प्रातः कालेषु जुह्वतः । कन्यासिद्धिर्भवेत्पक्षात्कन्यायाः सद्वरोभवेत् ॥ दूर्वाः पयोघृताभ्यक्ता दशोत्तरशतं सुधीः । अन्वह जुहुयात्सम्यग्दीर्घमायुरवाप्नुयात् ॥ तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहादिभिः सह ॥ सपञ्चगव्यं जुहुयादपामार्गस्य मंजरी ॥ नित्यं सहस्रमानेन सप्ताहं विजितेन्द्रियः।होमोयं सर्वथाभूतकृत्यारोगान् प्रणाशयेत् ॥ सतिलराज्यपामार्गहविराज्यैर्यथाक्रमम् । द्विसहस्रं प्रजुहुयात क्षुद्ररोगगृहान् जयेत् ॥ पयोक्तैरमृताखण्डैस्त्रिसहस्रं चतुर्दिनम् ॥ अनेन विहितो होमो गृहज्वरविनाशनः। नृसिंहशक्तिबीजे द्वे शूले तारगते लिखेत् ॥ तत्र गृहार्त्तं संस्थाप्य जपेन्मंत्रं षडक्षरम् ॥ आविश्य सद्यस्तं मुञ्चे द्गृहः क्रन्दन्भयाकुलः। आलिख्याग्निपुरद्वयं तदुदरे शक्तिं ससाध्यां लिखेत् षट्कोणेषु षडक्षरान्यथमनोः किञ्जल्कसंस्थान् स्वरान् ॥ पत्रेष्वष्टसुमंत्रएजविहितान्वर्गान् क्रमाद्दशः काद्यर्णैः पुनरावृत्तं क्षिति पुरे कोणेषु चिंतामणिं । नारसिंह मिदंयंत्रं लिखितं भूर्जपत्रके ॥ विधृतं शिरसाशीर्षरोगभूतज्वरान् हरेत् ॥ बहुनात्र किमुक्तेन मंत्रैरेतैरुदीरितैः। समो नास्ति मनुः कश्चेच्छायानुगृहकारकः।तारो भृगुर्वियद्भूयस्तदाद्यं वह्निदीर्घयुक्। याचकः कवचस्त्रांतो

---

जं दंतघातं न कारयेदिति । आचार्या अपि । नाति द्रुतं नाति विलंबितं चे ति । मन्त्रप्रकाशे तु विशेषः । अपिचान्यं प्रवक्ष्यामि मन्त्रसिद्धिकरंपरं । मन्त्रसाधकयोरैक्यं दुर्लभं भुवि मानवैः । उन्मत्तांकर्षणे तंत्रे शिवेनाखिलवेदिना । आनंदाख्ये पञ्चरात्रे शुक्रायकवये पुरा । संस्कृतंपूजितं मन्त्रंदत्त्वा शिष्याय देशिकः । कुर्यादथतयोरैक्यं शास्त्रदृष्टेन वर्त्मना । मन्त्रं विदर्भयित्वा तु नामवर्णैर्यथाक्रमम् । आद्यंते सकलं नाम ततः प्रणवमालिखेत् । स्वराः पत्रेषु संलेख्याध्यायेत्तानमृतात्मकान् । भूर्जेरोचनगन्धाद्यैः पद्ममध्ये सुशोभने । मृदा पवित्रया वेष्ट्य तत्पुनः सिक्थके न च निक्षिपेत्नवभाजने।क्षीरपूर्णेन वैकुंभेनतत्क्षिपेन्नवभाजनं।धारयेद्देशिकः कुंभमग्निकुंडसमीपमधरतत्तुमृन्मपेपतः। मंत्रसाधकयोरैक्यसिद्ध्यर्थं जुहुयात्ततः मूलमंत्रेण मन्त्रज्ञः सहस्रं शतमेव वी कुंभे संपातयेच्चैव मधुराणांत्रयंशत।निधायनिक्षिपेत्कुंभं शनैस्तं महदंभसि। मन्त्रसाधकयोरैक्यं भवेदेवफलप्रदं । एतद्यो न विजानाति नासौ देशिक उच्यते । रहस्यं कथितं चैतन्नवदेद्यस्य कस्य चित्।उत्तमाय तु शिष्याय प्रियपुत्राय वा वदेदिति । रक्तोत्पलैरक्तकुवलयैर्नवैरपर्युषितैः रक्तैः पद्मैः कोकनदैः अमृतागुडूची । तारगते शूले इति प्रणवस्यादौ यच्छूलाकारं तत्र । जपेन्मन्त्रमिति । तदुपयुपवेशितं ग्रहार्त्तस्पृशन्नित्यर्थः । यंत्रमाह आलिख्येति । अग्निपुरद्वयं परस्परव्यतिभिन्न । मनोःषडक्षरनृसिंहमंत्रस्य चिंतामणिं नारसिंहमिति सामानाधिकरण्यं । तेन नृसिंहस्यैकाक्षरं भूर्जपत्रके लिखितमिदं यंत्रं हरेदिति संबंधः । तदुक्तं नृसिंहकल्पे । षट्कोणबीजेन ;विशिष्टकर्णिकं शक्त्यर्णयुक्मूलचतुष्कलाष्टकं । वृतं जगती ग्टहासके यंत्रं सचिंता मणिकं विचिंतयेत् । आंक्ष्रींचौंक्रौंचहुंफट् शक्तिमंत्रः कलाष्टकम् । अचां युग्मानि चिंतार्णो नसिंहैकाक्षरो मनुरिति । वाराहयंत्रे हृदयनमंत्रस्योद्दिष्टत्वात्तमाह।तार इति।तारःप्रणवः भृगुः सवियद्वः तदाद्यं सः वह्निरेफः दीर्घआकार-

मनुः सप्ताक्षरः स्मृतः । अहिर्बुध्न्यो मुनिः प्रोक्तश्छन्दोनुष्टुबुदाहृतम् ॥ देवता मुनिभिः प्रोक्तश्चक्ररूपाहरिः स्वयम् ॥ अचक्राय हृदाख्यातं विचक्राय शिरः स्मृतं ॥ सुचक्राय शिखा प्रोक्ता धीचक्राय तनुच्छदम् ॥ सञ्चक्राय स्मृतं नेत्रं ज्वालाचक्राय तत्परम् । षडंगमंत्राः प्रत्येकं द्विठांता जाति संयुताः । ऐं ह्रीं चक्रेण बध्नामि नमश्चक्राय ठद्वयं । मंत्रेणानेन कुर्वीत दिशांप्रागादि बन्धनम् ॥ त्रैलोक्यांते रक्षयुगं हु फट् स्वाहा ध्रुवादिकः । अग्निप्राकारमंत्रोयं रक्षार्थं पुनरात्मनः। प्राकारं तेन कुर्वीत मंत्रेण मनुवित्तमः ॥ सितरक्तव्ज जनमख्यं तारं मूर्द्धनि विन्यसेत् ॥ अन्यानग्निनिभान्वर्णान् भ्रुवोर्मध्ये मुखे हृदि ॥ गुह्यजानुपदद्वंद्वसन्धिषु क्रमशो न्यसेत् ॥ कल्पांतार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं रक्ताक्षं पिंगकशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् ॥ चक्रं शंखं गदाब्जे पृथुतरमुशलं चापपाशां कुशानेचैर्विभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ॥ अर्कलक्षंजपेन्मंत्रं जुहुयात्तत्सहस्रकम् ॥ तिलैः ससर्षपैः पद्मैर्बिल्वैर्दुग्धोदनैः क्रमात् ॥ विष्णोः सम्पूजयेत्पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ अङ्गानि पूर्वमभ्यर्च्य चक्राद्यस्त्राणि तद्बहिः चक्रं शंखं गदां पद्मं मुसलं सशरन्धनुः पाशांकुशौ दलाग्रेषु लक्ष्म्याद्याः पूजयेत्ततः। लक्ष्मीं सरस्वतीं पश्चाद्रतिं प्रीतिं ततःपरम् ॥

---

स्मृद्युक्तेन सापावको रेफः कवचं च हुं । अस्त्रं फट् । संबीजम् । हुं शक्तिः तत्परमस्त्रं । द्विठांताः स्वाहांताः । प्रागादित्यनेन ऐंद्री चक्रेण बध्नामीत्यस्मिन्मन्त्रे ऐंद्री यदस्थाने आग्नेयीमित्यादीनां पदानां मूजुः कार्य इत्युक्तं भवति । एवं दशस्वपि दिशासु । तदुक्तं । ऐंद्रीं समारभ्य दिशस्त्वधस्तादंतं समुक्त्वाक्रमशोदिशानां । चक्रेण बध्नामि नमस्तथोक्त्वा चक्रायशीर्षं च दिशां प्रबंध इति । त्रैलोक्यांत इत्यत्र मंत्रेत्रैलोक्यपदं द्वितीयांतं ज्ञेयं । रक्षेति । क्रियाश्रवणात् । तदुक्तं । त्रैलोक्यं रक्षरक्षेति हुं फट्स्वाहेति नोदितः तारादि कोयं मंत्रः स्यादग्निप्राकारसंज्ञक इति कुर्वीतेति । मनसा अग्निप्राकारं चिंतयन्नात्मनः प्रदक्षिणं परिभ्रमदुदकं क्षिपेदिति परमगुरवः । उक्तंच । आत्मनः परितो वह्निप्राकारं त्राणनाय च भूतप्रेतपिशाचेभ्यो विधाय तदनंतरं । अद्भिः पुष्पाक्षतैर्वा वह्निबीजास्त्रमंत्रितैः। प्रक्षिपेत्परितो मंत्री भयविघ्ननिवृत्तय इति । सितेति । अकारोकारमकाराणां क्रमेण ध्यानम् । यदद्वंद्वसंधिषु अंत्यवर्णन्यासः कल्पांतेति चायं सशरंस्तेयं । तदुक्तं । दोर्भिश्चक्रदरौगदाब्जकुलिशां स्वास्त्रं च पाशांकुशाविति । अतएव पूजायां सशरं धनुरिति वक्ष्यति । आयुधध्यानं दक्षाद्यूर्ध्वाभ्यामाद्ये तदधराधराभ्यां मन्य इति । अत्र ध्यानानंतरं चक्रमुद्रां प्रदर्शयेत् । अर्कलक्षं द्वादशलक्षं । क्रमात्तत्सहस्रं द्वादशसहस्रं न तु प्रत्येकं तिलैरिति प्रत्येकं चतुर्विंशति शतानि ।।विष्णोः पीठे नारायणाष्टाक्षरोक्ते द्विश इति आद्ये हे पीसे। रतिप्रीतिरक्ते । उपांत्ये सिते । अभ्यर्च्येति केसरेष्विति शेषः तद्बहिरिति पद्ममध्ये । सशरंधनुरित्येकं । दलाग्रेष्विति उत्तरेण संबध्यते । लक्ष्म्याद्या इत्युत्तरपटलोक्तबीजाद्याः प्रयोगान्कर्त्तुमर्हतीत्यनेनैतदुक्तं भवति । ॐ सुदर्शनाय विद्महे चक्रराजाय धीमहि तन्नश्चक्रं प्रचोदयात्। अस्य प्रयोगेषु मूलमंत्रदशांशजप इति । केचिन्महाचक्राय धीमहीति पठंति । अपेक्षितार्थद्योतनिकायां तु । नमश्चक्राय विद्महे सहस्र

कीर्त्तिकांतितुष्टिपुष्टी सर्वा एता स्मृताद्विशः।पीतरक्तासितश्यामा इन्द्राद्यस्त्राणि तद्विहः। इति सद्धेमनौ प्रोक्तप्रयोगान्कर्त्तुमर्हति ॥ आत्मनो वा परार्थे वा दृष्ट्वादृष्टफलप्रदान् ॥ दूर्वा-होमे विधातव्यो दीर्घमायुरभीशता ॥ श्रीकामो जुहुयात्पद्मैः फुल्लैराज्यपरिप्लुतैः। मेधाका-मेन होतव्यं प्रसूनैर्ब्रह्मवृक्षजैः।दिनत्रयं यो जुहोति गुलिकाः पुरुनिर्मिताः। अष्टोत्तरसहस्रेण सजपेन्निखिलापदः। गव्येनाज्येन गोसिद्ध्यै जुहुयाद्दिवसत्रयम् ॥ उदुंबरसमिद्धोमः पुत्रदा यी भवेन्नृणां ॥ प्रलयाग्निसमं चक्रं यस्यमूर्द्धनि चिंतयेत् ॥ सप्ताहाज्ज्वरमूर्च्छातो मण्डला-न्मृतिमेति सः।अकारादिस्वरावीतं याहियाहियदावृतम् ॥ सकारं चिंतयेच्छत्रे मूर्द्धन्युच्चाट-मावहेत् ॥ अनेन विधिना शत्रुमांडलान्मृत्युभाग्भवेत् ॥ शरच्चन्द्रनिभं सार्णं सुधाधाराभि-वर्षिणम् ॥ स्मरेन्मूर्द्धनि यस्यासौ सर्वविद्धिगतामयः। आत्मानं चक्रनाभिस्थं ध्यात्वा मंत्र-ममुं जपेत् ॥ एकोपि रणभूमिस्थो जयेत्प्रत्यर्थिनो बहून् ॥ अपामार्गस्य समिधो जुहुयाद-युतावधिः। रक्षो भूतपिशाचारिपीडातस्य न जायते॥ निर्गुंडी सर्ज्जकनकश्वेतकिंशुकसंभवैः। समिद्भिः कृतो होमः क्षुद्ररोगग्रहापहः।अपामार्गस्य समिधः सर्पिमध्ये शृतश्चरुः। आज्यमे-तानि जुहुयादष्टोत्तरशतं पृथक्। साधकाय पुनर्दद्याच्चरुं सम्पातसाधितम् ॥ अभिचारकृ-ताद्द्रोद्रास्तस्य नश्यन्ति सर्वथा ॥ अपामार्गस्य समिधः पञ्चगव्यपरिप्लुताः। जुहुयादयुतं मंत्री दिशासु बलिमाहरेत्। दध्योदनेन मनुना क्षुद्ररोगादि शांतये ॥ क्षीरवृक्षसमित्क्षीरह-विराज्यैः पृथक्पृथक् ॥ चतुःसहस्रं होतव्यं शांतिस्यात्सर्वतो मुखी ॥ दक्षिणोत्तरगं मंत्री चक्रयुग्मं समालिखेत् ॥ वेदादि विलिखेन्मध्ये मंत्रवर्णा षडश्रिषु मध्यं पीतं कोणषङ्कं

---

ज्वालाय धीमहि तन्नो निवारितः प्रचोदयादिति गायत्री पठिता। पञ्चवर्णमपि सांप्रदायिमेव यथा गुरूपदशं च निर्णयः दीर्घमायुरिति मृत्युंजपादित्वं। श्रीकाम इति श्री बीजादित्वं। मेधा-कामेनेति वाग्भवादित्वं ज्ञेयं। जुहोतीति। चतुर्दिनं वा। जुहुयाद्गुग्गुलगुलिकामहस्रकं चाष्टकं च मंत्रितमः त्रिदिनं चतुर्दिनं वेत्युक्तेः। पुरुगुग्गुलः।निखिलापद इति।नृसिंहबीजादित्वं मूर्च्छातो भवेदि ति शेषः।अकारादीति। अकारादीनां वायुबीजयोगो ज्ञेयः तेन यंयामित्यादि उच्चाटमावहेदिति दशाहत इति ज्ञेयं॥ तदुक्तमाचार्यैः। दशाहतोमौ प्रतिबाध्यते रिपुरिति । अनेन विधिनेत्यनेन प्रयोगांतरमपि तादृशं सूचितं। यदाहुराचार्याः। सांतंवायसवर्णं शत्रोः शिरसि स्मरेच्च समाहः। उच्चाटयति चिप्रं मारयते वा धियोऽस्यनैशित्यादिति शितैः। शरच्चंद्रनिभमित्यनेनवं नमित्यादि वीतमिति ज्ञेयं।सार्णं सकाराच्चरंजयेदिति सहनमोस्तारनाराहुं गट् यणेति पादत्रयमं तयउंमि-ति चतुः पादांतगोता मंत्रादित्वं ज्ञेयं अपामार्गस्येति। फट्स्थाने वषट्कारा ज्ञेयः। सर्ज्जः शालः कनको धत्तूरःचुद्राः स्तंभाद्याः षडोगाः प्रसिद्धाः ग्रहा। अष्टादशमहाग्रहाः समभ्यंत राःपृथगिति प्रत्येकं। चरुं दद्यादिति होमचरुशेषं मन्त्रजप्तच्च संपातसाधितमितिप्रतिद्रव्यसंपातसाधितम् ॥ हुत्वा संपातितं शेषं तज्जप्तं प्राशयेच्चरोरिति नारायणीये उक्तेः। सर्वथेत्यनेन तद्भस्मानुलेपः। चुद्रग्रहांभयध्वंसीतद्भूत्याचानुलेपनमिनि तत्रैवोक्तेः। मनुना वक्ष्यमाणाबलिमंत्रेण। चीरेति समद्र-

रक्तं श्यामलमन्तरम् ॥ नेमिंश्वेतांल्लसद्वह्नि शिखाभिरुपशोभितम् ॥ पार्थिवं मण्डलं बाह्ये कुर्यादेवं यथाविधि ॥ रक्ततो येन सम्पूर्णं कुम्भं सौम्ये प्रविन्यसेत् ॥ आवाह्य पूजयेत्त- स्मिंश्चक्रात्मानं जनार्द्दनम् ॥ दक्षिणे मण्डले कुर्याद्धोमकर्म विधानवित् ॥ क्रमात् समिर- पामार्गैस्तन्दुलैः सर्षपैस्तिलैः।पायसैर्गव्यसर्पिर्भ्यां षड्विंशत्याधिकं शतम् । जुहुयादेधिते वह्नौ प्रतिद्रव्यं विधानवित् ॥ सम्पातयेत्कुम्भतोये पूजिते सौम्यमण्डले ॥ प्रस्थार्द्धचरुणापिंड कृत्वा तस्मिन्विनिक्षिपेत् ॥ बाह्ये बलिप्रदानार्थं तदर्द्धमवशेषयेत् ॥ स्नातं विशुद्धवस्त्राद्यैसा- ध्यमानीय तं पुनः।दक्षिणे स्थापयेन्मंत्री कुम्भाग्निभ्यामनन्तरम् ॥ नीराज्यतौ नयेद्वाह्ये ग्रामादष्टमराशिके ॥ स्थापयेत्तौ यथापूर्वं सपरिस्तोरणौ क्रमात् ॥ हुत्वा वह्नौ यथापूर्वं शि-

---

ष्यैः पृथक्पृथगिति प्रत्येकम् । दक्षिणोत्तरगमित्यारभ्य न संशयमित्यंतमेकप्रयोगः चक्रयुग्ममिति। षडारं परिधिनेमिसहितं । मंत्रवर्णानिति सुदर्शनमंत्रवर्णान् अंतरमिति षडारसंघयः । नेमिमि- ति । चक्रपरिधिरेवां वह्निशिखाभिरिति । अग्निज्वाला वक्रकारेखा कार्या इत्यर्थः । तदुक्तं । वि- रचितशिखि रेखाकुलमिति । पर्थिवमिति । कृष्णवर्णं । तदुक्तं नारायणीये । बहिः कृष्णवर्णरेखा च पार्थिवोति कुर्यादेवं यथाविधीत्यनेनैतत्यंचम्यादि पूर्णालिपिषु कर्त्तव्यमिति सूचितं । पूर्णासु मांगल्यविवाहयात्रा सपौष्टिकशांतिककर्मकार्यमिति । तथा । हस्तादि पञ्चनक्षत्रे रेवत्याश्विनमु- त्तरम् । श्रविष्टा रोहिणी पुष्यं शांतिकर्मसुपूजितमिति । रक्ततो येनेतिलाचादि रसेन रक्ततोयं कृत्वेत्यर्थः सौम्ये उत्तरदिक्स्थ चक्र इत्यर्थः तस्मिन्निति कुंभे दक्षिणे मण्डले दक्षिणदिक्स्थ च क्रे । विधानविदित्यनेन सयादां हसंति कांसंस्थाप्य तत्राग्निप्रतिष्ठाप्यहोमकर्म कुर्यादिति सूचि- त अपामार्गेरपामार्गसमिद्भिः उक्तं च नारायणीये । साज्यापामार्गसमिधाविति गव्यं पञ्चगव्यं । सकलैर्गव्ये रित्युक्तेः प्रति द्रव्यमित्यष्टोत्तरसहस्रं मिलित्वाभवति । तदुक्तं नारायणीये सहस्राष्टक- संख्ययेति । घृतस्य वारद्वयमुक्तिः क्रमार्था । विधानवित् संपातयेदित्यनेनाष्टद्रव्यहोमेपि संपात इ- ति सूचितं । प्रति द्रव्यमिति काकाक्षिगोलकन्याये नोभयत्र संबध्यते । तदुक्तं । हुत्वा तद्हुतशिष्ट मंत्र विधिवत् क्षित्वा प्रति द्रव्यकमिति । नारायणीयेपि । हुतशेषं क्षिपेत्कुंभे प्रति द्रव्यं विधान विदिति । तदा विधानवित्यनेन समिदादि होमे आहुत्यंते कलशे हस्तमात्रस्पर्शा एव संपाता इति सूचितं पूजिते सौम्यमण्डले इतिव्यधिकरणे सप्तम्यौ । तस्मिन्निति कुंभमुखे । विनिक्षिपेदि- ति वषडंतमूलान्वितसुदर्शमणयश्चा । सापूर्वोक्तानुसंधेया । तदर्द्धशेषं होमार्थकृतपायसार्द्धं । दक्षि- ण इतिचक्रे तत्र त्यांहसंतीमन्यत्र संस्थाप्येत्यर्थः । मंत्रीत्यनेन विशिष्टे गीता मंत्रेण साध्यस्य सक लीकरणं सूचितं । नीराज्येतिनीराजनं गोतामन्त्रेण । एकदेव कुंभाग्निभ्यां नीराजनं यत्तत्पूर्वां तरसाह्याथ्येनेति ज्ञेयं।ताविति।कुंभाग्नी अष्टमराशिके स्थापयेदिति । यत्रराशिस्थानान्युक्तानि का ष्टिमते । प्राच्यां मेषवृषेत्रको मिथुनं दक्षिणे तथा । कुलीरसिंहमिथुनं नैऋत्यांका स्थिता । तुला- कोटोपश्चिमतोधनुर्वायौ तु संस्थितम् । नक्रकुंभावुत्तरतो मीनमैशे तु संस्थितमिति । एतद्राशि- स्थानं ज्ञात्वा साध्यस्य योष्टमराशिस्तत्र स्थापयेदित्यर्थः।यथापूर्वमिति । तद्दक्षिणभागेग्निं स्थापयेत्

ष्टान्नेन बलिं हरेत् ॥ मनुना वक्ष्यमाणेन दशदिक्षु यथाविधि: ॥ सद्वाद्विष्णुगणेभ्योंते सर्वशांतिकरे पुनःभ्यो बलिं प्रतिगृह्णन्तु शांतये हृदयं ततः।ब्राह्मणान् भोजयेत् सम्यङ्मधुरोत्तरमादरात् ॥ गुरवे दक्षिणां दद्याद्वस्त्रं भूषणसंयुतां ॥ हन्यादयं विधिः पुंसां कृत्यारोगग्रहज्वरान् ॥ रक्षःपिशाचमार्यादि क्लेशान् शीघ्रं न संशयः।विधाय पंजरं मंत्री फलकैः क्षीरशाखिनां । पञ्चगव्येन सम्पूर्य तस्मिन् साध्यं नि वेशयेत् ॥ धौतवस्त्रं विशुद्धांगं स्पृष्ट्वा सम्यग्जपेन्मनुम् ॥ पूर्वादि दिक्षु संस्थाप्य वह्निं ब्राह्मणसत्तमैः । कारयेत्पूर्वसन्दिष्टैर्द्रव्यैर्होमं विधानवित् ॥ तोषयेद्दक्षिणाभिस्तान् यजमानस्त्वशक्तितः। गुरुं च धनधान्याद्यैर्नत्वा सम्प्रीणयेत्तदा।सर्वरोगहरः प्रोक्तः कृत्याद्रोहादि नाशनः।अपमृत्युहरः पुंसां विधिरेषः प्रकीर्त्तितः।पञ्चगव्यैः कषायैर्वा क्षीरभूरुहसम्भवैः।पूरितैः कलशैर्जप्तैः कृतसम्पातसंयुतैः। अभिषिंचेद्ग्रहाविष्टमभिचारातुरन्तरम् ॥ स्वस्थो भवति शीघ्रेण विधानेनामुना नरः ॥ भानुवारे भिषेकस्य विधानेन सुसाधितः।सलिलैस्तापयेन्नारी सुखप्रसवकांक्षिणी ॥ सप्तवाराभिषेकेण सर्वेनश्यंत्युपद्रवाः ॥ पञ्चगव्ये शृतं सर्पिर्मंत्रितं मनुनामुना ॥ गर्भिणीनां ग्रहार्त्तानां सेवितं तच्छुभावह ॥ उच्चस्थानगते शुक्रे मनुना साधुसाधिता ॥ त्रिलोही मुद्रिका हन्यात् क्षुद्र-

---

तदुक्तं अग्न्यादिकमपि सर्वं क्षिपेदयघटस्य पश्चिमे भाग इति यथापूर्वमित्यष्टभिर्द्रव्यैः उक्तप्रमाणेन च । शिष्टान्नेनेति । हुतशिष्टान्नेन । तदुक्तं नारायणीये । दद्यादनेन मंत्रेण हुतशेषांधसाबलिमिति । आचार्या अपिहुतशेषान्नेन बलिमिति । यथाविधीति । लोकपालबलिरपिसूचितः । बलिमंत्रमाह सद्वदिति छन्नमः पदंहृदयंनमः पदंएतदंतोमन्त्रः अस्यप्रणवशक्त्यादित्वं ज्ञेयं । मारीकृत्या विशेषः आदिशब्देनेत्यादिकापदादि । क्षीरशाखिनाभिति । पलाशस्याप्युपलक्षणं । तदुक्तं नारायणीये । फलकैः कल्पिते पात्रे पलाशक्षीरशाखिनामिति । आचार्यास्त्व । पालाशैर्वास्तनजद्रुमजैर्वा पंजरे कृते फलकैरिति । अनेन क्षीरद्रुमेष्वपि विकल्पो ज्ञेयः । सम्यक् जपेदिति । चतुर्दिक्षुक्रियमाणहोमसमाप्तिपर्यन्तमित्युक्तं पूर्वसंदिष्टैर्घृतादिभिरष्टद्रव्यैः विधानविदित्यनेन प्रतिद्रव्यं षड्विंशत्यधिकशतं होम इत्युक्तं । पञ्चगव्यैः पूरितैरिति व्यधिकरणे तृतीये कलशैरिति नवभिः । संपातेन होमाक्षेपः । होमोपि पूर्वोक्ताष्टद्रव्यैः पूर्वोक्तसंख्यं । अमुना विधाने नरः शीघ्रेण सुस्थो भवतीति संबंधः । तद्विधानप्रकारो यथा । पूर्वोक्तं नवनाभं मण्डलं कृत्वा पूर्ववत्कलशान्नवसंस्थाप्य उक्तद्रव्यैरापूर्य मध्ये मंत्रोक्तदेवतां संपूज्य परितोष्टकलशेषु आयुधाष्टकं संपूज्य कार्यानुरूपं होमं कृत्वा तत्सपातयुतैर्घटैरभिषिंचेदिति पञ्चकलशपक्षे पद्माब्ज मण्डलं कृत्वा दिक्षु चक्रगदामुशलपाशा अर्चनीयाः शेषं पूर्ववत्। अभिषेकस्य विधानेनेति । एककलशस्थापनप्रकारेण उक्तरूपेण चेत्यर्थः । सुसाधितैरित्यनेन पूर्ववद्धोमः संपातश्च । सप्तसु वारेषु भानुवारेषु योभिषेकस्तेन । पञ्चगव्य इति । अकल्कोपि भवेत्स्नेहो यः साध्यः केवलोद्भवेदिति परिभाषणात्कल्कंविनैव तद्वृतं साध्यं तत्र पञ्चप्रभृतिपतस्य द्रव्याणिस्ते हृतंविधौ । तत्र क्षीरसमान्याहुरित्युक्तेर्घृतसमान्येव पञ्चगव्यानि दत्वाघृतं पचेत् क्षीरदध्यारनालैः वचनात्प्राप्तमपि जलं न देयम् । गोमूत्रस्य सत्वादिति । शुक्रे उच्चस्थानगते मीनगते। साधुसाधितेति । पश्चोक्तरीत्या । तद्वर्णसंख्यया । मन्त्रवर्ण-

भूतग्रहान् ज्वरान् ॥ तद्वर्णसंख्यया सूत्रे ग्रन्थीन कृत्वा जपादिभिः । साधितं कल्पयेद्धस्ते कण्ठे वा दुःखशांतये ॥ पञ्चगव्यं जपेत्स्पृष्ट्वा मंत्रं दशशतावधि ॥ न्यस्तं तत्पद्मपत्रादौ पत्रे वा ब्रह्मवृक्षजैः।फले बिल्वस्य वा मंत्री गृहे स्वस्यपरस्य च । निखनेत् सर्वरक्षास्याद्वर्द्धंते सर्वसम्पदः।पलाशक्षीरवृक्षाणां त्वचोमलयजं पुरम् ॥ कुंकुमं यामिनी कुष्टबिल्वापामार्गसर्षपान् । तिलदूर्वायवान देवी तुलसी युगलं कुशम्।।लक्ष्मी गोरो चनांपद्मं वचां गोमयसंयुतां ॥ विष्णुक्रांतामर्कयुतां जपेन्मंत्रविनिक्षिपेत् ॥ पञ्चगव्येन सम्पूर्णे पात्रे तत्संस्कृतेनले ॥ संस्थाप्य क्वाथयेत् सम्यग्यावद्रसम भविष्यति ॥ तदाघ्रायजपद्भूयेः प्रयुतं देवता धिया ॥ लिपेत्सर्वाङ्गमेतेन किंचिच्छिरसि निक्षिपेत् ॥ कृत्याद्रोहग्रहोन्मादव्याधिदुःखनिवारणम् ॥ सर्वशत्रुप्रशमनं सर्वपापहरम् ॥ शुभदं वश्यदं पुंसां समस्तापन्निवारणम् ॥ गर्भिणी बालरुग्णानां विशेषेण प्रशस्यते ॥ अस्मात्परतरारक्षा नास्ति लोके प्रकीर्त्तिता ॥ मुस्ता शुण्ठी निशावह्निरेलायष्टिवचावृषम् ॥ पाठा विडंगं मंजिष्ठा द्राक्षा दार्वा सरोहिणी ॥ फलत्रय च तैः कल्कैः पञ्चगव्येषु सर्पिषां ॥ प्रस्थं पचेद्यथान्यायं मंत्रेणानेन साधितम् ॥ कांतिदं सुतदं स्त्रीणां भूतप्रेतभयापहम् ॥ गर्भरक्षाकरं शुद्धं पञ्चगव्यघृतं विदुः ॥ टांतात्सप्तलिखेन्मध्ये षट्सु कोणेषु तेष्वथ ॥ मंत्रवर्णाल्लिखेदेतच्चक्रमापन्निवारणम्।।षट्कोणमध्ये विलिखेत्ससाध्यं

---

संख्यया । इदमुभयत्र संबध्यते । तेन सप्तसूत्राणि कृत्वा तत्र सप्तग्रथयो देयाः । अस्यप्रयोगस्य शेषो नारायणीये । हुनेद्गव्याक्तापामार्गसमिदाज्यं चरुं घृतम् । परिस्तीर्णसितातान्मसूत्ररुंधिस्थितान्घटान् । क्षीरवृक्षक्वाथपूर्णान्होमकालेभिमन्त्रयेत् । तत्संख्ययातैः स्नपयेत्गव्यशिष्टपुरःसरं । कलयेद्धस्तादौतत्सूत्रंग्रन्थितंजपादिति।जपादिभिरित्यादिशब्देनपूजासंपातौ।हस्ते कर्णेवेति पुमान्दक्षिणेस्त्रीवामइतिज्ञेयं । पद्मपत्रादावित्यादि शब्देन ब्रह्मपत्रादि पात्र इत्यादि । मन्त्री नरः स्वस्यस्वरप वागृहे निखनेदिति संबंधः पुरं गुग्गुलंयामिनो हरिद्रा।कुष्टं कूटं।बिलेति बिल्वंपञ्चांगं।देवी सहदेवी।पद्मेति।पद्मं पद्मागपद्मदलादिकमित्यस्य व्याख्याने।अपेक्षितार्थद्योतनिकायां बिल्वं पञ्चांगं पद्मं पञ्चांगमित्युक्तं।अर्केति।अर्क त्वक् तदिति पात्रं । सम्यक्क्वाथयेदिति । मन्त्रं जपन्नित्युक्तं । प्रयुतमिति । दशलक्षं । क्वचिदयुतमिति पाठः । मुस्तेति।मुस्ता मोच्छ्य । निशा हरिद्रा । वह्निश्चित्रकः । यष्टी यष्टीमधु । वृषा आढरूषः । वासक इति यावत् । दर्वी दारु हरिद्रा । रोहिणी कटुकी । फलत्रयं हरीतकी बिभीतकामलकानि । यथान्यायमिति।वैद्यकशास्त्रोक्तप्रकारेण । तत्र सर्पिःप्रमाणमुक्तमेव । कल्कश्चस्नेहयादिकमित्युक्तत्वात् । कुडवमात्रं कल्क ग्राह्यः पञ्चप्रभृतीति वचनात्प्रत्येकं पञ्चगव्यानि स्नेहसमानि । आज्यावशेषमुत्तार्य शीतलं कृत्वानेन मन्त्रेण साधितं संजपं । यंत्रमाह।टांतानिति मध्यादिषड्कोणेषु सप्तठकारान्विलिख्यतेषुठकारेषुक्रमेण मंत्राक्षराणि लिखेत् । मध्ये साध्यसाधककर्मलिखनं च ज्ञेयं। आपदिति। श्वासज्वरौ । चक्रं श्वासज्वरायहमिति नारायणीय उक्तः । यंत्रांतरमाह।षडिति। षडस्त्रिष्वित्यग्न्यादि । विधिवदित्यनेनाष्टोत्तरसहस्रंजपउक्तः । रक्षां करोति तत्र स्थापितमिति शेषः । तदुक्तं । मध्ये तारं तदनुचमनुं वर्णशः

तारं लिखद्भूमेष्ववशिष्टवर्गान्। अङ्गानि तत् सन्धिषु यंत्रमेतत्करोति रक्षां विधिवत्प्रजप्तं ॥ तारं लिखेत् ठांतगतं ससाध्यं कोणेषु शिष्टं मनुवर्णषट्कम् । अङ्गानि सन्धिष्वथ षोडशारं सषोडशार्णं वसुधापुरस्थम् । जपित्वा कृतसम्पातं गर्भिणीनां हितं परम् ॥ अभिचारग्रहोन्मादान्यंत्रमेतद्विनाशयेत् ॥ मध्ये तारं ससाध्यं मनुमथविलिखेत् षट्सु कोणेषु सन्धिष्वङ्गान्यंते कलानां युगयुगविलसत्केशराष्टार्णपत्रम् । किंजल्काकादिवर्णैर्द्विवसुदलसत्षोडशार्णं स्वनाम्ना हस्ताभ्यां त्रिःपरीतं लिखतु परिवृतं तत्त्रिपाशांकुशाभ्याम्। तारं नमो भगवते महा-

---

कोणषट्के बाह्ये चांगं लिखतु कनके ताम्रके वाथरौप्ये । पाषाणे वा विधिवदभिजप्यापि संस्थापितं तच्चक्रं चोरग्रहरिपुभयध्वंसिरक्षाकरं चेति । यंत्रांतरमाह।तारमिति । ठांतगतमिति।तारविशेषण । षोडशारमिति षोडशांके समे वृत्ते पञ्चमे पञ्चमे लिखेत् रेखा अंके षोडशाद्यं षोडशारमिदं मतम् । इति षोडशारलेखनप्रकारः । षोडशार्णं वक्ष्यमाणं षोडशाक्षरं चक्रमन्त्रमन्येषां षोडशाक्षरशब्देनषोडशदलं तदुपरि च वृत्तं तदुपरिपार्थिव मंडलं । मंत्रश्च । ॐ नमो भगवते वासुदेवाय हुं फट्स्वाहा । तदुक्तं नारायणीये। सांख्यादिंदोर्बहिः कोणषट्के मंत्राक्षराल्लिखेत् । संधिष्वंगानि वहिर्वृत्तात्पत्रषोडशके मनुं । पुनर्वृत्तं च भूगेहे लिखेदेतद्यथा विधीति । क्वचित्षोडशार्णंतत्सव्ययंत्रेइति पाठः।जपित्वेत्यतोहुत्वेति शेषः। यंत्रांतरमाह।मध्य इति । मनुं तारव्यतिरिक्तचक्रमंत्रं । अंते षट्कोणबाह्ये।कलानां स्वराणां।अष्टार्णो नारायणाष्टाक्षरः । द्विवसुदलं षोडशदलं स्वनाम्ना सव्यनाम्ना सह हस्ताभ्यां त्रिः प्रवीतं हस्तयोर्मध्ये साध्यनामेत्यर्थः।तत्त्रिपाशां कुशाभ्यामित्यावृत्ति त्रयं । यस्तु त्रिःप्रवीतमित्यावृत्तित्रयं कथमावृत्ति त्रयमित्यपेक्षायां स्वनाम्ना हस्ताभ्यामेका-द्वितीयापाशेन तृतीयांकुशेन द्वितीयं त्रिः पदं सत्वरजस्तमो रूपतया आवृत्तिध्यानमितिव्याख्यानात्।मनमस्य रवाकेवा तारपाशांकुशाभ्यामिति पाठं पठित्वा योजयंति।त्रिः प्रवीतं तच्चैकाहस्ताभ्यांस्वनाम्नाप्रपरारेण तृतीयापाशांकुशाभ्यामिति । अयमेवपक्षःसांप्रदायिकः । केचन द्वितीयत्रिशब्दस्यैव आकारोकारमकारात्मकत्वात्प्रणव एवार्थ इति व्याचक्षते । द्विवचनमावृत्त्यपेक्षया । तदुक्तं त्रिवीतं व्योमांत्यार्णस्वनाम्ना विरचितगुणपाशां कुशं चक्रयंत्रमिति । एतद्व्याख्याने पद्मपादाचार्याः । गुणः प्रणवः केवलहस्ताभ्यामावृत्ति त्रयं । अपरायामावृत्तौ तारमुक्त्वा साध्यनाम्नोक्षरद्वयमुच्चार्य पुनः पाशमुच्चार्य साध्यनाम्नोक्षरद्वयमुच्चार्य पुनरंकुशबीजमुच्चार्य्य पुनः साध्यनाम्नोक्षरद्वयमुच्चारयेत् । एवं रूपवर्णैर्वेष्टयेदित्या हुः।पाशांकुशवेष्टितमित्यस्य व्याख्याने पेक्षितार्थद्योतिन्यां पाशेन त्रिवारंअंकुशेनापि त्रिवारमित्युक्तं । षोडशाक्षरं मंत्रधुद्धरति।तारमिति।अयमपि स्वतंत्रो मंत्रः । अस्यर्ष्यादि सर्वं पूर्वमंत्रोक्तं । अथास्य तंत्रांतरस्थं यंत्रमुच्यते । षट्कोणं चक्रमालिख्य तस्यारेषु सुदर्शनं । अष्टारं पंकजं बाह्ये दलेष्वष्टाक्षरं परं । तद्बाह्ये द्वादशारस्याल्लिखेद्द्वादशाक्षरं : षोडशारं ततः पद्मं मूलमंत्रं समालिखेत् । कामबीजेन परितोवेष्टयेद्यंत्रमुत्तमं । महासुदर्शनं बाह्ये विलिखेद्देशिकोत्तमः । तारं नमोभगवते महासुदर्शनाय च । महाचक्रायच महाज्वालदीप्तरूपडे । सर्वतोरक्षयुग्मं च महाबलसडे द्विठः । मध्ये साध्यं समालिख्य प्रणवस्योदरेमने । सर्वसिद्धिप्रदं यंत्रमिति देवो ब्र-

सुदर्शनाय च ॥ वर्मास्त्रांतश्चक्रमंत्रः षोडशाक्षर ईरितः। चक्रयंत्रमिदं प्रोक्तं सर्वभीति निवारणम् ॥ क्षुद्रापमृत्युशमनं राज्ञां विजय वर्द्धनम् ॥ लेखाविलिख्याष्टशिरांसि तासामावध्यबाह्ये श्रुतिशः क्रमेण ॥ स्थाने हृषीकेशमनुं विभज्य पादाल्लिखेत्कोष्टचतुष्टयस्थान् ॥ अष्टाक्षरार्णैप्रतिदर्भितांस्तान्कोष्ठद्वयेचक्रमनुं यथावत् ॥ मध्यस्थ कोष्टे विलिखेत्ससाध्यं स्यात्सप्तकोष्टाह्वययंत्रमेतत्। स्थाने हृषीकेशतवप्रकीर्त्या जगत्प्रहृष्यत्यनु रज्यते च ॥ रक्षांसि भीतानि दिशोद्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः धारितं सप्तकोष्टं तत्रायते महतो भयात् ॥ दुःस्वप्नदुर्निमितादिशमदङ्कीर्त्तितं बुधैः ॥ इति शारदातिलके षोडशः पटलः॥१६॥

---

वीत् स्वयमिति। सप्तकोष्टयंत्रमाह।रेखा इति। पूर्वापरायतारेखात्। तासांशिरांसि बाह्ये क्रमेण श्रुतिश आबाध्येति संबंधः। प्रथमादिरेखाग्रं स्वतुर्याग्रेण मेलयेत्। तेन हरीतकी वद्भवतीति केचित्। पद्मपादाचार्यप्रभृतिभिः श्रुतिशस्त्रिश इति व्याख्यातं। तेषां मते प्रथमादि रेखाग्र स्वस्वतृतीयादि रेखाग्रेणसहमेलयेदित्यर्थः। अन्ये तु पूज्य पादा एवं व्याचक्षते। प्रथमरेखाग्रं स्वतुर्यरेखाग्रेणावध्य पुनस्तृतीयरेखाग्रात्षष्टरेखाग्रमावध्य पुनःपञ्चमरेखाग्रादष्टमरेखाग्रं बंधयेत्। एवं द्वितीयपार्श्वेपि। तदा द्वितीयरेखा सप्तमी च केवलं मध्येवशिष्यते। ततो द्वितीयरेखायाः पूर्वाग्रमारभ्योत्तरतोनीत्वा तत्पश्चिमाग्रेण बंधयेत्। एवं ससरेखापूर्वायमारभ्य दक्षिणतो नीत्वा तत्पश्चिमाग्रेण बंधयेत्। एवं बाह्ये इत्युक्तिश्च सार्थका भवति। एवं मध्यकोष्टत्रयमेकरेखाबद्ध च भवतीति। एवमेतद्यंत्रलिखनंस्वगुरुसंप्रदायानुसारेण बोद्धव्यमिति संक्षेपः।अष्टाक्षरप्रविदर्भितान्पादान् कोष्टचतुष्टायस्थान्प्रथमद्वितीयषष्टसप्तमस्थान् लिखेत्। विदर्भितलक्षणं त्रयोविंशे वक्ष्यते। कोष्टद्वये तृतीयपञ्चमरूपे।यथावदिति।ससाध्यं मध्यस्थकोष्टे चतुर्थकोष्टे ससाध्यं चक्रमनुमित्यनुषज्यते। तदुक्तमाचार्यैः। कोष्टत्रयलिखितंसाध्यं सुदर्शनं चेति। धारितमिति धारणप्रकार उक्त आचार्यैः। भूर्ज्जेवाक्षौमपट्टेन नुमस्तृणतरे कर्पटे वास्य यंत्रं मंत्री सम्यग् लिखित्वापुनरपि गुलिकीकृत्य लाक्षाभिवीतं।कृत्वा भस्मादिहोमप्रविहितघृतसंपातां तशक्तियंतपात्रं ससम्यक् प्रवध्यात्प्रतिशभमुपयांत्येव सर्वे विकारा इति। तन्मंत्रमित्यर्थः। नपुंसकलिंगे पि मंत्रशब्दस्य बहुषुस्थलेषुप्रयोगात् तेनायमर्थः। गीतामत्रविदर्भितः साष्टाक्षरश्चक्रमंत्रोपि जप्त एतत्फलद इति। तदुक्तमाचार्यै स्थाने हृषीकेशविदर्भितं च साष्टाक्षरं चाप्यभिजप्तमेतत्। रक्षांग्रहादेः सततं विधत्ते यंत्रं सुकृतं च मनुत्रयेणेति। स्थाने हृषीकेशेतिमंत्रस्य चतुर्भिश्चरणैःसर्वेण पञ्चांगं कृत्वा अग्निर्मूर्द्धाचक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृत्तिश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवीह्येषसर्वभूतांतरात्मेति ध्यात्वा कर्णिकायां देवं पत्रेष्वंगानि तद्बहिर्लोकपालानर्चयेत्। दशलक्षजपः पुरश्चरणं।दशांशं घृतेन होमः।सर्वपापक्षयसर्वशांतिसर्वग्रहनिवारणसर्वरक्षोघ्नमिति फलम्।इति श्रीशारदातिलकटीकायां पदार्थादर्शाभिख्यायां षोडशः पटलः॥१६॥वैष्णवतंत्रगोयितत्वादंते स्मरणारूढत्वात्पुरुषोत्तमादिमंत्रान्वक्तुमुपक्रमते। अथेति।उक्तं च मंत्रतंत्रप्रकाशे। पुरुषोत्तमसंज्ञस्य विष्णोर्भेद चतुष्टयं। त्रैलोक्यमोहनस्तेषां प्रथमः प्रकृतिर्मतः। श्रीकरश्चहृषीकेशःकृष्णश्चात्र चतुर्थमः स्यात्प्रयु-

अथ वक्ष्ये जगन्मूलं मंत्रं श्रीपुरुषोत्तमम् ॥ गोपितं वैष्णवे तंत्रे भुक्ति मुक्तिफलप्रदं ॥ १ ॥ तारमारमाबीजं नत्यते पुरुषोत्तम ॥ पुनरप्रतिरू · पांते तनो लक्ष्मीं निवासच ॥२॥ सकलांते जगत्पूर्वं क्षोभणेति पदं पुनः ॥ सर्वस्त्रीहृदयो पेतं विदारणपदं पुनः ॥ ३ ॥ ततः परं त्रिभुवनमदोन्मादकरं ततः ॥ सुरासुरांते मनुजसुन्दरजिनशब्दतः ॥ ४ ॥ मनांसि तापयद्वंद्वं दीपयद्वितयं पुनः ॥ शोषय द्वितयं भूयो मारय द्वितयं पुनः॥ ५ ॥ स्तम्भय द्वितयं पश्चान्मोहय द्वितयं पुनः॥ द्रावय द्वितयं पश्चादाकर्षय युगं ततः ॥ ६ ॥ समस्तपरमोयेन सुभगेन च संयुतम्। सर्वसौभाग्यशब्दांते करोति पदसंयुतम् ॥ ७ ॥ सर्वकामप्रद पचमपुकं हनयुग्मकम् ॥ चक्रेण गदया पश्चात् खड्गेन तदनन्तरम् ॥ ८ ॥ सर्ववार्णभिदयुगं पाशेनेति पदं ततः ॥ तावद्यावत्पदस्यांतेसमाहितमनन्तरम् ॥ ९ ॥ ततो मे सिद्धमाभाष्य भवत्यन्ते सर्वेमफट् ॥ नमोंतोयं मनुः प्रोक्तो द्विशताक्षरसंयुतः ॥ १० ॥ जैमिनिर्मुनिराख्यातश्छन्दयामि तमीरितम् ॥ समस्तजगतामादिदेवेना पुरुषोत्तमः ॥११॥ पुरुषोत्तमशब्दांते वदेत्त्रिभुवनं ततः ॥ मदोन्मादकरांते हुं हृदयं सकलं ततः ॥ १२ ॥ जगत् क्षोभणशब्दांते लक्ष्मीदपितहुं शिरः ॥ मन्मथोत्तमसंयुक्तमंगजे कामदायिनि ॥ १३ ॥ हुं शिखापरमोपेत सुभगाक्षरसंयुतम् ॥ सर्वसौभाग्यकरहुं कवचं परिकीर्त्तितम् ॥ उक्त्वासुरासुरोपेमतनुजान्वितसुन्दरी । ततः परस्ताद्धृदयविदारणपदं वदेत् ॥ १५ ॥ सर्वप्रहरणवरसर्वकामिकृतत्परम् ॥ हनद्वयं च हृदयं बन्धनानि ततः रम् ॥ १६ ॥ आकर्षय पदद्वंद्वं महाबलहुमस्त्रकं ॥ त्रिभुवनेश्वरपदन्ततः सर्वजनात्ततः ॥ १७ ॥ मनांसि हनुयुग्मांते दारय द्वितयं च मे । वशमानय हुं नेत्र ताराद्याः फट् नमोंतकाः ॥ १८ ॥ षडंगमंत्राः सन्दिष्टाने-

---

त्रो वेति केचनेति। मंत्रदेवतयोरभेदेन पुरुषोत्तममित्युक्तिः। अतिरहस्यत्वाद्गोपितं। अत एवाचार्यैर्गुप्तः पटले उद्धारः कृतः। भुक्तिमुक्तीत्यनेन विनियोग उक्तः ॥ १॥ मंत्रमुद्धरति। तारेति। तारो देवी प्रणवः ॐकारस्य सामान्येन सर्वमंत्रादित्वेनोक्तेरत्रापि तथा संप्रदायाद्वाप्रणवादित्वं। यद्वातारश्चेत्येकशेषे तारौपश्चाद्रमादिपदैः सहसमासः। तत्र प्रथमतारपदेन प्रणवः द्वितीयतारपदेन देवीप्रणवः। इदं व्याख्यानं पद्मपादाचार्याणां संमतं। कामबीजं। रमाश्रीबीजं। नतिर्नमः पदं। सर्वस्त्रीहृदयेति स्वरूपं। अत्र क्वापि न संधिः द्वितीयांतानि सर्वाणि आभाष्येत्यस्य कर्माणि मंत्रे तु संबुद्धयः। समाहितं सिद्धमिति च मंत्रेपि द्वितीयांतं। द्विशताक्षर इत्युक्तिस्तु अमुकेति साध्यनामपरमित्येतत्केति केचन। अन्ये तु अमुकपदप्रक्षेपात् द्विशताक्षरसंयुत इत्युक्तेरधिकाक्षरत्वमपि नदोषायेत्यूचुः। केचनाचार्या एवमाहुः। शक्तिश्रीमःरैभिः पुटितः स्मरणस्त्रलोकमोहनकृदिति प्रणवो बीजं हुं शक्तिः॥२॥षडंगमंत्रानुद्धरतिद्विपुरुषोतमेतिखामंत्रे अंगजेइत्यस्यपूर्वेणसह संधिःतदुक्तं। मन्मथवर्णानुक्त्वातदनुवदेदुत्तमांगजे। वर्णानिति। अस्त्रमंत्रेहृदयेतिद्वयमपिस्वरूप॥ ताराद्या इति।उक्त्वा नेत्रांताः षडंगमंत्राः ताराद्याः प्रणवाद्याः फट् नमोतिकाः संदिष्टा इतिसंबंधः। तंत्र वेदिभिरित्यनेनैतदुक्तं भवति। यदाहुः। करयोर्व्यापकं मंत्रंन्यस्यांगान्यंगुलीषु तलयो

त्रांतास्तत्र वेदिभिः त्रैलोक्यमोहनार्णांते हृषीकेशपदं पुनः ॥ १९ ॥ पश्चादप्रतिरूपादि मन्मयानन्तरं वदेत् ॥ सर्वादि स्त्रीपदं पश्चाद्धृदया कर्षणं ततः ॥२०॥ आगच्छ गच्छ मन्त्रोयं ताराद्यो नमसान्वितः ॥ अनेन मनुना कृत्वा व्यापकं न्यस्यबाहुषु ॥ २१ ॥ अष्टायुधानि मुद्राभिर्मंत्रैः सार्द्धं विचिंतयेत् ॥ क्षीरांभोनिधिमध्यस्थं निरन्तरसुरद्रुमम् ॥ २२ ॥ उद्यदर्केन्दुकिरणदूरीकृततमोभरम्॥ कालमेघसमालोकनृत्यद्बर्हिकदंबकम् ॥ २३ ॥ उत्फुल्लकुसुमामोदप्रहृष्यद्भृंगसंकुलम् ॥ कूजत्कोकिलसंघेन वाचालितदिगन्तरम् ॥ २४ ॥ नाना कुसुमसौगन्ध्य वाहिगन्धवहान्वितम् ॥ कल्पवल्लीनिकुञ्जेषु क्रीडात्सिद्धकदम्बकम् ॥ २५ ॥ देवगन्धर्वकन्याभिर्गायन्तीभिरलंकृतम् ॥ अनेकदीर्घिकायुक्तमुद्यानं महदद्भुतम् ॥ २७ ॥ तस्य मध्ये मणिमये मण्डपे तोरणांचिते ॥ ऋतुभिः षड्भिरानिशं सेवितस्य महीयसः ॥२७॥ सुरद्रुमस्य मूलस्थे महासिंहासने शुभे ॥ रक्तारविंदमध्यस्थ गरुडोपरि संस्थितम् ॥ २८ ॥ ध्यायेद्वल्लभया सार्द्धंजगन्नाथं जगन्मयम् ॥ २९ ॥ देवं श्रीपुरुषोत्तमं कमलया स्वांकस्थया यद्धृत्तं विभूत्यापरिरब्धमम्बुजरुचा तस्यां निबद्धेक्षणम् ॥ ध्यायेच्चेतसि शंखपाशमुशग्च। न्यस्य बाणाननं गतह्रिताव्यापकमंत्रं ततो न्यसेद्वपुषि। मातृकयाविन्यसेत्प्रत्यर्णं मारबीजसंपुटया। न्यसेच्चमारमालामंत्रार्णान्मातृकावदानानि। चत्वारिंशद्वर्णान् पश्चोदरसुहृद्गलास्य नासासु। संव्यापयेच्चदेहे त्रीनर्णान्सकृत्समस्तेन क्लींमातृकार्णपूर्व्वाभूत्तीर्न्यस्येच्चकामरति। पूर्वा इति। पीठमंत्रात्पूर्वं गरुडमुद्रयागरुडमंत्रं हृदि न्यसेत्। यदाहुः ईरितरीत्या देहे पीठन्यासांतिकं विधाय हृदि गरुडस्य मुद्रया तन्मंत्रं न्यस्य न्यसेत्तुपीठमनुमिति। व्यापकमंत्रे अप्रतिरूपेणेत्यस्य पूर्वेण सहसंधिर्नान्यस्येति। बाहुषु तत्तन्मुद्राभिस्तत्तन्मंत्रैः सार्धमष्टायुधानि विन्यस्यचिंतयेदेवमिति शेषः अष्टायुधानिध्यानोक्तानि। न्यासक्रमोपि तत्रैव वक्ष्यते। मुद्रालक्षणानितु पूर्वोक्ता पाशमुद्रा ज्ञेया अथ वेयं पाशमुद्रा यदाहुः तर्ज्जन्यंगुष्टकौ कृत्वा सक्ताग्रौ कुंचिताः पराः पाशमुद्रांसमाख्याबिति वामस्य मध्यमाग्रं तु तर्ज्जन्यग्रे नियोजयेत्। अनामिकां कनिष्ठां च तस्यां गुष्टेनपीडयेत् दर्शयेद्दक्षिणस्कंधे धनुर्मुद्रेयमीरतेति। अथ वेयंधनुर्मुद्रा ज्ञेया। यदाहुः। बाहुमूलं स्पृशेत्तेन बाह्वग्रेणैव साधकः धनुर्मुद्रा यशः कीर्त्तिबलवीर्य विवर्द्धिनीति। कनिष्ठा नामिकेव ध्वास्त्वांगुष्टेनैववामतः। श्रेष्टांगुली तु प्रसृते संश्लिष्टे खड्गमुद्रिकेति। शंखमुशलचक्रगदांकुशमुद्रामया पूर्वमुक्ताः। एतदनंतरं देहे। श्रीवत्सकौस्तुभवनमाला यथास्थानं स्वमंत्रमुद्राभिर्न्यसेत्। तदुक्तं। अथ भूषणानि विद्वान्विन्यसेच्चिजतनौ यथा स्थानमिति। एतेषां मुद्राः प्रागुक्ताः। मंत्रास्तु। वक्ष्यंते १८ श्लोरेत्यनेन पृथिव्यनंतरं क्षीरसमुद्ररत्नद्वीपादभूतोद्यानमणिमंडपकल्पतरुमहासिंहासनगरुडान् पीठन्यासादौ योजयेदित्युक्तं ॥ २२ ॥ ध्यानमाह देवमिति अंबुजरुचेति पीतवर्णया तत्र कमलाद्विभुजा वामेपद्म दक्षेणालिंगनं। साब्जवामकरां पीतां श्लिष्यंतीं पाणितापतिमिति। अन्यत्रापि। वामकरस्थांबुजया प्रतप्तकनका भयाति सुंदर्य्येति। आयुधध्यानं तु वामेषूर्ध्वादि बाणशंखधनुर्गदाः दक्षेपूर्ध्वादि अंकुशमुशलखड्गचक्राणि। तदुक्तं मंत्रतंत्रप्रकाशे दक्षिणाधः करे चक्रं चिंतये

लीं श्चापेषु खड्गानादं हस्तैरंकुशमुद्वहन्तमरुणं स्मेरारविंदाननम् ॥ ३० ॥ एवं ध्यात्वा श्रियःकांतं मनुंलक्षचतुष्टयम् ॥ जपेद्वशी विधायाथ कुण्डमर्द्धेन्दुसन्निभम् ॥ ३१ ॥ जुहुया द्वैष्णवे वह्नौ पद्मजाति समुद्भवैः ॥ पुष्पैर्यवैः क्रमात्पश्चाद्ब्राह्मणानपि भोजयेत् ॥ ३२ ॥ अर्चयिष्यन् जगन्नाथं गायत्र्यापरिशोधयेत् ॥ आत्मानं यागवस्तूनि यागभूमिं च देशिक ॥ ॥ ३३ ॥ त्रैलोक्यमोहनायेति विद्महे पदमीरयेत् ॥ स्मराय धीमहि पश्चात्तन्नो विष्णुः प्रचोदयात् ॥ ३४ ॥ गायत्र्यैषा समाख्याता वैष्णवीं सर्वसिद्धिदा ॥ प्राक्प्रोक्ते वैष्णवे पीठे कल्पयेदासनं ततः ॥ ३५ ॥ पक्षिराजाय ठद्वंद्वमस्य मंत्रः प्रकीर्तितः। संकल्पितायां मूलेन मूर्त्तौ देवमनन्यधीः ॥ ३६ ॥ आवाह्य मनुना विद्वान्व्यापकने समर्चयेत ॥ भृगुर्लांतयुतःसेंदुबीजं देव्याः प्रकीर्त्तितम् ॥ ३७ ॥ कर्णिकायां यजेदादौ विधानेनांगदेवताः। दलेषु पूज-

---

दर्कभास्वरं। खड्गं तथोपरितनेमुशलं च तदुत्तरे। सव्योर्ध्वदक्षिणे हस्ते चिंतयेद्रुचिरांकुशं। वामोर्ध्वे चिंतयेत्पाशं तदधः शंखमेव च। शरं च धनुर्वामे गदां ध्यायेदधः कर इति। पूर्वोक्तायुधन्यासो देहेन न क्रमेण ज्ञेयः अत्र ध्यानानंतरमितामुद्रा दर्शनीयाः। यदाहुः। श्रीवत्सकौस्तुभावनमालाख्या च मारबीजेन। ऊर्ध्वांगुष्ठौनियोजितौ मस्तके मिथः श्लिष्टौ। त्रैलोक्य मं.हनाख्यामुद्रातां मूर्द्धियोजयेतदन्विति ॥३०॥ वशोत्येनेनाचार्योक्ता पूर्वमेव सूचिता। यदाहुः। ध्यात्वालक्षार्द्धसंख्यं जपतु मनुमिमं प्राप्तमंत्राभिषेको द्रव्यैरेभिश्चजुहृवद्भवतिमनुवरस्याधिकारी क्रियासु।शतंदधिष्टतं पयः पृथगथा युतं साज्यहविषा शृतेन पयसा हुने द्रविमितं तथा। साक्षत तलैः तथा दशदशोन्मितं त्रिमधुभिर्वरैश्चार्त्तवफलैःपलाशसमिधांशतं समभितोषयेत्स्वंगुरुवरमिति ॥ ३१॥ जुहुयादिति। दशांशमिति शेषः। तदुक्तं। दशांशं वैष्णवे वह्नाविति क्रमात्पश्चादित्यनेन तर्प्पणाद्युक्तं ॥ ३२ ॥ देशिक इत्यनेन कामाद्ययेत्युक्तं ॥ ३३ ॥ सर्वसिद्धिदेति स्वातंत्र्येण जपेत्। तदृष्यादिकं यथा। संकर्षणो मुनिश्छंदो गायत्रं पुरुषोत्तमः। देवता मूर्द्धिभालाक्षिदोः पत्संध्यशकेषु च। अक्षराणि प्रविन्यस्य षडंगानि समाचरेत्। पञ्चभिश्च त्रिभिश्चैव पञ्चत्रिश्च त्रिभिः पुनः। चतुर्भिश्च चतुर्भिश्चकुर्यादंगानि वर्णकैः। द्विशताक्षरवक्षास्याः पूजाद्यन्त त्रमोरितमिति। प्राक् प्रोक्ते पंचदशोक्ते पीठे। अनेन विमलाद्याः शक्तीःपूजयेदित्यर्थः। पूजायंत्रं तु। मंत्र तंत्रप्रकाशोक्तं यथा। लिखेदष्टदलं पद्मं चंदनेन सुगंधिना। युगद्वारं सुशोभाढ्यं कामंतन्मध्यतो लिखेदिति अस्येत्यासनस्य। अवधानं विनाआवाहनमेव कर्त्तुमशक्यमित्यनन्यधीरित्युक्तिः॥ ३५ ॥ आवाह्येति। व्यपकेन मनुना देवमावाह्यकर्णिकायां समर्चयेदिति संबंधः। व्यापकेनैव व्यापकमंत्रेण विद्वानिति षोडशोपचाराव्यापकमंत्रेणैवेत्युक्तं।आवाहनविसर्गांतेषूक्तोयं पूर्वसूरिभिरिति।देवीबीजमुद्धरतिभृगुरिति।भृगुः सः। लांतयुतोवयुक्तःसेंदुः सबिंदुः। इदं देव्याबीजं। अनेनांगपूजायाः पूर्वं अंकस्थायादेव्याः पूजां कुर्यादिति शेषः। तदुक्तं। दक्षे तरो रौकभलामथेष्ट्वा समर्चयेदावरणानि भूय इति। अन्यत्रापि। वामोरोसंस्थितामिष्ट्वा श्रियमंगानि पूजयेदिति। अत्रभूषणानि पूजयित्वागानि पूजयेत्। तदुक्तं नारायणीये। श्रीवत्सकौस्तुभौ विद्वांस्तनस्योपरिवक्षंरति। वनमालांगलेचान्यत्पीतव-

येत्पश्चल्लाक्ष्म्याद्याधृतचामराः ॥ ३८ ॥ मुक्ताहारलसच्चारुपयोधरभरान्विताः । जपाकुसुमसंकाशामदविभ्रममन्थराः ॥ ३९ ॥ ह्रस्वत्रयक्लीबसर्गरहितस्वरशोभितम् ॥ देवीबीजं क्रमादासां मंत्रमाहुर्मनीषिणः ॥ ४० ॥ दलाग्रेषु यजेच्छंखं शार्ङ्गचक्रमसिं गदां ॥ अंकुशं मुशलं पाशमेतान्यस्त्राणि शार्ङ्गिणः ॥ ४१ ॥ स्वमुद्राभिः स्वमनुभिः कथ्यन्ते मनवः क्रमात् । आद्योजलचरायांते ठद्वयं मनुरीरितः ॥ ४२ ॥ शार्ङ्गाय सशरायांते स्वाहांतो नंतरो मनुः । सुदर्शनं महाचक्रराजांते स्याद्दहद्वयम् ॥ ४३ ॥ सर्वदुष्टभयं पश्चात्कुरु छिंदि द्वयं पृथक् । विदारय पदद्वयं परमंत्रान्ग्रसग्रस ॥ ४४ ॥ भक्षयत्रासय द्वंद्वं प्रत्येकं वर्मफट् द्वयम् ॥ चक्राय नम इत्येष तृतीयो मंत्र ईरितः ॥ ४५ ॥ खड्गतीक्ष्णपदांतेस्याच्छिंदिक-

---

स्त्रादि पूजयेदिति ॥ ३७ ॥ विधानेनेति । केसरेष्वग्न्यादि चतुर्दिक्षु वर्मांतानि संपूज्य विदिक्षुस्त्र पुरतो नेत्रमित्यर्थः । तदुक्तं मंत्रतंत्रप्रकाशे । पूर्वादि दिक्षुचाभ्यर्चेद्धदाद्यंगचतुष्टयं । कोणेष्वस्त्रं प्रपूज्याथ पुरतो नेत्रमर्चयेदिति । अन्यत्रापि । अंगानि वर्मावधिकानि दिक्षु विदिक्षु चास्त्रं पुरतश्चनेत्रमिति । लक्ष्म्याद्याः इतिपूर्वमंत्रोक्ताः सर्गो विसर्गः । एभिरष्टभीरहिताः स्वराः आई ऊ एऐओऔ षं एतद्युतदेवो बीजमासां मंत्रमाहुरिति संबंधः ॥ ३८ ॥ स्वमुद्राभिरिति । दलाग्रेषु शार्ङ्गिण एतान्यस्त्राणि स्वमुद्राभिः सहस्वमनुभिर्यजेदिति संबधः । तत्र मुद्रालक्षणं मयोक्तं प्राक् । आद्यः शंखमंत्रः जलचरायेति । महाजलचरायेतिज्ञेयं । अंते ठद्वयमिति चक्रवचास्त्रयोः पूर्वमुच्चारणं सूचितं मनुरीरित इत्यनेन पां चजन्याय नम इत्यस्यांते प्रयोगः सूचितः आचार्यैः प्रथमं चक्रमंत्रोद्धारे महासुदर्शनायेति ऊं फट् स्वाहेत्यंतः सुदर्शनाय नम इत्युद्धतं । तदनंतरं शंखादिमंत्रा उद्धताः तत्र पद्मपादाचार्यैर्व्याख्यातं शंखादिमंत्रेष्वपि महाशब्दः अंते च पांचजन्याय नम इत्यादि प्रयोक्तव्यं इति । मंत्रतंत्रप्रकाशे अपेक्षितार्थद्योतनिकायामपि । एवमेव मंत्रा उद्धृताः । मूलकारेणापि चक्रमंत्रे चक्राय नम इति । कौमोदकी मंत्रे च कौमोदकी पर इति वदता स्पष्टमेवोक्तं तेनायं मंत्रः महाजलचराय हुं फट् स्वाहा पांचजन्याय नमः । अंते महाशब्दांते सशराय स्वाहांत इत्यनेन हुं फट्स्वाहांत इत्युक्तं । अन्यथा स्वाहेत्येव वदेत् । तदुक्तं । धनुषः शार्ङ्गायाथ सशराय हुं फट् युग्मको मंत्र इति । आचार्यैरपि हुं फट् स्वाहा मुशलस्येत्युक्त्वा शार्ङ्गाय सशराय चे त्युक्तं । तत्र चकारेण हुं फट् स्वाहेत्यस्य समुच्चय इति । एवं तदग्रिमयोरपि खड्गांकुशयोः तट्टीकाकारैर्व्याख्यातं । मनुरित्यनेन शार्ङ्गाय नम इत्युक्तं । अनंतरः शार्ङ्गमंत्रः मंत्रस्तु महाशार्ङ्गाय सशराय हुं फट् स्वाहा शार्ङ्गाय नमः १ सुदर्शनेति । पृथगिति । कुरुकुरु छिंदिछिंदीति । प्रत्येकमिति । भक्षयभक्षय त्रासयत्रासयेति । अनयोर्मध्ये भूतानीत्यपि ज्ञेयं । तदुक्तमाचार्यैः । भक्षयद्वयभूतानि त्रासयद्वयवर्मफडिति । अन्यत्रापि । भूतानि त्रासयद्वयं । हुं फडिति द्वयं ठद्वयं स्वाहेत्यर्थः चक्रायेति सुदर्शनायेति ज्ञेयं । तदुक्तं । स्वाहा सुदर्शनायेत्पथनतिरिति चक्रमंत्रनुपदिष्ट इति । तृतीय इति चक्रमंत्रः । मंत्रो यथा । सुदर्शनमहाचक्रराजदहदहसर्वदुष्टभयं कुरुकुरु छिंदिछिंदि विदारयविदारय परमंत्रान् ग्रसग्रसभक्षयभक्षय भूतानि त्रासय हुं फट् स्वाहा सुदर्शनाय नमः ।

द्युगं पृथक् ॥ चतुर्थोयं मनुः प्रोक्तः कौमोदकी महाबले ॥ ४६ ॥ सर्वासुरांतकिपदं प्रसीदयुगवर्मफट् ॥ स्वाहांतोयं मनुः प्रोक्तः सद्भिःकौमादकीपरः ॥ ४७ ॥ अंकुशांते कट्युगं षष्ठोयं मनुरीरितः ॥ संवर्त्तकांते मुसलं योथ यद्वितयं पुनः ॥ ४८ ॥ हुं फट् द्विठांतो मंत्रो यं सप्तमः परिकीर्तितः । पाशैर्बंधद्वयं पश्चादाकर्षय पदद्वयम् ॥ ४९ ॥ वह्निजायावधिः सद्भिरष्टमो मंत्ररीरितः । लोकेशान् पूजयेत्पश्चाद्वज्राद्यैरायुधैःसह ॥ ५० ॥ इत्थमभ्यर्च्यनित्यं यथावत्पुरुषोत्तमम् ॥ प्राप्नोति महतीं लक्ष्मीं सौभाग्यमतुलं यशः ॥ ५१ ॥ आयुरारोग्यमैश्वर्यं मनोभीष्टानि विंदति ॥ हयारिकुसुमैर्देवमर्चयित्वा यथाविधिः ॥ ५२ ॥ शशिप्रसूनैर्जुहुयादष्टोत्तरसहस्रकम् ॥ मासमात्रेण वशगास्तस्यस्युः सकलानृपाः । हुत्वा बि-

---

खड्गेति । महाखड्गेति ज्ञेयं । छिंदिकट्युगं पृथगित्यपपाठः बहुग्रंथविरोधात् । अपेचितपदानुहाराच्च तदुक्तमाचार्यैः । खड्गतीच्णांते छिदयुक्खड्गमंत्रक इति । खड्गतीच्णच्छिंदयुगं हुं फडाद्ययं मंत्र इति । अपेच्चितार्थद्योतनिकायां मन्त्रतंत्रप्रकाशेपि एतादृशस्योक्तत्वात् तेनायं पाठः छिंदयुग्मं हुमादि चेति । आदिशब्दात्फट् स्वाहेति च । खड्गाय नम इति चतुर्थः खड्गमंत्रः । मंत्रो यथा । महाखड्गतीच्णछिंदछिंद हुं फट् स्वाहा खड्गाय नमः कौमोदकीति कौमोदकीपरः कौमोदक्यै नम इत्यंतः । मंत्रस्तु महाकौमोदकिमहाबलेसर्वासुरांतकिप्रसीदप्रसीद हुं फट्स्वाहा-कौमोदक्यै नमः । अंकुशेति महांकुशेति अयमिति हुं फट् स्वाहा समुदायः । तदुक्तं । अंकुशकट्युगोपरि हुमादीति । मनुरित्यंकुशाय नम इति । षष्ठ इत्यंकुशस्य । महांकुशकट्टकट्टहुं फट् स्वाहा अंकुशाय नमः ॥ ६ ॥ मुशलेति महामुशल मंत्र इति मुशलाय नम इति । सप्तम इति मुमुशलस्य । मंत्रस्तु । संवर्त्तकमहामुशलपोथयपोथयहुं फट्स्वाहा मुशलाय नमः ॥ ७ ॥ पाशेति महापाश । वह्निजायावधिरिति हुं फट् स्वाहांत इत्यर्थः । तदुक्तं । महापाशपदोपरिबंधद्वयं तथा कर्षद्वयं हुं फट्स्वाहेति पाशमंत्र इति । पाशमंत्र इति । पाशाय नम इति अष्टम इति पाशस्य । मंत्रस्तु महापाशबंधबंधआकर्षय आकर्षय हुं फट् स्वाहा । पाशाय नमः ॥ ८ ॥ अन्यत्रैषां प्रणवकामादित्वमुक्तं । आयुधमंत्राः क्रमतो वच्यंते । तारमारबीजाद्या इति । एषां पूजायां विशेषः । यदाहुराचार्याः।दरचक्रगदा मुशलाः पूर्वाद्याशा सुचाथ कोणेषु । वह्न्यादि शार्ङ्गसोखड्गंकुशपाशाविति । आयुधानां वर्णाउक्ता मंत्रतंत्रप्रकाशे । चक्रं भास्करसंकाशं खड्गमाकाशसंनिभं । मुशलं श्यामलं ज्ञेयमंकुशः कृष्णवर्णकः । पीतंपाशं विजानीयाच्छंखंचंद्रप्रभं स्मरेत् । धनुः स्याद्विद्युदाभं गदापावकसंनिभेति पद्मादित्यनेन । श्रीवत्सकौस्तुभवनमालाअपि स्वस्वस्थानेस्वमुद्रास्वमंत्रैः पूजनीया इत्युक्तं । अपेच्चितोर्थद्योतनिका मंत्रतंत्रप्रकाशादिषूक्तत्वात् । केचन प्रधानपूजायामेव पूजयंति । तथोक्तं मयाप्राक् तत्र मुद्रालच्णानि मयोक्तानि प्राक् । मंत्रास्तु । ॐ महाश्रीवत्साय हुं, फट् स्वाहाश्रीवत्साय नमः महामृतसंभवाय हुं फट्स्वाहा । कौस्तुभाय नमः ॐ महावनमालेहुं, फट् स्वाहा । वनमालायै नमः यथावदिति । पूर्वोक्तप्रकारेण । हयारिः करवीरः । यथाविधौत्यग्नौ पीठपूजापूर्वकमित्यर्थः शशिप्रसूनैः कुमुदैः । वसुसंख्यकं सहस्रं अष्टसहस्रं यस्य

स्वफलैः पक्वैः श्रियं विंदेदनिंदितां ॥ ५३ ॥ प्रफुल्लैररुणांभोजैस्तामेव लभते पुनः ॥५४॥ हुत्वा ज्योतिष्मती तैलं सहस्रं वसुसंख्यकम् ॥ सुभगो जायते सम्यक्सर्वेषां नात्र संशयः ॥ ५५ ॥ विधानेनामुना मंत्री महारोगात्प्रमुच्यते ॥ अश्वत्थसमिधांहोमः पराहृतधनप्रदः ॥ ५६ ॥ आज्याक्तदूर्वाहोमेन मुच्यते महतोभयात् ॥ यस्य नामयुतं जपेदयुतसंख्यया ॥ ॥ ५७ ॥ सभवेद्दासवत्तस्य नात्रकार्याविचारणा । बहुना किमिहोक्तेन मनुना साधकोत्तमः ॥ ५८ ॥ साधयेत्सकलान्कामान् साक्षाद्विष्णुरिवापरः । उत्तिष्ठ पदमाभाष्य श्री क्रोधीश हुताशनौ ॥ ५९ ॥ वह्निजायावधिर्मंत्रो वस्वक्षरसमन्वितः ॥ ऋषिरस्य भवेद्वामः पंक्तिश्छन्द उदाहृतम् ॥ ६० ॥ श्रीकराख्यो हरिः प्रोक्तो देवतास्य मनीषिभिः । हृदयं भीषय द्वंद्वं त्रासय द्वितयं शिरः ॥ ६१ ॥ शिखाप्रमर्दय युगं वर्मप्रध्वंसय द्वयम् । अस्त्रं रक्षयुगं सर्वे हुमन्ताः समुदीरिताः ॥ ६२ ॥ मूर्द्धनिनेत्रद्वये कण्ठे हृदयोदरयोः पुनः । उरुजंघापदद्वंद्वे मंत्रवर्णान्प्रविन्यसेत् ॥ ६३ मुखे न्यसेद्ब्राह्मणोस्य मुखमासीदिमं मनुम् ॥ बाहूराजन्य कृत्तोयं न्यस्तव्यो बाहुयुग्मके ॥ ६४ ॥ ऊरूतदस्य यद्वैस्य इममूरुद्वये न्यसेत् ॥ पादद्वये न्यसेन्मंत्रं पद्भ्यां शूद्रो अजायत ॥ ६५ ॥ चक्रंशंखंगदांपद्मंहस्ताग्रेष्वथ विन्यसेत् ॥ इत्थं न्यासं तनौ कृत्वा देवं पूर्वोक्तमण्डपे ॥ ६६ ॥ रक्तपद्मासनस्थस्य गरुडस्योपरि स्थितम् ॥ कांचनाद्रिसमप्रभं कमलाननं कमलेक्षणम् ॥ ६७ ॥ चक्रशंखगदासरोजधरं मनोहरदर्शनम् ॥ कौस्तुभांकितवक्षसंमुकुटां गदादि विभूषणम् ॥ ६८ ॥ तार्क्ष्यवाहनमच्युतं हृदि भावयामि जगत्पतिं ॥ अष्टलक्षं जपेन्मंत्री मंत्रमेनं दशांशतः ॥ ६९ ॥ बिल्वक्षीरद्रुमोत्थाभिः समिद्भिररुणांबुजैः । पयोन्नैःसर्पिषा हुत्वा गुरुं सन्तोषयेद्धनैः ॥ ७० ॥ मूर्त्तौ मूलेन क्लृप्तायां पूजयेद्देवमन्वहम् ॥ अंगान्यादौ केसरेषु दिक्पत्रेषु समर्चयेत् ॥ ७१ ॥

---

नामयुतमिति अमुकपदस्थाने श्रीकरमंत्रमाह उत्तिष्ठेति श्री स्वरूपं । क्रोधीशः कः । हुताशो रेफः वस्वक्षरः अष्टाक्षरः । केचन श्री बीजपूर्वकमपरेतापूर्वकमेनमाहुः तदुक्तं । केचिच्छ्रीबीजाद्यं केचित्ताराद्यमेनमिच्छंतीति । प्रणवमारश्रीबीजैः संपुट इति पद्मपादाचार्याः । अतएव समन्वित इत्युक्तिः । वामोदेव इत्यर्थः । तदुक्तं । ऋषिरस्य वामदेव इति । ॐ बीजं स्वाहा शक्तिः । तदुक्तं । विष्णुसबिंदुरुदितोबीजं शक्तिः शिरोस्य विज्ञेय मिति । मनीषिभिरिहु भताः समुदीरिता इति संबंधः । मनीषिभिरित्यनेन पंचांगानंतरमष्टांगं कर्त्तव्यमित्युक्तम् । अष्टांगानि च कुर्यान्मंत्रार्णैरुदितवर्त्मना क्रमतः । हृदयशिरः पूर्वशिखाकवचास्त्राचुदरपृष्टसंभिन्नै रिति । मूर्द्धनीति । अयं सृष्टिन्यासः । यदाहुः सृष्टिरियं निर्दिष्टातुदादिहृदंतिका स्थितिस्तद्वत् । पादाद्योमूर्द्धांतः कथितएवसृष्ट्यादिति विन्यसेदिति स्वस्वमंत्रैः स्वस्वमुद्राभिः । न्यासस्थानमायुधध्यानेन ज्ञेयं आयुधध्यानं तु दक्षायूर्ध्वयोराद्ये तदधस्थयोरन्ये । अत्र ध्यानानंतरं श्रीवत्सकौस्तुभवनमालामुद्राः प्रदर्शयेत् क्षीरद्रुमेति अश्वत्थोदुंबरप्लक्षवटाः । तेनाष्टभिर्द्रव्यैः प्रत्येकमयुतरीत्या दशांशसिद्धिः । मूलेनक्लृप्तायामिति । पूर्वोक्त वैष्णवे पीठे इति शेषः । समाराध्ये ति शेषः । समाराध्येति केसरेष्विति शेषः । अन्ये कर्णि-

श्रियं रतिं कांतिं लीलापंकजधारिणी । पीतारुणाश्यामनीला विदिक्षयत्रेषु पूजयेत् ॥ ॥ ७२ ॥ वासुदेवादिकाः मूर्त्तिः पार्श्वयोर्निधियुग्मकम् ॥ विष्वक्सेनं यजेदीशे लोकपालाननन्तरम् ॥ ७३ ॥ एवं सम्पूजयेद्देवं साधयेदिष्टमात्मनः। दूर्वाचरुभ्यां जुहुयादयुतं बुधः ॥ ॥ ७४ ॥ संयातितं चरुं पश्चात्साध्यो भुंजीत साधितम् ॥ ब्राह्मणान् भोजयेत्सम्यङ्मधुरैर्होमवासरे ॥ ७५ ॥ तोषयेद्गुरुमर्थेन वस्त्रैर्धान्यैर्विभूषणैः। जित्वापमृत्युरोगादीन् दीर्घमायुः सविंदति ॥ ७६ ॥ आज्यसिक्तैः सरसि जैर्जुहुयादयुतत्रयम् ॥ निवसेत्कमला तस्मिन्नत्यजेत्तत्सुतानपि ७७ ॥ बिल्ववृक्षसमिद्धोमात्साक्षाद्धनपतिर्भवेत् ॥ ७८ ॥ पूगपुष्पसमायुक्तैस्तन्दुलैर्मधुरोक्षितैः। जुहुयादचिरादेव सम्पदां जायते निधिः ॥ ७९ ॥ आज्येन जुहुयाल्लक्षं परान् जयसि पार्थिवः। अब्जसूत्रं भुजेबद्धं मनुनानेन साधितम् ॥ ८० ॥ रोगापमृत्युदुःखानि नाशयेन्नात्र संशयः।जलांजलिभिरात्मानमभिषिंचेद्दिनेदिने ॥ ८१ ॥ स्नानकालेषु सभवेत् सौभाग्यश्रीसमृद्धिमान् ॥ ऊर्द्ध्वबाहुद्वयो मंत्री पश्यन्नादित्यगण्डले ॥ ८२ ॥ सहस्रमानं प्रजपेन्नित्यं निशितधीर्मनुम् ॥ सर्वे मनोरथास्तस्य सिद्ध्येयुर्नात्र संशयः ॥ ८३ ॥ कृष्णाय पदमाभाष्य गोविंदाय ततः परम् ॥ गोपीजनपदस्यांते वल्लभाय द्विठावधिः ॥ ८४ ॥ कामबीजादिराख्यातो मनुरष्टादशाक्षरः। नारदोस्य मुनिः प्रोक्तो गायत्रं छन्द उच्यते ॥ ८५ ॥ देवता कथितः कृष्णः सर्वकामफलप्रदः। चतुः करणवेदाब्धिनेत्रसंख्याक्षरैः क्रमात् ॥ ८६ ॥ पञ्चांगानि मनोःकुर्यान्मंत्रविज्जाति संयुतैः। स्मरेवृन्दावने रम्ये मोदयन्तं मनोरमम् ॥ ८७ ॥ गोविंदं पुण्डरीकाक्षं गोपकन्या सहस्रशः । आत्मनो चन्दनांभोजप्रेषिताक्षिमधुव्रताः ॥ ८८ ॥ पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः । मु-

---

कायां पूजयंति । पार्श्वयोरित्तराष्टदलबाह्ये । विष्वक्सेनं यजेदिति । अत्र विष्वक्सेन मुद्राप्रदर्शनीया । यदाहुः । नासिकाग्रसमीपस्था कृत्वा वामस्य तर्ज्जनीं । दण्डवद्दक्षिणे कुर्याद्दक्षिणस्य प्रदेशिनो विष्वक्सेनस्य मुद्रेयंतत्पूजायां प्रदर्शयेदिति ईश इति पद्मबाह्ये । अन्ये अग्रे पूजयर्यात । एतदंतं द्वितोयावरणं अनंतरमिति वज्रादीन् । चरुमिति होमशेषं । सुसाधितमिति जपादिना । अब्जसूत्रमिति मंत्रवर्णसंख्यानब्जमृणालसूत्रानीयमंत्रेणाष्टोत्तरशतयो देयाः । तदुक्तफलदं । निशितधीरित्यनेनतत्र देवतां ध्यायन्नित्युक्तं । गौतमकल्पोक्तं यंत्रमुच्यते । तारं ससाध्यमष्टारे कोणे मूलाक्षराणि तु प्रत्येकं शक्त्य क्षिपुं त्रिकोणाग्रे षु षडंगकं । बहिरष्टदले पद्मे लिखेदष्टाक्षरं मनुं । पंचांगैर्वेष्टयेद्बाह्ये द्वादशाक्षरसंयुतं । पद्मं द्वादशपत्रं द्वादपत्रं तु वृत्तात्षट्कोणकं बहिः । कोणेष्वनंगबीजं तु बहिरष्टदलांबुजं । केसरेषु कलाः पत्रे द्वंद्वशः श्रीकरं मनु । तारः श्रीकरक्षणो चक्रेतो गौपीकुचांततः । भूषणायेति मंत्रोयं तत्पाशांकुशवेष्टितं । संवीतं चसदंडेन व्योम्नैतद्यंत्रमुत्तमं । भूतप्रेतपिशाचाश्च यक्षगंधर्वराक्षसाः । लयं यांति तथा सर्वे केवलं यंत्रधारणात् । संसाधितं महायंत्रमपस्मारहरं परं । साध्यनामांकितं यंत्रं धारयित्वावशंकरं । यद्यत्कामयतेवत्सतत्प्राप्नोतिसमाहितइति । गोपालमंत्रमाह कृष्णायेति द्विठेति स्वाहा । क्लीं बीजं स्वाहा शक्तिः । वक्ष्ये मंत्रस्यास्य

क्ताहारलसत्पीततुंगस्तनभरान्विताः ॥ ८९ ॥ स्रस्तधम्मिल्लवसनामदस्खलितभीषणाः । दन्तपंक्तिप्रभोद्भासि स्पन्दमानाधरांचिताः ॥ ९० ॥ विलोभयन्तीर्विविधैर्विभ्रमै भविगर्भितैः ॥ ९१ ॥ फुल्लेंदीवरकांतिमिंदुवदनं बर्हावतंसप्रियं श्रीवत्सांकमुदारकौस्तुभधरं पीतांवरं गोपीनां नयनोत्पलार्चिततनुं गोपालसत्यावृतम् ॥ गोविंदं कलवेणु वादनपरं दिव्यांगभूषं भजे ॥ मंत्रमेनं यथान्यायमयुतद्वितयं जपेत् ॥ ९१ ॥ जुहुयादरुणांभोजैस्तद्दशांशैः समाहितः। वैष्णवे पूजयेत्पीठे यथावद्देवकीसुतम् ॥ ९२ ॥ अंगावरणमाराध्य पत्रेषु प्रयजेत्प्रियाः। कालिंदीनानजित्याख्यामित्रविंदा ततःपरम् ॥ ९३ ॥ चारुहासिन्यथपरारोहिणी जांबवत्यथा ॥ रुक्मिणी सत्यभामेति कथिताश्चारुभूषणः ॥ ९४ ॥ पीतांबरधराः सौम्याःकरांबुजधृतां बुजाः।ऐरावता दीनभ्यर्च्येद्दुजानष्टौ ततो बहिः ॥ ९५ ॥ लोकपालान्यजेन्मंत्री वज्राद्यस्त्राणि तद्वहिः। इति सम्पूजयेद्देवं गोविंदं जगतां पतिं ॥ ९६ ॥ कुर्वीत कल्पनिर्दि-

---

बीजं सशक्तिचक्रींवामनेत्रप्रदीप्तः। सप्रद्युम्नाबीजमेतत्प्रदिष्टंमंत्रः। प्राद्युम्नोजगन्मोहनोयं। हंसोमेदोवक्त्रवृत्ताभ्युपेतः पोचीनेत्राद्यन्वितोसौ युगार्णा। प्रोक्ता शक्तिः सर्वगीर्वाणदेवंद्यस्याग्रे वैल्लभाकामदेयमिति। करणेति चत्वारि। गोपकन्यामोहयन्तमिति संबंधः। आत्मनी जदात्मनस्तासांचात्मरूपस्यकृष्णस्येत्यर्थः। स्पन्दमानाः सस्फुरणा ये धरास्तै रंचिताः। फुल्लेति। इंदीवरं नीलोत्पलं। बर्हावतंसंमयूरपिच्छकर्णाभरणंकलवेणु वादनपरं। अनेन द्विभुजंध्यानमुक्तं। अत्र ध्यानानंतरं वेणुश्रीवत्सकौस्तुभवनमालाबिल्वमुद्राः प्रदर्शयेत्। तत्र वेणुबिल्वमुद्रालक्षणं यथा। ऊर्ध्ववामकरांगुष्ठोलग्नस्तस्य कनिष्ठिका। दक्षिणांगुष्ठसंसक्तातत्कनिष्ठाप्रसारिता। तर्ज्जनी मध्यमानामाः किंचित्संकुच्य चालिताः। वेणुमुद्रेहकथिता सुगुप्ताप्रेयसीहरेः । उच्यतेऽच्युतमुद्राणां भद्राबिल्वफलाकृतिः। अंगुष्ठं वाममुद्दंडितमितरकरांगुष्ठकेनाथबध्वा तस्याग्रं पीडयित्वांगुलिभिरपिचतावामहस्तांगुलीभिः। बध्वागाढं हृदि स्थापयतु विमलधीर्व्याहरन्मारबीजं बिल्वाख्या मुद्रिकैषा स्फुटमिहगदिता गोपनीया विधिज्ञैः। मनो वाणी देहैर्यदिह च पुरावापि विहितं त्वमत्पामत्पावातदखिलमसौ दुष्कृतचयं। इमां मुद्रां जानन् क्षपयति नरस्तं सुरगणा नमंत्यस्याधीना भवति सततं सर्वजनतेति। ययान्यायमित्यनेनैतदुक्तं भवति। यदाहुः। अद्रिशृंगेनद्यास्तटे बिल्वमूले तोये हृद्ध्वने गोकुले विष्णुगेहे। अश्वत्थाधस्तादंबुधेश्चापि तीरेस्थानेष्वेतेष्वासीन एकैकशस्तु। प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् मशः। अष्टादशाक्षरं चेदयुतद्वयमित्युदीरिता संख्या। शाकं मूलंफलं गोस्तनभवदधिनीभैक्षमन्नं च सक्तुं दौग्धान्नंचेत्याददानःक्षिति धरशिखरादौक्रमात्स्थानभेदे। एकं चैषामशक्तौ गदितमिहमया पूर्वसेवाविधानं निर्वृत्तेस्मिन् पुनश्च प्रजपतु विधिवत् सिद्धये साधकेशः। दशलक्षमयफलप्रदं मनुं प्रतिजप्य शिक्षितमतिर्दशाक्षरं। सुरयुगलवर्णं चेन्मनुं पञ्चलक्षमिति। तद्दशांशं पञ्चलक्षदशांशसमाहित इत्यनेनैतदुक्तं भवति। यदाहुः। अमलमतिरलाभे पायसैरंबुजानां ससितघृतसुसिक्तैरारभेद्धोमकर्मेति : वैष्णव इति। नारायणाष्टाक्षरोक्ते यथावदित्यनेनैतदुक्तं भवति। दामादि वज्राद्यस्त्रान्तैः सप्तभिरावरणैर्हरिमर्चयेत्।

ष्टान्प्रयोगान्निजवांछितान् ॥ लक्ष्मीप्रसूनैर्जुहुयाच्छ्रियमिच्छन्ननिंदिताम् ॥ ९७ ॥ साज्येनान्नेन जुहुयादाज्यान्नस्य समृद्धये ॥ आरण्यैः कुसुमैर्विप्रान् जातिभिः पृथिवीपतीन ॥ ९८ ॥ प्रसूनैरसितैर्वैश्यान् शूद्रान्नीलोत्पलैर्नवैः । वशयेल्लवणैः सर्वान्पंकजैर्वनिताजनान् ॥ ९९ ॥ गोशालासु कृतो होमः पायसेन ससर्पिषा ॥ गवां शांतिकरोत्याशु गोविदां गोकुलप्रियः ॥ ॥ १०० ॥ शिशुरूपधरं देवं किंकिणीदामशोभितं। स्मृत्वा प्रतर्पयेन्मंत्री दुग्धबुद्ध्याशुभैर्जलैः ॥ १ ॥ धनधान्यांशुकादीनि प्रीतस्तस्मै ददातिसः ॥ २ ॥ पिंडं मूलेन वीतं दहनपुरयुगे कोण राजत्षडर्णं कुर्यात्पद्मं दशार्णस्फुरितदशदलं कामबीजेन बीजम् ॥ पद्मं किंजल्क संस्थं स्वरविकृतिदलं प्रोल्लसत्षोडशार्णं किंजल्कं व्यंजनाद्यं विकृतियुगदलेष्वर्पितानुष्टुब वर्णं ॥ ३ ॥ पाशांकुशाभ्यामावीतं क्षोणीपुरयुगास्त्रिषु ॥ अष्टाक्षरेण लसितं यत्र गोविंद-देवतम् ॥ ४ ॥ धर्मार्थकामफलदं सर्वरक्षाकरं स्मृतम् । पञ्चांतकोधरे रस्थो मनुर्विंदुविभू-

---

ग्रंथोक्तांगादि वज्रांस्त्रांतं पंचावरणं वा । अंगलोकपालतदस्त्राणीत्यावरणत्रयं वा कृष्णाष्टकेनैकावरणंचेति । तदुक्तं । कथितमावृत्तिसप्तकमच्युतार्चनविधावति सर्वसुखावहं । प्रयजतादथवांगपुरंदराशनिमुखैस्त्रितयावरणात्विदं । श्रीकृष्णोवासुदेवश्च नारायणसमाह्वयः । देवकीनंदनयदुश्रेष्ठौवार्ष्णेय इत्यपि । असुराक्रांतशब्दांते भारहारीति सप्तमः । धर्मसंस्थापकश्चाष्टौ चतुर्थ्यंताः क्रमादिमे । एभिरेवा पूजा कर्त्तव्याकंसवैरिणः इति । एते चत्वारोपियद्यामुख्या एव । कल्पभेदाद्भेदः । आराध्येति । केसरेष्विति । ऐरावतादीनष्टमोक्तान् । यंत्रमाह पिंडमिति । वक्ष्यमाणं पिंडबीजं । परस्परव्यतिभिन्ने दहनपुरयुगे षट्कोणे । रसार्णं षडर्णंदशार्णंषोडशार्णानुष्टुवष्टार्णान्वक्ष्यति । विकृतिदलं षोडशदलं । विकृतियुगदलं द्वात्रिंशद्दलं । यत्रोभयत्रकेसरस्थानेषुएकैकार्णलेखः । पाशांकुशाभ्यामित्येकावृतिः।पिंडबीजमाह। पंचांतक इति पंचांतकोगःधरालःइरोयःतत्रस्थः ग्ल्यमनुरौंविंदुश्च एतद्युक्तस्तेनग्ल्यौ सर्वसिद्धिकरपरमित्यनेनास्यस्वातंत्र्यं नमोतत्वनन्याक्षरत्वं । प्रणवमायादित्वेन वाक्षरत्वमुक्तं ।तेनास्यर्ष्यादिकमुच्यते।मुनिर्नारद आख्यातश्छंदोगायत्रमीरितं। देवताबालकृष्णोंगंषड्दीर्घाक्रांतबीजतः। अव्याप्याकोशनीलांबुजरुचिररुणां भोजनेत्रोंबुजस्थो बालोजंघाकटीरस्थलकलितरणत्किंकिणीको मुकुंदः । दोर्भ्यां हैयं गवीयनं दधदति विमलं पायसं विश्ववंद्योगोगोपीगोपवी रुरुनखविलसत्कंठभूषश्चिरंवः । जपेल्लक्षं मनुवरं पायसैरयुतं हुनेत् । पूजा तु वैष्णवे पीठे अंगदिक्पालवज्राद्यैरिति । यद्दृषिर्नारदः प्रोक्तो जगती छंद ईरितं । श्रीकृष्णो देवता बीजं ग्लौ य शक्तिः प्रकीर्त्तिता । षडंगमूलमंत्रेण कुर्याद्देवं विचिंतयेत् । कदंबमूले तिष्टंतं देवदेवं जनार्द्दनं । इंदीवरदलश्यामं पूर्णचंद्रनिभाननं । देवगंधर्वयक्षौघकिन्नरोरगसेवितं । मोननं गोपगोपीनां वल्लभं देवकीसुतं । मयूरपिच्छसंयुक्तं वनमालाविभूषितं । पूर्णचंद्रनिभं कांतं वृन्दावननिवासिनं । वेणुं गायंतममलं सर्वभूतमनोहरं । लेलिह्यमानं वत्सैश्च मृगैः सिंहैस्तथा द्विजैः । सर्वाभरणसंयुक्तं सर्वाभरणशोभितं । कौस्तुभोद्भासितोरस्कं दामपिच्छ समावृतं । अप्रमेयमचिंत्यं च गोपालं शिशुरूपिणं । ध्यायेत्तं देवदेवेशं सर्वलोकैकनायकं । अंगैश्च वासुदेवाद्यै रुक्मिण्याद्यैस्तृतीयकं । कुमुदे-

पितः ॥ ५ ॥ पिंडबीजमिदं प्रोक्तं सर्वसिद्धिकरम्परम् ॥ स्मरः कृष्णाय ठद्वंद्वं षडर्णो । मनुरीरितः ॥ ६ ॥ गोपीजनांते प्रवदेवल्लभायाग्निसुन्दरी ॥ अयं दशाक्षरोमंत्रो दृष्टादृष्टफलप्रदः ॥ ७ ॥ प्रणवं हृदयं कृष्णेङतमुक्त्वा ततःपरम् ॥ तादृशं देवकी पुत्रं हुं फट् स्वाहासमन्वितम् ॥ ८ ॥ षोडशाक्षरमंत्रोयं गोविंदस्य समीरितः । पिंडरतिपतेर्बीजं नमो भगवते ततः ॥ ९ ॥ नन्दपुत्राय बालादि वपुषे श्यामलाय च ॥ गोपीजनपदस्यंते वल्लभाय द्विठाविधिः ॥ १० ॥ अनुष्टुप्मंत्रआख्यातो गोपालस्य जगत्पते ॥ अनंगकृष्णगोविंदो ङन्तावष्टाक्षरो मनुः ॥ ११ ॥ प्राग्प्रत्यग्दक्षिणोदग्विधिवदभिलिखेत्स्पष्टरेखाचतुष्कं कोणोद्यच्छूलमुक्तवलययुगयुतं मध्यपूर्वे तदन्तम् ॥ श्लोकस्यार्णान्पुरस्ताद्वसुपदविवरेष्वष्टवर्णो

---

द्रायुग्मेश्वाविषडावरणमीरितं। जपोयुतचतुष्कः स्याद्दशांशं जुहुयात्ततः। पायसेन सिताज्येन तर्पयेत्तावदेवतु। मंत्रसिद्धस्य लोकोयं सद्यो वश्योभविष्यतीति षडर्णमाह स्मर इति स्मरः कामबीजं। मनुः समीरित इत्यनेनायमपि स्वतंत्रो मंत्र इत्युक्तं। अस्यमुन्यादिपूजांतं अष्टादशार्णवत्। षट्लक्षंजपः दशांशंहोमोष्टादशार्णोक्तद्रव्यं णेतिज्ञेयं। पंचांगानितुङेस्वाहांतैश्चक्रपदैः ।पंचागन्यविसुर्गांतैः। त्रैलोक्यरक्षणयुतेरसुरांतकसंयुतैरिति। दशार्णमाह गोपीति।अग्निसुंदरी स्वाहा। दृष्टादृष्टफलप्रदमित्यनेनास्यस्वातंत्र्यमुक्तं। अस्य सर्वंषडक्षरवज्ज्ञेयं। षोडशार्णमाह। प्रणवमिति। हृदयं नमः पदं ङेतं कृष्णं कृष्णाय। तादृशश्च ङेतं तेन देवकीपुत्रायेति। गोविंदस्येत्यनेनायमपिस्वतंत्रोमंत्र इत्युक्तं। अस्य सर्वंदशाक्षरवज्ज्ञेयं द्वात्रिंशदर्णमाह। पिंडमिति। पूर्वोक्तं पिंडबीजं।रतिपतेर्बीजं कामबीजं गोपालस्य जगत्पतेरित्यनेनायमपि स्वतंत्रोमंत्र इत्युक्तं। अस्यर्ष्यादिकं यथा।अमुष्यनारदऋषिश्छंदोनुष्टुप्समीरितं।देवता हरिराख्यात आचक्राद्यैरथांगकं। दक्षिणे रत्नचषकं वामे सौवर्णवेत्रकं। करे दधानं देवीभ्यामाश्लिष्टं चिंतयेद्धरिं। जपेल्लक्षं मनुवरं पायसैरयुतं हुनेत्। पूजा तु वैष्णवे पीठे स्वांगदिक्पालवज्रकैः। एवंसिद्धमनुर्मंत्रीत्रैलोक्यैश्वर्यभाग्भवेदिति। अष्टार्णमाहअनंगेति। अनंगः कामबीजं। ङेतौ कृष्णगोविंदाय। अयमपि स्वतंत्रो मंत्रः। अस्य मुन्यादि सर्वंपूर्वोक्तषडक्षरवत् ज्ञेयं। कामलिंगयंत्रमाह।प्रागिति। प्राक्प्रत्यग्रेखाद्वयं दक्षिणोदग्रेखाद्वयं लिखेत्। एवमुभयं मिलित्वा रेखाचतुष्कं भवति। इदमेव विधिवत्पनेनोक्तं कोणोद्यच्छूलयुक्तं मध्यकोणेभ्योबहिः कर्णसूत्रचतुष्टयं दद्यात्। तेन शूलाकारता भवत्येव वलययुगयुतं तत्रैकंवृत्तं रेखाग्रस्पर्शिद्वितीयं मध्यकोष्टतन्वृत्तांतराले मध्यपूर्वमिति। मध्यकोष्टमारभ्यलेखनारंभः।तदंतं। मध्यकोष्टएवसमाप्तिरित्यर्थः। तत्राक्षरलेखनक्रमः प्राक् संस्थतया मध्यादि कोष्टत्रये आद्यवर्णत्रयमालिख्य आग्नेय्यां वृत्तद्वयांतराले कोणरेखामभितः कोष्टद्वयेदेवेत्यक्षरं लिखेत्। ततो दक्षिणे ऊर्ध्वादि कोष्ठद्वयेदेवे इत्यक्षरद्वयंलिखेत्। तकारस्तु मध्यकोष्टस्थ एव वाचनीयः। ततो मध्यकोष्टाद्दिग्गस्थमेवाक्षरद्वयं संवाच्य नैर्ऋत्यकोणे मध्यरेखोभयतः कोष्टद्वयेवरेत्यक्षरद्वयं लिखेत्। पश्चिमे तु दक्षिणवदेव। ततो वायव्यकोणे मध्यरेखोभयतः कोष्टद्वये रूटेत्यक्षरद्वयं लिखेत्। ततः उत्तरे दक्षिणवदेव। ईशकोणे मध्यरेखोभयतः कोष्ठद्वयेदेवेत्यक्षरद्वयं लिखेत्। ततः प्राच्यांलिखि-

लिखितम् ॥ तद्बाह्ये द्वादशार्णैस्तदनु परिवृतं देवकीपुत्रयंत्रं ॥ १२ ॥ तं सुकीदेवदेवे तं तं देवे वरतो रतम्॥त रतो रूटतो रुयाततंरुयातं देवकीसुतम्॥१३॥लिखितं भूर्जपत्रादौ यंत्रमेतद्यथा विधिः॥विधृतं बाहुनानित्यं सर्वकामफलप्रदम् ॥ १४ ॥ पलाशवृक्षफलके लिखितं साधुसाधितम् ॥ गोस्थाने निखनेदेतद्गवां वृद्धिर्भवेत्सदा ॥ १५॥ श्लोकं चतुःषष्टिपदेषु भूर्जे शिवादिं दैत्यादि लिखेत्क्रमेण ॥ तत्सर्वतो भद्रमिति प्रसिद्धं यंत्रं यशः श्री विजयप्रदायी ॥ १६ ॥ फलकेखादिरेक्लृप्तं गवांगोष्ठे निवेशितम् ॥ रक्षां कृत्वैरमारिघ्नं सवत्सानां गवांहितम् ॥ १७ ॥ क्षीरगोपयगोरक्षीरक्षमाक्षक्षमाक्षर ॥ ग.मानोगगनोमागोपक्षगक्षक्षगक्षप ॥ १८ ॥ ब्रह्मा भूम्या समासीनः शांतिबिंदुसमन्वितः । बीजं मनो भुवः प्रोक्तं जगत्रितयमोहनम् ॥ १९ ॥ ऋषिस्सम्मोहनः प्रोक्तो गायत्रं छन्द ईरितम् ॥ सर्वसंमोहनः साक्षाद्देवता मकरध्वजः ॥ २० ॥ बीजेन दीर्घयुक्तेन षडंगाविधिरीरितः॥ २१ ॥

---

तान्यक्षराणि ऊर्द्ध्वतो वाचयेत्।एवं श्लोकमंत्राक्षरलेखनक्रमः परस्तादितिमध्यकोष्टाद्बहिः प्रथमवृत्तांतः एकैकस्मिन् कोणे कर्णसूत्रोभयतः कोष्ठद्वयमवशिष्यते । तत्र प्रादक्षिण्यक्रमेणईशानादि पूर्वोक्तमष्टवर्णं लिखेत् तदनंतदनंतरं तद्बाह्ये द्वितीयवृत्तं बाह्ये द्वादशार्णैः पंचदशोक्तवासुदेवमंत्रार्णैः परिवृतं । शूलोत्पन्नद्वादशच कोष्टेषु द्वादशवर्णलिखनेनार्थात् वृत्तं भवति । एवं भूतं यंत्रमुक्तफलदं । एष सांप्रदायिकः पक्षः । केचन प्रागपरायताश्चतस्रः उदगृक्षिणायताश्चतस्रोरेखाः कुर्यात् । एवं नवकोष्टानिसंपद्यते । तत्र मध्यकोष्टे लययुगगतं कार्य्यमित्याहुः ते पूर्वंतदंतमित्यस्य व्याख्यानं प्रष्टव्या भवंति । भूर्ज्जपत्रादावित्यादिशब्देन ताम्ररजतकांचनग्रहणं । तत्तल्लेख्य विशेषेण कालविशेषोपि पूर्वोक्तोनुसंधेयः यथाविधीति विधिदर्शितं । एवं लिखनप्रस्तावे । यंत्रांतरमाह । श्लोकमिति । श्लोकं वक्ष्यमाणं । चतुः षष्टीति । सर्वतः सशूलेष्विति शेयं ॥ तदुक्तमपि चितार्थयातनिकायां । चतुः षष्टिपदापेतं शूलमालाविभूषितमिति शिवादि ईशानादि । दैत्यादि नैर्ऋत्यादि । कोष्टोत्पादनसाध्यादि लेखनप्रकारादिशमेमदुक्तोनुसंधेयः । एतावपि द्वौसिद्धमंत्रौ । आभ्यां क्रमेणार्त्तबालगोरक्षां कुर्यात् । एकाक्षरं काममंत्रमाह । ब्रह्मेति । ब्रह्माकः भूमिर्लः एतदासीनः शांतिरीविंदुस्तेनक्लीं । ककारो बीजं ईकारः शक्तिः तदुक्तं दक्षिणामूर्त्तिसंहितायां । कर्त्तुर्यबीजशक्तिके इति जगत्रितयमोहनमित्यनेन हकारसकारादित्वं सूचितं । केवलहकारादित्वं महावश्यदं । केवलसकारादित्वं दीर्घायुष्ट्वदमिति : तदुक्तं । हंसारूढे । मदनस्तैलोक्यक्षोभकोभवेदाशु ! हयुतोरंजनकृत्स्याज्जीवेन युतस्तथायुषेशस्त इति सर्वसंमोहनकृष्ण एतयोः स्याद्देवतेत्युक्तेः । साक्षादित्यनेनकेवलः कृष्णोपि । तत्र संमोहनकृष्णदेवतापक्षे अष्टभुजध्यानं । यदाहुः । विश्वप्राणस्योद्यत्प्रद्योततसद्युतेः सुपर्णस्य । आसीनदुत्संगांगजोन्मथितं । चक्रदरांकुशपाशान्सुमनोबाणेक्षु चापमुशलगदाः । दधतं स्वदोर्भिररुणायतविपुलविघूर्णिताक्षियुगनलिनं । स्वात्माभेदतरेत्थं ध्यात्वैकाक्षरमथाष्टवर्णंवा । प्रजपेदिनकरलक्षं त्रिमधुरसिक्तैश्च किंशुकप्रसवैः जुहुयात्तरणिसहस्रं विमलैः सलिलैश्च तर्प्पयेत्तावदिति । एवमष्टभुजो वा ध्येयः । तदुक्तं मंत्रतंत्रप्रकाशे । नित्य-

जापारुणं रत्नविभूषणाढ्यं मीनध्वजं चारुकृतांगरागम्॥ करांबुजैरंकुशमिक्षुचापं पुष्पास्त्रपाशौ दधतं भजामि॥ २२॥ लक्षत्रयं जपेन्मंत्रं मधुरत्रयसंयुतैः। पुष्पैः किंशुकजैः फुल्लैर्जुहुयात्तद्दशांशतः॥ २३॥ वक्ष्यमाणे यजेत्पीठे विधिना मकरध्वजम्॥ मोहिनी क्षोभिणी त्रासीस्तम्भिन्या कर्षिणी पुनः॥२४॥द्राविण्युन्मादिनीक्लिन्ना क्लिदिन्यःपीठशक्तयः॥बीजा-

---

मष्टभुजंध्यायेदरुणं पुरुषोत्तमं। रमयालिंगितं वामे लोकत्रितयमोहनं। चक्रं खड्गं च मुशलं दक्षे बिभ्राणमंकुशं। वामेपाशं तथा शंखं सशरं चापमेव च। कौमोदकी च बिभ्राणं सर्वभूषणभूषितं। दशलक्षजपादेषसिद्धमंत्रः प्रजायते। इति। अस्य मंत्रद्वयस्य पूजादिकं सर्वं पुरुषोत्तममंत्रवदेव। यदाहुः। प्रायः पुरुषोत्तमविधिरेवमतोऽन्यतोऽवगतव्यामिति। केवलकृष्णादेवतापक्षे तु अष्टादशाक्षरोक्तमार्गेण ध्यानपूजादिकं सर्वमस्य विज्ञेयं। विशेषांतरं च। एतदेवरमाबीजपुटितं धाखिलार्थदं। लक्ष्मीनारायणौहेममंडपे चिंतयेच्छुभौ। तदेव मायापुटितं विद्यावश्यं प्रयच्छति।हृभावाद्यदंत्वेत धनदं भोगदं तथा। यद्यस्मात्कामयेद्दियां द्विजेंद्रो मंत्रतत्ववित्। भारत्या सहितं विष्णुं तत्र ध्यायेच्छशिप्रभं। गद्यपद्यैस्तथा शास्त्रैः पूरयंती जगत्त्रयं। ध्यातव्या तु तदादक्षे विष्णोर्वाणी सुभूषणेति। तारेण वेष्टितं कामं प्रजपेद्धर्ममोक्षयोः। सिद्धये श्रीहरिर्ध्यायेच्छ्वेतं मुनिगणावृतमिति। अन्यत्र तु। कमलासनस्थोऽनकुलो वामनेत्रार्द्धचंद्रवानिति। अनेन कामबीजानंतरंभुवनेशीबीजमित्युक्तं। ध्यानं च। नाभिमध्य समुद्भूतां भ्रूमध्येच विनिः सृतां। प्रणवांबुजमध्यस्थां मुक्तालंकारभूषितां। लेखनीं पुस्तकं हस्ते धारयंती समभ्यसेदिति। तत्रैव विशेषर्लिपिभिर्वो मनुजस्तो लोकक्षोभकरीभवेदिति। अन्यत्रापि। वरपाशांकुशधरामद्यपूर्णकपालभृत मित्यं भूत्वाजपेत्कामबीजमिष्टार्थसिद्धये। अन्यत्रापि। सकृज्जप्तेन बीजेन ब्रह्महत्यांव्यपोहति। द्विजप्तेन तथा ब्रह्मचतुर्भिरितरैरपि। सर्वयज्ञफलं चापि त्रिज्जप्तेन तुलभ्यते। चतुर्जप्तेनतृप्यंते सर्वदेवगणास्तथा।पञ्चजप्तेन देवेंद्रं षड्जप्तेन तथा पितॄन्।सजप्तेन योगींद्रान् सर्वान्प्रीणाति साधकः।अष्टजप्तेन प्रीणाति स्वयमेव पिता हः।नवमप्तेन वैविष्णु दशजप्तेन शंकरः।कारणंयत्प्रधानाख्यंप्रकृतिसगुणात्मकं। प्रीणातिसाधकेंद्रस्तुनामैकादशभिर्मुने।तथा द्वादशजप्तेन सर्वगं पुरुषंस्थितं।मोक्षं च साधकेंद्राणांनित्यं जप्तं प्रयच्छति। विधानेन गृहीतं स्यान्मोक्षदं भवती मुने। अन्यथा भोगदं वत्सस्त्रीणामाकर्षणे मुने। यथा यथाहि जपति व्यासिंगत्वा तु साधकः। तथा तथाहि सिध्यंति सिद्धविद्याधरस्त्रिय इति दीर्घयुक्तेन षट्दार्घयुक्तेन। एतदनंतरं। भालास्यकंठहृन्मूलाधारेषु पञ्चबाणान्विन्यसेत्। अग्रे पूजायामावृतित्वेनोक्तेः। तदुक्तमाचार्यैः। न्यस्तशरबीजदेहइति। आयुधध्यानं वामोर्धाद्दक्षदूर्ध्वं यावत्।अत्र ध्यानानंतरमिति मुद्रे दर्शनीये। हस्तौ तु संपुटौ कृत्वाप्रसृतां गुलिकौ तथा। तर्ज्जन्यौ मध्यमापृष्ठे अंगुष्ठौ मध्यमन्वितौ। काममुद्रे यमाख्याता सर्वसत्वप्रियंकरी। मूर्द्धन्यंगुष्ठी द्वे मुद्रात्रैलोक्यमोहिनीति॥ १२२॥ वक्ष्यमाणे पीठे विधिना वक्ष्यमाणेन यजेदिति। मंडूकादिपरतत्वांतं संपूज्य वक्ष्यमाणाः पीठशक्तीः पूजयेदित्यर्थः॥ १२४॥ बीजाद्यमिति क्लीं कामयोगपीठाय नमः इति आसनं पूजयेदित्यर्थः॥ १२५॥ वक्ष्यमाणेनेत्युक्तं वर्मोद्य दृष्ट्वेति। कर्णिकाया-

यथासनं दत्त्वा मूर्त्तिमूलेन कल्पयेत् ॥ २५ ॥ अस्यां सम्यग्यजेद्देवं वक्ष्यमाणेन वर्त्मना ॥ इष्ट्वांगावरणं पूर्वं मध्ये दिक्षु यजेच्छरान् ॥ २६ ॥ द्रामाद्यं शोषणं पूर्वं द्रीमाद्यं मोहनं ततः । संदीपनाख्यं क्लीमाद्यं ब्लूमाद्यं तापनं ततः ॥ २७ ॥ सर्गांतभृगुणा भूयो मादनं पञ्चमन्ततः । प्रणामबाणहस्ताब्जा ध्येयास्ताबाणदेवताः ॥ २८ ॥ सम्पूज्या स्तत्र मध्येषु शक्तयोष्टौ यथाक्रमम् ॥ अनंगरूपाद्यामनंगमदनानंगमन्मथा ॥ २९ ॥ अनंगकुसुमापश्चादनंगमदनातुरा ॥ अनंगाशिशिरानंग मखलानंगदीपिका ॥ ३० ॥ लीलाकमलधारिण्यः स्मेरवक्त्राः सुशोभिताः ॥ ३१ ॥ बहिःषोडशपत्रेषु पूज्याःषोडशशक्तयः । युवतिर्विप्रलंभान्याज्योस्नासु भूर्मदद्रवाः ॥ ३२ ॥ सुरतावारुणीलोलाकांतिःसौदामिनी पुनः । कामछत्रा चन्द्ररेखा शुकी स्यान्मदनापुनः ॥ ३३ ॥ ज्योतिर्मायावतीताः स्युः कल्हारविलसत्कराः । स्मेरवक्त्रायुवतयो मदविभ्रममंथराः ॥ ३४ ॥ दलाग्रेषु पुनः पूज्याः स्मरस्य परिचारिकाः शोकमेहौ विलासोन्यो विभ्रमो मदनातुरः ॥ ३५ ॥ अपत्रपोयुवाकामी धृतपुष्पोरतिप्रियः ग्रीष्मस्तयांतदुर्ज्ञन्यो हेमंतः शिशिरो मतः ॥ ३६ ॥ इक्षुकार्मुकपुष्पेषु धरारक्ताःसुभूषितः ॥ ३८ ॥ अपरांगनिषंगाद्या वनितासक्तमानसाः ॥ ३७ ॥ रतिप्रियानष्टदिक्षुयजेदष्टौ विशिष्टधीः । परभृत्सारसौ पश्चाछुकमेयाह्वयौ पुनः ॥ ३८ ॥ अपांगभूविलासोद्रौ हावभावौ प्रकीर्त्तिताः।चतुरस्तस्य कोणेषु पूज्यास्तत्परिचारकाः॥३९ ॥ माधवीमालतीपश्चाद्धरिणाक्षी मदोत्कटा । सितचामरधारिण्यः सर्वाभरणभूषिताः ॥ ४० ॥ बाह्ये लोके श्वरान्पश्चात्तदस्त्रान्यर्चयेत् क्रमात् । इत्थं योजभते देवं सुगंधि कुसुमादिभिः ॥४१ ॥ सभवेल्लब्धसौभाग्यो लक्ष्म्याजितधनेश्वरः । अशोकपुष्पैर्दध्यक्तैर्जुहुयाद्दिवसत्रयम् ॥ ४२ ॥ अष्टोत्तरसहस्रं यो सभवेज्जगतां प्रियः। गव्येनाज्येन जुहुयान्मन्त्रेणाष्टोत्तरंशतम् ॥ ४३ ॥ साधकेंद्र ससंपातमर्चिते हव्यवाहने । सम्पाताज्येन वनिता भोजयेदात्मनः पतिम् ॥ ४४ ॥ अनयायद्यदादिष्टं तत्तत्संकुरुते सदा । कन्यार्थी जुहुयाल्लाजैर्दध्यक्तैर्मंडलांतरे ॥ ४५ ॥ कन्यामिष्टामवाप्नोति सापि सत्पतिमाप्नुयात् । कामोल्लासितमध्यमङ्गविलसत् कौषट्कोणमे-

---

कायामितिशेषः । तदुक्तं । इष्ट्वाकर्णिकायामंगानीति । मध्यइति पंचमंदिक्षुशरम्माध्येच पञ्चमं पुनरित्युक्तेः द्राङित्यादौ अनुस्वारे आचार्याणां ङकार इति ज्ञेयं। सर्गान्तभृगुणेति सः। प्रणामेति। एकहस्ते प्रणामः अपरहस्ते बाणः यथाक्रममित्यनेन कामबीजादित्वं ॥ १२६ ॥ युवत्यादीनां सर्वासां मायाबीजादित्वं ज्ञेयं। यदाहुः। हृल्लेखया स्वनाम्ना च शक्त्यादीनां समर्चनमिति ॥ १३२ ॥ विशिष्टधीरित्यनेन सर्वत्र संबध्यमानेनेदमेव सूचितंयुवतयस्तरुण्य इत्यर्थः। अर्चिते हव्यवाहने जुहुयादिति संबंधः ॥ १३८ ॥ ससंपातमिति। पात्रांतरे संपातंकुर्वन्साधकेंद्रइत्यनेन संपातस्याष्टोत्तरशतवारं जपउक्तः। संपाताज्यस्य विनियोगमाह संपातेति मंडलांतरेकन्यामाप्नोतीति संबंधः। तेन एकोनपंचाशद्दिनं होम उक्तः॥ १४४ ॥ यंत्रमाह कामेति। षट्कोणमध्ये कामबीजांतः साध्यसाधककर्मनामलिखनीयं। कामषडंगान्याग्नेयादि षट्कोणेषु लिखेत्। तदुक्तं।

तद्वहिर्गायत्री गुणवर्णवद्वसुदलंमालामनोरक्षरैः। षट्संख्यैः सहिताष्टपत्रसहितं क्षोणीपुरेणा-वृतम् ॥ कोणान्यस्तमनोभवेन कथितं यन्त्रं जगन्मोहनम् । कामदेवायशब्दांते विद्महे ङेन्त-मीरयेत् । पुष्पबाणाय धीमहि तन्नो नङ्गः प्रचोदयात् ॥ नमोन्तकामदेवाय वदेत् सर्वजनं ततः।प्रियाय सर्वंवर्णांते जनसंमोहनाय च । ज्वलद्वयंप्रज्वलार्णान्वदेत् सर्वजनस्य च । हृद-यं मम शब्दांते वशंकुरु युगं शिरः । माला मनुरयं साष्टचत्वारिंशद्भिरक्षरैः ॥ साध्याख्या-पुटितैः स्मरैः परिवृतं कामं लिखेन्मध्यतः। पश्चात्तारविकारपक्षकयरान्नासांधिझिंटीशयान् ।

---

षडंगान्यग्निकोणादिकोपोर्ध्वे वक्ष्यमाणगायत्र्यर्णांस्त्रिशोलि-खित्वा मालामनोर्वक्ष्यमाणस्यषड्षडक्षराणि दलाग्रेषु लिखेत् । मूले वसुदलाष्टपत्रशब्दौ तत्रैक-त्र दलमध्यमन्यत्र दलाग्रमिति ज्ञेयंकोणन्यस्तमनोभवे नक्षोणीपुरेणावृतमिति संबंधः । त-दुक्तमाचार्यैः । आलिख्याक्कर्णिकायामनलपुरयुगे मारबीजं समाध्यं तद्रंध्रेष्वङ्गषट्कंबहिरपि गु-णशोमारगाय त्रिवर्णान् । मालामंत्रं दलाग्रेष्वपि गुहमुखशः पार्थिवास्रिष्वनंगमिति । कामगा-यत्रीमुद्धरती । कामदेवायेति ङेंतं पुष्पबाणाय । मालामंत्रमाह। नमोंते इति सर्व इति यद्वर्णद्वयंत-दंते । हृदयमिति स्वरूपं । शिरः स्वाहा । अयं स्वतंत्रोमंत्रः । अस्यर्ष्यादिकं यथा । नारदोजगती-कामो मुन्याद्याः परिकीर्त्तिताः । सप्तसप्तनवमुनिदशाष्टार्णैःषडंगकं।यद्वामृतोद्भवस्थैव परीमकरकेत-नः।संकल्पजन्माश्चाचतरूपेक्षुधनुर्द्धरौ पुष्पबाणश्च कामाद्यैर्ङेस्वाहांतैः षडंककम्।बाणान्भालास्य-गलहृद्दालारेषु प्रविन्यसेत् । शेषमन्यत्तुपूजादिकामबीजवदीरितं । जपादौ मारबीजाद्यो जगत्त्रय-वशीकरः । विलिप्य गंधपंकेन लिखेदष्टदलांबुजं । कर्णिकायां लिखेद्वह्नि पुटितं मंडलद्वयं । तस्य-मध्ये लिखेत्कामं साध्याख्या कर्मसंयुतं । साध्याख्यापुटितैः कामैस्तं कामं वेष्टयेद्बुधः । श्रियं च षट्सु कोणेषुएन्द्रनिर्ऋतिवायुषु । आलिखेच्च तथा मायां वह्निवारुणशूलिषु । अक्षरैः कामगाय-त्र्या वेष्टयेत्केसरे सुधीः । मारमलामनोर्वर्णैर्द्दलेष्वष्टसुमंत्रवित् । लिखेद्गुहाननंसंख्यैर्मातृकां तु विलेखयेत् । भूबिंबं च लिखेद्बाह्ये श्रीमायेदिग्विदिक्ष्वपि । यंत्रमेवं समालिख्य जातरूपमयेपटे राजते ताम्रपट्टे वा भूर्ज्जे क्षौममयेपि वा । सूक्ष्मतंतु मयेवापि प्रतिष्ठाप्य समीरणं । हुत्वासहस्र-माज्येन यंत्र संपातपूर्वकं । अर्चयित्वा युतं जप्त्वा धारयेत्तदनुत्तमं । त्रैलोक्यैश्वर्यमाप्नोति देवैरपि सुपूजितं । आकर्षणं सुरस्त्रीणां नागलोकनिवासिनां । पिशाचयक्षरक्षांसि गंधर्वाप्सरकिन्नराः दु-ष्टसत्त्वाश्चये सत्त्वाः प्रसर्पंत्येव दूरतः । यंत्रराजमिमंदृष्ट्वा विद्रवंत्यति मोहिताः।बहुना किमिहो-क्तेन सर्वलोकसुखावहं । स्त्रीणामाकर्षकं सद्यो राज्ञो वश्यकरं भुवि । योगसिद्धिकरं पुंसां भवसा-गरतारकं । भुक्तिमुक्तिप्रदं पुंसामिति प्रोक्तं स्वयंभुवेति । यंत्रांतरमाह। साध्येति। मध्यतः । अष्टदल-कर्णिकायां साध्यसाधककर्मनामपुटितैः कामबीजैः परिवृतं कामं साध्यसाध्यककर्मसहितं लिखे-त् । अष्टसु दलेषु लिखनीयमाह। तार इति। तारेण वित्वसंख्यातेन इकारः। अन्ये प्रणवमाहुस्तदस-त् । पद्मपादाचार्यादि बहुग्रंथविरोधात् । विकारौंत्यः । पक्षो द्वितीय । स्वर इति केचन । सांप्रदा-यकास्तु पंचदशं स्वरमाहुः । पद्मपादाचार्यस्य संमतेः । कोवायुस्तेन यः सपरो यस्य तेन मकारः ।

शूलान्यष्टदलेषु साधु विलिखेत्ताम्बूलपत्रोदरे । यन्त्रं यांति शिखादयेत्कृतजपं वश्या भवेत्तस्य सा। कथितं पुष्पबाणस्य सांगोपांगसमर्चनं । सौभाग्यकांतिविभवदारपुत्रसमृद्धिदम् ॥ आदाय वेदाः सकलाः समुद्रान्निहत्य शंखासुरमत्यदग्रम् । दत्ताः पुरायेन पितामहाय विष्णुं तमाद्यं भजमत्स्यरूपम् ॥ दिव्यामृतार्थं मथिते महाब्धौ देवासुराभ्यां सुकिनन्दाराभ्यां भूमेर्महावेगविघूर्णतायां स्तंकूर्ममाधारगतं स्मरामि । समुद्रकांची सरिदुत्तरीया वसुंधरामेरुकिरीटभारा । दंष्ट्राग्रतो येन समुद्धृताभूस्तमादि कोलं शरणं प्रपद्ये । भक्तार्त्ति भञ्जक्षयपाधिपायस्तभांतरालादुदितोनृसिंहः । रिपुं सुराणां निशितैर्नखाग्रैर्विदारयंतं नच विस्मरामि । चतुः समुद्राभरणाधरित्री न्यासायनालं चरणस्य यस्य । एकस्य नान्यस्य पदं सुराणां त्रिविक्रमं सर्वगतं स्मरामि । त्रिः सप्तवारं नृपतीन्निहत्य यस्तर्पणं रक्तमयं पितृभ्यः । चकारदोर्दंडबलेन सम्य क् तमादितप्रभूणमामि भक्त्या । कूले रघूणां समवाप्यजन्म विधाय सेतुं जलधेर्जलांतः । लंकेश्वरं यः शमयांचकार सीतापतिंतं प्रणमामिभक्त्या । हलेन सर्वानसुरान्विकृष्य चकार चूर्णं मुसलप्रहारैः । यः कृष्णमासाद्यबलं बलीयान् भक्त्याभजेते बलभद्ररामम् । पुराणानसुरान्विजेतुं संभावयन् धीवरचिह्नवेषं चकार यः शास्त्रममोघकल्पं तं मूलभूतं प्रणतोस्मि बुद्धम् । कल्पावसाने निखिलैः खुरैः स्वैः संघट्टयामास निमेषमात्रान् । यस्तेजसा निर्दहताति भीमो विश्वात्मकं तंतुरगं भजामः ॥ शंखं सुचक्रं सुगदां सरोजं दोर्भिर्दधानं गरुडाधिरूढं ॥ श्रीवत्सचिह्नं जगदादि मूलं तमालनीलं हृदि विष्णुमीडे ॥ क्षीरांबुधौ शेषविशेषतल्पे शयानमंतः स्मितशोभिवक्त्रं । उत्फुल्लनेत्रांबुजमंबुजाभमाद्यं श्रुतीनामसकृत्स्मरामि । प्रीणयेदनया स्तुत्या जगन्नाथजगन्मयम् । धर्मार्थकाममोक्षाणामाप्तयेपुरुषोत्तमम् ॥ इति श्रीशारदातिलके सप्तदशः पटलः ॥ १७ ॥ अथ वक्ष्ये महेशस्य मन्त्रान् सर्वसमृद्धिदान् । यैः

---

तदुक्तं गौतमेन मंत्रव्याकरणे । ब्रह्मणो वाचकः कः स्यात् कशब्दो वायुवाचक इति । अन्ये कपरः खइत्याहुस्तदसत् । पद्मपादाचार्यग्रंथविरोधात् । नाम्ना शब्देन तदुच्चारणीयो अनुनासिकस्तन्मध्येपि प्रथमातिक्रमेकारणाभावात् ङकारः । केचन नाम्ना सकार इत्यूचुस्तदसत् तग्रंथदिरोधीदेव । अर्घिरर्घीशः उ । भिंटीश एतद्य इति स्वरूपं । क्वचिभिंटीरकानिति पाठः सप्रामादिकः । तदुक्तमाचार्यैः । तारर्त्विक् पचजाष्टादशसमष्टतुं एतपंगाताद्य इति । शूलाद्येति दलाग्रेषु शूलानिकुर्यात् । एवं सप्रपंचं विष्णुमंत्रान्निरूप्य शिष्यचेतसिदृढभक्तेरुत्पादशावतारक्रमेण विष्णुं स्तौति आदायेत्यादिना येन शंखासुरंनिहत्य समुद्रादाय तेनेत्यर्थात्पितामहाय ब्रह्मणे सकलावेदादत्ता इत्यन्वयः वेदानिति पाठेते इत्यर्थः । भूमेराधारगतमिति संबंधः । येनैवं भूताभूर्दंष्ट्राग्रतोदंष्ट्राग्रेण उद्धृत्वेति संबंधः । अन्यस्य द्वितीयस्य चरणन्यासाय सुराणां पदं नालमिति संबंधः । चूर्णं चूर्णीभूतान् चकारेत्यर्थः । यः कृष्णं बलं सहायमासाद्य धीवरचिह्नवेषं संभावयन् धारयन्नित्यन्वयः शेष एव विशेषः असाधारणात् । इति शारदातिलकटीकायां सत्संप्रदाय कृतव्याख्यायां पदार्थाभिख्यायां सप्तदशः पटलः ॥ १७ ॥ क्रमप्राप्तान्शैवमंत्रानाह अथेति । सर्वसमृद्धिदान्यैरित्यादिना च

पूर्वे मृषयः प्राप्ताः शिवसायुज्यमंजसा। हृदयं च परं साक्षिलोतानतान्वितो मरुत्। पञ्चाक्षरोमनुः प्रोक्तस्ताराद्योयं षडक्षरः। वामदेवो मुनिश्छंदः पंक्तिरीशोस्य देवता। षड्भिर्वर्णैः षडंगानि कुर्यान्मन्त्रस्य देशिकः। मन्त्रवर्णादिकान्यस्येपञ्चमूर्त्ती यथाक्रमम्। तर्जनीमध्ययोरंत्यानामिकांगुष्ठकं पुनः। ताः स्युस्तत्पुरुषाघोरसद्यवामेशसंज्ञकाः। वक्त्रहृत्पादगुह्येषु निजमूर्द्धनिताः पुनः। प्राग्याम्यवरुणोदीच्यमध्यचक्रेषु पंचसु। मन्त्रांगानिन्यसेत्पश्चाज्ज्योतियुक्तानि षट्क्रमात्॥ कुर्वीत गोलकन्यासं रक्षायै तदनंतरम्। हृदिवक्त्रंसयोरुर्वोः कंठे नाभौ द्वि-

---

तत्तदधिकारिणं प्रतिविनियोग उक्तः मंत्रमुद्धरति। हृदयमिति हृदयं नमः पदं। वपरंशः साक्षिहकारयुक् तेन शिलांतो वः अनंत आ। तदन्वितस्तेन वा। मरुयः। षडक्षर इत्यनेन वाग्भवादिरित्युक्तं। आद्यं बीजं उमेति शक्तिः। केचित्प्रणवादनंतरं प्रासादबीजप्रक्षेपात्सप्ताक्षरमिति वदंति। तंत्रांतरे। आद्यन्ते संपुटीकृत्यहंसवागीश्वरं मनुं। शिवमंत्रं जपेद्धोमान्सद्यः प्रत्ययमेष्यति। संपुटं शिवमंत्रस्य जपेन्मासमतंद्रितः। एकाकोयतचित्तात्मा वश्यमर्थं सविंदति। अत्र वागीश्वरशब्देन वाग्भवं केवलं रेफरहितं तार्त्तीयं चेति परमगुरवः। षड्भिरिति षडंगमंत्रोद्धारमात्रयुक्तं। न्यासमग्रे वक्ष्यतीति न पुनरुक्तिः। देशिको यथाक्रममिति। प्रत्यक्षरमादौ प्रणव इत्युक्तं। अंत्या कनिष्ठा। ताः मूर्त्तयः। सद्यः सद्योजातः। वामो वामदेवः। ईशानः। ताः पुनर्मूर्द्धनीत्यंतेषु स्थानेषु न्यसेदिति पश्चात्तनेन संबधः। चतुर्थी नमोंताश्च मूर्त्तय इति संप्रदायविदः। मूर्द्धनीति। काकाक्षिगोलकन्यायेनोभयत्र संबध्यते। ताःपुनर्निजमूर्द्धनि पंचसु वक्त्रेषुन्यसेदिति पश्चात्तेन संबंधः। तदुक्तमाचार्यैः। वक्त्रहृत्पादगुह्याख्या मूर्द्धस्वपि च नामभिः प्राग्याम्यवारुणोदीच्य वक्त्रेष्वपि च भूर्द्धनीति मंत्रांगानीति तत्र प्रयोगः। ॐ हृत् नं शिर इत्यादि। संप्रदायविदस्तु ॐ सर्वज्ञधाम्ने हृत्। ॐ नं तृप्ति धाम्ने शिरः ॐ मअनादि बोधधाम्ने शिखा। ॐ शिं अलुप्तशक्तिधाम्ने वर्म ॐ। वां स्वतंत्रशक्तिधाम्ने नेत्रं। ॐ यं अनंतशक्तिधाम्ने अस्त्रं। एवं षडंगमिच्छंति। तदुक्तं वायवीयसंहितायां। तथैव तु षडंगानि पुनरस्योपपादयेत्। सर्वज्ञतां तथातृप्तिं बोधं चाद्यं तवर्जितं। अलुप्तशक्तिं स्वातंत्र्यमनंतां शक्तिमेव चेति। क्वचितु वर्मनेत्रयोर्व्यत्ययः। तदुक्तं। सर्वज्ञतातृप्तिरनादि बोधःस्वतंत्रतानित्यमलुप्तशक्तिश्च विभोर्विधिज्ञाः। प्राहुः षडंगानि महेश्वरस्यचेति। यथागुरुसंप्रदाय मूहनीयं। दशावृत्तिमयं गोलकन्यासमाह। कुर्वीतेति। तदनंतरंत तृत्वन्यासानंतरमित्यर्थः। तत्त्वन्यासो यथा। वक्ष्यतेथोशिवतत्त्वन्यासः प्रसादतः परं। पंचाक्षरीं परां येति तत्वनामात्मने नमः। आहत्याशिवपञ्चांक्षर्य्यर्णयुक्तं पृथक्सह। द्वितीयादि हृदिवर्णांतैराद्यंभुवादिकैः आद्यात्मनोंतान् हृदये श्रोत्रादिश्च स्थले तथा। वागाद्यथशब्दादि मूर्द्धास्योरो गुदे पदे। आकाशादीन्प्रसेदेषु वक्ष्यमाणं च पंचकं। सदाशिवाद्याआकाशाद्याधिपत्यन्तकाः शडेः। शांत्यती ताकलाद्यांतानिवृत्तशाद्याः स्वबीजतः। न्यसेत्पदादि शीर्षांत मूर्द्धादि चरणांतिके। शांत्यात्मेशानमूर्वा च ङेयुता च सदाशिवः सत्यात्मावत्पुरुषवक्त्रोङेसंयुत ईश्वरः। नादात्मा घोरहृदयो ङेयुताश्च महेशकाः। विद्यात्माथो वामदेव गुह्यो विष्णु श्च ङेयुतः।बीजात्मा च सद्योजातपात्ने ब्रह्मा च ङेयुतः। ईशानाद्यानूर्ध्व वक्त्राद्यान्

पार्श्वयोः। पृष्ठे हृदि ततो मूर्ध्नि वदने नेत्रयोर्नसोः। दोः पत्संधिषु साग्रेषु विन्यसेत्तदनंतरम्। शिरोवदनहृत्कुक्षि सोरुपादद्वयेपुनः। हृदि वक्त्राम्बुजे टंकेमृगाभयवरेष्वथ। वक्त्रांसहृत्सपादो-रुजठरेषु क्रमान्न्यसेत्। मूलमन्त्रस्य षड्वर्णान्यथावद्देशिकोत्तमः। मूर्ध्नि भालोदरांसेषु हृदये-ताः पुनर्न्यसेत्। पश्चादनेन मन्त्रेण कुर्वीत व्यापकं सुधीः। नमोऽस्तु स्थाणुरूपाय ज्योतिर्लि-ङ्गामृतात्मने। चतुर्मूर्त्तिवपुश्छाया भासितांगाय शंभवे। एवं न्यस्तशरीरोऽसौ चिंतयेत्पार्वतीप-तिम्। ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभी-ति हस्तं प्रसन्नं। पद्मासीनं समंतात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्वरूपं नि-खिलभयहरं पञ्चवक्त्रं त्रिनेत्रं। तत्र लक्षं जपेन्मन्त्रं दीक्षितः शैववर्त्मना। तावत्संख्या सहस्रा

---

सदाशिवपूर्वकान्। ऊर्ध्वादि पञ्चवक्त्रेषु ङेन्तानीश्वरपूर्वकानिति। स्वबीजत इति। ह्लां ह्लीं ह्रूं ह्रैं ह्रौं। ईशानाद्यान् ईशाननत् पुरुषाघोरवामसद्यान्। ऊर्ध्ववक्त्राद्यान् ऊर्ध्वपूर्वदक्षोत्तरपश्चिमान्। प्रयोग-स्तु। ॐ ह्रां नमः शिवाय पराय शिवात्मने नमः। मंत्रं ह्रौं नमः शिवायपराय सत्यात्मने नमः। मं-त्रह्रौं नमः शिवाय पराय सदाशिवात्मने नमः इत्यादि। प्रथमचरणेनैकावृत्तिः। कंठादि हृदंतं द्वि-तीया। मूर्द्धादिनासिकांतं तृतीया। ततोऽर्द्धेनावृत्तिचतुष्टयं। अन्यत्र सर्वत्र दोः यत्सन्धयश्चत्वार एव गृहीताः। अत्रांगुलिमध्यसंधिमपि गृहीत्वा पञ्चसंधयः षष्ठमग्रमिति। एकैकस्मिन्नेकैकावृत्तिः सा-ग्रमित्यत्रांगुलीनामंत्यसंधिमौनात् अग्रत्वमपि ज्ञेयम् अत्र सर्वत्रके च न पंचाक्षरन्यासमाहुः तन्म-ते मूलमंत्रस्य षड्वर्णानित्यनेन। अन्यत्रापि। हृन्मुखांसोरुयुग्मेषु षड्वर्णान् क्रमशोन्यसेदित्यनेन च विरोधः स्यात्। तत्परिहाराय प्रत्यर्पणमादौ प्रणवमाहुः। एवमपि अष्टमनवमदशमेषु पृथक्ष-ट्स्थाननिर्देशो वृथा स्यात्। अन्यत्रापि दशमावृत्तौ मुखांसहृदयेषु त्रीन् पादोरुकुक्षिषु इति। अ-नेन विरोधात्तदसंगतं। कश्चित्तु दोः संधिद्वयं तृतीयमग्रं एवं दोर्द्वंद्व एकाय तद्वन्द्वएका इत्यष्टौ न्यो-सानेवाह। सभ्रांत एव। यतः सर्वत्र गोलकन्यासे ग्रंथांतरे च दशावृत्तीनामेवोक्तत्वात्। संधिश-ब्दार्थस्य संकोचेकारणाभावाच्च। ततोऽर्द्धेनाष्टमी। पुनरर्द्धेननवमी। तत्र टंकादिषु तत्तन्मुद्रयान्या-सो विधेय इति सांप्रदायिकाः। टंकः परशुः। मुद्रालक्षणानि तु। वरे करं तु करयोस्तिर्यक् संयो-ज्य चांगुलीः। प्रसृताः कुर्यान्मुद्रेयं परशोर्मतामिलित्वानामिकांगुष्ठमध्यमाग्राणि योजयेत्। शि-ष्टांगुल्फकृतिकुर्यान्मृगमुद्रेयमीरितेति। ऊर्ध्वीकृतो वामहस्तः प्रसृतोभयमुद्रिका। अधोमुखो-दक्षहस्तः प्रसृतोवरमुद्रिकेति। अर्द्धेन दशमी। यथावदिति। देशिकोत्तमः तामूर्तिर्यथावत्पुनर्न्य-सेदिति संबंधः। यथावदित्यनेन प्रणवादि मंत्रवर्णा इत्युक्तं। देशिकोत्तमइत्यनेन तत्तदंगुल्येति-ज्ञेयं। इदं पूर्वन्यासयोरप्यूह्यं। अंसेति। अंसद्वयं ध्यायेदिति। पद्मासीनमिति। श्वेतपद्मं चिंतनी-यं। आयुधन्यासं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरंत्ये। अनेनैवक्रमेण स्वशरीरे पूर्वोक्तोन्यासः। अ-त्र ध्यानानंतरं पद्मलिंगमुद्रे दर्शनीये। आयुधमुद्राश्च। तदुक्तं प्रयोगसारे। दर्शयित्वा ततः पद्मलिं-गमुद्रे तदग्रत इति। तत्र पद्ममुद्रालक्षणमुक्तं प्राक्। लिंगमुद्रालक्षणं तु। उच्छ्रितं दक्षिणांगुष्ठं वा-मांगुष्ठेन बंधयेत्। वामांगुलीर्दक्षिणाभिरंगुलीभिर्न्यवेष्टयेत्। लिंगमुद्रेयमाख्याता शिवसान्निध्य

णि जुहुयात्पायसैः शुभैः।ततः सिद्धो भवेन्मन्त्रः साधकाभीष्टसिद्धिदः । देवं संपूजयेत्पीठे-वामादि नवशक्तिके । वामाज्येष्ठा ततौरौद्री कालीकलपदादिका । विकरिण्याह्वया प्रोक्ता बलाद्याविकारिण्यथ । बलप्रमथनीपश्चात्सर्वभूतदमन्यथा।मनोन्मनीति संप्रोक्ताः शैवपीठस्य श क्तयः।नमोभगवते पश्चात्सकलादिवदेत्पुनः। गुणात्मशक्तियुक्तायततोनंताय तत्परम् । यो-मपीठात्मने भूयो नमस्तारादिको मनुः।अमुना मनुमादद्यादासनं गिरिजापतेः । मूर्त्तिं मूलेन संकल्प्य तत्रावाह्ययजेच्छिवम् । कर्णिकायां यजेन्मूर्त्तीरीशमीशानदिग्गतम्। शुद्धस्फटिकसं-काशं दिक्षुतत्पुरुषादिकाः। पीतांजनश्वेतरक्ताः प्रधानमदृशायुधाः। चतुर्वक्त्रसमायुक्ता यथा-वत्संम्पूजयेत् । कोणेष्वर्च्याः निवृत्याद्यास्तेजोरूपाः कलाः क्रमात्। अंगानि केसरस्थानि वि धेनशान्यत्रगात् । अनंतसूक्ष्मं नानानं शिवोत्तममनंतरम्। एकनेत्रमेकरुद्रं त्रिनेत्रं तदनंतर-

---

कारिणीति। इयं सर्वशैवमंत्रसाधारणीति ज्ञेयं। शववर्त्मनादीक्षितः कृत दीक्षश्च सा चशैवतं-त्रात्कामिकादितो ज्ञेया तत्वलक्षं चतुर्विंशतिलक्षं मंत्रंजपेदित्यन्वयः उक्तं च । अक्षरलक्षचतुष्कं ज-प्यादिति तावत्संख्यासहस्राणि चतुर्विंशति सहस्राणि। अत्र द्रव्यप्रोक्षणे मूलमंत्रो हुं फडंते ज्ञेयः। तदुक्तं नारायणीयप्रयोगसारयोः। वर्माद्यंतेन मूलेन संप्रोक्षैवं प्रकल्पितमिति। देवमिति । वा-मादिनवशक्तिके पीठे देवं पूजयेदिति संबंधः। तत्र मंडूकादि परतत्वांतं पीठं संपूज्य नवशक्तीः। पूजयेदित्यर्थः कलपदादिका इति अणिमाया विशेषणं। आसां ध्यानमुक्तं प्रयोगसारनारायणी-ययोः। श्वेतरक्तसितापीतश्यामारुणासितासिता। शोणा चताः स्मरेच्छक्तीः पीठरूपा । यथाक्रम-मिति। गिरिजापतेरित्यनेनैतदुक्तं। आत्मयोगि आसनं संपूज्यस्वागतादि गंधांतं दत्वा नमोस्तु स्था णुभूतायेति मंत्रेण पंचपुष्पांजलीर्दद्यादिति। तदुक्तमाचार्यैः। कुर्यादनेन मंत्रेण निजदेहे समाहि-तः। मंत्रोपुष्पांजलिं सम्यक् त्रिशः पंचश एवचेति। कर्णिकायां दिक्षु तत्पुरुषादिकामूर्त्तीश्च त-त्रो यथावत्संपूजयेदित्यन्वयः यथादित्यनेन प्रणवादि मंत्रवर्णाद्या इत्युक्तं। ईशानदिगतं शुद्धस्फ-टिकसंकाशमीशं पंचमंयजेदित्यन्वयः। कोणेषु आग्नेयादिषु। द्वितीयोक्तानिवृत्याद्याश्चतस्रः । ते-जोरूपा इति। ध्यानं। प्रथमपटलोक्ता पंचीकृतभूतबीजाद्या इति ज्ञेयं। शांत्यतीतामपि ईशे य-जेदिति क्रमादित्यनेनोक्तमित्यन्ये। विद्येशानेवाह अनंतमिति। अस्त्रं बाणः। पश्चादेतानुत्तरादि यजेदिति संबंधः। शतलक्षमिति कोटिं। तंत्रांतरादिदं यंत्रं लिख्यते। रेखाषट्कं न्यसेदूर्ध्वं तथा तिर्यक् प्रमाणकं। अग्राग्रसंहताकारं ऋज्वग्रं च सरेखकं। वसुपत्रस्वराब्जं च मातृकारसमन्वितं। चतुरस्रं द्विधा कृत्वायंत्रपंचाक्षराख्यकं।पंचाक्षरींन्यसेन्मध्येद्वादशार्णमतःपरं। विद्येश्वरांस्तथान्यस्य कलाशक्तीस्ततःपरं हृत्शीरंततोन्यस्यकलाशक्तीस्ततःपरम्।गायत्रीमष्टमतृस्वस्वरांश्चैवततःपरं।मातृकं लोकपालांश्च यंत्रं पञ्चाक्षराख्यकमिति।हृदयं ङेणभगवन्नादित्यश्चसङेसह ।आद्यं च किरणं सद्योत मानेङेच ठद्वयं ।अयं महासौरकला शक्तीरमृताद्याः। तत्पुरुषायेति गायत्री मातृकाककाराद्यासां ता। शैवागमोक्तयंत्रांतरमुच्यते।षट्कोणांतस्साध्ययुक्तं प्रावादं मूलमस्त्रिषु।संधिष्वंगानि तद्बाह्ये पद्मं पंचदलंत्विह।ईशानाद्याःपंचमूर्त्तीर्ङेंहृदंतालिखेत्ततः।अष्टपत्रंमातृकाष्टवर्गयुक्तंलिखेद्बहिः।संवेष्टा-

मू । पश्चाच्छ्रीकंठमात्मानं शिखंडिनमनंतरम् । रक्तपीतसितारक्तकृष्णरक्तांजनासितान् । किरीटार्पितबालेंदून्पद्मस्थान् भूषणान्वितान् । त्रिनेत्रान् शूलवज्राख्य चापहस्तान्मनोहरान् । उत्तरादि यजेत्पश्चादुमा चंडेश्वरं पुनः । ततो नंदिमहाकालौ गणेशवृषभौ पुनः । अथ भृंगिरीटिस्कंदमेतान्पद्मासनस्थितान् । स्वर्णतो यारुणश्याम मुक्तेंदुसितपाटलान् । इंद्राद्यस्ततः पूज्यावज्राद्यायुधबंधुताः। इत्थं संपूजयेद्देवं सहस्रं नित्यशो जपेत् । सर्वपापविनिर्मुक्तः प्राप्नुयाद्वांछितांश्रियं । द्विसहस्रं जपेद्रोगान्मुच्यते नात्र संशयः। त्रिसहस्रं जपेन्मन्त्र दीर्घमायुरवाप्नुयात् । सहस्रवृद्ध्याप्रजपन् सर्वान् कामानवाप्नुयात् । आज्यान्वितैस्तिलैः शुद्धैर्जुहुयाल्लक्षमादरात् । उत्पातजनितान् क्लेशान्नाशयेन्नात्र संशयः। शतलक्षं जपेत्साक्षाच्छिवोभवति मानवः।षडक्षरः शक्तिरुद्धः कथितोष्टाक्षरो मनुः। ऋषिश्छंदःपुरा प्रोक्तो देवतास्यादुमापतिः। अंगानि पूर्वमुक्तानि सोममीशंवि चिंतयेत् । बंधूकाभं त्रिनेत्रं शशिकलधरं स्मेरवक्त्रं वहंतं हस्तैः शूलं कपालं वरदमभयं चारुहारं नमामि । वामोरुस्तंभगायाः करतलविलसच्चारुरक्तोत्पलाया हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणायाः प्रियायाः । मनुलक्षं जपेन्मन्त्रतत् सहस्रं यथाविधि । जुहुयान्मधुरासिक्तैरारग्वधसमिद्वरैः।प्राक् प्रोक्ते पूजयेत्पीठे गंधपुष्पैरुमापतिम् । अङ्गावृत्तेर्बहिःपूज्याह्रल्लेखाद्या यथापुरामध्यप्राग्दक्षिणोदीच्यपश्चिमेषुविधानतः।ह्रल्लेखागगनारक्ता चतुर्थी तु करालिका । महोछुष्माकमादिताः पचभूतसमप्रभाः पाशांकुशवरभीति धारिण्यो मितभूषणाः। यजेत्पूर्वादिपत्रेषु वृषभाद्यानतुक्रमात् । हिमालयाभंवृषभं तीक्ष्णशृंगं त्रिलोचनम्।सर्वाभरणसंदीप्तं साक्षाच्छन्दस्वरूपिणम्।कपालशूलविलसत्करं कालघनप्रभम् । क्षेत्रपालं त्रिनयनं दिगंबरमथार्चयेत् । शूलटंकाक्षवलयं कमण्डलुलसत्करम् । रक्ताकारं त्रिनयनं चंडेशमथ पूजयेत् । चक्रशंखवराभयाभीष्टकरांमरकतप्रभम् । दुर्गां प्रपूजयेत्सौम्यां त्रिनेत्रां चारुभूषणां। कलशाखां रत्नघंटां दधानं द्वादशेक्षणं। बालार्काभं शिशुं कांतं षण्मुखं पूजये ततः। नंदिनं पूजयेत्सौम्यं रक्तभूषणमंडितम् । परश्वेणवराभीति धारिणं श्यामविग्रहम् । पाशांकुशवराभीष्टधारिणं कुंकुमप्रभं । विघ्ननायकमभ्य

---

नुष्टुभायंतं जपहोमादि साधितं । आरोग्यायुः सुतैश्वर्यचतुर्वर्गफलप्रदमिति।मंत्रांतरमाह ।षडिति । रुद्रः संपुटितः । प्रणवो बीजं । माया शक्तिः । पुराप्रोक्त इति वामदेवऋषिः पंक्तिश्छन्दः । अंगानीति तत्र षट्दीर्घयुक्तशक्तिबीजाद्यैः षडर्णैः षडंगविधिरिति संप्रदायविदः । प्रयोगस्तु ह्रां ॐहृत् । ह्रीं तं शिरः । ह्रूं मः शिखा । ह्रैं शिं वर्म्म । ह्रौं वां नेत्रं । ह्रः यं अस्त्रं । सोममित्युभयासहितं । आयुधध्यानं दक्षायूर्ध्वयोरद्ये तदधस्तनयोरंत्य करतलेति वामे । तदुक्तं वामो रुपीठगतया नि जवामहस्तन्यस्त।रुणोत्पलयुजापरिरब्धदेहं इति हस्तेनेति दक्षिणे न । मनुलक्षं चतुर्दशलक्षं तत्सहस्रं चतुर्दशसहस्रं यथाविधीति तांत्रिकाग्निमुखविधानेनेत्यर्थः यथापुरेति नवमपटलोक्तखखबीजाद्या इत्युक्तं । विधानतः पूज्या इति संबंधः । विधानमेवाह। मध्ये ति। मध्यंकर्णिकामध्यं । पश्चिमेषु दिग्भागेष्विति शेषः । पंचभूतेति पृथिव्यादि ध्यानपूर्वकममेवाह हिमालयेति प्रतिश्लोकमे-

चेंद्रार्द्धकृतशेखरम्। श्यामं रक्तोत्पलकरंवामांकन्यस्तात्करम्। त्रिनेत्रं रक्तवस्त्राढ्यं सेनापतिमथार्चयेत्। ततोष्टमातरः पूज्या ब्रह्माद्याः प्रोक्तलक्षणाः।इंद्रादिकाल्लोकपालान् स्वस्वदिक्षु समर्चयेत्। वज्रादीनि तदस्त्राणि तद्बाहः क्रमशोर्चयेत्। एवं योभजते मन्त्री देवेशं तमुमापतिम्। सभवेत्सर्वलोकाना प्रियः सौभाग्यसंपदां। सांतःसद्यांतसंयुक्तो बिंदुभूषितमस्तकः। प्रासादाख्यो मनुः प्रोक्तोभजतां सर्वसिद्धिदः।षड्दीर्घयुक्तबीजेनषडंगविधिरीरतः। वामदेवो मुनिश्छंदः पंक्तिर्देवः सदाशिवः।ईशानादीन्यसेन्मूर्त्तीरंगुष्ठादिषु देशिकः। ईशानाख्यं तत्पुरुषमघोरं तदनंतरम्। वामदेवाह्वयं सद्यमासांबीजं क्रमाद्विदुः ॐकाराद्यः पंचह्रस्वैर्विलोमात्संयुतं वियत्। तत्तदंगुलिभिर्भूय स्तत्तद्बीजादिकान्यसेत्। शिरोवदनहृद्गुह्य पादशेषे यथाक्रमात्। ऊर्द्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु ताः। ततः प्रविन्यसेद्विद्वानष्टात्रिंशत्कलास्तनौ। ईशानाद्यात्ऋचः सम्यगंगुलीषु यथाक्रमम्॥ अंगुष्ठादिकनिष्ठांतं न्यसेद्देशिकसत्तमः।मूर्द्धास्यहृदयांभोजगुह्यपादेषु तापुनः। वक्त्रेषूर्द्ध्वादिषु न्यसेद्भूयोंगानि प्रकल्पयेत्। तारपंचकमुच्चार्य पर्वज्ञाय हृदीरित। अमृततेजोमालिनितृप्तायेति पदं पुनः। तदंते ब्रह्मशिरसे शिरोगं ज्वलितांततः। शिखि शिखाय परतो नादिबोधाय तच्छिखा। वज्रिणे वज्रहस्तायस्वतंत्राय तनुच्छदम्।सौं:वो हौमिति संभाष्य पुरतो लुप्तशक्तनेत्रमुक्तश्येपशुहुं फडंते नंतशक्तये। अस्त्रमुक्तं षडंगानि कुर्याद्देशिकसत्तमः। पूर्वदक्षिणपाश्चात्य सोममध्येषु पंचसु।

---

केरुव्यानसमाप्तिः। एणो मृगः। आयुधध्यानक्रमस्तु तत्तत्प्रकारेणानुसंधेयः। तत इति पद्यात्रयु। प्रोक्तलक्षणा यथोक्तस्वरूपाः। प्रासादमंत्रमाह। सांत इति। सांतोहः सद्यांत औति तद्धौ। अस्य नामव्युत्पत्तिरुक्ताचार्यैः। प्रसादनत्वान्मनसो यथावत्प्रासादसंज्ञास्यमनोः प्रदिष्टेति। हूक्ष्ल खासंपुटं इति केचिदकारोबीजं। औमिति शक्तिः तदुक्तं सांतोनुग्रहसंयुक्तो बिंदुभूषितमस्तकः। प्रासादाख्यो मनुप्रोक्तो बीजं हंशक्तिरौरमृतेति। सर्वसिद्धिद इत्यनेन विनियोगोक्तिः बीजेतेति मूलमंत्रेण। वामदेवइत्यर्द्धं पठित्वा षड्दीर्घेत्यर्द्धं पठनीयं। लेखकदोषवशाद्व्यत्ययः। ओकाराद्यैरिति।ॐ एउइ अ एतैः। तत्तदिति यस्यां यस्यां योयो न्यस्तस्तया तया तेन समुष्टंऽगुष्टेन शिरसि। सांगुष्टतर्ज्जन्या वदने। सांगुष्टमध्यमया हृदि सांगुष्टानामया गुह्ये। सांगुष्टकनिष्टिकया पादयोः एवं पंचस्वपि मुखेष्विति सांप्रदायिकाः।तथेति। ऊर्ध्वमुखादीनां समुच्चयः ता इति मूर्त्तीस्तत्तद्बीजादिकास्ततदंगुलीभिर्न्यसेदिति संबंधः। अष्टत्रिंशत्कलान्यासं वक्तुमारभते। तत इति। अयं न्यासो ग्रंथकृता यद्यपि प्रासादमंत्रांगत्वेनोक्तस्तथापीदं पंचऋग्विधानं स्वतंत्रं सर्वशैवमंत्रवाधारणंचेनि ज्ञेयं। आचार्यैः स्वतंत्रतयैवोक्तं। अंगानि प्रकल्पयेदिति। वदता तेनापिसूचितमेवस्वातंत्र्यं। तानि षडंगानि पञ्चर्चानामेव न तुप्रासादमंत्रस्य। तदुक्तं। वक्ष्यामि शैवागमष्टत्रिंशत्कलान्यासविधि यथावत्। सपंचभिर्ब्रह्मभिरीशपूर्वैस्त्र्यष्टादिकैः सांगविशेषकैश्चेति। अतस्तंत्रांतरोक्तमृष्यादिलिख्यते- ईशोनुष्टुप्भूरिक्शेषास्तत्पुरुषसंज्ञे गायत्र्यादयः। पुनरग्नरनुष्टुबाथोवामकृतिभगा हरहस्त्वनुष्टुप भगयुगिति। न्यासक्रममेवाह ईशानाद्या इति। ताऋचो यथा। ईशानः सर्वविद्यानामीश्वरः सर्व-

वक्त्रेषु पञ्चविन्यस्येदीशानस्य कलाःक्रमात् । ईशानःसर्वविद्यानां शशिनी प्रथमाकला॥६३॥
ईश्वरः सर्वभूतानामंगदातदनन्तरम् । ब्रह्माधिपतिशब्दान्ते ब्रह्मणोधिपतिः पुनः ॥ ६४ ॥
ब्रह्मेष्टदातृतीयास्याच्छिवो मे सास्तुतत्परा।मरीची कथिता तंत्रे चतुर्थी च सदाशिवोम्६५
अंशुमालिन्यथपरा प्रणाद्यवानमोन्विताः । पूर्वपश्चिमयाम्योदग्वक्त्रेषु तदनन्तरम् ॥ ६६ ॥
चतस्रो विन्यसेन्मंत्री पुरुषस्य कलाः क्रमात् । अद्यातत्पुरुषायेति विद्महे शांतिरीरिता ६७
महादेवाय शब्दान्ते धीमहीस्याततःपरम् । विद्या द्वितीया कथिता तन्नो रुद्रः पदं ततः ६८
प्रतिष्ठा कथिता पश्चात्तृतीयास्यात्प्रचोदयात्।निवृत्तिस्तत्पराः सर्वाः प्रणवाद्या नमोन्विताः६९
हृद्ग्रीवांसद्वयेनाभौ कुक्षौ पुच्छेनवक्षसि । अघोरस्य कलान्यस्येदष्टौ मंत्री यथाविधि ॥७०॥
अघोरेभ्यस्तमापूर्वमीरिता प्रथमाकला । अथघोरेभ्य इत्यन्ते मोहस्यात्तदनन्तरम् ॥ ७१ ॥
घोरान्ते स्यात्क्षमापश्चा तृतीया परिकीर्तिता । घोरतरेभ्यो निद्रास्यात्सर्वतः सर्वतत्परा७२
व्याधिस्तु पञ्चमी प्रोक्ता सर्वेभ्यस्तदनन्तरम् ।मृत्युर्निगदिता षष्ठी नमस्ते अस्तुतत्परम् ७३
क्षुधास्यात्सप्तमारुद्ररूपेभ्यः कथिता तृषा । अष्टमी कथिता एता ध्रुवाद्या नमसान्विताः७४
गुह्यमुष्कोरुयुग्मेषु जानुजंघायुगे स्फिचोः । कट्यांपार्श्वद्वये वाम कलान्यस्येत्त्रयोदश ॥७५॥

---

भूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मे अस्तु सदाशिवोम्। तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् । अघोरेभ्यो थघोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वसर्वेभ्योनमस्ते अस्तुरुद्ररूपेभ्यः । वामदेवाय नमो ज्येष्टायनमः श्रेष्टाय नमो रुद्राय नमः कालाय नमःकलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः । सद्योजातं प्रपद्यामि सद्योजातायवै नमः भवेभवेनाति भवेभजस्वमां भवोद्भवाय नमः सम्यगित्यनेनैतदुक्तं भवति । एतास्तैत्तिरीयशाखायां नारायणीयोपनिषदिद्राविडपाठानुसाराज्ज्ञेयाः । शाखान्तरस्थास्त्वन्यथा पठंतीति तत्पाठोनात्राभिप्रेत इति देशिकसत्तम इत्यनेन अंगुष्ठाभ्यां नम इत्यादि योग उक्तः । अंगानि प्रकल्पयेदित्युक्तं तान्ये वाह।तारेति।तारपंचकमिति द्वादशमूर्त्तिकल्पनाया मुक्तं शिरोगं शिर इत्यर्थः ज्वलितमित्यग्रिमेण संबध्यते । तनुच्छदं कवचं । एवमुक्तानिषडंगानि देशिकसत्तमः कुर्यादिति संबंधः । अत्र देशिकसत्तमइत्यनेनैतदुक्तं भवति शिरोंगे ब्रह्मायेत्यस्यपूर्वं नित्यपदप्रयोगः अस्त्रे श्रीमित्यस्यानंतरं शक्तिबीजप्रयोग इति । ईशमंत्रकलान्यासक्रममाह।पूर्वेति।इष्टदेति कलानाम सदाशिवोमित्यग्रिमेण संबध्यते परा पञ्चमीप्रणवाद्या इति । प्रणवशक्तिप्रासादाद्या इत्यर्थः । पद्मपादाचार्याः पंचाक्षरोयोगमप्याहुः नमोन्विता इति।पंचापि चतुर्थ्यंता इत्यपि । चतुर्थ्यंताः कलाः सर्वा इति वक्ष्यमाणत्वात् । तेन ॐ ह्रीं ह्रौं नमः शिवाय । ईशानः सर्वविद्यानां शशिन्यै नम इत्यादि प्रयोगः । पुरुषस्य तत्पुरुषस्य प्रचोदयादित्यग्रिमेण संबध्यते । तत्परा चतुर्थी सर्वा इति चतुर्थ्यंता इत्यपि । यथाविधीति । वक्ष्यमाणांगुलीभिर्न्यासः सूचितः । अघोरस्य एतावान्मंत्रांशः । एता इति । चतुर्थ्यंता इत्यपि । मुष्कोंडकोशः । वामकला वामदेवकलाः । कलाकामेत्यत्र कलेति मंत्रांशः कामिति कला । विकरणाय नम इति मंत्रांशः । बलेति मंत्रांशः।क्रियेति क-

प्रथमा वामदेवाय नमोन्ते स्याद्रजाकला। स्याज्ज्येष्ठाय नमो रक्षाद्वितीया परिकीर्तिता ७६
स्याद्रुद्राय नमः पश्चात्तृतीया रतिरीरिता। कोलाय नमइत्यन्ते पालिनी परिकीर्तिता ॥७७॥
कलकामापंचमीस्यात्ततो विकरणायच । नमः संयमनी षष्ठी कथिता तदनन्तरम् ॥ ७८ ॥
बलक्रियां समादिष्टा कलाविकरणाय च। नमोवृद्धिरष्टमीस्याद्बलान्ते च स्थिरा कला ७९
पश्चात्प्रमथनान्ते नमोरात्रिरुदीरिता । सर्वभूतदमनायनमोन्तेभ्रामणीकला ॥ ८० ॥
नमोन्ते मोहिनी प्रोक्ता मंत्रज्ञैर्द्वादशीकला । उन्मनाय नमः पश्चाज्ज्वरा प्रोक्ता त्रयोदशी ८१
प्रणवाद्याश्चतुर्थ्यंता नमोंतास्ताः प्रकीर्तिताः। पाददोस्तलनासासुमूर्ध्नि बाहुयुगे न्यसेत् ८२
सद्यो जातोद्भवाः सम्यगष्टौ मंत्री कलाः क्रमात् । सद्यो जातं प्रपद्यामि सिद्धिःस्यात्प्रथ-
माकला ॥ ८३ ॥ सद्यो जाताय वै भूयो नमः स्याद्वृद्धिरीरिता । भवेद्द्युतिस्तृतीयास्या-
द्भवेतदनन्तरम् ॥ ८४ ॥ लक्ष्मीश्चतुर्थी कथिता ततो नातिभवे पदम् । मेधास्यात्पंचमी
प्रोक्ता कला भूयो भवस्वमाम् ॥ ८५ ॥ प्रज्ञा समीरिता षष्ठी भवान्ते स्यात्प्रभा कला। उ-
द्भवाय नमः पश्चात्स्वधास्यादष्टमी कला ॥ ८६ ॥ प्रणवाद्याश्चतुर्थ्यंताः कलाः सर्वान-
मोन्विताः । अष्टत्रिंशत्कलाः प्रोक्ताः पंच ब्रह्म पदात्मिकाः ॥ ८७ ॥ इति विन्यस्तदेहोसौ
भवेद्गङ्गाधरः स्वयम् । ततः समाहितो भूत्वा ध्यायेद्देवं सदाशिवम् ॥ ८८ ॥ मुक्तापीत-
पयोदमौक्तिकजपावर्णैर्मुखैः पंचभिस्त्र्यक्षैरं चितमीशमिंदुमुकुटं पूर्णेन्दुकोटिप्रभम् । शूलं टंक
कृपाणवज्रदहनान्नागेन्द्रघण्टाकुशान् पाशं भीतिवरं दधानममिता कल्पोज्वलं चिंतयेत्॥ ८९ ॥

---

ला। अत्रापि विकरणाय नम इति ऋगंशः। भूय इति। पादपूरणे। भव इति ऋगंशः। पंचब्रह्म
पदानि पंचानां ऋचां दयानि। अत्र पंचानामृचां पदानि कलासहितानिक्रमेण उक्तांगुष्टाद्यंगुलि
भिर्विन्यसेत्। तेन प्रथमऋक्कलाःसांगुष्टमुष्टिना द्वितीऋक्कलास्तर्ज्न्यंगुष्टाभ्यां तृतीयऋक् कलाम
ध्यमांगुष्टाभ्यांचतुर्थऋक्कला अनामांगुष्टाभ्यां। पंचमऋक्कलाः कनिष्टांगुष्टाभ्यामिति । तदुक्तं इति
विप्रदधीर्विन्यसेदंगुलीभिरिति। अन्यत्रापि कनिष्टाद्यंगुलीभिस्तुन्यसेत्सद्यादिकाः क्रमात्। सां-
गुष्टाभिस्तथेशानं समुष्टंग गुष्टकेनत्विति। अस्य स्वतंत्रत्वाद्ध्यानावरणपूजादि वक्तव्यं। तत्र ध्यानं
प्रासादावरणपूजावसरे ग्रंथकृदुक्तं ज्ञेयं। आवरणपूजातु आचार्योक्ता यथा। ध्यात्वेवं पंचभिर्म-
न्त्रभिरथ शिवमाराधयेद्दृग्भिरपिमध्यप्राग याम्यसौम्यापरदिशि पुनरंगैरितरादिभिश्च अंगोमाद्यैर्दि
शाधिपैः पुनिरपिकुलिशाद्यैर्यजेदेवमुक्तं। पांचब्राह्मं विधानं सकलसुखयशो भुक्तिमुक्तिप्रदंचेति।
मुक्तेति मुक्तावर्णमूर्ध्वमुखं। पीतवर्णं पूर्वमुखं नीलवर्णं दक्षिणमुखं। मुक्तावर्णं पश्चिममुखं विद्रुम-
वर्णमुत्तरमुखं। पयोददातीति व्युत्पत्त्या नीलमेघ एव विवक्षितः। तदुक्तं वायवीयसंहितायां। अ-
स्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभं। त्रिलोचनं रविं दाद्यं बालेन्दुकृतशेखरम्। दक्षिणं नी-
लजीमूतसमानं चंद्रभूषितं। वक्रभ्रु कुटिलं घोरं रक्तवृत्तत्रिलोचनम्। उत्तरंविद्रुमप्रख्यंनीलालकविभूषि
तम्। सविलासं त्रिनयनं चंद्राभरणशेखरम्। पश्चिमं पूर्णचंद्राभं लोचनत्रितयोज्ज्वलं। चंद्ररेखाध-
रे सौम्यं मंदस्मितमनोहरम्। पंचमं स्फटिकप्रख्यं चंद्ररेखा समुज्ज्वलम्। अतीव सौम्यमुत्फुल्ललोचनचि

एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः । प्रसूनैः करवीरोत्थैर्जुहुयात्तद्दशांशकम् ॥ ९० ॥
पूर्वोक्ते प्रयजेत्पीठे मूर्तिं मूलेन कल्पयेत् । आवाह्य पूजयेत्तस्मां मूर्त्याद्यावरणैः सह ॥९१॥
शक्तिडमरुकाभीति वरान्सन्दधतं करैः । ईशानं त्रीक्षणं शुभ्रमैशान्यां दिशि पूजयेत् ॥९२॥
अक्षस्रजं मृगपाशौ सृणं डमरुकं ततः । खट्वांगं निशितं शूलं कपालं बिभ्रतं करैः ॥९३॥
परशेण वराभीतीर्दधानं विद्युदुज्ज्वलम् । चतुर्मुखं तत्पुरुषं त्रिनेत्रं पूर्वतोऽर्चयेत् ॥ ९३ ॥
अञ्जनाभं चतुर्वक्त्रं भीमदंष्ट्रं भयावहम् । अघोरं त्रीक्षणं याम्ये पूजयेन्मन्त्रवित्तमः ॥ ९४ ॥
कुंकुमाभं चतुर्वक्त्रं वामदेवं त्रिलोचनम् । वराभयाक्षवलयकुठारं दधतं करैः ॥ ९५ ॥ विला-
सिनं स्मेरवक्त्रं सौम्ये सम्यक्समर्चयेत् । कर्पूरेन्दुनिभं सौम्यसद्योजातं त्रिलोचनम् ॥ ८६ ॥
हरिणाक्षगुणाभीति वरहस्तं चतुर्मुखम् । बालेन्दुशेखरोल्लासि मुकुटं पश्चिमे यजेत् ॥ ९७ ॥
निवृत्याद्यास्ततः कोणे तेजोरूपाः कलाः क्रमात् । केसरेषु षडङ्गानि पूर्ववत्पूजयेत्सुधीः ॥९८॥

---

तयोज्ज्वलमिति। अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलमिति। इंदुमुकुटमिति वक्त्रं ज्ञेयं। टंकः परशुः। नागेशः सर्पेशः। भीतिहरं अभयं आयुधध्यानं तु ऊर्ध्वादि दक्ष शूलाद्यग्न्यंतानि वामे अंत्यानि । तदुक्तं वायवीयसंहितायां। दक्षिणे शूलपरशु वज्रखड्गानलोज्ज्वलं। सव्ये च नागेशाभीति घंटापाशांकुशोज्ज्वलमिति। अन्यत्र ऊर्ध्वदक्षवामयोराद्यं एवमांतमिति क्रमेणोक्तं । शूलाहीटंकघंटासि सृणिकुशपाशाग्न्यभीतीर्दधानं दोर्भिरिति । अन्यत्रव्यत्ययोप्युक्तः । यदाहुः । भुजंगघंटाभयदांकुशां-श्च पाशंभुजैर्दक्षिणतो दधानं । तथा त्रिशूलं परशुं च खड्गं वज्रं च वह्निं क्रमशो परेश्वेति । अन्यत्र एकवक्त्रं चतुर्भुजं च ध्यानमुक्तं । अथ चैकवक्त्रं । दोर्भिश्चतुर्भिर्युतमिन्दुमौलिं । दृता-क्षमालात्रिशिखं क्रमात्तं यजेत्सखट्वांगकपालहस्तमिति । अन्यत्र तु । देवं नमामि शिरसा परशुं त्रिशूलं विद्या कपालपरिमंडितबाहुखंडमिति मूर्तीति आदिशब्देनांगाहृतिरुक्ता मूर्त्यावरणं च अंगावरणं च आवरणानि । अनंतोमेंद्रवज्रादीनि चतैः मूर्त्याद्यावरणैरित्येकशेषेण समासः कार्यः । तेन मूर्त्तिपंचकनिवृत्यादि पंचकेन प्रथमावरणं संपूज्य द्वितीयांगैस्तृतीया विद्येश्वरादिभिरित्यर्थः । तदुक्तं प्रयोगसारे मूर्त्यंगावरणोपेतमिति । अन्यत्रापि मूर्त्तिपूजामुक्त्वा उक्तं । आग्ने येशाननैर्ऋत्यवायुपत्रेष्वथोपरः । संपूज्यांगानि दिक्ष्वस्त्रमपि पूजयेत् । स्वनामकलितैर्मंत्रैरनंतं सूक्ष्ममेवचेत्यादिना । वायवीयसंहितायामपि । पूजयेत्परमेश्वरं । ब्रह्मभिश्चषडंगैश्चे-ति । पद्मपादाचार्यैरपि मूर्त्यावरणाद्बहिरंगावरणं द्रष्टव्यमित्युक्तं । तेन यत्केचन मूर्त्यावरणात्पूर्वम् अंगावरणं वदंति तदयुक्तं । नारायणीयेपि । मूर्त्यङ्गानायजेद्यथाविधीति । पूर्वत इ-त्यादि दिग्ग्रहणं ग्रंथकृता प्रसिद्धदिशामेव कृतमिति ज्ञेयं । मंत्रवित्तमः सम्यक्समर्चयेदित्य नेनेशादीनां न्यासोक्तबीजादित्वेन पूजयेदित्युक्तं भवति । तेजोरूपा इति । एषां शरीराद्याकाराभावे कारणमुक्तमाचार्यैः । भूतानां शक्तित्वाद्व्यापकत्वाज्जगति च निवृत्त्याद्याः । तेजोरूपाः करपदवर्णविहीनामनीषिभिः प्रोक्ता इति । तंत्रांतरे । आकारोप्युक्तः । वस्त्राक्षमालामभयमंबुजं बिभ्रता मुखैः । हेमाभाचारुसर्वांगानिवृत्तिः सितभूषणा । श्वेता कल्पाक्ष मालाब्जपा-

विद्येश्वराननन्ताद्यान्पत्रेषु परितो यजेत्। उमादिकांस्ततोबाह्ये शक्राद्यानायुधैःसह ॥ ९९ ॥ इति संपूज्य देवेशं भक्त्या परमया युतः। प्रीणयेन्नृत्यगीताद्यैस्तोत्रैर्मन्त्रा मनोहरैः ॥१००॥ तारो माया त्रिपद्बिन्दुमनुस्वारसमन्वितम्। पंचाक्षरसमायुक्तो वसुवर्णो मनुर्मतः॥ १०१ ॥ पञ्चाक्षरोक्तवत्कुर्यादंगन्यासादिकं बुधः। वंदे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं भालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम्। वामोरुन्यस्तपाणिररुणकुवलयं संदधत्याः प्रियायावृत्तोत्तुङ्गस्तनाग्रे निहितकरतलं वेदटं केष्टहस्तम् ॥ १०३ ॥ अष्टलक्षं जपेदेनं मनु मनुंविदाम्बरः। तत्सहस्रं प्रजुहुयात्पायसान्नैर्घृतप्लुतैः ॥ १०४ ॥ प्राक् पीठे मूलमंत्रेण मूर्तिसंकल्प्य पूजयेत्। अङ्गैरावरणं पूर्वमनन्ताद्यैरनन्तरम् ॥ १०५ ॥ उमादिभिः समुद्दिष्टं तृतीयं लोकनायकैः। चतुर्थं पंचमं तेषामायुधैः परिकीर्तितम् ॥ १०६ ॥ एवं प्रतिदिनं देवं

---

शाभयकरासिता। सर्वाभरणसंदीप्ता प्रतिष्टातिमनोहरा। शक्त्या चमा लाजा भीति हस्ता गुंजारुणोज्ज्वला। कपर्देन्दुस्त्रिकमुखी ध्येया विद्या कलात्रिदिकम्। चतुर्वक्त्रभुजा कृष्णा नीलवस्त्रा कपर्दिनी। ध्वजा चमा लाब्जाभोति हस्ताशांतिकलात्रिदृक्। स्फटिकाभापंचवक्त्रा वेदाचस्त्रवराभयान् दधती सकपर्देन्दुःशांत्पतीताच्छभूषणा इति। कला इत्यनेन प्रथमपटलोक्ता पंचीकृतभूतबीजाद्या इत्युक्तं। क्रमादित्यनेनैतदुक्तं। आग्नेयादिषु निवृत्त्यादि चतुष्कं संपूज्य ईशस्यानेशांत्यती तां पूर्वमेव पूजयेदिति। अन्ये तु ईशानशांत्यती ते मध्ये पूजयेदित्याहुः। प्रपंचसारसंमतमेतत्। पूर्वमूर्ध्वप्रागित्युक्त्वा पश्चात्पूर्वोक्तदिक्षुमूर्त्तिरित्युक्तेः। अन्येत्वेवं तयोः पूजामाहुः। उमादिका इति पूर्ववदुत्तरादि यजेत्। अस्य तंत्रांतरस्थं यंत्रद्वयमुच्यते। षट्कोणमंडलं बाह्ये रोचनाचंदनाक्तया। दूर्वया विलिखेन्मंत्री प्रासादं नामसंयुतं। बहिः षट्सु च कोणेषु प्रणवाद्यं षडक्षरं। यंत्रस्त्रिंशद्दलं वाह्ये त्रिस्त्रिंशद्वर्णमालिखेत्। ईशानवर्णषड्कं च तत्पुरुषं तु सप्तमं। अघोरवर्णषड्कं च वामदेवस्य सप्तमं। सद्यो जातं तथा सप्त नमोंतं वर्णमालिखेत्। मृत्युंजयेन संवेष्ट्य धारयेद्यंत्रमुत्तममिति। षट्कोणांतः साध्ययुक्तं प्रसादं मूलमविषु। संधिष्वंगानि तद्बाह्ये पद्मं पंचदलंत्विह। ईशानाद्याः पंचमूर्त्तीर्ङिंकदंता लिखेत्ततः। अष्टयन्त्रं मातृकाष्टवर्गयुक्तं लिखेद्बहिः। संवेष्टानुष्टुभायंत्रं जपहोमादि साधितं। आरोग्यायुः सुतैश्वर्यं चतुर्वर्गफलप्रदमिति। अष्टाक्षरं प्रसादमंत्रमाह। तार इति। तारः प्रणवः मायाशक्तिबीजं वियत् हः विंदुमनुस्वरो औंतयुक् तेन हौं। पंचाक्षर इति शैवपंचाक्षरः। वसुवर्णोष्टाक्षरः। पूर्वोक्ते ऋषिछंदसी। उमापतिर्देवता। पंचाक्षरोक्तवदिति। मायाषड्दीर्घाद्यबीजषडक्षरैः षडंगमिति। संप्रदायविदः। आदिशब्देन मूर्त्तिपंचकन्यासः। वंदे इति। वेदः पुस्तकं टंकः परशुः। वामोरुन्यस्तपाणेरिति दक्षपाणेः। अरुणकुवलयमिति। वामपाणौ। निहितकरतलमिति। वामाधस्तनं। तदुक्तं। वामांकेन्यस्तवामे तरकरकमलायाः तथा वामबाहुन्यस्तरक्तोत्पलायास्तनविधृतलसद्वामबाहुः प्रियाया इति। ऊर्ध्ववामे इष्टं वरमित्यर्थः वेदटंके दक्षस्थे। उमादिभिरित्युत्पद्येव। एवं पंचवक्त्रशिवस्य मंत्रानभिधाय ऊर्ध्ववक्त्रप्रधानं मृत्युंजयमं

पूजयेत्साधकोत्तमः। पुत्रमित्रादि सहिता श्रियं प्राप्य प्रमोदते ॥ १०७ ॥ तारं स्थिरास-कर्णेन्दुभृगुः सर्गविभूषितः। अक्षरात्मानिगदितो मनुर्मृत्युञ्जयादिकः ॥ १०८ ॥ ऋषिः कहोलोदेव्यादि गायत्री छन्द ईरितम्। मृत्युञ्जयो महादेवो देवतास्यसमीरितः ॥१०९॥ भृगुणा दीर्घयुक्तेन षडङ्गानि समाचरेत्। चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तः स्थितं मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्। कोटीरेन्दुगलत्सुधाप्लुततनुंहारादिभूषोज्वलं कान्त्याविश्वविमोहनं पशुपतिं मृत्युञ्जयं भावयेत् ॥ १११ ॥ गुणलक्षणं जपेन्मन्त्रं तद्दशांशं विशालधीः। जुहुयादमृताखण्डैः शुद्धदुग्धाज्यलोलितैः ॥ ११२ ॥ शैवे संपूजयेत्पीठे मूर्ति-मूलेन कल्पयेत्। अङ्गावरणमाराध्य पश्चाल्लोकेश्वरान्यजेत् ॥ ११३ ॥ तदस्त्राणि ततो बाह्ये पूजयेत्साधकोत्तमः। जपपूजादिभिः सिद्धे मन्त्रेस्मिन्मनुना क्रमात् ॥ ११४ ॥ कुर्यात्प्रयो-गान्कल्पोक्तानभीष्टान्फलसिद्धये। दुग्धयुक्तैः सुधाखण्डैर्मन्त्री मासं सहस्रकम् ॥ ११५ ॥ आराधितेग्नौ जुहुयाद्विधिवद्विजितेन्द्रियः। सन्तुष्टः शङ्करस्तेन सुधाप्लावितविग्रहः ॥११६॥ आयुरारोग्यसम्पत्ति यशः पुत्रान्विवर्द्धयेत्। सुधावटी तिलादूर्वा पयः सर्पिः पयो हविः ११७ इत्युक्तैः सप्तभिर्द्रव्यैर्जुयात्सप्तवासरम्। क्रमाद्दशांशतोनित्यमष्टोत्तरमतन्द्रितः ॥ ११९ ॥ सप्ताधिकान् द्विजान्नित्यं भोजयेन्मधुरान्वितम्। विकारानुगुणं मंत्री वर्द्धयेद्धोमवासरान् ११९ होतृभ्योदक्षिणान्दद्यादरुणागाः पयस्विनीः। गुरुं संप्रीणयेत्पश्चाद्धनाद्यैर्देवताधिया ॥१२०॥ अनेन विधिना साध्यः कृत्याद्रोहज्वरादिभिः। विमुक्तः सुचिरं जीवेच्छरदांशतमंजसा१२१ अभिचारे ज्वरे तीव्रे घोरोन्मादे शिरोगदे। असाध्यरोगक्ष्वेडादौ महादाहे महाभये १२२

---

क्रमाद्व। तार मिति। तारं प्रणवं। स्थिरा जः कर्णे वामकर्णः ऊअथ वा कर्णशब्देन षट्संख्या तेन ऊ इंदुर्विंदुस्तेन जूं। भृगुः सकारः सर्गो विसर्गस्तद्युक्तः। इंद्वावयवसंपाते पूर्वस्यादौ परिग्रह इ-ति यद्यपि सामान्यपरिभाषा तथाप्यत्र विशेषवचनात्तद्बाधः पूर्वव्याख्याने। तदुक्तं प्रयोगसारे। वेदादिःकाष्टमः षष्टस्वरार्द्धेन्द्वन्वितस्वसः। स्वरश्चतुर्थोंविहंती जली विंद्वन्वितः शशी। पंचाक्षर स्य मंत्रस्य बीजान्युक्तानि यत्नतः। तस्यादितः क्रमाद्वीजैस्त्र्यक्षरः प्रोच्यते त्रिभिः। बीजेनांत्ये न तस्यैव स्यादेकाक्षर ईरितः। एते मृत्युंजयामंत्राः क्रमात्प्रोक्ताः फलोत्तराः इति। नाराय-णोयेपि। सशिवं वामदोर्मध्यं बिंदुमत्सकलोभृगुरिति तट्टीकायां। सशिवं षष्टस्वरयुक्तं शिव शब्देन षष्टस्वरोत्र विवक्षितः इत्युक्तं। प्रणवो बीजं। स इति शक्तिः। जूं बीजमिति पद्मपा-दाचार्याः। भृगुणा सकारेण। दीर्घयुक्तेन षट्दीर्घयुक्तेन समाचरेदिति नाभि क्रमत् भ्रूमध्येप्य क्षरन्यासानंतरमित्यर्थः। पद्मद्वयांतस्थितमिति। एकमूर्ध्वमुखं तदुपर्युपविष्टं द्वितीयमधोमु-खं शिरसि मुद्रा ज्ञानमुद्रा दक्षोर्ध्वादिक्रमाधस्तनं यावदायुधध्यानं। गुणलक्षं त्रिलक्षं विशाल धीरित्यनेन शैवं पीठमभ्यर्च्येत्युक्तं। अमृता गुडूची। शुद्धेति वस्त्रादिनागालितैः। सुधा गुडू-चो मंत्रोति। एकाक्षबीजादित्वमुक्तं। मासं जुहुयादिति संबंध सहस्रमिति प्रत्येकं। विधि वदाराधित इत्यग्नौ शैवं पीठं संपूज्येत्यर्थः पयोहविरिति पायसं। विकारमिति। रोगानुसारा

होमोयंशांतिदः प्रोक्तः सर्वसम्पत्प्रदायकः । द्रव्यैरेतैः प्रजुहुयान्त्रिजन्मसु यथाविधि १२३
भोजयेन्मधुरैर्भोज्यैर्ब्राह्मणान्वेदपारगान्। दीर्घमायुरवाप्नोति वाञ्छितां विंदति श्रियम् १२४
एकादशाहुतीर्नित्यं दूर्वाभिर्जुहुयाद्बुधः । अपमृत्युजिदेषः स्यादायुरारोग्यवर्द्धनः ॥ १२५ ॥
त्रिजन्मसु सुधावल्लीकाश्मरीबकुलोद्भवैः । समिद्वरैः कृतोहोमः सर्वमृत्युगदापहः ॥ १२६ ॥
सिद्धान्नैर्विहितो होमो महाज्वरविनाशनः । अपामार्गसमिद्धोमः सर्वामयविषूदनः ॥१२७॥
प्रणवरचितनालं मन्त्रमध्यार्णपत्रं भृगुविलासितमध्यं पद्मयुग्मं तदन्तः । कृतवसति सुमेशं वर्ण-
निर्यत्सुधार्द्रं कलयतु हृदि नित्यं सर्वदुःखप्रशान्त्यै ॥ १२८ ॥ यन्त्राढ्ये कमले सौम्ये कलशं
प्रोक्तवर्त्मना । नवरत्नसमायुक्तं दुकूलाभ्यामलंकृतम् ॥ १२९ ॥ आपूर्य सलिलैः शुद्धैस्त-
स्मिन्देवं प्रपूजयेत् । उपचारैः षोडशभिर्विधानेन विधानवित् ॥ १३० ॥ अभिषिञ्चेत्प्रियं
साध्यं विनीतं दत्तदक्षिणम् । आधिव्याधिमहारोगकृत्याद्रोहनिवारणः ॥ १३१ ॥ अभि-
षेकोयमाख्यातः कीर्तिलक्ष्मीजयप्रदः । मध्ये साध्याक्षराढ्यं ध्रुवमभिविलिखेन्मध्यमं दिग्द-
लस्थं कोणेष्वंत्यं मनोस्तत्क्षितिभुवनमथोदिक्षु चन्द्रान्विदिक्षु । टान्तं यन्त्रं तदुक्तं सकलभ-
यहरं क्ष्वेडभूतापमृत्युंव्याधिव्यामोहदुःखप्रशमनमुदितं श्रीप्रदं कीर्तिदापि ॥ १३३ ॥ इति
शारदातिलके ऽष्टादशः पटलः ॥ अथवक्ष्ये मन्त्ररत्नं रामस्तं पुरुषार्थदम् । अवापुर्येन ज-
प्तेन दिव्यं ज्ञानं मुनीश्वराः ॥ १ ॥ दक्षिणापूर्तये पूर्वं तुभ्यं पदमनन्तरम् । वटमूलपदस्यांते
पदं पश्चान्निवासिने ॥ २ ॥ ध्यानैकनिरतांगाय पश्चाद्ब्रुयान्नमः पदम् । रुद्राय शम्भवे ता-
रशक्तिरुद्धोपमीरितः ॥ ३ ॥ षट्त्रिंशदक्षरोमन्त्रः सर्वकामफलप्रदः । मुनिः शुकः समुद्दि-
ष्टश्छन्दोनुष्टुप्समीरितम् ॥ ४ ॥ दक्षिणा मूर्तिनामास्य देवता शम्भुरीरितः । षड्भिर्वर्णै-
र्हृदाख्यातं द्वाभ्यां शिर उदीरितम् ॥ ५ ॥ शिखाष्टभिः समुद्दिष्टा वस्वर्णैः कवचं मतम् ।
पञ्चभिर्नेत्रमाख्यातं त्रिभिरस्त्रमुदाहृतम् ॥६॥ षडेते मारशक्त्याद्या ह्रामाद्यन्ताः सजातयः ।

---

चतुर्दशैकविंशात्यदि दिनवृद्धिः । द्रव्यैरेतैरिति ।पूर्वोक्तैः सप्तभिः त्रिजन्मस्विति प्रथमदशमैएको नविंशतिसंख्येषु नक्षत्रेषु । यथाविधीति ।पूर्वोक्तप्रकारेण प्रणवेति । मंत्रमध्यार्णो जूं सचाष्टाहस्या षट्सु पत्रेषु । भृगुविलसितेति । सविसर्गसकारेण । पद्मयुग्मं कलयतु तदंतः कृतवसति सुमेशं कलयत्विति संबंधः । वर्णः कर्णिकाख्यः सकारस्तस्मान्निर्यती यासुधातया आर्द्रं । यंत्राढ्य इति वक्ष्यमाणयंत्रयुक्ते । कमल इति । भद्रकमंडलस्थले । सौम्यं मनोहरं । प्रोक्तवर्त्मनेति । षष्टपटलोक्तरोत्या । विधानविद्विधानेनेत्यनेनैतदुक्तं तुर्योक्तागमश्लोकैरुपचारेषु तत्तद्द्रव्यविशेषैस्तत्तन्मुद्राभिरिति । यंत्रमाह । मध्य इति । मध्ये कर्णिकायां । मध्यगं जूं कारं । अंत्यं सं । चंद्रं ठकारं । तदुक्तं । खड्गीशलांगलिभ्यां तु दिग्विदिक्ष्वंऽकितं बहिः । भूपुरं विनिवेश्यास्मिन्कलशं समलंकृतमिति । इति अष्टादशः पटलः ॥ १८ ॥ एवमूर्ध्ववक्त्रप्रधानमंत्रनिरूपणानंतरं दक्षिणवक्त्रप्रधानं सौम्यमंत्रमाह । अथेति । समस्तपुरुषार्थदमित्यनेन विनियोग उक्तः । मंत्रमुद्धरति । दक्षिणेति श्लोकरूपो मंत्रः तारशक्तिरुद्धोयमित्युभाभ्यां रुद्धः पुटितः

अङ्गमन्त्राः समुद्दिष्टा यथावद्देशिकोत्तमैः ॥ ७ ॥ मूर्ध्नि भाले दृशोः श्रोत्रे गण्डययुग्मेथ नासिके । अस्ये दोःसन्धिषु गले स्तनहृन्नाभि मण्डले ॥ ८ ॥ कट्यां गुह्ये पुनः पादसन्धिष्वर्णान्न्यसेत्क्रमात् । व्यापकं तारशक्तिभ्यां कुर्याद्देहे ततःपरम् ॥ ९ ॥ हेमाचलतटे रम्ये सिद्धकिन्नरसेविते । विविधद्रुमशाखाभिः सर्वतो वारितातपे ॥ १० ॥ सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमैः । शिलाविवरनिर्गच्छन्निर्झरानिलसेविते ॥ ११ ॥ गायद्भृङ्गवधूभृगाङ्गनासन्धे नृत्यद्बर्हिकदम्बके । कूजत्कोकिलसंघेन मुखरी कृतदिङ्मुखे ॥ १२ ॥ परस्परविनिर्मुक्तमात्सर्यमृगसेविते । आद्यैः शुकाद्यैर्मुनिभिरजस्रं समुपस्थिते ॥ १३ ॥ पुरंदरमुखैर्देवैः सेवाया तैर्विलोकितम् । वटवृक्षं महोच्छायं पद्मरागफलोज्ज्वलम् ॥ १४ ॥ गारुत्मतमयैः पत्रैर्निबिडैरुपशोभितम् । नवरत्नमयाकल्पैर्लम्बमानैरलंकृतम् ॥ १५ ॥ जलजैः स्थलजैः पुष्पैरामोदितरलंकृतम् । शृण्वद्भिर्वेदशास्त्राणि शुकवृन्दैर्निषेवितम् ॥ १६ ॥ संसारतापविच्छेदकुशलच्छायमद्भुतम् । विचिन्त्य तस्य मूलस्थे रत्नसिंहासने शुभे ॥ १७ ॥ आसीनममिताकल्पं शरच्चन्द्रनिभाननम् । स्तूयमानं मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ॥ १८ ॥ संस्मरेज्जगतामाद्यं दक्षिणामूर्तिमव्ययम् । कैलासाद्रिनिभं शशांकशकलस्फूर्जज्जटामण्डितं नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितम् । मुद्रा टंककुरंगजानुविलसत्पाणिप्रसन्नाननं कक्षाबद्धभुजं गमं मुनिवृतं वन्दे महेशंपरम् ॥ २० ॥ अयुतद्वयसंयुक्तं गुणलक्षं जपेन्मनुम् । तद्दशांशन्तिलैः शुद्धैर्जुहुयात् क्षीरसंयुतैः ॥ २१ ॥ पञ्चाक्षरोदिते पीठे विधानेन प्रपूजयेत् । उपचारैः समुत्पन्नैः पाद्याद्यैः परमेश्वरम् ॥ २२ ॥ एवं कृतपुरश्चर्यः सिद्धमन्त्रोभवेत्सुधीः । भिक्षाहारो

---

तेनांते व्युत्क्रमः । प्रणवो बीजं माया शक्तिः ह्रांडादीति मकारे ङकारः । प्रयोगस्तु ॐ ह्रीं दक्षिणामूर्तये । ह्रां हृदयाय नमः ॐ ह्रीं शिरसे स्वाहा इत्यादि यथावद्देशिकोत्तमैरित्यनेन शैव षडंगमुद्राभिः सह कर्त्तव्यतोक्ता मूर्ध्नीत्यादि चतुस्त्रिंशत्स्थानेषु चतुस्त्रिंशद्वर्णान्विन्यस्य शिष्टाभ्यां व्यापकं कुर्यादित्यर्थः । तदुक्तं । एवं प्रणवहृल्लेखापूर्वाक्षरन्यासादिकं कृत्वेति । आचार्या अपि पुनर्द्वाभ्यां मंत्रविद्व्यापकं न्यसेदिति । केचित्तु न मोस्तनयोरेकैकमक्षरं न्यसनीयमिति । द्वाविंशदक्षरन्यासमेवाहुः । एष एव सांप्रदायिकः पक्षः । तदुक्तमाचार्यैः । कालिकस्तुतिद्विगांडद्वयनासाख्यकेदमित्यादिना पूर्वलिखिताचार्यपद्यव्याख्याने पद्मपादाचार्यैर्द्वाभ्यांमंत्र विदित्यनेन आद्यंतप्रणवशक्त्योरेकत्वं जानन्नित्यर्थ इति व्याख्यायां व्यापकं तारशक्तिभ्यामिति वदता मूलकारेणापि सूचितमेव तेन ॐ ह्रीं दं नम इत्यादि प्रयोगः कृतः सदोचो मंत्रीत्यनेन न्यासमंत्रादौ प्रणवशक्तियोग उक्त इति पद्मपादाचार्याः । ध्यानमाह । हेमेति । हेमाचलतटे वटवृक्षं संचिंत्येति संबंधः । लंबमानैरिति वटप्ररोहैः । लीवणी इति गौडभाषायां । अनेनैतदुक्तं भवति । मणिमंडपानंतरं हेमाचलतटं वटवृक्षंतु तदधोरत्नसिंहासनमिति पीठन्यासेविशेषः शेषं समानमिति । वीरासनमंत्यपटले वक्ष्यतीति । मुद्राज्ञानमुद्रा । तदुक्तं । मुद्रां भद्रार्थदात्रीमिति टंकः परशुः । दक्षयोराद्ये । वामयोरन्ये आयुधे । गुणलक्षं त्रिलक्षं । समुत्पन्नैः समुक्तैः समुत्पादितैरि-

जपेन्मासं मनुमेनं जितेन्द्रियः ॥ २३ ॥ नित्यं सहस्रमष्टार्द्धं परं विन्दति वाङ्मयम् । त्रिवारं जप्तमेतेन मनुना सलिलं पिबेत् ॥ २४ ॥ नित्यशो दक्षिणामूर्तिं ध्यायन्साधकसत्तमः । शास्त्रव्याख्यानसामर्थ्यं लभते वत्सरान्तरे ॥२५॥ ब्राह्मीसैन्धवसिद्धार्थवचाकोष्टकणोत्पलैः। सुगन्धिसंयुतैः कल्कैः शृतं ब्राह्मी रसेघृतम् ॥ २६ ॥ मनुनानेन सञ्जप्तमयुतं साधुसाधितम् । निपीतं कविताकांतिरक्षायुः श्रीधृतिप्रदम् ॥ २७ ॥ प्रणवो हृदयं पश्चात्ततो भगवते पदम् । ङेयुतं दक्षिणामूर्तिमह्यं मेधामुदीरयेत् ॥२८॥ प्रयच्छठद्वयान्तोयं द्वात्रिंशत्यक्षरो मनुः । मुनिश्चतुर्मुखश्छन्दो गायत्री देवता मनोः ॥ २९ ॥ दक्षिणा मूर्तिराख्यातो वेदव्याख्यानतत्परः । तारुद्धैः स्वरैर्दीर्घैः षड्भिरङ्गानि कल्पयेत् ॥ ३० ॥ अथवा मनुसम्भूतैः पदैर्वा कल्पयेत्क्रमात् । पूर्वोक्तवटमूलस्थं चिन्तयेन्मन्त्रनायकम् ॥ ३१ ॥ स्फुटिकरजतवर्णं मौक्तिकीमक्षमालाममृतकलशविद्याज्ञानमुद्राः कराग्रैः । दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं विधृतविविधभूषन्दक्षिणा मूर्तिमीडे ॥ ३२ ॥ लक्षमेकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः । जुहुयात्स-

---

ति वार्थः । तेनोक्तप्रकारेणैवोपचारान् कुर्यान्नजलादिनेत्युक्तं भवति । सिद्धार्थो गौरसर्षपः । कणा पिप्पली । उत्पलं मुस्ता । सुगंधिशब्देन त्वकपत्रैलाकेसराणि । तदुक्तं वैद्यनिघंटौ । त्वक् पत्रैलाकेसराणि चातुर्जातं सुगंधिकमिति । एतेषां कल्केन ब्राह्मीरसेघृतपाकः तेनु स्नेहः सिध्यति शुद्धांबुभिः क्वाथस्वरसैः क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्टमष्टममिति विशेषपरिभाषावचनात् पलमितेन कल्केन षट् पलंघृतं पचेत् । पंचप्रभृतिपत्रस्युद्रव्याणि स्नेहसंविधौ । तत्र स्नेहतमान्याहुरर्वाक् चस्याच्चतुर्गुणमित्युक्तत्वाच्चतुर्विंशति पलानि ब्राह्मी रसः । घृतावशेषमुत्तारितमुक्तफलदं शृतं पक्वं साधु साधितमिति । अयमर्थः । घृते उक्तप्रकारेण देवता पीठमभ्यर्च्य तत्रसावरणं देवमिष्ट्वा वह्निरग्निं प्रतिष्ठाप्य तत्रापि देवपीठमभ्यर्च्य हुत्वा तत्संपाताज्येनाप्लुतं कुर्यादिति । नियितमिति। शुचिना प्रातरिति शेषः । तंत्रांतरोक्तं यंत्रमुच्यते अथ मेधाकरं ज्ञानवाकसिद्धिकविताकरं । वक्ष्येहं दक्षिणामूर्त्तियंत्रं सर्वार्थसाधकं । दंतपत्रदलोपेतं पंकजं भूर्जवर्मणि । दूर्वाग्रैः पशुपित्ताद्यैर्लिखेच्चकर्णिकोदरे ! साध्याख्यां प्रविलिख्याथ पत्रेष्वानुष्टुभं लिखेत्। तद्बहिः पृथिवीगेहं तत्कोणेन कुलीश्वरं। तस्मिन्नावाह्य संपूज्य देवं संतर्प्य धारयेत् । तस्य हस्तगतं सद्यो ब्रह्मज्ञानादिकं भवेदिति मंत्रांतरमाह । प्रणव इति । हृदयं नमः पदं । अत्रापि पूर्ववद्विसर्गेण संधिः । ङेयुतो दक्षिणामूर्त्तिः दक्षिणामूर्त्तये । मह्यं मेधामित्यत्र हसमेधामित्येके । प्रज्ञामेधामित्यन्ये केचन मेधापदस्थाने प्रज्ञाशब्दमाहुः । इदं तु स्वस्वगुरुसंप्रदायानुसारेण बोद्धव्यं । प्रणवांतो नादो बीजं स्वाहाशक्तिः नारदीये तु । शक्तिरहस्येहवा ग्भव इत्युक्तं । तारुद्धैरिति प्रणवसंपुटितैः । षड्भिर्दीर्घैः स्वरैः । आईऊऐऔअः एभिरित्यर्थः । अथमिति अत्र प्रणवाद्यैर्नमोंतैः षड्भिः पदैः षडंगमिति परम गुरवः । अक्षरन्यासस्तु नारदीये । शिरोललाटहृदयनासांगंडरदद्वये । जिह्वानोष्ठे गले बाह्वोर्हृन्नाभ्यधुगुदोरुषु । जानुजंघापार्ष्णिपादे सर्वसंधिषु चांतिममिति । वटमूलस्थमित्यत्र विशेषः । व्याख्यापीठे समा-

घृतैः पद्मैर्दशांशं संस्कृतेनले ॥ ३३ ॥ पूर्वोदिते यजेत्पीठे वक्ष्यमाणेन वर्त्मना । अङ्गानभ्यर्चयेद्बाह्ये पत्रेष्वष्टसु पूजयेत् ॥ ३४ ॥ सरस्वतीं वासयन्तीं पुस्तकं सास्मिताननाम् । ब्रह्माणं सनकं पश्चात्सनन्दनमतःपरम् ॥३५॥ सनत्कुमारनामानं शुकं व्यासगणेश्वरम् । सिद्धगन्धर्वयोगीन्द्रविद्याधरगणान्बहिः ॥ ३६ ॥ बाह्ये लोकेश्वरानर्चेद्वज्राद्यायुधसंयुतान् । इत्थं पूजादिभिः सिद्धे मन्त्रेस्मिन्साधकोत्तमः ॥ ३७ ॥ वल्लभो जायते वाचां वाचस्पतिरिवापरः । मन्त्रेणानेन सञ्जप्तैर्विशुद्धैः सलिलैः सुधीः ॥ ३८ ॥ अभिषिञ्चेत्स्वशिरसि श्रियमारोग्यमाप्नुयात् । कण्ठमात्रे जले स्थित्वा जपेन्मन्त्रं सहस्रकम् ॥ ३९ ॥ प्रत्यहं मण्डलादर्वाक्कवीनामग्रणीर्भवेत् । गौर्यापार्श्वस्थयासार्द्धं श्रीकामी चिन्तयन्विभुम् ॥ ४० ॥ अयुतं प्रजपेन्मन्त्रं भूयसीं श्रियमाप्नुयात् । भुञ्जान प्रयतो मन्त्री गोमूत्रे शृतमोदनम् ॥ ४१ ॥ भिक्षान्नमथवा मन्त्रमयुतद्वितयं जपेत् । अश्रुतान्वेदशास्त्रादीन् व्याचष्टे नात्र संशयः।सिद्धगन्धर्वमुनिभिर्योगीन्द्रैरपिसेविते । ज्ञानवागर्थिनां प्रीत्यै कथितौ मन्त्रनायकौ ॥ ४३ ॥ लोहितोग्न्यासनः सद्यबिन्दुमान्प्रथमं ततः । द्वितीयं वह्निबीजस्था दीर्घा शान्तीन्दुभूषितः ॥ ४४ ॥ तृतीयं लांगली सर्गी मन्त्रीर्बीजत्रयान्वितः । नीलकण्ठात्मकः प्रोक्तोविषद्वयहरःपरः ॥ ४५ ॥ हरद्वयं वन्हिजायाहृदयं परीकीर्तितम् । कपर्दिने थयुगलं शिरोमन्त्र उदाहृतः ॥ ४६ ॥ नीलकण्ठाय ठद्वन्द्वं शिखामन्त्र उदाहृतः । कालकूटपदस्यान्ते बिषभक्षणङेयुतम् ॥ ४७ ॥ हुं

---

सीनमाक्रांता यस्मृतिं पदेति । उरगकचं विलंबबद्धसर्प्यं दक्षोर्ध्वादक्षधस्तनं यावत् । आयुधध्यानं तदुक्तं दक्षिणेचाक्षमालां च ज्ञानमुद्रां च पावनीं । वामेपुस्तकमापूर्णं पीयूषकलशं तथेति । बहिरिति चतुरस्रांतर्दिक्षु । गौर्येति । तद्ध्यानं यथा । ऐश्वर्यकामो देवेशं देव्यासार्धं यजेत् सुधीः।उदयार्कसमप्रख्यां बंधूकसदृशप्रभां। आपीनतुंगकठिनकुचद्वयविराजितां। त्रिनेत्रां द्विभुजां पद्महस्तांच जनमोहिनीं। देवस्य वामपार्श्वस्थां संचिंत्याराधयेन्नरः। तदा मंत्रे विशेषोस्ति मेधास्थाने श्रियं न्यसेदिति।श्रीकामी इत्यत्र पुटितत्वं ज्ञेयं भुंजान इत्यत्र प्रयोगे ध्यानविशेषो यथा। वामपाणिगतद्योतज्जातवेदसपुस्तकं। व्याख्यामुद्राक्षमालाभ्यां विराजितकरद्वयमिति। भिक्षान्नमथ वेति भुंजान इति संबंधः अश्रुतानात्यत्रबालापुटितत्वं ज्ञेयं सिद्धेत्यनेन वश्यादि प्रयोगा अपि सूचिता । वश्यकामो महादेवं रक्तवर्णं विचिंतयेत् । वामोरुसंस्थितां देवीं चिंतयेन्मदविह्वलां । प्रजासृष्टिनिमित्तं च चिंतयंती स्मरेच्छिवावििति । कल्पोक्तं यंत्रं लिख्यते भूर्जे रोचनपादशारसहितं पद्मं लिखेत्कर्णिका मध्ये तारलिपी ससाधकनराभिख्यं मनुं द्वंद्वशः । पत्रेष्वंत्यदलेति मंत्रलिपिभिः संवेष्टयेद्बाह्यतः संपूज्याथ जपेन सस्य फलितं कर्णेन सवेज्ञतां यात्येते जच साधयेदनुदितं स्तंभादिकं वश्यकृयद्यद्वांछितमन्यदत्रसुधियः कामानि हा मुत्रचेति नीलकंठमंत्रमाह। लोहित इति। लोहितः यः अग्नोरेफः तदासनः तेन प्र। सद्यओबिंदुस्तेन दीर्घा नकारः वह्नि बीजं रेफः तत् स्थातेन त्र । शांतिरीइंदुर्विंदुस्तद्युक्ता तेन त्रीं । लांगली हकारः सर्गो विसर्गः तद्युक्तः अरुणाऋषिस्त्रिष्टुप्छंदः आद्यं बीजं अंत्यः शक्तिः । विषद्वयं स्थावरजंगमं तद्धरमेतदिति विनियोग उक्तः ङेयु

फट् कवचमादिष्टं विद्वद्भिर्नीलकण्ठिने । स्वाहान्तमस्त्रमेतानि पञ्चाङ्गानि मनोर्विदुः ॥४७॥ मूर्द्धिनकण्ठ हृदं भोजे क्रमाद्बीजत्रयं न्यसेत् । ततः समाहितो भूत्वा नीलकण्ठं विचिन्तयेत् ॥ ४९ ॥ बालार्कायुततेजसन्धृतजटाजूटेन्दुखण्डोज्ज्वलं नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालङ्करैः । खड्वागं दधतं त्रिनेत्रविलसत्यंचाननं सुन्दरं व्याघ्रत्वक् परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥ ५० ॥ लक्षत्रयं जपेन्मन्त्रं तद्दशांशं ससर्पिषा । हविषा जुहुयात्सम्यक् संस्कृते हव्यवाहने ॥ ५१ ॥ शैवे पीठे यजेदेनं मृत्युञ्जयविधानतः । एवं पूजादिभिः सिद्धे मनौ मंत्रीविषद्वयम्॥५२॥नाशयेदचिरादेव नीलकण्ठ इवापरः । मनुनानेन सञ्जप्तैः कुंभस्थैः सलिलैः शुभैः ॥५३॥ अभिषिञ्चेद्विषाक्रान्त सविषान्मुच्यतेध्रुवम् । स्पृष्ट्वाजपेद्विषाक्रान्तं तत्क्षणं निर्विषो भवेत् ॥ ५४ ॥ बीजाभ्यां प्रथमान्ताभ्यां पार्श्वयोर्विषमाररेत् । मध्येन मध्यगं सर्वं मनुनानेन संहरेत् ॥ ५५ ॥ बहुना किमिहोक्तेन मन्त्रेणानेन मन्त्रवित् । कालकूटविषं साक्षाद्भुक्तं स्यात्परमामृतम् ॥ ५६ ॥ अग्निः संवर्तकादित्यरानिला षष्ठबिन्दुमत्। चिन्तामणिरितिख्यातं बीजं सर्वसमृद्धिदम् ॥ ५७ ॥ काश्यपोमुनिराख्यातश्छन्दोनुष्टुबुदाहृतम् । अर्द्धनारीश्वरः प्रोक्तो देवता जगतांपतिः ॥५८॥ रेफादिव्यंजनैः षड्दिः कुर्यादङ्गानि षट् क्रमात् । नीलप्रवालरुचिरं विलसत्त्रिनेत्रं पाशारुणोत्पलकपालत्रिशूलहस्तम् । अर्द्धांबिकेशमनिशं प्रविभक्तभूषं बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥ ६० ॥ एकलक्षं जपेद्बी-

---

तमिति चतुर्थ्येकवचनांतं । आयुधध्यानं पूर्ववत् । दक्षिणवक्त्रप्रधानमंत्रानंतरं उत्तरवक्त्रप्रधानं चिंतामणिमंत्रमाह । ग्नीति अग्नीरेफः संवर्तः क्षः आदित्यो मः रस्वरूपं । अनिलो यः औ स्वरूपं षष्ट ऊबिंदुः एतद्युतं बीजं । अत्र स्वरद्वयोच्चारणमपि गुरूदेशतो ज्ञेयं । रेफो बीजं । उकारः शक्तिः । सर्वसमृद्धिदमित्यनेन पौष्टिके सकारादिः शुभ्रः । आकर्षणवश्ययोर्यथोद्धृतो यथा ध्यानं च । क्षोभे हकारादीरक्तः हंसादिरपि यथोक्तउच्चाटने यकारादिर्धूम्रः । स्तंभने लकारादिः पीतः मोक्षार्थहादिः रेफरहितो वासित इति सूचयता विनियोगः उक्तः एषां संयोगऊर्ध्वाग्निस्थानेमित्युक्तः । जगतांपतिरित्यनेनोमेशोपि देवतेत्युक्तं । यदाहुराचार्याश्छंदोनुष्टुप् देवतो मेशः यांतैः षड्भिर्वर्णैरंगं वा देवतार्द्धनारीश इति । रेफादीति । कषयोगे क्ष इति क्षकारस्य व्यंजन द्वयं एवं रेफादि यांतैः षड्भिः सबिंदुकैः षडंगानीति संप्रदायविदः । अर्द्धनारीश्वरपक्षे ध्यानमाह । नीलेति । महेशार्द्धं नीलं पार्वत्यर्द्धं प्रवालरुक् पाशोत्पले देव्यर्द्धहस्ताग्रे । अन्ये महेशार्द्धहस्ते । प्रविभक्तभूषमिति । महेशांशेसर्प्पाद्यलं कृतं पार्वत्यंशेरत्ननाटंकाद्यलंकृतमिति । उमेशपक्षे ध्यानमाचार्योक्तं यथा । अहिशशधरगंगाबद्धतुंगात्ममौलिस्त्रिदशगणनतांघ्रिस्त्रीक्षणः स्त्रीविलासः । भुजगपरशुलान् खड्गवज्रीकपालं शरमपि धनुरीशोबिभ्रदव्याच्चिरंवः । इदं ध्यानं प्रयोग विषये । पुरश्चरणनित्यजपादौ तु अर्द्धनारीश्वरध्यानमेव । यदाहुराचार्याः । हावभावललिता र्द्धनारिकं भीषणार्द्धमथवा महेश्वरं । पाशसोत्पलकपालशूलिनं चिंतयेज्जपविधौ विभूतय इति । यजेत्पीठे । उमेशमित्यर्थः । परमर्द्धनारीश्वरं एवमभ्यर्चयेदित्यन्वयः एवमुपदेश म. गेणेत्यर्थः ।

जमित्थं मन्त्री विचिन्तयेत् । अयुतं मधुना सिक्तैर्जुहुयात्तिलतण्डुलैः ॥ ६१ ॥ शैवोदिते य-
त्पीठे प्रागंगैः षड्भिरीरितैः । वृषाद्यैर्मातृभिः पश्चाल्लोकपालैस्तदायुधैः ॥ ६२ ॥ एवमभ्यर्च-
येदेवमर्द्धनारीश्वरं परम् । तेजः कांति यशो लक्ष्मि वाचांभवति वल्लभः ॥ ६३ ॥ मासादार्वं
जपेन्मन्त्रमयुतं रोगशान्तये । स्वरावृतामिदं बीजं विगलत्परमामृतम् ॥ ६४ ॥ चन्द्रबिम्बस्थितं
मूर्द्धिनध्यायां क्ष्वेडगदापहम् । प्रतिलोमात्स्वरावीतं बीजं वन्हि गृहे स्थितम् ॥ ६५ ॥ रेफादि
व्यञ्जनोल्लासि षट् कोणाभिवृतं बहिः । भूतार्त्तस्यस्मृतं मूर्द्धिन भूतमाशु विनाशयेत् ॥ ६६ ॥
बीजं चन्द्रगतं वीतं स्वरैः षोडशभिः क्रमात् । गलत्परसुधापूर्णे नेत्रे ध्यातं रुजं हरेत् ॥ ६७ ॥
एवमेवस्मृतं बीजं कुक्षौ शूलादि रोगहृत् । स्फोटे विषज्वरे दाहे मोहेशीर्षगदे भ्रमे ॥ ६८ ॥
बीजमेतत्तथाध्यातं तत्तक्लेशान्विनाशयेत् । कुंकुमाभमिदं बीजं त्रिकोणगतमुज्ज्वलम् ॥ ६९ ॥
यस्य मूर्द्धिन स्मरेन्मन्त्री सवश्यो जायते चिरात् । ऊर्ध्वरेफस्थसाध्याख्यं बीजं वन्हिगृहे
स्थितम् ॥ ७० ॥ वन्हिगेहद्वयेनाग्नि युक्तकोणेन संवृतम् । प्रतिलोमश्वरावीतं चुल्लीस्थाने
निवेशितम् ॥ ७१ ॥ वशीकरोति रणणमचिरेणैव दासवत् । मधुरत्रययुक्तेन शालिपिष्टेन
पुत्तलीम् ॥ ७२ ॥ कृत्वा प्रतिष्ठितप्राणां विभज्यजुहुयाद्वशी । त्रिवासरमनेनैवसाध्यस्तस्य-
वशीभवेत् ॥ ७३ ॥ मकारगतसाध्याख्यमनलस्थगदाह्वयम् । चन्द्रगञ्चतुरस्रेणटान्तकोणेन
वेष्टितम् ॥ ७४ ॥ बीजं ताम्बूलपत्रस्थं प्रजप्तं मनुनामुना । भक्षितं नाशयेत्सम्यक् शिरोरोगं न
संशयः ॥ ७५ ॥ लिखित्वा बन्धुजीवेन त्रिकोणं बीजगर्भितम् । अत्र वन्हि समाधाय सम्य-
गाराध्य देवताम् ॥ ७६ ॥ जुहुयात्कृतसंपातं सर्पिषाष्टोत्तरंशतम् । संपाताज्येन संसिक्ता
त्रिलोहकृतमुद्रिका ॥ ७७ ॥ विधृताभूतवेतालकृत्यारोगविनाशिनी । ऊर्ध्ववन्हिरहितं मनुमेनंव-
न्हिगेहयुगले परिलेख्यम् ॥ ७८ ॥ अग्निमास्त्रिषु महीपुरवीतं यन्त्रमेतदुदितं ग्रहवारि । अग्निबीज

---

तत्र शैवं पीठं संपूज्यार्द्धनारीश्वरमावाह्याभ्यर्च्याङ्गैः प्रथमावरणंराद्यष्टवर्णैर्द्वितीयं मातृभिस्तृतीयं
तदनुलोकपालैर्वज्राद्यैश्च । तदुक्तमाचार्यैः । आरभ्याद्दिज्वलनमथदिक् संस्थैरष्टभिर्मनोर्वर्णैः ।
आराधयेच्चमातृभिरिति संप्रोक्तः प्रयोगविधिपर इति चंद्रबिंबस्थितं । ठकारस्थं मूर्द्धि ध्यातं वि
षार्त्तस्येति शेषः । वह्निगृह इति । उर्ध्वाग्ने त्रिकोणे रेफादिति रकषमरयानि । चंद्रगतं ठ-
कारगं । एवमेवेति ठकारगंस्वरावृतं गलत्परसुधारूपमिति । तथेति । ठकारगं स्वरावृतं गलत्पर
सुधारूपमिति । ध्यानं विनाशयेदिति । तत्तत्स्थाने अग्नीरेफः भूर्ज्जपत्रादौ यंत्रं कृत्वा चुल्ल्यां
निखनेदित्यर्थः पुत्तलीमिति । द्वादशांगुलांप्रतिष्टितप्राणामिति । त्रयोविंशे वक्ष्यमाणप्रकारेण
। मकार इति मंत्रस्थे । अनलस्थेति । ऊर्ध्वरेफगतरोगनामयुक्तं विषयावकाद्यदित्यस्य व्या-
ख्याने विषतंत्रंधिरेफ इति पद्मपादाचार्यैर्व्याख्यातं । चंद्रगं ठकारस्थं । टांतकोणेन चतुरस्रेण
वेष्टितं बीजमिति संबंधः । बंधुजीवपुष्परसेन । अन्यत्र बंधुजीवपदेन जपापुष्पं पठ्यते । उक्तं
च । जपात्रिकोणगे वह्नाविति । प्रपंचसारटीकाकारेण विज्ञानचंद्रिकाकृता व्याख्यातं । बं
धुजीवं बंधूकं जयावेति । त्रिलोहकृतेति । षष्टोक्तरीत्या । पद्मपादाचार्यैमंत्राक्षरसंख्यं लोहत्रयंभा-

जलसत्कोणत्रिकोणलिलिते ध्रुवे ॥ ७९ ॥शरावेकपिलाज्याब्जसूत्रदीपं प्रविन्यसेत् । घटेनैनं पिधायास्य पृष्ठे यन्त्रमिदं लिखेत् ॥ ८० ॥ भूतार्तमन्त्रसंस्थाप्य चिन्तामणिमनुं जपेत् ॥ तमाविश्य क्षणान्मुं चेग्रहः क्रूरोगामिषति । कृशानुभवनद्वये मनुर्मिलिखिलापुनस्तदश्रिषुहलोलिखेत्स्वरयुगं ततः संधिषु । ध्रुवेण परिवेष्टितं धरणि गेहमध्यस्थितं मनोरथफलप्रदं भवति यन्त्रमेतन्नृणां॥८२॥षट्कोणान्तस्त्रिकोणे लिखतुमनुमिमं साध्यनामक्षराढ्यं षट्कोणेष्वंगमन्त्रान्वसुदलविवरेणवष्टमंत्राक्षराणि॥वीतं बाह्ये कलाभिस्तदनुपरिवृतं कादिभिर्यादिभिस्तत्क्षोणीविंबेन युक्तंनृहरिमनुयुतायन्त्रमापद्ग्रहघ्नम्॥८४॥अस्मिन्यन्त्रे प्रतिष्ठाप्यकलशं प्रोक्तवर्त्मना॥कृताभिषेकः स्यात्कृत्याभूतद्रोहादिशांतिः ॥८५॥ स्वरावृतमनुं मनु लिखतु टांतमध्ये ततः षडस्रिषु हुताशनं तदनुकादिवर्णैर्वृतम् ॥ धरापुरयुगेन तन्नृहरिबीजयुक्ताश्रिणा प्रवेष्टितमुदाहृतं दुरितरोगकृत्यापहम् ८६ क्षकारोमाग्निपवनवामकर्णार्द्धचंद्रवान्॥उक्तं तुंबुरुबीजं सद्यः सिध्यंति साधकाः॥ ॥८७॥ षट् दीर्घभाजा बीजेन षडंगानि प्रकल्पयेत् ॥ क्षकाररहितं बीजं क्रमाज्ज्वलसहान्वितम् ॥ ८८ ॥ चत्वारि दे बीजानिदेव्यो ज्ञेया इमाः क्रमात् ॥ जयाख्याविजयापश्चादजिताचापराजिता ॥ ८९ ॥ बीजमंगुलिषुन्यस्य करयोर्व्यापकंततः ॥ कनिष्ठादिषु विन्यस्येत्ष-

---

ष्ठमित्युक्तं । अग्निं परं । अश्रिषु षट्सु कोणेषु। लिखिते इति। रक्तरजसेति शेषं । उक्तं च नारायणीये । तारे बीजांककोणाग्नि गेहस्थे रजमार्पित इति । अपेक्षितार्थद्योतनिकायां व्याख्यातं रक्तेन रज साग्निगेहं संश्लिष्य तत्कोणेष्वग्निबीजं लिखित्वा तन्मध्ये प्रणवं लिखेदिति । एतं शरावं । अस्य घटस्य । इदमित्युक्तं । लिखेदिति । जपया । अत्रेति । लिखितयंत्र पृष्ठे । जपेदिति । ग्रस्तं संस्पृश्येति शेषः । नश्येदिति । मंत्राभिषेकेण । तदुक्तं नारायणीये । तत्पिधायघटेनान्यतस्त्वयंत्रे कृपया कृते । घटपृष्ठगते ग्रस्तं न्यस्तचिंतामणिं जपेत् । ग्रहावेशविनाशार्थं ग्रस्तंतेनाभिषेचयेदिति । स्वेति चिंतामणिमंत्रं। तेनेति। चिंतामणिमंत्रेणेति लघुटीकायां व्याख्यानं तदस्रिषु । तत्कोणेषु । हलो व्यंजनानि । बीजस्थानिरकषमरयाः । स्वरयुगं बीजस्थं औ ऊ । ध्रुवेण प्रणवे नैकावृत्तिः । धरणि गेहास्रिषु नृसिंहबीजलिखितं शेयं अष्टमंत्राक्षराणीति । षट्हलः द्वौ स्वरौ एकैकवर्णरीत्या । कलाभिः स्वरैः कादिभिर्यादिभिरित्यनेन मातृकया आवृत्तित्रयमुक्तं नृहरिमन्विति । नृसिंहबीजं भूगृहकोणेषु । तदुक्तं । कुणेष्वास्के नारसिंहमिति । प्रोक्तवर्त्मनेति । षष्टोक्तरीत्या । टांतमध्ये । ठकारमध्ये । षडस्रिषु । षट्कोणेषु । हुताशनं रेफं । तुंबुरुबीजमाह। क्षकार इति क्षकारः मस्वरूपं अग्नीरेफः पवनो वायुः वामकर्ण ऊकारः अर्द्धचंद्रो बिंदुस्तद्युक्तः । बीजशक्ती पूर्ववत् षट्दीर्घेति । षडंगमंत्रोद्धारः । न्यासंत्वग्रे वक्ष्यति । जभसह इति स्वरूपं । एतानि क्रमेण क्षकारस्थाने योजितानि चत्वारि देवीबीजानि । तदुक्तं प्रयोगसारे । बीजं जभसहोपेतं क्षेत्रस्थाने यथाक्रमादिति । नारायणीयेपि । मूलंजभसहोपेतं देवीबीजान्यमंदिरमिति । अपेक्षितार्थद्योतनिकायामेव बीजान्युद्धृतानि लसत्तुलेखकदोषत्रयात्क्वचिदृश्यते । बीजमिति । मूलबीजं । करयोर्व्यापकमि-

डंगानि तलावधि ॥ ९० ॥ देवंदेवीः स्वबीजानि कनिष्ठादिषुविन्यसेत् ॥ पादान्मूर्द्धावधि न्यस्येन मुष्टिना घयवेषु तत् ॥ ९१ ॥ तलाभ्यां व्यापकं कुर्यान्मूर्धादि चरणावधि । षडंगा नि ततोन्यस्येद्यथास्थानं विशालधीः ॥ ९२ ॥ देवं देवी यथा पूर्वमूर्द्धास्यत्हृदयांबुजे ॥ नाभौ गुह्य क्रमान्यस्ये पश्चाद्देवं विचिंतयेत् ॥ ९२ ॥ रक्तांभमिंदुसकलाभरणं त्रिनेत्रं खट्वांगपाशसृणिशुभ्रकपालहस्तम् ॥ वेदाननं चिपिटना समनर्घ्यभूषं रक्तांगरागकुसुमां शुकमीशमीडे ॥ ९४ ॥ लक्षमानं जपेन्मन्त्रं जुहुयात्सर्पिषायुतम् ॥ वक्ष्यमाणे यजेत्पीठे देवमावरणैः सह ॥ ९५ ॥ नपुंसकस्वरौर्विद्वान्स्वराद्यं तद्वायेन च । धर्मादिकानधर्माद्यान्पादागात्राणि विन्यसेत् ॥ ९६ ॥ इकारेण न्यसेत्पश्चात्ततुरूपान्गुणानथ ॥ शांत्यातत्परवर्णेन माया विद्यामयेक्रमात् ॥ ९७ ॥ अधऊर्ध्वछदेन्यस्येदर्घीशेम ततो बुजम् ॥ संध्यक्षरैर्यजेन्मन्त्री शक्तीर्वामादिकाः क्रमात् ॥ ९८ ॥ वामांज्येष्ठां तथा रौद्री मिछांज्वालास्वरूपिणीं । एवं प्रकल्पिते पीठे मूर्ति मूलेन कल्पयेत् ॥ ९९ ॥ आवाह्य पूजयेद्देवं तस्यामावरणैः सह ॥ अंगावृतेर्बहिर्देवी दिक्पत्रेषु समर्चयेम्॥१००॥जपाद्याः स्वस्वबीजनरक्ता रक्तानुलेपनाः ॥ अरुणांशुकपुष्पाढ्यास्तांबूला पूरितानना: ॥१॥ वल्लकीवादनपरामदमन्मथपीडिताः ॥ ईशा-

---

ति । हस्ततलयोरत्रोपरि च मूलबीजेनेति शेषः तदुक्तं । नारायणीये । न्यास्यांगुलिषु मूलं तद्धस्तयोर्व्यापकं न्यसेदिति । अंगुष्टादिष्वंगुलीषु न्यसेद्बीजमित्यनेनैव करन्यासस्य प्राप्तत्वात् । कनिष्ठादिष्विति। विशेषविधानार्थं पुनरुक्तिः स्वबीजादीति देवस्य मूलं देवीनां तूक्तानि चत्वारि अक्षराद्यान्वितमूलं। मुष्टिना। दक्षिणेन। अवयवेषु। पादजानुगुह्यनाभिहृदयकंठमुखशिरःसु सएवमपेक्षितार्थद्योतनिका कारीक्ततलमूलं। उक्तं चनारायणीये मुष्टिनावयवेषु च पादादिन्यस्य मूर्द्धादि हस्ताभ्यां व्यापकं न्यसेदिति विशालधीरित्यनेन शैवमुद्राभिः सहेत्युक्तं । यथापूर्वमिति । स्वस्वबीजादि ध्यानमाह रक्ताभमिति । सृणिरंकुशः । दक्षाधस्ताद्वामाधः पर्यंतमायुधध्यानं । स्वदेहे पीठकल्पनामाह। नपुंसकेति। अनुलोमविलोमगैरिति । लेखकदोषवशात्प्रामादिकः पाठःस्वराद्यंतद्वयेन चेति पाठः । तदुक्तं नारायणीये । नासादिभिः स्वराद्यंतैश्चतुर्भिश्च क्रमादबुधइति । प्रयोगसारेपि । क्लोबैराभ्याममोभ्यां च क्रमाद्धर्मादि पूजनमिति । एवं षोडशापि स्वरा उपयुक्ता भवंति । अपेक्षितार्थद्योतनिकाकारेण एवमेव प्रयोगो लिखितः तेन क्लोबाद्यान् धर्मादीन् [illegible]: एतदाद्यानधर्मादीन्। विन्यसेदिति। चतुर्थो क्तस्थानेषु। गुणानिति। सत्वात्वादीन् त्रिवर्णान् । शांत्या ईकारेण । तत्परवर्णेन उकारेण । अर्घीशेन ऊकारेण । संध्यक्षरैरिति । एऐ ओऔ एभिः एषां यथासंधिसंभवत्वं तथा द्वितीयपटले प्रतिपादितं । ज्वालास्वरूपिणीरितिपीठशक्तिध्यानं । तदुक्तं नारायणीये । ज्वलदनलशिखाभाभास्वराः शक्तयः स्युरिति । मूलबीजमुद्धार्य्य तुंबुरयोगपीठाय नम इति पीठमंत्रोपि सूचितः । एवं प्रकल्पिते पीठे इत्यनेम । एवं प्रकल्पिते पीठे इत्यनेन । एवमिति येन प्रकारेण देहे पीठं कल्पितं तेनैव क्रमेण मंडलेपि पीठे परिकल्पित इत्यर्थः तस्यामिति । मूर्त्तौ । ईशानकोणेष्विति । ईशकोणमारभ्याप्रदक्षि

द्विकोणेष्वभ्यर्चयेद्दूतीबीजादिक : क्रमात् ॥२॥ दुर्भगांसुभगां भूयः करालीं मोहिनीमिमाः॥ बद्धांजलि पुटाः किंचिदानम्रवदनांबुजाः॥ ३ ॥ देवी सदृशभूषाढ्या दूती मन्त्रान्विदुः क्रमात् ॥ चतुरः शादिकान्वर्णानर्द्धेंदुकृतशेखरान् ॥ १०४ ॥ लोकपालान्यजेद्बाह्ये वज्राद्यायुधसंयुतान् ॥ एवं यो भजते भक्त्या देवमुक्तेन वर्त्मना ॥ १०५ ॥ न तस्य दुर्लभं किंचिन्त्रिषु लोकेषु विद्यते ॥ वायुवह्निपुरांतस्थं बीजं स्मृत्वा जपेत्सुधीः ॥ १०६ ॥ ज्वरभूत महारोगानश्यंति तेन तत्क्षणात् ॥ क्रुद्धस्य हृदये ध्यात्वा जपेद्बीजमनन्यधीः ॥ १०७ ॥ सवश्यो जायते शीघ्रं मंत्रस्यास्य प्रभावतः ॥ हृद्रोगे कामला रोगे विष्टंभे श्वासकासयोः ॥ ॥ १०८ ॥ एतज्जप्तं जलं प्रातः पिबेत्तद्रोगशांतये ॥ कृत्वा नवपदात्मानं मंडलं तत्र शोभनात् ॥ १०९ ॥ कलशान्स्थापयेन्मंत्री नवपूर्वोक्तलक्षणान् ॥ मध्येदेवं यजेत्सम्यक् देवीः पूर्वादिकुंभगाः ॥ ११० ॥ इष्ट्वा कोणस्थिता दूतीरभिषिंचेत्पतिव्रतां ॥ नारी सा लभते पुत्रं वंध्यापि किमुतापरा ॥ १११ ॥ भूतकृत्याग्रहद्रोहशांतिदः संपदावहः ॥ अभिषेकोपमा ख्यातो राज्ञां विजयवर्द्धनः ॥ ११२ ॥ अन्तर्बीजं स्वरगणलसत्केसरं तस्य बाह्ये देवीदूती मनुयुतदलं दिग्विदिक्षु क्रमेण ॥ काद्यैर्वर्णैर्वृतमथबहिर्भूमिगेहेन वीतं यंत्रं प्रोक्तं सकलसुखदं

---

णं प्रागेयग्रयंत्तमित्यर्थः तदुक्तं नारायणीये । तादृक् रूपाश्च दूत्योरचितकरपुटाः किंचिदानम्रवक्त्राः शर्वाद्यग्न्यंतसंस्था इति । शादिकानिति । शवसहात् । अर्द्धेन्दुर्बिंदुः । तदुक्तं प्रयोगसारे । ऊष्माणोबिंदुशेखराः। दूतीनामिति। तद्बीजमिति । नारायणीये इति । बीजानि दूतीनामूष्माणो बिंदुशेखरा इति । वाध्विति । प्रथमपटलोक्तवायुमंडलं तत्राग्निपुरं तदंतस्थ बीजमित्यर्थः । स्मृत्वा मूर्द्धीति शेषः । वश्यो जायत इत्यत्र कामबीजादित्वं । रोगशांतये इत्यत्र नृसिंहबीजादित्वं । नवपदान्वितं नवनाभं तृतीयोक्तं । पूर्वोक्तेति । षष्ठोक्त कोणस्थिता ईशादि । लभते पुत्रमित्यत्र मायाबीजादित्वं । विजयवर्द्धन दुर्गाबीजादित्वं ज्ञेयं । यंत्रमाह । अंतरिति अष्टदलं कमलं कृत्वा तत्कर्णिकायां मूलमालिख्य दिग्दलेषु देवी बीजानि विदिक्षु दूतीबीजानि क्रमेणेति पूर्ववल्लिखेत् । खड्गरावणमंत्रमाह। प्रणव इति । ङेंतं पशुपतिं । पशुपतये । तारः प्रणवः । ततः अधिपतये । अत्र प्राक्तनेन सह संधिः । भुवं प्रणवम् । प्रथमिति सरसरनृत्यनृत्य । रुद्रो इति स्वरूपं । अथानंतरमग्निसुंदरो स्वाहा । अन्यत्र कुत्रापि न संधिः । प्रणवो बीजं स्वाहा शक्तिः । कांतः खः ईशानाद्या इति । पूर्वपटलोक्ताः । देह इति शिरोवदनहृद्गुह्यपादेषु । वक्त्रेष्विति । ऊर्ध्वादि पंचसु । कांतेनेति । खकारेण । आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्ये एवमांतं । बीजेनेति । अनंतरं वक्ष्यमाणेन । तदिति बीजं । मनुरोः । दूतीरिति । वक्ष्यमाणाः । चंद्रांकितजटामित्यष्टमी । सव्येनेत्यादक्षिणेन । उदीच्यामित्युत्तरेण संबंध्यते । कोणपालानिति । आग्नेयादि । पंचाक्षरां

रोगकृत्याग्रहघ्नं ॥ ११३ ॥ प्रणवो हृदयं पश्चात् ङेंतपशुपतिपुनः ॥ तारो नमोभूतपदं ततो धिपतये ध्रुवं ॥ ११४ ॥ नमो रुद्राय युगलं खड्गरावणशब्दतः ॥ विहरद्वितयं पश्चात्सर नृत्ययुगं पृथक् ॥ ११५ ॥ श्मशानभस्मार्चितांते शरीराय ततः परं ॥ घंटाकपालमालादि धरायेदि पदं पुनः ॥ ११६ ॥ व्याघ्रचर्मपदस्यांते परिधानायतत्परं ॥ शशांककृतशब्दांते शेखराय तत परं ॥ ११७ ॥ कृष्णसर्पपदं पश्चात्ततो यज्ञोपवीतिने ॥ चलयुग्मं वल्गुयुगमनिवर्तकपालिने ॥ ११८ ॥ हनयुग्मं ततो भूतान् त्रासयद्वितयं पुनः ॥ भूयो मंडलमध्ये स्यात् कटयुग्मं ततः परम् ॥ ११९ ॥ रुद्रांकुशेन शमय प्रवेशय युगंततः ॥ आवेशय युगं पश्चाच्चंडासिपदमीरयेत् ॥ १२० ॥ धराधिपतिरुद्रोथ ज्ञापयत्यग्निसुंदरी ॥ खड्गरावणमंत्रोयं सप्तत्यूद्धशताक्षरः ॥ १२१ ॥ भूताधिपतये स्वाहा पूजामंत्रोयमीरितः ॥ सद्यादि पंचह्रस्वाढ्य कांतबीजादिकान्यसेत् ॥ १२२ ॥ ईशानाद्याः पंचमूर्तीर्देहे चक्रेपुच क्रमात् ॥ षड्दीर्घबिंदुयुक्तेन कांतेनांगाक्रियामताः ॥ १२३ ॥ घंटाकपालमणिमुंडकृपाणखेटखट्वांगशूलडमरूनभयंदधानं ॥ रक्तांगमिंदुशकलाभरणं त्रिनेत्रं पंचाननाब्जमरुणांशुकमीशमीडे ॥ १२४ ॥ अयु

---

धसेति । अत्रदधिमधुहरिद्रालाजतिलरूपेण । तदुक्तमाचार्यैः । लाजतिलनक्तरजोदधिसत्क्वानि भूतकूराल्यभिति ॥ ॥ इति श्रीशारदातिटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायामेकोनविंशतिः पटलः ॥ १९ ॥ मंत्रमुद्धरति ।मायेति। मायाशक्तिबीजं । तनुरूपेति स्वरूपं वर्महुं । महामनुरित्यनेन कामनाविशेषे तत्तद्बीजात्वन्तमुक्तं । यदाहुः । हुमंतस्तंभने मंत्रः क्रोमाकृष्टौ समापने । वषडंतः संवननेन मोतो विषनाशने । ग्रहचौररिपुध्वंसे हुं क्रोमंतो विधीयते । शमांत आविवेष्टाख्ये नोमंतोमारणे भवेत् । फडंतोभूतसंहारे मंत्रोयं कल्पपादपः इति ईश्वरकल्पे तु । प्रस्फुरद्वयवर्जितः एकचत्वारिंशदक्षर उद्धृतः । मंत्रस्थहलो बीजानि । स्वराः शक्तयः । हुं बीजं । क्रों शक्तिरिति पद्मपादाचार्याः । मंत्रवित्तमैरित्युत्तरत्रसंबध्यते । तेनांगमंत्रेषु एकादशभागेष्वपि प्रत्येकं प्रणवमायाबीजयोगः सूचितः । पद्मपादाचार्यसंमतः । तावद्भिर्दशभिः । वसुवर्णैरष्टार्णैः । मानार्णैर्दशभिः । क्वचिदंत्यार्णैरिति पाठः तदा अवशिष्टाक्षरैरित्यर्थः रुद्रभिन्नेति एकादशधाभिन्नैः । तमेव भेदमाह।पंचभिरिति करणैः चतुर्भिः ध्यानमाह सजलेति । दक्षैर्भुजैः परशुखड्गबाणशूलानिवामैरन्येवमायुधन्यानं । ग्रहध्वंसे । ग्रहवैकृते । यदाहुः । कृष्णोभिचारग्रहवे कृतेचेति । अभिचारइत्याद्युपलक्षणं । तेन कामना विशेषे ध्यानविशेषा अपि ज्ञेयाः । यदाहुः । सहस्रांघ्रिरवंहस्तैर्धनुः पंचशतैरपि । संधायाकृष्य च शरान्विमुंचं तमनारतं । धावंतं रिपुसेनायां वमद्विद्युद्घनोपमं । ज्वलत्पिंगोर्ध्वकेशं च गजचर्मावगुंठितं । ध्यायेन्नाशाय सैन्यानामरातीनां महास्वनं । त्रिपादहस्तनयनं नीलांजनचयोपमं । शूलासिशूचीहस्तं च घोरदंष्ट्राट्टहासितं । घोरपस्मृतिनाशाय ग्रहशांत्यै विचिंतयेत् । धावंतं वैरिणं पश्चादत्युग्रं सधनुः शरं । ध्यायेदुच्चाटनायारेः स तु देशांतरं व्रजेत् । खड्गं खेटं तथा घंटां वेतालं शूलमेव च कपालं चापि बिभ्राणं पिंगोर्ध्वकचभीषणं । भूतप्रेतादि नाशाय ध्यायेद्भीमाट्टहासिनं । सीताब्जशीतांशुपुटमिंदुकांतिंद्रवच्च-

तद्द्वितयं मंत्रं जपित्वा तद्दशांशतः ॥ पायसेन घृताक्तेन जुहुयात्तस्य सिद्धये ॥ १२५ ॥ पंचाक्षरो दिते पीठे पूजयेत्खड्गरावणं ॥ बीजेन मूर्तिक्लृप्तिः स्यात्तत्कांतं मनुविंदमत्॥१२६ अंगानि दलमूलेषु दूतीः पत्रेषु संयजेत् ॥ चुलुकुंडांमस्खलिनीं तृतीयां कृष्णपिंगलां १२७॥ फल्गुनीं टिरिटिल्लीं च पंचमीं मंत्रमालिकां ॥ सप्तमीं शंखिनी पश्चाच्चंद्रांकितजटामिमाः ॥ ॥ १२८ ॥ पूर्वपत्रादि सव्येन खड्गरावणवल्लभाः ॥ ऐंद्रीं कौमारिकीं ब्राह्मीं वाराहीं वैष्णवीं पुनः ॥ १२९ ॥ वैनायकीं च चामुंडां माहेशीं दिक्षु पूजयेत् ॥ द्वारपालान्यजेद्दिक्षु द्वौ द्वौ प्रागादिदेशिकः ॥ १३० ॥ रौद्रपिंगलनामानौ द्वौ श्मशानं बिभीषणौ ॥ दृढकर्णं भृंगिरीटि मुदीच्यामर्चयेत्पुनः ॥ १३१ ॥ आमर्दकमहाकालौ कोणपालान्यजेत्पुनः ॥ कुंभकर्णमशोकाख्यं भल्लाटं च सिंहारकं ॥ १३२ ॥ इंद्रादिकान्लोकपालान्सायुधान्पूजयेततः धूपदीपादिभिर्देवं प्रीणयित्वा महेश्वरं ॥ १३३ ॥ पंचकूटांश्च सार्बाह्ये ततो भूतबलिं हरेत् ॥ एवं पूजादिभिः सिद्धे मंत्रेमंत्रविदांवरः ॥ १३४ ॥ नाशयेत्सकलान्भूतान्कृत्याग्रहमहाभयान् ॥ आदेशं तस्य कुर्वंति भूताभीतामहात्मनः ॥ १३५ ॥ बहुना किमिहोक्तेन मंत्रेणानेन भूत

---

सं। आशांबरं व्याघ्रनखप्रमुखैर्बालभूषणैः। अलंकृतांगं द्विभुजं त्रिवर्षार्द्धकरूपिणं। कम्रांगं सुमुखं सौम्यं नीलकुंचितकुंतलं। स्मरन्नेवमघोरं यः समृत्युविजयीभवेत्। तप्तजांबूनदनिभं शूलखड्गवराभयं। रक्तारविंदवसतिंस्मरन्नुच्चैः श्रियं लभेदिति। शुभैरित्यनेनावकरं दूरीकृत्य प्रक्षाल्यशोषितैरित्युक्तं संपूजयेद्देवमिति शेषः। षट्कोणेति। अष्टदलं पद्मं कृत्वा तदुपरिषट्कोणं विधाय चतुर्द्वारं कुर्यात्। प्रोक्तलक्षणाः षष्टपटलोक्तस्वरूपाः अपामार्गेति अपामार्गसमिधः साज्यैरिति। षष्टं द्रव्यमाज्यमित्यर्थः। हेम धत्तूरः पूर्ववदिति। यामिन्यां प्रत्येकं सहस्रं पंचगव्यहविरिति। पंचगव्यसिद्धयाय समित्यर्थः। तदुक्तं क्रियाकालगुणोत्तरे तंत्रे। पंचगव्योद्भवं शुद्धं चरुं तद्वत् घृतं नवमिति। हुत्वा निशोति ज्ञेयं। यंत्रमाह।मध्य इति।साध्येति।साधकादीनामुपलक्षणं। अथ वा साध्यतेयत्तत्साध्यं तत्सहितं। तेनामुकस्यामुकं वशं कुरुकुरु। अयमर्थः साध्यशब्दसंगृहीतो भवति। अष्टदलं कृत्वा तत्कर्णिकायां साध्यसाधककर्मसहितं शक्तिबीजं स्वरावीतमालिखेत्। तदुक्तं। हृल्लेखास्थितसाध्याक्षरविलसत्कर्णिकं कलावीतमिति अष्टवर्गानिति। कचटतपयशलान्।गुणमितान् त्रिशः मंत्रवर्णान् स्फुराद्यान् चटचटांतान् अग्रदेशेषु पत्राग्रेषु।तद्वदिति त्रिंशोमंत्रवर्णान् प्रचटाद्यान् घातयांतान्। तद्बाह्ये परस्परव्यतिभिन्नं त्रिकोणद्वयं कृत्वा तत्कोणेषु वर्मास्त्रे लिखेत् प्राग्विधानादिति षष्टोक्तरीत्या। तदुक्तं। मंत्राक्षरत्रयोद्यतदलमध्यदलाग्रकं च तद्बाह्ये। वह्निपुटाश्रितकवचास्त्रमिति। केचित्तु वर्मास्त्रोल्लासिकोणेदहनपुरयुगे मध्ये शक्तिमिति। विप्रकृष्टान्वयेनाष्टदलकर्णिकायां षट्कोणमाहुः। तदसंबद्धं। लिखिताचार्यवचनविरोधात्। यंत्रांतरमाह।षडिति। एकाक्षरक्रमेण प्रस्फुरद्वंद्वकोणे षट्कोणे अंतर्मध्ये स्फुरयुगलहृता यथावत्साध्यसाधककर्मसहिता शक्तिर्लेख्या। शिष्टैरिति। घोराद्यैर्घातयांतैः। दहनपुरयुगेनावृतमिति। बाह्ये। सर्वसिद्धिप्रदायकमित्यनेनैतदुक्तं भवति। यदाहुः। अथ शत्रुजयं वाक्छन् घातयप्रपुटं रिपोः।

ले ॥ सदृशोनास्ति मंत्रोन्योभूतनिग्रहसाधने ॥ १३६ ॥ इतिशारदातिलके ऊनविंशः पटलः ॥ १९ ॥ अथाभिधास्ये विधिवदघोरास्त्रमनुत्तमं ॥ यस्य संस्मरणादेव सर्वे नश्यंत्युपद्रवाः ॥ १ ॥ मायास्फुरद्वयं भूयः प्रस्फुरद्वितयंततः ॥ घोरघोरतरेत्यंते तनुरूपपदं पुनः ॥ ॥ २ ॥ चटयुग्मं तदंतेस्यात्प्रचटद्वितयं ततः ॥ कहयुग्मं वमद्वंद्वं ततो बंधयुगंपुनः ॥ ३ ॥ घातयद्वितयं वर्म फडंतः समुदाहृतः ॥ एकपंचाशदर्णोयमघोरास्त्रमहामनुः ॥ ४ ॥ अघोरोस्य मुनिः प्रोक्तश्छंदस्त्रिष्टुबुदाहृतं ॥ अघोररुद्रः संदिष्टो देवता मंत्रवित्तमैः ॥ ५ ॥ हृदयं पंचभिः प्रोक्तं शिरः षड्भिरुदाहृतं ॥ शिखा दशभिराख्याता तावद्भिः कवचं मतं ॥ ६ ॥ वसुवर्णैः स्मृतंनेत्रं मासार्णैरस्त्रमीरितं ॥ मूर्द्धनेत्रास्य कंठेषु हृन्नाभ्यं धूरुषु क्रमात् ॥ ७ ॥ जानुजंघापदद्वंद्वे रुद्रभिन्नाक्षरैर्न्यसेत् ॥ पंचभिश्चपुनः षड्भिर्द्वाभ्यामष्टभिरक्षरैः ॥ ८ ॥ चतुर्वर्णैः षडर्णैश्च करणैः करणैः पुनः ॥ चतुर्भिः षड्भिरक्षिभ्यां वर्णभेदोपमीरितः ॥ ९ ॥ सजलघनसमाभं भीम दंष्ट्रं त्रिनेत्रं भुजगधरमघोरं रक्तवस्त्रांगरागं ॥ परशुडमरुखड्गान्खेटकं बाणचापौ त्रिशिखिनरकपाले बिभ्रतं भावयामि ॥ १० ॥ अभिचारे ग्रहध्वंसे कृष्णवर्णो भवेद्विभुः ॥ वश्येकुसुमसंकाशो मुक्तौ चंद्रसमप्रभः ॥ ११ ॥ लक्षमेकं जपेन्मंत्रं घृतसिक्तैस्तिलैः शुभैः ॥ तद्दशांशं प्रजुहुयान्मंत्री मंत्रस्य सिद्धये ॥ १२ ॥ शैवे संपूजयेत्पीठे षट्कोणांतस्थपंकजे ॥ अंगपूजांकेसरेषु कृत्वा पत्रेषु तत्परं ॥ १३ ॥ परशुंडमरुंखड्गं खेटं बाणं च कार्मुकं ॥ शूलं कपालं प्रयजेदष्टास्त्राण्यस्य देशिकः ॥ १४ ॥ दलाग्रेषु ततः पूज्या ब्राह्म्याद्याः प्रोक्तलक्षणाः ॥ लोकेशान्पूजयेत्पश्चादायुधैः स्वैः समन्वितान् ॥ १५ ॥ इति पूजादिभिःसिद्धे मंत्रेणानेन साधकः ॥ इष्टान्प्रयोगान्कुर्वीत सिध्यंते नात्र संशयः ॥ १६ ॥ क्रमात्सर्पिर-

---

नामकृत्वा चिताभूमौ नियुतं प्रजपेन्मनुं । लवणोषणधूमागर्निसूरणोन्मत्तवारिभिः । सिक्तैः कारस्करफलैर्जुहुयादयुतं सुधीः। उच्चाटे प्रस्फुरपुटं मोहने कहसंयुतं। स्तंभने चटपुटं वियोगे प्रचटेन तु । वमेत्युन्मादने भूयो बंधयुग्मं न बंधने इति । अथ चतुस्त्रिंशदक्षराघोरास्त्र यंत्रमुच्यते । अथोसमपंक्त्याख्युक्तंसरोजं ततः कर्णिकामध्यतारस्य मध्येत्रियोसारसंभिन्नमाह्वयं स्यात् मनुं वहश्रः पत्रमध्येषु लिमप्या । इतं यंत्रराजं समावध्यसूत्रैः करे वागले मस्तके बाहुकव्यां।वहन्यः।समग्रश्रियांभाजनं स्यात्तथैवाणिमाद्यैरलंविस्तरेणेति । समपंक्त्याख्युतं समदशदलं मंत्रः प्रथमपटले मदुक्तोऽनुसंधेयः । दिवषड्वग्रचरद्भिःषडक्षरैर्वर्मास्त्रद्विठांतैरंगं।अस्यान्यत्सर्वं पूर्वमंत्रवद्बोध्यम्।एकचत्वारिंशदक्षरस्य तुवेदषट् वेददिङ्नागषड्वर्णैः शक्तिपूर्वकैः हुं फडन्तैः षडंगस्यात् । अन्यत्पूर्ववदीरितं इति । पाशुपतास्त्रमाह।तार इति।तारः प्रणवः । वांतः शः धरालः तत्संस्थः तेनश्ल । वामनेत्रमीः दुर्वेदुः तेनश्लीं । पार्श्वः पः : वकः कर्णयुत उकारयुतः तेनशु । ब्रह्मात्रिरपिर्गायत्रीछंदः श्लींबीजं । हुं शक्तिः । ग्रहेत्यादि विनियोगोक्तिः । षड्भिर्वर्णैर्मंत्रस्थैः । हुं फडंतैरिति । प्रत्येकं । आयुधध्यानं तु दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरंत्ये । वर्णलक्षं । मुंचतीत्यत्र नृसिंहबीजादित्वं जपेदित्यत्र दुर्गाबीजादित्वमित्यादि ज्ञेयं।चेत्रपालमंत्रमाह।वर्णेति।वर्णान्त्यः चः श्री स्वरूपं चक्रभः पदं । वसुवर्णोयमिति । वसुवर्णत्वम-

पामार्गतिलसर्षपपयायसैः ॥ साज्यैः सहस्रं प्रत्येकं यामिन्यांजुहुयात्सुधीः ॥ १७ ॥ होमोयं नाशयेन्सद्यो भूतकृत्यादुपद्रवान् ॥ सितकिंशुकनिर्गुंडी होमोपामार्गसंभवैः ॥ १८ ॥ समिद्भिः कृतोहोमः पूर्ववद्भूतशांतिदः ॥ अपामार्गार्कत्रधयोः पंचगव्यसमुक्षिताः ॥ १९ ॥ समिधो जुहुयात्कृष्णपंचम्यां निशि संयुतः ॥ पृथक् सहस्रहोमेन भूतानां निग्रहो भवेत् ॥ २० ॥ क्रमात्सर्पिरपामार्गपंचगव्यहविर्घृतैः ॥ हुत्वा सहस्रं प्रत्येकं पात्रे संपातयेत्सुधीः ॥ २१ ॥ संपातसर्पिषा साध्यं भोजयेद्भूतशांतये ॥ मध्ये शक्तिं ससाध्यां स्वरगणसहितां केसरेष्वष्टवर्गान्पत्रांतन्मंत्रवर्णान् लिखतगुणमितानग्रदेशेषु तद्वत् ॥ वर्मास्त्रोल्लासि कोणेदहनपुरयुगे कल्पिते भूपुरस्थे यंत्रेस्मिन्प्राग्विधानात्कृतकलशविधिः सर्वदुःखापहारी ॥ २३ ॥ षट्कोणे शक्तिरंतः स्फुरयुगयवृता प्रस्फुरद्वंद्वकोणे शिष्टैर्मंत्रस्य वर्णैरसकरणचतुः षट्चतुर्वेदवेदैः ॥ षड्भिक्लृप्ताष्टपत्रं दहनपुरयुगेनावृतं वर्म फड्भ्यां राजत्कोणेन वीतं धरणि पुरयुगं यंत्रमाघोरमेतत् ॥ २५ ॥ क्षुद्रचौरग्रहव्यालभूतापस्मारनाशनं ॥ यंत्रमेतत्समाख्यातं सर्वसंपत्प्रदायकं ॥ २६ ॥ तारोवातोधरासंस्थो वामनेत्रेंदुभूषितः ॥ पार्श्वोवकः कर्णयुतो वर्मास्त्रांतः षडक्षरः ॥ २७ ॥ मनुः पाशुपतास्त्राख्यो ग्रहक्षुद्रनिवारणः ॥ षड्भिर्वर्णैः षडंगानि हुंफडंतैः सजातिभिः ॥ २८ ॥ मध्याह्नार्कसमप्रभं शशिधरं भीमाट्टहासोज्ज्वलं त्र्यक्षं पन्नगभूषणं शिखिशिखाश्मश्रुस्फुरन्मूर्द्धजं । हस्ताब्जैस्त्रिशिखं समुद्गरमसिं शक्तिं दधानं विभुंदंष्ट्राभीमचतुर्मुखं पशुपतिं दिव्यास्त्ररूपं स्मरेत् ॥ ३० ॥ वर्णलक्षं जपेन्मंत्रं जुहुयात्तद्दशांशतः ॥ गव्येन सर्पिषा मंत्री संस्कृते हव्यवाहने ॥ ३१ ॥ शैवे पीठे यजेद्देवं प्रागंगैरष्टमातृभिः ॥ इन्द्रादिभिर्लोकपालैर्वज्राद्यैरायुधैस्ततः ॥ ३२ ॥ अनेन मंत्रितं तोयं ग्रस्तस्य वदने क्षिपेत् ॥ सद्यस्तं

---

मूर्द्धतारायत्वं विधीयत इति ज्ञेयं । ब्रह्माऋषिर्गायत्रीछंदः क्षौं बीजं आयेतिशक्तिः । क्वचिदेकाक्षरएवोद्धृतः । तदुक्तं प्रयोगसारे । ओबिंदुसंयुतं बीजं वर्णात्यं सर्वसिद्धिदमिति । अत्र विशेषः प्रयोगसारे । भेदाएकोनपंचाशत् क्षेत्रपालस्य कीर्त्तिताः । मातृकाबीजभेदेन संभवा नामभेदतः । अजरश्चायकुंभश्चइंद्र मूर्तिस्ततः परः ।इडाचारश्चोल्कसंज्ञ ऊष्माद‌ऋषिसूदनः । ऋमुक्तो लुप्तकेशश्च लृपकश्चैकदंष्ट्रकः । ऐरावतश्चौद्यवंधुरोषधिघ्नस्तथैव च ।अंजनश्चास्त्रवाहुश्च कं बलः खरखानलः । गोमुखश्चैव घंटाटोङ्णारश्चण्डचारणः ।छटाटोपोजटालाख्यो ऊकारोथ जठश्वरः ।एकपाणिस्तथाचान्यः ष्टाणवंथुश्चडामरः । टंकारवोणवार्णश्च तडिद्दाहस्थिरस्तथा । दंतुरोधनदश्चाथ नतिक्रांतः प्रचंडकः । फट्कारोवीरसंधश्च भृंगाख्यो मेघभासुरः पुगांतो रौरवश्चाथ लंबोष्ठो वसवस्तथा ।शुकर्ननः षडालाख्यः सुनामाहं श्रकस्तथा । एते भेदास्समाख्याता मातृकाक्षरयोनिजाः । नामयद्यस्य वर्णानांयोवर्णोमातृकांतरे । दृश्यते प्रथमंतत्रतवायं क्षेत्रपालकः । तत्र तत्र विशिष्टात्माभेदैरेतैर्व्यवस्थितः । तन्तो विशिष्टेयष्टव्यः क्षेत्रपालस्तु सर्वतः । क्षेत्रपालमसंपूज्ययः कर्मकुरुते क्वचित्, तस्य कर्मफलं हंति क्षेत्रपालो नसंशय इति।बीजेनेति।मंत्रद्वितीयेन नीलेति। नीलोतएवांजनाद्रिनिभस्तं । उपास्त्यष्टी ते हस्ताभ्यामिति शेषः गदाकपाले । दक्षेगदावामे कपालमित्यादियुधध्यानं आशांवरं नग्नं ।

मुंचाति क्रंदन् ग्रहो मंत्रप्रभावतः ॥ ३३ ॥ अमुना मंत्रितान् बाणान् विसृजे दुर्यधिभूपतिः ॥ जपेत्क्षणेन निखिलान् शत्रून्पार्थ इवापरः ॥ ३४ ॥ वर्णांत्यमौविंदुयुक्तं क्षेत्रपालाय हून्म नुः ॥ ताराद्योक्षसुवर्णोयं क्षेत्रपालस्य कीर्तितः ॥ ३५ ॥ षट् दीर्घभाजाबीजेन षडंगान्यस्य योजयेत् ॥ ऋषिर्ब्रह्मा भवेदस्य गायत्रं छंद ईरितं ॥ ३६ ॥ क्षेत्रपालो देवता चलायेति शक्तिरीरितः ॥ नीलांजनाद्रिनिभमूर्द्धपिशंगकेशं वृत्तोग्रलोचनमुदान्तगदाकपालं ॥ आशांबरं भुजगभूषणमुग्रदंष्ट्रं क्षेत्रेशमद्भुततनुं प्रणमामि देवं ॥ ३७ ॥ लक्षमेकं जपेन्मंत्रं जुहुयात दशांशतः ॥ चरुणा घृतसिक्तेन ततः क्षेत्रेशमर्चयेत् ॥ ३८ ॥ धर्मादिकल्पिते पीठे पूर्वमंगानि पूजयेत् ॥ अनलाख्यमग्निकेशं करालं तदनंतरं ॥ ३९ ॥ घंटारवमहाकोपं पिशिताशनसंज्ञकं पिंगलाक्षमूर्द्धकेशं पत्रेषु परितो यजेत् ॥ ४० ॥ प्रधानमूर्तिप्रतिमान्नानालंकारबंधुरान् ॥ लोकपालांस्तदस्त्राणि यथापूर्वं प्रपूजयेत् ॥ ४१ ॥ तस्मै सपरिवाराय बलिमेतेन निर्हरेत् ॥ पूर्वं मेहि द्वयं पश्चाद्विदुषि स्यात्पुरुद्वयं ॥ ४२ ॥ भंजय द्वितयं भूयोनर्तय द्वितयं पुनः ॥ ततो विघ्नपदद्वंद्वं महाभैरवतत्परं ॥ ४३ ॥ क्षेत्रपालबलिं गृह्ण द्वयं पावकसुंदरी ॥ बलिमंत्रोयमाख्यातः सर्वकामफलप्रदः ॥ ४४ ॥ सोपदंशं बृहत्पिंडं कृत्वा रात्रिषु साधकः ॥ स्मृत्वा यथोक्तं क्षेत्रेशं तस्य हस्ते बलिं हरेत् ॥ ४५ ॥ बलिनानेन संतुष्टः क्षेत्रपालः प्रयच्छति ॥ कांतिमेधाबलारोग्य तेजः पुष्टियशः श्रियः ॥ ४६ ॥ उद्धरेद्बटुकं ङेंतं आपदुद्धारणं तथा ॥ कुरु द्वयं पुनर्ङेंतं बटुकं तं समुद्धरेत् ॥ ४७ ॥ एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ॥ अभीष्ट

---

करालिनं गदापाणिमिति। नारायणीये। करधृतोग्रगदाकपालमितिप्रयोगसारे। धर्मादिकल्पित इति चतुर्थोक्तप्रकारेण न तु पीठशक्तिपूजा महाकोपमिति महाक्रोधमिति ज्ञेयं। प्रयोगसारनारायणीये तथोक्तेः प्रधानमूर्त्यनलादीनां ध्यानं सपरिवारायेत्यंगादि सहिताय सर्वकामफलप्रद इति। सिद्धः मन् सिद्धिश्च सहस्रवारजपादित्यपेक्षितार्थद्योतनिकाकारः। उपदंशं। व्यंजनं। रात्रिषु। प्रहरादूर्ध्वम्। यथोक्तं। पूर्वोक्तं ध्यानं। नीलसारमेयारूढं हस्ते इति वामहस्तगतकपाले इत्यर्थः। तदुक्तं नारायणीये। सिद्धेनानेन मंत्रेण तत्कपाले बलिं हरेत्। वामदोष्णाष्टदिक् सथा नामन्यत्रांदानलादिभिरिति। प्रयोगसारेपि। अथ वा प्रांगणे ध्यात्वा क्षेत्रेशं प्रोक्तलक्षणं। श्वितिश्वानसमारूढं तत्कपाले बलिं हरेदिति। तत्र प्रयोगः। रात्रौ प्रहरादूर्ध्वं प्रांगणे गोचर्ममात्रं विलिप्य रक्तगंधपुष्पाक्षतादीन् तत्र संस्थाप्य करांगन्यासं कृत्वा मूलं दशधा जप्त्वा पीठं संपूज्य तत्र क्षेत्रपालमावाह्य उपचारान् कृत्वा सावरणमभ्यर्च्य विजनीभूत्वा बलिमंत्रेण वामहस्तेन तत्कपाले चिर्बलिमुदकं च दत्वा अनलाय स्वाहेत्यादि मूर्त्तिभ्यो गंधाद्यं सकृद्दत्वा हस्तं प्रक्षाल्य स्वयं देवः सव्यष्टोत्तरशतं मूलमावर्त्तयेदिति। आपदुद्धारणमंत्रमाह।उद्धरेदिति। बटुकं तङे तं बटुकाय। तथेति ङेंतं। तेन आपदुद्धारणाय। शक्तिरुद्धः। शक्तिबीजपुटितः सुरपादपः साधकानां वांछितप्रदत्वात्कल्पतरुरित्यर्थः। भैरवऋषिर्गायत्रीछंदः वं बीजं माया शक्तिः। अंगुलीति। अंगुष्ठाद्यंगुलीषु। देहेति। शिरोवदनहृद्गुह्यपादेषु। वक्त्रे ष्विति। ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु यथापुरेति। ईशाना-

फलसंसिद्ध्यै कीर्तितः सुरपादयः ॥ ४८ ॥ बृहदारण्यकऋषिश्छन्दोनुष्टुबुदाहृतः ॥ आपदुद्धारणो देवो भैरवो देवताबुधैः ॥ ४९ ॥ अंगुलीदेहवक्त्रेषु मूर्तीन्न्यस्येद्यथापुरा ॥ सद्यादिपंचह्रस्वाढ्यशक्तिबीजं पुरः सरं ॥ ५० ॥ बकारं पंचह्रस्वाढ्यमीशानादिषु योजयेत् ॥ षड्दीर्घयुक्तयाशक्त्या वकारेण च तद्वता ॥ ५१ ॥ अंगानि जातियुक्तानि प्रणवाद्यानि कल्पयेत् ॥ तस्य ध्यानं त्रिधा प्रोक्तं सात्विकादि विभेदतः ॥ ५२ ॥ वंदेबालं स्फटिकसदृशं कुंतलोल्लासिवक्त्रं दिव्याकल्पैर्नवमणिमयैः किंकिणानुपुराद्यैः॥दीप्ताकारं विशदवसनं सुप्रसन्नं त्रिनेत्रं हस्ताब्जभ्यां बटुकमनिशं शूलदंडौ दधनम् ॥ ५३ ॥ उद्यद्भास्करसन्निभं त्रिनयनंरक्तांगरागस्त्रजंस्मेरास्यं वरदं कपालमभयं शूलंदधानं करैः ॥ नीलग्रीवमुदारभूषणशतं शीतांशुचूडोज्वलंवंधूकारुणवाससं भयहरं वंदे सदा भावये ॥ ५४ ॥ ध्यायेन्नीलाद्रिकांतं शशिशकलधरं मुंडमालं महेशंदिग्वस्त्रंपिंगकेशं डमरुमथसृणिंखड्गपाशाभयानि ॥ नागं घंटांकपलं करसासिरुहै बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किंकिणीनुपुराढ्यं ॥ सात्विकं ध्यानमाख्यानमपमृत्युनिवारणम् ॥ ५५ ॥ आयुरारोग्यजननं मपवर्गफलप्रदम् ॥ रा-

---

द्यानां देहे वक्त्रेषु चन्यासि तत्तदंगुलीभिर्न्यास इत्युक्तं । सद्यादय ॐकाराद्याः आदिशब्देन तत्पुरुषाघोरवामसद्या । ह्रौं वोंईशानाय नमः अंगुष्टे इत्यादि प्रयोगः । तद्वता । षडदीर्घयुक्तेनेत्यर्थः । ॐक्लांवांहृदयाय नमइत्यादि प्रयोगः । सात्विकध्याने । शूलदंडौ वामदक्षाभ्यां । तदुक्तं विश्व सारोद्धारे । वामहस्ते त्रिशूलं च सूक्ष्मदंडं तु दक्षिणे इति । राजसध्याने वामयोराद्यं दक्षयोरन्ये । तामसध्याने तु दक्षाधूर्ध्वयोराद्ये तदधस्थयोर्द्वितीये तदधस्थयोरुपांत्ये । तदधस्थयोरंत्ये । अत्रध्यानानंतरं डमरुकमुद्रां दर्शयेत् । तल्लक्षणं तु । मुष्टिं सुशिथिलां बध्वा ईषदुर्च्छ्रितमध्यमां । दक्षिणादूर्ध्वमुन्नम्य कर्णदेशे प्रचालयेत् । एषा मुद्रा डमरुका सर्वविघ्नविनाशिनीति । वर्णलक्षं । एकविंशतिलक्षं । क्षमते पोठे इति । चतुर्थोक्तप्रकारेण । नत्वत्र पीठशक्तयः । कीदृशे पीठेषट्कोणांतस्त्रिकोणस्थव्योमपंकजसंयुते । पुनः कीदृशेपं कजशोभिते तेन मातृकापद्मं कृत्वा तदुपरि त्रिकोणं तदुपरि षट्कोणं । तदुपरि अष्टदलं पद्मं तदुपरि चतुरस्रं चतुर्द्वारमिति पूजायंत्रं । तदुक्तं विश्वसारोद्धारे । चतुरस्रासने पद्ममष्टपत्रं सकर्णिकं । तस्य मध्ये च षट्कोणं मंडलं तु विधीयते । तन्मध्ये च त्रिकोणं च तन्मध्ये व्योमपंकजं । मध्ये बटुकमावाह्येति । व्योमपंकजंतु मातृपटलोक्तवर्णाब्जं मूलादिसद्यो जातेनेति एवं पंचसु संबध्यते। तत्तन्मुद्राभिरिति। मुद्रास्तयोर्विशेषचक्ष्यते । ललाटस्थोजलिर्वंदनमुद्रा । न्यासमार्गेणेति । देवदेहे तत्तदंगुलीभिर्मूर्द्धादिषु पंचवक्त्रेर्व्याप । नत्वंगुलीषु । तदुक्तं नारायणीये । यथात्मनि तथा देवे न्यासः कार्यः करं विनेति । ह्रौं वों ईशानाय नम इत्यादि पूजयेत् : तत्र देवदेहे प्रथमं विन्यस्य पश्चात्पूजनमिति ज्ञेयं सकलीकरणं कृत्वा यजेद्देवमिति शेषः मूर्त्तीर्यथा।पुरायजेदिति । अनुषज्यते । यथापुरेत्यनेनावरणपूजायां पूर्वदक्षिणसौम्यपश्चिमे ईशे च मूर्त्तिपूजेत्युक्तं । विश्वसारोद्धारेतु विशेषः । इंद्राग्नियमाप्सुपंचब्रह्माण अर्चयेदिति अआइईउऊऋॠऌॡएऐओऔअंअः एतद्बीजपूर्वानित्युक्तं । प्रयोगस्तु । अं असितांगभैरवाय नम इतिभैरव-

असंध्यानमाख्यातं धर्मकामार्थसिद्धिदम् ॥ तामसं शत्रुशमनं कृत्याभूतग्रहापहम् ॥ ५६ ॥ वर्णलक्षं जपेन्मंत्रं हविष्णाशी जीतेंद्रियः ॥ तद्दशांशं प्रजुहुयात्तिलैर्मधुरसंयुतैः ॥ ५७ ॥ धर्माधर्मादिपीठे पंकजशोभिते ॥ षट्कणांतस्त्रिकोणस्थव्योमयंकजसंयुत ॥ ५८ ॥ बटुकं पूजयेद्देवं मूर्तिमूलेनकल्पतेत् ॥ सद्योजातेनमन्त्रेण देवमावाहयेत्ततः ॥ ५९ ॥ मूलादिवामदेवेन स्थापयेत्परमेश्वरम् ॥ मूलमन्त्रेणकर्तव्यं सांनिध्यं तदनंतरम् ॥ ६० ॥ अघोरेण सुधीः कुर्यात्सन्निरोधमनंतरम् ॥ पुरुषाख्येनमनुना योनिमुद्रांप्रदर्शयेत् ॥ ६१ ॥ देवाय वंदनं कुर्यादीशानेन समाहितः ॥ एतत्सर्वंविधातव्यं ततन्मुद्राभिरादत् ॥ ६२ ॥ ईशानादीन्यजेद्देवान्न्यासमार्गेणा देशिकः ॥ सकलीककरणं कृत्वा यजेन्मूर्तौयथापुरा ॥ ६३ ॥ व्योमपद्मदलेष्वर्चेदसितांगादि भैरवान् ॥ असितांगं रुरुं चंडं क्रोधमुन्मत्तभैरवम् ॥ ६४ ॥ कपालिनंभीषणाख्यं संहारं चक्रमादमून ॥ षट्कोणेषु षडंगानि क्रमेणाभ्यर्चयेत्सुधीः ॥ ६५ ॥ पूर्वादीशानपर्यंतं तद्बहिः पूजयेदिमान् ॥ डाकिनीपुत्रकान्पूर्वं राकिनीपुत्रकांस्ततः ॥ ६६ ॥ लाकिनी पुत्रकान्पश्चात्काकिनीपुत्रकांस्ततः ॥ शाकिनी पुत्रकान्भूयो हाकिनी पुत्रकान्पुनः ६७ मालिनी पुत्रकान्पश्चाद्देवी पुत्रांस्ततः परम् ॥ अथोमारुद्रमातॄणां पुत्रान्दक्षिणतोयजेत् ॥ ६८ ॥ ऊर्ध्वमुख्याः सुतानूर्ध्वमधोमुख्यः सुतानधः ॥ इति संपूजयेन्मन्त्री पुत्रवर्गांस्त्रयोदश ॥ ६९ ॥ तद्बहिः पद्मपत्रेषुलोकेशवटुकान्यजेत् ॥ ब्रह्माणीपुत्रकं पूर्वे माहेशीपुत्रमैश्वरे ॥ ७० ॥ वैष्णवीपुत्रकं सौम्ये कौमारी पुत्रमानिले ॥ इंद्राणी पुत्रकं भूयः पूजयेत्पश्चिमेततः ॥ ७१ ॥ महालक्ष्मी सुतं पश्चाद्रक्षो दिशि समर्चयेत् ॥ वाराही पुत्रकं याम्ये चामुण्डा सुतमानले ७२ वटुकान्दशदिक्ष्वर्चेद्हेतुकं त्रिपुरांतकम् ॥ वेतालं वह्निजिव्हाख्यं कालांताख्यं करालकम् ७३ एकपादं भीपदं भ्रमचलं हाठकेश्वरम् ॥ दिग्विदिक्ष्वंतरालेषु श्रीकंठादीन्यजेत्पुनः ॥ क्रोधीश्वरादिभृग्वंतांस्तद्बहिर्हि समर्चयेत् ॥ ततस्त्रीन्नकुलीशाद्यान्दक्षिणे पूजयेत्सुधीः ॥ ७५ ॥

---

पदं सर्वेषु योज्यं। पुनर्भैरवोद्देशोमात्रनिवृत्यर्थः। क्रमात् सुधीरित्यनेनाग्नेयापि पूजनमित्युक्तं तद्बहिरिति। षट्कोणबाह्ये। अष्टपत्रांतः पूर्वादीशानपर्यंतमिमान् वक्ष्यमाणान् पूजयेदिति संबंधः। दिग्विदिक्ष्विति। दिशश्चतस्रः विदिशश्चतस्रस्तदंतरालान्यष्टावेवं षोडश। पुनस्तद्वदिति। दिग्विदिक्ष्वंतरालेषु। तत्र दिशोऽष्टौ विदिशोऽष्टौ तदंतरालानि षोडशेति द्वात्रिंशत्स्थानानि ज्ञेयानि। शक्तिसंयुतानिति सामान्येन विशेषणमात्रं। ताः शक्तयः का इत्यपेक्षायायोगिनीभिः सहेति पदं। तदुक्तं विश्वसारोद्धारे। दिव्यांतरिक्षभूमिष्ठान्योगीशान् पूजयेत्ततः। ईशाग्नेय्यांचनैरृत्यांयोगिनीभिः समन्वितानिति। काम्यमात्रे परिभाषामाह। विघ्नमिति। तदेवबलिविधानमाह। शाल्यन्नमिति। पललं मांसं। एकीकृतं पिंडरूपं ग्राह्यं प्रागुक्तकर्मणा। रक्तचंदनपुष्पाद्यैर्निशि देवमाराध्यप्रागुक्तवर्त्मना निशि बलिं हरेदिति संबंधः। आद्य शब्देन धूपदीपनैवेद्यानि। प्रागुक्तेत्येनेन क्षेत्रपालोक्तबलिमंत्रेक्षेत्रपालशब्दे बटुकेति पदं दत्वा देवइत्युक्तं। यथोक्तामिति। स्वमनसिस्थितां रोगोक्तेति वैद्यकशास्त्रे यस्मिन् रोगे यदौषधमुक्तं तस्य होमादित्यर्थः। कृष्णेत्यादि भूपतेरि

द्दिग्यांतरिक्षभूमिष्ठान्योगीशान् शक्तिसंयुतान् ॥ योगिनीभिः सहाभ्यर्चेद्दीशाग्निनिर्ऋति-स्थितान् ॥ ७६ ॥ इति संपूजयेद्देवं बटुकं प्रोक्तवर्त्मना ॥ धर्मार्थकाममोक्षाणां पतिर्भवति मानवः ॥ ७७ ॥ विघ्नदुर्गां समाराध्य बलिं लत्वा विधानतः ॥ काम्यानि साधयेन्मन्त्री यथोक्तांसिद्धिमाप्नुयात् ॥ ७८ ॥ शाल्यन्नं पललंसर्पिर्लाजाचूर्णानि शर्करा ॥ गुडामिक्षुर-सापूर्पैर्भक्तैः परिमिश्रितैः ॥ ७९ ॥ कृत्वाकवलमाराध्य देवं प्रागुक्तवर्त्मना ॥ रक्तचंदन-पुष्पाद्यैर्निशितस्मै बलिंहरेत् ॥ ८० ॥ ततः सिध्यंति कार्याणि बलिनानेन मंत्रिणः ॥ जुहु यात्सर्पिषा मन्त्री यथोक्तां सिद्धिमाप्नुयात् ॥ ८१ ॥ वश्याय जुहुयाद्दिक्षु शकलैर्वेयशज्जना-न्। जुहुयात्पुत्रलाभाय प्रफुल्लैः कैरवैः सुधीः॥ ८२ ॥ धनाधान्यादि संपत्त्यै जुहुयात्तिलतंड-लैः। बिल्वप्रसूनैर्जुहुयान्महतीं विंदति श्रियम् ॥ ८३ ॥ लोणैर्मधुरसंमिश्रैर्वशयेद्वनिताजना-न् ॥ वृष्टिकामेन होतव्यं वेतसानां समिद्वरैः ॥ ८४ ॥ अन्नेन जुहुयान्नित्यं धनधान्यादि-संपदे ॥ वश्याय जुहुयान्मन्त्री मधुनादिवसत्रयम् ॥ ८४ ॥ रोगोक्तौषधहोमेन रोगा नश्यंति तत् क्षणात् ॥ कृत्याद्रोहे ग्रहद्रोहे भूतापस्मारसंभवे ॥ ८६ ॥ व्याघ्राजिने समासीनोजुहुया-दयुतंतिलैः ॥ भूतादयः पलायंते नेक्षंते तांदिशं भयात् ॥ ८७ ॥ कृष्णाष्टमीं समारभ्य या-वत् स्यात्तचतुर्दशी ॥ तिलैस्तंडुलसंमिश्रैर्मधुरत्रयलोलितैः ॥ ८८ ॥ त्रिसहस्रं प्रतिदिनं जुहु-

---

त्यंतमेकः प्रयोगः। अवग्रहो वृष्ट्यभावः। विषयेशे। विभज्येति किंचित्। न्यूनसप्तसप्तगुंजामितं। मण्डलमेकोनपंचाशद्दिनानि। विश्वसारोद्धारे तु विशेषः। वचाचूर्णपलं देवि कुडवं पलसंयुतम्। पद्मपत्रे विनिक्षिप्य स्थापयेद्देवसंनिधौ। सिद्धान् संपूज्य विधिवज्जपेत्स्पृष्ट्वा तदौषधम्। मंत्रं सह-स्रमावर्त्य सिद्धानभ्यर्च्य बुद्धिमान्। ध्यात्वा देवीमृतुस्नातां प्राशयेतन्महौषधमिति। राजसोमांसर-क्ताद्य इति। तत्र किंमानमित्यपेक्षायां पलत्रयसमन्वित इति। तत्र पलत्रयं भूचरखेचरजलच-रजम्। तदुक्तं विश्वसारोद्धारे। मेषकुक्कुटयोर्मांसं शाल्यन्नं घृतसंयुत। लाजाचूर्णमपूपं च गुडमि-क्षुरसान्वितम्। मधूमत्स्यकमित्यादि बलिद्रव्यं समीरितमिति। मरीचैर्जीरकैश्चैव गुडखण्डै-स्तथैव च। शालि तंदुल संभक्तगोक्षीरेण समन्वितम्। सैंधवं दुग्धमनिन पलत्रयसन्वितमिति। तथा। अन्यत्रापि। पलत्रयं माषचूर्णं दधिक्षीरं घृतं तथा। गुडौदनेन संयुक्तं मिश्रीकृत्य विचक्षण इति। केचित्फलत्रयमिति पाठमपठन् तच्चिन्त्यम्। भस्मसाधनमेवाह। उसीरमित्यादि। घनसारः कर्पूरः। वाराही शूकरी कान्ती मागधी दृष्टि कारिका इति कैयदेव निघंटौ वाराहीनाम्नी औ-षधी प्रसिद्धा। शमी लक्ष्मी शिवा शीता मांगल्या केशहृत्फलेति कैयदेव निघंटौ लक्ष्मीशब्देन शमी उक्ता। व्योम्नि गृहीतैर्नैतिलिभिः शोभितैः शुभैः भूतलास्पृष्टेन। त्रिपुड्रं तिर्यक् तिलकः। मृगो व्याघ्रः। अभिषेकं प्रकुर्वीतेति। सप्तभिः पञ्चभिर्वाहोमः। सप्ताहं वापि पञ्चाहमित्युक्तः। तत्र पूर्वमेव सप्तमं पञ्चमं वाशुभदिनमालोच्य प्रथममारम्भः कार्यः। अभिषेकप्रकारमाह। पूर्वोक्त इति। तृतीयोक्ते द्व्यर्थः। अष्टद्रोणेति। अर्द्धखारी। तदर्द्धमिति। खारीचतुर्थांसः। नवरत्नानि षष्ठोक्तानि प्रवालानि पल्लवाः सहा सहदेवी। गोमेदं यवजम्। गोमेदकं पीतमेणो कंकोमे पचर्जेपिचेति विश्व।

यात्संस्कृतेनले ॥ बटुकेश्वरमभ्यर्च्य भक्ष्यभोज्यफलान्वितम् ॥ ८९ ॥ नित्यंनिवेद्य नैवेद्यं मध्यरात्रे बलिंहरेत् ॥ एवंजपित्वा प्रयतः सहस्राण्येकविंशति ॥ ९० ॥ समाप्ति दिवसेरात्रावजं हुत्वा बलिंहरेत् ॥ ततः कारयिता राजा तोषयेत्साधकंधनैः ॥९१॥ विधिनानेन संतुष्टो बटुकेशः प्रयच्छति ॥ तेजो बलं यशः पुत्रान्कांतिलक्ष्मीमरोगतां ॥ ९२ ॥ नश्यंति शत्रवः सर्वे वर्द्धंते बंधु बांधवाः॥ भयग्रहोनजायेत विषये तस्य भूपतेः ॥ ९३ ॥ जुहुयात्केवलैर्लोणैरयुतं स्तंभनेच्छया ॥ निबिडादि विमोक्षाय प्रयोगोयमुदाहृतः ॥ ९४ ॥ बचाचूर्णपलं जप्तंगव्येनाज्येन लोलितम् ॥ विभज्य भक्षयेद्वंध्या मंडलात्पुत्रकांक्षिणी ॥ ९५ ॥ विनीतं पुत्रमाप्नोति मेधारोग्यबलान्वितम् ॥ आदावंते प्रयोगस्यबटुकाय बलिं हरेत् ॥ ९६ ॥ द्विविधो बलिराख्यातो राजसः सात्विको बुधैः । राजसो मांसरक्ताढ्यः पलत्रयसमन्वितः ९७ मुद्गपायससंयुक्तो मधुरत्रयलेलितः ॥ सात्विको मांसरहितः शेषमन्यत्पुरोक्तवत् ॥ ९८ ॥ ब्राह्मणो विनयः शुद्धः सात्विकं बलिमाहरेत् ॥ साधयेन्मनुनानेन भस्म सर्वार्थसिद्धिदम् ॥ ९९ उशीरं चंदनं कोष्ठं घनसारं सकुंकुमम् ॥ श्वेतार्कमूलं वाराहीं लक्ष्मीक्षीरमहीरुहां ३००

---

राजसमिति । राजसध्यानोक्तमूर्त्तिम् । लोकेशान् लोकेशबटुकान् । क्रमादित्यनेन परितोद्वात्रिंशत् दक्षिणेत्वोतित्युक्तम् । स्पृष्ट्वे त्युभयत्र कूर्चादिना । पृथगिति । प्रत्येकं तेन सहस्रत्रयं होमः । प्रत्यहं सप्ताहं पञ्चाहं वा अस्यैवा हुत्या फलविशेषमाह । कृत्वेति । षण्मासं प्रतिमासमिति षडाहुतयः । गजेति प्राक् प्रोक्तविधिना कुम्भान् स्थापयित्वा गन्धपुष्पाद्यैरभ्यर्च्य विधानेन कुण्डं कृत्वा यथाविधिहोमं कुर्यादिति सम्बन्धः । तत्र विधानेनेति । त्रिकोणम् । यथाविधीति । बटुकमग्नावभ्यर्च्य बटुकं च तत्र पूजयित्वे त्यर्थः । प्राक् प्रोक्तविधिना । चतुर्थोक्तविधिना । कुम्भानिति । पञ्च । अत्र । पञ्चसु कुम्भेषु । अभ्यर्च्येति । मध्ये बटुकईशानं चतुर्ष्वन्यामूर्त्तीरिति शेषः । उक्तञ्च । पंचात्मानं पदं कृत्वा स्वालिप्ते शुद्धभूतले । कोष्टेषु स्थापयेत्स्रष्टा कलशान्यं च शोभनान् । धूपादिवासितान् भूयो जलैरापूरयेत् पृथक् । माणिक्यं मौक्तिकं वज्रं नीलं मरकतं तथा । प्रोक्तानि पंचरत्नानि निक्षिप्य तेषु पंचसु । तत्र देवं च मूर्तीश्च समभ्यर्च्य यथाविधीति । अन्यत्र तु । सुवर्णं रजतं मुक्ताराजावर्तं प्रवालकम् । रत्नपंचकमाख्यातमिति । गजानश्वान् । शालांचगजाश्वशालां प्रोक्षयेदिति संबंधः । गजा अश्वाः । शक्तिर्जायत इति । तेषामित्यनुषज्यते । रोगाः प्रणश्यन्तीत्यत्रापि । अभिषिच्येति । हरेदित्यंतं पूर्वोक्ताभिषकवल्योरनुवादः । तत्रैव विशेषमाह । अन्यूनेत्यादिना ।यंत्रमाह। श्रीमायेति । श्रीश्रीबीजं मायाशक्तिबीजम् । स्मरः कामः क्लीं । कूटं । क्लीं । तदुपर्यिद्वषु नास्ति मंत्रोन्य इत्याहुस्तत्त्ववेदिनः एतेन केषां चनस्मररूपमेव कूटं लिखेदिति व्याख्यानं निरस्तम् । अष्टदलेषु बटुकाय इत्येकाक्षरक्रमेण लिखनीयम् । मन्त्रस्य वर्णानिति । आपदित्यादि मायांता अथ षोडशेदले । तद्बहिः प्रथमषोडशदलाद्बहिः । तत्संख्यपत्रेषु षोडशेषु । तदुपरिद्वितीयषोडशदले षोडशस्वरान् लिखेत् । छित्त्वाछित्त्वेति । द्वाविंशे वक्ष्यमाणरीत्या । साध्य इति।लिङ्गमविवक्षितम्। पुरुषं स्त्रियमपि वशयेत् । तदुक्तं सप्ताहं पुरुषोंगनापदचिरं वश्यस्त्ववश्यं भवेत् तस्मिन् जन्मनि

त्वचो बिल्वनरोर्मूलं शोषयित्वा सु चूर्णयेत् ॥ चूर्णं व्योम्नि गृहे तेन गोमयेन विमिश्रितम्॥ १ ॥ कृत्वा पिंडानि संशोष्य संस्कृते हव्यवाहने ॥ मूलेन दग्ध्वा तद्भस्म शुद्धपात्रे विनिःक्षिपेत् ॥ २ ॥ केतकी मालती पुष्पैर्वासयेद्भस्म शोधितं ॥ अयुतं प्रजपेन्मंत्रं स्पृष्ट्वा भस्म सु पूजितं ॥ ३ ॥ एतदादाय दिनशः प्रातः पुंड्रंकरोति यः ॥ तस्य रोगाः प्रणश्यंति कृत्या द्रोहमहाग्रहाः ॥ ४ ॥ रिपुचौरमृगादिभ्यो भयमस्य न जायते। वर्द्धन्ते संपदः सर्वाः पूज्यते सकलैर्जनैः ॥ ५ ॥ राजावश्यो भवेत्तस्य सामात्यः सपरिच्छदः । अभिषेकं प्रकुर्वीतराज्ञो विजयकांक्षिणः ६ ॥ पूर्वोक्तमण्डपे क्लृप्ते वितानध्वजशोभिते। सर्वतोभद्रमालिख्य कर्णिकां तस्य पूरयेत् ॥ ७ ॥ अष्टद्रोणप्रमाणेन शालिभिः शोधितैः शुभैः । तदर्द्धांस्तण्डुलांस्तस्मिन्न्यस्य दूर्वाकृतान्वितान ॥ ८ ॥ हेमादि विहितं कुंभं नवरत्नसमन्वितम् । संस्थाप्य विमलैस्तोयैरापूर्यास्मिन्विनिःक्षिपेत् ॥ ९ ॥ क्षीरद्रुमप्रवालानि लक्ष्मीदूर्वांसहां पुनः । कर्पूरं चन्दनं विल्वमुशीरं कुंकुमं पुनः ॥ १० ॥ कंकोलमगरुंजातिं मल्लिकां चंपकोत्पलैः। गोमेदंदाडिमं पश्चात्पट्टयुग्मेन वेष्टयेत् ॥ ११ ॥ तस्मिन्नावाह्य बटुकं राजसं सम्प्रपूजयेत् । बहिरष्टसुकुम्भेषु भैरवानष्टपूजयेत् ॥ १२ ॥ त्रयोदशसुकुम्भेषु त्रयोदशगणान्यजेत् । बाह्ये दशसु कुम्भेषु लोकेशानर्चयेत्सुधीः ॥ १३ ॥ तद्बहिर्द्व्यष्टकुम्भेषु श्रीकण्ठादीन्सुरेश्वरान्। पंचात्रिंशत् घटेष्वर्चेत्कादिवर्णेश्वरान्क्रमात् ॥ १४ ॥ इति गन्धादिभिः सम्यक् पंचावरणमर्चयेत्। अयुतं प्रजपेत्स्पृष्ट्वा तान्घटान्देशिकोत्तमः ॥ १५ ॥ पायसैः सर्पिषाशुद्धैस्तिलैर्दशशतं पृथक् ।

---

नास्ति नोद्यदेहान्तरं संशय इति । अथ च साध्यमिति सामान्यत उक्तेर्द्विजादिः । तत्र विशेषो नारायणीये। प्रज्वाल्याग्निमयामार्गैरेवं वश्यो भवेद्द्विजः । दीप्ते वन्हौ चिताकाष्ठैः प्रतिकृत्या तथा हुनेत्। राजा वशीभवेदेवं वश्यंस्याद्वैश्यशूद्रयोरिति । दासी भवेदत्वकामादित्वं ज्ञेयम् । शैवमंत्रेष्वित्यनेनैतदुक्तं भवति । यावान् चण्डेश्वरजपस्तावान् शैवषडक्षरमन्त्रजपः । यदाहुः। अक्षरस्य जपोयावत्तावज्जप्यः षडक्षरः। रोहिकामुष्मिकीं सिद्धिं तथाहि लभते नर इति।सर्वान् कामानिति। सतिलैः स्वन्दुलैर्हेमकाष्टाग्नौजुहुयादरः। उन्मादाय पयोहोमात्तत्क्षान्तिः खदिरानले इति । यद्यवर्णैः प्रसूनैस्तु मंत्री सप्तदिनं हुनेत् । लभेत्तद्रूपवाह्योपमृणस्याकामदो मनुरित्यादि ज्ञेयम् । धरेत्यादि शैवमन्त्रान्ते शिवस्तुतिः। धरेति।श्लोकेनाष्टमूर्त्तित्वमुक्तम्। मखेशो यजमानः। श्रुत्यंतेति । उपनिषत्प्रतिपाद्यत्वात्तत्रक्तावासायेत्युमचारतः प्रयोगः । श्रुतये श्रुति रूपाय श्रुतीनां जन्मप्रसमात्। तेनानादिवेदप्रवक्त्रे। अतीन्द्रियायेति। यतो वाचो निवर्तंते। अप्राप्य मनसासहेति श्रुतेः। भवाय भवनाम्ने। भवो जन्मतदुःखहंत्रे। तर्कादिसूत्तर्काः चदुर्वर्गप्रदात्रे। आदिः सर्गः मध्यः पालनं अन्तः संहरः तत्र शून्याय फलानुपभोगात्। अविचिंत्यायात्कालायात्मकाय सरिद्गारूवदामतेन प्रबद्धः कपर्दोजटाजूटो येन तस्मै। कपर्दोऽस्य जटाजूट इति कोषः। त्रिमूर्त्तेः ब्रह्मविष्णुरुद्रमूर्त्तेः । त्रिधाम्नामिति सूर्याग्निचन्द्रमसाम्। इति शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां विंशतिः पटलः ॥ २० ॥ एवं तांत्रिकान्यं च देवतामन्त्रानुतत्का कतिचिद्गायत्र्यादि

जुहुयात्तान्घटान्स्पृष्ट्वा प्रत्यहं बलिमाहरेत् ॥ १६ ॥ राजसोक्तप्रकारेण रात्रौ देशिकसत्तमः सुदिने शोभने लग्ने वाचयित्वा द्विजन्मभिः ॥ १७ ॥ स्वस्तिमंगलवाक्यानि विशुद्धैर्वेदपारगैः । नदत्सु पंचवाद्येषु प्रणम्य बटुकेश्वरम् ॥ १८ ॥ जितेन्द्रियं शुद्धकायं राजानं ब्राह्मणप्रियम् । आस्तिकं सत्यवचनमभिषिंचेत्प्रसन्नधीः ॥ १९ ॥ अभिषिक्तो नरपतिः प्रणिपत्य गुरुं परम् । भूयासीं दक्षिणां दद्यात्प्रसीदति तथा गुरुः ॥ २० ॥ राजाभिषिक्तो भवति साक्षाद्भूमिपुरंदरः । परान्विजयते भूपान्स्तूयते सकलैर्जनैः ॥ २१ ॥ कृताभिषेकः षण्मासं प्रतिमासं महीपतिः । चतुरंभोधिवलयां शास्ति सर्वां वसुन्धराम् ॥ २२ ॥ गजाश्वशान्तिविधये तेषां शालासु साधकः । कुण्डं कृत्वा विधानेन होमं कुर्याद्यथाविधिं ॥ २३ ॥ पायसाज्यतिलैर्विद्वानयुतत्रितयावधि । ब्राह्मणान्भोजयेन्नित्यं भक्ष्यभोज्यफलादिभिः ॥ २४ ॥ प्राक्प्रोक्तविधिना कुम्भान्स्थापयित्वात्र देशिकः । अभ्यर्च्य गन्धपुष्पाद्यैस्तज्जलैः प्रोक्षयेद्गजान् २५ अश्वशालामनेनैव वर्द्धन्ते ते दिने दिने । युद्धेषु महती शक्तिर्जायते पूर्वतोधिका ॥२६॥ सर्वरोगाः प्रणश्यन्ति कृत्याद्रोहाः परैः कृताः । अस्मात्परतरा रक्षा नास्ति तेषां महीतले ।२७। अभिषिच्य महीपालं परेषां विजयोद्यतम् । उक्तेन विधिना मन्त्री यामिन्यां बलिमाहरेत् ॥ २८ ॥ अन्यूनांगजमं हत्वा राजसं प्रागुदाहृतम् । बलिप्रदानसमये रिपूणां सर्वसैन्यकम् ॥ २९ ॥ निवेदयेद्बलित्वेन बटुकाय विशिष्टधीः । विदर्भयेच्छत्रुनाम्ना बलिमन्त्रं तथा सुधीः ॥ ३० ॥ शत्रुपक्षस्य रुधिरं पिशितं च दिने दिने । भक्षय स्वगणैः सार्द्धं सारमेयसमन्वितः ३१ ॥ बलिमन्त्रोयमाख्यातः सर्वेषां विजयप्रदः । अनेन बलिनाहृष्टो बटुकः परसैन्यकम् ॥ ३२ ॥ सर्वं गणेभ्यो विभजेदामिषं क्रुद्धमानसः । एवं कृते परबलं क्षीयते नात्र संशयः ॥ ३३ ॥ विजयश्रियमेतेन राजा प्राप्नोत्ययत्नतः । श्रीमायास्मरकूटमत्रविलिखेन्मध्ये दलेष्वष्टसु द्वि प्रोक्तं बटुकाय शब्दमपरान्मन्त्रस्य वर्णान्बहिः । अष्टद्वन्द्वदलेषु तद्बहिरधस्त्वत्संख्य पत्रेष्वथ द्वात्रिंशद्दलकादि सान्तसहितं यन्त्रं लिखेद्भूपरे ॥ ३५ ॥ आपदुद्धारणं यन्त्रमपमृत्युभयापहम् । सर्वसम्पत्प्रदं नित्यं सर्वसौभाग्यदायकम् ॥ ३६ ॥ रक्षाकरं ग्रहार्तानां राज्ञां विजयवर्द्धनम् । आपदुद्धरणाकस्मादापदुद्धरणक्षमः ॥ ३७ ॥ तन्त्रेषु नास्ति मन्त्रोन्य इत्याहुर्मन्त्रवेदिनः । अग्नीशो वन्हिशिखरो लान्तस्थो दान्त ईरितः ॥३८॥ फडन्तश्चण्डमन्त्रोयं त्रिवर्णात्मा समीरितः । अस्य त्रिको मुनिः प्रोक्तश्छन्दोनुष्टुबुदाहृतम् ३९ चण्डेशो देवता प्रोक्ता कुर्यादंगविधिं पुनः । हृदयं दीप्तफट् प्रोक्तं ज्वलफट् शिर ईरितम् ४० शिखा ज्वालामालिनी फट् ज्ञेया फट् कवचं मतम् । हनफट् नेत्रमाख्यातं सर्वज्वालिनि फट् परम् ॥ ४१ ॥ विन्यस्यैवं षडंगानि ततो देवं विचिन्तयेत् । चण्डेश्वरं रक्ततनुं त्रिनेत्रं रक्तांशुकाढ्यं हृदि भावयामि ॥ ४२ ॥ टंकं त्रिशूलं स्फटिकाक्षमालां कमण्डलुं बिभ्रतमिन्दुचूडम् । वर्णलक्षं जपेन्मन्त्रं होमं कुर्याद्दशांशतः ॥ ४३ ॥ मधुरत्रयसंयुक्तैर्विशुद्धैस्तिलतण्डुलैः । पंचाक्षरोदिते पीठे चण्डेशं साधु पूजयेत् ॥ ४४ ॥ मूर्तौ बीजेन क्लृप्तायां तत्कूर्मो बिन्दुसं-

युतः। चण्डेश्वराय हृद्बीजपूर्वः पूजामनुर्मतः॥ ४५॥ अंगैर्मातृभिराशेषैर्वज्राद्यैरायुधैर्यजेत्। चतुरावरणं प्रोक्तं चण्डेशस्य समर्चने॥ ४६॥ इति सिद्धे मनौ मन्त्री धनवज्ञायते चिरात्। तर्पयेन्मनुनानेन नित्यमष्टोत्तरंशतम्॥ ४७॥ श्रिममाप्नोति महतीं पुत्रमित्रसमन्वितः। प्रियंगुकुसुमैः फुल्लैस्तत्काष्ठज्वलिते नले॥ ४८॥ जुहुयादयुतं मंत्री पुरक्षोभो प्रजायते॥ साध्यवृक्षत्वचो लोणं पिष्ट्वा विष्टसमन्वितम्॥ ४९॥ पुत्तलीं रुचिरां कृत्वा प्रतिष्ठाप्य समीरणम्। छित्वाछित्वा प्रजुहुयादष्टोत्तरशतं निशि॥ ५०॥ सप्ताहमेवं कुर्वीत साध्यो दासो भवेत्सस्वयम्। शैवमंत्रेषु निष्णातश्चण्डेश्वरमनुं भजेत्॥ ५१॥ सर्वान्कामनवाप्नोति परत्रेहच नन्दति। धरायोग्निमरुद्व्योममखेशेन्द्वर्क मूर्तये॥ ५२॥ सर्वभूतान्तरस्थाय शङ्कराय नमोनमः। श्रुत्यन्तकृतवासाय श्रुतये श्रुति जन्मने॥ ५३॥ अतीन्द्रियाय महसे शाश्वताय नमोनमः। स्थूलसूक्ष्मविभागाभ्यामनिर्देश्याय सम्भवे॥ ५४॥ भवाय भवसम्भूत दुःखहंत्रे नमोस्तुते। तर्कमार्गातिदूराय तपसां फलदायिने॥ ५५॥ चतुर्वर्गवदान्याय सर्वज्ञाय नमोनमः। आदिमध्यान्तशून्याय निरस्ताशेषभीतये॥ ५६॥ योगिध्येयायमहते निर्गुणाय नमोनमः। विश्वात्मने विचिन्ताय विलसच्चन्द्रमौलिने॥ ५७॥ कन्दर्पदर्पकालाय कालहन्त्रे नमोनमः। विषाशनाय विहरद्वृषस्कन्धमुपेयुषे॥ ५८॥ सरिद्वामसमाबद्धकपर्दाय नमोनमः। शुद्धाय शुद्धभावाय शुद्धानामन्तरात्मने॥ ५९॥ पुरान्तकाय पूर्णाय पुण्यनाम्ने नमोनमः। भक्ताय निजभक्तानां भुक्तिमुक्ति प्रदायिने६०विवाससे विवासाय विश्वेशान्ते नमोनमः। त्रिमूर्तिमूलभूताय त्रिनेत्राय नमोनमः॥ ६१॥ त्रिधाम्नांधामरूपाय जन्मघ्नाय नमोनमः। देवासुरशिरोरत्नकिरणारुणितांघ्रये॥ ६२॥ कान्ताय निजकान्तायै दत्तार्द्धाय नमोनमः। स्तोत्रेणानेन पूजायां प्रीणयेज्जगतः पतिम्॥ ६३॥ भुक्तिमुक्तिप्रदं भक्त्या सर्वज्ञं परमेश्वरम्॥ १६४॥ इति शारदातिलके विंशः पटलः॥ २०॥ अथो वक्ष्यामि-

---

वैदिकान्मन्त्रान्वक्तुमुपक्रमते। अथोइति। तत्त्वरूपां चतुर्विंशतिवर्णानां चतुर्विंशतितत्वात्मकत्वात्तद्रूपता। तान्यक्षरन्यासे वक्ष्यन्ते। अनेन गायत्र्यक्षरैः सार्द्धं तत्वन्यासोपि सूचितः। त्रयीमयीमित्यनेन एतया सम्यग्यथा विधिपठितया त्रयी पाठफलप्राप्तिरुक्ता। यथा गायत्र्या सच्चिदानन्दलक्षणं ब्रह्मप्रकाश्यते। ततः प्रणवस्य तत्प्रतिपादकत्वमंत्येव त्र्यति। व्याहृत्यादीनां तत्प्रतिपादकत्वमाहुर्वृद्धाः। भूः पदाद्याव्याहृतयो भूशब्दः सति वर्त्तते। तत्पदं सदितिप्रोक्तं तन्मात्रत्वाच्च भूरतः। भूतत्वात्कारणत्वाच्च भुवः शब्दस्य संगतिः। सर्वस्वोकारणात्स्वात्मतया च स्वरितीरितं। महत्वाच्च महस्त्वाच्चमहःशब्दस्य संगतिःतदेव सर्वजनता तस्मात्तु व्याहृतिर्जनःतपोज्ञानतया चैव तथा तापतया स्मृतंसत्यंपरत्वादात्मत्वादनंतज्ञानतः स्मृतं। प्रणवस्य व्याहृतीनां गायत्र्यैकमथोच्यते। अकारो भूरुकारस्तु व्योमार्णः स्वरितीरितः। बिंदुर्महस्तथा नादो जनः शक्तिस्तपः स्मृतं। शांतिः सत्यमिति प्रोक्तं यतत्परतरं पदं। तद्दितीयैकवचनमनेनाखिलवस्तुनः। सृष्ट्यादि कारणं तेजः परं ब्रह्माभिधीयते। यत्तत्सवितुरित्युक्तं षष्ठ्येकवचनात्मकं। धातोरिह विनिष्पन्नं प्राणिप्रस

गायत्रीम् तत्त्वरूपां तभीमती।यथा काश्यते ब्रह्म सच्चितानन्दलक्षणम् १।प्रणवाद्याव्याहृतयःसप्त स्युःसत्पदादिका। चतुर्विंशत्यक्षरात्मा गायत्री शिरसान्विता ॥ २ ॥ सर्ववेदोद्धृतः सारो मन्त्रोयं समुदाहृतः। ब्रह्मा देव्यादि गायत्री परमात्मा समीरिता ॥३॥ ऋष्याद्याःप्रणवस्यैते मुनिभिः परिकीर्तिता। जमदग्निभरद्वाजभृगुगौतमकश्यपान् ॥ ४ ॥ विश्वामित्रवसिष्ठाख्यो व्याहृतीनामृषीन्विदुः। गायत्र्युष्णिगथानुष्टुब्बृहती पंक्तयः पुनः ॥५ ॥ त्रिष्टुप् जगत्यो च्छन्दांसि कथितानि मनीषिभिः। सप्तार्चिरनिलः सूर्यो वाक्पतिर्वरुणोवृषः ॥ ६ ॥ विश्वे देवा क्रमादासां देवताः परिकीर्तिताः। गायत्र्यामुनिराख्यातो विश्वामित्रो महत्द्युतिः॥७॥ गायत्री छन्द इत्युक्तं देवता सविता स्मृता। शिरसोस्य मुनिर्ब्रह्मा छन्दो देव्यादिका स्मृता ॥ ८ ॥ गायत्री परमात्मास्य देवता कथिता बुधैः। व्याहृतीः सप्तभूराद्या हृन्मुखांसोरुयुग्मके ॥ ९ ॥ जठरे न्यस्य मन्त्रज्ञो गायत्र्यार्णां स्तनौ न्यसेत्। यत्सन्धिषु ध्वजे नाभौ हृत्कण्ठभुजसन्धिषु ॥ १० ॥ अस्यनासाकपोलाक्षिकर्णभ्रूमस्तके पुनः। पाश्चात्योत्तरयाम्यप्राग्घ्र्ध्ववक्त्रेषु साधकः ॥ ११ ॥ पदानि दश विन्यस्येदेषु स्थानेषु मन्त्रवित्। शिरोभ्रू-

---

वत्र चकात्। सर्वासां प्राणिजातीनामिति प्रसवितुः सदा। वरेण्यं वरणीयत्वात्प्रार्थ्यत्वात्सेवनीयतः। पूर्वस्याष्टाक्षरस्यैवं व्याहृतिर्भूरितीरिता। पापस्य भर्जनाद्भर्गो भक्तस्निग्धतयाथवा। देवस्य दीप्यमानस्य वृष्ट्यादि गुणितस्तथा। ध्यै चिंतायामतो धातोर्निष्पन्नं धीमहीत्यतः। हीनता रहितं तेजो यः स्यात्सतु हिरण्मयः। सुसूक्ष्मः सोहमित्येवं चिंतयामः सदैव तु। द्वितीयाष्टाक्षरस्यैवं व्याहृतिर्भुव ईरिता। धियो सुधीर्मनोरम्यं छांदसत्वाच्च ईरितः। कृतश्च लिंगव्यत्यासः सूत्रात्सुप्तिङुपग्रहात्। यत्तत्तेजो निरुपमं सर्वदेवमयात्मकं। न इति प्रोक्त आदेशः षष्ठ्या बहिरिति चास्मदः। तस्मातस्माकमित्यर्थः प्रार्थनायां प्रचोदयात्। तृतीयाष्टाक्षरस्यापि व्याहृतिस्वरितोरिता। आपोज्योतीरस इति सोमाग्न्योस्तेज उच्यते। तदात्मकं जगत् सर्वं रसस्तेजो द्वयं स्मृतं। अमृतं तदनादित्वाद्बृहत्वाद्ब्रह्म गद्यते। यदानंदात्मकं ब्रह्म सत्यज्ञानादि लक्षणं। तद्भूर्भुवः स्वरीत्युक्तं सोहमित्यमुदाहृतं। एतत्तु वेदसारस्य शिरस्त्वाच्छिर ईरितमिति। प्रणवाद्या इति प्रतिव्याहृति संबंध्यते। तत्पदादिकेत्यस्याग्रिमेण संबंधः। शिरसेति। ॐ आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोमिति। मुनिभिः परिकीर्त्तिता ऋष्याद्याः प्रणवस्य समीरिता इति संबंधः। अस्याः कल्पोक्तं बीजादिप्रोक्तं। रेइत्येतत् बीजं स्याद्यवर्णं शक्तिरुच्यते। णियेतत्कीलकं प्रोक्तं गायत्र्याश्चिपदात्मन इति। कल्पांतरे। यंतु बीजं स्यादीशक्तिर्णंच कीलकमिति। मंत्रज्ञोत्यत्रेदित्यनेन प्रणवं विन्यस्य सप्तव्याहृतीर्विन्यस्तव्या इत्युक्तं भवति। यदाहुः। ॐ नमो ब्रह्मणे नाभौ हृदये उं च विष्णवे। मं शिवाय नमो मूर्ध्नि तत्तद्रूपं स्मरन्न्यसेदिति। यत्संधिष्विति। पादद्वयसंधिचतुष्के अक्षरचतुष्कं। तदुक्तं। पदद्वयसंधिचतुष्क इति। अयं न्यासः अंगुलिमारभ्य कर्त्तव्यः। अत्र यद्यपि संधिशब्दग्रहणमस्ति तथापि तदवध्यंग एव न्यासो विधेय इति ज्ञेयं। एवं भुजद्वयसंधिचतुष्के अक्षरचतुष्कं। न्यासादिष्वेकैकमक्षरं। णियेत्यस्य पृ

थग्भावेन चतुर्विंशत्यक्षरात्मकत्वं । साधक इत्यनेन प्रत्यक्षरमादौ प्रणवः अंते वनमः अह इत्युक्तं । कल्पांतरे तु । वर्णन्यासमथो वक्ष्ये यार्षच्छंदश्चिदैवतं । तत्त्वशक्तीवर्णमुद्रे स्मृत्वा वर्णान् क्रमान्न्यसेत् । मित्रोक्ताग्न्यचलाह्लादिपीतो वक्त्रांगुलीकरौ । संमुखं मोहपापघ्नं चरणांगुष्ठयोस्तुतत् । मधुच्छंदो तिवाद्यंबुप्रभाश्यामोब्जकोशवत् । संमुखौ संपुटं चोपपापघ्नं गुल्फयोस्तुसं । गर्गमध्याकृतिजोजाकपिलोविततं करौ । प्रसारितौ त्तानशाखौ पायघ्नजंघयोस्तुविं । उपमन्युप्रतिष्टा च विधुद्दायुश्च विश्वभृत् । विस्तीर्णं हंसतोत्तानतर्ज्जनीमुक्तहस्तकं । इंद्रनीलनिभं रोगग्रहघ्नं जानुनोस्तुतं । काश्यपः सुप्रतिष्टाच यमः खं च विलासिनी । वज्राभं संमुखासक्तपाण्यौर्युक्तकनिष्ठयोः । अन्यत्र विरलांगुल्यो रंगुष्ठद्वययोगतः । द्विमुखं भ्रूणहत्याघ्नमूर्वोर्वं विन्यसेत्सुधीः । भृगुर्द्वंद्युजलंगंधः प्रभाढ्यः पूर्वरूपयोः । त्रिमुखं तर्जनीयोगादंगुष्ठे गम्यावह्नुत्तरे । अत्युष्णिग्वाग्रसोलोलाविधुतहह्चतुर्मुखं । मध्यायोगादभक्ष्याद्यहरंवृषणयोस्तुणिं । विष्णवनुष्टुब्विष्णुरूपशांता अनामाढ्यः पंचवक्त्रकं । अनामायो गतौ हत्या हरं कट्यां तु यंतथा । हारितौ बृहतीं द्रस्त्वक् कांतिर्नीलस्तथातयोः । तिर्यग्मुक्ताग्रांगुलिकयोः कनिष्टा मोक्षणे सति । षण्मुखं नरहत्याघं नाभौभं याज्ञवल्क्यकः । पंक्तिर्विद्याधरः शब्दो दुर्गारक्तभधोमुखं । वक्राग्रावाकृतकरं जठरेर्गोगवांछितम् । कविस्त्रिष्टुप् रविर्वागो रक्तरुग्व्यापकांजलिः । उत्तानौ पूर्ववद्धस्तौ स्वाद्यनुत्सनयोश्वदे । अंगिराजगतीशर्वौ हस्तौ विद्याच्छ्ररुक्त्वधः । मुक्ताग्नां गुष्टकौ सुष्टी शकटं हृदि वंगुरोः । स्वंजमो जगतीत्वष्टो यक्षेशाः कांचनछवि । यमपाशं बद्धमुष्टोरुत्तानाा वामतर्जनी । वक्रानान्युब्जया युक्तान्पया कंठे मनोद्यहृत् । आपस्तंबः शक्करीच पायुराप्यायिनी वसुः । शुभ्रौ मिथः संधि लीनां गुलिकोसंमुखौ करौ । दीर्घांगुष्टौ ग्रथितकंधीमुखे पितृपापनुत् । संवर्त्तोति मरुत्यादौ विमला पद्मरागभः । संधितोर्ध्वांगुलिर्वामस्ताट्टशोधो मुखः परः । सुसंमुखोन्मुखं तालु मध्येमं पूर्वपापहं । कात्यायनस्तनत्सोम। श्रोत्रं माढ्यं विषापहं । उत्तानोन्नतकोटीद्वौ लंबहिंनासिकागतं । असितोत्यंगिरात्वग्धिरण्यापांडुपरिग्रहान् । अन्योन्यमंहतो त्तानौ मुष्टिकं नेत्रयोस्तुधिं । व्यासोध्रुतिः सुराश्चक्षुः सूक्ष्मा रक्तास्य संमुखौ । युक्तानामाकनिष्टौ संयुक्तवक्राग्रशेषकौ । मत्स्यप्राणिवधाद्यघ्नं भ्रूमध्ये योन्यसेद्द्विजः । पराशरोर्धृतिर्हस्तौ जिह्वा तोनिश्च रुक्मरुक् । कूर्मः पृष्टे समाक्रांतो दक्षिणेन त्वधोमुखः १९ यो ललाटे खिलाद्यघ्नं शंकुः कृतिः प्रजापतिः । प्राणं जपावलाकाभः कक्षाभ्या साश्रयौ करौ । वामोर्ध्वमध्यो वाराहः पूर्वास्येनं सुखार्थदं २० शंखप्रकृतिदेवाहृत् पद्मानीलः श्रुतिश्रितौ । प्रसारितांगुलीसिंहो दक्षास्येप्रंसिवप्रपम् २१ दक्षाकृतीशिवाहंसा हरित्पूर्वौदितौकरौ । कुंचिताग्रौ मह्राक्रांतमुत्तरेघो हरिप्रदं २२ गौतमाकृतिकाकाद्यामुद्गरः किंचिदूर्ध्वयोः । करयोर्वामहस्तस्य तर्ज्जनीदक्षमुष्टिना । गृहीता ब्रह्मतोव्यस्य प्रदंदंपश्चिमानने २३ शातातयः कृतिर्विष्णुर्गणाभद्रे शरूपधृक् । दक्षिणोधोमुखो मूर्ध्नि पल्लवः केपवर्गियादिति २४ पदन्यासमास पदानीति। एषु वक्ष्यमाणेषु । पदानि तु एकत्र्याग्निद्वाग्निवह्निद्विरेकैकाध्यक्षरैः क्रमात् । कल्पांतरे शिरः पदन्यासोप्युक्तः । ॐ मायस्तनयोर्ज्योतिर्नेसिनेत्रेरसोमुखे । अमृतं शिरसि ब्रह्म शिखायां भूर्भुवः स्वरोमिति । षडंगमाह

मध्यदृग्वक्त्रे कण्ठहृन्नाभि गुह्यके ॥ १२ ॥ जानुनः पादयोर्युग्मे तच्छिरः शिरसि न्यसेत्। हृदयं ब्रह्मणे प्रोक्तं विष्णवे शिर ईरितम् ॥ १३ ॥ शिखा रुद्राय कवचमीश्वराय समीरितम्। नेत्रं सदाशिवायोक्तमस्त्रं सर्वात्मने स्मृतम् ॥ १४ ॥ षडंगान्येव मुक्तानि यथास्थानं प्रविन्यसेत्। मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्वात्मवर्णात्मिकाम्। सावित्रीं वरदभयांकुशकरां पाशं कपालं गुणं शंखं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ १६ ॥ प्रणायामान्पुराकृत्वा गायत्रीं सन्ध्यायोर्जपेत्। सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसान्विताम् ॥१७॥ त्रिरुच्चरन्धिया प्राणान्धारयेद्यतमानसः प्राणायामोऽयमाख्यातः समस्तदुरितापहः ॥ १८ ॥ व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत्। तत्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ॥ १९ ॥ क्षीरौदनतिलान्दूर्वाक्षीरद्रुमसमिद्वरान्। पृथक् सहस्रत्रि-

---

ब्रह्मण इति। अत्र सर्वात्मने स्मृतमित्यात्मने पदोद्धारो ग्रंथकृतः सर्वत्राभिप्रेतः। ब्रह्मात्मने हृदयाय नम इत्यादि प्रयोगः। सांप्रदायिकास्तु ॐ भूर्भुवः स्वस्तत्सवितुर्ब्रह्मात्मने हृत्। वरेण्यं विष्णवात्मने शिरः भर्गोदेवस्य रुद्रात्मने शिखा धीमहि ईश्वरात्मने कवचं। धियोयोनः सदाशिवात्मने नेत्रं प्रचोदयात् सर्वात्मने अस्त्रमिति षडंगकल्पं वदंति। कल्पांतरे तु। ब्रह्मा विष्णु क्रमाद्रुद्र ईश्वरश्च सदाशिवः सर्वात्मतेजसौतस्य व्याहृत्यादि षडंगके इति। आदिशब्देन व्याहृतित्रयं च। ॐ भूर्ब्रह्मतेजसे इत्यादि प्रयोगः। ध्यानमाह। मुक्तेति। कशा अश्वादिस्ताडनीरज्जुः। शुक्रमिति कपालविशेषणं। गुणः पाशः। आयुधध्यानं तु। दक्षाधूर्ध्वयोरंत्ये तदधस्तनयोश्चक्रशंखौ। तदधस्थयोः पाशकपाले तदधस्थयोः कशांकुशौ तदधस्तनयोरभयवरौ। अत्र ध्यानानंतरं वरादि मुद्रा प्रदर्शयेत्। यदाहुः वराभयाब्जपद्मौद्रगन्निमुद्राः प्रदर्शयेदिति। त्रिसंध्यं ध्यानं यथा। हंसारूढां शिताब्जेत्वरणमणिलसद्भूषणं साष्टनेत्रां वेदाख्यामक्षमालां स्रुवमथकमलं दंडमप्यादधानां। ध्यायेद्दोर्भिश्चतुर्भिस्त्रिभुवनजननीं पूर्वसंध्यादि वंद्यां गायत्रीमृक् सवित्रीमभिनवव्ययमं मंडले चंडरश्मेः। विश्वमातः सुराभ्यर्च्येत् पुण्ये गायत्रि वेधसि। आवाहयाभ्युपायास्त्यर्थं एह्योनोघ्निपुनीहिमां। वृषेंद्रवाहनादेवी ज्वलत्त्रिशिखधारिणी। श्वेतांवरधराश्वेतनागाभरणभूषणा। श्वेतस्रगत्तमालालंकृतारक्ता च शंकरा। जटाधारा धरा धात्री धरेंद्रांगभवाभवा। मातर्भवानिविश्वेशि आह्वतैहि पुनीहिमां। संध्या सायंतनी कृष्णा विष्णुदेवा सरस्वती। खगगाकृष्णवक्त्रा तु शंखचक्रधरापरा। कृष्णस्रग्भूषणैर्युक्ता सर्वज्ञानमयीवरा। वीणाक्षमालिकाचारु हस्तास्मितवरानना। मातर्वाग्देवते स्तुत्वे आह्वतैहि पुनीहि मामिति। प्राणायामानिति बहुवचनं कपिंजलाधिकरणन्यायेन त्रित्वे पर्यवस्यति। तत्स्वरूपमेवाह।सप्तेति। धियात्रिरुच्चरन्निति संबंधः व्याहृतीति। व्याहृतित्रयमाद्यं। मोक्षार्थी तु। परोरजसे सावदोमिति। चतुर्थपादसहितां जपेदिति ज्ञेयं। अस्य विमलऋषिर्गायत्रीछंदः परमात्मा देवतेति। तत्त्वलक्षमिति। चतुर्विंशतिलक्षं विधानेनेति पुरश्चरणोक्तेन। क्षीरौदनेति। क्षीरमोदनस्तिलादूर्वा इति द्रव्यचतुष्टयं। क्षीरद्रुमा अश्वत्थोदुंबरप्लक्षवटाः। मंडलमिति सर्वतोभद्रं त्रिकोणोज्ज्वलकर्णिकं। तत्कर्णिकायां त्रिगुणितं यंत्रं लिखेदित्यर्थः। त्रिकोणशब्दस्य त्रिगुणितो पलक्षकत्वात्। तदुक्तं

तयं जुहुन्मन्त्रसिद्धये ॥ २० ॥ त्रिधाय मंडलं विद्वान् त्रिकोणोज्वलकर्णिकाम् । सौरं पीठ यजेत्तत्रदीप्तादि नव शक्तिभिः ॥ २१ ॥ मूलमन्त्रेण क्लृप्तायां मूर्तौ देवीं प्रपूजयेत् । कोणेषु त्रिषु संपूज्याब्रह्माद्याः शक्तयो बहिः ॥ २२ ॥ आदित्याद्यास्ततः पूज्या उषादि सहिताः क्रमात् । ततः षडंगानभ्यर्च्यत्केसरेषु यथाविधि ॥ २३ ॥ प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वम्भरां पुनः । विशालिनीप्रभावत्यौ जयां शान्तिं यजेत्पुनः ॥ २४ ॥ कान्तिं दुर्गासरस्वत्यौ विश्वरूपां ततःपरम् । विशालसंज्ञितामीशां चापिनीं विमलां यजेत् ॥२५॥ ततोपहारिणीं सूक्ष्मां विश्वयोनिं जयावहा । पद्मालयां परा शोभां पद्मरूपां ततोर्चयेत् २६ ब्राह्मयाद्याः सारुणां बाह्ये पूजयेत्प्रोक्तलक्षणाः । ततोर्चयेद्ग्रहान्बाह्ये शक्रादीनायुधैःसह२७ इत्थमावरणैर्देवीं दशभिः परिपूजयेत् । धमार्थकाममोक्षाणां भोक्तास्याद्द्विजसत्तमः ॥२८॥ तत्वसंख्या सहस्राणि मंत्रविज्जुहुयत्तिलैः । सर्वपापविनिर्मुक्तो दीर्घमायुः स विंदति ॥२९॥ आयुषे साज्यहविषा केवलेनाथसर्पिषा । दूर्वात्रिकैस्तिलैर्मंत्री जुहुयात्रिसहस्रकम् ॥ ३० ॥

---

माचार्यः अथ त्रिगुणिते विचित्रे मंडलोत्तम इति । तत्र पूर्वोक्ते । दीप्तादीति । चतुर्दशपटलोक्ताः कोणेष्विति । अग्निवरुणेशानेषु ब्रह्माद्या ब्रह्मविष्णवीशाः । शक्तयो गायत्री सावित्री सरस्वत्याख्याः । कोणेषु त्रिष्वित्येव । ऐंद्रनैरृत्यवायव्यभागेष्वित्यर्थः । एभिः प्रथमावरणं । अत्र यद्यपि ब्रह्माद्या इत्युक्तं तथापि शक्तिपूजापूर्वं ज्ञेया । त्रि शक्तिमूर्तीः प्रथमं समर्च्येत्य चार्योक्तेः । अन्यत्रापि । गायत्री शतमखजे निशाचरोथे सावित्री पवनगते सरस्वतीं च । ब्रह्माणं हुतभुजि वारुणे च विष्णुं षष्ठे स्वे समभियजेत्तथेशमैशे इति । अन्यत्रापि । रक्तारक्ताकल्पाचतुर्मुखो कुंडिकाक्षमालब्जे । दधतो प्राक्कोणस्था गायत्री तादृशोग्निमोब्रह्मा । अरिदरगदाब्जहस्ता किरीटकेयूरसंभिन्ना । निशि चरकोणसमुत्था सावित्री वरुणगस्तथा विष्णुः । टंकाक्षभयवरदान् दधतीच त्रीक्षणेंदु कलितजटा । वाणी वायव्यस्था विशदाकल्पा तथेश्वरस्त्वैश इति । कल्पांतरे तु । षट्कोणाग्निषु सावित्र्यै प्राग् गायत्र्यै च नैरृते । वायुकोणे सरस्वत्यै आग्नेये ब्रह्मणे नमः । पश्चिमे विष्णवेथैशे रुद्राय प्रथमावृतिः तत आदित्याद्याश्चतुर्दशपटलोक्ताः । उषादयश्च तत्रापटलोक्तप्रकारेणैव । एतेन द्वितीयावरणं । तत इति तृतीया यथाविधीति । चतुर्थपटलोक्तरीत्या । प्रह्लादिनीमिती । आसां ध्यानमुक्तमन्यत्र । कुंदेंदुधवलाकारा मणिमुक्ताद्यलंकृताः गुणांकुशवरदाभीजकराः प्रह्लादिनीमुखा इति । आभिरष्टाभिरष्टाभिरावरणत्रयं । अतएव दशभिरावरणैरिति वक्ष्यति ब्राह्म्याद्याः मारुणा इति । अरुणांता महालक्ष्मी स्थाने अरुणः पूज्य इत्यर्थः । पद्मपादाचार्यास्तु अरुणपूजामधिकामाहुः । प्रोक्तलक्षणा इति । षष्टपटलोक्तध्यानाः । आभिः सप्तमं । ग्रहानिति । सूर्यमंत्रोक्तान् । एभिरष्टमं । कल्पांतरेषु । अष्टमीग्रहैरादित्यपरिषदांतैस्तैरिति । इंद्राद्यैर्नवमं । तदायुधैर्दशमं । आयुष इति साज्यहविषेत्येकं केवलेनेति । पायसेन केवलेनेति । सर्पिषेति च संबंधः । त्रिसहस्रमिति । पंचानामपि संख्या । तदुक्तं । आयुः कामो जुहुयापायसहविराज्यकेवलाज्यैश्च । दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रसंख्यकं मंत्रीति । तत्वांतरमर्थं धारणयंत्रमुच्य

अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः । महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ॥ ३१ ॥ ब्रह्म श्रिये प्रजुहुयात्प्रसूनैर्ब्रह्मवृक्षजैः ॥ बहुना किमिहोक्तेन यथावत्साधुसाधिता ॥ ३२ ॥ द्विजन्मनापियं विद्या सिद्धा कामदुघातमा । ओं जातवेदसुनवामसोमं मरातीयतोनि दहाति वेदः । सनः पर्षदति दुर्गाणि विश्वानावेवसिन्धुदुरितात्यग्निः ॥३४॥ आग्नेयमभिधास्यामि मंत्रं सर्वार्थसाधकम् । मारीचिः काश्यपः प्रोक्तो मुनिरस्य महामनोः ॥ ३५ ॥ त्रिष्टुप् छन्दो देवतात्रजातवेदोग्निरीरितः । नवभिः सप्तभिः षड्भिः सप्तभिः पुनरष्टभिः ॥ ३६ ॥ सप्त भिर्मूलमन्त्रार्णैः षडंगाविधिरीरितः । अंगुष्टगुल्फजंघासु जानुनोरुरुयुग्मके ॥ ३७ ॥ कट्यं-धुनाभिषु हृदिस्तनयोः पार्श्वयोर्द्वयोः । पृष्ठतः स्कन्धयोर्मध्ये बाहुमूलोपबाहुषु ॥ ३८ ॥ प्र-कूर्परप्रकोष्ठेषु मणिबन्धतलेषु च । मुखनासाक्षिकर्णेषु मस्तमस्तिकमूर्द्धसु ॥ ३९ ॥ क्रमेण विन्यसेद्वर्णान्मन्त्री मन्त्रसमुद्भवान् । शिखाललाटनयनकर्णौष्ठरसनास्तथा ॥ ४० ॥ संकठ-बाहुहृत्कुक्षि कटिगुह्योरुजानुषु । जंघयोः पादयोर्न्यस्येत्पदान्यस्य मनोः सुधीः ॥ ४१ ॥ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटाविलसद्धस्ताभिरा-

---

ते । शशिरवीद्धकृशानुकोणविलसद्भूरादिसत्कर्णिकं वस्वब्जंरयुग्मकेसरदलैर्वर्गैस्त्रिवर्णैर्मनोः । गा-यत्र्याः कथितं मह: प्रभृतिभिर्यंत्रं तु दिग्वंकितं चूडामंत्रतुरीयवेष्टितमिदं क्ष्माकोणतारांकितामि ति । राभवल्लभे तु द्वादशगुणितं यंत्रं गायत्री यंत्रवत्त्वेनोक्तं । त्रिष्टुप् मंत्रमाह आग्नेयमिति सचर्ग्वे देप्रसिद्धः । यथा । जातवेदसे । सुनवामसोममरातीयतो निदहाति वेदः । सनः पर्षद इति । दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः । हृल्लेखासंपुटोजप्तव्यः । मारीचः । कश्यप इति विशेष णं विधेयं । हत्तं । शाबीज स्वरांशः शक्तिः अंगुष्टेति । पादांगुष्टद्वयं । स्कंधयोरिति भिन्नं । म-ध्य इति । कंधरायां । उपबाहुर्वाति । बाहुमूलप्रकूर्प्परमध्यभागः । मस्तं ललाटकेशसंधिः मस्ति ष्कन्तदूर्ध्वदेशः । मूर्द्धा ब्रह्मरंध्र । वर्णानित । चतुश्चत्वारिंशत् परिषदित्यस्य पृथक् पाठात् । अ-त्रांगुष्टादि स्थानद्वयं वर्णद्वयन्यासः । पदन्यासमाह । शिखेति । शिखा मूर्द्धा गुह्यं लिंगं । अत्र पदन्या से नयनयोः पदद्वयं कर्णद्वये पदद्वयं अन्यत्रैकैकं पदं । तदुक्तमीशानशिवेन । स्मृतमिह्तु पदानां कं ललाटादिक गत्वधररसनकण्ठे बाहुहृन्नाभिदेशाः । कटिरपिमदनोरूजानुजंघां घ्रयोमीश्रवण नयनयोर्द्वे स्थानमेकेकमन्यदिति । पदन्यष्टादशतानि यथा । शराब्धिद्दोष्वेकवह्निद्देत्रकैकद्विद्वि पात्रकैः । द्वाग्निद्वग्निद्विद्विवर्णैरष्टादशपदानिह्वि विद्युदिति । दरः शंखः । गुणस्त्रिशूलं । अस्त्रासाख्यस्त्रिशूलानीत्याचार्योक्तिः । आयुधध्यानं तु । दक्षायूर्द्धयोराद्ये । तदधस्थयोरग्रिमे । तदधस्थयोश्चापविशिखौ । तदधस्थयोः शूलतर्ज्जन्यौ । तदुक्तं । हिमाचलतटे रम्ये कल्पद्रु-मोपशोभिते । दिव्योद्यानं चिंतयेच्च विशालं हेमभूतलं । कशानुरूपवप्रेण करालेन स माहृतं । तन्मध्ये चिंतयेद्दिव्यं विचित्रमणिमंडपं । तस्मिन् सिंहासनेंभोज कर्णिकायां विचिंत-येत् । दंष्टाकरालाट्टहासं कृशवर्णभयानकं । अतितीव्रमुखं सिंहं जमदग्निशिखोज्ज्वलं । त-स्योपरिष्टात्तां देवींकोटिबालार्कसंनिभां । चक्रासि बाणशूलाख्यान् दधतीं दक्षिणैर्भुजैः शंखं चक्र

सेवितामू । हस्तैश्चक्रगदासि खेटाविशिखंचापं कुशं तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत् ॥ ४३ ॥ मन्त्रवर्णसहस्राणि जपेन्मन्त्रं विशालधीः । तदन्ते तिलसिद्धार्थचित्रमूलैः समिद्वरैः ॥ ४४ ॥ क्षीरद्रुमाणामाज्येन हविषान्नैर्घृतान्वितैः । चतुश्चत्वारिंशदाढ्यं चतुःशतसमन्वितम् ॥ ४५ ॥ चतुःसहस्रं जुहुयादर्चिते हव्यवाहने । मंडले सर्वतोभद्रे षट्कोणांकितकर्णिके ॥ ४६ ॥ विधिना वक्ष्यमाणेन पीठं देव्याः प्रपूजयेत् । जयाख्यां विजयां भद्रां भद्रकालीमनन्तरम् । सुमुखीं दुर्मुखीं संज्ञां पश्चाद्व्याघ्रमुखीं पुनः । अथ सिंहमुखीं दुर्गां नव शक्तीः प्रपूजयेत् ॥ ४८ ॥ आसनं सिंहमन्त्रेण दद्यादुक्तेन देशिकः । मूर्तिं संकल्प्य मूलेन तस्यामावाह्य पूजयेत् ॥ ४९ ॥ षडंगानि यथापूर्वं केसरेष्वर्चयेत्सुधीः । ग्न्यादियादाष्टकोत्पन्नामूर्तयोर्च्यावहिः पुनः ॥ ५० ॥ जातवेदाः सप्त जिव्हो हव्यवाहनसंज्ञकः । अश्वोदरजसंज्ञोन्यः पुनर्वैश्वानराह्वयः ॥ ५१ ॥ कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः । ततो भूसलिलाग्नीरान्नात्मने तान्नमोन्वितान् ॥ ५२ ॥ चतुर्दिक्षु समभ्यर्च्येत्कोणेषु तत्कलाः पुनः । पूर्वादि दिक्षु सम्पूज्याजार्णाद्यावर्णशक्तयः ॥५३॥

---

धनुर्बाणतर्ज्जनीर्वामबाहुभिः चंद्रखंडसमायुक्तामति भीमत्रिलोचनां । ऊर्ध्वज्वलत्केशपाशामशेषाहरणोन्मुखीं । अंगाद्यावृतिसंयुक्तामस्त्रशस्त्रपरीवृतां । इंद्रादि लोकपालैश्च सेवितां विंध्यवासिनोमिति विशालधीरित्यनेन दीक्षाप्रकारेणायंमंत्रो ग्राह्य इत्युक्तं । तदुक्तमाचार्यैः । दीक्षाप्रवर्त्तते पूर्वं यथावद्देशिकोत्तमैः । ततोस्त्रकल्पैः संप्रोक्तास्यात्प्रयोगविधिस्तत इति । अन्यत्रापि । अस्त्राणि दीक्षितस्यैव कथयेत् सत् साधयेदिति । चित्रमूलैश्चित्रकमूलैः । हविषा पायसेन । घृतान्वितैर्घृतसिक्तैः । सर्पिः सिक्तैः क्रमात् होमात् साधयेत् समुदायत इति । आचार्योक्तिस्तेन नवद्रव्याणि तेनैकैकद्रव्येण चतुः शती चतुर्नवतिः आहुतयः । मंडल इति । तृतीयोक्ते । षट्कोणांकितेति । तत्पद्मकर्णिकायां षड्गुणितं यंत्रं लिखेदित्यर्थः । षट्कोणशब्देन षड्गुणितस्योपलक्षितत्वात् । तदुक्तमाचार्यैः । दीक्षकाख्याचराख्यादौ शक्त्यावेष्ट्य ततो बहिः । यंत्रं षड्गुणितं कृत्वा दुर्वर्णललितात्मकं । बहिरष्टदलं पद्ममित्यादिना । शक्तीः प्रपूजयेदिति । आसां ध्यानमुक्तमन्यत्र । ज्वलज्ज्वलनसंकाशाः सर्व्वालंकारशोभिताः । शूलं कुठारडमरुदहनान् करपंकजैः । दधत्यश्चिंतनीयाः स्युर्ज्जयाद्यानवशक्तय इति । उक्तेनेति । एकादशेग्न्यादोत्यनेन मूर्त्तीनां तदादित्वमुक्तं पूजायां न्यासे च । तत्राग्न्यादि पादाष्टकमग्रे वक्ष्यति । मूर्त्तयोर्च्या इति उक्तं ताः का इत्यपेक्षायामाह।जातवेदा इति।मूर्त्तीनां पुनरुक्तिरव्यमूर्त्तिनिवृत्त्यर्था । आसां ध्यानमुक्तमन्यत्र तडित्कोटिसमप्रख्याः सर्वभूषणभूषिताः । शूलं शरं कार्मुकं च कपालं स्वैर्महाभुजैः । दधत्योरक्तवसनाः क्रूरे क्षणभयानकाः । ज्वलज्ज्वलनवक्त्राः स्युर्जातवेदादिमूर्तयइति । आत्मनेतानिनितत्वात्मनेनमइत्यादि । एषां ध्यानं स्वस्वस्थले प्रोक्तमनुसंधेयं । जलस्य वक्ष्यमाणं वरुणध्यानं ज्ञेयं । एतत्कलानिवृत्तिप्रतिष्ठाविद्याशांतिरूपाः । आसां ध्यानं प्रासादमंत्रोक्तमनुसंधेयं । पूर्वादिदिक्ष्विति । एकैकस्यां दिशि एकादशैकादशशक्ताः पूजयेत् । तदुक्तं । मंत्रविधानविद्व दिशि दिश्येकादशैकाद

जाग्रतातपनीवेदगर्भा दहनरूपिणी । सेन्दुखण्डाशुम्भहन्त्रीनभश्चारिण्यनन्तरम् ॥ ५४ ॥ वागीश्वरीमदवहासोमरूपा मनोजवा । मरुद्वेगारात्रिसंज्ञा तीव्रकोपायशोवती ॥ ५५ ॥ तोयात्मिका पुनर्नित्या दयावत्यपि हारिणी । तिरस्क्रियावेदमाता तत्परामदनप्रिया ॥ ५६ ॥ समाराध्यानंदिनी च परारिपुविमर्दिनी । षष्ठी च दण्डिनी तिग्मा दुर्गा गायत्र्यनंतरम् ५७ निरवद्या विशालाक्षी श्वासोद्धाहावनादिनी । वेदनावह्निगर्भाख्या सिंहवाहाह्वयातथा ५८ धुर्याद्वुर्विषहापश्चाद्गिरं सा तापहारिणी । त्यक्तदोषानिस्सपत्ना चत्वारिंशच्चतुर्युताः ॥५९॥ लोकपालांस्ततोभ्यर्चेद्वज्रूराद्यायुधसंयुतान् । इत्थं जपादिभिःसिद्धे मन्त्रेस्मिन्साधकोत्तमः ६० माग्नेयास्त्राधिकारी स्यातद्विधानमुदीर्यते । आग्नेयास्त्रमिति प्रोक्तं विलोम पठितो मनुः ६१। पूर्वोक्ता एवमुत्पाद्या मन्त्रस्यास्य प्रकीर्तिताः । प्रतिलोमक्रमादस्य षडंगानि प्रकल्पयेत् ६२। वर्णन्यासषदन्यासौ विदध्यात्प्रतिलोमतः । ध्यानभेदान्विजानीयाद्गुर्वादेशान्नचान्यथा ६३ पूर्ववज्जपक्लृप्तिःस्याज्जुहुयात्पूर्वसंख्यया। पंचगव्यस्त्रपक्वेन वरुणा तस्य सिद्धये ६४ अर्चनं पूर्ववत्कुर्याच्छक्तिस्तु प्रतिलोमतः । सर्वत्र देशिकः कुर्याद्गायत्र्याद्विगुणं जपम् ॥ ६५ ॥ क्रूर-

---

शेति । आर्णाद्या इति । जाप्रभृतिमंत्रात्तराद्याः । तत्परेति । दमनप्रियाविशेषणं । परेति कलानाम । षष्टोत्यपि नाम । प्रतिलोमेति । संख्यायाः प्रातिलोम्यं । वर्णप्रतिलोम्यम् । वर्णप्रातिलोम्यस्योक्तत्वात्प्रकल्पयेदिति । पूर्वोक्तसंख्याक्षरैः संप्रदायात्तारमायादुराद्यैः जातवेदसे मां रक्षरक्षाग्नयेऽस्त्रायफडंतैः । तदुक्तं । शैलाब्धि लोकांगसंख्यैर्धातुनंदप्रसंख्यकैः । विलोमभूतैस्तारादि बीजत्रयशिरोगतैः । आद्यं पदं मां रक्षाग्नये स्त्रायफट्युतैः । जातियुक्तैः षडंगानि दहनास्त्रस्य कल्पयेदिति ध्यानभेदानिति । तत्राग्नेयास्त्रदेवताध्यानं यथा । मध्ये तालवनस्याग्निर्वप्रास्येवह्निभूतले । महतस्तालवृक्षस्य मूलाभ्यां सविराजते । सिंहस्कंधाग्निकोणे वा चलच्चरणसंस्थितां । तडित्कोटिसमप्रख्यां कल्पातदहनोज्ज्वलां । अक्षत्रिमोग्रदंष्ट्रास्यां घंटामालास्फुरत्कटिं । शूलभोगींद्रडमरुविद्युदङ्गोन् ज्वलप्रभां । दधानांकरदंडैः स्वैर्भूषामदवलाकुलैः । भूषितांभूषणैरुग्रैः फणींद्रपरिकल्पितैः । गन्यादिवर्णमयीं देवीं संविद्रूपां विचिंतयेदिति । पूर्ववदिति । पूर्वोक्तसंख्ययां । विशेषस्तंत्रांतरे । मौनीव्रतपरोमंत्री शुद्धाचारो जितेंद्रियः । पूर्वोक्तासनमध्यस्थः प्राङ्मुखः स्वस्तिकासनः । आग्नेयास्त्रंजपेद्विद्वान् सिद्ध्यर्थं पूर्वसंख्ययेति तस्य सिद्धय इति । उभयासिद्धत्वे प्रयोगानर्हत्वात् । तदुक्तं यो हि सम्यगसाध्यै तत् क्रियाः कर्त्तुमभीप्सति । दिव्यास्त्रदेवतास्तंवै नाशयंत्येव दारुणाः । तस्मात् सर्वप्रयत्नेन षट्कालादिभिर्व्रतैः । देहं विशोध्य शस्त्राणि साधयित्वा चरेत् क्रिया इति । अन्यत्रापि । प्रतिलोमानुलोमांतां विद्यां संसाध्यदेशिकः । प्रयोगसारभेदेषामस्त्राणामुक्तमार्गत इति । अर्चनमिति । तत्र विशेषस्तंत्रांतरे । पीठे पूर्वोदिते देवीमावाह्योक्तेन वर्त्मना । प्रवरैर्गंधकुसुमैः सांगांमूलेन पूजयेत् । अंगान्यग्न्यादि कोणेषु वह्निमूर्त्तीर्दिशास्वपि । दुर्गानारायणोचैव दुर्मना शमनप्रिया । पदशक्तीरिमाश्चाष्टौ तृतीयावरणेर्चयेत् । मंत्रार्णशक्तीस्तद्बाह्ये लोकपालांश्च पूजयेदिति । सर्वत्रेति प्रयोगेषु गायत्र्याद्विगुणं जपं प्रयोगोक्तजपा

कर्माणि कुर्वीत प्रतिलोमविधानतः । शान्तिकं पौष्टिकं कर्म कर्तव्यमनुलोमतः ॥ ६६ ॥ प्रयोगकाले प्रजपेदष्टौ पादान्विलोमतः । साधितो जायते पश्चान्मन्त्रोयं विधिनामुना । आद्यः पंचाक्षरः पादो ज्ञेयो ज्ञानेन्द्रियात्मकः ॥ ६७ ॥ धुमाद्यः पंचवर्णोन्यः स्मृतः कर्मेन्द्रियात्मकः । श्वाद्यस्तृतीयः पंचार्णः पंचभूतमयः स्मृतः ॥ ६८ ॥ त्याद्यः सप्ताक्षरः पादश्चतुर्थोधातुरूपकः । दः पूर्वः पंचमः पादऊर्मिरूपः षडक्षरः ॥ ६९ ॥ तोर्णादिः षडर्णोन्य षाट्कोशिकमयोमतः । सोपूर्वःपंचवर्णोन्यःशब्दादिमय ईरितः ॥ ७० ॥ सेवर्णाक्षष्टमो ज्ञेयः पंचार्णो वचनादिकः । एवं तत्त्वसमायोगात्यागक्लृप्तिरुदीरिता ॥ ७१ ॥ तत्तत्पदाक्षरोत्पन्नास्तावत्यौवह्निदेवताः । प्रधानमूर्तिप्रतिमाः स्वस्वरणोदितप्रभाः ॥ ७२ ॥ प्रज्वलत्केशवदनाभीमदंष्ट्राभयानकाः । देवता इन्द्रिययोत्पन्ना उर्ध्ववृष्त्य ईरिताः ॥ ७३ ॥ देवताभूतपादोत्थास्तिर्यक् वक्त्राः प्रकीर्तिताः । धातुरूपाक्षरोद्भूता उभयाननशोभिताः ॥ ७४ ॥ ऊर्मिजा ऊर्ध्ववदना कोशोत्थास्तिर्यगाननाः । एताः सर्वास्मृताः क्लीबा इन्द्रियार्थोद्भवास्त्रियः ॥ ७९ ॥ अधस्तिर्यङ्मुखोपेता ईरिता वर्णदेवता । आभिमुख्यः स्मृताः सौम्ये पराङ्मुख्योन्यकर्माणि ॥ ७६ ॥ आभ्यो संख्याः समुत्पन्ना देवतालिवालितानताः । याभिर्मन्त्रं देहेच्छत्रो राज्यं सगिरिकाननम् ॥ ७७ ॥ अस्त्रं मनुष्य नक्षत्रेष्वारभेत विचक्षणः आसुरेषु प्रयुंजीत देवतारासु संहरेत् ॥ ७८ ॥ पूर्वोत्तरात्रयं पश्चाद्भरण्यार्द्राथरोहिणी । इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥ ७९ ॥ ज्येष्ठाशतभिषं मूलं धनिष्ठाश्लेषकृत्तिका । चित्रामघाविशाखास्युस्तारा राक्षसदेवताः ॥ ८० ॥ अश्विनिरेवतीपुष्पस्वातीहस्तपुनर्वसू । अनुराधा मृगशिरः श्रवणं देवतारका ॥ ८१ ॥ उपक्रमेतनन्दासु रिक्तास्वस्त्रं विसर्जयेत् । भद्रास्वाहरणं कुर्याज्जपस्वत्यन्तमुत्तमम् ॥ ८२ ॥ उपक्रमो भौमवारे शमिवारे विसर्जनम् । प्रतिसंहरणं वारे गुरोः शुक्रस्य षाभवेत् ॥ ८३ ॥ स्थिरेषु राशिष्वारम्भः चरेषु स्याद्विस-

---

र्दद्विगुणं जपं कुर्यादित्यर्थः । प्रतिलोमविधानतः । आग्नेयास्त्रेणा । नुलोमत इति जातवेदसे इत्यनेन । प्रजपेदिति पृथक् पृथक् शोधित इति तदुक्तं । मनोः स्थिरादि दोषाणां सर्वेषामुपशांतये । अभिचारकृतानां च मनुपादाष्टकं जपेदिति ज्ञानेंद्रियात्मकइति । घ्राणरसनचक्षुः श्रोत्रत्वक्रूपाणि ज्ञानेंद्रियाणि तदात्मकत्वं वर्णक्रमेण । एवमग्रेपि । कर्मेति । वाक्पाणिपादपायूपस्थानि । पंचभूतेति । पृथिव्यप्तेजोवायवाकाशानि । धात्विति । त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि । ऊर्म्मीति । बुभुक्षापि पासाशोकमोहजरामृत्युरूपाः । षट्कौशिकेति । स्नाय्वस्थिमज्ज्वात्वक्मांसांचाणि शब्दादीति शब्दस्पर्शरूपरसगंधाः । वचनेति । वचनादानगनिविसर्गानंदाः । एवं तत्त्वसमायोगादित्यनेन एतदक्षरैस्तत्त्वन्यासः सूचितः इंद्रियोत्पन्ना इति । आद्यपदद्वयोत्थाः । इंद्रेयार्थोद्भवाः स्त्रियः अधस्तिङ्मुखोपेता इति संबंधः इंद्रियार्थोद्भवा इति । अंत्यपादद्वयोत्थाः । सर्वासामुपसंहारः ईरिता वर्णदेवता इति । नंदास्विति । प्रतिपत् षष्ठेयकादशीषु । रिक्तास्विति । चतुर्थी नवमी चतुर्दशीषु । भद्रास्विति द्वितीयासप्तमीद्वादशीषु । जयास्विति । तृतीयाष्टमीत्रयोदशीषु । अत्यंतमुत्त

र्जनम् ॥ अस्त्रसंहरणं कुर्यादुभयेषु विचक्षणः ॥ ८४ ॥ कृष्णपक्षेऽनले नास्त्रविसृजेच्छशिना पुनः । शुक्लपक्षे क्रमादस्त्रं पुनरात्मानि संहरेत् ॥ ८५ ॥ भानुना मोक्षसंहारौ कुर्यात्पक्षद्वये सुधीः । पश्चिमाभिमुखो भूत्वा कर्म सर्वत्र साधयेत् ॥ ८६ ॥ नक्षत्रवृक्षसकलान्साध्याख्याकर्मसंयुतान् । तत्तन्मन्त्राक्षरोपेतान्मन्त्री मन्त्रार्णसंख्यया ॥ ८७ ॥ जुहुयादेधिते वन्हौ मारयेद्रिपुमात्मनः । कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ॥ ८८ ॥ धत्तूराविषवृक्षाक्षभूरुहोत्थान्समिद्वरान् । राजीतैलेन संलिप्तान्पृथक्सप्तसहस्रकम् ॥ ८९ ॥ जुहुयात्संयतो मंत्री रिपुर्यमपुरं व्रजेत् । सप्तरात्रप्रजुहुयात् सिद्धार्थस्नेहलोलितैः ॥ ९० ॥ आर्द्रवस्त्रोवृष्टिकाले मरीचैर्मनुनामुना । निगृह्यते ज्वरेणारिः प्रलयाग्निसमेन सः ॥ ९१ ॥ तालपत्रे समालिख्य शत्रुनाम यथाविधि । आग्नेयास्त्रेण संवेष्ट्य कुण्डमध्ये निखन्यते ॥ ९२ ॥ जुहुयान्मरिचैः क्रुद्धोज्वराक्रान्तः सजायते । तदादायक्षिपेत्तोये शीतले स वशो भवेत् ॥ ९३ ॥ विष्ट्वापामार्गबीजानि मरीचं मधुसंयुतम् अत्युष्णेलवणे ताय निःक्षिप्य क्वाथयेत्ततः ॥ ९४ ॥ ऋक्षवृक्षप्रातिकृतेर्हृदये वदने नासि ॥ किंचिंत्किंचित्क्षिपे त्तोयेदर्व्याकारस्करोत्थया ॥ ९५ ॥ आग्नेयमुच्चरन्मन्त्री सोचिर ज्ज्वरितो भवेत् ॥ क्वथितेंभसि तां क्षिप्त्वा हन्यात्छत्रूनयत्नतः ॥ ९६ ॥ तीक्ष्णस्नेहेन संलिप्तांतीक्ष्णंप्रतिकृतिंनिशि॥तापयेदेधिते वन्हौ प्रतिलोममनुंजपन् ॥ ९७ ॥ ज्वरेणबाध्यते सद्यो हामादस्यमृतिर्भवेत् ॥ सामुद्रे सलिलेहिंगुत्रिविषजीरकलो-

---

माहरणामित्यनुषज्यते। संग्रहं कुर्याज्जया सतु विशेष इत्युक्तः। स्थिरेष्विति। वृषसिंहवृश्चिककुंभेषु चरेष्विति मेषकर्कटतुलामकरेषु। उभयेष्विति। द्विस्वभावेषु मिथुनकन्याधनुर्मीनेषु। अनलेन तु दक्षिणनासापुटसंचरन्मरुता। सांप्रदायिकास्त्वेवं मन्यंते अत्रानलशब्देनाग्निमंडलंरयमितिबीजं वह्नित्तिकादि नक्षत्रमप्युते। तद्वच्छशिशब्देन चंद्रमंडलं चंद्रबीजं सौम्यास्तिथयश्चोच्यंते। तेनायमर्थः अग्निमंडलं स्वबीजसंयुक्तं ध्यात्वा नक्षत्रप्रधानमेव विसर्जनकर्म कुर्यात्। भानुनेति। आत्मनो भास्कररूपध्यानेन एवमात्मनेभास्कररूपं विचिंत्य पूर्वोक्तप्रकारेण पक्षद्वये मोक्षसंहारौ सुधीः। कुर्यादित्यनुवादः। आत्मनोभास्कररूपलब्धानमात्रं विशेषः। तदुक्तमाचार्यैः। नक्षत्रात्माहुताशः स्यात्तिथ्यात्मेंदुरुदाहृतः। ताभ्यां करोति दिनकृद्विसर्गादानकर्मणी इति सर्वत्रेति आरंभे प्रयोगे उपसंहारे च। सामग्री संपादनपूर्वकं कर्मसंकल्प आरंभः। हुतक्रियास्त्रविमोचनं। इष्टफलानंतरमुद्वासनं संहृतिः। अन्यत्र कालनियमं विना प्रारंभो युक्तः। परचक्रभयादौ च तीव्ररूपे महाभये। नकालनियमो गम्यः प्रयोगाणां कदाचनेति। नक्षत्रवृक्षाद्वाविंशिवक्षप्रमाणाः। सकलानिति। प्रादेशमितान्साध्याख्याकर्मसंयुतान् तत्तन्मंत्राक्षरोपेतानित्यनेन क्रमेण अर्ते नाम्नो भवेन्मंत्रः पञ्चत्रोमारणे मत इति पल्लव उक्तः। विषवृक्षः कारस्करः। अक्षो बिभीतकः। सिद्धार्थस्नेहं सर्षपतैलं विष्टिकाल इति विष्टौ करणे। विषारिघातादि च तत्र सिध्येदित्युक्तः। यथाविधीति। कर्मसहितं। संवेष्टेति। परितो लेखनेन। अत्र लेखनं धत्तूररसेनेति परमगुरवः। कारस्करेति। कुचिला तीक्ष्णस्नेहेन सर्षपतैलेन। प्रतिलोममित्याग्नेयमस्त्रं। होमादित्यर्थात् प्रतिकृतेः

लिते ॥ ९८ ॥ क्वथिते पुत्तलिंसाध्यनक्षत्रतरुनिर्मिता ॥ अधोवक्त्रा विनिक्षिप्य यष्ट्या वि-
षतरूत्थया ॥ ९९ ॥ तच्छिरस्ताडनं कुर्वन्जपेदस्त्रं विलोमतः ॥ सप्ताहान्मरणं याति श-
त्रुर्ज्वरविमोहितः ॥ १०० ॥ आदित्यरथमागेन्द्रग्रस्तांघ्रिंतद्विषाहतम् ॥ नग्नंतैलेन लिप्तांगं
दग्धं भानुमरीचिभिः ॥ १ ॥ अधोमुखं निजरिपुंध्यात्वा क्वथितवारीणा ॥ तर्पयेद्भानुमा-
लोक्यशत्रुर्मृत्युप्रियो भवेत् ॥ २ ॥ बिभ्रतीं मुसलं शूलं ध्यायन्कालघनप्रभां ॥ कार्पासवी-
जैर्निबस्य पत्रैर्मेषी घृतप्लुतैः ॥ ३ ॥ हुत्वाविद्वेषयेच्छत्रूनस्त्रेणानेनदेशिकः ॥ बिभ्राणां तर्ज-
नीं शूलंध्यात्वा दुर्गाभयंकरीं ॥ ४॥ महिषीघृतसंसिक्तैः पल्लवैर्विषवृक्षजैः ॥ हुत्वारिपोः
क्षणात्सेनामुच्चाटयति मन्त्रवित् ॥ ५ ॥ ध्यात्वा देवीं पुराप्रोक्तां चर्तुर्भिर्मरिचान्वितैः ॥
अजारुधिरसंसिक्तैर्जुहुयाद्दिवसत्रयम् ॥ ६ ॥ रिपोरुच्चाटनंकुर्यात्सेनायान्नात्र संशयः ॥
अग्निशूलकरां दुर्गां ज्वलंतीं प्रलयाग्निवत् ॥ ७ ॥ ध्यात्वा सर्षपतैलाक्तैर्बीजैर्धत्तूरसंभवैः ॥
हुत्वा विमोहयेच्छत्रून्मरिचैर्वामसर्षपैः ॥ ८ ॥ कालांजनानिभां दुर्गां शूलखड्गधरां स्मरन् ॥
नक्षत्रवृक्षसंभूतैस्तृणकृत्स्नेहसंयुतैः ॥ ९ ॥ समिद्वरैः प्रजुहुयाद्धन्यान्मासेन वैरिणम् ॥ सिंहा-
धिरूढांधावंतीं धावमानां रिपुं प्रति ॥ १०॥ शरान्कार्मुकनिर्मुक्तान्वन्हिज्वालामुखाकुलान् ॥
मुंचंतीं संस्मरन्दुर्गां तर्पयेदुष्णवारिणा ॥ ११ ॥ भानुबिंबसमालोक्यरिपोरुच्चाटनं भवेत् ॥
अतिदुर्गामपोमुष्टिगदाहस्तां विचिंतयेत् ॥ १२ ॥ विद्युद्दामसमानाभां महिषी घृतसंप्लतैः॥
पुलाकैर्जुहुर्यान्निंबविभीतकसमिद्वरैः ॥ १३ ॥ कोद्रवैरथशत्रोश्च सेनायास्तंभनं भवेत् ॥ आ-
त्तपाशां कुशां रक्तांगानि दुर्गामनु स्मरेत् ॥ १४ ॥ लोणैः समधरैः साध्यवृक्षकाष्ठे धितन-
ले ॥ जुहुयान्निशि सप्ताहान्मन्त्रविद्वशयेन्नृपान् ॥ १५ ॥ पाशांकुशधरां रक्तां विश्वदुर्गांवि-
चिंतयेत् ॥ फलिनी कुसुमैः फुल्लैश्चंदनांभः संप्रोक्षितैः ॥ १६ ॥ जुहुयान्निशि यो मन्त्री त-
स्य विश्वं वशं भवेत् ॥ शरच्चंद्रनिभां देवीं विगलत्परमामृतां ॥ १७ ॥ पाशांकुशधरांध्या-
यन्सिंधुदुर्गांसमिद्वरैः ॥ वैतसैर्मधुरासिक्तैर्जुहुयात्दृष्टिसिद्धये ॥ १८ ॥ कपालं त्रिशिखंपा-
शमंकुशं बिभ्रतींकरैः ॥ जपाकुसुमसंकाशामग्निदुर्गां विचिंतयन् ॥ १९ ॥ हुत्वा लवणपु-
त्तल्यामधुरत्रययुक्तया ॥ आकर्षेद्वांछितान्साध्यान्मन्त्रविन्नात्रसंशयः ॥ २० ॥ अतिदुर्गेयम-
त्पाद्याषदंतात्रिष्टुबीरिता ॥ दुर्वर्णांताथ गाण्याद्यागाणि दुर्गासमीरिता ॥ २१ ॥ विश्वाद्या
ण्यक्षरांतासाविश्वदुर्गासमीरिता ॥ सिंध्वां द्यासावकारांतासिन्धुदुर्गा निगद्यते ॥ २२ ॥ त्वं
तामग्न्यादिकोमनामग्निदुर्गां विदुर्बुधाः ॥ अंगणेस्थंडिलं कृत्वा सुगंधिकुसुमादिभिः॥२३॥

---

। अस्येति। रिपोः सामुद्रे सलिले। लवणोदके। विलोमत इति । जातभेदोभिप्रायेण तेनाम्ने
याम्रमित्यर्थः नागेद्रः सर्प्पः तर्प्पयेदिति दुर्गा। तर्ज्जनीमिति। तर्ज्जनी मुद्रां तल्लक्षणमुक्तं दुर्गापट-
ले। सर्षपतैलाक्तैरित्युत्तरत्राप्यन्वेति । व्रणक्कृज्ज्ञातः। अतिदुर्गादयः पंचजातवेदो मंत्रभेदा एव
वक्ष्यमाणः । पुलाकैस्तुच्छधान्यैः । अतीति । अतिदुर्गाणि विश्वा इत्यारभ्य परिषदंता सर्वाक्ष
क्। एवमग्रेपि । गूढार्थदीपिकाकारस्तु। अतिषदिति । त्रिवर्णं मंत्रं वदन् भ्रमोमेव । तस्ये

देवीमभ्यर्चयेन्नित्यं प्रागुक्तेनैव वर्त्मना ॥ आहरेद्रात्रिषु बलिं चरुणा सर्वसिद्धिदम् । २४॥ कृत्यारोगभयद्रोहभूतार्दीन्नात्रसंशयः ॥ यथावदग्निमाराध्य गंधैः पुष्पैर्मनोरमैः ॥ २५ ॥ स्थित्वातस्याग्रतोमन्त्री जपेन्मन्त्रमनन्यधीः ॥ जपोयं सर्वसिध्यै स्यान्नात्रकार्याविचारणा ॥ २६ ॥ लवणैर्मधुरासिक्तैर्जुहुयात्पश्चिमामुखः ॥ मन्त्रार्णसंख्ययामन्त्रीरिपुमात्मवशं नयेत् २७ शालीन्प्रक्षाल्य संशोध्य शुद्धान्कुर्वीत तंडुलान्। जपित्वा पंचगव्येषु संस्कृते हव्यवाहने २८ चरुं पचेज्जपन्मन्त्रमवतार्य पुनः सुधीः ॥ अर्चयित्वा विशदधीर्देवीमग्नौ यथापुरा ॥ २९॥ जुहुयाच्चरुणानेनसाज्येनाष्टसहस्रकम् ॥ पात्रे संपातनं कुर्वन्साध्यं तत्प्राशयेत्सुधीः ॥ ३० ॥ शेषं तं निखनेद्द्वारि संपातं प्रांगणांतरे ॥ कृत्यारोगाविनश्यंतिसहभूतग्रहामयैः ॥ ३१ ॥ परैरुत्पादिताकृत्या पुनस्तानेवभक्षयेत् ॥ त्रीहिभिर्हविषाक्षीरैः पयोवृक्षसमिद्वरैः ॥ ३२ ॥ आज्यैर्मधुत्रयोपेतैरेतैर्दशशतं पृथक्। जुहुयात्संपदा भूमिसाधको भवति ध्रुवम् ॥ ३३ ॥ भास्करेभेदराशिस्थेमन्त्रज्ञोनुगुणेदिने ॥ नद्यां सागरगामिन्यां सततं पुष्कलांभसि ॥ ३४ ॥ उधृत्यादायसिकताः संशोध्य परिशो धयेत् ॥ न्यस्यताः पंचगव्येषु संस्कृते हव्यवाहने ॥ ३५ ॥ भर्जयेन्मनुना सिध्यैदर्व्याब्रह्मरुहेत्थया ॥ सिंहमेषधनुःस्थेर्केकृष्णपक्षेष्टमी तिथौ ३६ विशाखाकृत्तिकामूलहस्तोत्तरमघास्वथ । रोगिण्यां श्रवणेवारोमंदवाक्पतिदैवतौ ॥ ३७ ॥ विहायान्येषुकुर्वीत सिकतास्थापनं सुधीः । गृहग्रामादि राष्ट्राणां रक्षार्थं सिकताः शुभाः ॥ ३८ ॥ प्रस्थाटकघटोन्मानामध्यादिष्ववटेष्विमाः ॥ नवसु प्रक्षिपेज्जप्तास्तेषु संपूजयेत्क्रमात् ॥ ३९ ॥ मध्यादिदेवीशस्त्राणिकपालांतानिदेशिकः ॥ चक्रंशंखमसिंखेटं बाणचापंत्रिशूलकम् ॥ ४० कपालं स्वस्वमन्त्रेण संपूज्यांते बलिं हरेत् ॥ नक्षत्रग्रहराशीनां लोकेशानां बलिं हरेत् ॥ ४१ ॥ विहितापत्ररक्षेयं वर्द्धतेतत्र संपदः ॥ क्षुद्रग्रहमहारोगसौरभूतसरीसृपाः ॥ ४२ ॥ अमुना विलयं यांतिविधिना नात्र संशयः ॥ सिकतानां विशुद्धानां विकारकुडवंसुधीः ॥ ४३ ॥ पंचगव्ययुतेपात्रे ब्रह्मवृक्षेण निर्मिते ॥ निक्षिप्यावीधिना यत्र स्थापयेत्तत्र-

---

त्यग्नेः । तस्येत्यग्रे सागरगामिन्यामिति साक्षात्। पंचगव्येष्विति। आलोडनपर्याप्तेषु । गृहग्रामादीत्यादि शब्देन नगरं प्रस्थेति । गृहे प्रस्थमिताः । ग्रामे नगरे आटकमिताः। राष्ट्रे घटोन्मिताः । द्रोणचतुष्कं घटः दशांगुलाधिकं चतुर्विंशत्यंगुलं केचिदाहुः । स्वस्वमंत्रेणेति । सप्तदशोक्तेन । अंते बलिमिति। देव्याः चक्राद्यस्त्राणांच । नक्षत्रेत्यधिपतीनां अप्युपलक्षकं। एषां बलिमंत्रा॥ अश्विनी देवताभ्योदिवानक्तं चारिभ्यः सर्वेभ्यो भूतेभ्यो नमः । एवं भरणीकृत्तिकापाददेवताभ्यः कृत्तिकापादत्रयदेवताभ्य इत्याद्यूह्यं । ततस्तदधिपतिभ्यः अश्विन्यधिपत्यश्विदेवताभ्यः । एवं यमादिषूह्यं । ततो राशिबलिः । अश्विनीभरणीकृतिकापाददेवताभ्यः। एवं वृषादिषूह्यं । ततो ग्रहबलिः । अश्विनीभरणीकृतिकापादमेषराश्यधिपत्यंगारकदेवताभ्यः । एवमन्येषामप्यूह्यं । लोकेशबलिर्वास्तोमदुक्तोनुसंधेयः । बलिंहरेदिति परितः । विशुद्धानामिति । नद्यामित्याद्युक्तप्रकारेण विकारकुडवं षोडशकुडवं ।विधिनेति। पूर्वोक्तस्थापनप्रकारेण चवशमंनोः। गव्ये तु विशे

संपदः ॥ ४४ ॥ दिने दिने प्रवर्द्धंतेकालत्रितयादिभिः सह ॥ महोत्पाताविनश्यंति कृत्याद्रोहमहाग्रहाः ॥ ४५ ॥ चारुगव्याशमना कुर्यात्स्थापनं विधिनामुना ॥ गोमूत्रं प्रस्थमानंस्याद्गोमयंभस्तदर्द्धकम् ॥ ४६ ॥ आज्यात्सप्तगुणं क्षीरंगोमूत्रात्त्रिगुणं दधि ॥ गोमूत्रेण समंसर्पिः सर्वं वासममुच्यते ॥ ४७ ॥ गावः स्यु कपिलाश्वेतहिमधूम्रारुणप्रभा ॥ अभावेगदिताः सर्वाः सर्वथा कपिलोद्भवम् ॥ ४८ ॥ एकोनपंचाशत्कोष्ठे फलके ब्रह्मशाखिनः विहाय कोणकोष्ठानि शक्तयाद्यंजातवेदसम्॥४९॥लिखित्वामध्यकोष्ठादि पूजयेत्तत्र देवतां॥कृत्वा होमं ससंपातं निखनेत्तद्यथापुरा ॥ ५० ॥ दद्याद्बलिं यथापूर्वं मस्य पूर्वोदितं फलम् ॥ मध्ये मायामष्टकोष्ठेषु पादानष्टौ कृत्वा मातृकार्णैः प्रवतिम् ॥ ५१ ॥ भूबिंबस्थं सर्वभूतामयानं रक्षायुः श्रीकीर्तिदं यंत्रमेतत् ॥ आग्नेयास्त्रस्य ज्ञानानि विसर्गादानकर्मणी । यः पुमान्गुरुणाशिष्टस्तस्याधीनं जगत्त्रयम् ॥५२॥ इतिशारदातिलके एकविंशः पटलः ॥ अथोदिनास्त्रं कृत्यास्त्रं वक्ष्ये शत्रुविमर्दनम् ॥ अतिदुर्गामनुंप्राहुर्दिनास्त्रं मन्त्रवित्तमाः ॥ १ ॥ प्रतिलोममिमं मंत्रं कृत्यास्त्रं परिचक्ष्यते ॥ दिनास्त्रस्मषडंगादीन्प्रतिलोमोदितान्विदुः ॥ २ ॥

---

षो नारायणीये । गव्येषु शालीन् यवमुद्गमाषगोधूमबिल्वास्थितिलाब्जबीजं । पद्मछदस्थं विनिधाय ताम्रे क्षुद्र रिखन्यादभुवि नागयोगोनामयोगमाहान्यः । साप्ये मुहूर्ते साप्यं चकरणे सर्पसंज्ञिते । संयोगो नामयोगोयमथवा करणर्क्षयोरिति । पृककप्शिरः पंच सरोजपत्रं निश्छिद्रमेकीकृतबद्धनालं । गव्यप्रपूर्णं निखनेददूनां समृत्या तदाक्षुद्रविनाशिगेह इति । तत्स्थापनमत्रवादिकमपि तत्रैव । पूषापुष्यपुनर्वसू वसुहरो चित्राशशीरोहिणी ।ताराास्तास्तिथयोंशुमत्फणिय मादिकं च दश्यो हरिः । वारास्त्विंदुसुतेंदुशुक्रगुरवो युग्मं कुलीरोधनुः। कुंभात्यावपि राशयो निगदिता गव्यप्रयोगायते इति।सर्ववेति ।वाशब्देनान्यत् प्रकारद्वयमुपक्षिप्तं । योजने तत्तन्मंत्रेण योजनमित्यपि ज्ञेयं । तदुक्तं । मूत्रं प्रस्थं गोमयं स्यात्पलार्द्धंक्षीरं प्रस्थं दध्यपिक्षीरतोर्द्धं । आज्यं दध्नोप्यर्द्धमेवं प्रमाणं स्वीयैर्मंत्रैर्योजयेत्पंचगव्यं । मूत्रं द्विभागं शकृदेकभागं पयोष्टभागं दधितत्समानं । क्षीरार्द्धकं वा चतुरं शमाज्यमिति । मंत्रास्त्वाचार्यैरुक्तास्तद्यथा । तारभवाभिरथगृभिः क्रमेण संयोजयेत्तद्गव्यानि । आत्माष्टाक्षरमंत्रैरथवा योज्यानिपंचभिः पंचेति। एकोनपंचाशदिति पूर्वा परायता दक्षिणोत्तरायताश्चतस्रो रेखाः कुर्यात् । तदा नवकोष्टं भवति । मध्य इति। मध्यकोष्टे । विसर्गादानकर्मणीइति । विसर्गः संहारः आदानं प्रयोगानंतरं पुनर्मंत्र स्वीकारः । यदाहुः । विधिवन्मारणं कृत्वा सिद्धमंत्रेण मंत्रवित् । कर्मांते देवता पूजा सविशेष प्रकल्पयेत् । शक्त्या संतर्प्य विप्रांश्च मंत्रमूर्त्तिं विसृज्य च । समुद्रगायानद्यां तु कंठमात्रे जले स्थितः । अहोरात्रं जपेन्मंत्रमष्टाधिकसहस्रकं । शुद्धं मनुं तंस्वीकुर्यादिति ॥ ॥ इति श्रीशारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्दशाभिख्यायामेकविंशः पटलः ॥ २१ ॥ अथो इति। अतिदुर्गामनुः पूर्वोक्तः । इममतिदुर्गामनुं । षडंगादीनित्यादिशब्देनाक्षरपदन्यासावुभपत्र । अनुलोमादितान् जातवेदसे इत्यवोक्ताम् । जातवेदसे क्षाडाद्यन्तैरिति संप्रदायात् । तदुक्तं । मनो

भानुबिंबगतं शत्रुमधोवक्त्रं विषाहतम् ॥ मूलादुत्थितयाग्रस्तं कुंडल्याभावयत्सुधीः ॥ ३ ॥ मूलाधारेक्षिपेत्सद्यः प्रस्फुरत्कालपावके ॥ दिनत्रयात् ज्वराक्रांतो रिपुः प्राणान्विमुंचति ४ दिनास्त्रेण प्रविद्धांगं स्वाधिष्ठानगतं रिपुम् ॥ तैत्रवायुसमिद्धेन वन्हिनादग्धविग्रहम् ॥ ५ ॥ ध्यायन्मनुजपेत्सद्यः सभवेद्यमवल्लभः ॥ मणिपूरगतं शत्रुमाग्निनादीप्तविग्रहम् ॥ ६ ॥ ध्यायन्दिनास्त्रप्रजपेमृत्युवशतां व्रजेत् ॥ आनाहताहितः शत्रुर्निर्दग्धो मंत्रवन्हिना ॥ ७ ॥ पाशेन बध्वा शीघ्रेन नीयते यमकिंकरैः ॥ विशुद्धस्थानगोवैरीदिनबाणेनपीडितः ॥ ८ ॥ अधोमुखः स्मृतस्तूर्णं निरायुः स्याद्दिनत्रयात् ॥ आज्ञायानिहितं शत्रुं दहेत् ज्ञानाग्निनाधिया ॥ ९ ॥ पुत्रमित्रकलत्रादी न्हित्वामृत्युमुपाश्रयेत्॥ नाभिमात्रोदके स्थित्वा ध्यायन्बिंबे दिनेशितुः ॥ १० ॥ वैरिणं दग्धसर्वांगं मन्त्रमष्टोतरंशतम् ॥ जपेत्सप्तदिनादर्वाग्यमलोकं सगच्छति ॥११॥ आरवारं समारभ्यसप्ताहं प्रजपेन्मनुं । सूर्योदयं समारभ्य यावदस्तमयो भवेत् ॥ १२ ॥ सन्निपातज्वराविष्टो यमग्रस्तो भवेदरिः ॥ स्थित्वादुर्गालये मंत्री त्रिरात्रं वर्जिताशनः ॥ १३ ॥ दिनबाणेन विद्धांगं वैरिणंप्रविचिंतयेत् ॥ जपेन्मनुमिमं शत्रुर्ज्वरितो मरणं व्रजेत् ॥ १४ ॥ स्पृष्ट्वा दुर्गां जपेन्मंत्रमनश्नंस्त्रिदिनंस्मरन् ॥ शूलप्रोत्तं निजरिपुंदिनास्त्रेण प्रदीपितम् ॥ १५ ॥ ज्वरेण महता विष्टो जायतेसौयमातिथिः । रविमण्डलगं शत्रुं दष्टं तक्षकपन्नगैः ॥ १६ ॥ विषाग्निदग्धसर्वांगं ध्यायन्नुष्णेन वारिणा ॥ तर्पयेद्दिनबाणेन स्यादसौ यमवल्लभः ॥ १७ ॥ रविबिंबादागतयाज्वालया ग्रस्तविग्रहम् ॥ रिपुं ध्यात्वा जपेन्मन्त्रं स क्रीडति यमांतिके ॥ १८ ॥ ग्रहग्रस्तार्कबिंबस्थं विद्धं मंत्रमयैः शरैः ॥ प्रतिबध्यनिजं शत्रुं जपेदयुतमंत्रवित् ॥ १९ ॥ रिपुं नयाति शीघ्रेण यमदूतोयमालयम् ॥ प्रलयानलसंकाशंकालरात्रिमिवापराम् ॥ २० ॥ शूलपाशधराघोरांसिंहस्कंधनिषेदुषीं ॥ सवि-

---

राद्यपदेनेव षट्पदानि च पूर्ववत् । क्रमाद्यतेन तानिस्वरतिदुर्गा मनोरपीति । आचार्या अपि । अनुलोमजपेंगानामपि पाठो तु लोमक इति । पद्मपादाचार्यैर्व्याख्यातमपि शब्दात् । पदाक्षरयोरपीति प्रतिलोमादितानित्याग्नेयास्त्रोक्तान् । तदुक्तं । शैलाद्विलोकांगमुनिरससंख्याक्षरैः क्रमान्मनोरंतविलोमस्य षडंगान्यपि कल्पयेदिति । आचार्याश्च । प्रतिलोमानितानिस्युः प्रतिलोमविधो तथेति । अत्रापि तथेति । पूर्ववत्पद्मपादाचार्यैर्व्याख्यातं । अनयोर्ध्यानं यथा । उद्यानमभ्यपूर्वोक्तसिंहस्कंधोपरिस्थितां । कालमेघनिभामुग्रां सर्पभूषणभूषितां । शूलं खड्गं कुठारं च खर्प खेटकतर्जनी । वधानां दक्षिणान्यैः स्वैः करदंडैरित स्ततः । अतिदुर्गामनोमूर्त्तिं धावमानां विचिंतयेदिति । वरदारिदराभीति पाणिपद्मैर्विराजितां । तामंतप्रतिलोमाख्यां सिंहस्थां चिंतयेत्समामिति । पुरश्चरणं तु जातवेदो मंत्रपुरश्चरणेनैव ज्ञेयं । विषाहतमिति । भानुरथगतसर्पविषैराहतमित्यर्थः । मूलाधारे गुदमेढ्रांतरालदेशे । प्रस्फुरत्कालपावक इति ध्यानं । स्वाधिष्ठानं लिंगोपरिदेशः । मणिपूरकं नाभिस्थानं । अनाहतं हृदयं । विशुद्धिः कंठः । दिनबाणेन दिनास्त्रेण । आज्ञा भ्रूमध्यं । मंत्रमिति । जपेदित्यनेन संबंध्यते । आरो भौमः । प्रजयेदि-

तुर्मंडलांतःस्थांरक्तनेत्रत्रयोद्गतैः ॥ २१ ॥ विस्फुलिंगैर्निर्दहंतीं रिपुमाकुलविग्रहं ॥ स्पष्टदंष्ट्राधरान्नृत्यभृकुटीभीषणाननां ॥ २२ ॥ तर्जयंतीं निजं शत्रुंतर्जन्याभीमरूपया ॥ दंष्ट्रामयूखजालेन द्योतयंतीं दिगंतरम् ॥ २३ ॥ शूलेन वैरिणो वक्षो दारयंतीं भयंकरीं ॥ जपेद्दिनत्रयं मंत्री मारयेद्रिपुमात्मनः ॥ अस्त्रमन्त्रकृत न्यासः प्रलयाग्निसमप्रभाम् ॥ २४ ॥ रक्तवस्त्रधरां क्रुद्धांरक्तनेत्रत्रयान्विताम् ॥ सिंहाधिरूढां धावंती धावमानं रिपुं प्रति ॥ २५ ॥ खड्गेन तच्छिरः छित्वाक्षणाद्व्योमस्थलीं गताम् ॥ ध्यात्वा दुर्गां जपेन्मंत्रं त्रिदिनं वर्जिताशनः ॥ २६ ॥ अनेनैव विधानेन रिपुर्मृत्युप्रियोभवेत् ॥ कर्माण्येतानि कुर्वीत दिवसे न तुरात्रिषु । पश्चिमा मुखलिंगस्य सजीवं माहिषं पुरः ॥ निखाय तस्य शिरसि कुंडं कृत्वा त्रिकोणकम् ॥ २८ ॥ तस्मिन्समेधिते वन्हौ यथावद्देशिकोत्तमः ॥ सत्रिकोणान्समन्त्रार्णान्साध्यनाम समन्वितान् ॥ २९ ॥ अजारक्तेन संसिक्तान् कारस्करसमन्वितान् ॥ सहस्रं जुहुयाद्देवीं ध्यात्वा सवितृमंडले ॥ ३० ॥ प्रलयाग्निसमां घोरां द्वात्रिंशद्भुजशोभितां ॥ उद्यदायुधसंदीप्तां नृत्यंतींसिंहमस्तके ॥ ३१ ॥ महादंष्ट्रां महाभीमां ज्वलत्केशीं नदन्मुखीं ॥ रक्तांत्रमांसवदनां घूर्णितोग्रत्रिलोचनां ॥ ३२ ॥ अनेन विधिना शत्रुर्महाज्वरनिपीडितः॥ विमुंचतिनिजं देहं पुत्रमित्रादिभिः सह ॥ ३३ ॥ ऊर्ध्वमुष्टांभसो मंत्री लंबयित्वा भुजंगमम् ॥ भानुबिंबगतांदुर्गां सहस्रादित्यसन्निभाम् ॥ ३४ ॥ सहस्रपाणिचरणां सहस्राक्षिशिरोमुखीं । सहस्रनागबद्धांगीं त्रासयंतीं जगत्रयम् ॥३५॥ ध्यायन्ननेन सर्पास्येतर्पयेदुष्णवारि-

---

ति। पूर्ववदरिं ध्यायन् विषाप्नोति । विषं तद्दष्टपन्नगं संभूतमेव । ग्रहयुक्तोराहुग्रस्तः। प्रतिपद्य ध्यात्वेत्यर्थः। प्रलयानलेत्यादि भयं करीमित्यंतस्य ध्यात्वेति शेषः। पश्चिमा मुखेति । शिवालय द्वारस्य पश्चिममुखता । केचित्तुस्थावरलिंगस्य पश्चिमामुखतामाहुः । एष एव सांप्रदायिकः पक्षः । सत्रिकोणानिति। लिखितत्रिकोणान्। समंत्रार्णानिति। पल्लवरीत्या। भुजंगममिति। जीवं तं कृष्णं। अधोमुखं। अनेनास्त्रेण। तर्पयेदिति। कारस्करदर्व्या। अनन्यधीरित्यनेन तयैव तर्पणमित्युक्तं। विधिनामनुं प्रजपेदित्यन्वयः विधि पल्लवेन नामयोगः। खड्गेन कृत्तः छिन्नः अर्दितः शत्रुर्यथेति। चित्यग्नाविति। कुंडस्थापिते। यथोक्तसंस्कारसंस्कृते । व्रणतैलभल्लाततैलं । तुषा धान्यस्य। अस्थीनि मनुष्यास्थीति। एतदुभयमेकीकृत्य प्रतिमां कुर्यात्। कृत्याखक्कथितमिति । तडागादौ सिकता प्रक्षेपेण। माहिषे पंचगव्ये प्रयोग उपचारात्। सप्तवारेष्विति। सप्तवाराणामपि कुलिकामया एकादशे उक्ताः तत्र प्राचीवर्ज्जं दुर्गालयाग्नेयादि सप्तस्थानशर्करासु एकैकां शर्करां क्रमात्प्रत्यहं रव्यादेः कुलिके गृहीत्वा सप्तमेऽहनि सर्वाएकीकृत्य स्पृष्ट्वा प्रजपेत्। यथापुरेति। विषकाष्ठागनौ विषकाष्टदर्व्याभर्जयेत् । मर्कटो कपिकच्छूः करकोशनिका वच्चदंडः उत्सादः पुनरयागमनं यथा भवति तथा न भवति तथा उच्चाटनं षड्बिंदुषष्ठमिति। षड्विंदुः कीटविशेषः स च प्रथमजलपाते उत्पद्यते। तस्य पंचकुष्ट इति नामांतरं। तस्य पंचबिंदवः श्वेता भवंति। एकोविंदुर्भिन्नवर्णः। तदुक्तं नीतिनिर्णीतादीपनिषदे पंचकुष्टस्य कीटस्य पंचस्युः श्वेतविंदवः। भिन्नवर्ण

णा ॥ संयतः कालपाशेनवैरी मुंचेत्स्वजीवितम् ॥ ३६ ॥ मध्यान्हार्कयुतप्रख्यां नदंतीं नरसिंहवत् ॥ घोरसिंहसमासीनांमहाभीषणदर्शनां ॥ ३७ ॥ शूलप्रोताहितां ध्यायन्जपेन्मन्त्रमनन्यधीः ॥ तर्पयेदुष्णतोयेन सर्पवक्रे दिनत्रयम् ॥ ३८ ॥ यमस्य भवनं गच्छेदरातिर्नात्रसंशयः ॥ ऋक्षवृक्षप्रतिकृतिं प्रतिष्ठितसमीरणां ॥ ३९ ॥ उष्णोदके विनिक्षिप्य विषाढ्ये विधिनां ततः ॥ अर्केद्धनलसंकाशांखड्गखेटकधारिणीं ॥ ४० ॥ नयनत्रयनिर्गच्छद्विस्फुलिंगशताकुलाम् ॥ सिंहस्थां सर्पभूषाढ्यांत्रैलोक्यभयदायिनीं ॥ ४१ ॥ खड्गकृंतारितांध्यायन्प्रजपेदयुतं मनुं ॥ विधानेनामुनाशत्रुर्ग्रस्तो भवतिमृत्युना ॥ ४२ ॥ प्रकल्प्य दुर्गायतने त्रिकोणं कुंडमुत्तमम् ॥ तत्र संज्वलिते वन्हौ माहिषीशकृताकृतां ॥ ४३ ॥ पुतलीमजरक्ताक्तां प्रतिष्ठितसमीरणां ॥ छित्वाछित्वा प्रजुहुयादजरक्तान्वितां निशि ॥ ४४ ॥ ध्यात्वा दुर्गां प्रनृत्यंती महिषोरस्थलांतरे ॥ शूलेन महिषस्यांगं भिंदंतीं घोरदर्शनां ॥ ४५ ॥ अट्टहासैरजस्रोक्षैर्भीषितांसुरसेवितां ॥ मलपानलसंकाशां भ्रमन्नेत्रत्रयान्वितां ॥ संदष्टा धरसंभिन्नां दंष्ट्राभीममुखांबुजां ॥ खड्गखेटकयुक्ताभिः कन्यकाभिः समावृतां ॥ ४७ ॥ अनेन विधिना शत्रुः प्रयाति यमसन्निधिं ॥ दिनास्त्रमेवं कथितं शत्रु निग्रहकारकम् ॥ ४८ ॥ कृत्यास्त्रेदर्शितान्कुर्यान्प्रयोगान्मन्त्रवित्तमः ॥ आधारादुद्गतां देवीं कुण्डलीं सर्वरूपिणीं ४९ तांब्रह्मरंध्रमार्गेण यातां व्योमस्थलां ततः ॥ मुखेनशत्रुमादाय निवृतांस्वगृहं प्रति ॥ ५० ॥ ज्वलत्कालानलोद्दीप्तां विचित्य प्रजपेन्मनुम् ॥ सप्तभिर्वासरैः शत्रुर्मृत्युंप्राप्नोतिमोहितः ॥ ५१ ॥ अंगारवारे चित्याग्नौ सर्षयस्नेहलोलितां ॥ सिद्धार्थकुडवजप्तं जुहुयात्पक्षमात्रतः ॥ ५२ ॥ कृत्यास्त्रज्वालयादग्धोरिपुर्यमपुरंव्रजेत् ॥ चतुर्द्दश्यामर्द्धरात्रेचितास्थीन्मन्त्रसाधकः ॥ व्रणतैलविलिप्तानि चिताग्नौ जुहुयात्ततः ॥ अनेन विधिनाशत्रुर्मृत्युमेष्यति कातरः ॥ ५४ ॥ तुषास्थिनिर्मितां शत्रोर्व्रणतैलपरिप्लुतां ॥ प्रतिमां स्थापितप्राणां जुहुयान्निशि साधकः ॥ ५५ ॥ छित्वाछित्वाजरक्तेनसप्ताहान्म्रियतेरिपुः ॥ श्मशानवालुकास्पृष्ट्वासाक्षतानियुतं जपेत् ॥ ५६ ॥ विकिरेतास्तडागादौ कृत्यास्त्रक्वाथितं जलम् ॥ तदीयं पीतमाचिरान्निहंतिसकलान्जनान् ॥ ५७ ॥ कृष्णांगारचतुर्द्दश्यां प्रजप्तैः प्रेतभस्माभिः ॥ महिष्याज्येनलुलितास्तन्मन्त्राक्षरसंख्यया ॥ ५८ ॥ निर्मायगुटिकाएताः सम्यग्जप्तसमीरणाः ॥ चितिकाष्ठैधिते वह्नै जुहुयाद्दृढमानसः ॥ ५९ ॥ चतुर्दशीत्रयादर्वाक् शत्रुर्मृत्युवशो भवेत् ॥ श्मशानभस्मसिद्धार्थान्पंचगव्ये विनिक्षिपेत् ॥ ६० ॥ माहिषे संस्मरेद्देवीं ज्वालाग्निसदृशप्रभां ॥ भर्जयेत्प्रजपन्मन्त्रं विपकाष्ठैधितानले ॥ ६१ ॥ दुर्गागारे प्रजुहुयाद्नेमायुतमस्त्रवित् ॥ पुनरादाय तद्भस्म सेनायां वैरिणः क्षिपेत् ॥ ६२ ॥ सासेनाबहुधा भिन्नाज्वररोगविमोहि

---

स्तथा चैक्रः सुस्निग्धश्चैव वर्णतः । भवेत्प्रजलदारंभेषड्बिंदुरितिकीर्त्तित इति । पुत्तल्यामिति । तज्जन्मर्क्षवृक्षोद्भवायां । शत्रोर्नाम संयुक्तं अमममस्त्रमंत्रं प्रजपेदित्यन्वयः । तत्र योगः पल्लवरीत्या । क्वचित् समायुक्ता इति पाठः तदा पुतली विशेषणं । कपालशकलान् जरक्ताक्तान् रक्ष्मशाने जुहुया

ता ॥ आयुधानि परित्यज्ययुद्धकाले पलायते॥६२॥गेहग्रामादिषु क्षिप्तं कुर्यादुच्चाटनं क्षणात् ॥ सप्तवारेषुकुलिके दुर्गावेश्मसुशर्कराः ॥ ६३ ॥ सप्तमोऽद्रादिग्वर्जंगृहीत्वाप्रजपेन्मनुं महिषी पंचगव्येषुभर्जयेतां यथापुरा ॥ ६४ ॥ भूयो जपित्वा विकिरेद्गेहग्रामपुरेष्विमाः ॥ सदेशोनश्यतिक्षिप्रं दग्धो मन्त्रभवाग्निना ॥ ६५ ॥ ब्रह्मदंडी मर्कटिकां करक्रोशनिकां त्रयम् ॥ भौमवारस्य कुलिकेगृहीत्वा प्रजपेन्मनुम् ॥ ६६ ॥ चतुर्दश्यां रिपोर्गेहे निखनेत्प्रजपेन्मनुम् ॥ सार्द्धं पुत्रकलत्राद्यैरुत्सादो जायते रिपोः ॥ ६७ ॥ एकैकंवा खनेन्मन्त्री मण्डलात्फलं भवेत् ॥ षड्बिंदुषट्कं पुत्तल्यां निखनेदोदनान्वितम् ॥ ६८ ॥ पृष्ट्वातां प्रजपेदस्त्रं कृष्णाष्टम्यां निशार्द्धतः ॥ शत्रुनाम समायुक्तां श्मशाने निखनेदिमां ॥ ६९ ॥ प्रणाश्येत्स रिपुः शीघ्रं सकुटुंबः सबांधवः ॥ कपालशकलान्मन्त्री कृत्यास्त्राक्षरसंख्यकान् ॥ ७० ॥ स्पृष्ट्वातान्प्रजपेदस्त्रंप्राणस्थापनपूर्वकम् ॥ कृष्णांगारचतुर्द्दश्यां श्मशाने विषवृक्षजे ॥ ७१ ॥ जुहुयादजरक्ताक्तान्कृत्यास्त्रज्वालयाहतः ॥ रिपुर्यमपुरं गच्छेन्महाज्वरविमोहितः ॥ ७२ ॥ अजारक्तेन संपूर्णंकलशेनिः क्षिपेदहिं ॥ कपालेनपिधायैनं छादयेद्रक्तवाससा ॥ ७४ ॥ पूजयेद्रक्तपुष्पाद्यैः स्पृष्ट्वातमयुतं जपेत् ॥ भौमवारे निशामध्येकारस्करसमेधिते ॥ श्मशानवन्हौ जुहुयाद्गच्छेद्यमपुरं रिपुः ॥ साध्यनक्षत्रवृक्षेण कृत्वा कुंभं प्रपूजयेत् ॥ ७६ ॥ माहिषैः पंचगव्यैस्तं बिडालं तत्र निक्षिपेत् ॥ जपपूजादिकं सर्वंयथापूर्वं समाचरेत् ॥ ७७ ॥ कारस्करभववन्हौ कृत्यास्त्रेण समेधिते ॥ अयुतं व्रणतैलेन हुत्वा ते तं घटं पुनः ॥ ७८ ॥ आमस्तकं समुद्धृत्य जपेन्मन्त्रमनन्यधीः ॥ जुहुयाद्विधिनानेन त्रिदिनैर्म्रियते रिपुः ॥ ७९ ॥ सुंदरं महिषी वत्समेकरात्रमुपोषितम् ॥ पाययेन्महिषी सर्पिः प्रस्थं मंत्रेण मंत्रितम् ॥ ८० ॥ कुशैराबद्धसर्वांगस्थापितंप्राणमंजसा ॥ कारस्करैधिते वन्हौ व्रणतैलेन मंत्रवित् ॥ ८१ ॥ होमं कृत्वायुतं वत्सं जुहुयाद्यतमानसः ॥ एकेन दिवसेनारिर्गच्छेद्यमपुरं सुधीः ॥ ८२ ॥ त्रिकोणकुण्डनिहिते वन्हौ मंत्रेण दीपिते ॥ अर्चिते गंधपुष्पाद्यैरयुतं जुहुयात्क्रमात् ॥ ८३ ॥ राजि

---

दिति संबंधः। संस्पृश्येति। तानेव। विषवृक्षज इति। विषकाष्ठेधिते श्मशानाविति शेषः। अहिमिति। जीवंतं कृष्णं। एतं घटं तं घटं यथुरूपं। बिडालं कृष्णं। आदिशब्देन कपालेन पिधानं रक्तवस्त्राच्छादनं च। कारस्करभवेकारस्करकाष्ठेधिते। वह्नौ श्मशानाग्नौ। व्रणतैलेन भल्लाततैलेन। अनन्यधीरित्यनेन पूर्वघटहोमेपि अयं होम इत्युक्तं। क्रमादिति प्रत्येकमयुतहोमः। तैलशब्दः प्रत्येकमभि संबंध्यते। स्थापितानिलां प्रतिष्ठितप्राणां। हस्तेपतितमिति। भुवमस्पृष्टं। जुहुयादिति। शत्रुबुद्धा। कर्तारमपि कांचिणोत्युक्तेस्तद्रक्षामाह। सजयेदिति। अथोइति। लवणादि द्वितीयेत्यत्र आकारे परे एचोयवायाव इति। अपिक्षते यकारलोपे च छांदसत्वात् संधिःकृतः। प्रातिपदिकमत्र लवणशब्दस्य वा ग्रहणं। तेन लवणे इत्याद्या द्वितीया। तदुक्तमाचार्यैः। द्वितीया लवणे इति। अन्या तृतीया। एवमृक्पंचकं चिटिमंत्रसहितमेका विद्या। प्रणवपाशादि चत्रचरादित्वं। वाग्बीं द्रामृतबीजादित्वं च संप्रदायात् ज्ञेयं। पद्मपादाचार्योक्तो मंत्रोद्धारो यथा। पृथिवीमुदकं चो-

भल्लातकतिलतैलैः सप्तदिनं ततः ॥ प्रसूति समये प्राप्तां महिषीं स्थापितानिलां ॥८४॥ पूजितां गंधपुष्पाद्यैः स्पृशन् कूर्चेनतां जपेत् ॥ मस्तकाद्योनि पर्यंतं क्षिपा वत्समनुस्मरन् ८५ आकृष्यहस्तेपतितं जुहुयादेधितेनले ॥ एवं कृते समुत्पन्नाकृत्यादीप्ताहुताशनात् ॥ ८६ ॥ भक्षयेद्द्विराच्छक्रमीश्वरेणापि रक्षितम् ॥ पुनरग्नौ विशत्येषा कर्तारमपिकांक्षिणी ॥ ८७ ॥ एवं विधानि कर्माणि यः कुर्यान्मन्त्रवित्तमः ॥ संजपेदात्मरक्षार्थं मन्त्रान्मृत्युं जयादिकान् ॥ ८८ ॥ अथोलवणमंत्रस्यविधानमभिधीयते ॥ ऋगाद्यकथितां पूर्वंलवणांभासि पूर्विकाः ॥ ८९ ॥ लवणांभसितीक्ष्णोसिउग्रोसिहृदयंतव ॥ लवणमंत्रस्य पृथिवी माता लवणस्य वरुणः पिता ॥ ९० ॥ लवणे हूयमाने तुकुतो निद्राकुतो रतिः ॥ लवणं दहति पचतिपाचयति पाचयतिलवणं छिदंति भिंदंति ॥ ९१ अमुकस्य दहगात्राणि दहमासं दहत्वचम् ॥ दहत्वग्गस्थिमज्जानि अस्थिभ्योमज्जिकां दह ॥९२॥ यदि वसति योजनशते दीनां वाशतांतरे ॥ नगरे लोहप्राकारे कृष्णसर्पशतार्गले ॥ ९३ ॥ तं दग्ध्वा नयमे शीघ्रमग्ने लोणस्य तेजसा ॥ तत्रैवं वशमायातुलवणमंत्रपराक्रमः ॥ ९४ ॥ याते रात्रिः शल्पविद्धस्य शूलाग्रारोपि तस्य च ॥ यातेरात्रिर्महारात्रिः साते रात्रिर्महानिशा ॥ ९५ ॥ लवणादि द्वितीयान्यादहाद्यापरिकीर्तिता ॥ तंदग्धान्याचतुर्थीस्याद्याते पूर्वोर्थपंचमी ॥ ९६ ॥ अंगिरा मुनिराख्यातश्छंदो-

---

क्ता णांभसीति ततः परं । तीक्ष्णोस्युग्रोसिहृदयं तवेति लवणस्य गीः । पृथिवीति च माता लवणस्य वरुणः पिता । प्रथमेयं द्वितीयाया लवणे इत्युपक्रमः हूयमानेत्विति कुतो निद्रेति च कुतो रतिः । लवणं पचतीत्युक्त्वा तथा पाचयतीति च । लवणं छिंदतीत्युक्त्वा भिंदतीति च भाष्यतां । अमुकस्य दहगात्राणि दहमासं दहत्वचं । दहेति च तृतीयाया भवेदच उपक्रमः । त्वगास्थिमज्जानीत्यस्थिभ्यो शब्दं मज्जिकां दह । क्वचित्पुस्तके त्वगसृग्भ्यां समेदोस्थिभ्यो शब्दमिति पाठः । ततो यदीति संभाष्य वसतीति पदं वदेत् । योजनेति शते वर्णाब्दीनां वा शतांतरे । संदिग्ध्वेति चतुर्थ्यादौ न यमे शीघ्रमित्यतः अग्ने इत्येतदंते स्याल्लवणस्येति तेजसा । नगरे लोहवर्णाः स्युः प्राकारे कृष्णवर्णकाः । सर्पेत्यंते कृतार्गे तिले अत्रैव वशाचराः । मायात्विति । स्याल्लवणमंत्रवर्णाः पुरस्कृताः । याते रात्रिः शल्यविद्धस्य शूलाग्रारोदितस्य च । याते रात्रिरिति प्रोक्त्वा महारात्रिरितो रयेत् । साते रात्रिर्महेत्युक्त्वा निशेत्येवं तु पंचमीति । टीकांतरेपि । मातास्याल्लवणस्येति वरुणः स्यात्पिता तथा । द्वितीया लवणे प्रोक्तेति । तथा । प्रवदेदमुकस्यां ते दहगात्राणि पंचकं । दहमांसं दहेत्युक्त्वा त्वचमुक्त्वा समापयेत् । तृतीया यदहप्रोक्ता त्वगेति प्रवदेत्ततः । स्थिमज्जानीत्यतो स्थिभ्यो मज्जिकां स्याद्दहेतिचेति। तथा। या ते रात्रिः स्वशूलांतेभिवस्येत्यचरवयं । शूलाग्रारोपितस्येति चांते याते इतीरयेत् । रात्रिः स्याच्च महारात्रि र्योरात्रिरमुकं विना । इत्येवं पंचमी ऋक् स्यात् मंत्रोयं प्रणवादिक इति । तथात्राचार्यैः छंदः कथना वसरे उक्तं । अंगिरास्या दृषिश्छंदो नुष्टप्त्रिष्टुबिति मंत्रमुक्त्वा वशीमंत्रदेवप्रकाशिका कारादीनामिदमेव संमतं । पद्मपादाचार्यैः । बीजशक्ती उक्ते । क्लीं बीजं शक्तिमीरिता क्लोमित्येव च बीजं स्यादिति । तैरेवणतत्समफलं

नुष्टुबुदाहृतम् ॥ अग्नीरात्रीपुनदुर्गाभद्रकाली च देवता ॥ ९७ ॥ चिटिमन्त्राक्षरैः कुर्यात्षडंगानि समाहितः ॥ पंचभिर्हृदयं प्रोक्तं त्रिभिर्वर्णैः शिरः स्मृतम् ॥ ९८ ॥ पंचवर्णैः शिखाप्रोक्ता कवचंकरणाक्षरैः ॥ पंचभिर्नेत्रमुदितं युगलेनास्त्रमीरितम् ॥ ९९ ॥ तारः चिटिद्वयं पश्चाच्चंडालि तदनंतरम् ॥ महत्पदाद्यां तांब्रूयादमुकं मेततः परम् ॥ १०० ॥ वशमानय ठद्वंद्व चिटिमंत्र उदाहृतः ॥ चतुर्विंशत्यक्षरात्मासर्वकामफलप्रदः ॥ १ ॥ नवकुंकुमसंभिन्नं त्रिनेत्रं रुचिराकल्पशतंभजामि वन्हिं ॥ शुकशक्तिवराभयानिदोर्भिर्दधतं रक्तसरोरुहे निषण्णम् ॥ २ ॥ कालांबुवाहद्युतिमिंदुवक्त्रांहारावलिं शोभिपयोधराढ्याम् ॥ कपालपाशां कुशशूलहस्तां नीलांबरां यामवतीं नमामि ॥ ३ ॥ कालांबुदाभामरिशंखशूलखड्गाढ्यहस्तांतरुणेंदुचूडां ॥ भीमां त्रिनेत्रां जितशत्रुवर्गां दुर्गति भंगहस्तां ॥ ४ ॥ टंकं कपालं डमरुंत्रिशूलंसबिभ्रती चंद्रकलावतंसा ॥ पिंगोर्द्ध्वकेशीसितभीमदंष्ट्रा भूयाद्विभूत्यै मम भद्रकाली ॥ ५ ॥ ऋक्पंचकं जपेत्सम्यगयुतं तद्दशांशतः ॥ हविषा घृतसिक्तेनजुहुयादर्चिते नले ॥ ६ ॥ एवं कृतपुरश्चर्यः प्रयोगे कुशलो भवेत् ॥ आग्नेयीमवतीध्येयौ वश्याकर्षणकर्मणोः ॥ ७ ॥ स्मरेद्दुर्गां भद्रकालीं मन्त्री मारणकर्माणि ॥ जानुप्रमाणे सलिले स्थित्वा निशि जपेन्मनुम् ॥ ८ ॥ अनेन वांछितः साध्यः किंकरो जायते क्षणात् ॥ नाभिमात्रोदके स्थि

---

मंत्रांतरमुक्तं । चिटीति शब्दं संबोध्य चिल्लोलिपदमीरयेत् । मखाचिल्लोलिशब्दांते ह्रीं सवौषट्द्विगंतिकः मतांतरमिति ज्ञेयं । मंत्रतुल्यफलं शिवे । षडंगमाह । चिटीति । समाहित इत्यनेन पंचांगं वा कुर्यादित्युक्तं । यदाहुराचार्याः । ऋग्भिराभिस्तु पंचांगं पंचभिर्वासमीरितं । विद्याक्षरैः षडंगं वा प्रणवाद्यैर्निगद्यत इति । चिटिमंत्रमुद्धरति । तार इति । महत्पदाद्यंतामिति महाचांडालि । अत्र आनमहत इत्यनेनात्वं क्वचित्तु महापदाद्यामिति पाठः । तदुक्तं चांडालीति । महेत्युक्ताचांडालीत्यभिमंत्रयेदिति । दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरंत्ये इत्यायुधध्यानमग्निध्याने । तदुत्तरं तु । वामाधस्ताद्दक्षाधस्तनं यावदुर्गाध्यानेदक्षोर्ध्वाद्दक्षाधस्तनं यावदायुधध्यानं । टंकः परशुः । अंत्ये दक्षाधस्ताद्दक्षोर्ध्वं यावत् । सम्यगयुतमिति । चिटिमंत्रसहितमृक्पंचकं अयुतं जपेदित्यर्थः । तदुक्तमाचार्यैः । अयुतं नियुतो मंत्री मंत्रमृक् पंचकान्वितं । प्रजपेत्त्रिसहस्रं वा सम्यगेनं समाहित इति । तंत्रांतरे तु विशेषः । गंगादि मुख्यसरितां तीरदेशे समाश्रिते । स्वयमेव समुद्भूते दुर्गानिलयनेवशी । त्रिसहस्रं जपेदेतदथवायुतसंख्यया । पूर्वोक्तं चिटिमंत्रं तु जपेत्तस्य चतुर्गुणमिति एवं कृतपुरश्चर्य इत्यनेन नित्यपूजापि सूचिता । तया विना तस्यासंपादनात् । सोक्ता रामकंठेन । भीषणीवहुरूपाचतीक्ष्णदंष्ट्रामदोत्कटा । मारणी मोहनी कांता कमंडलुधरा अपि । अभिचारकरी चेति लोकमंत्रस्य शक्तयः । पाशांकुशपुटाशक्तिः सर्वशक्तिपदंक्रमौ । लासनाय नमोंतः स्यात्पीठमंत्रोप्र्वादिकः । मूर्त्तावावाह्य गंधाद्यैर्देवताः संप्रपूजयेत् । अंगैरावरणं पूर्वं द्वितीयं वह्निमूर्त्तिभिः । शक्तिभिश्च समीरिता । उत्कटाद्यैश्चर्थीतु पंचमाद्वत्तिरीरिता । लोकेशैर्लोणमस्य विधानमिति कीर्त्तितं । शूलहस्ताविकेशीच दारुणा लवणप्रिया । वराकरालीवातयुधा ता-

त्वा जपेन्मंत्रमिमं सुधीः ॥ ९ ॥ अष्टोत्तरसहस्रंयस्तस्य साध्यो वशो भवेत्॥ ऋकपंचकं जपे त्सम्यक्कंठमात्रांभासि स्थितः १० ॥ अप्ताभिर्देवसंभूयान्वशयेद्विधिनामुना ॥ विलिख्यता लपत्रे तं साध्यनाम्ना विदर्भितम् ॥ ११ ॥ निःक्षिप्यक्षीरसंमिश्रे जले तत्क्वाथयेन्निवश्यो भवति साध्योस्यनात्र कार्याविचारणा ॥१२॥ तालपत्रे लिखित्वैतं भद्रकाली गृहे खनेत् ॥ वश्याय सर्वजंतूनां प्रयोगोयमुदाहृतः ॥ १३ ॥ तालपत्रे लिख्ययंत्रं साध्यनाम विदर्भितम् ॥ तापयेत्खादिरे वन्हौ मासं वश्यो भवेन्नरः ॥ १४ ॥ त्रिकोणं कुंडमापाद्य सम्यक् शास्त्रोपलक्षणम् ॥ तस्मिन्होमं प्रकुर्वीत संस्कृते हव्यवाहने ॥ १५ ॥ प्रक्षाल्य गव्यदुग्धेन संशोष्य लवणं सुधीः ॥ सुचूर्णितं प्रजुहुयात्सप्ताहाद्वशयेज्जनान् ॥ १६ ॥ दधिमध्वाज्यसंसिक्तैः सैंधवैर्जुहुयात्तथा ॥ वशयेदखिलान्देवानचिरात्किमुपार्थिवान् ॥ १७ ॥ विशुद्धं लवणं प्रस्थं विभक्तं पंचधा पृथक् ॥ एकैकया प्रजुहुयाद्दचापंचाहमादरात्॥यस्य नाम्ना सवश्यः स्यादनेनाविधिना चिरात् ॥ शुद्धं लवणमादाय जुहुयान्मधुरान्वितम् ॥ ऊनपंचाशदा हुत्वा वशं नयति वांछितम् ॥ नित्यं शुद्धेनलोणेन हुत्वा शत्रून्वशं नयेत् ॥ २० ॥ मधुरत्रयसंयुक्तैर्लवणैः साधुचूर्णितैः ॥ जुहुयाद्वशयेन्नारी नरान्नरपतीनपि ॥ २१ ॥ मन्त्रं कृष्णतृतीयादि प्रजपेद्यावदष्टमी ॥ पुत्तलीः पंचकुर्वीत सांगोपांगाः समाः शुभाः ॥ २२ ॥ एका साध्यद्रुमेण स्यादन्यापिष्टमयीमता ॥ चक्रि हस्तमृदान्यास्यांदन्यासिक्थमयी स्मृता॥२३॥ लवणं पोतसंभूतं चूर्णितं परिशोधितं ॥ कुडवं मोक्षयेत्क्षीरंमदध्याज्यमधुभिः क्रमात्॥२४ ॥ गुडाज्यमधुभिः सम्यङ्मिश्रिते नामुना ततः ॥ कुर्वीत पुतलीं सौम्या सर्वावयवशोभिताम् ॥ २५ ॥ प्राणमंत्रकृतं यंत्रमासां हृदि विनिः क्षिपेत् ॥ आसुप्राणान्प्रतिष्ठाप्य पूजयेत्कुसुमादिभिः ॥ २६ ॥ पश्चात्कृष्णाष्टमीरात्रौ याममात्रे गतेसति। विधाय मातृकान्यासं मंत्रन्यासमनंतरम् ॥ २७ ॥ चिटिमंत्रसमुद्भूतान् चतुर्विंशति संख्यकान् ॥ ताराद्यान्विन्यसेद्वर्णान्स्थानेष्वेषु समाहितः ॥ २८॥ मूर्द्धिनभाले दृशोःश्रुत्योर्नासास्य चिबुकेष्वथ॥ कंठहृत्स्तनयुग्मेषु कुक्षौनाभौ कटि द्वये ॥ २९॥ मेढ्रेपाणौ प्रविन्यस्य शिवृवर्णचतुष्टयम् ॥ ऊरुद्वये-जानुयुगे जंघायुग्मे पदद्वये ॥ ३० ॥ एवं विन्यस्य सर्वांगोरक्तमाल्यानुलेपनः ॥ रक्तवस्त्र-

---

मस्यश्चाष्टशक्तयः । उल्कटोविकटाचक्ष्य शूलहस्तो महाबलः । अग्निजिह्वः खड्गधरः कपाली तारणप्रिय इति । रावणमिति साध्यनाम्ना विदर्भितमित्यर्थः । विशुद्धमिति । प्रक्षालितं पूर्ववत् लवणेति सैंधवं । एवमग्रेपि । प्रयोगांतमाह। मंत्रमित्यादिना । यादवष्टमीति कृष्णा । कुर्वीतेत्यष्टम्यां । सांगोपांगा इति । अंगानि तु । करहस्तहृत्पार्श्वकटीयत्स्कंधौ कंधरा भुजौ । पृष्टं तथोदरंतूरू जंघे इत्यंगसंग्रहः उपांगानि भ्रूपुटौ च तारागंडौ च नासिका । अष्टौ तु दशनाजिह्वा चिबुका स्यं सनाभि च । जघनं योनि गुह्ये च जानुनी मणिबंधके । पार्ष्णीगुल्फौ तथांगुल्यः करयोः पादयोस्तले इति साध्यद्रुमेणेति । साध्य नक्षत्रवृक्षेण। साध्यनक्षत्रवृक्षानभिज्ञे व वक्ष्यति।पिष्टमयीमिति। तंडुलपिष्टमयीं । चक्री कुलालः । सिक्थं मधूच्छिष्टं । पोतसंभूतमिति: सामुद्रं । अमुना लवणेन

धरः शुद्धः पुतलीं दारुणाकृतां ॥ ३१ ॥ अधोमुखीं खनेत्कुंडे पिष्टजामासनादधः ॥ मृन्मयीं प्रतिमां पाददेशेन्यसेत्तथात्मनः ॥ ३२ ॥ मधूच्छिष्टमयीं व्योम्नि कुंडस्योर्ध्वे प्रलंबयेत् ॥ लवणेन कृतां पश्चात्पुत्तलीं संस्पृशन्जपन् ॥ ३३ ॥ ऋक्पंचकं यथान्यायमष्टोत्तरसहस्रकं । संहृत्याचिटि मन्त्रार्णान्पुनस्तस्यास्तनौन्यसेत् ॥ ३४ ॥ अंगुष्ठसंधिप्रपदजानुजंघारुपायुषु ॥ लिंगदेशे पुनर्नाभाजठरे हृदयांबुजे ॥ स्तनद्वये कंधरायां चिबुके वदने पुनः ॥ घ्राणयोः कर्णयोरक्ष्णोर्ललाटे मूर्द्धनि विन्यसेत् ॥३६॥ अग्निमादायसंदीप्य साध्यनक्षत्रदारुभिः ॥ तस्मिन्नभ्यर्च्य मंत्रोक्तां देवतां रूप्यपात्रके ॥ ३७ ॥ कुशीत्तराजिपुष्पाद्भिर्दत्वार्घंप्रणमेत्सुधीः ॥ मंत्रैरेतैः प्रयोगादावं तेसंयतमानसः ॥ ६८ ॥ त्वमनेनाप्यमित्रघ्ननिशायां हव्यवाहने ॥ हविषा मंत्रजप्तेन तृप्तो भव तया सह ॥ ३९ ॥ जातवेदो महादेव तप्तजांबूनदप्रभा ॥ स्वाहायत्ते विषं भक्ष लवणं दह शत्रुहन् ॥ ४० ॥ ओं ईशेशर्वरि सर्वाणिग्रस्तंमुक्तंत्वया जगत् ॥ महादेवि नमस्तुभ्यं वरदे कामदा भव॥४१॥ तमोमायि महादेपमहादेवस्य सुव्रते ॥ त्रियामेपुरुं१ हत्वा वशमानय देविमे ॥ ४२ ॥ ओं दुर्गे सर्गादिरहिते दुर्गसंरोधनाकुले ॥ चक्रशंखधरे देवि दुष्टशत्रुभयंकरि ॥ ४३ ॥ नमस्ते दहशत्रुं मे वशमानय चांडिके ॥ शाकंभरि महादेवि शरणं मे भवानघे ॥ ४४ ॥ ओं भद्रकालिभवाभीष्टे भद्रासिद्धि-

---

। सौम्यां सुंदरीं । पंचापि द्वादशांगुलाः यंत्रमित्यग्रिमपटले वक्ष्यमाणं । प्राणानित्यग्रिमपटले वक्ष्यमाणेन प्रकारेण । आचार्यास्तु तस्यां तु स्थापयेत्प्राणान् गुर्वादेशविधानत इति।अत्र सांप्रदायिका विशेषमाहुः । पुत्तलिकाया हृदयं स्पृशन् प्राणा इह प्राणा जीव इह स्थित इति इंद्रियाणि स्पृशन् सर्वे न्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणेति सर्वांगं स्पृशन् प्राणा इहायांतु सुखं चिरं तिष्टंतु इति शिरः स्पृशन् स्वाहेति जपेत् । मंत्रन्यासमिति पंचभिः पंचांगमित्यर्थः अथवान्त्रमेवाह चिटीति । दारुणेति । साध्यनक्षत्रवृक्षकाष्ठेन कृतांकुंडे खनेत्रिखनेन्निखनेदित्यर्थः । तत्र द्व्यंगुलाधोनिखननं ज्ञेयं । अधोमुखीमिति।मारणकर्मविषयं । वशीकरणकर्मणि उत्तानेति ज्ञेयं । यदाहुः । कुंडांतर्द्व्यंगुलाधोनिखनतुतरुजां मूर्तिमुत्तानरूपामिति । आचार्याश्च उत्तानां दारवीं कुंडे खनेन्मंत्राभिमंत्रितामिति। तथान्यसेदिति। अधोमुखींन्यसेदित्यर्थः । विषयव्यवस्था तु पूर्वोक्तैव ज्ञेया । एतयोरपि द्व्यंगुलाधोनिखननमेव । प्रलंबयेदित्यधोमुखीमित्येव । यदाहुः । धूमेन स्पृश्यमानामुपरि मदनजां लंबयेदूर्ध्वपादामिति । आचार्याश्च । लंबयेदंबरे सिक्थमपो मूर्ध्वामधोमुखीतिति । यथान्यायमिति । षडंगन्यासं स्वतनौ पुत्तल्यां च कृत्वा चिटिमंत्रसहितं ऋक्पंचकं जपेदित्यर्थः । तदुक्तं । अंगानि विन्यसेत् स्वांगे तथा प्रतिकृतावपीति । संहृत्येति विपरीतान् स्वांगे प्रतिकृतावपि । तदुक्तं । न्यस्यांगान्यनुमन्त्र्यप्रतिकृतौ संहारयुक्त्या न्यसेदिति पुनरनंतरमित्यनेनैतदुक्तं । स्वदेहे न्यासं विधायात्मयागांतं कृत्वा पश्चात्पुत्तल्यां न्यास इति । अतएव पश्चादासने देवता पूजा । तस्याः पुत्तलिकायाः । अंगुष्ठेति । ऊर्वतेषु । षट्सु एकैकाक्षरन्यासः अन्यस्थानद्वये सर्वत्राक्षरद्वयं । यदुक्तमाचार्यैः । अधोगुह्यादभेदः स्यादूर्ध्वं भेदोद्विकेसतीति । तस्मिन्निति । तंत्रांतरोक्तप्रासन इत्यर्थः । अ-

प्रदायिनि ॥ सपत्नान्मे हन दह शोषय तापय तापय ॥ ४५ ॥ शूलासि शक्तिवज्राद्यैरुत्कृत्यो-त्कृत्य मारय ॥ महादेवि महाकालि रक्षास्मानक्षतात्मिके ॥ ४६ ॥ साध्यं संस्मृत्य निर्भेद्य पुत्तलीं सप्तधा ततः ॥ ऋक्पंचकं समुच्चार्य जुहुयाद्दीपितेऽनले ॥ ४७ ॥ प्रथमो दक्षिणः पादस्तत्करस्तदनंतरम् ॥ शिरस्तृतीयमाख्यातं वामहस्तं ततः परं ॥ ४८ ॥ मध्यादूर्ध्वं पंचमः स्यादर्धांशः षष्ठ ईरितः ॥ सप्तमो वामपादः स्यादेवं भागक्रमः स्मृतः ॥ ४९ ॥ सप्त सप्त विभागोक्तेष्वेषु यथाविधिः ॥ हुत्वैवमर्चयित्वाग्निं प्रणमेद्दंडवत्ततः ॥ ५० ॥ यजमानो धनैर्धान्यैः प्रीणयेद्गुरुमात्मनः ॥ अनेन विधिना मन्त्री वशयेदसुरान्सुरान् ॥ ५१ ॥ किं पुनर्मनुजान्भूपान्नपात्यान्नृपयोषितः ॥ मारणे पूर्वसंप्रोक्तं पुत्तलीनां चतुष्टयम् ॥ ५२ ॥ निवेशयेद्यथा

---

ग्नौ देवतापूजा चतुर्थपटल एवोक्ता । तस्योक्तावत्र प्रयोजनाभावादग्रेऽर्घदानमपि वक्ष्यति । यदाहुः । कुंडस्य पूर्वदिग्भागे चतुरस्रं समुन्नतं । हस्तमात्रायतं लाक्षा रक्तपादादिकं नवं । चित्रांगं रुचिराकारं कुंडोत्सेधसमुन्नतं । चतुरंगुलमानं वा अष्टांगुलमथापि वा । द्वादशांगुलकं वापि कुंडादुन्नतमासनं । तस्मिन् सुविमलं वस्त्रं आस्तीर्याद्यौ सुशोभनं । सूक्ष्मं च तु गुणीकृत्य सप्तहस्तायतं नवं । तस्योपरि परिस्तीर्य रक्तवस्त्रद्वयं पुनः । विशालमति सूक्ष्मं च पूर्ववद्गुणितं नवमिति । तंत्रांतरोक्तप्रकारेणासनं परिकल्प्य तत्र पूर्वोक्तं पीठं परिपूज्य देवतामावाह्य पूर्ववत्सावरणं संपूज्य रक्तचंदनादिना वक्ष्यमाणद्रव्ययुक्तेन शुद्धजलेन रूप्यं चषकमापूर्य तेनार्घं दद्यात् । ततो वक्ष्यमाणमंत्रैर्देवतामुपतिष्ठेत । कुशीतं रक्तचंदनं । राजिः राजिका । प्रयोगादाविति । एतन्मंत्रप्रयोगादावंते च । अत्र वशीकृतौ यद्यपि एते एव देवते तथापि नतिप्रकरणप्रसंगादि तयोरपि मंत्रावुक्तौ तत्प्रयोजनमग्रे मारणकर्मणि भविष्यति । पुत्तलीमिति । लवणमयीं । निर्भिद्येत्युक्तां तमेव भेदमाह प्रथम इति आचार्यैः प्रकारांतरमप्युक्तं । दक्षिणं चरणं पूर्वं दक्षादंतु द्वितीयकं । दक्षहस्तं तृतीयं स्याद्भलादूर्ध्वं चतुर्थकं । पंचमं वामहस्तः स्यात्षष्टं वामार्द्धमेव च । सप्तमं वामपादः स्यादन्यापि स्याद्धुतक्रियेति । प्रोक्तेष्विति । सप्तावदानेषु प्रत्येकं सप्तसप्तविभागाः तेनैकोनपंचाशदाहुतयः । उक्तपुत्तलीषु सर्वत्रावदानक्रमोऽयमेव ज्ञेयः । अन्यत्र विशेषः । सप्तसप्तविभागो वा क्रमादंगेषु सप्त सु । एकादशांशभिन्नैर्वा तदंगैः सप्तभिर्हुनेदिति । अन्यत्रापि । सप्तानामंगानामेकैकं सप्तभागान्वा । रुद्रांशान्वा कृत्वा होतव्यं मंत्रिवर्येणेति । स्त्रीवशीकरणे वामपादादि ज्ञेयं योषितो वामपूर्वामित्युक्तेः । एवं स्त्रीमारणे दक्षपादाद्यवदानक्रमो ज्ञेयः । प्रणमेदिति । पूर्वोक्तमंत्रैः । साधकेंद्रो विधानविदित्यनेन पुत्तलीनां द्व्यंगुलाधः खननमुक्तं । त्र्यूषणं शुंठी पिप्पलि मरीचानि । रामठं हिंगु । व्रणकृद्भल्लातः निंबिं निंबबीजम् । अत्र तिलभल्लातनिंबबीजसिद्धार्थानां तैलं ग्राह्यं । तदुक्तमाचार्यैः । सनिंबतिलसिद्धार्थ व्रणकृत्तैलसंयुतैरिति । पूर्वोक्तलवणं सामुद्रम् । सम्यक् । पुत्तलीं विधायेत्यनेन तन्त्रान्तरोक्तो विशेषः सूचितः । आयामः पादयोस्तस्या आकट्याश्चतुरंगुलः पादोनद्व्यंगुलाकुक्षिस्तावेवांगुलोदरम् । अंगुलद्वयमावक्षात्कण्ठदेशस्य मानकम् । शिरसोवक्रमानं स्यात्सार्द्धद्वयमिहांगुलैः । द्वादशांगुलय सर्वाः साध्यपुत्तलिकाः स्मृता इति । तंत्रांतरे तु विशेषः

पूर्वं साधकेन्द्रो विधानवित् ॥ अपरां वक्ष्यमाणेनविधानेनप्रकल्पयेत् ॥ ५३ ॥ वराहपारावतविट् तिलव्यूषगरामठैः॥ व्रगकूर्भेवासिद्धार्थसाध्यरामांघ्रिरेणुभिः ॥ ५४ ॥ महिषी मूत्रसंपिष्टैः पूर्वोक्तलवणान्वितैः ॥ विधाय पुत्तलीं सम्यक् प्राणस्थापनमाचरेत् ॥ ५५ ॥ जपपूजादिकं सर्वं कुर्यात्प्रागुक्तवर्त्मना ॥ ततः पूर्वोदिते कुंडे रात्रौ प्रज्वलितेनले ॥ ५६ ॥ दुर्गां वा भद्रकालीं वा समासाद्ययथाविधि ॥ धारयन्निशितं शस्त्रं सव्यहस्तेन साधकः ५७ वामपादं समारभ्य दक्षिणांघ्र्यवसानकम् ॥ छित्वाछित्वा प्रजुहुयान्निराहारोजितेन्द्रियः ॥ ५८ ॥ कृष्णाष्टमीं समारभ्या यावत्कृष्णचतुर्दशीं ॥ अनेनैव विधानेन होमं कुर्याद्विचक्षणः ॥ ५९ ॥ त्रिसप्ताहप्रयोगेन मारयेद्रिपुमात्मनः ॥ कारस्करोथधात्री स्यादुदुंबरतरुःपु-

---

। पंचाग्निमुखं कृत्वा तदर्द्धेन गलं पुनः । शिष्टेन सर्वाण्यंगानि पुत्तलीनां प्रकल्पयेत् । मारणे दारुरूपांतां द्वादशांगुलसंमितां । षण्णवत्यंगुलां वापि कुर्यान्मात्रांगुलैः क्रमात् । होमार्थं कल्पितायास्तु तस्याः प्रोक्तो विधिस्त्वयं । वश्याकर्षणयोः प्रोक्ता तां कुर्याद्द्वादशांगुलैरिति । यथाविधीति । पूर्वोक्त प्रकारेण कुर्याद्धोममिति प्रत्यहं । त्रिसप्ताहेति । एभिरेव सप्तभिः तैन मासत्रयेण प्रयोगसिद्धिः । मारणकर्मणि दक्षिणाविशेष उक्तस्तंत्रांतरे । सस्वर्णां च समुक्तांगां शोणां दद्यात्स तर्पकां । दक्षिणां सप्तकर्षं तु दद्यान्मारणकर्मणीति । अन्यो विशेषः श्मशाने निर्जने देशे विदध्यादाभिचारिकं । यत्रापि चारहोमनुकरोति भुवि साधकः । तत्राभितोभटैरक्षां कारयेदात्मसिद्धये । नवेदन्यः क्षितिपतिश्चारैर्ज्ञात्वा निहंत्यमुं । स्वराष्ट्रसंधौ कुर्वीत न कुर्वीत स्वमंडले । यदिकुर्यात्प्रमादेन मांत्रिकोऽज्ञानमोहितः । तदाष्ट्रं पीडयंत्येव शनकैर्वैरिभूभृत इति । अन्योपि विशेषस्तंत्रांतरे । तस्यां रात्र्यामुपोष्याथ परेह्नि तु साधकः । प्राणायामादिभिरपि गायत्री जपहोमकैः । विमुक्तपातकोभूत्वा स पुनर्विहरेद्वशेति । नक्षत्रवृक्षानाह । कारस्क इति । कारस्कारः कुचिला । धात्री आमलकी । मृगशिरसस्तु श्वेतसार एव खदिरः । आर्द्रायास्तु कृष्णसारः खदिरः नागो नागकेसरः । रोहिणी वटः । प्लक्षः पर्कटी । अंबष्टः आम्रातः । अर्जुनः ककुभः । विकंकतः स्रुचां वृक्षः । सर्जः शालः । वंजुलो शोकः । एषां सामान्यतः फलमुक्तं । आयुकामः स्वर्क्षवृक्षं छेदयेन्न कदाचनेति । यथापुरेति । आग्नेयास्त्रप्रोक्तमार्गेण । एतच्चात्मरक्षणं मारणकर्मण्येवेति ज्ञेयं । इति श्रीशारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां द्वाविंशः पटलः ॥ २२ ॥ ॥ अथेति मंत्रो यथा । त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनं । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीयमामृतादिति । मृत्युंजयपुटित इति केचित् । सांप्रदायिकास्तु प्रणवप्रासादमृत्युंजयव्याहृतिभिः संपुटमिच्छंति । श्रीं बीजं माया शक्तिः । तदुक्तं । श्रीदेव्यौ प्रणवौ बीजशक्तीयोगः शिवार्चने इति । विभागमेवाह।हृदयमिति। येषांमते प्रणवादि संपुटः तन्मते तदादिभिरेभिर्वर्णैः षडंगं । तदुक्तं । प्रासादमृत्युंजयभूर्भुवः स्वस्तदंगमंत्रैः क्रमशः समेतमिति । सांप्रदायिकास्तु । प्रणवप्रासादमृत्युंजयव्याहृतिमंत्राद्यन्तनमोभगवते रुद्राये त्युक्त्वा शूलपाणये स्वाहा हृत् । अमृतमूर्तये मां जीवय शिरः चंद्रशिरसे जटिले स्वाहा शिखात्रिपुरांतकाय ह्रां ह्रीं

नः ॥ ६०॥ जंबू खदिर कृष्णा ख्यौ वंशं पि प्प ल संज्ञि कौ ॥ नागरोहिणनामानौ प- काशप्लक्षसंज्ञकौ ॥ ६१ ॥ अंबष्ठविल्वार्जुनाख्याविकंकतमहीरुहाः ॥ बकुलः सरलः सर्जो वंजुलः पनसार्ककौ ॥ ६२ ॥ शमी कदं बनि बाम्रमधूकाक्षशाखिनः ॥ आत्मरक्षादिकं सर्वं कुर्यान्मंत्री यथापुरा ॥ ६३ ॥ अमुना मनुनासम्यगभीष्टफलसाधने ॥ सदृशो नास्ति मंत्रोन्यः सत्यमेतन्नचान्यथा ॥ ६४ ॥ इति शारदातिलके द्वाविंशः पटलः ॥ २२ ॥ अथ- त्रै यंबकंमन्त्रमभिधास्याम्यनुष्टुभम् ॥ यंभजंतं नरं कालः स्वयंवीक्षिमतक्षमः ॥१॥ वशिष्ठोस्य मुनिः प्रोक्तश्छंदोनुष्टुबुदाहृतम् ॥ देवतास्यसमुद्दिष्टस्त्र्यंबकः पार्वतीपतिः २ विभक्तैर्मंत्रवर्णैः स्यात्षडंगानां प्रकल्पना ॥ हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम् ३ शिखाष्टभिः स- मुद्दिष्टा नवभिः कवचं मतम् ॥ पंचभिर्नेत्रमाख्यातमस्त्रं त्रिभिरुदाहृतम् ४ पूर्वपश्चिमयाम्ये न्द्रवक्त्रेषु तदनंतरम् ॥ उरोगलास्येषुपुन र्नाभिहृत्पृष्ठकुक्षिषु ५ लिंगपायूहस्तमूलांतजानुयु- ग्मेषुतत्परम् ॥ तद्वृत्तयुग्मेस्तनयोः पार्श्वयोः पादयोः पुनः ६ पार्योर्नाशिकयोः शीर्षे मंत्र वर्णान्न्यसेत्क्रमात् ॥ लदान्येकादक्षन्यस्येच्छिरोभ्रयुगलाक्षिषु ७ वक्त्रे गंडयुगे भूयो हृदये जठरे पुनः ॥ गुह्योरुजानुपादेषुन्यासमेवं समाचरेत् ८ ॥ हस्ताभ्यां कलशद्वयामृतरसैराप्ला वयंतं शिरोद्वाभ्यां तौदधतंमृगाक्षवलयेद्वाभ्यां वहंतं परम् ॥ अंकन्यस्तकरद्वयामृतघटं कैला सकांतं शिवं स्वच्छांभोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रंभजे ॥ ९ ॥ जपेन्मन्त्रमिमं लक्षमेकंध्या यन्जितेन्द्रियः ॥ जुहुयाद्दशभिर्द्रव्यैरयुतं घृतसंप्लुतैः ॥ १० ॥ विल्वं पलाशं खादिरं वटं च तिलसर्षपौ ॥ दौग्धं दुग्धं दधिपुनर्दूर्वातानि विदुर्बुधाः ॥ ११ ॥ पंचाक्षरो दिते पीठे पूज येद्वृषभध्वजम् ॥ मूर्तिमूलेन संकल्प्य वक्ष्यमाणेन वर्त्मना ॥ १२ ॥ पूर्वमंगानि संपूज्य प- श्चान्मूर्तीः प्रपूजयेत् ॥ अर्केन्दुवसुधातोयवन्हीरविपदात्मनः ॥ १३ ॥ द्वितीयावरणे पूज्या मूर्तयोष्टौ क्रमादथ ॥ रामाराकाप्रभाज्योत्स्नापूर्णोषापूरणीसुधा ॥ १४ ॥ अष्टाविमाक्रमा-

---

कवचं । त्रिलोचनाय ऋग्यजुः साममंत्राय नेत्रं । अग्नित्रयाय ज्वलज्वल मां रक्ष अघोरास्त्राय अस्त्र इति षडंगमाहुः वर्णन्यासमेवाह।पूर्वेति। उरः शब्देन हृदूर्ध्वभागविस्तीर्णदेश गृह्यते । ऊरु मूलयोर्हीतद्वृत्तयुग्मे जानूपरिस्थवृत्तयोः सर्वस्थानद्वये वर्णद्वयन्यासः । सांप्रदायिकाः प्रणवादि पुटितवर्णन्यासमाहुः । तंत्रांतरे स्थानांतराण्युक्तानि । चरणाग्रसंधिगुह्याधारोदरहृदयकंधरासु- पुनः बाह्वोःसंध्याग्रास्योष्ठघ्राणसदृक्श्रुतिभ्रू शीर्षेषुइतिपदानीति।वक्त्रेत्यग्रगीषु सेदहिचिहितेरकचि वर्णकैः । ताविति । घटौ । अत्र ध्यानानंतरमेता मुद्राः प्रदर्शयेत् । यदाहुः लिंगपंचास्य सु- ष्टंया बुजशक्तिमुद्राः प्रदर्शयेदिति । बिल्वं फलं । ततस्त्रयाणां समिधः । दौग्धमिति ।पायसं । वक्ष्यमाणेन वर्त्मना पीठे वृषभध्वजं पूजयेदित्यन्वयः।संपूज्येति।कर्णिकायां।मूर्त्तीः पश्चात् द्वितीया वरणे पूजयेदित्यन्वयः।ता एवाह।अर्केति।इरो वायुः।आत्मायजमानः।तथा चश्रुतिः । आत्मावै यज्ञस्य यजमानोंगानि ऋत्विज इति । अष्टमूर्त्यादि पंचावरणानि पत्रेषु दलमूलउत्तरोत्तरत्रपूजनीयानि।

त्पूज्यास्तृतीयावरणे ततः ॥ विश्वा विद्या सिता प्रह्वा सारासंध्याशिवानिशा ॥१५॥ चतुर्थावरणे पूज्याः शक्तयोष्टौ क्रमादिमाः ॥ आर्याप्रज्ञाप्रभामेधाशांतिः कांतिर्धृतिर्मतिः १६ पंचमावरणे पूज्याः क्रमादेतास्ततः परं ॥ धरामायाविनीपद्माशांतामोघाजयामला ॥ १७ ॥ षष्ठावरणगाः पूज्या लोकपालास्ततः परं ॥ एवंकृते प्रयोगार्हो जायते यं महामनुः ॥१८॥ अयुतं जुहुयाद्बिल्वसमिद्भिः संपदे सुधीः ॥ जुहुयाद्ब्रह्मवृक्षस्य समिद्भिर्ब्रह्मतेजसे ॥ खादिरैरयुतं हुत्वा कांतिपुष्टिमवाप्नुयात् ॥ वटवृक्षस्य समिधो जुहुयादयुतावधि ॥ २० ॥ धन धान्यसमृद्धः स्यादचिरेणैव साधकः ॥ तिलैस्तत्संख्यया हुत्वा सर्वपापैः प्रमुच्यते ॥ २१ ॥ सिद्धार्थैरयुतं हुत्वा शत्रून्विजयते नृपः ॥ अनेनैव विधानेन नश्येन्मृत्युरकालजः ॥ २२ ॥ पायसेन कृतो होमो रक्षाश्रीकीर्तिकांतिदः ॥ गोदुग्धेन च शुद्धान्नं हुत्वा कृत्यां विनाशयेत् ॥ २३ ॥ अयमेव मतो होमः शांतिश्रीसंपदावहः ॥ दधिहोमेन संवादं कुर्याद्विद्वेषिणोर्मिथः ॥ २४ ॥ प्रत्यहं जुहुयान्मंत्री दूर्वामष्टोतरंशतं ॥ आमयान्निखिलान्जित्वा दीर्घमायुरवाप्नुयात् ॥ २५ ॥ जुहुयाज्जन्मदिवसे पायसान्नैर्घृतान्वितैः ॥ इच्छन्नानिंदितां लक्ष्मीं मारोग्यमतुलं यशः ॥ २६ ॥ गव्यदुग्धघृताक्ताभिर्दूर्वाभिर्जुहुयाद्वशी ॥ सविंशतिशतं सम्यक् स्वजन्म दिवसे सुधी ॥ २७ ॥ आमयैः सकलैर्मुक्तो जीवेद्वर्षशतं सुधीः ॥ काश्मरी समिधस्तिसृःपयोन्नं त्रिशतं पृथक् ॥ २८ ॥ जुहुयाद्ब्राह्मणानंते भोजयेन्मधुरान्वितं ॥ प्रीणयेद्धनधान्याद्यै रात्मनो गुरुमादरात् ॥ २९ ॥ अनामयमवाप्नोति दीर्घमायुः श्रियासह ॥ सघृतेन पयोन्नेन हुत्वा पर्वणि पर्वणि ॥ ३० ॥ राज्यश्रियमवाप्नोति षण्मासान्नात्र संशयः ॥ लाजैर्विशुद्धैर्जुहुयात्कन्या प्यैसा वराप्तये ॥ ३१ ॥ क्षीरद्रुमसमिद्धोमाद्ब्राह्मणादीन्वशं नयेत् ॥ स्नात्वा सहस्रं प्रजपेदादित्याभिमुखोमनुं ॥ ३२ ॥ आधिव्याधिविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ॥ अनेन मनुना सर्वसाधयेदिष्टमात्मनः ॥ ३३ ॥ गायत्री त्रिष्टुबनुष्टुव्वर्णैः प्रोक्तः शता-

---

ततः परमिति। वज्रादिपूजेत्युक्तम्। यदाहुः। आनुष्टुभमित्यष्टावरणं प्रोक्तं विधानवरमेवमिति। कल्पान्तरे तु सप्तमो लोकपालैः स्यादष्टम्यर्कादिभिर्ग्रहैरित्युक्तेरेतदेव सूचयितुं लोकपालान्ता पूजा ग्रन्थकारेणोक्ता। खादिरैरिति। समिद्भरैरिति शेषः। पशुदुग्धेन गोदुग्धेन। पृथगिति। प्रत्येकम्। अनामयमारोग्यम्। अनामयं स्यादारोग्यमित्यमरः। सा कन्या वराप्तये जुहुयादित्यन्वयः। क्षीरद्रुमाः। अश्वत्थोदुम्बरप्लक्षवटाः। ब्राह्मणादिषु यथासंख्यं मधुरत्रययुक्तत्वमपि ज्ञेयम्। स्वाद्वक्ता स्तनजन्तुहोमविधिनेत्याचार्योक्तेः। तत्रान्तराद्यंत्रमुच्यते। बिंबद्वन्द्वे क्रमानोर्विलिखतुमनुमैशं सभायत दक्षिद्वन्द्यादिव्यञ्जनाख्यान् मृतिहरमथोसन्धिषड्केसतारम्। अष्टारं तारयुग्व्याहृतिकुपरिवृतं नारसिंहास्त्रिचानुद्वात्रिंशल्यत्रगचंत्रबकमनुचजगञ्ज्ञनभूम्याभिवीतमिति। शताक्षरमन्त्रमाह। गायत्रीति। शताक्षर इति गायत्र्याश्चतुर्विंशतिवर्णत्वम्। त्रिष्टुभश्चतुश्चत्वारिंशद्वर्णत्वं चाभिप्रेत्योक्तं। कश्चित्तु वैदिकत्वादस्य मन्त्रस्याद्यन्तयोः प्रणवदानात् शताक्षरतामाहस्म। तदसम्बद्धम्। यतः षडंगोक्तौ द्वाविंशत्या शिखा प्रोक्ता तावद्भिः कवचं मतमित्यंगहृदयमुक्तम्। तदसंगतं स्यात्। पूर्वोक्ता

क्षरः ॥ पूर्वोक्ता एव मुन्याद्याः परं तेजोऽस्य देवता ॥ ३४ ॥ हृत्त्रयोदशभिः प्रोक्तं रुद्रार्णैः शिर ईरितं ॥ द्वाविंशत्या शिखा प्रोक्ता तावद्भिः कवचं मतं ॥ ३५ ॥ स्यात्पंचदशभिर्नेत्रं अस्त्रं सप्तदशाक्षरैः ॥ वर्णन्यासादिकं सर्वं कुर्यात्पूर्वोक्तवर्त्मना ॥ ३६ ॥ सत्यं मानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं व्याप्तं स्थावरजंगमं मुनिवरैर्ध्यातं निरुद्धेंद्रियैः ॥ अर्काग्नींदुमयं शताक्षरवपुस्तारात्मकं संततं नित्यानन्दगुणालयं परतरं वंदामहे तन्महः ॥ ३७ ॥ लक्षमानं जपेदेनमयुतं पायसांधसा ॥ जुहुयात् घृतसिक्तेन मंत्रविद्विजितेंद्रियः ॥ ३८ ॥ सौरे पीठे यजेत्सम्यक् वक्ष्यमाणविधानतः ॥ आद्यमावृत्तिमभ्यर्चेत्षडंगैर्देशिकोत्तमः ॥ ३९ ॥ गायत्रीशक्तिभिस्तिस्रः पूजयेदावृतीः क्रमात् ॥ आवृत्तिः पंचमी प्रोक्ता त्रिष्टुबुद्भूतशक्तिभिः ॥

---

इति। मन्त्रत्रयस्यापि। तदुक्तं ऋष्याद्याः पूर्वोक्तास्त्रिविधाः स्युरिति। रुद्रार्णैरित्येकादशाक्षरैः। तावद्भिरिति। द्वाविंशत्यक्षरैः। ध्यानमाह। अरूपस्य ब्रह्मणोभावनरूपं ध्यानमेतत् सत्यं ज्ञानमनंतम् ब्रह्मेति श्रुतेः। मानविवर्जितम्। प्रमाणागोचरीकृतम्। यतोवाचोनिवर्त्तन्ते इति श्रुतेः। श्रुतिगिरामाद्यं वेदप्रवक्तृशास्त्रयोनित्वादिति बादरायणिसूत्रणात्। जगत्कारणं जन्माद्यस्येति सूत्रणात्। व्याप्तस्थावरजंगमं सहस्रशीर्षेत्यादि श्रुतेः। मुनिवरैर्नारदादिभिः। अर्काग्नींदुमयमिति गायत्र्यादि देवता क्रमेण। यद्वा। अर्को विष्णुः अग्नो रुद्र इन्दुर्ब्रह्मा तन्मयम्। तत उत्पन्नत्वात्। यद्वाउंकाररूपत्वं वक्ष्यति। एतेनाकारोकारमकारात्मकत्वेनाग्नीद्वर्करूपत्वम्। शताक्षरवपुरिति। शताक्षरैः परं महः प्रतिपाद्यते। प्रतिपाद्यप्रतिपादकयोरभेदाच्छास्त्रयोनित्वेन कार्यकारणभेदाद्वाभेदरूपत्वाद्वेतयोक्तिः यद्वापतः अर्काग्नींदुरूपं अतएव शताक्षरवपुरिति हेतुहेतुमद्भावेन योजना ॐकाररूपत्वमस्य ग्रन्थशेषांत्ये पटले वक्ष्यति नित्यानन्दविचित्यन्तत्स्वरूपमेव। तद्गुणालयत्वं च भगवत उपचारादगुणेभ्यः सत्वरजस्तमोभ्यः परन्तद्रहितं तद्वेदशिरसि प्रसिद्धम्। महःनित्यं प्रकाशकत्वान्मह इव एते च सर्वे शब्दास्तस्य वस्तुनो लक्षका एव न वाचकाएतेषां शब्दानामेकार्थतामपर्यायत्वेपि अतद्व्यावृत्त्यर्थतयान पौनरुक्त्यम्। यद्वा महस्तेजो रूपा कुण्डलिनी उच्यते। सत्यं नित्यत्वात्तस्याः नित्याशक्तिपरादेवीत्युक्तेः। मानमिययत्तातद्वर्जिता। सूक्ष्मतराविभुरित्युक्तेः। व्याप्तस्थावरजंगमासर्वगाविश्वरूपिणी दिक्कालाद्यनवच्छिन्नेत्युक्तेः। निरुद्धेन्द्रियमुनिवरैर्ध्यातायोगिभ्यश्चाचपर्वदेत्युक्तेः। योगिनां हृदयांभोजे नृत्यंती नित्यमंजसेत्यपि। अर्काग्नींदुरूपात्रिधामजननी देवीत्युक्तेः सोमसूर्याग्निरूपाचेत्यपि। शताक्षरवपुः विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगदित्युक्तेः तारात्मकं तन्मध्ये चिंतयेद्देवीमृज्वाकारांतडित्प्रभाम्। ॐकाररूपिणीं ज्योत्स्नामात्मरूपां शुभोदयामित्युक्तेः। नित्यानन्दगुणालयां नित्यानन्दगुणोदयेत्युक्तेः। गुणपरागुणरूपापराच। शक्तिः कुण्डलिनी गुणत्रयवपुर्विद्युल्लतासंनिभेत्युक्तेः। परापरविभागेनपरशक्तिरियं मतेत्युक्तेश्च। पायसांधसा पायसेन। अभ्यर्चेदिति। कर्णिकायाम्। देशिकोत्तमः क्रमादित्यनेन दलमूलमध्याग्रेष्वित्युक्तम्। तिस्र इति। अष्टाष्टदेवतात्मिकाः। त्रिष्टुबिति। जागताद्याभिर्दिशि दिशि एकादशैकादशभिश्चतुष्टयमिति। अष्टाष्टशक्तिरूपत्वेन। अष्टदिक्षु पुनरिति द्वयम्।

४० अनुष्टुप् शक्तिभिः प्रोक्तमावृत्तीनां चतुष्टयम् ॥ इंद्राद्यैर्दशमी प्रोक्ता वज्राद्यैस्ततपराक्रमः ॥ ४१ ॥ एवंसिद्धे मनौ मंत्री भवेद्भास्करसन्निभः ॥ सुधालतोद्भवैः खंडैर्जुहुयात्क्षीरसंप्लुतैः ॥ ४२ ॥ दीर्घमायुरवाप्नोनिराधिर्व्याधिवर्जितः ॥ दूर्वाभिर्घृतासिक्ताभिस्तदेवफलमाप्नुयात् ॥ ४३ ॥ मधुरत्रयसंक्तिर्जुहुयादरुणांबुजैः ॥ महालक्ष्मीमवाप्नोति षड्भिर्मासैर्विधानवित् ॥ ४४ रक्तोत्पलैस्त्रिमध्वक्तैर्जुहुयात्सर्वसंपदे॥ श्रीप्रसूनैः प्रजुहुयाद्रमाया वसतिर्भवेत् ॥ ४५ ॥ सहस्रं जुहुयान्नित्यं मासमेकं तिलैः शुभैः ॥ भानुसंख्यान्द्विजान्नित्यं भोजयेन्मधुरान्वितैः ॥ ४६ ॥ सर्वपापैर्विनिर्मुक्तः सर्वरोगविवर्जितः। कृत्याद्रोनग्रहद्रोहान्जित्वा दीर्घं स जीवति॥४७॥प्रातः स्नारतो मन्त्री जपेन्नित्यं शतंशतम् ॥ भानुमालोकयन्सम्यक्सजविच्छरदांशतम् ॥ ४८ ॥ तारव्याहृतिसंरुद्धं जपेन्मन्त्रं शताक्षरं ॥ नित्यमष्टोत्तरशतं निःश्रेयसफलाप्तये ॥ ४९ ॥ गायत्र्याद्यं जपेन्मन्त्रं सर्वपापविमुक्तये ॥ सर्वशत्रुविनाशाय त्रिष्टुबाद्यमिमं जपेत् ॥ ५० ॥ अनुष्टुबाद्यं प्रजपेदायुरारोग्यसिद्धये ॥ शताक्षरोमनुः प्रोक्तः समस्तपुरुषार्थदः ॥ ५१ ॥ ऋचो विधानं वारुण्या यथावदभिधीयते ॥ ऋग्वेदे सासमुद्दिष्टा ध्रुवाः स्वाद्यामनीषिभिः ॥ ५२ ॥ वसिष्ठो मुनिराख्यातश्छंदोस्त्रिष्टुबुदाहृतम् ॥ वरुणो देवता प्रोक्तस्तद्वर्णैरंगकल्पना ॥ ५३ ॥ अष्टभिर्हृदयं प्रोक्तं सप्तभिः शिर ईरितम् ॥ शिखाषड्वर्णैराख्यातावस्वर्णैः कवचं मतम् ॥ ५४ ॥ सप्तभिर्नेत्रमाख्यातमस्त्रं षड्भिरुदाहृतम् ॥ साग्रेषुसंधिषुप षदोर्गुदांध्वाधारनाभिषु॥५५॥कुक्षौ पृष्ठेहृदि कुचे गले बाह्वग्रसंधिषु॥वक्त्रे कपोलनासाक्षिकर्णभ्रूमध्यमस्तके ॥ ५६ ॥ शिरः सर्वांगयोर्न्यस्येन्मन्त्रवर्णान्यथाविधि ॥ चन्द्रप्रभं पंकजसन्निषण्णं पाशांकुशाभीतिवरं दधानम् ॥ मुक्ताविभूषांचितसर्वगात्रं ध्यायेत्प्रसन्नं वरुणं विभूत्यै ॥ ५८ ॥ लक्षमेकंजपेन्मन्त्रं पायसेन दशांशतः ॥ सर्पिः सिक्तेन जुहुयान्मन्त्री मन्त्रस्य सिद्धये ॥ ५९ ॥ धर्मादिकल्पिते पीठे वरुणं सम्यगर्चयेत् ॥ कृत्वांगपूजनं

---

सुधालता गुडूची । भानुसंख्यानिति द्वादश । संरुद्धमिति संपुटितम् । तदुक्तं । प्रणवव्याहृत्या व्याव्याहृतितारान्तिका च मन्त्रिवरैरिति । केचित्तु संरुद्धपदेन संरोधनमाहुः तच्च नाम्न । आद्यन्तमध्येषु मंत्रः स्याद्रोधनंस्मृतमिति प्रकारेण प्रतिमंत्रादौ तारव्याहृतीरिच्छंति । तदसांप्रदायिकं । लिखितवचनविरोधात् । गायत्र्याद्यमिति। यथोक्तं । त्रिष्टुबाद्यं त्रिष्टुबनुष्टुप् गायत्राः अनुष्टुबाद्यमिति । अनुष्टुप् गायत्रो त्रिष्टुप् ध्रुवास्वाद्येति । मंत्रो यथा । ध्रुवासुत्वासुक्षितिषु क्षियंतोव्यास्मत्पाशं वरुणो मुमोचत् । अवोचन्वाना अदिते रुपस्थाद्यूयं पातस्वस्तिभिः सदान इति । वर्णन्यासमेवाह । साग्रेष्विति । पदोः साग्रेषु संधिषु दशवर्णाः । गलांतेषु नववर्णाः । बाह्वग्रसंधिषु दश । शिष्टेषु त्रयोदश । मस्तकं केशललाटसंधिः । शिरो ब्रह्मरंध्रं । आयुधध्यानं । दक्षाधूर्ध्वयोराद्ये तदधस्तनयोरंत्ये ।धर्मादीति।पीठशक्तिपजा रहिते।सम्यगित्यनेन पीठशक्तयस्तंत्रांतरोक्ताःपूजनीया इत्युक्तं।ता यथा।सुधाकुमुदिनी पूर्णा वारुणी विश्वतोमुखी । तरंगिणी च सुरसा सुगीता प्यायनीत्येति।कृत्वांगपूजनमिति।केसरेष्वित्यर्थः। सम्यक् पत्रेषु पूजयेदिति । सम्यगित्यनेन प्रेतादीनां ध्यानं

शेषं वासुकिं तक्षकं पुनः ॥ ६० ॥ कर्कोटकं ततः पद्मं महापद्ममनंतरम् ॥ शंखपालाख्यकुलिकासंज्ञकौ पत्रेषु पूजयेत् ॥ ६१ ॥ इंद्राद्यानायुधान्नेषामर्चयेतदनंतरम् ॥ ऋणमुक्त्यै जपेन्मन्त्रं प्रत्यहं साष्टकंशतम् ॥ ६२ ॥ जपेनानेन लभते महतीमव्ययां श्रियम् ॥ सितेक्षु शकलैर्मंत्री जुहुयाद्घृतसंप्लुतैः ॥ ६३ ॥ चतुर्दिनं दशशतमृणमुक्त्यै महाश्रिये ॥ समिद्भिर्वेतसोत्थाभिः क्षीराक्ताभिर्दिनत्रयम् ॥ ६४ ॥ जुहुयाद्वृष्टिसंसिध्यै मन्त्रविद्विजितेंद्रियः ॥ अनेन विधिना मन्त्री सूर्यशतभिषंगते ॥ ६५ ॥ चतुः शतं घृतयुतं पायसं जुहुयाद्वशी ॥ ऋणनाशाय संपत्यै वश्यारोग्याभिवृद्धये ॥ ६६ ॥ भृगुवारे कृतो होमः पायसेन ससर्पिषा ॥ महतीं संपदं कुर्यान्नाशयेत्सकलापदः ॥ शालिभिर्घृतसंसिक्तैः सरिदं तरितः सुधीः ॥ त्र्यहं चतुः शतं हुत्वा स्तंभयेत्परसैन्यकम् ॥ ६८ ॥ सायं प्रत्यङ्मुखो वह्निमाराध्य प्रजपेन्मनुं ॥ चतुः शतं विमुच्येत मन्त्री सर्वैरुपद्रवैः ॥ ६९ ॥ मन्त्री प्रत्यङ्मुखो भूत्वा तर्पयेद्विमलैर्जलैः ॥ सर्वोपद्रवनाशाय समस्ताभ्युदयाप्तये ॥ ७० ॥ बहुना किमिहोक्तेन मन्त्रेणानेन साधकः ॥ साधयेत्सकलान्कामान्जपहोमादितत्परः ७१ ॥ प्राणप्रतिष्ठामंत्रस्य विधानमभिधीयते ॥ येन प्राणीरिता मंत्राः प्राणवंतो भवंतिते ॥ ७२ ॥ पाशांकुशपुटाशक्तिर्वालीबिंदुविभूषितः ॥ पाद्याः सप्तसकारांता व्योमसर्गेंदुसंयुतं ॥ ७३ ॥ तदंते हंसमन्त्रः स्यात्ततोमुष्यपदं वदेत् ॥ प्राणाइति वेदेत्पश्चादिह प्राणास्ततः परम् ॥ ७४ ॥ अमुष्य जीव इह स्थितस्ततोमुष्यप-

---

कर्तव्यमित्युक्तं । तत्त्वरिता पटले मदुक्तमनुसंधेयं । ऋणमुक्त्यै इति । अत्र पाशमित्यस्य पूर्वं ऋणपदमधिकमुच्चाय जपेदित्यर्थः । सितेक्षु शकलैः पवंडा इति प्रसिद्धेः । सरिदंतरितद्वीपस्थः । येनेति । मंत्राणांयद्यपिप्राणप्रतिष्ठानास्तितेषांस्वतएवसमर्थत्वात्तथापियंत्रादौलिखितानांप्रतिष्ठाक्रियतइति तद्द्वारा प्राणवंत इत्युक्तिः प्राणप्रतिष्ठया पूर्वोक्तसमस्तमंत्रविहितयंत्रप्रयोगपुत्तल्यादि सर्वं प्रतिष्ठितप्राणं क्रियत इति । अवश्यं प्रयोज्योयं सर्वसारभूतो मंत्र इति तत्स्तुतिः । तदुक्तं यस्मादृतेऽमीकथिताः प्रयोगाव्यर्था भवेयुर्गतजीवकल्पा इति । मंत्रोद्धारमाह । पाशेति । प्रथमं पाशबीजं ततोंकुशबीजं । बालीयः बिंदुभूषितः यं । पाद्या इति उद्धृतयकारानुवादेन अतद्गुणसंविज्ञानबहुव्रीहिणा वा समवनुतत्यमिति बीजं भिन्नं पूर्वंपृथगुच्चारस्तु समानामपि सबिंदुताख्यायनाय । अग्रे न्यासावसरे यं अक्षरस्य बीजस्य न्यासो नोक्तः तेन नास्य पृथगुच्चारः । तदुक्तं । पाशांकुशांतरितशक्तिमनोः परस्तादुच्चार्य यादिवसुवर्णगुणं सहंसमिति । अन्यत्रापि अंकुशवायव्यखावनिवरुणबीजानीति व्योमसर्गः सह ॐ इंदुबिंदुःतेन हौं । प्रपंचसारपद्येपि गुणॐतेन हौमित्येवपद्मपादाचार्यैर्व्याख्यातं समंते हंसमंत्र इत्यव पाठः इहचेति । चकारो न मंत्रमध्ये । क्वचिदिह इति पाठः तदा इह अत्र पदादित्यर्थः स्थितोमुष्येति छंदोनुरोधात्संधिः । मंत्रे तु न संधिः । सर्वे नियामि । अमुष्येत्यत्रापि तथैव । षडधिकपंचाशदक्षरो मंत्रः । अमुष्यपदार्थश्चतुर्थ उक्तः अत्र मंत्रे इहाग त्येत्यत्र इहैवागत्येति एव शब्दो प्रेयः । तथाचाचार्याः । सैवेहागमयोस्तद्युगम् सुखं चिरं तिष्ठं तु ठद्वंद्वयुगिति पद्मपादाचार्यैरप्येवमेव पठितं । आं बीजं क्रों शक्तिः । प्रयोगकाले विशेषमाह ।

दं वदेत् ॥ सर्वेन्द्रियाण्यमुष्यांते वाङ्मनश्चक्षुरं ततः ॥ ७५ ॥ श्रोत्रघ्राणाइहागत्य सुखंचि रम् तिष्ठत्वग्निवधूरंतेप्राणमन्त्रोयमीरितः ॥ ७६ ॥ प्रत्यमुष्यपदं पूर्वं पाशादीनि प्रयोजयेत् ॥ प्रयोगेषु समाख्यातः प्राणमन्त्रामनीषिभिः ॥ ७७ ॥ ब्रह्मविष्णुशिवा प्रोक्ता मुनयस्तत्र वेदिभिः ॥ उक्तमृग्यजुषां साम्नश्च्छंदश्च्छंदो विशारदैः ॥ ७८ ॥ चैतन्यरूपाप्राणात्मा देवता शक्तिरीरिता ॥ कवर्गेण वियत्पूर्वं भूतैर्हृदयमीरितम् ॥ ७९ ॥ शिरश्च वर्गशब्दाद्यैरीरितं तदनंतरम् ॥ ज्ञानेन्द्रियेष्टवर्गाद्यैस्ताच्छिखा परिकीर्तिता ॥ ८० ॥ कर्मेन्द्रियैस्तवर्गाद्यैः कवचं परिकीर्तितम् ॥ वचनाद्यैः पवर्गाद्यैर्विलोचनमुदीरितम् ॥ ८१ ॥ बुध्याद्यैर्यादि संयुक्तैरस्त्रमस्य समीरितम् ॥ आत्मनेंतासमाख्याता अंगमन्त्राः सजातिभिः ॥ ८२ ॥ नाभेश्चरणपर्यंतं पाशबीजं प्रविन्यसेत् ॥ हृदयान्नाभिपर्यंतं शक्तिबीजं ततरपमुः ॥८३॥ मूर्द्धादि स्तृदयं यावंदकुशं विन्यसेत्ततः ॥ त्हृदये धातुषु न्यस्येद्यादीन्सप्त यथाक्रमम् ॥८४॥ प्राणे जीवे ततो न्यस्येद्धंसवर्णद्वयं पृथक् ॥ कुर्याद्व्यापकमेतेनसमस्तेन विधानवित् ॥ ८५ ॥ ततो विचिंतयेद्देवीं जीवभूतांजगन्मयीं ॥ रक्ताब्धिपोतारुणमध्यसंस्थां पाशां कुशाविक्षु शरासबाणान् ॥शूलं कपालं दधतीं कराग्रैरक्तांत्रिनेत्रां प्रणमामि देवीं॥८७॥एवं ध्यात्वा जग-

---

प्रतीति पद्मपादाचार्यास्तु । एवं सति प्रयोगमंत्रो भवतीति यादीनां विरावृत्तिरभिहिता प्राण जीव सर्वेंद्रियाकर्षणार्थं । केचिद्यादीनां चतुरावृत्तिं वर्णयंति । प्राणजीवेंद्रियसामान्यतद्विशेषाणामाकर्षणार्थं । केचित्पंचावृत्तीः प्राणसामान्यजीवसामान्येंद्रियविशेषाणामाकर्षणार्थं केचिन्न वा वृत्ति मंत्रोक्तानां सर्वेषां प्रत्येकमाकर्षणार्थमित्याहुः । मनोषिभिरित्यनेन हंसमंत्रादौ ॐ च सं हं सः क्रों श्रां स्वाहांते च । ॐ त्वं सं हं सः क्रों ॐ इत्युच्चारणीयमिति सूचितं । पद्मपादाचार्यैः मंत्रोयमित्यनुदितोग्रहसंख्ययैवेत्यस्य व्याख्याने ग्रहाः सप्त तत्संख्याचरैर्युक्तमिति व्याख्यातं । तेनामुनि यंत्रेषु पुत्तल्यादावपि प्राणप्रतिष्ठासमये प्रत्यमुष्यपदं पाशाद्यानि प्रयोज्या । मुष्यपदस्थाने षष्ठ्यंतसाध्यनामप्रयुज्य मंत्रमुच्चरेदिति ज्ञेयं । षडंगमाह कवर्गेणेति । अत्र वियत्पूर्वभूतैरित्युक्तेः प्रथमपटलोक्तसृष्टिक्रमोविवक्षितः तेनाक्षराणां तथाव्यत्यास इति ज्ञेयं । तदुक्तं । प्रत्येकं कादिवर्गः प्रतिगतलिपिभिः बिंदुयुक्तैरिति । अयमात्मानेंताः सजातय इत्युक्तत्वात् । प्रयोगो यथा । ङं कं खं घं गं आकाशवायुवह्निसलिलभूम्यात्मने हृत् । जं चं छभाज शब्दस्य शरूपरस गंधात्मने शिरः । णं टं ठं ढं डं श्रोत्रत्वकचक्षुर्जिह्वाप्राणात्मने शिखा। नं तं थं धं दं वाक् पाणि पादपायूपस्थात्मने वर्म। मं पं फं भं बं वचनादानविहरणविसर्गानंदात्मने नेत्रं । शं यं रं वं लं हं षं क्षं सं लं बुद्धिमनोहंकारचित्तज्ञानात्मने अस्त्रं । पद्मपादाचार्यैर्वर्णानां स्वरपुटितत्वं विपरीतमप्युक्तं । यथाक्रममिति । होमित्यस्य ॐजसिन्यास इत्युक्तं । प्राण इति । हृदय इत्यनुषज्यते तेन प्राणजीवयोरपि हृदय एव न्यासः । पृथगिति। प्रत्येकं । एतेन समस्तेनेति । मूलेनेत्यर्थः । विधानविदित्यनेन मूर्द्धादिपादांतमित्युक्तं । तदुक्तं । न्यसन्मूलं व्यापकं मस्तकादीति । रक्ताब्धीति । रक्तेति पोतविशेषणं । आयुधस्थानं तु वामादूर्ध्वयोराद्ये । तदधस्तनयोर्मध्ये । त-

द्वात्रींलक्षमेनं जपेन्मनुं ॥ जुहुयात्तद्दशांशेन चरुभिर्घृतसंयुतैः ॥ ८८ ॥ षट्कोणाढ्ये शक्तिपीठे विधिनानेन पूजयेत् ॥ अर्चयेत्षट्सुकोणेषु ब्रह्माणं विष्णुमीश्वरम् ॥ ८९ ॥ वाणीं लक्ष्मीमिमां पश्चात्षडंगानि प्रपूजयेत् ॥ दलेषुमातरः पूज्यास्तद्बाह्ये लोकपालकान् ॥९०॥ एवं संपूजयेद्देवीं सुगंधि कुसुमादिभिः ॥ इति संसाधितो मन्त्रः षट् कर्मफलदो भवेत् ९१ स्थापयेन्मनुनानेन प्राणान्सर्वत्र देशिकः ॥ बीजांते मुष्पशब्दानामादौ दूतीः प्रयोजयेत् ॥ ९२ ॥ मृता वैवस्वता भूयोजीवहा प्राणहा ततः ॥ आकृष्णप्रथनीं पश्चात्प्रमादात्रिस्फुलिंगिनी ॥ ९३ ॥ क्षेत्रप्रतिहरीत्येताः प्राणदूत्यो नवः स्मृताः ॥ पाशेन बद्धत्वेषूस्य शक्त्या स्वीकृतचेतसः ॥ ९४ ॥ अंकुशेनाहृतस्याभिः साध्यस्यासून्समाहरेत् ॥ द्वादशांगुलमानेन कृत्वासाध्यस्य पुत्तलीं ॥ ९५ ॥ तस्यां प्राणात्मकं यंत्रं सकीटं तद्धृदये न्यसेत् ॥ निशीथ समये साध्ये सुप्ते तस्यत्हृदंबुजे ॥ ९६ ॥ दलेषु वायु वन्हीं द्ववरुणानामतः परं ॥ ईशराक्ष-

---

दधस्तनयोः कपाल शूले इति । तद्दशांशेनेत्यस्यायमर्थः ॐ आं स्वाहा ॐ ह्रीं स्वाहा ॐ क्रीं स्वाहा यं मृतायै स्वाहा । एवं रायचरयुताभिर्वैवैस्वताद्याभिः सकृत्सकृद्धुत्वा ॐ चं सं हं सः ह्रीं ॐ इत्यचरैरपि तथा हुत्वामूलेनोक्तसंख्यां जुहुयादिति । अयमर्थः पद्मपादाचार्याणां संमतः । शक्तिपीठइत्यनेन वमोक्ताः पीठशक्तयोच पूज्याइत्युक्तं । पूजयेदिति । जगद्धात्रीमिति । पश्चात्तने नसंबध्यत । अनेन वच्यमाणेन । तमेव विधिमाह अर्चयेदिति । तत्र प्रकारः प्राङ्निऋतिवायु कोणस्थाः ब्रह्म विष्णुीशाः आग्नेय वारुणेशेषु वाण्याद्या इति परमगुरवः । प्रागुक्तं ब्राह्म्यादीनां शक्तीनां च बीजमनुसंधेयं प्रपूजयेदिति केसरेषु सर्वत्रेति आत्मयंत्रपुत्तल्यादौ । दूतीमंत्रानुद्धरति बीजेति बीजांते पाशादि हंसमंत्रांते । केचन बीजांत इति बीजत्रयांत इत्याहुः । तदसंबद्ध आचार्यवचनविरोधात् । अमुष्य शब्दानामादाविति चासंबद्धं स्यात् अमुष्य शब्दनामादाविति । साध्यनाम्न आदौ । तदुक्तं । अथयादीन् दूतीश्चोक्त्वासाध्यनामाथ मंत्रीत । आं ह्रीं क्रीं यं रं लं वं शं षं सं हों ॐ चं हं सः ह्रीं ॐ अमृते अमुष्य मृतात्मकान् प्राणानिहाहर प्राणा इह प्राणा इति वा इहैवेत्याद्योमंत मुक्त्वा पुनरामादि ओमं तमुक्त्वायंमृते अमुष्य मृतात्मकं जीवमिहाहरजीव इह स्थित इति वा इहैवेत्याद्योमंतमुक्त्वा पुनरामादि ओमंतमुक्त्वायं मृते अमुष्य मृतात्मकानि सर्वेंद्रियाणि इहवापुनरिहेत्यादि । ॐ मंतमुक्त्वा पुनरामादिॐमंतमुक्त्वायं मृते अमुष्य मृतात्मकान् वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणान् इहाहरवाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इह वा इहैवेत्यादि ॐ मंतं वदेत् । एवं वैवस्वतादि मंत्रा ऊहनीयाः । युगपद्वाप्राणप्रतिष्ठाप्रकारमाह । पाशेनेत्यादिना । सर्वेषु कर्मस्वित्यंतेन । आभिर्दूतीभिः । प्राणात्मकं यंत्रं वच्यमाणं । सकीटं तत्र प्राणप्रतिष्ठारंभात्प्रागेव साध्यप्रतिकृतेर्हृदये यंत्रं सजीवं कीटं च निक्षिप्यातोद्यप्रयोगसारमेतेत्यर्थः । प्राणप्रतिष्ठायां कर्तव्यमाह । निशीथेति । पद्मपादाचार्यास्तु कालदंडेन संताड्य बोधनमाहुः अन्यथा प्राणप्रतिष्ठा योगादिति । वद्या तं च निपीडमेवसहसा कालस्य यष्ट्याशिरस्यताडयत्स्तुभिता खिलेंद्रियगणं मा ध्यंस्मरेत्साधक इत्युक्तेः स्वहृदये साध्यहृदये पुत्तली हृदये च । मृतादि दूतीनां स्थानमाह । द-

सशीतां शुयंमानां कर्णिकांतरे ॥ ९७ ॥ यादीन्हंससमायुक्तान्भृंगाकारानुस्मरन् ॥ शिरो बिंदुसमुद्भूति तंतुसंबद्धविग्रहान् ॥ ९८ ॥ एवमात्महृदं भोजे भृंगीरूपान् धियः स्मरेत् ॥ आत्माहृत्पद्मगां भृंगीं प्रस्थाप्य श्वासवर्त्मना ॥ ९९ ॥ एकैकं साध्यहृत्पद्मादृभृं गमेकैकमानयेत् ॥ पुत्तल्यां स्थापयेन्मन्त्री स्वचित्ते वा विधानवित् ॥ १०० ॥ तंतुच्छेदः प्रकुर्वीतवान्हिबीजेन सर्वतः ॥ आकृष्टान्साध्यहृद्भृंगान्भुवासंस्तंभयेत्ततः ॥ १ ॥ एवमेकादशावृतीः कुर्यात्सर्वेषु कर्मसु ॥ वश्याकर्षणयोर्यादीनरुणान्संस्मरेत्सुधीः ॥ २ ॥ मोहविद्वेषयोर्धूम्रान्कृष्णान्मारणकर्माणि ॥ पीतां स स्तंभनेध्यायेत्प्राणाकर्षणकर्मणि ॥ ३ ॥ आकृष्टान्साध्यहृत्प्राणान्स्थापयेदात्मनो हृदि ॥ क्रूरकर्मसुपुत्तल्यां तेषां स्थापनमीरितम् ॥ ४ ॥ प्राणान्साध्यस्य मंडूकानात्मनस्तुभुजंगमान ॥ संस्मरेत्तत्र निपुणः सदाक्रूरेषु कर्मसु ॥ ५ ॥ वाय्वग्निशक्रवरुणेश्वरराज्ञसेंदुप्रेतेशपत्रलिखितैरथयादिवर्णैः ॥ विंद्वांतैकैः क्षगतहंससमेतसाध्यं

---

लेष्विति। भृंगाकारानुस्मरेदिति। पाद्यक्षरूपमृतादीन् साध्यहृत्पद्मपत्रेषु कर्णिकायां भृंगरूपान् स्वहृदगपद्मे भृंगीरूपान् ध्यायेदित्यर्थः। शिर इति। यकारादि बीजानां शिरसि ये बिंदवः तत्समद्भूता ये तंतवः तैः संबद्धविग्रहानिति। तदुक्तमाचार्यैः। स्वीयबिंदुप्रबद्धानिति। पुत्तल्यामिति। क्रूरकर्मणि। स्वचित्ते इति वश्यादौ। विधानविदिति। स्ववहन्नाड्याप्रवेशनिर्गमनकुशल इत्युक्तं। वह्निबीजेन रमित्यनेन। संयतः अस्मिन्नस्मिन् दले मृतादिस्थानमिति सावधान इत्यर्थः। भुवाग्लौमिति बीजेन। तत्र प्रकारः साध्यस्य शक्तिपाशशक्तितेजोंकुशमहाभ्रमरकालदंडरूपेण पंचधा निःसार्य पाशबीजमुच्चरन् साध्यं पाशेन गले बध्वा शक्तिबीजतेजसातं स्ववशीकृत्वांकुशेनाकृष्याग्रतः संस्थाप्य याद्यष्टकमुच्चरन् साध्यस्य त्वगादीन् व्याप्यायक्रम्य महाभृंगेण साध्यं कवलीकृत्य कालदंडताडनेन सुप्तं तं संबोध्यत्वमिति सपरिवारमुन्मूलीकृत्य सर्मात स्वप्राणशक्तिरूपमहाभ्रमरेण मेलयित्वा हंस इति स्वैक्यं संभाव्य क्रोमोमिति वश्यादौ जीवमाप्लावनं कृत्वायंमृते इत्यादिना स्वमृतां संबोध्य अमुष्यमृतात्मकाः इह प्राणा इत्तत्रादिना स्वमृताप्राणानितरप्राणैः संयोज्य रमिति साध्यमृतातंतुच्छेदं विधाय मकोटच्छदयायां पुत्तल्यामात्मनि वा साध्यमृताप्राणान्संस्थाप्य ग्लौमिति संस्तभ्य तस्य मृताजीवादिकमप्यवमानयेत्। युगपदेव वा मृताप्राणादीन्स्थापयेत्। ततः स्वहृदिचेत्। आं क्रोमित्यादिमपि प्राणा इह प्राणामपि जीव इह स्थित इत्यादि रूपं पुत्तल्यां चेत्पुत्तल्यां प्राणा इहप्राणा पुत्तल्यां जीव इह स्थित इति जपेत इत्यमृता प्रतिष्टाक्रमः। एवं वैवस्वतादि प्राणाअपि स्थापनीयाः। ततो यादीन् होमांतानुक्त्वासाध्यस्य धातून् जीवं च सपरिकरं पुनः स्वमंडले संकोचितं कवलीकृत्य यादीन् दूतीश्च स्वस्य संबुध्य तान् साध्यस्य चामुष्य प्राणानिहा हर अमुष्य प्राणा इह प्राणा इति चोक्त्वा पुनरपि अमुष्य धातूनि हाहरेत्यादि वदेत्। एवं जीवेपि अयमेव प्रकारः पुत्तल्यामपि। तदुक्तं। आकृष्टानां साध्यदेशादसूनां पुत्तल्यादावप्ययं स्यात्प्रकार इति। एवमिति। पूर्वोक्तं कर्मएकादशावृत्तिं कुर्यात्। अयं च पूर्वावधिः इत ऊर्ध्वं य इच्छया कुर्यात्। तदुक्तं। प्राणप्रतिष्टाकर्मेदं विधाये

प्राणात्मयंत्रमथवर्णवृतं धरास्थं ॥ ६ ॥ इत्थं प्रयोगकुशलो मनुनानेन मन्त्रवित् ॥ वशयेत्सकलान्देवान्किंपुनः पार्थिवान्जनान् ॥ ७ ॥ आवाहन्यादिकामुद्रा प्रवक्ष्यामि यथाक्रमम् ॥ याभिर्विरचिताभिस्तु मोदंते सर्वदेवताः ॥ सम्यक्संपूरितः पुष्पैः कराभ्यां कल्पितोंजलिः॥ आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥ ९ ॥ अधोमुखीकृतासैवप्रोक्तास्थापनकर्मणि ॥ आश्लिष्टमुष्टियुगला प्रोन्नतांगुष्ठयुग्मका ॥ १० ॥ सन्निधाने समुद्दिष्टा मुद्रेयंतत्र वेदिभिः ॥ अंगुष्ठगर्भिणी सैव सान्निरोधे समीरिता ॥ ११ ॥ उत्तानौ द्वौ कृतौमुष्टी संमुखी करणीस्मृता ॥ देवतांगे षडंगानां न्यासः स्यात्सकलीकृतिः ॥ सव्यहस्तकृता मुष्टिर्दीर्घाधो मुखतर्जनी ॥ अवगुंठनमुद्रेयमभितोभ्रामितासती ॥ १३ ॥ अन्योन्याभिमुखाश्लिष्टकनिष्ठा नामिकापुनः ॥ तथाचतर्जनीमध्याधेनुमुद्रासमीरिता ॥ १४ ॥ अमृती करणंकुर्यात्तयादेशिकसत-

---

कादशावरमिति । यंत्रमाह । बाह्येति । यादिवर्णैरितिहोमांतैः । धरास्थमिति । बाह्ये भूगृहावृतमित्यर्थः । पद्मपादाचार्यास्त्वन्यथा यंत्रमाहुः स्तद्यथा । अष्टदलमध्यगतशक्तौ साध्यादिकमालिख्य पाशांकुशाभ्यां तां संवेष्ट्य पाद्यष्टकमष्टदलेषु लिखित्वा अवर्शेष्टेन बहिः संवेष्ट्य भूपुरद्वये पाशांकुशौ लिखेदिति यंत्रविधिरिति । मुद्रा आह । आवाहनीति । रादाने मुदं राति ददाति मुद्रेति निर्वचनं । इदमेव मोदंते सर्वदेवता इत्यनेन सूचितं । अतएव तद्दर्शनेन देवता हर्षोत्पत्तिः । स्वांगुल्योर्हि पंचभूतात्मिकांगुष्टाद्याः आकाशवाय्वग्निसलिलभूरूपास्तासां मिथः संयोगरूपसंकेतात्कोविदेवता प्रगुणी भावपूर्वको मोदः सांनिध्यकरो भवति । तदुक्तं । पृथिव्यादीनिभूतानिकष्टाद्याः । क्रमान्मनाः । तेषामन्योन्य संभेदप्रकारैस्तत्प्रपं च ता । अर्चने जपकाले तु ध्याने काम्ये च कर्मणि । तत्तन्मुद्राः प्रयोक्तव्या देवता संनिधापिका इति । अन्यत्रापि । मुदंरातीति मुद्रास्याद्यैनैकामुष्टिरेव तु । स्वल्पभेदात्कोपहर्षौ प्राणिनां जनयत्यतः । तेनैव सर्वदेवानां मुद्रा हर्षप्रदा मता । पूजाकाले दर्शनीयामुदास्ताः सर्वदा शिवे इति । तथा खातिमार्गक्रमादभूतान्यंगुष्टाद्यंगुलिक्रमात् । कापि मुत्तन्मिथोयोगान्सानिध्यप्रह्वताकरीति । आह्वतो भवेदिति । प्रार्थनपूर्वकमावाहनी कार्या । तंत्रांतरे तु विशेषः । हस्ताभ्या मंजलिं कृत्वा नामिका मूलपर्वणोः । अंगुष्टौ निक्षिपेत्सेयं मुद्रा त्वा वाहनी स्मृतेति । एष एव सांप्रदायिकः पत्रः भ्रामितेति वामावर्त्तक्रमेणः सांप्रदायिका हस्तद्वयेनेमां मुद्रामाहुः । तदुक्तं । वर्मणा समवगुण्ठयेद्युंजेति । धेनुमुद्रामाह । अन्योन्येति । कनिष्टा नामिका अन्योन्याभिमुखाश्लिष्टातर्ज्जनीमध्यातयैवान्योन्याभिमुखाश्लिष्टेत्यर्थः । हस्तद्वयांगुल्यः अन्योन्यांतरालप्रदेशे न पूर्वमध्यतः कृतदक्षकनिष्टाव्यतिषक्ताः कार्याः । तत्र दक्षकनिष्टादक्षानामामापृष्टमुल्लंघ्य तद्वामभागमागतावामानामिकया योज्या । वामा कनिष्टिका तु यथास्थितैव दक्षा नामया । एवं वामतर्ज्जनीवाममध्यमांगुष्टमुल्लंघ्य तद्दक्षभागागतदक्षमध्यमया योज्या । दक्षतर्ज्जनी यथास्थितैव वाममध्यमया योज्या । मोक्षार्थिनामनसैव दर्शयितव्याः । तदाह । मानसरूपसंकल्पां मुद्रां मोक्षार्थिनां विदुः । इतरेषां तु सर्वेषां हस्ताभ्यां शस्यते बुधैरिति । अथ चैताः सर्वारहस्येव कुर्यात् । महामु-

मः ॥ अन्योन्यग्रथितांगुष्ठा प्रसारित करांगुली ॥ १४ ॥ महामुद्रेयमुदिता परमी करणे बुधैः ॥ प्रायोजयेदिमां मुद्रां देवता यागकर्मणि ॥ १६ ॥ आदीक्षांता णयोगित्वादक्षमालेति कीर्तिता ॥ तद्वर्णसंख्यैर्मणिभिर्जपमालां प्रकल्पयेत् ॥ १७ ॥ रुद्राक्षमालिकासूते जपेन स्व

---

द्रामाह। अन्योन्येति। पाण्योरंगुष्ठौ परस्परग्रंथनेन ग्रंथिरूपौ शेषाः सरलाः । एता मुद्रास्तत्तन्मंत्रे च मदुक्तविशेषमुद्राश्च । तदुक्तं । वामांगुलोर्दक्षिणानामंगुलीनां च संधिषु । प्रवेश्य मध्यमाभ्यां तु तर्ज्जन्यौ द्वौ प्रयोजयेत् । कनिष्ठे द्वे नामिकाभ्यां युञ्ज्यात्साधेनुमुद्रिकेति । न कस्य चिद्दर्शयेत् । तदुक्तं महासंहितायां । न जातुदर्शयेन्मुद्रामहाजनसमागमे । गुह्यमेतन्मुनिश्रेष्टतस्माद्रहसि योजयेत् । नादीक्षितस्य मुद्राणां लक्षणानि प्रकाशयेत् । क्षुभ्यंति देवतास्तस्य विफलं च भवेदिति । अन्यत्रापि । अक्षमालां च मुद्रां च गुरोरपि न दर्शयेदिति । अक्षमालामाह। आदीति। अकारादि क्षकारांतानां वर्णानां माला अक्षमालेत्यर्थः। अत्रैकोधिकः क्षः स एव मेरुः । एतेन पंचाशदंगुलिकाभिरक्षमालाकार्येत्यपि सूचितं । तदुक्तं । ब्रह्मनाडीगतानादि क्षांतवर्णान्विभाव्य च । अर्णं बिंदुयुतं कृत्वा श्रेष्टं मंत्रं जपेत्पुनः । अकारादिषु संयोज्य तथा कादिषु च क्रमात् क्षार्णं मेरुमथो तत्र कल्पयेज्जगदीश्वरि । तदा लिपिर्भवेदक्षमालार्द्धशतसंख्यया । अनया सर्वमंत्राणां जपः सर्वार्थ साधक इति । अत्राक्षमाला पदप्रयोगो गौण इति ज्ञेयं । अनेनैतादृश्यक्षमालापुरश्चरणविषये त्यप्युक्तं । किंचानेनाष्टोत्तरशतसंख्याकमणिभिर्नित्यजपेपि मालाकार्या इत्यप्युक्तं भवति । अकारादि लकारांतं संजप्य विलोमेन लकारादि अकारांत च संजप्य अंत्यवर्गैरष्टवारं जप्त्वा क्षकारं मेरुं कुर्यादिति । यदाहुः । अकारादि लकारांतं पंचाशन्मणिसूत्रकं । क्षकारं मेरुसंस्थाने लकारादि विलोमतः । वर्गाष्टकविभेदेन शतमष्टोत्तरं भवेत् । एकैकांतरितं मंत्रं जपादेवं फलप्रदमिति । तंत्रांतरे तु विशेषः । पंचविंशतिभिर्मोक्षस्त्रिंशद्भिर्धनसिद्धयः । सर्वार्थाः सप्तविंशत्या पंचदश्याभिचारिकं । पंचाशद्भिः काम्यकर्मसिद्धिः स्याच्चतुरुत्तरैः । अष्टोत्तरशतैः सर्वसिद्धिरक्षैः कृतस्स्रजेति । तेन सप्तविंशत्याचतुःपंचाशता अष्टोत्तरशतेन च सर्वेषां सर्वकार्यसिध्यर्थं नित्यजपार्थं च मालां कुर्यादित्युक्तं । यदाहुः । अष्टोतरशतैर्मालापंचाशच्चतुरन्वितैः । सप्तविंशतिभिश्चाक्षैः सर्वसाधारणो जप इति । मणिविशेषे फलविशेषमाह रुद्राक्षेति। सर्वैरेतैरित्येकस्य पंचपंचमणयः । पिंगलामते तु विशेषः । स्फटिकप्रवालमुक्ताचामीकरपुत्रजीवकृतमणिभिः । अष्टोत्तरशतसंख्यैः कुर्याज्जपमालिकां मंत्री । मोक्षाभिचारशांतिकवश्याकर्षेषु योजयेत् क्रमशः । अंगुष्टाद्यंगुलिकामणयोंगुष्टेन चाल्पत इति । अक्षमालाकरणप्रकारस्तु तंत्रांतरोक्तो यथा । समासेनाक्षसूत्रस्य विधानमभिधीयते । यथालाभं यथा बुद्धिमक्षानाणीयत्नतः । अन्योन्यसमरूपाणि नाति स्थूलकृशानि च । जंतुभिर्नविशीर्णानि न जीर्णानि नवाधि च । गव्यैस्तु पंचभिस्तानि संप्रक्षाल्य पृथक्पृथक् । ततो द्विजेंद्रपुण्यस्त्रीनिर्मितं ग्रंथिवर्जितं । त्रिगुणं त्रिगुणीकृत्य सूत्रं प्रक्षाल्य पूर्ववत् । अश्वत्थपत्रनवकैः पद्माकारेण प्रकल्पयेत्। सूत्रं मणीं श्च गंधाद्भिः क्षालितांस्तत्र निक्षिपेत् । तारं शक्तिं मातृकां च सूत्रेचैव मणिष्वथ । वि-

मनोरथान् ॥ पद्माक्षैर्विहितामाला शत्रूणां नाशिनी मता ॥ १८ ॥ कुशग्रंथिमयीं मालासर्व-
पापविनाशिनी ॥ पुत्रजीवफलैः क्लप्ता कुरुते पुत्रसंपदं ॥ १९ ॥ निर्मितारौप्यमणिभिर्जप-
पमालेप्सितप्रदा ॥ हिरामयीविरचिता माला कामान्प्रयच्छति ॥ २० ॥ प्रवालैर्विहितामाला-

---

न्यस्य पूजयेदाज्यैर्जुहुयाच्चैव शक्तितः । मणिमेकैकमादाय सूत्रे तत्र तु योजयेत् । एवं कृताक्षमा
लायां जपेन्मातृकयाततः । गुरुं संपूज्य तद्धस्तान्गृह्णीयात्सर्वसिद्धये इति । अन्यत्रापि । स
मानवर्णवनितानिर्मितं सूत्रमानयेत् । सूत्रं मणीं श्च त्रिदिनं पंचगव्ये विनिक्षिपेत् । सम्यक् च-
तुर्थदिवसे अस्त्रेण क्षालयेत्ततः । हृदातांग्रंथयेन्मन्त्री गोपुच्छाकारसन्निभां । मणिमध्ये नागपाशं ब्र-
ह्मग्रंथिमथार्पयेत् । हुं मंत्रेण ततोमेरुं प्रणवे नैव बंधयेत् । पूर्वोक्तं मंडलं कृत्वा संपूज्यात्रेष्टदे-
वतां । मनुंत्वष्टसहस्रं तु संजपेन्नियतः सुधीः । तद्दशांशंहुनेद्द्रव्यै स्तन्मंत्रोक्तैर्यथापुरेति । शैवागमे
तु । गोपुच्छसदृशीकार्या एकास्या वा समेरुका । प्रोतव्या सितवर्णाद्यैस्तत्तत्कर्मप्रसिद्धये । जपमालां
विधायैवं ततः संस्कारमारभेत् । क्षालयेत्पंचगव्यैस्तां सद्यो जातेन सज्जलैः । चंदनाद्यैर्वामदेवे
वामदेवेन घर्षयेत् । धूपयेत्तामघोरेण लिपेत्तत्पुरुषेण तु । मंत्रयेत्पंचमेनैवप्रत्येकतुशतंशतं । मेरुं चपंच-
मेनैव यथा मंत्रेण मंत्रयेत् इति अक्षमालायां जपप्रकारोपि तत्रैवोक्तः । मध्यमायां न्यसेन्मालां
ज्येष्ठेनावर्तयेत्क्रमात् । भुक्तिमुक्तिप्रदः सोयं मातृका गणनक्रमः । अंगुष्ठानामिकाभ्यां तु कुर्यादु-
त्तमकार्मणि । अंगुष्ठमध्यमाभ्यां तु जपदाकृष्टिकर्मणि । तर्जन्यंगुष्ठयोगाद्विविद्वेषोच्चाटनेजपः । कनिष्ठां-
गुष्ठकाभ्यांतुजपेन्मारणकर्मणि । जपान्यकाले तां मालांपूजयित्वां च गो पयेत् । जी-
र्णे सूत्रे पुनः सूत्रं ग्रंथयित्वा शतं जपेत् । जपेन्निषिद्धसंस्पर्शे क्षालयित्वा यथोचितं । कासे क्षुते च
जृंभाया मेकमावर्तकंत्यजेत् । प्रमादात्तर्ज्जनीस्पर्शो भवेदावर्तकं त्यजेत् । यदा संत्रुट्यते माला-
ग्रंथयित्वाथ पूर्ववत् । प्रतिष्ठितायां तस्यां तु मंत्रं जप्यादनन्यधीः । एवं प्रतिष्ठितायां तु न्यंनैव ज
पेन्मनुमिति । अन्यत्रापि येनप्र तिष्ठिता माला तमेवतु मनुं जपेत् । अप्यमंत्रजपाविज्ञानकार्या-
कर्हिचिद्बुधैः । तर्जन्यानस्पृशेन्सूत्रं कंपयेन्नो विधूनयेत् । नस्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत् ।
अक्षाणां चालनेंगुष्ठेनान्यमक्षं न संस्पृशेत् । जपकाले सदा विद्वान् मेरुं नैव विलंघयेत् । वरिवर्त-
नकाले च संघट्टं नैव कारयेत् । एवं सवं परिज्ञाय मालायां जपमारभेदिति । आचार्या अपि ।
तन्मानसस्तर्ज्जनिवर्जिताभिः अक्षस्रजावांगुलिभिर्जपेतेति । अन्यत्रापि । अंगुल्यग्रेण यज्जप्तं यज्जप्तं
मेरुलंघने । असंख्यातेन यज्जप्तं तज्जप्तं निष्फलं भवेदिति । अन्यत्र विशेषः । अक्षमालां गुरोर्लब्-
धां तदभावे स्वनिर्मितां । गोपयेत्सर्वकर्मांतं यदीच्छेत्सिद्धिमुत्तमां । स्वमंत्रमक्षसूत्रं च गुरोरपि-
नदर्शयेत् । जपकाले च गोप्तव्यमक्षसूत्रं च षण्मुखं । परदृष्टिगतं सूत्रं सर्वथा निष्फलं भवेत् । त-
स्मात् सर्वप्रयत्नेन गोपनीयं सदाबुधैरिति । मंत्रतंत्रप्रकाशे अंगुलिभिरंगुलिपर्वभिरपिजप उक्तः ।
तद्यथा । अंगुलीजपसंख्यातं फलमेकगुणं स्मृतं । रेखास्वष्टगुणं विंद्यादक्षैश्च शतसंगुणं । तत्रांगुलि-
जपं कुर्वन्सांगुष्ठांगुलिभिर्जयेत् । अंगुष्ठेन विना कर्मकृतं तदफलं भवेत् । अंगुलीपर्वभिर्मंत्रजपं
नित्यंप्रकल्पयेत् । मध्यमानामिका मध्यपर्वद्वितयकल्पितं । मेरुं प्रदक्षिणी कुर्वन्ननामा मूलपर्वणि

प्रयच्छेत्पुष्कलं धनम् ॥ सौभाग्यस्फाटिकी मालेमौक्तिकैर्विहिता श्रियम् ॥ २१ ॥ निर्मिताशंखमणिभिः कुरुतेकीर्ति मव्ययं ॥ सर्वैरेतैर्विरचितामालास्मान्मुक्तयेनृणां ॥ २२ ॥ अथाभिधास्ये तंत्रेस्मिन्सम्यक् षट्ककर्मलक्षणम् ॥ सर्वतंत्रानुसारेण प्रयोगफलसिद्धिदम् ॥ २३॥ शांतिवश्यस्तंभनानि विद्वेषोच्चाटने ततः ॥ मारणांतानि शंसंति षट् कर्माणि मणिमनिषिणः ॥ २४ ॥ रोगकृत्याग्रहादीनां निरासः शांतिरीरिता ॥ वश्यं जनानां सर्वेषां विधेयत्वमुदीरितम् ॥ २५ ॥ प्रवृत्तिरोधः सर्वेषां स्तंभनं समुदाहृतम् ॥ स्निग्धानांद्वेषजननं मिथो विद्वेषणंमतम् ॥ २६ ॥ उच्चाटनं स्वदेशादभ्रंशनं परिकीर्तितम् ॥ प्राणिनां प्राणहरणं मारणं समुदाहृतम् ॥ २७ ॥ स्वदेवतादिक्कालादीन्ज्ञात्वा कर्माणि साधयेत् ॥ रतिर्वाणी रमाज्येष्ठा दुर्गाकाली यथा क्रमात् ॥ २८ ॥ षट्र्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत ॥ ईशचंद्रेंद्रनिर्ऋतिवाय्वग्नीनां दिशोमताः ॥ २९ ॥ सूर्योदयं समारभ्य घटिका दशकं क्रमात् ॥ ऋतवः स्युर्वसंताद्या अहोरात्रंदिने दिने ॥ ३० ॥ वसंतग्रीष्मवर्षाख्यशरद्धेमंतशैशिराः ॥

---

आरभ्य मध्यमा मूलपर्वांतं गणयेत् क्रमात् । मध्यापर्वयुगेन प्रकल्प्य मेरुं त्वनामिका मध्यात् । तर्ज्जनिकामूलांतंगणयेदेतत्प्रकारतो वाथ । अंगुलीर्नवियुंजीत किंचिदाकुंचिते तले । अंगुलीनां वियोगे तुच्छिद्रे षुस्रवतेजपः । गणना विधिमुल्लंघ्ययो जपेत्तं जपं यतः । गृह्णंति राक्षसानूनं गणयेत् सर्वथा बुध इति । षट्कर्माख्याह।अथेति।विधेयत्वं वचनकारित्वं । सर्वेषां स्तंभनमिति। जनजलशुक्रखड्गधारासैन्यप्रतिवादिवचबमरुदादीनां । स्वदेशादेरित्यादि शब्देन गृहग्रामनगरादयो गृह्यंते स्वदेवतेति अत्रादि शब्देनासनमुद्राभूतोदयमंडलाचरणादि प्रकारवर्णलेखन द्रव्यलेखनो कुंडस्रुक् स्रुवसमित् जपमालिकादीनि प्रपूजयेदिति । तत्र पुष्पविशेषः पिंगलामते । स्तंभाकृष्टिवशोच्चाटशांतिमारेयथाक्रमं । पीतनीलारुणं धूम्रं श्वेतं कृष्णप्रसूनकमिति । दिश आह । ईशेति । अन्यत्र विशेषः । पूर्वामुखे भवेद्वश्यं दक्षिणेत्वाभिचारिकं । पश्चिमे बंधनं विद्यादुत्तरे शांतिकं स्मृतम् । आकर्षणमथाग्नेये नैर्ऋते मारणं तथा।उच्चाटनं च वायव्ये ऐशाने मोक्षदायकमिति । सूर्येति । दिनेदिने प्रतिदिनं अहोरात्रमध्येसूर्योदयमारभ्य घटिकादशकं क्रमात् । वसंताद्याऋतवः स्युरित्यन्वयः । अत्र मुख्योऋतुर्मासद्वयात्मवः एव शीघ्रकार्यापेक्षस्त्वयमिति ज्ञेयं । तदभिप्रायेणान्याचाप्युक्तं । शुक्लपक्षे द्वितीया च तृतीया पंचमी तथा। बुधदेवगुरूपेता शांतिकेवाथ सप्तमी । षष्ठीत्रयोदशीचैव चतुर्थी नवमी तथा । सोमदेवगुरूपेता पौष्टिके शंसिता बुधैः । अष्टमी नवमी चैव दशम्येकादशी तथा । शुक्रभानु सुतोपेताशस्ताविद्वेषकर्मणि । अथोचतुर्दशीकृष्णा शनिवारे तथाष्टमी । उच्चाटनेथशस्तोत्रजपः शंकरभाषितः । अमावास्याष्टमीकृष्णा तादृगेव चतुर्दशी । भानुना तत्सुतोपेता भूसुतेनापि संयुता । मारणे स्तंभने चैवमोहे द्रोहे प्रशस्यते । तथा वसिष्टसंहितायामपि । प्रसिद्धा ऋतवो ग्राह्याः षट्कर्मादिकसाधने । यस्मिन् कस्मिन्नृतौ कार्यं मंत्राणां वाथ साधनं पूर्वाह्णे वश्यकृत्यार्थमित्यादिना । पिंगलामते । पुष्टाकृष्टिशमोच्चाटशांतिस्तंभनबोधनं । गुरौकुजेरवौ शुक्रे सोमे चंद्रे बुधे क्रमात् । अन्योविशेषः

**हेमंतः शांतिके प्रोक्तो वसंतो वश्यकर्मणि ॥ ३१ ॥ शिशिरस्तंभने ज्ञेयोविद्वेषग्रीष्मईरितः ॥ प्रावृडुच्चाटने ज्ञेयाशरन्मारणकर्मणि ॥ ३२ ॥ पद्माख्यं स्वस्तिकंभूयो विकटंकुक्कुटं पुनः ॥ वज्रभद्रकमित्याहुरासनानिमनीषिणः ॥ ३३ ॥ षुटमुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः॥ मुसलाशनि खड्गाख्याः शांतिकादिषुकर्मसु ॥ ३४ ॥ जलशांतिविधौशस्तंवश्ये वन्हिरुदाहृतः॥स्तंभनेपृथिवीशस्ताविद्वेषे व्योमकीर्तितम्॥३५॥उच्चाटने स्मृतो वायुर्भूयोग्निर्मारणे मतः॥ ततद्भूतोदये सम्यक् तत्तन्मंडलसंयुतम् ॥ ३६ ॥ तत्तत्कर्म विधातव्यं मंत्रिणा निशितात्मना ॥ शीतांशुसलिलाक्षोणी व्योमवायुहविर्भुजां ॥ ३७ ॥ वर्णाः स्युर्यंत्रबीजानि षट्कर्मसु यथाक्रमम् ॥ ग्रथनं च विदर्भश्चसंपुटोरोधनं तथा ॥ ३८ ॥ योगः पल्लव इत्येते विन्यासाः**

---

पिंगलामते । हेमंतो धवलो वृद्धो वसंतो लोहितो युवा । आरक्तधवलो बालः शिशिरः संप्रकीर्त्तितः। ग्रीष्मोधूम्रशरीरस्तु श्यामां गोजलदागमः। शरत्कालः कृष्णवर्णः शांत्यादाहतवश्यिमे इति। विशेषांतरं महाकपिलपंचरात्रे । शांतिके मानसोजायउपांशुः पौष्टिके स्मृतः। सशब्दत्वाभिचारे स्यात् प्रागुदग्दक्षिणा मुख इति। यत्तु दिनाद्यादि प्रयोगे अर्द्धरात्रग्रहणं मारणे कृतं सतहुतोविशेषविधिरिति ज्ञेयं। अत्र तु ऋतुशब्दोपादानात्तथा।पद्मेति। तत्राद्ययोरंत्तयोश्चलक्षणमंत्येवक्ष्यति । विकटकुक्कुटासनयोर्लक्षणे यथा। जानुजंघांतराले तु भुजयुग्मं प्रकाशयेत्। विकटासनमेतस्यात् उपविश्योत्कटासने। कृत्वोत्कटासनं पूर्वं समपादद्वयं ततः। अंतर्जानुकरद्वंद्वं कुक्कुटासनमीरीतमिति। अन्यत्रासनविशेषा उक्ताः। स्तंभने गजचर्मस्यान्मारणे माहिषं तथा। मेषोचर्मतथोच्चाटे खड्गजं वश्यकर्मणि। विद्वेषे जंबुकस्योक्तं गोचमशांतिके।तथा । व्याघ्रचर्मासनं प्रोक्तं सर्वसिद्धिप्रवर्त्तकमिति। षण्मुद्रा इति । कनिष्टांगुष्टयुग्मुद्रात्रिकोणात्वशनेर्मतेति अशनिमुद्रालक्षणं। अन्यासां मुद्राणां लक्षणं पुरुषोत्तममंत्रन्यासावसरे मयोक्तं। ततद्भूतोदयइति। भूतोदयमंत्यपटले वक्ष्यति। विशेषस्त्वीशानशिवेनोक्तः। उभयधरणिरिष्टं साधयेद्दीर्घकाले उभयमरुतिकिंचित्कालपाकेन सिध्येत्। उभयगगनवह्न्योर्नैवसिद्धिर्नहानिस्तत उभयजलस्थः क्षिप्रमेवेष्टदः स्यात्। शशि जलधरणिस्थे शांतिकं पौष्टिकं वा शशिमरुदनलाभ्यां वश्यमाकर्षणं च। दिनकरभुविकुर्यात् स्तंभनंत्वर्कतोये वशमिनमरुदाविभ्रामणोच्चाटने च। दिनकरवियतिस्यान्मोहनं त्वर्कवह्न्यो द्रुततरमरिवर्गान् साधयेन्मारयेच्चेति। तत्तन्मंडलैः प्रथमपटलोक्तैः संयुतं। मंत्रिणानिशितात्मनेत्यनेनोर्ध्वाधोभेदेनाहोरात्रं ज्ञात्वा तत्र कर्मकुर्यादित्युक्तं। तदुक्तं गौतमेन। देहवायोर्विभोरूर्ध्वं वृत्तिः प्राणो भवेदिवा। अधोवृत्तिमयोपानोरात्रिर्वा देहसंस्थिता। परचक्रभयादौ तत्कालोक्तं कर्ममंत्रवित्। तत्र कुर्याद्विभागेन सम्यगुच्चाटनादिकमिति। शीतांश्विति । षोडशस्वराः सठोशीतांशुवर्णाः एतद्वर्णव्यतिरिक्ता द्वितीयपटलोक्ता भूवर्णा ज्ञेयाः तदुक्तं। रक्षास्तंभनकर्माणि वर्णैः कुर्यात् धरामयैः। शांतिकं पौष्टिकं कर्म कर्षणं सलिलात्मकैः। दाहमोहांगभंगानि चाकृष्टिं दहनात्मकैः। सेनाभंगभ्रमोच्चाटद्वेषकर्माणि वायुजैः। कालभस्मादि चूर्णानि विविधान्यपि मारणः चुद्राणां स्थापने वर्णैर्नाभसैः पंक्तिसंख्यकैरिति। आचार्या अपि वर्णदशकैः स्युस्तंभनाद्याः

क्रिया इति । केचित्तु मवलहयरेफानाहुः । तदुक्तं महाकपिलपंचरात्रे । लं पीता पृथिवी ज्ञेया वं शुक्लं कीर्त्तितं पयः । रं रक्तोग्निर्मरुत्कृष्णोयं हं शुक्लतरं वियदिति । ग्रंथांतरे तु विशेषः । हेमरूप्य शिला सूक्ष्मगात्रं शांत्यादिषु स्मृतं । बिल्वाद्यश्मिग्रु घटितं मारणोच्चाटनादिष्विति । अन्यत्रापि । सौवर्णान्यपिराजतान्यपि तथा पात्राणि शौल्वानि व । मृत्पात्राण्यपि शांतिकादिषु परं शस्तानि कर्मस्विह । शैल्वत्रद्रुमशीश भूरुकक्षतान्येतानि विद्वेषणोच्चाटोत्सादनमारणादिषु भृशं शस्तानि पात्राण्यपीति । कुलप्रकाशतंत्रे तु तिस्रो मुद्राःस्मृताहोमे मृगी हंसी च शूकरी ! शूकरी करसंकोचो हंसो मुक्तकनिष्टिका । मृगीकनिष्टा तर्ज्जन्यौ मुक्तामुद्रात्रयं मतं : यत्नेशांतिकार्येषु मृगो हंसी प्रकीर्त्तिता । आभिचारिककार्येषु सूकरीतु प्रकीर्त्तितेति । पिंगलामते तु मुद्रांतराण्युक्तानि ततो द्रव्यस्य होमे तु तर्ज्जन्याद्यंगुष्टयोगतः । ज्वरनाशारिसंतापावुच्चाटो मोहनं क्रमादिति । अन्यत्र जातिविशेषोप्युक्तः । यदाहु; । नमः स्वाहा स्वधा वौषट् हुफडंताश्च जातयः । शांतौ वश्ये तथास्तंभे विद्वेषोच्चाटमारण इति । अन्यत्रापि अर्च्चनक्रोधशांत्यादौ नमः शब्दं प्रयोजयेत् । अग्निकार्ये च वश्यादौ स्वाहाशब्दं प्रयोजयेत् । मारणादिषु फट्कारं विद्वेषादौ च हुं पदं ! वौषडाप्यायनादौ स्याद्वेषोत्सादेवषट् स्मृतमिति । तथान्यत्र तु । वश्याकर्षणसंताप होमे स्वाहा प्रयोजयेत् । क्रोधोपशमने शांतौ पूजने च नमो वदेत् । वौषट् संमोहनोद्दीयपुष्टिमृत्युंजयेषु च । हुंकारप्रीतिनाशे च छेदने मारणे तथा । उच्चाटने च विद्वेषे तथाधीविकृतौ तु फट् । विघ्नग्रहाविनाशे च हुंफट्कारं प्रयोजयेत् । मंत्रोद्दीपनकार्येच लाभालाभेवषट्स्मृतं इति । पिंगलामते तु । सज्जपस्तंभने लक्षैर्विद्वेषे हुं समन्वितैः । उच्चाटे वायुबीजस्थैः सविसर्गैश्च सिद्धये । मारणे फट्कृतैर्होमैरूर्ध्वाधोरेफसंयुतैः । छेदनेछित्यदोपेतैः पुष्टावाप्यायने गवैः । अमृताचरणैर्मृत्युनिवृत्तौ देशिकोत्तमैः । स्वकल्पसिद्धजात्यावा कृतोपपदलक्षणैः । एवं यत् क्रियते कर्म तदिष्टफलसाधकमिति । द्रव्यविशेषो मोहशूरोत्तरे । दूर्वाभव्याश्चसमिधोगोघृतेनसमन्विताः । होतव्याः शांतिकेदेविशांतिर्येनभवेत्स्फुटं । समिधोराजवृक्षोत्थाहोतव्यास्तंभकर्मणि । मेषी घृतेन संयुक्ताः स्तंभसिद्धिर्भवेध्रुवं । खादिरा मारणे प्रोक्ताः कटुतैलेन संयुताः । होतव्याः साधकेंद्रेण मारणं येन सिध्यति । उचाटने भूतजाताः कटुतैलेन संयुताः । उच्चाटयेन्महीं सर्वां सशैलवनकाननां । वश्येचैव सदा होमः कुसुमैर्दाडिमोद्भवैः । अजा घृतेन देवेशि वशयत् सचराचरं । विद्वेषचैव होतव्या उन्मत्तसमिधोमताः । अतसीतैलसंयुक्ता :विद्वेषणकरंपरमिति । वायवीयसंहितायां स्रुक्स्रुवयोरपि विशेष उक्तः । आयसीस्रुक् स्रुवौ कार्यौ मारणादिषु कर्मसु । तदन्यत्र तु सौवर्णौशांतिकाद्येषु कृत्स्नश इति । अन्यत्र तत्तत्कर्मणि जिह्वा अप्युक्ताः । जिह्वां तु हरिण्याख्यां शांतिकर्मणि । तथाच गगनाख्यां । रक्तां कर्मण कर्मणि । कृष्णां क्षुद्रक्रिया सुबुधाः यासु प्रभेति गदिता तामाहुर्मोचकारिणी जिह्वां । अतिरक्तामाकृष्टौ बहुरूपामखिलसिद्धिदां जिह्वामिति । तथान्यत्र । स्तंभनादिषु मताकनकाख्याद्वेषणादिषु मता खलुरक्ता । मारणे निगदिता खलुकृष्णासुप्रभाबुधवरैरिहशांत्यां । उच्चटनेतिरक्तायाबहुरूपोत्तरेसिद्धिं । ऋद्धिं दक्षिणतः सातनुतेमध्ये शुभानि सदेति । अन्यत्रागिविशेषो प्युक्तः । लौकि

षट्सु कर्मसु ॥ मन्त्रार्णांतरितान्कुर्यान्नाम वर्णान्यथाविधि ॥ ३९ ॥ ग्रथनं तद्विजानीयात्प्रशस्तंशांतिकर्मणि ॥ मन्त्रार्णद्वंद्वमध्यस्थं साध्यनामाक्षरं लिखेत् ॥ ४० ॥ विदर्भ एष विज्ञेयो मंत्रीभिर्वश्यकर्माणि ॥ आद्यंते च मन्त्रःस्यान्नाम्नोसौसंपुटःस्मृतः ॥ १४ ॥ एषसंस्तंभने शस्त इत्युक्तोमन्त्रवेदिभिः ॥ नाम्न आद्यंतमध्येषुमन्त्रः स्याद्रोधनंमतम् ॥४२॥विद्वेषणविधानेषु प्रशस्तमिदमीरितम् ॥ मन्त्रस्यांते भवेन्नाम योगः प्रोच्चाटने मतः ॥ ४३ ॥ अंते नाम्नो भवेन्मन्त्रः पल्लवोमारणे मतः ॥ सितरक्तपीतामिश्रकृष्णा धूम्राः प्रकीर्तिताः ॥ ४४ ॥ वर्णतो मंत्रसंप्रोक्ता देवता षट्सु कर्मसु ॥ यंत्राणां लेखनद्रव्यं चंदनं रोचना निशा ॥४५॥ ग्रहधूमचिताङ्गारौ मारणे गृविषाणि च ॥ श्येनाग्निलोणपिंडानि धत्तूररकरसंततः ॥ ४६॥ गृहधूमत्रिकटुकं विषाष्टकमुदाहृतम् ॥ देवता कालमुद्रादीन् सम्यक्ज्ञात्वा विचक्षणः ॥४७॥ षट्कर्माणि प्रयुंजीत यथोक्तफलसिद्धये ॥ ४८ ॥ इति शारदातिलकेत्रयोविंशपटलः॥२३॥

अथ वक्ष्यामि यंत्राणां भेदांस्तंत्रेषु गोपितान् ॥ येसाधयंति सततं मंत्रिणो निजवांछितम्१ मार्ण्णे लिखेत् सार्णयुतं स्वसाध्यं वर्गाष्टपत्रे स्वराब्जे ॥ बहिः सदीर्घैः गगनैः प्रवीतं रक्षाकरंयंत्रमिदं प्रशस्त ॥ २ ॥ पुटीकृते भूमिपुरस्ययुग्मे मायां लिखेत् मध्यगसाध्ययुक्तां ॥ वकारकोणेन महीपुरेण संवेष्टितं वश्यकरं तदुच्चैः॥३॥मध्ये सार्णविदर्भितं प्रपुटितं मृत्युजयंत्र्यक्षरैःकिञ्जलकसंस्थानच क्षांतस्थं निजसाध्यनामविलिखेत् ॥ पत्रेष्ववसुना ममन्त्रपुटितं वर्गास्तदग्रेष्वथो यंत्रं पद्मपुटीकृतं निगदितं मृत्युंजयाख्यं परं॥४॥विषज्वरशिरोरोगनाशनंश्रीजयप्र-

---

केग्नौ शांतिकं स्यात् पौष्टिकं च शुभ तथा । वटजे स्तंभनं मोहः श्मशानस्थे पि मारणं । बिभीतकाग्नौ विद्वेषः षट्कमस्वग्नयो मता इति । अन्यत्र तु । बिल्वार्कविप्रनृपदुग्धतरुप्रदीप्ते सौम्यं चिकीर्षु रथकर्महुनेद्धुताशे । रौद्रं विषद्रुमकलिद्रुमशेलुनिंबधत्तूरकाष्टचयसंनिचितेथ मंत्रीति । सोमशंभौ तु । अग्निमुखानामपि नियम उक्तः । कुंडं सानुमुखं ध्यात्वा हृदाहुतिभिरोप्सितं । पश्चिमे शिष्यसंस्कारनित्यहोमौ समाचरेत् । वश्याकर्षणसौभाग्यपुष्टीभाग्याधिरोपणे । शांतिके पाशशुद्धौ च वामे होमः प्रशस्यते । गुटिकांजननिस्त्रिंशपादलेपजिगीषया । शोथभंजनार्थं च प्राचीनवदने यजेत् । मारणोच्चाटनद्वेषस्तंभनार्थं च दक्षिणे । प्रायश्चित्तं तु तत्रैव पश्चिमें तु विमुक्तय इति । आकर्षणाद्ययुक्तकाले विधेयं । तदुक्तं । आकार्षणं वसंतेस्यादिति कामिके तु होमादि संख्या विशेषः । शांतिके पौष्टिके वापि वशीकरणकर्मणि । हुतसंख्यादशांशं स्यादुत्तमं द्विजभोजनं । तत्त्वासंख्यं मतं मध्यं शतांशमधमंमतं । उक्तद्विगुणमानं स्यात्स्तंभने विप्रभोजनं । त्रिगुणं सादनोच्चाटद्वेषणे तु प्रकीर्त्तितं । हुतसंख्यासमानं स्यादपि मारणकर्मणि । हुतावसानेविप्रेंद्रानतिशुद्धकुलोद्भवान् । भोजयेत्सांगवेदज्ञान्स्वादुभिर्भोज्यवस्तुभिः । देवतां प्रतिपत्तशतान्नमस्कृत्य यथाविधि । वितनं च यथाशीभिरभीष्टफलदं भवेदिति । मंत्रेति अंतरितान् व्यवहितान् । तदुक्तं । एकं मंत्राक्षरं पूर्वं ततो नामाक्षरं पुनः । मंत्राक्षरमिति ग्रंथ इति । मंत्रार्णेति । मंत्रार्णद्वयोर्मध्यस्थं साध्यनामाक्षरमिति समासः

दम् ॥ कांतिपुष्टिप्रदं वश्यं सर्वकामार्थसाधकम् ॥ ५ ॥ साध्याढ्यांचिंतामणिमग्निगेहे विलिख्य बाह्येऽनलगेहवीतम् ॥ प्रवेष्टयेत् तद्बहिरष्टवर्णमन्त्रेण यंत्रं ज्वरशांतिदंस्यात् ॥ ६॥ संप्लवसः प्लावयसो न्त्रोष्टाक्षर ईरितः ॥ ७ ॥ एष एव भवेद्दक्षो ग्रहज्वरविनाशने ॥ तारठद्वयपुटं कुरु कुल्लेमन्त्रमन्त्रहुतभुक्गृहयुग्मे ॥ ८ ॥ मध्यकोणविवरेषु लिखेत् तन् ॥ मंत्रमाशु विनिहंति भुजंगान् ॥ ओं कारमायादिकमेखलेग्नि वधूमनुं वन्हिगृहस्य युग्मे ॥ ९ ॥ मध्यादिकोणेषु विलिख्य भूर्जे यंत्रं विदध्यात् रिपुनागहारी ॥ शूलांकिते वन्हिगृहस्य युग्मे धूमावती मंत्रलिलेत् क्रमेण ॥ १० ॥ मध्यादि कोणेषुमरुद्गृहस्थं यंत्रं हुताशानिलवर्णवीतम् ॥ दांतौ सार्धीशविंद्वं तौ बीजे धूमावति द्विठः ॥ ११ ॥ धूमावती मनुःप्रोक्तः शत्रुनिग्रहकारकः ॥ विषेण कनकांभोभिः प्रेतकर्पटकलितम् ॥ १२ ॥ श्मशानेनिखनेदेतत् शत्रूनुच्चाटयेद्द्रुतम् ॥ हुताशंगेहाद्वितयेलिखित्वावै वस्वताय द्विठवर्णमन्त्रम् ॥ १३ ॥ मध्यान्तमाकलिपतमिंदुबिंबे यंत्रं महाभूतपिशाच वैरि ॥ नामालिख्य मकारकोष्ठयुगले कोणेषु तस्या लिखेत् मन्त्रज्ञो ङञणान्नकारसहितान् धूमावती यंत्रगान् ॥ वीतं घुर्घुटिकादिना परमिदंवा युत्रिगेहावृतं यंत्रप्रातपरेत भूमिनिहितं विद्वेषणं स्याद्द्विषां ॥ १५ ॥ पूर्वं घुर्घुटिके युग्मं ततोमर्क्कटिके युगं ॥ घोरे विद्वेषकारिणि विद्वेषो द्वेषकारिणि ॥ १६ ॥ अथ घोराघोरायोः स्यादमुकामुकयोस्ततः ॥ विद्वेषय द्वयं हुं फट् विद्यार्घुर्घुटिके रिता ॥ १७ ॥ प्राक्प्रत्यक्दक्षिणोदग्विधिवदभिलिखेत् स्पष्टरेखाचतुष्कं कोणोद्यच्छूलयुक्तं वलययुगयुतं मध्यपूर्वं तदंत्यम् ॥ मंत्रस्यार्णान् परस्तात् वसुपदवित्ररेष्वष्टवर्णान्लिखित्वा शूलोद्यात् द्वादशार्णं विधिवदभिहित प्रेतराजस्य यंत्रम् ॥ १८ ॥ यमराजसदोमेयमेदोरुणयोदययदियोनिरपक्षेय यक्षेय चनिरामय उक्तो धूमांधकाराय स्वाहेत्यष्टाक्षरो मनुः ॥ १९ ॥ प्रणवंघ्रीं ततोदंष्ट्रां तत्परं विकृतांततः ॥ आननाय वधूर्वन्हेर्मंत्रोयं द्वादशाक्षरः ॥ २० ॥ विषवृक्षस्य फलके नृचर्मणि पटे थवा ॥ आलिख्याष्टविषैरेतत् श्मशाने निखनेत् निशि ॥ २१ ॥ ज्वरेण महता विष्टो मूर्छाकुलितमानसः ॥ रिपुर्गच्छति पक्षेण यमलोकं न संशयः ॥ २२ ॥ एकाशीति पदेषु मध्यदहने साध्यं लिखेत् हूं पुनः क्ष्रूंभ्रूं ब्लूमिति दिगाता सुविलिखेत् बीजानि पंक्तिष्वथ ॥ २३ ॥ शिष्टेष्वीशनिशाचरादि विलिखेत् काली मनुं पंक्तिशस्तद्बाह्येय

---

। तदुक्तं । द्वौद्वौ मवाच्चरै यत्र एकैकं साध्यवर्णकं । विदर्भितं तु तत्प्रोक्तमिति । असौ विन्यासः । संपुटंमतमिति । अत्र केचन नामांते विपरीतं मंत्रपाठमाहुः । एष एव सांप्रदायिकः पक्षः । तदुक्तं । मंत्रमादौवदेत्सर्वं साध्यसंज्ञमनंतरं । विपरीतं पुनश्चांते मंत्रं तत्संपुटं स्मृतमिति । ग्रंथकृताप्युक्तं । भूतलिप्या पुटीकृत्य यो मंत्रं भजते नरः क्रमोत् क्रमाच्छताहत्येति । मंत्रस्यांत इत्यस्य पद्यस्य प्रामादिकस्वरणव्यत्ययः अंते धाम्नो भवेन्मंत्रो योगः प्रोच्चाटने मतः मंत्रस्यांते भवेन्नामपल्लवोमारणे मत इति तु पाठः पठनीयः । तथाच पद्मपादाचार्याः । नामांते मंत्रयोजनं योगः स्तंभोच्चाटनविद्वेषु समस्तमंत्रांते समस्तनामयोजनं पल्लवः मारणस्य विनियोग

इति तु। अन्यत्रापि पल्लवे साध्यनामादौ भवेन्मंत्रपदक्रम इति। मंत्रांते जपकर्माणीति। मारणे गौतमेनाप्युक्तं। भैरवस्तोत्रस्यापि। मंत्रार्धगेयत: साध्यं पल्लवं तद्विपर्ययादिति। योग पल्लवयोरन्यत्रापि विनियोग उक्त: शांतिके पौष्टिके दिव्ये प्रायश्चित्तविशोधने। मोहने दीपने योग प्रयुंजंति मनीषिण: मारणे विषनाशे च ग्रहभूतविनिग्रहे। उच्चाटने च विद्वेषे पल्लवं संप्रचक्षत इति। अन्यत्र विशेष: मर्द्दार्द्दनादितोंते च मंत्रं कुर्याद्विचक्षण: मध्ये चास्यभवेत्संज्ञाग्रस्तं तत्समुदाहृतं। अभिचारादिसर्वेषु योजयेन्मारणादिषु। अभिधा नलिखेत्पूर्वं मध्ये वापि महामते। मंत्रमेवं द्विधा कृत्वा समस्तमभिधीयते द्वेषोच्चाटनकार्येषु योजयेदविशंकित: मर्द्दार्द्दनादितोंते च मंत्रं कुर्याद्विचक्षण: मध्ये चांते च साध्याख्या मंत्रिणा क्रियते यदा। आक्रांतं तद्भवेन्मंत्रं सदासर्वार्थसिद्धिदं। स्तंभस्तोभसमावेशवश्योच्चाटनकर्म्मणि सकृत्पूर्वं लिखेन्मंत्रमंते चैव त्रिधा पुन: मध्ये चैव भवेत्संज्ञा आद्यंतमिति तद्विदु: परस्परप्रीतियुजोर्विद्वेषजननं परं। माद्यंतं च तथाचाद्यं त्रिधा मंत्रं समालिखेत्। साध्यनामसकृन्मध्ये तं विदु: सर्वतो मुखं। सर्वोपद्रवशमनं महामृत्युविनाशनं। सर्वसौभाग्यजननं मृतानाममृतप्रदमिति पिंगलामते अन्यान्यप्युक्तानि। ततश्च शृंखला सूची नाराच: क्रकच शक्तिभि: भुशुंडी मुद्गरश्चक्रं कर्त्तरीमुशलांकुशे। टंकशूलासिशक्तीश्च मंत्रकर्मणि चादिशेत् षडादौ षट्पुनश्चांते मंत्रवर्णास्तदंतरे। साध्यनामेति संप्रोक्ता शृंखलान्येष्वयं क्रम: रमा ६ ग्लौं ३ द्रा १४ श्च ७ कामा १३ ह्रो १५ वेदा ४ क्रों १२ च्ची २ षु ५ राजभि: १६ रुद्रा ११ ष्टां ८ क ८ ककुभ्व १० र्गै: शृंखलादीन्यनुक्रमात्। बंधभेदरिपुध्वंसच्छेदसंधिविभेदने। सैन्यभंजनविद्वेषमंत्रछेदनचालने। मारणे सर्वकार्येषु घातस्तंभनकारणे। शृंखलादीनि वेद्यानि साध्यमंत्रार्णयोगत: षडादौ षट् पुनश्चांते मंत्रवर्णास्तदंतरे। साध्यनामेति संप्रोक्तं शृंखलान्येष्वयं क्रम इति। चंदनमित्यादिक्रमेण शांत्यादौ अयं विशेष: वक्ष्यमाणं सामान्यमपि ज्ञेयं मारणव्यतिरेकेण। श्येनेति। श्येन: श्येनविष्टा। अग्निचित्रक: लोणपिंडं लोणमलं त्रिकटुकं शुंठीपिप्पलीमरीचानि। पिंगलामते लेखनी विशेषोप्युक्त: दूर्वामयूरपिच्छानि बिभीतकनरास्थिजा। त्रितास्रगारत्रिलोहोत्थाहेमरूप्याकसंभवा। लेखनी वश्य आकृष्टौ संतापे स्तंभमारणे। सर्वोपद्रवनाशाय शांतौ पुष्टौ च जातिजेति। अन्यत्रापि। लेखन्या विलिखेद्यंत्रं वश्ये दूर्वांकुरोद्भवा। आकर्षे शिखिपिच्छोत्था संकोचे मुनिसंभवा। हेमजारोप्यजावान्यासर्वत्रापि साप्रिये। कारंजाश्ममयीवाथ मारणेपि नरास्थिज। शुभकर्मणि विज्ञेया राजवृक्षसमुद्भवा। शांतिके पौष्टिके चैव आयु: कर्म विधौ तथा सर्वोपसर्गशमने कर्त्तव्या जातिसंभवा। अपामार्गोद्भवावापि शुभकर्मसु सर्वदा। आसुरेषु च सर्वेषु शस्यते तीक्ष्णलोहजा। विष्टंगारदिने घोरे यदिवोत्पादिता च सा ज्वालखड्गसमाज्ञेया सर्वभूतनिकृंतनीति। आधारविशेषोपि। नारजेद्वीपि कृत्तौ वा लिखितं स्तंभकृद्भवेत्। खरचर्मणि विद्वेषं तथैवोच्चाटनं ध्वजे। वश्याकर्षणसिध्यर्थं भूर्जपत्रेनयोजयेदिति। कुंडजपमालिके पूर्वोक्ते अनुसंधेयं। उपसंहरति देवतेति। आदिशब्द: पूर्वमेव व्याख्यात: इदं च काम्यकर्मन्यासादिकं कृत्वा आत्मरक्षं च कृत्वान्यत्सर्वं कुर्यात्। यत: काम्यकर्म रतस्य देवाद्यैरभिभवसंभवात्। यदाहु: काम्यकर्मप्रसक्तस्य शुभस्याप्याशुभस्य च। अरित्वं भजते मंत्र: सिद्धत्वं तद्विपर्ययादिति ॥ इति श्रीशारदातिलकटीकायां

सत्संप्रदाय कृतव्याख्यायां भट्टराघवविरचितायां त्रयोविंशः पटलः॥ २३ ॥ ॥ अथेति यंत्रशब्दव्युत्पत्तिभिरुक्ता संहितायां मनोरथाचराख्यत्र नियंत्रतं तपोधन । कामक्रोधादि दोषा न्वा दीर्घदुःखनियंत्रणात् । यंत्रमित्याहुरिति । यथा मंत्रो देवता रूपस्तद्वद्यंत्रमपि देवता रूपं अतएवेष्टसाधनक्षमं भवतीति यैः साधयंतीत्युक्तं । रक्षायंत्रमाह। मार्णं। इति अब्जे मार्णं इति व्यधिकरणे सप्तम्यौ । कर्णिकास्थमकारमध्ये सार्णयुतं सबिंदुसकारयुतं स्वसाध्यं लिखेदित्यन्वयः । साध्यसाधकर्मसहितमिति। सर्वत्र बोद्धव्यं । तत्र स्वनामपदं षष्ठ्यंतं साध्यस्य द्वितीयांतं । ततः फलवाचकं पदं । द्वितीयांतं ततः कुर्व्विति सांप्रदायिकाः । वर्गाढ्यपत्रे कचटतपयशलैर्वर्गैराढ्यानि युक्तानि पत्राणि दलानि यस्य तस्मिन् स्वराः द्विद्विक्रमेण केसरेषु यस्य तस्मिन् । सदीर्घैर्गगनैर्द्दामिति । अत्र मातृकादेवता । तां संपूज्य प्राणप्रतिष्टापनं कृत्वा धारयेत् । अत्र सर्व्वत्रापि यंत्रे सामान्यप्रक्रियोच्यते । तत्रोच्चाटनादौ यंत्रे लेख्ये । वाद्यक्षराणि द्वंद्वशः अं आं नमः एकं नमः इत्यादि क्रमेण पंचमंत्राः । तत्र त्रिकोणं संचिंत्य तन्मध्ये प्रथममंत्रद्वितीयतृतीय चतुर्थमंत्राग्न्यादिकोणेषु पंचमं मध्ये संचित्य पूजयेत्पूर्वोक्तरक्षादिस्थानेष्वेचमुक्तो विनियोगोनुसंधेयः । दशभिर्द्दशभिरमीभिर्नमोंतिकैर्द्दशस्वबिंदुयुतैः । योनेर्मध्येकोणत्रितये मध्ये च संयजेन्मंत्रीति आचार्योक्तेः । अन्यत्राप्याचार्याः । प्राक् प्रोक्तान् भूतवर्णान् दशदशयुगशो बिंदुयुक्तान्नमोंतान्योनेर्मध्यांतमध्येष्वपि पुनरथ संस्थाप्य भूताभवर्णानिति । ह्लां ह्लीं द्रूं ह्लैं ह्लौं एतानि अपचीकृतानि एतन्मध्ये तत्तत्कार्ये एकं बीजं विलिख्य तद्बिंदूर्ध्वाधोभागादिषु साध्यसाधककर्मयोगान् विलिख्यक्ष्क्षौः मिति यंत्रजीवं मध्यबीजाधोभागे विलिख्य मध्यबीजचतुर्विदिक्षु ऐशान्यादिक्रमेण हंसः सोहमिति यंत्रप्राणं मध्याभिमुखं विलिख्य मध्यबीजपार्श्वद्वयेइद्रं विलिख्य उं ऊं इत्यप्यालिख्य तत्तद्यंत्रविशेषमुक्तमालिख्य यंत्रगायत्रीं त्रिवर्णक्रमेणाष्टदले विलिख्य तद्बहिर्द्दशदिक्षु लं रं मं चं वं यंसंहंक्षीं आं इति यंत्रहृदयं विलिख्य तद्बहिः प्राणप्रतिष्टामंत्रमपि विलिखेत् । तद्बहिस्तन्मंडलेनवेष्टयेत् । इदं पूर्वोक्तयंत्रेष्वपि ज्ञेयं । तदुक्तं कामिकेद्यौ यंत्रस्य जीवः स्यान्मध्यबीजादधो न्यसेत् । हंसः सोहमिति । प्राणं ऐशान्यादिक्रमाल्लिखेत् । इंद्रं नेत्रे न्यसेत्पार्श्वे उं ऊं श्रोत्रे तथैव च । विशेषोष्टदलादौतु गायत्री लेखनं स्मृतं । इत्यर्णान्यंत्रगायत्र्याः प्रतिपत्रं त्रिशो लिखेत् । अग्रे रेखावकाशेषु प्रतिष्टां प्राणदां लिखेदिति । तंत्रांतरेपि । लरमक्षान्वयी सहो क्रीं आं यंत्रस्य हृदयं बिंदुयुतं लेख्यं समं ततः हंसः सोहं प्राणजीवौ यंत्रे लेख्यौ प्रयत्नतः । हमावौसर्गसंयुक्तौ यंत्रांतर्विलिखेद्बुध इति । यंत्रगायत्री यथा । यंत्रराजाय विद्महे वरप्रदाय धीमहि तन्नो यंत्रः प्रचोदयात् इति । अन्योपि विशेषोपचितार्थद्योतनिकाकारोक्तः यत्राधारोनोक्तस्तत्रोक्तशांत्यादिकर्माधारेषु भूर्जपत्रे नेत्रपट्टे तालपत्रे वा विलिख्य गुलिकां बध्वा सूत्रजतुच्छन्नं क्रमेण कृत्वा रजततास्रसुवर्णहिंगुलकाद्यन्यतमेनसंवेष्ट्य बीजेन मंत्रेण वा मातृकया वा धिदेवतं आत्वाभ्यर्च्य संजप्य हुत्वागलादिषु योजयेदिति । वश्यकृदाह। पुटीकृत इति । महीपुरेण सह पुटीकृते भूमिपुरस्य युग्मे इति संबंधः । पुटीकृते पुटोकृतत्रदंतरं तत्स्थ इत्यर्थः । तत्र प्रथमं चतुष्कोणं कृत्वा तदंतस्तद्रेखालग्नदिष्कोणाग्रं द्वितीयं तदंतस्तद्रेखालग्नविदिक्कोणाग्रं तृतीयं लिखित्वा तन्मध्ये मायां ससाध्यां लिखेत् । तत्र साध्यकर्मलेखनप्रकारस्तु त्रिगुणितादावुक्तोमुसं

धेय:। ततो वकारकोणेन संवेष्टितं उच्चैर्वश्यकरमितिसंबंध:। उक्तं च नारायणीये। बाह्यस्य रेखामध्यस्थामांतरस्यास्तमीदृशे। शक्रवेश्मत्रयेशक्तिवश्यं स्यात्कुंभवेष्टितमिति। व्याख्यातं चापि चितार्थद्योतनिकायां। पार्थिवमंडलं लिखित्वा तस्य पूर्वदक्षिणपश्चिमोत्तरदिग्भागे दिक्षु अष्ट कोणं यथा भवतितथा तदंत: पार्थिवमंडलं लिखित्वा पुनरपि तदंतस्तथा लिखित्वा तन्मध्ये ससाध्यां शक्तिं लिखित्वा कुंभेन चतुर्थेन वेष्टयेदिति। अथ वानागरलिपौ नकारतकारयोर्लिपिसाम्यात् वकारकोणे महीपुरेणेति पठनीयं। तत उक्तवदंतरंतर्भूपुरद्वयं विधाय तत्र शक्तिं विलिख्य वकारस्य कोणे वं सं बं धं यन्महीपुरं ताभ्यां संवेष्टितमिति व्याख्येयं। अत्र शक्तिर्देवता। मृत्युंजययंत्रमाह मध्य इति मध्येष्टदलकर्णिकायां। विशेषणद्वयविशिष्टं साध्यनामचकारमध्ये लिखेत्। अष्टसु पत्रेषु मंत्रपुटितं मृत्युं जयमंत्रपुटितं नाम साध्यनाम लिखेदित्यर्थ:। वर्गान् कादीन्। तदग्रेषु पद्मपुटीकृतमिति। अध ऊर्ध्वमुखेन उपर्यधोमुखेन पद्मेनेत्यर्थ:। मृत्युंजयो देवता ज्वरघ्नमाह। साध्येति। चिंतामणिं शैवं। अनलगेहेनेति द्वितीयेन। अत्र चिंतामणिर्देवता एव एवेति केवलमंत्रोप्याराधितोज्वरघ्न:। उक्तं च नारायणीये। दष्टमुत्थापयेदेषस्वजप्तां भोभिषेकत:। तज्जप्तशंखभेर्यादिनिस्वनश्रवणे न चेति। सर्पघ्नमाह।तारेति।तारठद्वयपुटमिति मंत्रविशेषणं। तेनादौ तार: अंते स्वाहा मध्ये कुरु कुल्ले इति स्वरूपं। तेनास्य सप्ताक्षरता हुतभुग्गृहयुग्मे परस्परव्यतिभिन्ने लिखेदिति रोचनया: उक्तं च तत्रैव। भूर्जे रोचनयाषट्कोणलिखित इति विनिहंति गृहादिलाद्योच्चाटयतीत्यर्थ: सर्पान्निर्गमयेद्विलेषु निहितो गेहात्तथोच्चाटयेदिति। कुरुकुल्ला देवता अन्यत्सर्पघ्नयंत्रमाह।ॐमिति मेखलेस्वरूपं ॐकारमायाद्य: सप्ताक्षरो मंत्र:। विलिख्येति गोरोचनयातथैव तंत्रोक्ते:। रिपवोनागास्तद्वारिनारायणीये। पूर्वोक्ततुल्यक्रियइत्युक्ते:। मेखला देवता उच्चाटनकृदाह।शूलेति।शूलांकित इति बहि: कोणाग्रेषु मध्यादीति। मध्येबीजद्वयं शिष्टाक्षराणिकोणेषु। मरुद्गृहं प्रथमपटलोक्तं हुताशो रेफ: अनिलो य: अनेनावृत्तिद्वयं। तेन पूर्वमावृत्तिद्वयं पश्चान्मरुद्गृहवेष्टनमिति ज्ञेयं। अत्र धूमावती देवता धूमावतो मंत्रमाह।दांताविति। दांतौ धकारौ अर्घीश ऊबिंदुसप्रत्येकं तदंतौ तेन धूं धूमिति। अष्टाक्षरो मंत्र:। शत्रुनिग्रहकारकइत्यनेन पृथगाराधनाप्यस्योक्ता। अस्यर्ष्यादि यथा। पिप्पलादो नामऋषिर्निवृच्छंदो ज्येष्टा देवता शत्रुनिग्रहे विनियोग:। बीजद्वयरहितषड्वर्णै: षडंगानि। सर्वजनोद्वेगकारिण्यति विषमचेतादोर्घामलिनां वराविमुक्तपरुषकेशारुक्षाविधवाविरलदशनाकाकरवासूर्प्यांदरीरुक्षाचित्वयाकसहानुरक्तेति ध्यानं। कृष्णचतुर्दश्यामुपोष्य ध्यात्वा दिगंबर: स्वयं मुक्तशिरोरुह: सन् चितिस्थाने शून्यागारे शैले विपिने वा नक्तभोजी लक्षं जपेत्। कृतपुरश्चरणो भवति। उक्तं च धूमावती कल्पे। अथात: संप्रवक्ष्यामि विद्यां धूमावतीं परां। तस्या धूमावति स्वाहा विद्या वेद्या षडक्षरी। षडंगान्यनयोर्ज्ञानि विद्याबीजै: सबिंदुकै:।पूर्वसेवाजपेत् पूर्वं ज्येष्ठागारे दिगंबर:। रात्रौ कृष्णचतुर्दश्यामनाशे मुक्तमूर्द्धज:। तत: शून्यालये शैले श्मशाने विपिनेपि वा। पुरो धूमावतीं ध्यायन् जपेल्लक्षं चपाशन: काकारूढाति कृष्णा प्रविरलदशना मुक्तकेशो विरक्ता धूम्राक्षीक्षुत्तृषार्त्ता प्रतिभटचकिता चंचला कामलोला क्लिष्टापुष्टालसांगी श्रमजलमलिनाव्यक्तदर्प्याविरूपाभूतिंधूमावतीव: प्रदिशतुविपुलांभूतसर्प्याग्रहस्ता। एषा साधू-

वती नाम्ना ज्येष्टा देवी वरप्रदेति । दांत इति प्रामादिकः पाठः । तदुक्तं नारायणीये भृगुणं मा वति शिरो नाम्ना धूमावती मनुरितिति । अग्रे धूमावतीं पवगामिति च वक्ष्यति । कनकाभी- भिरिति। धत्तूरपत्ररसप्रष्टेन विषेण लिखेदित्यर्थः । प्रेतकर्पटे प्रेतवस्त्र भूतघ्नमाह । हुताशेति । द्विठः स्वाहा । सप्ताक्षरो मंत्रः । सध्यांतमिति क्रियाविशेषणं । अंतपर्यंतमित्यर्थः । तेन म- ध्ये षट्सु कोणेषु सप्तवर्णानालिखेदित्यर्थः मध्याद्यमिति क्वचित्पाठः । इंदुबिंबेइति वृत्ते । अत्र यमो देवता । विद्वेषणकृदाह नामेति नाम साध्यसाधककर्मरूपं मकारकोष्टयुगल इति वृत्तचतु रस्त्रएकत्र साध्यतामापरत्र साधकनामतस्य मकारचतुरस्त्रस्य कोणेषु ईशादि लखनीयं । मंत्रमि त्यनेन ङञणानां सपिंडत्वमुक्तं । अष्टदलं कमलं विलिख्य तत्कर्णिकायां मकारं तत्पत्रेषु धूमाव त्यक्षराणि तदुपरिघर्मटिकादिमाह्वतिः वह्निस्त्रोणिवायुग्रहाणि । अत्र धूमावती घर्मटिके देवते। अमुकामुकयोरित्यत्र साध्यनामप्रक्षेपः । नारायणीयेयं विशेषः । चक्रं ताद्योतकार्थ्यास्यष्टरा विद्वेषणं द्वयोरिति मारणयंत्रमाह । प्रागिति। व्याख्यातमिदं सप्तदशे । अत्र शूलेषु शूलीत्यत्र द्वादशर्णलिखनं । तदुक्तं । यमांतकं दलाग्रेषु नेमिवाह्यगतेष्विति । अनेन द्वादशरेखाप्रांतेषु द्वादशशूलानि कर्तव्यानीत्यप्युक्तं । नारयणीये तथोक्तेः । मंत्रांतरत्वे न भेदः । विधिवदभि- हितमिति । विधिस्त्वयं । आदौ पार्श्वद्वये महिषाश्वशिरसीविलिख्य तन्मध्ये यंत्रं संपादयेदि ति । तदुक्तं नारायणीये । चिंतागाराग्निवाह्निर्महिषाश्वशिरोंतरेति । यमो देवता । तदुक्तं । मारणे मोहने स्तंभे विद्वेषोच्चाटने वशे । एवं यमार्गलं वृत्तं बहुधा तु व्यवस्थितं । द्वादशारं लि खेच्चक्रं वृत्तत्रयसमन्वितमिति । नारायणीयेपि । चतुः कुल्याशलाके त्रिवर्त्तुलकसतुर्गणे । ब- हिरष्टगुणे वस्त्रे विधिनातं मनुं लिखेदिति । इदं व्याख्यातमपेक्षितार्थद्योतन्यां । त्रिवर्त्तुलं लि खित्वा तन्मध्ये दक्षिणोत्तररूपेण रेखाद्वयं पूर्वपश्चिमरूपेण रेखाद्वयं च लिखित्वा आग्नेयादिको णेषु रेखाचतुष्टयं लिखित्वा दिग्गतरेखाग्रेषु अष्टौशूलानुकोणरेखाग्रेषु शूलचतुष्टयमेतत् लिखि- त्वा तत्र शास्त्रोक्तप्रकारेण मंत्राक्षराणि लिखेदिति । यमांतकमंत्रमाह।प्रणव इति।तत्र अयं प्रण वः केचित्प्रणवमायाष्टींमिवं विकृताननश्च फट्स्वाहेत्याहुः । मंत्रद्वयस्य षडंगं यथा । ॐ क्रां कृ- ष्णवर्णाय हृत । मंत्रशेषेण शिरः। ॐ नववक्त्रपिंगलजटामुकुटकारिणे शिखा । ॐ हुं सहस्र दित्योदयप्रभायवर्म्म । ॐ क्लीं त्रिनेत्राय त्रिनेत्रं ॐ श्रीं भ्रूविकृताननाय हुमस्त्रं । ध्यानं गुरुमु- खाद्ज्ञेयं । विषत्रुवस्य कारस्करस्य । पटे प्रेतपटे । अष्टविषैरिति । सर्वपटलांतोक्तैः । आलि ख्येति । काकपक्षलेखन्या । श्मशाने निखनेदिति । शरावसंपुटस्थं कृत्वा स्निग्धयोरंतरानी त्येति शेषः । ऊदनोरजनीचूर्णं घृतं दधिपयोमधु। पललं मुद्गमाषौच सक्तुलाजाश्चमोदकमित्ये तैर्द्रव्यैश्चक्रस्य दक्षिणदिशि यमराजकालधर्ममनुवैवस्वतशांतप्रेतराजमृत्युकृतांतनामभिश्चतुर्थ्यं तेन मोंतैरष्टाक्षराद्यैरष्टभिर्बलिर्देयः । लोकपालेभ्योपि स्वस्वनामभिः स्वस्वदिक्षु बलिं दत्वा उत्तरस्मि न् यक्षेभ्यो नैऋते राक्षसेभ्यः सर्वासु दिक्षु भूतेभ्यो बलिं हरेत् । पूर्वमीशानेद्वादशाक्षरेण त्वस्मा क्षरेण यममुखे बलिं विधाय पश्चादयं बलिः । तदुक्तं नारायणीये । शरावसंपुटस्थं तत्स्निग्ध योर्नीतमंतरा । यमराजचक्रमेतत् श्मशाने इषकृत्खनेदिति । बलिस्तु अपेक्षितार्थद्योतनि कायामुक्तोत्वयंत्रे त्रिषु कर्मसु ज्ञेयः । तत्र विद्वेषे प्रेतवस्त्रे नारायणीयप्रोक्तमार्गे लिखनं श्मशा

मवीतमग्निपवना वीतंच यंत्रं लिखेत् ॥ काली मारस्माली काली नमोक्षक्षमोनली ॥ २४ ॥ मामो देततेद मोमा रक्ष ततत्वतक्षर ॥ काली मनुरयं मोक्तः कालरात्रिः स्ववैरिणां ॥२५॥ यमावाटटममाय माटमोटटमे टमा ॥ वामो भूरिरिभूमोवाटटरीटट ॥ २६ ॥ यमात्मकोय-माख्यातः श्लोको वैरिविनाशनः ॥ लिखेदष्टविषांगारनिंबनिर्यासकज्जलैः ॥ २७ ॥ नि-ग्रहाख्यमिदं यंत्रं काकपक्षेण कर्प्पटे ॥ बिभीतवृक्षे वल्मीके श्मशाने वाच तुष्पथे ॥ २८ ॥ दक्षिणस्थेऽनिलमंत्री निलनेदर्द्धरात्रके ॥ सर्वथाशत्रुरेतेन सप्ताहान्मरणं व्रजेत् ॥ निगृह्यते महारोगैः पतितो वामतेयसौ । शिलायामिष्टिकायां वा चक्रमेतत् प्रकल्पितम् ॥ ३० ॥ मर्क-टी विषदंडीभिः समालिप्तमधोमुखम् ॥ यंत्र रात्रौ खने तत्र भूयोभूयोऽ शुभंभवेत् ॥ ३१ ॥ लिखेच्चतुः षष्टिपदेषु कालींमीशादिकन्यादि यमात्मकेन ॥ श्लोकेन संवेष्ट्य कृशानुवायु बीजावृतं यंत्रमिदं विदध्यात् ॥ ३२ ॥ लिप्तं विषमयींदंडीमर्क्कटीभिरधोमुखम् ॥ निखने-त्यत्र तत्रस्यात् नृणामुच्चाटनं सदा ॥ ३३ ॥ सस्यहानिमनावृष्टिं गवां नाशं करोतितत् ॥ आख्यां तुंबुरुमध्यतः स्मरगतामालिख्य जंभादिकां विद्यां दिग्गतपत्रकेष्वथालिखेत् देवींद लेखुस्मरम् ॥ कोणस्थेषु सनामकं बहिरतः पाशांकुशाभ्यांवृतं यंत्र वश्यकरं ग्रहादिभयहृत् क्षुद्राभिचारापहम् ॥ ३५ ॥ जं भेजं भिनिठद्वंद्वं मोहे मोहिनिठद्वयम् ॥ अंधे अंधिनि ठद्वंद्वंरुं-धे रुंधिनि ठद्वयम् ॥ ३६ ॥ हित्वा कामं लिखेत्शांतिः यंत्रेऽस्मिन् नृकपालके ॥ संध्या सु-तापयेदेतदुच्चैः साध्यं वशं नयेत् ॥ ३७ ॥ हित्वा शांतिं लिखेद्धर्मं पटे वा नरचर्मणि ॥ व न्हि वायु गृहा वीतं श्मशानस्थंरिपून हरेत् ॥ ३८ ॥ त्यक्त्वा धर्मं लिखेदस्त्रं फलके क्षतरू-क्षके ॥ वन्हिवायुयुतं नाम विषाढ्यरुधिरेण तत् ॥ ३९ ॥ चत्वरे निखनेत् जप्तं विद्वेषं कु-रुतेमिथः ॥ हित्वारेफयकारौद्वौ लकारं मध्यतो लिखेत् ॥ ४० ॥ धरापुरेण वीतं तदिष्टि-कांतनिवेशितम् ॥ सर्वेषां स्तंभनं कुर्य्यान्नात्रकार्याविचारणा ॥ ४१ ॥ हित्वा लकारं तन्म ध्ये वायुबीजं समालिखेत् ॥ विषरक्तमशीकाकपुरीषैर्ध्वजवाससि ॥ ४२ ॥ श्मशाने निहितं

---

ने खननं च । मारणे ग्रंथकारोक्तरीत्याविषवृक्षफलकेन स्वकर्मणि वा लिखनं श्मशानेखननं । स्तंभने तु । अस्यैव यंत्रस्य विशेषो नारायणीये । मेरुस्थं स्तंभकत् यंत्रं तत्तुपेषण्यधः क्षिपेदि-ति । अस्य व्याख्याने अपेक्षितार्थद्योतन्यामुक्तं । बिभीतकफलके शिलायामिष्टकायां वापीतद्र-व्येण ताम्रसूच्याचक्रमालिख्य मेरुगं कृत्वाभ्यर्च्य जप्त्वा बलिं निहृत्य शत्रुमार्गारिगृहश्मशाननि म्नोच्चयेषण्यधोगतस्थलेषु स्थिरनक्षत्रराशिषु निखनेदिति । तदुक्तं । ताम्रलेखन्यापीतेन स्तंभ-ने खनेत् । अपि भारतसंकाशे समरे रिपुवारणमिति । मारणयंत्रांतरमाह।एकेति द्वे । त्वरि-तापटले व्याख्यातं मध्यदहने मध्यकोष्टरेफ इति पद्मपादाचार्याः । मंत्रांतरत्वेन भेदः तद्याद्य द त्वनेन वषडंतया त्वरितया संवेष्टयेदित्युक्तं । यमवीतमिति । ईशानादिनिर्ऋत्यंतमेकवारं वि-लिख्य पुनश्च निर्ऋत्यादि ईशांतं लिखेत् । आचार्यैः शैवादि नैर्ऋत्यादि कालीमनुं लिखेदित्यु क्ता तथाक्रमाद्यमप्रतमित्युक्तं । केचित्तुचतुर्दिक्षु चतुर्भिश्चरणैरिति वदंति । अग्नीरेफः पवनो

कुर्यात् कुलोच्छेदं स्ववैरिणां। मुक्तावायुमयंबीजं तत्र फट्कारमालिखेत् ॥ ४३ ॥ परेतव-स्त्रे काकस्य रुधिरेण यथाविधि ॥ ईप्सिते निखनेत्स्थाने विद्वेषं कुरुते नृणां ॥४४॥ अत्र बीजमयास्यास्मिन् लृकारं सार्णसंयुतं ॥ विलिखेत्पत्रमेतत्स्यात् लोहत्रयसमावृतम् ॥ ४५ ॥ सर्वरोगप्रशमनं कृत्याद्रोहादिशांतिदम् ॥ विहाय बीजं लृंकारं ग्लौं कारं तत्र संलिखेत् ॥ ४६ ॥ क्षकारेणावृतं बाह्ये पाशांकुशवृतं पुनः ॥ ठपरेणवृतं भूयो भूमिमंडलमध्यगम् ॥ ४७॥ लकारैर्बिंदसंयुक्तैर्वेष्टितं तद्बहिः क्रमात् ॥ सर्गांतमातृकाबीजं सर्वं वृत्तेनवेष्टितम् ॥ ४८ ॥ कौशेयकर्प्पटे क्लृप्तमिष्टकाद्वयमध्यगं ॥ सेनाग्नेनिखनेद्यंत्रंस्तंभनं कुरुते ध्रुवं ॥ ४८ ॥ म-ध्ये श्रीनरसिंहबीजमथ तत् बाह्ये स्वरान् केसरे वारीद्चन्द्रयमेंद्रदिक्षु विलिखेत् मध्ये मनुं गारुडम् ॥ अंतस्थान् मरुदग्निनिर्ऋतिशिवेष्वालिख्य वर्णावृतं यंत्रं सर्गिभिरष्टभिः परिवृतं संवर्तकैर्गारुडम् ॥ ५० ॥ संवर्तकोनेत्रयुतः पार्श्वस्तारोग्निसुंदरी ॥ गारुडो मनुराख्यातो विषद्वयविनाशनः ॥ ५१ ॥ स्मरन् गरुडमात्मानं मंत्रमेनं जपेन्नरः ॥ विषमालोकनेनैव ह-न्यात् नागकुलोद्भवम् ॥ ५२ ॥ मध्ये वर्णान् भृगुस्थान् विलिखतु विधिवत्सा-ध्यनाम्ना समेतान् किंजल्केषु स्वराः स्युर्वसुदलविवरेष्वालिखेन्मध्यबीजं ॥ ५३ ॥ काद्या-र्णान् केसरेषुद्विगुणवसुदलेष्वर्पयेत् मध्यबीजं यंत्रं संजीवनाख्यं सलिलपुरगतं क्षुद्ररोगापहा रि ॥ ५४ ॥ मध्ये पिंडमधोदलादिषु लिखेद्वारीशताराधिपप्रेताधीश्वरशक्रदिक्षुविमतेर्मध्येच-वर्णांल्लिखेत् ॥ यादीन्मारुतवह्निहराक्षसशिवेष्वर्णान् बहिर्वेष्टयेत् काद्यैर्वाम विलोचनेन क-लितं पिंडाख्ययंत्रं परं ॥ ५६ ॥ मनुस्वरेंद्वजेशाग्निसंयुतश्चतुराननः। पिंडबीजमिदं प्रोक्तं पुंसांसर्वार्थसोधकम् ॥ ५७ ॥ बीजेनानसंजप्तं यंत्रं रक्षाकरं परम् ॥ आयुरारोग्यजननं ल-क्ष्मीसौभाग्यवश्यदंचौरसर्प्प मृगव्यालभूतामपनिकृंतनम् ॥ गर्भरक्षाकरं स्त्रीणां पुत्रदं क्षुद्र-नाशनम् ॥ ५९ ॥ धृतंमूर्ध्निकरोत्येतत्लोकवश्यमनुत्तमम् ॥ मध्ये तोयगृहे लकारविवरे सा

---

यः ताभ्यामाहतिद्वयं । एष सांप्रदायिकः पक्षः । कश्चित्तु अग्निपवनशब्देन तदग्रहे गृह्यते इ-त्याहस्म । तदसांप्रदायिकं । मंत्रमुक्तावल्यादिबहुग्रंथविरोधात् । तदुक्तं । वषडंतां लिखे ज्जियां त्वरितां पूर्व्ववद्बहिः । यममंत्रगतान्वर्णान्वह्निबीजं समं ततः । प्रभंजनमयं योजं तद्बाह्ये चाभितो लिखेत् । पटेश्रीसोद्भवे भावे वसने भूर्ज्जकेपि वेति । अग्रिमयंत्रे ग्रंथकृदेव वक्ष्यति । कृशानुवायुबोजावृतमिति । त्वरिताविद्यया माहिषाज्येनाष्टोत्तरसहस्रं हुत्वा यंत्रे संपातं सं-पात्यपश्चाद्यंत्रे खनेदिति ज्ञेयं । तदुक्तं । माहिषेण घृतेनाष्टसहस्रं सहितेन च । हुतेन सिद्धं संपातं योजयेन्मूलविद्ययेति । अयं मंत्रविलेखनप्रकारस्तु पुरुषमुद्दिश्य स्त्रियमुद्दिश्यतु भद्र कालोश्लोकस्थाने यमश्लोकमालिख्य यमश्लोकस्थाने भद्रकालोश्लोकेन वेष्टयेदन्यत्समानमिति सं-प्रदायविदः । अत्र कालरात्रिः स्ववैरिणां वैरिविनाशक इत्यनेन चानयोः स्वतंत्रताप्युक्ता । अं-गारश्चितांगारः । एतेषां कज्जलैः । तत्र कज्जलकरण प्रकारः । मनुष्यकपालेन शदिस्नेहेन शूलारूढप्रेतकर्प्पटवर्त्याश्रष्टविषादिसम्याकुर्यात् । कर्प्पटे शूलाधिरूढम्। प्रेतकर्प्पटे । तदु

र्णाढ्यसाध्यं लिखेत्पत्रेष्वष्टसु हं समंत्रमभितो हंसार्णसंवेष्टितम् ॥ यंत्रं भूमि गृहेण वेष्टितमिदं मूर्ध्नासदा धारितं हन्यात् क्षुद्रमहाज्वरामयरिपून दद्यात् यशः संपदः ॥ ६१॥ ईकाररमध्ये विलिखेत्ससाध्यं तमष्टपत्रेषु पुनर्विलेख्य।संवेष्टयेत् तेन धरापुरस्थं यंत्रं भवेत् वश्यकरं नराणां ॥ ६२ ॥ ताम्रपात्रे समालिख्य यंत्रमेतत्प्रपूजयेत् ॥ वशयेत्सकलान्मर्त्यान् नात्रकार्याविचारणा ॥ ६३ ॥ मध्ये भांतं भृगुत्रिनिहितं नामवर्णैः प्रवीतं टांतं लांतान्वितमथ विलिखेदष्टपत्रेषु भूयः ॥ ६४ ॥ भूबिंबस्थं निगदितमिदं साधुसंजीवनाख्यं शस्त्रोद्भूतं भयमपहरेत् धार्यमाणं भुजेन ॥ ६५ ॥ वर्णावृतं साध्ययुतं साध्ययुतं सकारं टांतेलिखेदष्टदलेषु हंसं ॥ आवेष्टयेदंबुगृहेण बाह्ये लांतावृतं यंत्रमिदं ज्वराघ्नं ॥ ६६ ॥ टांतेनामालिखेत् क्षकारविवरेमृत्युंजयत्र्यक्षरी रुद्धं तद्बहिरष्टपत्रविवरे साध्याव्हयं पूर्ववत् ॥ ६७॥ अत्रकिंजल्कयुते वसुद्वयदले पद्मे तथैवाव्हयं द्वात्रिंशद्दलपङ्कजेपि च तथा काद्यार्णयुक् केसरे ॥ ईकारेणसमावीतं यंत्रं मृत्युंजयाव्हयम् ॥ ६८ ॥ सर्वरोगाभिचारघ्नं सर्वसौभाग्यसिद्धिदम्॥ ग्लौं रुद्धं प्रणवद्वयंपारिलिखेत्साध्यस्य नामान्वितं बाह्ये भूपुरमष्टवज्रविलसत्तारं लिखित्वा पुनः॥ ६९ ॥ क्षंकोणेषु दिशासु लंप्रविलिखेत् पाशांकुशत्र्यक्षरी वीतं स्तंभनयंत्रमावृत्तिलसज्जंभादि विद्याष्टकम् ॥ ७० ॥ जृंभे वन्हि वधूः पूर्वं पश्चाज्जृंभिनि ठद्वयम् ॥ मोहे पावकजायास्यात्ततो मोहिहिठद्वयम् ॥ ७१ ॥ अंधे हुतभुजो जायाततोंधिनिटयुग्मकम् ॥ रुद्धे कृशानुपत्नी स्यात् रुंधिनि द्विठसंयुतम् ॥ ७२ ॥ लांतेनामविलिख्य दिक्षु विलिखेत् भूयस्तमेवाष्टसु क्षोणीबिंबमथो नगेंद्रभुजगावन्योन्यबद्धौ लिखेत् ॥ आख्यातन्मुखयोर्विभातिफलके यंत्रं समापादितं निर्माल्ये निहितं सदावितनुते वाचां द्विषां स्तंभनम् ॥ ७३ ॥ साध्याख्यां

---

क्तं । सीसपट्टे शुकेवाशावे इति विभीतकवृक्ष इति । तरुकोटरे । तदुक्तं । वाल्मीके च त्वरे वाथतरुविवरेवा निदध्यादिति । दक्षिणस्थे सूर्यगवायाविलश्यः । मरणमिति । बिभीतवृक्षे । महारोगैरिति चतुः पथे । पतित इति श्मशाने । वाशब्दः समुच्चये । तेन वल्मीके अवयववैकल्यमिति पद्मपादाचार्याः । शिलायामिति । रजकशिलायां । इष्टकायामिति । शिवालयस्थायां । दंडीब्रह्मदंडी । यत्रग्रामनगरादौ मंत्री देशेषु निक्षिपेद्यत्रेत्युक्तः । अत्र साध्यनामस्थाने ग्रामनगरनामनीलेखनीये । उच्चाटनकृदाह । लिखेदिति । त्वरिता चतुः षष्टिपदवदिदमपि । कालीमित्यनंतरोक्तश्लोकरूपकाली मंत्रं यमात्मकनेत्युत्तरत्र संबध्यते । वेष्टनं पूर्वयंत्रोक्तवत् । अत्र यमवेष्टनात्प्राकवषडंतत्वरितावेष्टनमपि । अत्र संप्रदायाद्रेफवेष्टने साध्यसाधककर्म्म युक्तरेफेण वेष्टयेदिति । स्त्रियमुद्दिश्य तु पूर्वोक्तमनुसंधेयं । तत्रांतरे तुः चतुः षष्टिपदे कालीमीयदोषाचरादिकं । विन्यस्य मध्ये बहुषुहुंकाराद्यक्षराणि च । अंतरोले तु तेषां च साध्यानां नामकर्म च । शिखांतविद्यया याम्यमनुना दहनेन च । वायुना च समावेष्टा क्तमेतत्सुसाधितं । मारणोत्मादनादीनि कर्माण्याशु प्रमाधयेदिति । मृषीपूर्वोक्तं कज्जलं । दंडी ब्रह्मदंडी । मर्कटीकपिकच्छुउभयोस्त्वरिता देवता । वश्यकृदाह । आख्यामिति । आख्यां कर्मस

कवचं लिखेत् बहिरथो दिक्पत्रमध्येषु तत् ग्लौं मन्येषु महीपुरस्यवि लिखेत्कोणेषुगंलान्वितम् ॥ वज्राष्टसु वमे तोयपुरगं भूबिंबमध्ये स्थितं यंत्रं रात्रिविनायकांतरगतं न्यस्येच्छरावद्वये ॥ ७४ ॥ रहस्यस्थाननिक्षिप्तं पूजितं प्रतिवासरं ॥ स्तंभनं कुरुते वाचां सेनादीनां च वैरिणां ॥ ७५ ॥ कृत्वा रेखाष्टकपृजुपुनस्तिर्यगालिख्य षट्कं बाह्याद्वृत्यालिखतु विधिवत् बिंदुयुक्तं लकारं ॥ ७६ ॥ अंतः पंक्तौ लिखतु धरणीं शिष्टकोष्ठत्रयाणां कृत्वा नामप्रथितमुदितं यंत्रमेतत् ज्वरघ्नं ॥ ७७ ॥ यंत्रमेतत्समभ्यर्च्यदत्वा भूतबलिंततः ॥ साध्यस्य मूर्द्धनिबध्नीयात्सर्वज्वरविमुक्तये ॥ ७८ ॥ तारं लिखेद्वह्निपुरस्थयुग्मे तत्पार्श्वयोर्लाणमथाग्निबीजम् ॥ कोणेषु पूर्वापरयोश्चयंत्रं पाशांकुशावीतमिदं ज्वरघ्नं ॥ ७८ ॥ यंत्रमभ्यर्च्य मंत्रेण तारपाशांकुशात्मना ॥ निबध्नीयाज्ज्वरार्तस्य हस्तादौ ज्वरशांतये ॥ ८० ॥ पिंडे लिखेत् नामससर्गटांतविदर्भितं सस्वरके सराढ्यं ॥ टान्ताष्टपत्रं वसुधापुरस्थं कांतिप्रदं यंत्रमिदं ज्वरघ्नं॥८१॥तारादि लुद्वयजलीद्विठवर्णवीता टांतांतरे विलिखिता विधिनैव माया ॥ साध्या वृताबहिरथो वदनार्द्धचंद्रैर्यंत्रं शिशोरुरुदितं विनिहंति सद्यः ॥ ८२ ॥ व्योमार्णमालिख्य सबिंदुमाख्याविदर्भितं क्षत्रपयुक्तकोणे ॥ वसुंधरागेहयुगे निबद्धं यंत्रं समस्तज्वरनाशनं स्यात् ॥ ८३ ॥ सार्णं नाम विदर्भितं परिलिखेत् बाह्येष्टपत्रे भृगुं पद्मं स्यादथकादिशांतलिविमत् त्रिंशद्दलंबाह्यतः ॥ वीतं तोयपुरेण यंत्रमुदितं भुर्जोदरे कल्पितं भूतव्याधिमहाज्वरप्रशमनं कृत्यापहं श्रीमदम् ॥ ८४ ॥ चक्रे चतुःषष्टि पदेषुबिंदूनंतस्थवर्णान् क्रमशो विलिख्य ॥ रेखा शिरः कल्पितशूलयुक्ते यंत्रेशपीतज्वरशांतिहेतोः ॥ ८५ ॥ पुटितभूमिपुरद्वयमध्यतः प्रविलिखेत वनितां गिरिजापतेः ॥ प्रणवमस्य लिखेत् वसुकोणगंज्वरह-

---

हितं साध्यसाधकनाम । तुंबुरुमध्यतः कर्णिकास्थतुंबुरौ । अथ देवीरिति । तुंबुरुमंत्रोक्त देवी बीजचतुष्टयं सनामकस्मरंचविदिग्दलेषु लिखेत् । तेनायमर्थः संपन्नः देवीबीजमध्ये कामबीजं तन्मध्ये नाम एवं कोणचतुष्टयेष्विति । तुंबरुर्देवता । हित्वाकामिति । कामबीजपंचकं हित्वा त्यक्त्वा शांति दीर्घमीकारं सबिंदुकं लिखेत् । अन्यत्पूर्ववत् । उच्चैरित्यतिशयेन लिखेदिति शांतिस्थाने वर्म्म हुं । पटे प्रेतपटे । वह्निवायुगृहावीतमिति शेषः । अन्यत्पूर्ववत् । अत्रतरुर्बिभीतकः । चत्वरंगणे । अत्रापि वह्निवायुगृहावीतमिति ज्ञेयं । जसमिति तुंबुरुबीजेन । हित्वेति । तुंबुरुबीजमालिख्य तत्र लकारं लिखेत् । धरापुरेणेति वह्निवायुनिवृत्तिः । अत्रंचपूर्ववत् । इष्टकांतः इष्टकाद्यांतः । अग्निमभेदत्रये धरापुरमेवकार्यं । तन्मध्येतुबुंरुमध्ये वायुबीजं लिखेत् । अन्यत्समानं । रक्तमजारक्तं । मषापूर्वोक्तकज्जलं । ध्वजवाससि । प्रेतपताकावस्त्रे । यथाविधीति । काकपक्षलेखन्येत्युक्तं । ईप्सित इति । ययोर्विद्वेषणं क्रियते ताभ्यां यत्रोल्लंघ्यते तत्र देश इत्यर्थः । बाह्येइति । पश्चाद्बहिः । ढपरेण टकारेण । सर्गांतेति । विसर्गवता गारुडयंत्रमाह । मध्येइति । मध्ये कर्णिकायां प्रोयुक्तं नरसिंहबीजं षोडशपटलोक्तं प्रोग्रवदेन चैकदेशोरफो गृहीतः सऊर्व इति ज्ञेयं । तदुक्तं नारायणीये । बिंदीमद्वह्निरुडांत्य-

कर्णिकमिति । वारीडिती। पश्चिमदिक् चंद्रेति उत्तरदिक् । यमेति दक्षिणदिक् इंद्रेति पूर्वदिक् । विलिखेन्मध्य इति । गारुड मंत्रांत्यकर्णिकायां लिखेदित्यर्थः अंतस्थान् यरलवान् सबिंदून् । वर्गावृतमिति । प्रामादिकः पाठः । वर्णावृतमिति । पांचपाठः सांप्रदायिकः । सर्गिभिर्विसर्गयुतैः । संवर्त्तकैः क्षकारैः । परिवृतमित्यष्टदिक्षु । तदुक्तं नारायणीये। वृतं लिप्यासर्गिकर्णाष्टकावृतमिदं यंत्रं फणिभ्यो वतीति । अपेक्षितार्थद्योतनिकायां व्याख्यायते । लिप्यक्षरैर्मालेनवेष्टयित्वा सविसर्गमंत्यमष्टदिक्षु लिखेदित्यर्थः इति । गरुडो देवता । गारुडमंत्रमान संवर्त्तक इति । संवर्त्तकः क्षः नेत्रमिकारस्त युतस्तेन क्षि। पार्श्व पकारः तारः प्रणवः अग्निसुंदरी स्वाहा । विषद्वयविनाशनइत्यनेन केवलमंत्रस्यापि स्वतंत्रतोक्ता । इदमेवयंत्रफलं । विषद्वयं स्थावरजंगमं । मंत्रस्य ऋष्यादिकं तंत्रांतराद्यथा । ऋष्यादिका रुद्रपंक्तिगरुडाः परिकीर्त्तिताः हृदयं ज्वलयुग्मांते महामति पदं शिरः । गरुडं चूडाननं स्याद्गरुडांते शिखि शिखा । कवचंत्वस्तु गरुडान् प्रभंजनयुगं ततः । प्रभेदनयुगंवित्रासययुक्युक् विमर्दयनेत्रमंत्रस्तूग्ररूपधरसर्पविषहर । भीषय द्वयसर्वस्याहहभस्मीकुरु द्वयं । अस्त्रमंत्रोऽप्रतिहतबलाप्रतिहतेति च । स्वासनांते हुं फडंतः स्वाहांतैरेभिरंगकं । मत्वातमर्णकान्यादकटिहृहक्त्रमूर्द्धसु । अंगुष्टादिष्वंगुलीषु न्यसेदेवं विचिंतयेत् । वह्नं रसाग्नीयुतं स्वचरकमलगतं पंचभूताग्नवर्णं क्रमाकल्पं फणींद्रैरभयवरकरं पद्मनेत्रं सुवक्त्रं । दुष्टाहिच्छेदतुंडैः सरदविलविषप्रोषणं प्राणभूतं प्राणिप्रेण्याखिवेदो तनुममृतमयं पक्षिराजं भजेहं । एतदनंतरं गरुडमुद्रादर्शनीया । तल्लक्षणं चतुर्थपटले मदुक्तमनुसंधेयं । वर्णलक्षं जपेन्मंत्रं जुहुयात्तद्दशांशतः । घृताक्तैः कृष्णकुसुमैर्मातृकाब्जे यजेदसु । अंगाष्टनागदिक् पालतदस्त्राणि च पूजयेदिति । बीजस्यापीदमेव । नारायणीये तु । एवमुक्तानि नेत्रांतान्यंगानि विपत्तेस्त षट् । आजानुतः सुवर्णाभमानाभेस्तुहिनप्रभं । कुंकुमारुणमाकंठादाकेशांतात्सितेतर । ब्रह्मांडव्यापिनं तार्क्ष्यं रक्ताक्षं नागभूषणं । नीलाग्रनासमात्मानं हेमपक्षं स्मरेद्बुधः । क्षणं विषस्य संग्रामे रक्ताभं स्तोभकर्मणि । पीतं स्तंभे शशीप्रख्ये नाशितार्थ्ये विचिंतयेत् इति संजीवनयंत्रमाह मध्य इति मध्ये इति कर्णिकायां । भृगुस्थं सकारस्थं । वर्णं वकारं । तेन स्वमिति बीजं लिखेत् साध्यनाम्ना विधिवत्समन्वितमिति । विदर्भितमित्यर्थः । उक्तं च नारायणीये । जीवं नाम विदर्भितं कलशगं मध्येलिखेदिति । मध्यबीजं स्वं । काद्यर्णान् मांतान् । द्विगुलत्रसुदले षोडशदले । मध्यबीजं स्वं । सलिलपुरं प्रथमपटलोक्तं । अत्र मृत्युंजयो देवता। पिंडयंत्रमाह। मध्य इति। मध्ये अष्टदलकर्णिकायां । पिंडं वक्ष्यमाणं विलिख्य तन्मध्ये तत्तद्बीजाढ्यं विदर्भितं नामा लिखेत् । वश्येपाशबीजं शांतौ वरुणबीजं । उच्चाटने क्रोधाग्निबीजमिति नारायणीय उक्तः । दलादिषु केसरेषु अचः स्वराम् द्विद्विक्रमेण । वारीशेति पश्चिमदिक् । ताराधिपेत्युत्तरदिक् । प्रेताधीश्वरेति दक्षिणदिक् । शक्रेति पूर्वदिक् । विपतेर्गरुडमंत्रस्य मध्ये कर्णिकांतर मत्यमक्षरं । यादीन् यरलवान् । वामविलोचने न दीर्घेकारेण । सबिंदुना त्रिरिति ज्ञेयं । त्रिर्वह्निर्मायययापद्मं वेष्टयेद्बिंदुयुक्तयेति । नारायणीय उक्तः । अत्र पिंडात्मा देवता । पिंडबीजमुद्धरति ।मन्विति ।मनुस्वर औ इंदुर्बिंदुः अजेशो जकारः अग्नीरेफएतद्युतश्चतुराननः ववारः। सर्वार्थसाधनमिति । तत्र प्रकारो नारायणीये । पिंडं चंद्रे द्रगेह

स्थं कुलिशाकारमुज्ज्वलं । पीतं विंतितमश्वादौसैन्यस्तंभकरं भवेत् । सौमेंद्रवह्निपुरं गंमूर्द्धि ध्यानं तथाकृति । विद्विषन्मर्वमत्तेभमहिषादि निवारणं । तदेवाग्निसमप्रख्यं परसैन्ये विचिंतयेत् । पायात्पराङ्मुखा पिंडज्वालां दग्धारिवाहिनी । भेदं परकृते स्तंभे करोत्येव विचिंतिते । अनिलानलसंयुक्तं ध्यानात्सोमं करोति तत् । प्रयांति हित्वा त्वग्रस्तमार्त्तनादा ग्रहादयः । एतद्रोचनयालिख्य पटादौ यत्र पूज्यते । त्यजंति गेहंतच्चौरक्षुद्रभूतोरगादयः । उद्यंतं स्तंभयत्यस्त्रमैंद्रस्थं तदहोनपि । वारुणां तगतं पिंडं तेजोनुग्रहवर्ज्जितं । दृष्टोत्तमांगे विन्यस्तं विषनाशं करोति तदिति । मृगो व्याघ्रः । व्यालो दुष्टगजः । क्षुद्राः सर्पाः । लोकवश्यमिति । तत्र विशेषः । पद्ममध्ये लिखेदिंदौ पिंडांतर्नामबीजयुक् । विपतिस्ताच्च्ययंत्रोक्ता लेख्या यरलवास्तथा । त्रिर्महामायया पद्मं वेष्टयेदिंदुयुक्तया । गोमयांबुयुजायंत्रमेतद्रोचनया लिखेत् । भूर्ज्जं सुवर्णलेखन्याजतुरौप्येण वेष्टयेत् । हेम्ना च जपपूजाभ्यां हवनेन च साधयेत् । आयुष्यं पाचनं पुष्टिलक्ष्मीसौभाग्यवश्यकृत् । चौरव्यालमृगारण्यसलिलादि भयापहं । पुत्रदं गर्भरक्षाकृद्ग्रहसर्प्यामयादिहृत् । क्षुद्रोपशमनं यंत्रं विद्यात्सर्वार्थसाधकं । उत्तमांगस्थितं तत्स्याल्लोकवश्यमनुत्तमं । शिखांतं पाशपुटितं पिंडं वश्ये सदा जपेत् । वातानीता तत्पत्रकेकाकपक्षेण कल्पितं । बिंदं तमर्थेंदुरहितं यंत्रमुच्चाटनं रिपोः । क्रोधाग्निपुटितं मंत्री पिंडमुच्चाटने जपेत् । आकाशः साग्निकरणार्द्धचंद्रः क्रोधाग्निरुच्यत इति । यंत्रांतरमाह मध्य इति मध्ये तोय गृह इति । व्यधिकरणे सप्तम्यौ।मध्ये कर्णिकायां।तोयगृहं च प्रथमपटलोक्तं ।लकारविवरेलंकारांतः सार्णाद्यसाध्यं सकारसहितसाध्यसाधककर्मनामि लिखेत्।हंसो देवतावश्यकृदाहईकारेतितंईकारं।तेनेकारेण। माया देवता।अस्तम्भयहृदाह।मध्य इति।मध्ये ष्टदलकर्णिकायां । नामवर्णैः साध्यसाधकनामाक्षरैः प्रत्रोतं भृगुविनिहितं सकारस्थं भांतंमकारंलिखेदित्यर्थः।टांतं ठकारंलांतान्वितंच।मृत्युंजयो देवता ज्वरघ्नमाह। वार्णेति। वार्णावृत्तं टांते ठकारे लांतावृतं वाह्ये अंबुगृहेण।वेष्टयेदिति संबंधः। अंबुगृहेण प्रथमपटलोक्तेन। हंसो देवता। रोगाभिचारघ्नमाह । टांत इति । टांते चकारविवर इतिव्यधिकरणे सप्तम्यौ। मृत्युञ्जयचत्रक्षकरी रुद्रं नाम लिखेदिति अन्वयः । पूर्ववन्मृत्युञ्जयपुटितं नामेत्यर्थः। अच्किंजल्कयुते। वहुद्वयदले षोडशदले। तथैवेति। पूर्ववन्नामेत्यर्थः । काद्यर्णयुक्तसरे द्वात्रिंशदलपंकजे तथा पूर्ववन्नामेत्यर्थः। मृत्युंजयो देवता। स्तभनकृदाहु। दनौमिति । प्रतिलिखेदिति। वृत्तान्तरित्यर्थः। अष्टवज्ररिलसतारं वाह्यभूपुरं लिखित्वेत्यन्वयः। तदुक्तमाचार्यैः। प्रणवयुगलं भूयुग्मांतस्थितं च तद्वसुकुलिशगं तेषां मध्ये ध्रुवं भुवमन्तरा। अमराति दिग्लारिपाशांकुशान्तरमायया वलयितमथोजंभाद्यष्टौ लिखेत्कुरुते जयमिति । कोणेष्विति । भूपुरस्य पाशांकुशचत्ररीति पाशमायां कुशमच्चरीत्यर्थः। भूमिर्देवता। वाक्स्तम्भनकृदाह। लांत इति । लांते चकारे नाम लिखेत्सम्प्रदायात्। लकारविदर्भितमिति ज्ञेयम् । तमिति। लकारं। अथ बालान्ते नाम लकारदर्भमभितो भूयस्तमिति पठनीयम् । अभित इति । कर्णिकायामेवाष्टकलिखनम्। पूलयावेदिक्षुविव्यस्याप्ययमेवार्थः अष्टसु दिक्षुवित्येव तत्र वक्ष्यमाणभूगृहान्तः । नरेन्द्रा भुजगाविति। वासुकि शंखपालौ। स्वचिह्नयुतौ लिखेदितिगैरिकेण । निर्माल्ये इति । शिवनिर्माल्ये ।

अपेक्षितार्थद्योतनिकोक्तेः । द्विषां वाचां स्तंभनं वितनुते शिलाक्रांतमिति ज्ञेयम् । तदुक्तं नारायणीये । मासाष्टकवृत्तेर्णान्ते नाम मांसविदर्भितम् । साष्टाशावज्रमैन्द्रं च पार्थिवा हि वृतं लिखेत् अस्ते च फणीनो राख्यां विभीतफलकेर्पितम् । गैरिकेण शिलाक्रान्तं निर्माल्यैस्तंभकृत् खनेदिति। अन्यच वाक्स्तंभनकृदाह । साध्येति लिखेदित्यष्टदलकर्णिकानां । तदिति ह्रुम् । अन्येषु विदिक् पत्रेषु । गलान्वितिग्लं मत्रीपुरस्य कोणेषु लिखेदिति । वस्त्रे निशारसैरिति ज्ञेयम् । रात्रिविनायकान्तरगतं हरिद्रागणपतिमूर्तिं कृत्वा तदुदरे यंत्रं स्थापनीयमिति । संप्रदायविदः । केचित्तु हरिद्रागणपतिमंत्रेण संवेष्टितमिति वदन्ति । तदसांप्रदायिकम् । मन्त्रस्या चकृतत्वादत्तम् । पूजितमिति । पीतपुष्पैर्विनायको देवता वैरिणां वाचामिति । विधिकरणे षष्ठ्रीवैरिणां सेनादीनामित्यपि आदिशब्देन विवादगत्यादि तदुक्तं नारायणीये । लिखेद्वस्त्रनिशारसैः विघ्नस्यकुक्षौ निक्षिप्य निशापिष्टमयस्य तत् । शरावसंपुटे स्थाप्य पीतपुष्पैश्च पूजयेत् । स्तंभः स्याद्दृष्टिसेनावाग्विवादागमनादिष्विति । ज्वरघ्नमाह । कृत्वेदिति । बाह्यवृत्त्येति । विंशतिकोष्ठेषु । विधिवदिति । प्रादक्षिण्येन । अन्तः पंक्तौ द्वादशसु कोष्ठेषु धरालविंदुयुक्तमिति संबध्यते । कोष्ठत्रयांतः कोष्ठत्रयमेकीकृत्य तत्रनाम लिखेत् । दत्वा भूतं बलिमिति । पंचवर्णोदनेनेति ज्ञेयम् । तदुक्तं नारायणीये । त्र्यशुरेखा लिलित्वाष्टौ षटतिर्यक्वावृतिद्वयें । नारीराज्यपुटेन्द्रौ लेख्यौ नाम पदत्रये । पांचवर्णबलिं दत्वा कलयेचक्रमार्चितो आह्निकम् । जराभासप्रशांतय इति । अपेक्षितार्थद्योतनिकायां पंचवर्णोदनबलिंदत्वेति व्याख्यातम् । अन्यज्ज्वरघ्नमाह । तारमिति । वह्निपुरस्य युग्मे दक्षिणोत्तररूपेण लिखिते तत्पार्श्वयोस्तुरपार्श्वयोः । लार्णं अथ कोणेष्वग्निबीजं सार्वषु कोणेष्वित्यर्थः । पूर्वापरयोरुदिशोर्बहिर्भागस्थयोः । पाशांकुशेति । अन्येतु गुणांकुशावीतमिति पाठमपठन् । गुणशब्देन त्रिसंख्या तेन पूर्वापरभागयोः प्रत्येक मंकुशत्रयं लिखेदित्यर्थः । तदुक्तं नारायणीये । सौम्ययाम्यमुखे तारं लिखेद्वह्निगेहहृदये । तारस्य पार्श्वयोरिन्द्रं कोणकोष्टेषु चानलम् । प्राक्प्रतीच्योर्वहिश्चक्रमंकुशत्रयभूषितमिति । अत्र प्रणवपाशांकुशात्मैव देवता अन्यज्ज्वरघ्नमाह । पिंड इति । पिंडे पूर्वोक्तमसर्गांटांतं सविसर्गठकाथतद्विदर्भितं नामेत्यन्वयः । अत्र पिंडात्मा देवता । शिशुरोदनहृदाह । तारेति । लुद्वयं लुलुजलं वं द्विठः स्वाहा विधिनैव साध्यासाध्योस्यामस्तीति साध्या अर्शआदित्वादेव । मध्ये साध्यनाम युक्तां एतन्मात्रावृतां च मायां विलिख्य वहिर्वृत्तद्वयं कृत्वा तत्राधोमुखैरर्द्धचन्द्रैः संवेष्ट्य वध्नीयात् । अधोवदनैरधोमुखैरर्द्धचन्द्रैर्वृतं द्विरिति शेषः । द्वेधा शिशोरुरुदिषां विनिहंति यंत्रमिति वा पठनीयम् । उक्तं च नारायणीये । तारं लुयुग्ममुदकं शिररामिरर्णैः शक्तिर्वृता च शिशुनामवृतो । शशांकौ । अर्द्धेन्दुकैर्बहिरधो वदनैः परीतौ यंत्रं तदा शुशिरोदनमुक्षिणोतीति । व्याख्यातं चापेक्षितार्थद्योतनिकायांम् । देवीं लिखित्वा तन्मध्ये शिशुनाम लिखित्वा ॐ लुलुवं स्वाहेति मंत्रेण तां मालेव वेष्टयित्वा तद्बहिश्चन्द्रमंडलद्वयं विलिख्य एकैकमधोमुखार्द्धेन्दुभिः संभूय वध्नीयादिति । शक्तिर्देवता । ज्वरघ्नमाह । व्योमिति । व्योमार्णं हकारं कीदृशं बिंदुश्च मश्च बिंदुमौ ताभ्यां सहितं सबिंदुमं तस्य तत् आख्याविदर्भितं च सबिंदुमाख्याविदर्भितमालिख्य मध्य इति शेषः तेनः लंसाध्यमाधकनामाचुरविदर्भितं मध्ये लिखेदित्यर्थ एकस्मिन् कोणे लुवयं लिखेत् निबद्धं हस्तादाविति शेषः । तदुक्तं नारायणीये । लुवयं तस्य कोणेषु

रं परमेतदुदीरितम् ॥ ८६ ॥ वार्णे लिखेन् नामशशांकमध्ये टांतं बहिर्भूमिपुरं पुरस्तात् ॥ वृतं यंत्रमिदं समुक्तं वश्यायन्दृणां सकलार्ति शांत्यै ॥ ८७ ॥ सस्वस्तिके दहनगेहयुगे स-साध्यां मायां लिखेत् ललितनागलतादलांतः ॥ पाशांकुशावृतमिदं निशितार्पयेत् योमन्त्रं जपन्व्रजतितं स्वयमेव साध्यः ॥ ८८॥ षट्कोणे निजसाध्यनामसहितां मायां लिखेन्मध्यत-स्तत्कोणेषुविदर्भितामभिलिखेत् शक्तिं स्वसाध्याख्यया ॥ बाह्ये भूमिपुरं सकोणमदनं तां-बूलपत्रे कृतं जप्तं खादयतुः प्रियांनिशि भवेत्सा तस्य वश्याचिरम् ॥ ८९ ॥ शक्तौ नाम लिखेत् चतुर्भिरभितोबीजैः समावेष्टयेत् वीतं शक्तिमनोभवांकुशमनुंमो बीजकैः पिष्टजे ॥ रूपे साध्यनरस्य जप्तपवने त्रिस्वादुना भर्ज्यतत्खादेत् तस्य वशं प्रयाति नियतं साध्यः सदा दासवत्॥९१॥कामंलिखेत्साध्ययुतसरोजे स्वरोल्लसत् केसरपर्गपत्रे॥उदीरितं मन्मथमंत्र-मेतत्सौभाग्यलक्ष्मी विजयप्रदायि ॥९१॥ काश्मीररोचना लाक्षामृगे भमदचन्दनैः ॥ वि-लिखेत् हेमलेखन्या यंत्राण्येतानि देशिकः ॥ ९२ ॥ भूमि स्पृष्टं शवस्पृष्टं दग्धंनिर्माल्य सं-गतम् ॥ विशीर्णं लंघितं मन्त्री यंत्रं जातु नधारयेत् ॥ ९३ ॥ अथानंदमयीं देवीं शब्दब्र-ह्मस्वरूपिणी ॥ ईडे सकलसंपत्यै जगत्कारणमंबिकां ॥ ९४ ॥ आद्यामशेषजननीमरविंद-योनेर्विष्णोः शिवस्य च वपुः प्रतिपादयंतीम्॥ सृष्टिस्थितिक्षयकरीं जगतां त्रयाणां स्तुत्वा-गिरिविमलयाम्यहमं बिके त्वां ॥९५॥पृथ्व्या जलेन शिखिना मरुतां वरेण होत्रेन्दुना दिन-करेण च मूर्तिभाजः ॥ देवस्य मन्मथरिपोरपि शक्तिमत्तां हेतुस्त्वमेवखलु पर्वतराजपुत्रि ॥ ९६ ॥ त्रिः स्रोतसःसकललोकसमर्चितायां वैशिष्ट्य कारणमवैमि तदेव मातः ॥ त्वत्पा-दपंकजपरासु विचित्रितासु शंभोर्जटासुसततं परिवर्तनं यत् ॥ ९७ ॥ आनंदयेत् कुमुदिनी पधिपः कलानां नान्यामिनः कमलिनी मथनेतरां वा ॥ एकस्य मोदनविधौ परमेकं ईष्टेत्वं

---

मध्ये च सविषं वियत्। आख्याविदर्भितं यंत्रमेतत्सर्वज्वरापहं इति। व्योमदेवता। यंत्रांतरमाह। सार्णमिति। परिलिखेदित्यष्टदलकर्णिकायाम्। अष्टपत्रेष्विति वक्तव्ये वाक्य इति वदंति तेन व्यधिकरणे सप्तम्यौ। तेनाष्टपत्रेषु वह्निभोगीन्द्रयुंसकारं लिखेत्। पत्रमूले केसरस्थाने द्विद्विक्रमेण स्वरा लेख्या इत्यभिप्रायः। तदर्थंकेचिद्वर्णाष्टपत्र इति पठंति। अन्येद्व्यष्टपत्र इति पठंति। अत्र मातृका देवता। ज्वरघ्नमाह। चक्र इति। अंतस्थवर्णान् यरलवान्विलिख्य। क्रमश इत्यनेनैत-दुक्तं। प्रथमावृत्तौ अष्टाविंशतिकोष्ठेषु सबिंदुं यं द्वितीयावृत्तौ विंशतिकोष्ठेषु सबिंदुरं तृतीयावृत्तौ द्वादशसु कोष्ठेषु सबिंदुं लं अंतः कोष्ठचतुष्टये सबिंदुवंइति। लिखनं च तत्तङ्कुतवर्णद्रव्येण भूमा-विति ज्ञेयम्। तदुक्तं नारायणीये। चतुःषष्टिपुटे चैव षट्त्रिंशच्छूलदीपिते। जरानारीत्रयाभानु-कोष्ठेषु वृत्तिषु क्रमात्। लिखेत्सबिंदूनं तस्थात् चक्रं तद्भूस्थमर्चयेत्। नश्यंत्यस्य शयानस्यज्वराः सर्वे विधानत इति। अपेक्षितार्थद्योतनिकायाम्। तत्तद्वर्णद्रव्येण भूमौ लिखित्वा तच्च शय्यामा-यातेति व्याख्यातम्। पद्यग्निभूजलानि देवताः। अन्यदप्याह। पुटितेति। गिरिजापतेर्वनितां मायाम्। शक्तिर्देवता। वश्यकृदाह। वार्ण इति। शशांकमध्ये वकारमध्ये वार्णे इति। व्यधिकरणे

तुमंपंचममभिनंदयासि स्वदृष्ट्या ॥ ९८ ॥ आघ्राप्य शेषजगता नवयौवनासि शैलाधिराज-तनयाप्यति कोमलासि ॥ त्रप्याप्रसूरपितपानसमीक्षितासि ध्येसि गौरमनसो न पथि स्थितासि ॥ ९९ ॥ आसाद्य जन्म मनुजेषु चिराद् दुरापं तत्रापि पाटवमवाप्य निजेन्द्रियाणां॥ नाभ्यर्चयंति जगतां जनयित्रियेत्वां निःश्रेणिकाग्रमधिरुह्य पुनः पतंति॥१००॥ कर्पूरचूर्णहिमवारिविलोलितेनयेचन्दनेन कुसुमैश्च सुजातगंधैः आराधयंतिहि भवानि समुत्सुकास्त्वां ते खल्वशेषभुवनाधिभुवः प्रथंते॥१॥आविश्य मध्यपदवीं प्रथमे सरोजे सुप्ताहिराजसदृशीविरचय्य-विश्वं ॥ विद्युल्लता वलयविभ्रममुद्वहंती पद्मानि पंच विदलय्य खमश्नुवाना ॥ १०२ ॥ तंनिर्गतामृतरसैरभिषिक्तगात्री मार्गेण तेन निलयं पुनरप्य वाप्ना ॥येषां हृदिस्फुरसि जातु न ते भवेयुर्मातर्महेश्वरकुटुंबिनिगर्भभाजः ॥ ३ ॥ आलंबिकुंतलभरामभिरामवक्त्रामापीवरस्तनतटीतनुवृत्तमध्याम् ॥ चिंताक्षसूत्रकलशालिखिताढ्यहस्तामावर्तयामि मनसा तवगौरिमूर्तिम् ॥४॥ आस्थाययोगमविजित्य च वैरिषट्कमावध्य चेन्द्रियगणं मनसि प्रसन्ने ॥ पाशांकुशाभयवराढ्यकरांसुरक्तामालोकयंति भुवनेश्वरि योगिनस्त्वां ॥ ५ ॥ उत्तप्तहाटककनिभैकरिभिश्चतुर्भिरावर्जिता मृतघटैरभिषिच्यमाना ॥ हस्तद्वयेन रुचिरे नलिने वहंती पद्मापि साभयवरा भवासि त्वमेव ॥ ६ ॥ अष्टाभिरुग्रविविधायुधवाहिनीभिर्दोर्वल्लरीभिरधिरुह्य मृगाधिराजम् ॥ दूर्वादलद्युतिरमर्त्य विपक्षपक्षान् न्यक्कुर्वतीत्वमासि देवि भवानि दुर्गा ॥ ७ ॥ आविर्निदाघजलशीकरशोभिवक्त्रां गुंजागुणेन परिकल्पितहारयष्टिं ॥ पत्रांशुकामसितकांतिमनंगतंत्रामाद्यां पुलिंदतरुणीमसकृत्स्मरामि ॥ १० ॥ हंसैर्गतिक्वणितनूपुरदूरकृष्टैर्मूर्तैरिवाढ्य वचनैरनुगम्यमानौ ॥ पद्माविवोर्द्धमुखरूढसुजातनालौ श्रीकंठपत्नि शिरसैव दधेतवांघ्री ॥ ८ ॥ द्वाभ्यां समीक्षितुमतृप्तिमते बदृग्भ्यामुत्पाद्य भालनयनं वृषकेतनेन ॥ सांद्रानुरागतरलेन निरीक्षमाणे जंघे उभे अपि भवानितवागतोस्मि ॥ ९ ॥ ऊरुस्मरामि जितहस्तिकरावलेपौ स्थौल्ये न पांडुरतया परिभूतरंभौ ॥ श्रोणीभरस्यसहनौ परिकल्पदत्तौ स्तंभाविवांबवयसा वमध्यमेन ॥ १० ॥ श्रोण्यौ स्तनौ च युगपत्प्रथयिष्यतोच्चैर्बाल्यात्परेण वयसा परिकृष्णसारः ॥ रोमावलीविलसि तेन विभाव्य मूर्तिर्मध्यस्तवस्फुरतु मेहृदयस्य मध्ये ॥११॥ सख्युः स्मरस्य हरनेत्रहुताशभीरोर्लावण्यवारिभरितं नवयौवनेन आपाद्य दत्तमिवपल्वलमप्रधृष्यं नाभिं कदापि तव देवि न विस्मरेयम् ॥ १२ ॥ ईशोपगूहपिशुनंभासि तंदधाने काश्मीरकर्दममनुस्तनपङ्कजेते ॥ स्नानोत्थितस्य करिणः क्षणलब्धफेनौ सिंदूरतौ स्मरयतः समदस्य कुंभौ ॥ १३ ॥ कंठातिरिक्तगलदुज्ज्वलकांतिधारा शो-

---

सतम्यो। टांतं बहिरिति। ठकारेण वेष्टयेत्। चन्द्रो देवता। स्त्रीवश्यकृदाह। सेति पाशांकुशाहतभिति। षट्कोणां ततः। ललितेति। अखंडतांबूलपत्रे। मंत्रमिति पाशांकुशपुटा शक्तिः एष पक्षः सांप्रदायिकः। तापयेदिति। दीपशिखायाम्। तदुक्तमाचार्यैः हृल्लेखाग्निसथसाध्याद्युमथ बहिरां क्रौं हतं सवह्निगेहद्वंद्वाश्लिस्वस्तिकाद्यं प्रविलिखतु दले यंत्रकं नागवल्याः जप्ता शक्तिं तु

भौ भुजौ निजरिपोर्मकरध्वजेन ॥ कंठमहायरचितौ किलदीर्घपाशौमातर्मम स्मृतिपथं न-
विलंघयेथाः ॥१४॥नृत्यायतं रुचिरकंबुविलासचौर्यं भूषाभरेण विविधेन विराजमानम्॥कंठं
मनोहरगुणं गिरिराजकन्ये संचिंत्य तृप्तिमुपयामि कदापि नाहम् ॥ १५ ॥ अत्यायताक्ष-
मभिजातललाटपट्टं मंदस्मिते न दरफुल्लकपोलरेखम् ॥ बिंबाधरं वदनमुन्नतदीर्घनासं य-
स्तेस्मरत्यसकृदेव सएवजातः ॥ १६ ॥ आविस्तुषारकरलेखमनल्पगंधं पुष्पोपरिभ्रमदलि-
व्रजनिर्विशेषं॥यश्चेतसाकलयते तव केशपाशं तस्य स्वयं गलति देवि पुराणपाशः॥१७॥श्रुति-
सुचरितपाकं धीमतां स्तोत्रमेतत् पठति य इह मर्त्योनित्यमार्द्रांतरात्मा ॥ १९ ॥ स भवति-
पदमुच्चैः संपदां पदनम्रक्षिति पमुकुटलक्ष्मीलक्षणानां चिराय ॥ २० ॥ इति श्रीशारदा-
तिलके चतुर्विंशतितमः पटलः ॥ २४ ॥ अथ योगं प्रवक्ष्यामि सांगं संवित्प्रदायकम् ॥
ऐक्यं जीवात्मनो राहुर्योगं योगविशारदाः ॥ १ जीवात्मनोरभेदेन प्रतिपत्तिं परे विदः शि-
वशक्त्यात्मकं ज्ञानं जगुरागमवेदिनः ॥ २ ॥ पुराणपुरुषस्यान्ये ज्ञानमाहुर्विशार-
दाः ॥ जित्वा दावात्मनः शत्रून्कामादीन्योगमभ्यसेत् ॥ ३ ॥ कामक्रोधौ लोभमोहौ
तत्परं मदमत्सरौ ॥ वदंतिदुः खदानेतानरिषट्वर्गमात्मनः ॥ ४ ॥ योगाष्टांगैरिमा-
न्जित्वा योगिनो योगमाप्नुयुः ॥ यमनियमावासनप्राणायामौ ततःपरं ॥ ५ ॥
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना ॥ अष्टांगान्याहुरेतानि योगिनो योगसाधने
॥ ६ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं कृपार्जवं ॥ क्षमाधृतिर्मिताहारः शौचं चेति यमादश
॥ ७ ॥ तपः संतोष आस्तिक्यं दानं देवस्य पूजनं ॥ सिद्धांतश्रवणं चैव ह्रीर्मतिश्च जपो
हुतं ॥ ८ ॥ दशैते नियमाः प्रोक्ताः योगशास्त्रविशारदैः॥ पद्मासनं स्वस्तिकाख्यं वज्रं भ-
द्रासनं तथा ॥ ९ ॥ वीरासनमिति प्रोक्तं क्रमादासनपंचकं ॥ ऊर्वोरुपरि विन्यस्त सम्य-
क्पादतले उभे ॥ १० ॥ अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः॥ पद्मासनमिति
प्रोक्तं योगिनां हृदयंगमं ॥ ११ ॥ जानूर्वोरंतरे सम्यक्कृत्वा पादतले उभे ॥ ऋजुकायो
विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥ १२ ॥ सीमन्याः पार्श्वयोर्न्यस्येद्गुल्फयुग्मं सुनिश्चलं ॥
वृषणाधः पार्श्वपादौ पाणिभ्यां परिबंधयेत् ॥ १३ ॥ भद्रासनं समुद्दिष्टं योगिभिः पूजितं
परं ॥ ऊर्वोः पादौ क्रमान्न्यस्यज्जान्वोः प्रत्यङ्मुखांगुली ॥ १४ ॥ करौ निदध्यादाख्यातं
वज्रासनमनुत्तमं ॥ एकपादमधः कृत्वा विन्यस्योरौ तथेतरं ॥ १५ ॥ ऋजुकायो विशेद्योगी

---

पाशां कुशलिपि सहितां तापयेद्दीपवन्हौ नक्तं भक्तानतां गीस्स्मरशरविवशाप्रेमलीलाभियातीति ।
शक्तिर्देवता । अन्यदप्याह । षडिति । अत्रापि शक्तिर्देवता । तांबूलपत्रे कृतमिति । कोकिलाच-
कंटकैरिति शेषः । जप्तं माययेति शेषः । अन्यत्र तु विशेषः कामस्य षट्कोणेषु लेखनं साध्याविद-
र्भितशक्त्या बहिर्वेष्टनमिति । मूले वा लिखेच्च स्तरमिति पाठः सांप्रदायिकः । तदुक्तमाचार्यैः । श-
क्तिस्थं निजनाम वह्निभवनद्वंद्वोदरे मान्मथं बीजं साध्यविदर्भयापरिवृतं शक्त्या बहिः पार्थिवम् ।
तत्कोणस्मरमन्यपुष्टनयनप्रोक्तैः पुनः कंटकैस्तांबूले लिखिताभिजप्तभदयेयोषिन्मनोमोहनमिति ।

वीरासनमिती रितं इडया कर्षयेद्वायु बाह्यं षोडशमात्रया ॥ १६ ॥ धारयेत्पूरितं योगी च तुः षष्ठ्या तु मात्रया ॥ सुषुम्ना मध्यगं सम्यक् द्वात्रिंशन्मात्रयाशनैः ॥ १७ ॥ नाड्या पिंगलयाचैनं रेचयेद्योगवित्तमः ॥ प्राणायाममिदं प्राहुर्योगशास्त्रविशारदाः ॥ १८ ॥ भूयो भूयः क्रमात्तस्य व्यत्यासेन समाचरेत् ॥ मात्रावृद्धिक्रमेणैव सम्यग्द्वादशषोडश॥ १९ ॥ प्राणायामो हि द्विविधः सगर्भोगर्भएव च ॥ जपध्यानादिभिर्युक्तं सगर्भतं विदुर्बुधाः ॥ २०॥ तदपेतं विगर्भं च प्राणायामं परे विदुः ॥ क्रमादभ्यसतः पुंसां देहे स्वेदोद्गमोधमः ॥ २१ ॥ मध्यमःकंपसंयुक्तोभूमित्यागः परो मतः । उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते ॥ २२ ॥ इंद्रियाणां विरचतां विषयेषु निरर्गलं ॥ बलादाहरणं तेभ्यः प्रत्याहारो भिधीयते ॥ २३ ॥ अंगुष्ठगुल्फजानूरु सीवनीलिंगनाभिषु ॥ हृद्ग्रीवाकंठदेशेषुलंबिकायां ततोनसि ॥ २४ ॥ भ्रूमध्य मस्तकेमूर्द्ध्नि द्वादशाते यथाविधि ॥ धारणं प्राणमरुता धारणेतिनिगद्यते ॥ २५ ॥ समाहिते नमन सा चैतन्यां तरवर्तिना॥आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥ २६ ॥ समस्तभावना नित्यं जीवात्मपरमात्मनोः ॥ समाधिमाहुर्मुनयः प्रोक्तमष्टांगलक्षणम् ॥ २६ ॥ षण्णवत्यंगुलायामं शरीरमुखयात्मकं गुदध्वजांतरे कंदमुत्सेधाद्द्व्यंगुलंविदुः ॥ २७ ॥ तस्य द्विगुणविस्तारं वृत्तरूपेण शोभितम् ॥ नाड्यस्तत्रतमुद्भूतामुख्यास्तिस्रः प्रकीर्तिताः ॥ २८ ॥ इडावामे स्थिता नाडी पिंगलादक्षिणे मता ॥ तयोर्मध्यगतानाडी सुषुम्ना वंशमाश्रिता ॥ २९ ॥ पादांगुष्ठद्वयं याता शिफाभ्यां शिरसा पुनः । ब्रह्मस्थानं समापन्नासोमसूर्याग्निरूपिणी ॥ ३०॥ तस्यामध्यगता नाडी चित्राख्या योगी वल्लभा। ब्रह्मरंध्रं विदुस्तस्यां पद्मसूत्रनिभंपरम् ॥ ३१ ॥आधारांश्चविदुस्तत्र नतद्भेदादनेकधा दिव्यमार्गमिदं प्राहुरमृता नंदकारणम् ॥ ३२ ॥ इडायां संचरेच्चंद्रः पिंगलायां दिवाकरः॥ ज्ञातौ योगनिदानज्ञैः सुषुम्नायां तु तावुभौ ॥ ३३ ॥ आधारकंदमध्यस्थं त्रिकोणमतिसुंददरम् ॥ ज्योतिषां निलयं दिव्यं प्राहुरागमवेदिनः ॥ ३४ ॥ तत्र विद्युल्लताकारा कुंडलीपरदेवता ॥ परिस्फुरति सर्वात्मा सुप्ताहिसदृशाकृतिः ॥ ३५ ॥ बिभर्ति कुंडली शक्तिरात्मानं हंसमाश्रिता ॥ हंसः प्राणाश्रयोनित्यं प्राणो नाडी समाश्रयः ॥ ३६ ॥ आधारादुद्गतो वायुर्यथावत्सर्वदेहिनां ॥ देहं व्याप्य स्वनाडीभिः प्रयाणं कुरुतेबहिः ॥ ३७ ॥ द्वादशांगुलमानेन तस्मात्प्राण इतीरितः ॥ रम्ये मृद्वासने शुद्धे पटाजिनकुशोत्तरे ॥ ३८ ॥ ब-

---

स्वदयत्वित्यज्ञातमेवस्त्रिया विदितं भक्षितं नवशयत्वेव । एवमन्यथा प्रयोगेष्वपि साध्या मन्त्रायैव । देयमिति रहस्यं । तत्रांतरे । वायोरष्टममग्निबिंदुसहितं संरुठमायाक्षरं मध्ये संस्थितसाध्यनामवलयद्वन्द्वाहृतंबाह्यतः । तद्बाह्ये दलषोडशस्वरयुतं पश्चान्महीमंडलं कोणे कल्पितकामबीजकमिदं यंत्रं जगद्वश्यकमिति । अन्यत्र तु । हृल्लेखामध्यसाध्यं वलययुगयुतं चाष्टपत्रं सरोजं यंत्रे तद्बीजमस्थं बहिरपि च दलैः षोडशैराद्यमब्जम् । प्रत्यस्यालिख्य पत्रे स्वरगणनमितं पार्थिवाख्यं कोणे चिंकारयुक्तं सकलजनमनोहारिकूष्मांडयंत्रमिति । अत्र तु । शक्तिमध्यं निजनाम वह्निभवनं षट्कोणयुक्तं

ध्वैकमासनं योगमार्गपरो भवेत् ॥ ज्ञात्वा भूतोदयं देहे विधिवत्प्राणवायुना ॥ ३९ ॥ तत्तद्भूतं जपेद्देहं दृढत्वा वाप्तये सुधीः ॥ दंडाकारागतिर्भूमेः पुटयोरुभयोरधः ॥ ४० ॥ तोयस्य यावकस्योर्द्ध्वगतिस्तिर्यङ्नभस्वतः ॥ गतिर्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः॥४१॥ धरणोरुदये कुर्यात्स्तंभनं वश्यमात्मवित् ॥ शांतिकं पौष्टिकं कर्मतोयस्य समयेवसोः ॥ ४२॥ मारणादीनिमरुतो विपक्षोच्चाटनादिकम् ॥ क्षेडादि नाशनं शस्तमुदये च विहायसः॥४३ ॥ अगुलीभिर्दृढं बध्वा करणानि समाहितः ॥ अंगुष्ठाभ्यमुभे श्रोत्रे तर्जनीभ्यां विलोचने ४४ नासारंध्रे मध्यमाभ्यां मन्या भिर्वदनं दृढं। बध्वात्मप्राणमनसामेकत्वं समनुस्मरन् ॥ ४५ ॥ धारयेन्मारुतं सम्यग्योगोयं योगिवल्लभः ॥ नादः संजायते तस्य क्रमादभ्यसतः शनैः ४६ मत्तभृंगांगनागीतसदृशः प्रथमोध्वनिः ॥ वंशिकास्यानिलापूर्णवंशध्वनिनिभोवरः ॥ ४७ ॥ घंटारवः समः पश्चाद्घनमेघसमोपरः ॥ एवमभ्यसतः पुंसः संसारध्वांतनं ॥ ४८ ॥ ज्ञानमुत्पद्यते पूर्वंहंसलक्षणमव्ययं ॥ पुंप्रकृत्यात्मकौ प्रोक्तौ विंदुसर्गौ मनीषिभिः ॥ ४९ ॥ ताभ्यां क्रमात्समुद्भूतौ विंदुसर्गावसानकौ ॥ हंसौतौ पुंप्रकृत्याख्यौ हंपुमान्प्रकृतिस्तुसः॥५० अजपाकथिताताभ्यां जीवोयमुपतिष्ठते ॥ पुरुषं स्वाश्रयं मत्वा प्रकृतिर्नित्यमात्मन ॥ ५१ ॥

---

लिखेत् क्लींकारं परितो विदर्भ्य मतिमान् साध्येन नाम्नां कुशं । एतत्कण्टकसूचितं सुविपुलेनागस्यदृष्टं लिखेत्पश्चान्मारुतवेश्मना परिहृतं योषिन्मनोमोहनमिति । कृत्वा षट्कोणमध्यं विपदनलयुतं बिंदुमायां विचित्रं तत्कोणेष्वंकुशाख्यं पुनरपिकमलं शक्तिगर्भाष्टपत्रं । पश्चात्तद्युग्मपत्रं रजनिकरकलालं कृतं गोपुरस्थं भूर्ज्जे गोरोचनासृङ्जमदरचितं वश्यमाहुर्मुनीन्द्रा इति । तत्रांतरे। आचार्योक्त । शांतं शिखोलवयुतं दहनांशसाध्यं मायां ससाधकमथाभिहतं कलाभिः मध्योल्लसद्विमुखगूलमिदं तु भर्त्यं यंत्राद्वयं नरनतांगिवशीकरं स्यात् मृत्काराङ्गुलिकात्तयासकृत्कला सांतर्वसायुतया साध्यस्यांघ्रिरजोयुजामृदुम्रदाक्लृप्तस्य शक्तिं हृदि । रूपस्याभिविलिख्य तद्विवरके साध्यं तदीराम्प्रतिष्टाप्याजप्य निखन्य तत्र दिनशो मेहेच्चिरं वश्यकृदिति वश्यकृदाह शक्तिविति साध्य नरस्य पिष्टजे रूपे प्रतिकृतिहृदय इत्यर्थः । शक्तिं विलिख्य तत्र कर्मसहितं साध्यनामालिख्यतां शक्तिं चतुर्भिर्बीजैर्वेष्टयेत् । तत्र केचनोपदेशानन्तसिंहचिंतामणिशक्तिदुर्गाबीजानीत्याहुः । अन्ये तु चतुर्भिर्बीजैः समावेष्टयेदित्युक्तं तदेव विशदयति वीतं शक्तीत्यादिना । पुनः श्लोकोक्तैश्चतुर्भिर्बीजैर्वीतं कुर्यात् । अत्र केचन मरुच्छ्रीवीजकैरिति पठित्वायमिति पंचमं वदंति । तदसंगतं । तंत्रांतरविरोधात् : यदाहुः । शक्त्यंतः स्थितसाध्यनामपरितो बीजैश्चतुर्भिः समा बद्धं शक्तिमनोभवांकुशलिपिप्रोंभिः समावेष्टितमिति । अत्र पद्मपादाचार्यैर्व्याख्यातं समावेष्टितमिति । समावद्धमित्यस्य व्याख्येति केचिच्चतुर्भिः शक्तिबीजैरित्याहुः । जसपवनं प्रतिष्ठितप्राणं । शक्तिर्देवता । यंत्रांतरमाह । काममिति । अत्र कामो देवता । कानि चित् सिद्धयंत्राणि सिद्धयोगीश्वरी मतात् । सर्व्वलोकानुग्रहावलिखंरतेत्र मयास्फुटं । कर्णिकायां लिखेन्नामपुटितं माययाबहिः । अष्टपत्रेषु विन्यस्य नामाघोरेश्वरीवृतं । अघोरेश्वरि हुं फट् मंत्रः प्रोक्तो यवेदिकः । द्वात्रिंशदत्त

राघोरंद्राष्टपत्रेषु बाह्यतः । त्रिगुणंमायया वेष्ट्य रेखांते क्रीं नियोजयेत् । भूतप्रेतपिशाचानां शाकिनीग्रहरत्तसां । दोषं बाहुस्थिता हंति रक्षेयं विधिना कृता । कर्णिकायां लिखेन्नाम तदत्तराचरं मनुं । अष्टपत्रेषु मायां च कांस्यपात्रेषु निर्मले । रोचनालिखिते यंत्रे चीरमध्ये निवेशिते । सवशो जायते तस्य माया तारपुटामनुः । क्ष्माबीजपुटितं नाम लिखेत्पत्रचतुष्टये । तस्मिन्नाज्ये विनिक्षिप्ते गृहांतर्वाबिलंविते । शांतिर्लक्ष्मीर्यशः पुष्टिः सततं तस्प्रजायते । नव्याधिर्नभयं शत्रुर्यंत्रसामर्थ्ययोगतः । ज्वालावृतं त्रिकोणेषु हुं युतं वह्निमंडलं । रेफेण पुटितं नाम मध्ये शतधा बहिर्वृतं । श्मशानकर्प्पटे किंवा कपाले लिखितं द्रुतं । तापितं वैरिणः कुर्याज्ज्वरं रौद्रं न संशयः । पद्ममष्टदलं मध्ये नाम संलिख्य दिक्षुधः । हुं विदिक्षु स्थिता चीरेरक्षायूतेजयांवहा । नमोमंडलमध्यस्थं नामबाह्येथ षोडश । स्वरास्तद्बाह्यतो ज्वाला जटिलं वह्निमंडलं श्मशानकर्प्पटे लेख्यं धत्तूरस्य रसेन च । प्रेतभू निहितं यंत्रमिदं सौभाग्यनाशनं । कर्णिकायां लिखेन्नाम चतुः पत्रे तु क्लीं कजे । रोचना हस्तिदानाभ्यां कुंकुमेन शुभे दिने । वेष्टयित्वाऽथसिक्थेन धृतयंत्रे धृतेसति । सौभाग्यमतुलं स्त्रीणां जायते जीविताववधि । अष्टपत्रांबुजे मध्ये सविसर्गमवेष्टितं । नामतद्बाह्यपत्रेषु सपरः सविसर्गकः । रोचनाकुंकुमेनेदं यंत्रं संलिख्य दापयेत् ! कारागृहगतोयस्तुतस्य मोक्षः प्रजायते । अष्टपत्रांबुजे मध्ये नाम क्लीं दिग्दलेषु च । । क्रोमन्यतो लिखित्वा तु यंत्रं देवकुले धृते । व्याधिना मुच्यते प्राणी बलंचाप्नोति दुर्बलः । चतुरस्रे शिरोहीनहकारोदरसंस्थितं । नाम तद्बाह्यतो लेख्यं भूपुरं कोणशक्तिगं । काकपिक्षस्य लेखन्यालिखित्वेदंशरावके । संपूर्य्याधोमुखं भूमौ मूर्छिते तस्य चोपरि । विवादे दुष्टचित्तानांविपरीतार्थभाषिणां । मुखस्तंभो भवेत्पुंसां सभायां वाजयोध्रुवं । लकारपुटितं नाम तस्योर्ध्वाधशूलद्वयं । चतुरस्रद्वयं बाह्ये वृतं सर्वत्र शक्तिभिः । भूर्ज्जे रोचयालिख्य गुप्तदेशे धृते सति । शतयोजनमध्वानं गच्छतो न भयं भवेत् ११ अष्टपत्रांबुजे मध्ये नाम क्लीं दलसंचये । बहिर्वृत्तद्वयं भूर्ज्जे लिखेत्कुंकुमगोमृदा । अजितानामविद्येयं संग्रामे विषमे ध्वनि । भूपालादिभये रक्षां कुरुते बाहुसंस्थिता । प्रणवद्वयमध्यस्थं नाम मध्ये चतुर्द्दले । त्रयः पश्चिमदिक् पत्रे प्रणवाः पूर्व्वतस्त्रयः । एकैकमुत्तरे रक्षे भूर्ज्जे रोचनया लिखेत् । जीवरक्षेयमाख्याता व्याधौ जातेतिदुःसहे । वं चतुष्टयमध्यस्थं नाम मध्ये ततो बहिः । अष्टपत्रेषुरं लेख्यं रोचना चंद्रकुंकुमैः । इयं वैश्वानरी रक्षा बालानां कंठसंस्थिता ॥ १४ ॥ वृत्तमध्यस्थितं नाम तद्बहिश्चतुरस्रकं । तद्बाह्ये स्युः स्वराः सर्वे तद्बहिर्वृत्तमालिखेत् । तत्र द्वादशपत्राणि कल्पयेदेतदंतरे । वं चीं वं चोति रक्षेयं पंवदिग्यनिरोधिनी । ज्वालावृत्तत्रिकोणांतर्नाम जूं पुटितं बहिः । वेष्टितं सविसर्गैस्तद्बहिर्वह्निमंडलं । ज्वालाकुलमिदं भूर्ज्जे गोमृदाकुंकेमेन च । लिखित्वा स्वकरे बद्धं ज्वरं चातुर्थिकं हरेत् । वृत्तांतः संस्थितं नाम वह्निरो क्लीं नमो क्षरैः । वेष्टितं त्वथ तद्बाह्ये कोणे लं वह्निमंडले । तद्बाह्ये क्ष्मापुरं वीतं चतुः कोणेषु शक्तिभिः । एकांतरं ज्वरं हंति रक्षेयं बाहुसंस्थिता । कर्णिकायां लिखेन्नाम क्रूं बीजानिदलाष्टके । रोचनाचंदनेनेदं द्व्याह्निकज्वरनाशनं । षट्कोणमध्यतो नाम क्रूं कोणेषु समालिखेत् । भित्तौ खटिकयादृष्टं सततज्वरनाशनं । वसमेतिपदं वायुदीक्षात्यमनिलं शिरः । एतत्स्तंभनकृन्मंत्रमैरंदुमथाबजदलायितुं । ताले

मेंदो लिखेद्यद्वैरिनामेंदुदर्भितं सेनामार्गे खनेदेतत्सैन्यस्तंभनमुत्तममिति । नारायणीयं च लिखनद्रव्याख्याह । काश्मीरेति । काश्मीरं कुंकुमं । रोचना गोरोचना । लाक्षा यावकः । अनेनैव सर्वेषां वर्षणं । मृगमदः कस्तूरी । इभमदो गजमदः । एभिर्मिलितैरेव लेखनं । यदाहुः । गजमृगमदकाश्मीरैर्मिश्रितमः सुरभिरोचनायुक्तैः लिलिखेदलक्तकरसालुलितैर्यंत्राणि सकलकार्यार्थीति । अन्यत्र द्रव्यविशेषोप्युक्तः । नागेंद्रमदमुक्तौवै तथावश्ये च रोचना । विषधूरयुक्तेन चितांगारेण सतुषां । ताडनोच्चाटनादीनि क्षुद्रकर्माणि साधयेत् । विषार्काक्षीरगुंजायाः संयोगे मारणं स्मृतमिति । हेमलेखन्येति शुभकर्मादौ । अन्यकर्मणितु षट्कर्मोक्ता लेखन्यो द्रष्टव्याः । लिखनं च साक्षादुपात्ताधारस्थलं विना अन्यत्र कांचनरजतताम्रपत्रभूर्जादिषु ज्ञेयं । तत्र कालविशेषोपि पूर्वोक्तोनुसंधेयः । अन्यत्राधारविशेषा अप्युक्ताः । शांतिके पौष्टिके चैव आयुःकामविधौ तथा । सर्पोपशमने चैव जलपसंस्तंभने तथा । विभ्रमोत्पादने चैव शिलायांतु प्रशस्यते । खड्गचर्मणि विद्वेषमद्दउच्चाटनध्वजे । ज्वरसंतापशोकंच शत्रूणां मारणं तथा । लिखित्वा साधयेत्सर्वं पीतवस्त्रे तु नान्यथेति । तथामुहूर्त्तादि विशेषोपि तंत्रांतभक्तो लिख्यते । सुदिने शुभनक्षत्रे सुदेशे शल्यवर्ज्जिते । सशिष्यस्तत्र आचार्य शिष्यो वा तदभावतः । उदङ्मुखः प्राङ्मुखो वा उपविश्य प्रणम्य च । गुरुं विश्वेश्वरं देवं ततो यंत्रं समालिखेदिति । कामनाविशेषे नक्षत्रविशेषोपि तत्रैवोक्तः । वश्याकृष्टौ लिखेत्पुष्ये हिमे विद्वेषणं स्मृतं । आर्द्रायां मारणं प्रोक्तं मघासूच्चाटनं भवेदिति । अहिमे अश्लेषायां । तत्रैव धारणे स्थानविशेषोपि । करे कंठे शिखायां च यथा संनिहितं भवेदिति । इमानि पूर्व्वोक्तान्यपि यंत्राणि यस्मै कस्मै यथाकथं चिन्न देयानि । तदुक्तं हिरण्यगर्भसंहितायां । त्वयापुत्रनदातव्यं यंत्रमेतन्महोदयं । नाशिष्याय न यायाय नशांतायाप्रियाय च । शिष्याय मंत्रनिष्टाय शुभभक्तियुताय च । वसुप्रदाय दातव्यमन्यथानरकं व्रजेदिति भूमिस्पृष्टमिति । साक्षात् । ईडे स्तौमि । वपुः प्रतिपादयंतीमिति । एषां विग्रहत्वे कारणम् । अतएवाग्रिमे विशेषणं । अहं त्वां स्तुत्वा गिरं विमलयामीति संबंधः । पृथ्वेत्यष्टमूर्त्युपन्यासः । शक्तिमत्तेति । अन्यथा संगस्योदानसात्वानान्यांकमलिनीं नेतरां कुमुदिनी । आद्येत्यादि विरोधाभासचतुष्टयं । न समीचिता इयत्तयानज्ञातेति परिहारः । मनसो न पथिस्थितेति । अचिंत्यरूपेति परिहारः मनुजेष्विति मनुष्याधिकारत्वाच्छास्त्रस्य अधिभुवो नायकाः । अधिभूर्नायकोनेतेति कोशः । आविश्येति । मध्यपदवीं । सुषुम्णामध्यमार्गं । विद्युल्लतेति कुंडलीरूपां । प्रथमे सरोजे आधारे । अत्र प्रथमं इत्याद्युद्दहंतीत्यंतमनूद्यमध्यपदवीमाविश्य पंचपद्मानि विदलय्येत्यन्वयः । पंचपद्मानि । स्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानि । खं ब्रह्मरंध्रं । चिंता ज्ञानमुद्रा । आलिखितं पुस्तकं । इदं सरस्वतीरूपध्यानं । योगादीनां लक्षणमरिषडर्गमनंतरमेव वक्ष्यति । अनंगतंत्रां । कामप्रधानां । हंसैरित्यादिना । चरणादि मूर्द्धांतवर्णना । वचनं शब्दः । अबले योगव्यः । मध्यमेन वयसा यौवनेन १८ पल्वलमल्पसरः । पिशुनं सूचकं । भसितं भस्म । कंठातिरिक्तेति । हरकंठादिति रिक्तो अधिको बंधनोयादधिकेनैव पाशेन बंधनं घटते । यद्वाकंठात्पार्वतीकंठात् । अतिरिक्ते अधिके अतरत्र गलंत्यो उज्ज्वले ये कांतिधारे तदच्छोभायपोस्ती । कंबुः शंखः । अभिजातं । मुं-

दरं । दरमोषत् । सएव जातस्तस्यैव सार्थकं जन्मित्यर्थः । पुराणपाशः अविद्यारूपः । धीमतां शुच्योः कर्णयोः सुचरितपाकं ॥ इति श्रीशारदातिलकटीकायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां चतुर्विंशः पटलः ॥ २४ ॥ ॥ लैंगीक्रियामंत्रवती स्ववेधज्ञानाह्वयाः पंचमत्वंति दीक्षाः चतुर्विधास्ताः समयाभिधानसामान्यनिर्वाणविशेषदीक्षाः । एवं दीक्षासु सर्वासु गुरुः शिष्यं प्रबोधयेत् । बोधितो बोधितश्चेत्स्यान्नान्यथा दीक्षितो भवेदित्युक्तेर्योगं विनादीक्षया अनिर्वाहात्सूर्यमंत्रादौ च प्रयोगविषये अनेकेयोगप्रकारा उक्तास्तेषां च ज्ञानाय योगं वक्तुं प्रतिजानीते अथेति सांगं यमनियमादिषुक्तं संवित्प्रदायकं नित्यानंदानुभवरूपमोक्षदायकमित्यर्थः । एते नात्मविशेषगुणोच्छेदो मोक्ष एतन्मतं निरस्तं । सुखाभावस्य पुरुषार्थत्वाभावात् । वेदांतपक्षमाश्रित्याह । ऐक्यमिति । तत्त्वमसीत्यादि श्रुतिसिद्धं । यत्प्रयोगसारे । निष्कलस्याप्रमेयस्य देवस्य परमात्मनः । संधानं योगमित्याहुः संसारोच्छित्ति साधनमिति । शिवप्रोक्तसूत्रमतप्रवृत्तप्रत्यभिज्ञादि ग्रंथमतमाह । शिवेति । प्रतिपत्तिर्ज्ञानं । परे शैवाः । तदुक्तं शिवसूत्रवृत्तौ । धीः सात्त्विकोविमर्शेन जायते नियतात्मनः । चंक्रमंती शिवं प्राप्य लीयते चेंद्रियैः सहेति । त्रिकभेदेपि । सत्त्वस्थश्च रजस्थश्च तमस्थो गुणवेदकः । एवं पर्यटते देही स्थानात्स्थानांतरं व्रजन् । तमान्नोदयरूपेण मनोहं बुद्धिवर्त्मना । पुर्य्यष्टकेन संरुद्धो दुःखं तत्प्रयोद्भवं । भुंक्ते परवसो भोगं तत्र स्थं संहरेच्छिव इति । स्वच्छंदभैरवेपि । अणुमात्रं शिवानंदस्फुरणं सर्वदोषहृत् । मनस्त्वयविनाशाच्च मायागच्छेत्समूलत इति । आनंदभैरवेपि । प्राणादिभावनं त्यक्त्वा तथा तद्दृश्यसंपदः स्वात्मभावेन चिंतेन विशेच्छिवपदं शनैरिति । उत्तराम्नाय मतमाह । शिवेति । शिवशक्त्यात्मकं ज्ञानं शिवशक्त्योरभेदज्ञानमित्यर्थः यदाहुः । एषाबोधमयी शक्तिः परमानंदरूपिणी । सत्वादि गुणसंबद्धास्वमायांतर्गता विभुः समस्ततत्वजातानामिहसृष्टेरनंतरं । सर्वैः शरीरैस्तत्संस्थैरपिमत्यैः परस्परं । अनाद्यभ्याससंबद्धं विस्मृत्यात्मस्वरूपिणी । शिवात्मका भवेदेषा देवीसबलिना शिवेति । भेदवादिवैष्णवादि मतमाह । पुराणेति । पुरुषः सांख्यमते ईश्वरोन्यायमते । नारायणो वैष्णवमते । तत्परिचयो योगः तत्र पूज्यत्वात्प्रथमोपन्यस्तत्वाच्च प्रथमं मतं ग्रंथकृत्संमतमिति गम्यते । कामेति । स्त्रीभोगाद्यभिलाषः सत्वादिजिघांसाक्रोधः धनादितृष्णा लोभः तत्वज्ञानं माहः अहं सुखी धनी विद्यावानिति गर्वः मदः अन्यशुभद्वेषो मत्सर इति । दुःखदानेनात्मशोरिषड्वर्गमाहुरित्यन्वयः आत्मस्वरूपचिंतनव्यापातिरोधाने न तेषां शत्रुत्वं । एतज्जयोपायमाह योगेति ताज्याहयममिति । क्रमादेषां स्वरूपमाह । अहिंसतिन कंचनहन्मीत्याभासप्रवणता हिंसा असत्यं न वच्मीत्यभ्यासप्रवतचित्तता सत्यं । चौर्यनिवृत्तिरस्तेयं । स्त्रीभोगेच्छा निवृत्तिर्ब्रह्मचर्यं । प्राणिषु क्रूरबुद्धिनिवृत्तिः कृपा । चित्तकौटिल्यनिवृत्तिरार्जवं । अभिभावकं प्रत्यक्रोधप्रणवचित्तता क्षमा । इष्टवस्त्वाद्यलाभनश्चिंताभावे धृतिः क्रमेणाहाराय कर्षणाद्यावच्छरीरस्थितिमात्रभाजनं मिताहारं चित्तनैर्मल्यार्थं यथोक्तशौचशीलता शौचं यमा इति यमुउपरमकामादिनिवृत्तिरूपा इत्यर्थः तत्र धृतिः सर्वत्रानुषक्ताता । अहिंसा ब्रह्मचर्य्याभ्यां कामस्य जयः कृपाक्षमाभ्यां क्रोधस्य अस्तेयसत्यार्जवेभ्यो लोभस्य मिताहारशौचाभ्यां मोहस्य क्षमार्जवाभ्यां मदस्य अहिंसाकृपार्जवक्षमाभ्योमत्सरस्य इत्यन्यददि यथायथमूह्यं । तदुक्तं संहितायां सर्वेषामपि जंतूनां मलंशजन

ननं मुने वाङ्मनः कर्मभिर्नूनमहिंसेत्यभिधीयते । यथादृष्टश्रुतार्थानां स्वरूपकथनं पुनः सत्यमित्युच्यत इति तृणादेरप्यनादानं परस्वस्य तपोधन अस्तेयमिति अवमथास्वपि सर्वासु कर्मणा मनसा गिरा । स्त्रीसंगतिपरित्यागो ब्रह्मचर्यं प्रचचते । परेषां दुःखमालोक्य स्वस्यैवालोक्य तस्य तु । उत्मादनानुसंधानं दयेति।व्यवहारेषु सर्वेषु मनोवाक्कायकर्मभिः सर्वेषामपि कौटिल्यराहित्यत्वार्जवं भवेदिति । सर्वात्मना सर्वदा वापि सर्वत्रस्यापकारिषु बंधुष्विव समाचारः चमात्मा दिति । इच्छाप्रयत्नराहित्यं जातेषु विषयेष्वपि । लोभवत्त्युष्टतिमिति । मौजास्यैव चतुर्थांशभोजनं स्वच्छचेतसः हितं मध्यं सुतीक्ष्णेनमिताहारं प्रचचते । निर्गतं रोमकूपेभ्यो नवरंध्रेभ्य एव च मलं वदंति द्वाराणां चालनं शौचमुच्यते । भृकुलाभ्यां बहिः सम्यगांतरंत्वथवा पुनः पूर्वोक्तभूतशुध्यं तशौचमाचचते बुधा इति । तपइति कृच्छ्रादिव्रतचर्य्या तपः वह्निष्टतरानभिलषाः संतोषः अस्ति परलोक इति मति र्यस्य स आस्तिकस्य भाव आस्तिक्यं परलो कबुध्या धर्माद्याचरणमिति यावत् । यथाविभवंदेव पितृमनुष्योद्देशेन वितरणं दानं । देवस्य पूजनमुक्तरोत्या नुष्टादेवामोचोपाय प्रवृत्तस्य विघ्नाभावायभवंति । सिद्धांत उपनिषन्मोचोपायोपदेशपरिमलादिशास्त्रं तस्य श्रवणं परिमलादि कुत्सिताचारात्स्वतउद्वेगो ह्रीः तथासति चित्तमालिन्येन ज्ञानानुदयात् । मतिर्मननं तथाच स्मृतिः श्रोतव्यः श्रुतिवाक्येभ्यो मंतव्यश्चोपपत्तिभिरिति जपइत्युक्तप्रकारेण । जायतो नास्ति पातकमित्युक्तेः चित्तशुद्धावुपयोगात् । हुतमग्निहोत्रादि होमः पदकरणे प्रत्यवायान्वित्तमालिन्य ज्ञाना नुदयात् । यद्वाहुतं मंत्रजयस्य दशांशहोमः तथाचोक्तं । नाजपात्सिध्यते मंत्रो नाहुताच्च फलप्रदः अनर्चितो हरेत्कामान् तस्मा[illegible]तयमाचरेत् इति नियमा इति अवश्यकर्त्तव्यतया नियमत्वमेषां । अतः कदाचिदालस्यादिना त्यागो न कार्यः तदुक्तं संहितायां । तपस्त्वनशनं नाम विधिपूर्वकमिष्यते । अनायासोपवासेनत्वप्त्यर्थं मैत्ररसेवनं तुष्टिरेवेति । श्रुत्याद्युक्तेषु विश्वास आस्तिक्यं संप्रचचते । यदिष्टदेवतां ध्यात्वा तदर्पणप्रियान्वहं । सत्पात्रे दीयते श्रादितद्दानमभिधीयते । इष्टदेवार्चनं सम्यक्विधिपूर्वकमन्वहं । त्रिसंध्यमेकदा वा तु भवत्येव तदर्चनं । वैष्णवागमसिद्धांतश्रवणंश्रवणं तथा।श्रुत्यादिभिर्लौकिकैश्च यदत्यतविनिंदितं।तत्राप्रवर्त्तनं लज्जेति तर्कैर्यदनुसंघातं सम्यक् शब्दस्थितोरपि । शास्त्रोक्तयोर्मतिरियमिति । गुरोर्लब्धस्य मंत्रस्य शश्वद्रावर्त्तनजपः द्रव्यैः कल्पोदितैर्होमो हुतमिति । आसनपंचकमिति स्थितं श्रमस्तस्मादौ दंडवत्पतितं तुनिद्राभिभवतीत्युपविष्टस्यैव ज्ञानाभ्यां साधिकारस्तत्रयथा कथंचिदुपवेशने .रोगाकुंडल्यानुगुणाभावस्य तस्मात्पद्मासमाद्युक्तिः तदुक्तं वसिष्टसंहितायां । आसनेन रुजो हंति प्राणायामेन पातकं विकारं मानसंयोगो प्रत्याहारेण सर्वदा । धारणाभिर्मनोधैर्यं ज्ञानादैश्वर्यमुत्तमं । समाधीमोचमाप्नोति त्यक्तकर्मशुभाशुभ इति ऊर्वोरितिर्वोरूपरिपरस्परस्योर्व्वोरुतरिचुक्रमादित्यस्याचापि संबंधात् । परिबंधयेदित्यत्र व्युत्क्रमादिति पृष्ठभागे हस्तमात्रव्युत्क्रमः अंगुष्टबंधने तु तभद्रस्तेनैव तत्तं गुष्टबंधनं । नान्विति । अंतरे इति दक्षिणे वामपादं वामे दक्षिणं पूर्वासने अंगुष्टबधनैवऋजुकायता सिद्धा । अत्र तु तथाभावादृजुकांय इति इउक्तं । सीविन्या इति गुदमेढांतरालोर्ध्व रेखासीवनी तस्याः पार्श्वयोः वामपार्श्वेद चिणपादगुल्फं । अन्यस्मिन्नन्यंदृषणाद्य षडदशाधंपादपार्ष्णीव्युत्यासे नभवत इति शेषः तदुग्रंथोघु टिके गुल्फौ पुमान्पार्ष्णिरधस्तयोरिति कोशःपाणिभ्यां प-

रिबंधयेत्पूर्ववदंगुष्टाविति शेषः अंगुष्टबंधनेनजुकायत्वं सिद्धं। तदुक्तं योगसारे। सीवन्य। आत्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोःसव्ये दक्षिणगुल्फं च दक्षिणे दक्षिणे॥७८॥। दत्ते सव्यकर व्यस्तारशायथारौक्तंगुष्टौ चाभिवद्धोयौस्ताभ्यां व्युत्क्रमेण तुऊर्वोरिति। स्वस्तोरुमूलेक्रमात् पदद्वयंकुर्यात्प्रत्यङ्मुखांगुलीस्वमंमुखांगुली। प्रत्यङ्मुखांगुलीकरौ जान्वोरुपरिविदध्यादित्यन्वयः अवक्रकायत्वं जानुहस्तदानादेव सिद्धं। एकमिति। अष्ट इति। अपरस्फिजः। मात्रयेति मात्रालक्षणमुक्तं तंत्रांतरे। कालेन यावता स्वांयो हस्तः स्वजानुमंडलं। पर्येति मात्रा सा तुल्यास्त्वयैकश्वासमात्रयेति। अन्येन्यथा मात्रालक्षणमाहुः स्वजानुमंडलं पूर्वं त्रिः परामृश्यपाणिना। प्रपद्यच्छोटिकामेकां मात्रासास्यात्प्लघीयसीति अन्यत्र तु सोंगुलिस्फोटतुल्यस्य मात्राष्टाभिः श्रुतैः स्मृतेति। वायवीयां तु। जानुप्रदक्षिणीकृत्य नद्रुतं न विलंबितं। अंगुलिस्फोटनं कुर्यात् सा मात्रेति प्रकीर्त्तितेति। आकर्षयेदिति। पूरकः पूरितं धारयेदितिकुंभकः सुषुम्णामध्यगं सम्यगिति पूर्वेणसंबध्यते। त्यजेयेतिरेचकः केचन रेचकादि क्रमेण तस्य व्यत्यासेन उक्तवैपरीत्येनद्वादशवा-प्राणायामान्समाचरेदित्यन्वयःतदुक्तंशुक्लंप्राणायमात्प्रणवसहितान् षोडशवशी प्रभातेसायं च प्रतिदिवसमेवं वितनुते।द्विजोयस्तंभ्रूणप्रहणनकृतां। हाभिकलितं पुनंस्त्येतेमासादपिदुरिततत्नौघ्यदहनादिति। परमतमाह श्लोके नाजयेति परेषु बुधाविदुरित्यन्वयः अयं च प्राणायाम पूजाविषय इति ज्ञेयं। अयं प्राणायामः सकलदुरितध्वंसनकरोविगर्भः प्रोक्तोसौ शतगुणफलोगर्भकलितः जपध्यानाद्येतः स तु निगदितो गर्भरहितः। सगर्भस्तद्युक्तो मुनिपरिवृढैर्योगरिति। शीलनं। प्राणायामस्य-मस्येति शेषः इंद्रियाणामित्यादिना मनस एकत्र स्थितिः कार्यमुक्तं भवति। यतो मनः सहायानामेवतेषां स्वस्वविषयग्रहणशक्तिरतस्तन्निरोधे नैवविरोधादितिभावः लंबिका तालुमूलं। मस्तकं ललाटाकाशसंधिः।मूर्द्धेति तदुपरिभागः द्वादशांते ब्रह्मरंध्रे यथाविधीति गुरूक्तं क्रमेण वसिष्टसंहितायां पंचधारणा उक्ताः भूतानां मानसंचैकं धारणा च पृथक् पृथक्। मनसोनिश्चलत्वेतु धारणाच विधीयते। प्राप्तश्रीहरितालहेमरुचिरातन्वंकलालान्वितं संयुक्ताकमलासनेन ववतुः कोणाद्धदिस्थापिना प्राणं तत्र विनीयपंचघटिकाचित्तान्वितं धारयेदेषा स्तंभकरी सटाक्षितिधराख्याता चमाधारणा १ अर्द्धेंदुप्रतिमं च कुंदधवलं कंवेवतत्वान्वितं तत्पीयूषवकारवीजसहितं युक्तं सदाविष्णुना।प्राणांस्तत्र विनीय पंचघटिका वित्तान्वितं धारयेदेषा दुःसहकालकारतरणा स्याद्वारुणी धारणा २तत्वन्तुथं शिवमिंद्रगोपसदृशं तत्र त्रिकोणेन लं तेजोनेकमयं प्रवालरुचिरंरुद्रेण तत्संगतं। प्राणांस्तत्र विनीय पंचघटिका वित्तान्वितं धारयेदेषा वह्निसमं वपुर्विदधतो वैश्वानरी धारणा ३ यन्मूलं चजगत्प्रपंचमहितदृष्टांभ्रुवरंतरे तद्दत्सवमयं पकारसहितं यंत्रेश्वरो देवता। प्राणांस्तत्र विनीय पंचघटिका वित्तान्वितं धारयेदेषाखे गमनं करोति नियतं वायोः सदाधारणा ४ आकाशंसुविशुद्धवारिसदृशं यद्ब्रह्मरंध्रेस्थितं तन्नाथेन सदाशिवेन सहितं युक्तं हकाराक्षरैः प्राणांस्तत्रविनीय पंचघटिकाचित्तान्वितं धारयेदेषा मोक्षकपाटभेदनपटुः प्रोक्तानभोधारणा ॥ ५॥ कर्म्मणां साधकाः सर्वाधारणाः पंच दुर्लभाः तासां विज्ञानतो योगी सर्वपापैः प्रमुच्यत इति। अभीष्टदेवानामिति। सगर्भं ध्यानमुक्तं। विगर्भमपि ध्यानं तंत्रांतरे उक्तं। यदाहुः। यत्तत्वे निश्चलं चित्तं तद्ध्यानं परमुच्यते। द्विधा भवति तद्ध्यानं सगुणं निर्गुणं तथा। सगुणं वर्णभेदेनानिर्गुणं

केवलं तथा। अश्वमेधसहस्राणि वाजपेयशतानि च। एकस्य ध्यानयोगस्य कलां नार्हंति षोडशीं। अंतश्चेतोवहिश्चक्षुरधस्थाप्य सुखासनं। समत्वं च शरीरस्य ध्यानमाहुश्च सिद्धिदं नासाग्रे दृष्टि मादाय ध्यात्वा मुंचति बंधनादित्यादिना। गुदे मेढ्रे च नाभौ च हृदये कंठदेशके। घंटिकालं बिकास्थाने भ्रूमध्ये परमेश्वरं। निर्गुणं गगनाकारं मरीचिजलसंनिभं।शून्ये सर्वमयं ध्यात्वा योगी- योगमवाप्नुयादित्यंतेनः योगसिद्ध्यर्थं शरीराभ्यंतरे मूलाधारमारभ्य तत्तन्नाडीस्थाने वायुसंचारं वक्तुं शरीरप्रमाणमाह षडिति उभयात्मकं शिवशक्त्यात्मकं। अग्नीषोमात्मकं वा शुक्रशोणितात्म- कं वेति प्रथमपटलोक्तानुवादः तस्मादित्युत्सेधात्। वंशं पृष्टवंशं आश्रितातदंतर्गता। यदाहुः। या मुंडाधारदंडांतरविवरगतेति शिफाभ्यां। भूलाभ्यां। आधारानिति केचनद्वादश अन्ये षोड- शाहुः परवह्नि च। यदाहुः। ततस्तु ब्रह्मकंकाले ध्यायेच्चक्रक्रमं सुधीः। आधारचक्रं प्रथमंकुल- तरं। वज्रचक्रं ततः प्रोक्तं स्वाधिष्टानात्मकं परं। रौद्रं करालचक्रं च गह्वरात्मकमेव च। वि द्यापदं च त्रिमुखं त्रिपदं कालदंडकं। माकारचक्रं च ततः कालोदारं करंककं। दीपकं चो- भजरक्तमानंदकलितात्मकं। मणिपूरकसंज्ञं च त्वाकुलं कलभेदनं। मदोत्साह च परमं माद कं यदमुच्यते। कल्पजालं ततश्चित्यं घोषकल्लोलनं ततः। नादावर्त्तपदं प्रोक्तं त्रिपुटं चसदुत्तरं कंकालकमनश्चक्रं विख्यातं पुटभेदनं। महाग्रंथिविकाशं च बंधोज्ज्वलनसंज्ञितं। अनाहत प द्मपुटं व्योमचक्रं ततो भवेत्। बोधनं ध्रुवसंज्ञं च कालकं दलकं ततः। क्रौंचं भेडुरंविभवंडाम रं कुलपीठकं। कुलकोलाहलं हालाहलीवर्त्तं महाद्रथं। घोरभैरवसंज्ञं च विशुद्धिः कंठमुत्तमं। घूर्णकं पदमाख्यातमाज्ञाकाकपुटं तथा। शृंगाटंकामरूपाख्यं पूर्णगिर्य्यात्मकं परं। महाव्योमा त्मकं चक्रं शक्तिरूपमनुस्मरेदिति। कुंडलीस्थानमाह। अधारेति। कुंडलोशक्तिरात्मानं बिभर्त्तित द्योगभागिनीभवतीत्यर्थः। कीटृकहंसं जीवात्मानमाश्रिता जीवाधिष्टानासतीत्यर्थः हंसः प्राणा श्रयः प्राणवायुसमाश्रयेइत्यर्थः प्राणो नाडीसमाश्रयः कथं तस्य नाडीसमाश्रयत्वमित्यत आह आ- धारादिति प्रयाणं कुरुते। अतएव प्राणः इति प्राणशब्दव्युत्पत्तिर्दर्शिता। द्वादशांगुलमानेनेति। वामदक्षिणयोरिति ज्ञेयं। एतत्फलमुक्तं तंत्रांतरे। भोजनं मैथुनं युद्धं फलपुष्पग्रहं तथा। कुर्य्यात् क्रूराणि कर्माणि वायौ दक्षिणसंश्रिते। यात्रा विवाहकर्माणि शुभकर्माणियानि च। ता- नि सर्व्वाणि कुर्वीत वामे वायौ तु संस्थिते इति। तथा। व्यायामं शयनं क्रूरं षट्कर्मादिकसा धनं। तानि सिध्यंति सूर्य्येणनात्रकार्य्याविचारणेति। अन्यत्रापि। देवदक्षिणभागेशपुरुषे रो गातुरे दक्षिणे स्थित्वा पृच्छकः स पुरुषोजीवत्रोगश्चिरं। वामायां तु रुजा कुलीकृत तनौ वामा श्रिते चेश्वरे वामे पृच्छति चेत्स्थिता गतगदा वामा चिरंजीवंतीति। देवेगते पृच्छति वामभागं स्थित्वा तरोदक्षिणतो यदाह। व्यात्यासतोस्मादपि कृच्छ्रसाध्यं वदंति संतः खलु रोगजातमिति। अथवाधारादुद्गतः वहिः प्रयाणं कुरुत इत्यनेनोत्पत्तिलये संध्ये अहोरात्रमित्यादि सर्वमुक्तं। य दाहुः। जानीयादुदयं बुधः स्वजठरे देवस्य कंदेनृणां घ्राणात्तिग्मकरांगुले खलुलयं संध्ये च पूर्वाप रे। उत्पत्तिं च लयं च संततमधो वृत्तिं निशां वासरे तूर्ध्वा वृत्तिमधास्तथाहि मकरंचोद्ध्वीं दि नेशं गतमिति। योगप्रकारमाह। रम्य इति। रम्य एकांत इत्यर्थः। अन्यथाचित्तविक्षेपः स्यादि- ति। काठिन्ये सति देहपीडया तत्रैव मनोगमिष्यतीति मृद्वासन इत्युक्तं। भूतपरिचर्य्यार्थमाह

यं ॥ तद्भावमाप्नोतितदासोहमयंभवेत् ॥ सकारार्णं हकारार्णं लोपयित्वा ततः परं ॥ ५२ ॥ संधिं कुर्यात्पूर्वरूपस्तदासौप्रणवोभवेत्॥ परानंदमयं नित्यंचैतन्यैकगुणत्मकं॥५३॥आत्माभेदस्थितंयोगीप्रणवंभावयेत्सदा॥आम्नायवाचामतिदूरमाद्यंवद्यं स्वसंवेद्यगुणेन संतः॥ आत्मानमानंदरसैकसिंधुं पश्यंति तारात्मकमात्मनिष्ठाः ॥ ५५ ॥ सत्यंहेतुविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं व्याप्तस्थावरजंगमं निरुपमंचैतन्यमंतर्गतम् ॥ ५६ ॥ आत्मानंरविवन्हिचन्द्रवपुषं तारात्मकं संततं नित्यानन्दगुणालयं सुकृतिनः पश्यंति रुद्धेन्द्रियाः ॥ ५७ ॥ तारस्य सप्तविभवैः परिचीयमानं मानैरगम्यमनिशंश्रुतिमौलिमृग्यं ॥ संवित्समस्तगमनश्वरमच्युतं तत्तेजः परं भजतसांद्रसुधांबुराशिं ॥ ५८ ॥ हिरण्मयं दीपमनेकवर्णं त्रिमूर्तिमूलं निगमादिबीजम् ॥ अंगुष्ठमात्रं पुरुषं भजंते चैतन्यमात्रं रविमण्डलस्थं ॥ ५९ ॥ सुखदादातृसुभागाशंकरार्द्धशरीरिणी ॥ ग्रंथपुष्पोपहारेण प्रीतानः पार्वती सदा ॥ ६० ॥ ध्यायंतिदु-

---

दंडेति।प्रसंगतस्तत्तद्भूतोदयमाह धारणेरिति ।वसोरग्नेः । बध्वेति । अन्यथा यदि इन्द्रियमार्गेण हठादायर्निर्गच्छेत्तदुपघातः स्यात् । करणानींद्रियाणि । उभे इति विष्विन्वेति । धनोनिबिडोमेधस्वन व स्वनोयस्येति मध्यमपदलोपीसमासः एवमित्यनेनान्वेति । ध्वनिदशकमाहुः । चिंचीति प्रथमः शब्दश्चिंचिणीति द्वितीयकः । चिरिचाकी तृतीयस्तु चतुर्थो घर्घरः स्वरः । पंचमस्तु मनागुच्च षष्टोमदकलध्वनिः । सप्तमः सूक्ष्मनादः स्यादष्टमोवेणुवर्द्धनः । नवमोमधुरध्वानो दशमोदुंदुभिस्वन इति । हंसोपनिषद्यपि । अथ दशकोषोनादमनुभवति । स च दशविध उपजायते । चिणी प्रथमः चिणिचिणि द्वितीयकः घंटानादस्तृतीयकः शंखनादश्चतुर्थः पंचमस्तंत्रीनादः षष्टस्तालनादः सप्तमोवेणुनादः अष्टमो भेरीनादः नवमो मृदंगनादः दशमो मेघनादः नवमं परित्यज्य दशममभ्यसेत् । तम्मान्मनोविलीयते विलीने । मनसिगते संकल्पे विकल्पे दग्धे पुण्ये पापे सदाशिवोमिति हंसलक्षणं शिवशक्त्यात्मकं जीवात्मकं वा । प्रयोगसारे तु । कंपरोमोहमानंदवैमल्यस्थैर्य्यलाघवं । प्रकाशज्ञानवैदुष्यभावोद्वैतात्मसंचयः । संभवंति दशावस्था योगिनः सिद्धिसूचकाः । ततस्त्रैकाल्पविज्ञानमहाप्रज्ञामनोज्ञता । छंदतः प्राणसंरोधो नाडीनां क्रमणं तथा । वाचां सिद्धिश्चिरायुश्च सिंद्रकालानुवर्त्तनं । देहाद्देहांतरप्राप्तिरात्म ज्योतिः प्रकाशनं । प्रत्यया दश दृश्यंते प्राप्तयोगस्ययोगिन इति । प्रणवोत्पत्तिमाह॥पुमिति। क्रमादितिविंदो हंविसर्गात्सः । पुंप्रकृत्याख्याविति नामकाल्पनिवं तत्वतोविंदुविसर्गाविव । हंपुमानितिव अतएवाचादौ अकारे निपाते योजिते अहमितिलोकप्रसिद्ध आत्माभिनयः । उपातिष्ठति आधारयति पुरुषं स्वाश्रयं मत्वा नित्यं तमेवाश्रिताप्रकृतिरिति संबंधः । यदातु प्रकृतेर्नित्यमात्मन इति पाठस्तदा आत्मनः प्रकृतेरिति समानाधिकरणेषष्टी । प्रकृतिरविद्यासाब्रह्मभिन्नत्वेन जीवकल्पकत्वात्तदभिन्न व स्वाश्रयं गत्वा इयं यदातद्भावमाप्नोतीति संबंधः । तद्भावमिति प्रकृतिपुरुषयोरभेदात्परमात्मेवाहमिति जीवब्रह्मणोरैक्यमस्यार्थः अजपाभ्यासाच्चैवमैक्यमुदेतीति व्यक्तीकृतं । लोपयित्वेति । व्यंजनयोः कल्पितत्वादेव लोपः । पूर्वरूपं एङः पदांतादती

ध्याब्धिभुजंगभोगे शयानमाद्यं कमलासहायम् ॥ प्रफुल्लनेत्रांबुजमंजनाभं चतुर्मुखेनाश्रित-नाभिपद्मं ॥ ६१ ॥ आम्नाय गं त्रिचरणं घननीलपुद्यच्छ्रीवत्सकौस्तुभगदांबुजशंखचक्रं ॥ हृत्पुंडरीकनिलयं जगदेकमूलमालोकयंति कृतिनः पुरुषं पुराणं ॥ ६२ ॥ बिंदोर्नादसमुद्भवः समुदिते नाद जगत्कारणम्। तारं तत्वमुखांबुजं पुरिवृतं वर्णात्मकैर्भूर्जजैः॥ आम्नायांघ्रिचतुष्टयं पुररिपोरानंदमूलं वपुः पायाद्व्योमकुचेंदुखंडविगलद्दिव्यां मृतौघप्लुतम् ॥ ६४ ॥ पिंडं भवेत्कुंडलिनीशिवात्मापदं नुहंसः सकलांतरात्मा ॥ रूपं भवेद्बिंदुरमंदकांतिरतीतरूपंशिवसामरस्यम् ॥ ६५ ॥ पिंडादियोगं शिवसामरस्यात्सबीजयोगं प्रवदंति संतः ॥ शिवेलयं नित्यगुणाभियुक्ते निर्बीजयोगं फलनिर्व्यपेक्षं ॥ ६६ ॥ मूलोन्निद्रभुजंगराजसदृशीं यांतीं सुषुम्नांतरं भित्वाधारसमूहमाशु विलसत्सौदामिनीसन्निभां ॥ व्योमांभो जगतेंदुमंडलदिव्यामृतौघप्लुतां संभाव्य स्वगृहं गतां पुनरिमां संचितयेत्कुंडलीं ॥ ६७ ॥ हंसं नित्यमनंतमव्ययगुणं स्वाधारतोनिर्गता शक्तिः कुंडलिनी समस्तजननी हस्ते गृहीत्वा चतम् ॥ याता शंभुनिकेतनं परसुखं तेनानुभूयस्वयं यातीस्वाश्रयमर्ककोटिरुचिरा ध्येया जगन्मोहिनी ॥ ६८ ॥ अव्यक्तं परबिंदुमंचितरुचिंनीत्वाशिवस्यालयं शक्तिः कुंडलिनी गुणत्रयवपुर्विद्युल्लतासन्निभाः ॥ आनंदामृतमध्यगं पुरभिदं चंद्रार्ककोटिप्रभंवीक्ष्य स्वपुरं गता भगवतीध्येया न वद्या गुणैः ॥ ६९ ॥ मध्ये वर्त्म समीरणद्वयमिथः संघट्टसंक्षोभजं शब्दस्तोममतीत्यतेजसि तडित्कोप्रभाभासुरे ॥ उद्यंतीं समुपास्महे नवजपासिंदूरसंध्यारुणां सान्द्रानंदसुधामयीं परशिवं प्राप्तां परां देवतां ॥ ७० ॥ गमनागमनेषु लाघिकी सातनुयाद्योगफलानिकुंडली॥ मुदिताकुलकामधेनुरेषाभजतांकांक्षितकल्पवल्लरी ॥ ७१ ॥ आधारास्थितशक्तिबिंदुनिलयां

---

त्वनेन। परानंदमयमिति आनंदं ब्रह्मणोरूपंतच्च मोक्षे प्रथितमिति श्रुतेः। नित्यं वक्ष्यमाणश्रुतेरेव । चैतन्यं ज्ञानं सचासावेकोगुणश्च तदात्मकं । सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः । यद्वा चैतन्यं ज्ञानरूपं एकं एकमेवा द्वितीयं ब्रह्मेति श्रुतेः संसारोत्पत्तिकर्तृत्वकल्पितसत्वरजस्तमोगुणरूपं आत्माभेदस्थितं मोहं शब्दोस्य । तया तस्य च तदर्थकत्वात्।आम्नायेति।यतो वाचो निवर्तंत इति श्रुतेः । आद्यं शास्त्रयोनित्वात् । स्वसंवेद्य गुणेन वेद्यं स्वप्रकाशमित्यर्थः । आनंदमिति । आनंदं ब्रह्मणोरूपमिति श्रुतेः । तारात्मकमुक्तरीत्या । आत्मनिष्ठाः आदरनैरंतर्यदीर्घकालाभ्यासैस्सूचितपुण्ययोगिनः । सत्यं सत्य ज्ञानमिति श्रुतेः । हेतुविवर्जितं नित्यत्वादनुत्पाद्यं । यद्वा हेतवोदुस्तर्कास्तद्विवर्जितं । श्रुतिगिराभाद्यं शास्त्रयोनित्वादिति सूत्रे वेदकर्तृत्वोक्तेः । प्रणवात्मकत्वाद्वा । जगत्कारणं आनंदाद्धेव खल्विमानि भूतानि जायंते इति श्रुतेः । व्याप्तेति । तद्विवर्त्तरूपत्वाज्जगतः निरुपममिति । अद्वितीयत्वेन । चैतन्यमंतर्गतं प्रत्यक् चैतन्यं आत्मरूप चैतन्यमित्यर्थः । रविचंद्रवह्निवपुरिव पुर्यस्य प्रकाशरूपमित्यर्थः न तु तत्तदाकारग्राहित्वे अयं दृष्टांतः। तस्य निराकारत्वात् प्रणवरूपत्वाद्वातद्दुक्तिः । तारस्येति । आकारोकारमकारबिंदुनादः। शक्तिशांताद्यैः परिचीयमानं निरूप्यमानं । तदेवाह मानैरगम्यमिति । श्रुतिमौलिरूप

नीत्या नंदमयीं गलत् परसुधा वर्षे प्रबोधप्रदैः॥ सित्क्वापद् सरसीरुहाणि विधिवत्कोदंडमध्योदितां ध्यायेद्भास्वरबंधुजीवरुचिरां संचिन्मयीं देवतां॥ ७२॥ हृत्यंकेरुहभानुबिंबनिलयां विद्युल्लतामत्सरां बालार्कारुणतेजसा भगवता निर्भर्त्सयंतींतमः॥ नादाख्यं पदमर्द्धचन्द्रकुटिलं संचिन्मयीं शाश्वतं यातीमक्षररूपिणीं विमलधीर्ध्यायेदिभुं तेजसां॥७३॥

---

निष तत्सन्सत्तात्मकमस्तीति भानात्। चित्प्रकाशं सहीदं सर्व्वं तत्सदिति। चिद्धीदं सर्वं प्रकाशत इति श्रुतेः। समस्तगं व्यापकं। अनश्वरमविध्वंसि। अच्युतमेकरूपत्वात्। वाक्यांतरोपदेशात्। श्लोकत्रयस्थानां पदानां परस्परं न पौनरुक्त्यं। सगुणब्रह्मोपास्तिरपि हिरण्यमभंलोकप्राप्तिद्वारामुक्तेः क्रमात्कारणमिति शास्त्रोक्तेः निर्गुणब्रह्मोपास्तावसमर्थानां सगुणब्रह्मोपास्तिमाह। हिरण्मयमिति। त्रिमूर्त्तिमूलमित्यनेनास्यान्यसनोयानि नामानि सूचितानि। यदाहुः। ब्रह्माविष्णु रुद्रश्चउंकारः प्रलयस्तथा। सर्वव्यापीत्यनंतश्च तारः सूक्ष्मश्च उत्कटः। वैद्युतश्च यथंब्रह्म एकश्चाप्येकरुद्रकः ईशानो भगवांश्चैवततः स्यात्तु महेश्वरः। महादेवः सदापूर्व्वःशिवःसर्वादयस्त्रयः। रचितावगश्चैव तथा प्रियतमःस्मृतः। नित्यद्वयस्य सर्वाद्या षोडशांतः प्रकीर्तिताः। आद्यश्चावगमः कांतः प्रदिष्टश्चोत्वस्वामिनौ। समर्थौ पावकश्चैव क्रियेच्छादीप्तएव च। अवामालिंगितौ चैव हिंसकोदाह कस्तथा। भावहद्दौ गुणं बीजंभ्रुवोवेदादिरादियुक्। उमध्योमपरश्चैव त्रिमात्रो योनिरेव च। देहाश्रयश्च संवादात्मा।नौसर्वादिकाख्यं। इति शोकमोक्षार्थमन्यासाकारोपास्तिमाह। ध्यायंतीति श्लोकद्वयेन आम्नायावेदास्तद्‌प्रथितमष्टुं वचनं यस्य। क्रममुक्त्यर्थमन्यत्साकारध्यानयोगमाह। बिंदाविति। बिंदुः शिवात्माउंकारस्य शिरोरूप। नत्वमुखांबुजं चतुर्विंशतितत्त्वमयमुखकमलं। सबीजयोगमाह। पिंडमिति। अकारोकारमकारात्मकत्वात्पिंड प्रणवः कुंडलिनी तद्रूपात्सैव शिवात्मा सकलांतरात्मा हंसः तस्याः पदं स्थानं अनयोरनंतकांर्तावें द्रूपं परमार्थतस्तु शिवयोः सामरस्य मनीतरूपं नीरूपमेव। यद्यातीतेति। अतिपूर्वस्येणोतोणमध्यमे-पुरुषबहुवचनं हेलोकाः पूयं सर्वज्ञगदति क्रमैवं ध्यानात् शिवसामरस्य रूपमतीत अतियातगच्छतेत्यर्थः। अनेन सायुज्यमुक्तिर्भवतीत्याह। पिंडादीति। सारूप्यमुक्तिमाह शिव इति। संप्रति आत्मानुभवकगम्यकुंडलिनी चिंतनरूपं राजयोगादि प्रकारमाह। मूलेति। मूलान्मूलाधारात्। उन्निद्रा-जाग्रद्रूपाकुण्डल्याः सर्पाकारत्वत्। भुजंगराजमहिषी व्यपदेशः सुषुम्णांतरश्रयांती आधारमसूहस्वाधिष्टानमणिपूरकानाहतविशुद्धाज्ञारूपं। व्योमांभोजेति। सहस्रदलपतिं शिवं। स्वगृहं मूलाधारं। तं जीवं जपमानं हंसं हं स्ते गृहीत्वेति संबंधः। यथा च जीवो जपति तथा हंसमंत्रप्रस्ताव एवोक्तं। स्वाश्रयं मूलाधारं। पूर्वश्लोकात् हंसं गृहीत्वा यातेति विशेषः। अव्यक्तं परबिंदुनीत्वेति। पूर्वतो विशेषः। स्वपरं मूलाधारं। समीरणहयेति। अपानवायुनिरोधात् प्राणवायुनिरोधाच्च ऊर्ध्वाधोगतयोर्मिथः संघट्टइत्यर्थः। अत्र प्राणापानसंघट्टजशब्दातिक्रमणमेव शेषः आरक्तध्यानं च। तदुक्तं। श्वेतध्याने वाग्विलास आरक्ते वश्यता भवेदिति। अन्यत्रापि। ध्यायेदृश्याकर्षणे तां जपाभां श्वेतां शांतौ स्तंभने पीतवर्णां। श्यामां मुक्तौ मारणे कृष्णवर्णां धूम्राभामां द्वेषणोच्चा-

भाले पूर्णनिशायतिप्रतिजटाश्रीहारहारालिषा सिंचंतीममृतेन देवमामितेनानंदयंतीं तनुं। वर्णा-
नां जननीं तदीय वपुषा संप्राप्य विश्वं स्थितां ध्यायेत्सम्यगनाकुलेन मनसा संचिन्मयीमं-
बिकां ॥ ७४ ॥ मूलेभाले हृदि च विलसद्वर्णरूपासावित्री पीनोत्तुंगस्तनभरविरमन्मध्य
देशामहेशी ॥ चक्रे चक्रेगलितसुधयासिक्तगात्राप्रकामंदद्यादाद्यांश्रियमविकलां वाङ्मयी
देवतावः ॥ ७५ ॥ निजभवननिवासादुच्चरंती विलासैः पथि पथिकमलानां चारुहासं विधा-
य ॥ तरुणतरणितरणिकांतिः कुंडली देवता सा शिवसदनसुधाभिर्दीपयेदात्मतेजः ॥ ७६॥
आधारबंधप्रमुखक्रियाभिः समुत्थिताकुंडलिनीसुधाभिः ॥ त्रिधामबीजं शिवमर्चयंती शिवां-
गना वः शिवमातनोतु ॥ ७७ ॥ सिंदूरकंजनिभांमदुकलावतंसमानंदपूर्णनयनत्रयशोभिव-
क्त्रं ॥ आपीनतुंगकुचनम्रमनंगतंत्रं शंभोः कलत्रमामितांश्रियमातनोतु ॥ ७८॥ नयनकमलैर्दी-
र्घादीर्घैरलंकृतदिङ्मुखं विनतमरुतांकोटीराग्रैर्निघृष्टपदांबुजम् ॥ तरुणशकलंचांद्रंबिभ्रद्घट-
स्तनमण्डलं स्फुरतु हृदयेबंधूकाभकलत्रमुमापतेः ॥ ७९ ॥ वर्णैर्वर्णवषट् दिशोरविकलाचक्षु-
र्विभक्तैः क्रमादाद्यैः शादिभिरावृता न्क्षहयुतैः षट्चक्रमध्यानिमान् ॥ डाकिन्यादिभिराश्रि-
तान्परिचितान्ब्रह्मादिभिर्दैवतैर्निर्भिन्नारदेवतात्रिजगतां चित्तेविधत्तां मुदः ॥ ८० ॥ आ-

---

टने च तयाद्यानुषंगिकं फलमपि ज्ञेयं। अत्र गमनागमनेषु सांधिकीति विशेषः। आधारेति। आ-
धारोमूलाधारचक्रं। तत्र स्थितायाशक्तिस्त्रिकोणं तस्यामध्यस्थानं बिंदुःतन्निलयं। यद्वा। आधार-
स्थिता या शक्तिस्त्रिकोणं अथ च तत्रस्थकामबीजं तदपिशक्तिबीजमेतस्य शिरसियो बिंदुस्तन्निल-
यामित्यर्थः। यदाहुः तडित्कोटिप्रख्यं स्वरुचिजितकालानलरुचिसहस्रादित्यांशुप्रकरसदृशोद्योतक-
लितं। स्फुरंतं योन्यंतः स्फुटदरुणबंधूककुसुमप्रभं। कामं ध्यायेन्नरवशशभृत्कोटि शिशिरं। तस्यो-
र्ध्वेग्ने शिखा चिरद्युतिलता पुंजप्रभी भासुरा सूक्ष्मा ब्रह्मयथोत्तरा च रगता चैतन्यमात्रा कले-
ति कोदंडमध्यं भ्रूमध्यं आज्ञावक्रं तत्रोदितां। अत्रायमेव विशेषः। मत्सरशब्दः सदृशार्थः।
बालार्कारुणतेजसा तमो निर्भत्सयंतीमिति संबंधः। अत्र हृदयादेव नानार्थं प्रति गमनं वष्टाम-
यध्यानता च विशेषः। एतच्च प्रतिचक्रं भिन्नाः कुंडल्यइति मते तैः कुंडलिनीषट्कस्य स्वीकृत-
त्वात्। भाल इति। अत्राज्ञायां शिवेन संगः वर्णोत्पादकत्वं च विशेषः। तदुक्तं। स्वयंभुलिंगंनिजयो
मिमध्यरंध्रांतरेहृत् सरसीरुहांतः। बाणाह्वयं चेतरमंतराले वदंति संतोगगनांबुजेन्ये इति। स्थानत्रये
पि शिवसंगमाह। मूल इति। इतःपरं वासनादाढर्यायकुंडलिनी ध्यानविशेषान् वदन्स्तुतिमाह। नि-
जभवनेत्यादिना। अपानवायुसंकोचादाधारबंधःएवंप्राणवायुष्वपि प्रमुखशब्दवाच्यः। अनंगतं त्वमनं
गप्रधानं।दीर्घादीर्घैरिति।कटाक्षेण दीर्घत्वं तत्संकोचेनादीर्घत्वं च।विनतमरुतांतिना।मरुदेवानां को-
टीराग्रैमुकुटाग्रभागैः अंतर्मातृकाक्रमेण कुंडलिनी ध्यानमाह। वर्णैरिति। अर्णवाश्चत्वारः दिशोदशक
योद्वादशकलाः षोडशचतुर्दयंमादिभिरित्यनेन व्युत्क्रमोदर्शितः। आद्यैरिति। मूलाधारस्थितत्वेनाद्य
त्वं यद्वासाद्यैः सकारादिककारांतैः आद्यैः षोडशस्वरैः हक्षयुतैरिति योजना। तत्र विशुद्धि चक्रे
अकारादीनां क्रमेण स्थितैराद्यैरिति केचित्। अथवान्यत्राकारस्याद्यत्वं अत्र वैपरीत्यक्रमेण स-

धाराद्गुणवृत्तशोभिततनुर्निर्गत्वरात्वरं भिंदंती कमलानि चिन्मयघनानंदप्रबोधोत्तरा ॥ संक्षुब्धध्रुवमंडलामृतकरप्रस्पंदमानामृतस्रोतः कंदलितामंदतडिदाकारां शिवां भावयेत् ८१ आनंदमौलिमनिशं श्रुतिमौलिमृग्यमर्द्धेंदुभूषणमधिष्ठितसर्वलोकं ॥ भक्तार्तिभंजनपरं मदमीश्वरस्य दद्याच्छुभानि नियतं वपुरंबिकायाः ॥ ८२ ॥ मंजुसिंजितमंजीरं वाममर्द्धंमहेशितुः ॥ आश्रयामि जगन्मूलं यन्मूलं वचसामपि ॥ ८३ ॥स्थूलेन्द्रनीलरुचिरं कुचभारनम्रं भास्वत्सुभूषणगणैः प्रविभक्तशोभम् ॥ विश्वैकमूलमनिशं श्रुतिमौलिमृग्यमर्द्धंमहेशितुरखंडितमश्रयापि ॥ ८४ ॥ दिक्कालादि विवर्जिते परशिवे चैतन्यमात्रात्मिके शून्ये कारणपंचकस्य विलयंनीतेनिरालंबने॥आत्मानं विनिवेश्य निश्चलधिया निर्लीन सर्वेन्द्रियोयोगीयोगफलंप्रयाति

---

कारस्याद्यत्वमित्याद्यैरित्युक्तं । द्विदलसद्वीप्रतिलोमार्थमेवचद्वेतिग्रहणं । डाकिन्यादिभिराश्रितान् डाकिनीराकिनीकाकिनीशाकिनीहाकिनीभिः ब्रह्मादिभिर्द्देवतैः परिचितान् । ब्रह्मादिस्थितिर्दीक्षापटले उक्ता एवं भूतान् षट् चक्रमध्यान् भिंदानेति संबंधः । तदुक्तं । आधारस्तु चतुर्द्दलोरुणरुचिर्वासांतवर्णाश्रयः स्वाधिष्ठानमनल्पवैधुतनिभं बालांतषट्पत्रकं । रक्ताभं मणिपूरकं दशदलंडाद्यं फकारांतकं पत्रैर्द्वादशभिस्त्वनाहतपुरेहैमंकठांतान्वितं । मात्रां षोडशपत्रकं विशदरुग्युक्तं विशुद्धांबुजं ह्रचेत्यत्तरयुग्दलद्वययुतं रक्ताभमाज्ञापुरं । तस्मादूर्ध्वमधोमुखं विकसितं पद्मं सहस्रच्छदं । नित्यानंदपरं भजे शिवपदं शक्त्या समक्षारुणमिति । अन्यत्र तु । मूलाधारं ब्राह्मणः स्थानमेतत्सौवर्णाभं डाकिनी देवतात्र । स्वाधिष्टानविष्णुगेहं प्रदिष्टं बालार्काभं राकिनीदेवतात्र । मणिपूरकं तु नीलं रुद्र । स्थानं तु डाकिनी तत्र रक्तमनाहतमीश्वरगृहंतुशाकिन्यपीदोक्ता । सदाशिवस्थानमिदं विशुद्धं काकिन्यथैहापिच धूम्रवर्णं । आज्ञापुरं शारदचंद्रकांतं हाकिन्यथोक्ता शिवगेहमेतदिति । अध्यात्मविवेके एषां प्रतिदलं जीवसंचारे फलमुक्तं । गुदलिंगांतरे च क्रमाधारं तु चतुर्द्दलं । परमं सहजस्तद्वदानंदोवीरपूर्वकः । योगानंदश्च तस्य स्यादीशानादि दल फलं । स्वाधिष्टानं लिंगमूले षट् पत्रं च क्रमस्य तु । पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् । प्रश्रयःक्रूरतागर्वनाशो मूर्छा ततःपरं । अवज्ञास्यादविश्वासो जीवस्य चरतो बुधः । नाभौ दशदलं चक्रं मणिपूरकसंज्ञकं । सुषुप्तिरत्रतृष्णा स्यादीर्ष्या पिशुनता तथा । लज्जा भयं घृणामोह कषायोथ विषादिता । हृदयेनाहतं चक्रं दलैर्द्वादशभिर्युतं । लाल्यप्रणाशः कपट वितर्कोप्यनुतापिता । आशाप्रकाशश्चिंता च समोहासमता ततः । वृ(?)मिणा दंभो वैकल्यं विवेकोहं कतिस्तथा । फलान्येतानि पूर्वादि दलस्थस्यात्मनो जगुः । कंठेस्तिभारती स्थानं विशुद्धिः षोडशच्छदं । तत्र प्रणवउद्गाथो हुं फड्वषडथस्वधास्वाहा नमोमतं मतस्वराः षड्गाद्यो विषं । इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडशेति । आधारादिति । त्रिकोणकर्णिकं वर्त्तुलमाधारस्वरूपं तस्मादगुणवृत्तं सत्त्वरजस्तमोगुणात्मकं । दिगिति देशतः कालतः । आदिपदेन स्वरूपतश्चानवच्छिन्ने कारणपंचकस्योपादानासमवायि निमित्तप्रयोजकसहकारिकारणपंचकस्य । यद्यपि प्रयोजकसहकारिकारणे निमित्तकारणांतर्गते एवेति

सुलभं नित्योदितं निष्क्रियम् ॥ ८५ ॥ महाबलाय प्रणतोस्मि तस्मै संविल्लतालिंगनशीतलाय ॥ येनार्पितंमुक्तिफलं विपक्वमाम्नाय शाखाभिरुपाश्रितेभ्यः ॥ ८६ ॥ तस्मादभूदखिलदेशिकवारणेंद्रः षट्कर्मसागरविहारविनोदशीलः ॥ यस्य त्रिलोकविततं विजयाभिधानपाचार्यपंडित इति प्रथयंति संतः ॥ ८७ ॥ तन्नंदनोदेशिकदेशिकोभूच्छ्रीकृष्ण इत्यभ्युदितप्रभावः ॥ यत्पादकारुण्यसुधाभिषेकाल्लक्ष्मींपरामश्नुवते कृतार्थाः ॥ ८८ ॥ आचार्यविद्याविभवस्य तस्य जातः प्रभोर्लक्ष्मणदेशिकेन्द्रः ॥ विद्यास्वशेषासु कलासु सर्वास्वपि प्रथां यो महतीं प्रपेदे ॥ ८९ ॥ आदाय सारमखिलं निखिलागमेभ्यः श्रीशारदातिलकनाम चकार तंत्रं ॥ सएष पटलैरिहतत्वसंख्यैः प्रीतिप्रदानविषयो विदुषां चिराय ॥ ९० ॥ अनाद्यंतात् शंभोर्वपुषिकलिताद्र्धेन वपुषा जगद्रूपं शश्वत्सृजति महनी यामपि गिरम् ॥ सदर्थाशब्दार्थस्तनभरनताशंकरवधूर्भवद्भूत्यैभूयाद्भवजनितदुःखौघशमनी ॥ ९१ ॥ इति श्रीशारदातिलके पंचविंशः पटलः ॥ २५ ॥ समाप्तः ॥

---

तार्किकाः कारणत्रयमेवाहुः । तथापीषड्भेदमाश्रित्य कारणपंचकोपन्यासः यद्वापंचभूतानां पंचतन्मात्रारूपाणि कारणानि । तदुक्तं महाकपिलपंचरात्रे । मात्राः पंचपरित्यज्य ततः कारणपंचकं । दिव्यं तु करणं कृत्वायोजयेत्परमं पदमिति । अतएव शून्ये अरूपे । निरालंबने आधारहीने । आत्मानं जीवात्मानं निश्चलधिया विनिवेश्य योगफलं प्रयाति । ग्रंथकर्ता स्ववंशमाख्याति । महाबलायेति । महाबलनामाग्रंथकर्तुः पूर्वजः तत्पुत्रआचार्यपंडित स्तत्पुत्रः श्रीकृष्णस्तत्वसंख्यैः पंचविंशतिसंख्यैरत्राद्यः पटलः सृष्टिप्रतिपादकत्वेन मूलप्रकृतिप्रतिपादनपरः मध्ये त्रयोविंशति पटलास्तु प्रकृतिविकृतिव्यतिरिक्तपुरुषप्रतिपादनपरः एवं पंचविंशतितत्वात्मकत्वमस्यग्रंथस्योक्तं भवति । परदेवतैव ध्येयेति । सकलतंत्रार्थमुपसंहरन्नाशिषा मंगलं करोति अनादीति मंगलादीनि मंगलमध्यानि मंगलांतानि च शास्त्राणि प्रथंते वीरपुरुषकाणि भवं त्यायुष्मत्पुरुषकाणि चेति । भगवत्पतंजलिवचनादितिशिवं ।

—***—

पुरं गोदावर्याविलसदुपकंठे जनततं जनस्थानं नाम प्रथितमभवद्दक्षिणदिशि । महाराष्ट्रे देशे जनकतनया लक्ष्मणयुतः पुरारामोयस्मिन्नवसदति तुष्टेन मनसा १ तस्मिन्पुरे ब्राह्मणसत्तमानां कुले विशुद्धे महति प्रसिद्धे । श्रीभट्ट रामेश्वरइत्युदारो गुणैरभूद्धादिमहेभसिंहः २ तस्मादभूतीक्ष्णकुशाग्रबुद्धिः श्रीभट्टपृथ्वीधरनामधेयः । अनेकधाध्यापयदेषभाट्ट वेदांतशास्त्रं फणिभाषितानि । भूगीर्वाणाचार्यवर्य्योदिविकृतवसतिर्यज्ञयादेवशंके शेषः पातालमूलं स च स यदि पराभूतिभीत्या विवेश । अन्येषां कैव वार्त्ता कृतकृतकवचश्चापलानां कृतं तैः सम्यक् शक्योस्य वक्तुं नहि वदनशतैरप्यशेषप्रभावः ४ कैश्चिद्दिनैरतिपवित्रचरित्र एष वाराणसीमभिगमच्छिवराजधानीं । तत्रैव वासमकरोत्तदनु प्रतीतः कायावसानमवधिं परिचिंत्य धीरः । तस्माद्राघवभट्ट एष समभूद्वेदांतसन्न्यायवित्ख्यातो भट्टनये समस्तगणितेसाहित्यरत्नाकरः । आयुर्वेदनिधिः कलासु कुशलः कामार्थशास्त्रे गुरुः संगीते निपुणः सदा निगमधेः पारं प्रयातः परं श्रीदुर्गे गणनायकग्रहगुरो गोविंदगौरीपती युष्मानर्थयतेन तेन शिरसा सोवंप्रबद्धांजलिः । मंत्राचार्यादिविवेचने यदि भवेत्स्वबालित्यमतभ्रमात्काचित्कंममभक्तिभावितहृदोदासस्य तत् क्षम्यतां ७ अत्युष्णातीक्ष्णधीभिर्जगदुपकृतये राघवो यद्विवव्रे गूढार्थं मंत्रशास्त्रं निधिमिव परमं,संप्रदायांजुनेन । संतः संतोषसम्मिन्वितरततरसास्वादितस्वस्वकामायुष्टादौष्टं स्वकीयं जहितहितधियानान्यथार्थागमोवः ८ पिशुनजनोंतमलिनः परगुणसंतोषविपुलसुखमतिः । तत्र मनो न विषीदति दूषणमात्रानुयत्न विरतोयं ९ कायस्था इव वाचकाः कतिचनप्रायेण मूका इव श्रोतारस्त्वपरे शुका इव परे साधुप्रलापाः पुनः । ग्रंथग्रंथिविवेचनैकचतुराये कोविदाः केवलं द्वित्रास्ते तदुदीरितावगतये विज्ञाः पुनः पंचषाः १० आकाशेषु शरच्चमापरिमिते रौद्राभिधे वत्सरे पौषे मासि सिते दले रवितिथौ पक्षे च सिद्धान्विते तंत्रे स्मिन्सुधिया व्यधापि रुचिरा श्रीराघवेण स्फुटा टीका सद्गुरुसंप्रदायविमला विश्वेशपुर्य्यामियं ॥ ११ ॥ ॥ इति श्रीशारदा तिलकटीकायां राघवभट्टविरचितायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां पंचविंशः पटलः ॥ २५ ॥

—****—